2 எண்டளவம்புயத்துளிலங்குமறுகோணமிசை
வெண்பணிலம் திகிரி வளைவில் வளைவாய் முசலம்
திண்கையிலங்குசம் சீர்திகழுங்கதை செங்கமலம்
எண்படை ஏந்திநின்றான் எழிலாழி இறையவனே 2

**रिते(यते)** जनैः" इत सर्वदेशकालावस्थास्वपि भगवतो दास्यकारी शेषाहिः श्रीरङ्गे पीठीभूयेवात्र नगरीभूय पूर्वमेव तदागमनं प्रतीक्षमाणस्तिष्ठतीति भावः। **अहीन्द्रनगरे।** अनेन वनाद्रिवेङ्कटाद्रयादिव्यावृत्तिः। नागरिकस्य सदृशं नगरम्। **नित्यमुदितः।** बालसूर्यो ह्युदितो भवति। न तु मध्यन्दिनं प्राप्तः। अनेन दुष्प्रेक्षत्वादिदोषविरहात्, सर्वदा सद्भिरभिगन्तव्यत्वं सूचितम्। अथवा **नित्यमुदितः।** राह्वादिग्रहकृतग्रसनादिपीडावैधुर्यात् नित्यसन्तुष्ट इत्यर्थः। **अयम्।** इदानीं परिदृश्यमानः। तथाच देशविप्रकर्षाभाववत्, रामादेरिव कालविप्रकर्षस्यापि विरहेणाऽऽश्रयणसौकर्यं सूचितम्। **अहस्करः।** न तु निशाकरः। स हि वृद्धिह्रासशाली सूर्यायत्तप्रकाशश्चेति भगवतस्तद्विरुद्धस्वभावस्य तत्ता न संभवतीति भावः।

अत्रास्य प्रबन्धस्य तमश्शब्दसूचितानि परमतानि अपास्यतया अवान्तरविषय। अहस्करशब्दवाच्यभगवदुपलक्षितं तत्त्वत्रयं प्रधानप्रतिपाद्यतया विषय। "सकृद्दिवा हैवास्य भवति" इत्युक्तापवर्गदशाप्राप्ति **अहस्कर** इत्यत्राहश्शब्दविवक्षिता प्रधानफलम्। **अपास्य**न्नित्युक्ताज्ञानध्वान्तनिरोधपूर्वकतत्त्वार्थाधिगमोऽवान्तरफलम्। एतदुभयकामनावन्तः सर्वेऽपि साधारण्येनैतद्ग्रन्थाधिकारिणः; अत्र ग्रन्थे, साक्षाच्छ्रुतिवाक्यान्यनुदाहृत्य तदर्थमात्रस्यैवापेक्षितस्थलेषु कथनात् स्त्रीशूद्रादेरप्यधिकारावगमात्। प्रतिपाद्यप्रतिपादकभावश्च ग्रन्थतद्विषययोरर्थसिद्धः सम्बन्ध इत्यनुबन्धिचतुष्टयस्थितिरवगन्तव्या।

अथैव भगवति तमोनिरसनार्थप्रार्थनायां कृतायामपि, "वहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम्। येनाव्याहतसङ्कल्पं वस्तु लक्ष्मीधरं विदुः" इति तदीयतमोनिरासकत्वसत्यसङ्कल्पत्वादीनां ज्योतिर्मयश्रीसुदर्शनायत्तत्वश्रवणात् तमपि प्रस्तौति—**एण्डळवम्बुयत्तुळ्** इति आद्यगाथया। न चैवं सति भगवतोऽनन्यायत्तत्वस्य—"स्वे महिम्नि प्रतिष्ठितः; यद्वा न महिम्नि" इत्याद्युक्तस्य विरोध इति वाच्यम्; सुदर्शनस्य भगवद्रूपविशेषत्वेनार्थान्तरत्वाभावात्। **तदुक्तमाचार्यैरेव,** "यदायत्तं जगत् सर्वं कालचक्रं च शाश्वतम्। पातु नस्तत् परं चक्रं चक्ररूपस्य चक्रिणः" इति॥ **कूरनारायणमुनयो**ऽपि, "व्यहस्तेजोभिमानी नरकविजयिनः" इति। "पद्मे चाष्टदळे दिव्ये" इति अष्टदळपद्मपुष्पमध्ये, तत्रापि—"ध्यायेत् षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रम्", "षट्कोणा-

---

2. (எண்டளவ என்ற பாசுரத்தின் பொருள்)—

எட்டு இதழ்களை உடைய தாமரைப்பூவில் இலங்கும் ஆறு கோண மான வடிவிற்குள், வெண்சங்கு, சக்கரம், சாரங்கம், வளைந்த வாய்ப் புறமுடைய கோடாரி, உலக்கை, மாவெட்டி, கதை, செந்தாமரை ஆகிய எட்டு திவ்ய ஆயுதங்களை, எட்டு திருக்கைகளிலே உறுதியாக ஏந்தி எழிலுற நிற்கின்றான் எம்முடைய சக்கரத்தாழ்வான்.

3 விடுநெறி அஞ்சி விடத் தொடக்கிய
விதியரடைந்து தொழுத தழைத்தெழு
விழியருள் தந்து விலக்கடிக்களை
விரகில் இயம்பி விலக்கிவைத்தனர்
கொடுவினை என்பதனைத் தினைத்தனை
கொணர்தல் இகழ்ந்த குணத்தன[னை]த்தினர்
குருகையில் வந்து கொழுப்படக்கிய
குலபதி தந்த குறிப்பில் வைத்தனர்

---

न्तरमध्यदेशनिलयम्" इत्यादिरीत्या षट्कोणसन्निवेशमध्ये, वर्णत्रिकेणरुचिरे वपुण्डरीके वलयवक्त्रवर्तिन इव श्रीचक्रस्य स्थितिः **प्रसिद्धा**। तदेतदाह--**इलङ्गुमरुकोणमिशै** इति। कोण इत्यर्थः। **मिशै** इत्याधिकरणार्थकमव्ययम्। अन्वयश्चास्य—**एन्दि निन्रान्** इत्यनेन। तिरकैयिर्=दृढतरबाहौ। एकवचनम् जात्यभिप्रायम्। शुक्लं शङ्खं, चक्रं, विणत चाप, तीक्ष्णधारं परशुं, मुसलम्, अङ्कुशं, शुम्भगुणा गदाम्, अरुणाम्बुजञ्चेत्येतानि अष्टावप्यायुधानि अम्बुजनि विशेषमनायासेन धृत्वा। त्रिकामिपद्मविन्यस्तप्रत्यालीढपदाम्बुजम्" इत्युक्तरीत्याऽऽसनपद्मे अत्युज्ज्वलसौन्दर्यपूर्तिस्सुदर्शनमूर्तिस्तिष्ठतीति समुदायतो गाथार्थः। प्रत्यालीढं=जानुद्वयस्येषदाकुञ्चनेन श्लथबन्धं स्थितिः। "प्रत्यालीढस्थितिमधिगताम्" इत्यन्यत्राचार्यपादोक्तेः। सुदर्शनबिम्बे चेदं प्रत्यक्षतो द्रष्टव्यम्। पद्मस्याप्यत्रायुधमध्येऽन्तर्भाव्य पठनं कथं युज्यत इति चेन्न; "अस्त्रामास तृणं प्रियाद्रुहि", "तृणस्यैवास्त्रत्वम्" इत्यादिपरामर्शिना भगवन्महिम्ना सर्वोपपत्तेः।

अथात्मनोऽपि पूर्वं परमतखण्डनप्रवृत्तान् पूर्वाचार्यान् स्वस्य मार्गदर्शित्वेन स्तौति—**विडुनेरि** इत्यादिद्वितीयगाथया। अत्र चार्थत इमाश्शङ्काः शमिता भवन्ति। तथा हि—मुमुक्षोस्तत्त्वज्ञानादेव मोक्षलाभात् परमतभञ्जनं कथं समञ्जसं भविष्यति। प्रत्युत—"न विगृह्य कथां कुर्यात्", "अधीयानः पण्डितम्मन्यमानो यो विद्यया हन्ति यशः परस्य। तस्यान्तवन्तश्च भवन्ति लोका न चास्य तत् ब्रह्म फलं ददाति॥" "वादेन ब्राह्मणं जित्वा हृष्टो भवति यो नरः। श्मशाने पादपः स स्यात् कङ्कगृध्रोपसेवितः" इत्यादिना वादप्रवृत्तेर्विजिगीषारूपानात्मगुणपूर्वकत्वावगमात् उपशान्तिप्रधानेन पुरुषेण तत्करणायोगश्च। किञ्च वेदबाह्यत्वात् चार्वाकादिमतस्य भङ्गे सुलभेऽपि न मायावादीनां तथा; वेदानुसारित्वात्। अपि च-अनन्ता वै वेदाः; तेषु किमपि वचनं कस्यापि मतस्य मूलं भविष्यतीति, कथं तस्य समुन्मूलनं सुकरम् इति शङ्कासु प्राप्तासु परिहार इहोच्यते गाथायाम्। **पल मरै** इत्यारभ्य **इडित्त पत्तरे** इत्यन्तं कर्तृनिर्देशः। एकारः पादपूरणार्थः। चिरन्तनश्रुतिशिरोवचनप्रवृत्तिप्रतिबन्धकपरमताभित्तिभित्तिपुटभेत्तारो भगवद्भक्तशिखामणयः। एन्रु अदु इडित्त इति **पदच्छेदः**। एन्रदै इति द्वितीयालोपेन तत्स्थाने एन्रदु (अदु) इति प्रथमा। **परमतम् इडैच्चुवर्** मतान्तराणि प्रतिबन्धकीभूतमित्यय. **एन्रु** इति विचिन्त्य **अदु इडित्त**=तत् विध्वंसितवन्त इति "एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः। विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि॥" इत्यादि-

கடுநரகன்பு கழற்றி மறவொரு
கதிபெறு மன்பில எமைப் பொருததினா
கமலை யுகந்த கடற் கிடைக் கடல்
கருணையுயர்ந்த திடர்க்கொருக்கினர்
படுமுதல(வி)ன்றி வளர்த்த நற்கலை
பலபல ஒன்ற எமக்குரைத்தனர்
பழமறையந்தி நடைக்கிடைச்சுவர்
பரமதமென்றது இடித்த பத்தரே. 3

वचनात् भगवद्भक्त्यैव स्वरूपनिरूपिकया पूर्वाचार्याणा निर्देश. क्रियते-**पत्तरे** इति। भक्ता इत्यर्थः। एतेन-तत्त्वाध्यवसायस्य मुक्तिलाभहेतोः प्रतिबन्धकत्वात् शक्ताधिकारिणः परमतानां भञ्जनमपि समञ्जसमेवेत्युक्तं भवति। अतो न पूर्वोक्तशङ्काङ्कुर इति। अथाचार्याणां शिष्येषु कृपापाङ्गवितरणवैभवमाह-**विडुनेरि** इत्यारभ्य **विलक्किवैत्तनर्** इत्यन्तेन प्रथमवाक्येन। त्यक्तव्यदुर्गमार्गभीत्या तं परित्यक्तुमारभमाणेषु सौभाग्यशालिषु शिष्येषु शरणमुपगतेषु सत्सु, तेषु समुदञ्चत्कृपाकटाक्षान् पातयित्वा, केनचित् व्याजेन तत्त्वमुपदिश्य प्रतिबन्धकवर्गान् अस्मत्तो दूरीचक्रुरित्यर्थः। **विळियरुळ्=अरुळविळि** इति व्युत्क्रमेणान्वयः। **विरकिल्** इति निमित्तसप्तमी। केनचिद्व्याजेनेति फलितम्। **कोडुविनै** इत्यारभ्य **गुणत्तनैत्तिनर्** इत्यन्तमपरं वाक्यम्। क्रूरकर्मवर्गाख्यं पापमीषन्मात्रमपि अप्रसञ्जयत् केवलकल्याणरूपं गुणजातं प्राप्तवन्तः पूर्वाचार्या इत्यर्थः। **तिनै**=धान्यविशेषः। **गुणत्तनैत्तिनर्** इत्यत्र अनैत्तु गुण त्तिनर् इति व्युत्क्रमेणान्वयः। अत्राचार्याणां अनन्तगुणराशिवाराशित्वात् निखिलदोषदूरस्थितेश्च केवलविजिगीषापरैस्सह विवादप्रवृत्तिर्यद्यपि न सम्भविष्यति, तथापि शिष्यशिक्षार्थं परमतभञ्जकग्रन्थपुञ्जनिर्माणादिकं युज्यत एवेति पूर्वोक्तशङ्कासमाधानं बोध्यम्। अथ परमतनिरसनस्य शिष्टानुष्ठानसिद्धत्वं दर्शयति-**कुरुकैयिलवन्दु** इत्यारभ्य **कुरिप्पिलवैत्तनर्** इत्यन्तेन। श्रीमत्कुरुकापुर्यां अवतीर्य परवादिनां दुर्दमं मदमपनीतवतः प्रपन्नकुलकूटस्थस्य श्रीमद्वकुळाभरणदिव्यसूरेः सम्मतायां तत्त्वसरणौ अस्मान् प्रतिष्ठापयामासुरित्यर्थः। अथ परमपुरुषार्थलाभस्याप्याचार्याधीनत्वमाह **कडुनरकु** इत्यारभ्य **पोरुत्तिनर्** इत्यन्तेन। अतिदुःखदनिरयनिपतनहेतुपापेषु प्रेमपूर्वकप्रवृत्तिं विनिवर्त्य सुखमवैकलक्षणां परमगतिं गन्तुं भक्तिमार्गेऽस्मान् प्रावर्तयन्नित्यर्थः। एवं मुक्तपुरुषार्थलाभहेतुभूतभगवत्कृपापात्रताऽपि

3 (விடுநெறி என்ற பாசுரப் பொருள்)—

அநாதியான ஸைவதத்தின் வழிக்குச் செல்ல இப் பிற மதங்கள் இடைச்சுவராய் இருக்கின்றன என்று கருதிய நம் பூர்வாசாரியர்கள்-அதர்மங்களைக் கண்டு நடுங்கி கைவிட்டு நல்வழி வரும் பாக்யசாலிகளைக் குறித்து, அவர்கள் தொழுதெழும்படி க்ருபா கடாக்ஷ மழை பொழிந்து நிலைப்படுத்தினார்கள். பாவங்களைக் கூடு பூரிக்கும் கெட்ட குணம் தனைத்தனையுமின்றி குணக் குன்றாக நின்றார்கள். திருக்குருகையில வந்தவதரித்த வைஷ்ணவகுலபதியாகிய நம்மாழ்வார்—பிறவாதிகள் கொழுப்படக்கியவர்—காட்டித் தந்த வழியில் எம்மை வைத்தனர்,

आशामतङ्गजगणान् अविषह्यवेगान् पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहवकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ४ ॥

ஆஶாமதங்கஜகணாந் அவிஷஹ்யவேகாந்
பாதே யதிக்ஷிதிப்ருத: ப்ரஸபம் நிருந்தந் |
கார்ய: கதாஹவ குதூஹலிபி: பரேஷாம்
கர்ணே ஸ ஏஷ கவிதார்க்கிகஸிம்ஹநாத: ||

सकललोकोज्जीवनार्थமாக प्रवृत्तங்களான अध्यात्मशास्त्रங்களிலே सिंहवनगुप्तिन्यायத்தாலே तर्कानुगृहीतप्रमाणங்களைக் கொண்டு स्वपक्षस्थापनமும் परपक्षप्रतिक्षेप-

---

गुर्वधीनेत्याह—**कमलैयुकन्द** इत्यादि **तिडर्कोरुक्किनर्** इत्यन्तेन । जननभवनबहुमानात् रमाप्रेमास्पद-पयोधिमध्याधिशयितपयोध्यन्तरवत् महानीलविग्रहस्य नारायणस्य कृपारूपामुत्तुङ्गभूमिं झञ्झामारुत-धूतचूतनयतोऽस्मानारोपयामासुरित्यर्थः । **तिडर्**=उन्नता भूः । आचार्या एव सर्वश्रुत्यर्थसारमभ्युपदि-दिशुरित्याह—**पडुमुदलिनूरि** इत्यारभ्य **उरैत्तनर्** इत्यन्तेन । उच्छिन्नमूलता विना सरक्ष्यमाणनाना-श्रुत्यर्थान् एकीकृत्यास्मान् प्रति अवोचन्नित्यर्थः । तथाच—"सांख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते । हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः । उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥" इत्यादिना सांख्यादिशास्त्रस्य पौरुषेयत्वं प्रदर्श्य—"ज्ञानान्येतानि राजेन्द्र! विद्धि नानामतानि वै ।" इति तेषु तत्त्वानवधारणञ्चोक्त्वा—"अवान्तरतपा नाम वेदाचार्यस्स उच्यते ।" इति वेदस्य परमपुरुषप्रवर्त्यत्वेनापौरुषेयत्वं प्रतिपाद्य, "सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायणः परः ॥" इति नारायण एव सर्वश्रुतितात्पर्य-निरूपणात् बाह्यमतवत् सांख्यादीनामपि निरसनीयत्वं नानाशाखार्थानामनुगमश्च भवतीति न पूर्ववच्छङ्कनीयमिति भावः ।

नन्विदानीं निखिलपरमतनिराकरणेऽपि कालान्तरे तेषां को वारयिता? निरस्तेष्वपि वा तेषु जनानामर्थकामादिना सङ्गः सम्भविष्यति । तथाच किमत्र विवेकिना कर्तव्यमित्यत्राह—**आशामतङ्गजेति ।** "तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥—यत् पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः । एकस्यापि न पर्याप्तम्" इत्यादिना आशाया अत्यन्तदुर्दमत्वमभिवीक्ष्य मतङ्गजत्वोत्कीर्तनम् । आशैव आशामतङ्गजा इति वा श्लिष्टरूपकसमासो भाव्यः । दिशागजा ह्यत्यन्तं बलिन इति प्रसिद्धिः । तेषां गणान् । **पादे यतिक्षितिभृतः**=यतिराजस्य चरणारविन्दयोः । पर्वतस्य प्रान्तभागेष्विति च । "पादाः प्रत्यन्तपर्वताः" इति निघण्टुः । **प्रसभं निरुन्धन्** । तृष्णां बाह्यविषयवर्गतो विनिवर्त्य यतिपतिपदारविन्दयोर्बध्नन् । न हि आशास्वरूपमेव हेयम् । परमात्मादिषु तस्यास्सर्वैरपि प्रार्थ्यमानत्वात् । किन्तु विषयविशेषविशेषितैव सा हेया । तथाच तस्यास्समुचितविषयलाभे सति सैवाऽऽशासनीया रसिकानां भवतीति भावः । को निरुणद्धि? **कवितार्किकसिंहनादः ।**

மும் பண்ணக் காணுநின்றோம். இவை இரண்டும் கூட तत्त्वाध्यवसायं

"स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्" इति भगवन्मुखामोदवायुपूरितपाञ्चजन्यध्वनिरिव स्थितः। कवयश्च ते तार्किकाश्चेति कर्मधारयः। न तु—कवयश्च तार्किकाश्चेति द्वन्द्वः। प्रत्येकं केवलानां तेषामनतिप्रशस्तत्वेन तान् प्रति सिंहत्वरूपणस्याचार्येऽतिशयानाधायकत्वात्। **तदुक्तम्**—"न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः" इति। तेषां **सिंहः**=शासिता। श्रीरङ्गनाथदेवालय-परिषदि महद्भिरनुगृहीतैतद्बिरुदो देशिकोत्तमः। तदप्युक्तं **स्वेनैव**—"अगणि सदसि सद्भिर्यः सम-स्यासहस्री कविकथकमृगेन्द्रः" इति। तस्य **नादः**=प्रकृते तदीयैतद्ग्रन्थादिरूपो भाव्यः। **कथाहव-कुतूहलिभिः** परवादिनिरसने कुतूहलमात्रं येषामस्ति, तैः। वस्तुतस्तत्र ते शक्ता अशक्ता वा भवन्तु। एतत्साह्ये सति शक्तयादेस्तत्रानपेक्षणादित्याशयः। परेषां कर्णे कार्यः=परे इमं ग्रन्थं श्रावयितव्याः। न तु ततोऽप्यधिकमस्माभिः किञ्चित् कार्यम्। ते चेत् भाग्याधिका भवन्ति, एतच्छ्रवणसमनन्तरमेव शिक्षित-बुद्धिबोध्या. श्रेयोमार्गं प्रवेशन्ति। विपरीताश्चेत्, विनङ्क्ष्यन्ति इति हृदयम्। इदमेवंविधमाचार्याणा-मुद्धतवचनं स्वग्रन्थस्य प्रमाणोपपत्त्यादिभिर्दुरत्वमभिवीक्ष्य सात्त्विकाहङ्कारेण भवति। अत्र—वने मृगराजस्य निनदं श्रुतवन्तो गजादयः परित्रस्ताः परितः पर्वतगुहा वनानि च समाश्रयन्ते यथा, तथैव प्रकृतेऽपीत्यर्थविशेषोऽपि बोध्यः।

ननु विलीयतां वेदान्तशास्त्रेण। का नो हानिः? किञ्च, भवतेव परेणापि स्वपक्षस्थापनाय परपक्षप्रतिक्षेपाय च प्रवृत्तौ तर्काप्रतिष्ठानात् न कचिदपि वादपर्यवसानमिति सेयं दुरन्ता चिन्ता भविष्यतीत्यत्र सत्तर्कस्य प्रतिष्ठितत्वेन परमतखण्डनस्य साम्प्रदायिकतामाह **सकललोके**ति। अनेकजन्मनि हिताहित-

சிற்றின்பத்தால் கடுநரகில் விழவிருந்த எம்மை, மற்றொரு பரகதி காட்டி அதைப் பெறும் பெரு நம்பிக்கை நமக்கு ஏற்படும்படி செய்தார்கள். பிராட்டி ப்ரீதி பண்ணும் பாற்கடலில்—ஓர் நீலக் கடல் கிடந்ததென்னலாம்படியாக சயனித்த எம்பெருமானின் உயர்ந்த கருணை பெற்று உயரும்படி எம்மை ஒதுக்கினார்கள். முதல் மாளாத வேத ப்ரமாணத்திற்கு விரோதமின்றி வளர்ந்த பல பல நற்கலைகளை எமக்கு ஒருமைப்படுத்தி உபதேசித்தார்.

4. (ஆசாமதங்கஜ—இத்யாதி)—

ஆசையெனும்—ஆசாகஜங்களை—திக்கஜங்களை அவைகளுடைய புயலெனப் பெருகும் வேகங்களெல்லாம் தொலையும்படி, யதிக்ஷிதிப்ருத்தினுடைய — எம்பெருமானுடைய (பெரியதொரு மலையினுடைய) திருவடியில் (அடிவாரத்தில்) சேரும்படி (கட்டுண்ணும்படி) செய்யவல்லதான, ஸ்ரீகவிதார்க்கிகஸிம்மமாகிய ஸ்ரீதேசிகனின (சிங்கத்தின்) குரலாகிய இப் பரமதபங்க க்ரந்தத்தை (கர்ஜனையை), பிறரை வாதில் வெல்லத் துடிக்கும் ஓ! பண்டிதர்களே! பிற மதத்தவர் காதுகளில் ஒலிக்கச் செய்யுங்கள்; ஓடிவிடுவார்கள்.

துக்குக் காரணமாம்.

प्रत्यवेक्षकाध्यात्मशास्त्रस्य, "मातापितृसहस्रेभ्योऽपि वत्सलतरं हि शास्त्रम्", "मानं प्रदीपमिव कारुणिको ददाति" इत्यादिना सकललोकोपजीव्यत्वश्रवणात् तत्परिरक्षणं प्राप्तमेवेत्याशयः। **प्रवृत्तमान** इति। प्राप्तिमन्तु वत्सलतरत्वात् वैदिकः सम्प्रदायः मूलभूतकर्तारं विना अपौरुषेयतया स्वयमेव प्रवृत्तः। न त्वन्यस्सम्प्रदाय एवंविधो भवतीति भावः। **अध्यात्मशास्त्र**मिति। **आत्मानौ**=जीवपरौ। आत्मनोरित्य**ध्यात्मम्**; तावधिकृत्य कृतमित्यर्थः। तादृशं शास्त्रम्। अध्यात्मशास्त्रम्। "सिंहैर्विहीनं तु वनं विनश्येत् सिंहा विनश्येयुः ऋते वनात्तु" इत्युक्तसिंहवनगुप्तिन्यायः। **तर्कानुगृहीते**ति। प्रमाणविरुद्ध-शुष्कतर्काणां तर्कविरुद्धप्रमाणाभासानाञ्चार्थनिर्णायकत्वाभावात् परस्परमुभयोः सिंहवनयोरिव रक्ष्यरक्षक-भाव इति भावः। तथाच परेषां तर्कप्रमाणे नैवविवे इति न पूर्वोक्तशङ्कावकाश इति बोध्यम्। नन्वेवं तर्कप्रमाणयोरितरेतराश्रयत्वं दोषस्स्यात्। न च सिंहवनयोरिवासावनयोरप्यदोष इति वाच्यम्; तस्योत्पत्तिज्ञप्त्योरेव विषये दोषतायाः सर्वैरङ्गीकरणात् सिंहवनयोश्च स्वतन्त्रयोः तयोर्विषये परस्परान-पेक्षणेनादोषत्वेऽपि प्रकृते तर्कप्रमाणयोः सम्यक्त्वज्ञप्तौ परस्परापेक्षणसद्भावेन दोषताया दुर्वारत्वा-दिति चेत्—न, सर्वस्यापि प्रमाणस्य सम्यक्त्वे तर्कापेक्षानियमाभावात्। स्पष्टं हि किञ्चित्प्रमाणं विना तर्कपर्यालोचनं स्वार्थं साधयेदेव। अस्पष्टस्य तु प्रमाणस्य तर्कापेक्षा भवति। स च तर्कः स्पष्टप्रमाणान्तरसापेक्षोऽपि नैतत्प्रमाणसम्यक्त्वसापेक्ष इति कान्योन्याश्रयः। **तर्कस्वरूपञ्च श्रीभाष्य-कृद्भि**रित्थमभिहितम्, "तर्को हि नाम अर्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थ-विशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम्" इति। इतिकर्तव्यता=अङ्गम्। "अध्याहारस्तर्क ऊहः" इति निघण्टुः। धूमादग्न्यनुमाने—यत्र धूमस्तत्राग्निः; यत्र नाग्निस्तत्र न धूमः; धूमस्य वह्निकार्यत्वात् इति धूमरूपार्थस्वभावनिरूपणात्मकस्तर्कः तदनुमानं स्वसाध्यसाधनविषये व्यवस्था-पयति। तथा ज्वालाभेदानुमाने, वर्तितैलादीनां ज्वालोत्पत्तिसामग्रीत्वेन प्रतिक्षणं तद्भेदे तद्भेदावश्य-म्भावात् न ज्वालैक्यप्रत्यक्षं प्रमाणमिति सामग्रीनिरूपणरूपस्तर्कः तद्विप्रतीपतया ज्वालाभेदानुमानं स्वसाध्यसाधने व्यवस्थापयति इति **भाष्यार्थः श्रुतप्रकाशिकादिषु** विशदमनुसंधेयः। अथैवं तर्कस्य प्रमाणसहकारितया परिग्राह्यत्वे—तर्काप्रतिष्ठानादिति सूत्रविरोधः। तत्र तस्यापरिनिष्ठितत्वेनानादर्तव्यत्वाभि-धानादिति चेत्—तस्य तर्काभासविषयत्वेन सत्तर्कस्य परिग्राह्यतायां विरोधाभावात्। तदुक्त**माचार्यै**रेव, "सौत्री तर्काप्रतिष्ठा श्रुतिपथविमुखस्वैरवादेषु योज्या" इति। **काणानिन्नरोम्** इति। उपनिषदपि,

---

அகில உலகமும் தழைத்து ஈடேறும்படிச் செய்யவென்றே வந்தவை வேதாந்த சாஸ்திரங்கள். சிங்கம் முதலிய கொடிய மிருகங்களால்தான் காடு பத்திரமாக அழியாது இருக்கிறது. இதழியா திருப்பதால்தான் அவைகளும் அவற்றுள் பாதுகாப்புடன் வளர்கின்றன என்ற மாதிரி ஒன்றுக்கொன்று உதவிகரமான யுக்தியும் ஆதார ப்ரமாணமும் கொண்டு தான் அவ் வேதாந்தங்களில் கூட

बीजाङ्कुरन्यायத்தாலே அனாதியாக ப்ரவ்ருத்தமான ஆத்மாபஹாராதிப்ராந்திஸந்ததித்தாலே அஸ்தானராகத்வேஷாதிகள் பிறந்து, அவற்றாலே பந்தகங்களான கர்ம

"सदेव सोम्येदमग्र आसीत्" इत्यादिना स्वमत प्रदर्श्य, "तद्धैक आहुः असदेवेदमग्र आसीत्" इत्यादिना पूर्वपक्षमुपन्यस्य--"कथमसतस्सत् जायेत" इति तत्खण्डनं दृश्यते। भगवान् वेदान्तसूत्रकार सत्तर्करूपाण्येव बहूनि सूत्राणि प्रणिनायेति तदिदं सांप्रदायिकमेवेति भावः। नन्वनयोरन्यतरेणालम्; तत्फलस्य तत्त्वज्ञानोदयस्य तावतापि लाभादित्यत्राह—**इवै इरण्डुम् कूड** इति। कूड इत्यपिकारः एवकारार्थकः। तथा चैतदुभयमेव तत्त्वाध्यवसायस्य कारणमिति वाक्यार्थः पर्यवसन्नः। **इवै इरण्डुम् कूडि** इति वा पाठो **निरीक्षणीयः**। तदानीम्--एतदुभयं मिलित्वैवेत्यर्थः स्पष्टीभविष्यति। तथा चानयोरेकतरकरणे समुदायत एव परमतपरिज्ञानं भवति; न सूक्ष्मतः। परपक्षाप्रतिक्षेपे उक्तरीत्या स्वमते इतरमतसाधारण्यादिसम्भावनया विश्वासमान्द्यस्य, स्वपक्षस्याप्रतिष्ठापनेऽस्मत्पूर्वाचार्येषु **खण्डनकारादिष्विव** कैवलवैतण्डिकत्वबुद्धेश्चाऽऽपत्त्या महदत्याहितं स्यादिति भावः। अत्र-"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहणार्थं कण्टकशाखावरणवत्" इति न्यायसूत्रोक्तदिशा स्वमतस्थापनस्य साक्षात् तत्त्वज्ञानाङ्कुरवर्धकत्वं, प्रतिपक्षभञ्जनस्य च—"कडङ्करीयरोधो हि कलमोत्सेधकारणम्" इति रीत्या प्रतिबन्धकनिरसनेन परम्परया प्रयोजकत्वमिति च विभज्योपयोगो बोध्यः।

ननु तत्त्वाध्यवसायार्थमेते करणीये इत्ययुक्तम्; तदुदयस्य पुरुषे सर्वथाऽनवसरग्रस्तत्वात्। "पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः। नष्टप्रज्ञः पापमेव पुनरारभते(ऽ)र्जुन" इत्युक्तरीत्या अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धानां बीजाङ्कुरन्यायेन प्रवृत्तानां प्रतिरोधानां पुरुषे कदाप्यनुपरतेरित्यत्राह—**बीजाङ्कुरे**ति। सोऽयं न्यायः—"यथा हि पादपो मूलस्कन्धशाखादिसंयुतः। पूर्वबीजात् प्रभवति बीजान्यन्यानि वै ततः॥" इति **विष्णुपुराणे** प्रोक्तः। **अनादियाह** इति। ततश्चास्मिन् सन्ताने, अयमेवादिरिति न किञ्चिद्वक्तुं शक्यम्, यथा बीजं वा अङ्कुरो वाऽऽदिरिति नेति भावः। **आत्मापहारादिभ्रान्ती**ति। आत्मनोर्जीवपरयोरपहारस्य बाह्य इव न क्रियारूपत्वसम्भवः, अपितु ज्ञानविशेषरूपभ्रान्तित्वमेव युज्यते। बाह्यकरणाद्यगोचरसूक्ष्मवस्तुरूपत्वात्तयोः। **तथा चोक्तम्**—"अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसम्भूतिबीजमेतत् द्विधा स्थितम्" इति॥ अत्र—"नास्तीश्वरः, विष्णोरन्य ईश्वरः" इत्यादिभ्रम ईश्वरापहारः। "जीवो नास्ति, विष्णोरन्यस्य स शेषः—स स्वतन्त्रः" इत्यादिर्जीवापहारः। [illegible]ऽपि **आदि**ना विवक्षितः। स च [illegible] भवति। एतादृशभ्रान्तिसन्ततिफलमाह—**अस्थानरागद्वेषादी**ति। भगवत्तदनुबन्धिषु रागः, शब्दादिबाह्यविषयेषु

தன் கொள்கையை நிலைநாட்டுதலும், பிறர் கொள்கையைக் கண்டித்தலும் நடைபெறுகின்றன என்று காண்கிறோம். இவ்விரண்டும் சேர்ந்தால் தான் தத்துவவிஷயத்தில் நிர்ணயம் கொள்ளமுடியும். [illegible], அதன் மூலம் இந்த இரண்டிலும் எது [illegible]

**களைப் பண்ணி, அவை யடியாக चतुर्विधशरीरங்களாகிற சிறைக் கூடங்களிலே கட்டுண்டு, आध्यात्मिकादितापங்களாலே அடியுண்டு, பேராதே (வீடு பெறாதே) போருகிற संसारिகளுக்கும்,**

---

द्वेषश्च स्थाने भवेत्। परन्तु-शब्दादिविषयप्रावण्यम्'' मामात्मपरदेहेषु प्रद्विषन्तः'' इति भगवद्भागवतादिषु द्वेषश्चेदानीं पूर्वोक्तभ्रान्तिसन्तत्या सर्वत्र विलोक्यते। स एवास्थानरागद्वेषादिरित्याशयः। तेषामपि फलं दर्शयति—**अवद् राले** इति। तेनास्थानरागद्वेषादिनेत्यर्थः। स्वर्गे रागात् यागादि, शत्रौ द्वेषादभिचारादिकञ्च स्वस्य बन्धकं कर्म जीवः करोतीत्युक्तं भवति। कर्मणां बन्धकत्वं विशदयति **अवैयडियाग** इति। तादृशकर्ममूलकतयेत्यर्थः। देवतिर्यङ्मनुष्यस्थावरात्मना शरीराणि चतुर्विधानि। शिरैक्कूडम्= देवादिदेहानामपि कर्मफलत्वेन मोक्षगमनविरोधित्वेन च कारागारतुल्यत्व बोध्यम्। कारायां कशाभिघात इव देहे बद्धस्यापि तापत्रयाभिघातो नियत इत्याह **आध्यात्मिके**ति। आधिश्च व्याधिश्चा**ध्यात्मिकम्। आत्मनि** देहे जायमानत्वात् आध्यात्मिकसञ्ज्ञा। **आधिः**=मानसी व्यथा। "पुंस्याधिर्मानसी व्यथा" इति निघण्टुः। स च, "कामक्रोधभयद्वेषलोभमोहविषादजाः। शोकासूयावमानेर्ष्यामात्सर्यादिमयास्तथा॥" इत्यादिनोक्तः। **व्याधिः** शरीरव्यथा। सोऽपि, "शिरोयक्ष्मप्रतिश्यायज्वरशूलभगन्धरैः। गुल्मश्वासश्वयथुभिः छर्द्यादिभिरनेकधा" इति प्रतिपादित.। अत्रा**दि**पदेन, "पशुपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः। सरीसृपाद्यैश्च नृणां जन्यास्ते चाधिभौतिकाः" इत्युक्तनानाविधभूतजन्याधिभौतिकस्य, "शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवैः।" इत्यभिहितदैवतजन्याधिदैविकस्य च तापस्य ग्रहणम्। एवं विधबन्धतापादीनां निरन्तरं प्रवृत्तत्वमाह, **वीडु पेरादे पोरुगिर** इति। बन्धान्मुक्तिमलब्ध्वैव तिष्ठतामित्यर्थः। एवमेतावता जननमरणप्रबन्धाविच्छेदेन तत्त्वज्ञानोदयस्यानवसरग्रस्ततां प्रतिपाद्याथ कदाचित् सर्वेश्वरस्य सहजसौहार्देन, "ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा। विष्णोः कटाक्षमद्वेषमाभिमुख्यञ्च सात्त्विकैः॥ सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" इत्युक्ताज्ञातयादृच्छिकानुषङ्गिकप्रासङ्गिकसामान्यज्ञानमूलसुकृतविशेषैराचार्यप्राप्तौ सत्यां तत्त्वज्ञानोदयस्यावसरसम्भवमाह, **संसारि गलुक्कुम्** इति। ज्ञानसङ्कोचकरशरीरसम्बन्धवतामपी-

---

**காணமுடியாது என்ற கணக்கில், இங்கும் நம்மால் முதலறிய முடியாத அநாதியான ஆத்மஅஜ்ஞானதி மாயாபரம்பரையிலே, தவறான விஷயங்களில் ஆசையும, நலல விஷயங்களில் துவேஷமும் பிறந்து, அதனடியாக, நம்மைக் கால்கட்டும் கர்மாக்களைச் செயது, அதன் பயனாக தேவர், மனிதர், மிருகங்கள், மரங்கள என நான்கு வகையான சரீரங்கள் எனும் சிறைக்கூடங்களில் சிக்குண்டு, தன்னிலே தோன்றுவது, வெளி இயற்கையால் தோன்றுவது, மேலுலக தேவர்களாலே தோன்றுவது ஆன மூவகைதாபங்களுக்கு இரையாகி, நல்வீடு பெறுமலே வீணாகி நிற்கும் இவ் வுலகமாந்தர்களுக்கு அறிவு என்னும் பிறப்பறுக்கும் புதுப் பிறவி பெற வேண்டியதாயுள்ளது. பெற்றோர்களாலே பெறுவது உடல் என்னும் பிறவி. அது அழிவது**

**'शरीरमेतौ कुरुतः पिता माता च भारत । आचार्यशिष्टा या जातिः सा सत्या साऽजरामरा ॥'**
**என்கிறபடியே பிறப்பறுக்கும் பிறவி யுண்டாம்.**

'ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् । स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ २ ॥

**इत्यादिகளில் சொன்ன दोषங்கள் வாராதபடி सत्त्वगुणभूयिष्ठ[ता] दशैயிலே सत्संप्रदायसहकृतशास्त्रங்களாலே अपेक्षितज्ञानं सुप्रतिष्ठितமானால் भ्रान्तिज्ञानं முதலான प्रतिकूलपरम्परை उदियாது.**

---

त्यर्थः । **शरीरमि**त्यादि—मातापित्रोः पुत्रशरीरकारणत्वं पञ्चाग्निविद्योक्तदिशा शुक्लशोणितद्वारा बोध्यम् । **आचार्यशिष्टा या जातिः**=आचार्योपदिष्टं यत् विद्याख्यं द्वितीयं जन्म । **सा सत्या**=तदेव जन्म आत्मनः स्वाभाविकम् । ब्राह्मण्यादिजन्म त्वौपाधिकम् । **अजरामरा**=जरामरणादिरहिता । शरीरस्यैव हि जरामरणादिकम् । **तदुक्तम्**, "स हि विद्यातस्तं जनयति, तद् द्वितीयं जन्म, तच्छ्रेष्ठतमं जन्म" इत्यादि । **पिरप्परुक्कुम् पिरवि युण्डाम्** इति । कर्मकृतप्राथमिकजन्मपरम्परानिवर्तक ज्ञानाख्यं द्वितीयं जन्म भविष्यतीत्यर्थः । तदेतज्जन्म आचार्यसमाश्रयणाद्भविष्यतीति तद्दशाया तत्त्वाध्यवसायादीनामवसरलाभात् पूर्वोक्तं सर्वमुपपन्नमित्याशयः। नन्वधुना केषाञ्चित् गुरुकुलवासिनामपि तत्त्वज्ञानानुदयात् कथमुक्तरीत्या जन्मोच्छेदादिरित्यत्राह **ब्रह्म यस्त्विति** । इदं मनुवचनम् । **ब्रह्म**=वेदः । अध्यात्मशास्त्रस्याप्युपलक्षकम् । ब्रह्म **अधीयानात्**=विविक्ते देशे उपविश्य वेदादिकमभ्यस्यत आचार्यस्य सकाशात् । अन्यान् अध्यापयतस्सकाशात् इत्यपि बोध्यम् । **अननुज्ञातं**=तदननुमतमेव । अत्रापि ब्रह्मेत्यनुषज्यते । **अवाप्नुयात्**=शृणुयात्। तथाच तदनुमतिमन्तरैव कुड्याद्यन्तरितो वेषान्तरावृतो वा यदि कश्चित् अन्याय्यमार्गेण वेदादिकं जानीयात् इति यावत् । **सः**=शिष्यः, **ब्रह्मस्तेयेन** स्वर्णस्तेयादितोऽपि क्रूरतमेन संयुक्तो नरकं प्रति याति । न त्वादौ वेदापहारिमधुकैटभादिवत् भगवद्धस्तेन पावनं मरणं प्राप्नोतीति भावः । **आदिना**, "विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः । त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः" इत्यादिवचनं ग्राह्यम् । एवञ्चैतादृशान्याय्यमार्गेण तत्त्वज्ञानसम्पादनासम्भवेऽपि, "सत्त्वात् संजायते ज्ञानम्", "सत्त्वं विष्णुप्रकाशकम्" इत्युक्तरीत्या स्वस्य सत्त्वगुणोद्रेकदशायां तादृशगुणप्रचुरप्रातःकालादौ विधिवत्, "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति रीत्या आचार्यमुपसङ्गम्य, "अनन्तपारं बहु वेदितव्यं स्वल्पश्च कालो बहवश्च विघ्नाः । यत् सारभूतं तदुपाददीत हंसो यथा क्षीरमिवाम्बुमिश्रम्" इति अपेक्षितसङ्क्षेपानपेक्षितविस्तररहिततया सम्यक् शास्त्रार्थश्रवणं शिष्येण कार्यमिति, तथाकरणे जन्मान्तरोच्छेदोऽवश्यम्भावीति च भावः ।

---

*இன்னம், ஆசார்யர்களாலே பெறப்படுவது அறிவுப்பிறவி. அது அஜராமரமானது. அவ் வைதிகமான அறிவைப் பெறும் போது— வேதமோதுபவர் அநுமதி கொண்டே பெறவேணும். அன்றேல்— களவு செய்து பாவமேற்று நரகம் பெறுவான். ஆக—இவ்விதமெல்லாம் செய்யாது ஸத்துவகுணம் மேலிட்டிருக்கும் கால் ஆசாரிய*

முன்பு பண்ணின பந்தஹேதுகர்மங்களில் அநுபவத்தால் கழியாதவை தத்வ-ஜ்ஞானபூர்வகவித்யாவிசேஷங்களாலே கழியும்.

இப்படி, 'அஜ்ஞானத்தாலே ஸம்ஸாரம், தத்வஜ்ஞானத்தாலே மோக்ஷம்' என்கிற ஸர்வதந்த்ரோக்திக்கும் விரோதமில்லை

---

ननु, "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिना कर्मणामनुभवैकनाश्यताश्रवणात् तत्त्वज्ञानस्य कथं पापक्षपणकारत्वम्। किञ्च-तत्त्वज्ञानादेव सकलपापनिवृत्तिद्वारा मुक्तिलाभे मोक्षार्थं विद्या-विशेषविधीनां वैयर्थ्यञ्च इत्यत्राह, मुन्बुपण्णिन इति। अनुभवत्ताल् कऴियादवै इति। तथाच कर्मणामनुभवनाश्यत्वश्रवणं सामान्याधिकारिविषयम्। विद्यावतां तु विशेषोऽस्ति। तथाहि—प्राचीनं कर्म द्विविधं-प्रारब्धमप्रारब्धञ्चेति। सामान्यतोऽविद्वद्विषये इदं द्विविधमपि अनुभवेनैव विनश्यति। विद्यावतां विषये तु—अप्रारब्धं कर्म सर्वं विद्यामाहात्म्यान्नश्यति। प्रारब्धं तु त्वनुभवेन। अत एव तेषामिहैव जन्मनि मोक्ष इति न नियमः। प्रारब्धकर्मणो द्वित्रादिजन्मस्वपि अनुवृत्तिसम्भवात्। अत्रैव-प्रपत्त्याख्यविद्या-विशेषनिष्ठानां तु, "प्रारब्धमप्रारब्धं सर्वं कर्म प्रपत्तिविद्यामाहात्म्यादेव नश्यति इति विशेषः। न क्वचिदपि तदनुभवापेक्षा तेषाम्। अत एवात्यन्तमार्तस्य प्रपन्नस्य मद्य एव मुक्तिः। अन्येषामस्मादृशानां प्रपन्नानां दृप्तानां तु आर्तिपूर्त्यभावादेव अभ्युपगतप्रारब्धखण्डस्यानुवृत्त्या देहावसानप्रतीक्षणं भवतीति। अत्र, "बन्धहेतुकर्म" इति निर्देशेन, "तदहेतवोऽपि केचन कर्मविशेषास्सन्ति" इति ज्ञायते। ते च सात्त्विक-त्यागपुरस्सरं क्रियमाणा नित्यनैमित्तिकविशेषाः। तेषां चारितार्थ्यं च भक्तिज्ञानाद्युत्पादनद्वारेणेत्यपि बोध्यम्।

नन्वेवं सति कर्मणा तद्धेतुभूतभ्रान्त्या वा संसारः, विद्यया मोक्ष इत्युक्तं भवति। तथा सति, अज्ञानात्संसारः ज्ञानान्मोक्षः" इति सर्वसैद्धान्तिकवचनविरोध इत्यत्राह— इप्पडि अज्ञानत्ताले इति। अयमाशयः—इह संसारकारणीभूतमज्ञानं न ज्ञानसामान्याभावः। चेतनसामान्यस्य तदसंभ-वेनाचेतनानामेव तदापातात्। अपितु तत्त्वत्रयादिविषयकयथावस्थितज्ञानाभाव एव तत्। तथाच तस्य भ्रान्तावेव पर्यवसानं कार्यम्। तथैव "ज्ञानान्मोक्षः" इत्यत्रापि विद्यया मोक्ष इति फलितार्थ एव स्वीकार्यः। इतरथा घटादिज्ञानान्मोक्षादर्शनेन, केवलं पण्डितमात्रस्य तत्त्वज्ञानादपि तददर्शनेन च विरोधापत्तिः। तदुक्तमाचार्यैरेवान्यत्र, "ज्ञानान्मोक्षोपदेशे हि तत्पूर्वोपासनाद्विना। उपासनादि-रूपाद्वा ज्ञानान्मोक्षो विवक्षितः॥" इति। सर्वतन्त्रोक्तीति। चार्वाकव्यतिरिक्तसर्वतन्त्रसिद्धान्तेत्यर्थः।

---

வழியாய் ஸம்ப்ரதாய முறையில் வந்த சாஸ்திரங்களைக் கொண்டு இவன் அறியவேணும். இவ்விதம் அறிவாளியானவனை முற்கூறிய ஜ்ஞானி மாயர் பரம்பரை அனுக்ரஹம்.

முன் தான் செய்த கால்கட்டான கர்மங்களில், பயனை அநுபவித்து முதல் மாண்டு ஒழிந்தவை போக மற்றுள்ளவை, தத்துவ அறிவால் இவன் அனுஷ்டித்த பக்தி அல்லது ப்ரபத்தியாலே

ஆகையாலே संसारनिवृत्तिकामனுக்கு முற்பட तत्त्वज्ञानम् संपादनीयम्.

1 போமுரைக்கும் பொருள் யாமறியோம் பொருளார் மறையில்
தாமுரைக்கின்றன தாமே யறியும் தரமுடையார்
ஆமுரைக்கென்றிவை ஆய்ந்தெடுத்து ஆரண நூல்வழியே
நாமுரைக்கும் வகை நல்லருளேந்தி நவின்றனரே. 8

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

## परमतभङ्गे प्रस्तावनाधिकारः प्रथमः

---

तेन संसारस्य परिह्रियमाणस्यादृष्टमूलकत्वानभ्युपगमात्; मोक्षस्यास्मत्सम्मतस्य स्वरूपत एव प्रतिषेधात्; सहस्रयुवतिसम्भोगाख्यस्य च तदभिमतमोक्षस्य विद्यानपेक्षित्वाच्च। अथैतावतोक्त निगमयति, **आगै-याले** इति। ज्ञानाज्ञानयोः संसारमोक्षहेतुत्वस्थापनेनेत्यर्थः। **मुर्पड** इति। तथाच विद्याया एव मोक्षं प्रति अव्यवहितकारणत्वेऽपि ततोऽपि पूर्वं तदङ्गतया तत्त्वज्ञानमावश्यकमित्याशयः। **तत्त्वज्ञानम्** इति। साधर्म्यवैधर्म्यनिरूपणाधीनतत्त्वत्रयसम्बन्धिपरस्परविलक्षणस्वरूपस्थितिप्रवृत्तिभेदविषयकज्ञानमित्यर्थः।

अथ स्वस्यैतत्प्रबन्धप्रणयनपटुताऽपि स्वपूर्वाचार्यकटाक्षायत्तेति स्वकृतज्ञतामाविष्करोति **पोमुरै-क्कुम्** इति अधिकारान्तिमगाथया। **पोरुळार्मरैयिल्**—स्वरसार्थभरभरितश्रुतिनिकरे। इदं काकाक्षिन्यायेन प्रथमद्वितीयपादयोर्द्वयोरप्यन्वेति। **पोरुल्** इत्यस्याऽऽवृत्त्या, **पोम् पोरुल्, उरैक्कुम् पोरुल्** इत्यन्वीय, आपातप्रतीतत्वान्निराकार्योऽर्थः स्वीकार्यस्तात्पर्यार्थश्चेति व्याख्येयम्। तथाच तादृशार्थद्वयमपि श्रुतिनिकरे स्वयं सम्यक् नाध्यवस्याम इति प्रथमपादार्थः। अपितु तादृशश्रुतिबृन्दे पूर्वोक्तं सर्वं साक्षात्कर्तुं आचार्या एवार्हन्ति इति द्वितीयपादस्य। अस्य चान्वयः, **"नविन्ऱनरे"** इत्यन्तिमक्रियया। **उरैक्क आम्** इति व्युत्क्रमेणान्वयः। उपदेष्टुं अर्हा इत्यर्थः। एवञ्च शिष्यं प्रत्युपदेशार्हा इम एवार्था इति स्वयं मनसि आलोड्य पश्चात् तान् अर्थान् वैदिकसम्प्रदायानुरोधेन वयमपि यथा प्रवक्ष्यामः, तथा परमां कृपां कृत्वाऽवोचन्नित्यवशिष्टपादद्वयस्यार्थः।

---

ஒழிந்துபோம் ஆகையால் அஜ்ஞாநத்தால் கட்டுண்டவன், ஜ்ஞாநத்தாலே விடுதலை அடைகிறான் என்ற பொது நியதிக்கும் விரோதமில்லை அதனால் ஸம்ஸாரச்சிறையிலிருந்து தன்னை விடுவிக்க நினைப்பவனுக்குத் தத்துவஜ்ஞானம முற்பட தேவையாகிறது.

(போமென்கிற பாசுரக் கருத்து.) நலிந்துவிடும் பொருளை யாமறிய மாட்டோம். ஆகையால், அர்த்த புஷ்டியுள்ள வேதங்களில கருத்துடன் கூறியுள்ள நிலைத்த பொருளையே அறியும் தன்மை பெற்றஆசாரியர்கள், ஆய்ந்து எடுத்து பிறருக்கு உபதேசிகக்த்தக்கவை இவை என்று வேத முறைப்படி பிறருக்கு நாமுபதேசிக்கும்படி தெளிவாக மிக்க கருணையுடன் நமக்கு நவின்றார்கள்.

பிரஸ்தாவனாதிகார மொழிபெயர்ப்பு முற்றும் (1)

श्रीः

## ।। अथ जीवतत्त्वाधिकारो द्वितीयः ।।

(तत्त्वत्रयविषयोपोद्घातம்)

*சிதநுமசித்தும் இறையு மெனத் தெளிவுற்று நின்ற*
*தத்துவ மூன்றும் தனித்தனி காட்டும் தனி மறையால்*
*முத்திவழிக்கிது மூலமெனத் துணிவார்களையும்*
*கத்தி மயக்கும் கதகரை நாம் கடிகின்றனமே.* 4

இப்படி अविद्या-कर्मप्रवाहத்திலே ஒழுகி अपारமான दुःख-सागरத்தில் அழுந்துகிற चेतनனுக்குத் தன் विशेषणங்களை विवेकि யாமை

---

बीजाङ्कुरादिवत् अनादिभवाम्बुराशौ जन्तुर्निमज्जति, कदाचिदशेषसिद्ध्यै ।
विष्णोः कटाक्षलवलब्धपुराणजन्मप्रध्वंसिजन्मनि धियं त्वयते समीचीम् ।। १ ।।
तत्तादृशाप्तवचनाप्तविमर्शहेतोः सन्धुक्षितः श्रितरमापतिपादमूलः ।
तन्वन् परोक्तमतभङ्गमसौ प्रसक्तौ संरक्षति स्वमतमप्यथचेत्यबोधि ।। २ ।।

**इति श्रीवत्सवंशायनस्य देशिकचरणपरायणस्य नारायणस्य कृतिषु**
**परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाभिख्यायां प्रस्तावनाधिकारः प्रथमः ॥**

——.() ——

जीवतत्त्वाधिकारो नाम द्वितीयः ।।

**यन्माहात्म्यमिषेणैव देववद्गुरुगौरवम् । श्रुतिरप्याह तमिह श्रये श्रुत्यन्तदेशिकम् ।। १ ।।**
**जीवतत्त्वाधिकारेऽस्मिन् द्वैतीयीकतया मिते । जीवेश्वरभिदासिद्ध्यै जीवधर्मो निरूप्यते ।। २ ।।**

ननु, "कृशान् अर्थान् ततः केचिदकृशान् तत्र कुर्वते" इत्युक्तकुतर्काभ्यासव्यसनिनः तत्त्वं भवदुक्तं पांसुभिरिवावकिरन्तो भवतां प्रयासं वितथयिष्यन्तीति शङ्कायां, सम्यक् न्यायकलापावलम्बनेन तेषामपि क्षणमात्र एव क्षपयितव्यत्वमाह, **चित्तुम्** इति प्रथमगाथया । चिदचिदीश्वररूपतत्त्वत्रयमपि स्पष्टं प्रतिपादयन्त्या, "क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः" इत्याकारिकया निरतिशय-माहात्म्यवत्या श्रुत्या, मोक्षस्येदम्मूलमिति निश्चिन्वतोऽपि मन्दान् अधिकारिणः जल्पवितण्डादिभिर्मोहयन्ति ये परमतनिष्ठाः कथकाः, तान् निराकरिष्याम इति गाथार्थः । कत्तु=जल्पादिः । **कथकरै** कथकान् ।

ननु चेतनस्य सतो जीवस्य रागतस्सुखसङ्गे प्राप्तेऽपि कथं दुःखसागरनिमज्जनम्, कथञ्च तत्त्वज्ञानेन प्रतिकूलभ्रमनिवृत्तिः इत्यत्र पूर्वाधिकारोक्तमपि समाधानं पुनरादरादत्र विवृणोति **इप्पडि** इति । पूर्वाधिकारोक्तरीत्येत्यर्थः । **अविद्याकर्मादी**त्यादिना वासनारुचिप्रकृतिसम्बन्धानां ग्रहणम् । **दुःखसागरे**त्यत्र, "संसारसागरं घोरमनन्तक्लेशभाजनम्" इत्यादिकं विवक्षितम् । प्रवाहे पतितस्य अन्ततस्सागरप्राप्तिरवश्यम्भाविनीति रीतिमनुसृत्यात्रापि, '**प्रवाहत्तिले ओलुगि, सागर-त्तिले अलुन्दुगिर**" इत्युक्तम् । तथाच रागाभावेऽपि प्रबलकर्मभिरनिष्टयोगो भवतीति भावः । **तन् विशेषणम्**=स्वापृथक्सिद्धविशेषणीभूतं स्वशरीरम् । **विवेकियामैयाले**=नायं देवो न मर्त्यो वा न तिर्यक्

யாலே வருகிற प्रकृत्यात्मभ्रமமும், தன் विशेष्यத்தை विवेकியாமையாலே வருகிற स्वतन्त्रात्मभ्रமமும் கழிகைக்காக तत्त्वनिरूपणம் பண்ணவேணும்.

तत्त्वशब्दம் प्रमाणसिद्धसर्ववस्तुसाधारणமாய், சில द्रव्यங்களிலே विवक्षाविशेष-

---

स्थावरोऽपि वा । ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः ॥" इति अचेतनाद्देहात् स्वस्मिन् प्रसिद्धस्य भेदस्याविवेचनेन ; अग्रहणेनेति यावत् । ततश्च तादृशभेदाग्रहणरूपकारणघटितसामग्रीवशात् स्थूलोऽहमित्यादिप्रकृत्यात्मभ्रान्तिर्भवतीति तन्निरासाय जीवलक्षणमधिगन्तव्यमिति भावः । 'तन् विशेष्यम्'= 'यस्यात्मा शरीरम्' इत्यादिश्रवणात् जीवस्वरूपस्यापि स्वं प्रति स्वशरीरस्येव परमात्मानं प्रति अपृथक्सिद्धविशेषणतया स्वविशेष्यीभूतः परमात्मा । एतदविवेकश्च, "शेषो हि परमात्मनः", इत्युक्तभगवच्छेषत्वादिभेदकाकारापरामर्शः । अनेनापि भेदाग्रहादिकारणकलापेन, ईश्वरोऽहं स्वतन्त्रोऽहमित्यादिभ्रमो भवतीति तन्निरासायापि जीवतत्त्वविचारः कार्य इति हृदयम् । तदुक्तमाचार्यैरेव, 'प्रकृत्यात्मभ्रान्तिर्गळति चिदचिल्लक्षणधिया तथा जीवेशैक्यप्रभृतिकलहस्तद्विभजनात्" इति । अत्राप्येतदधिकारान्ते, 'एडुगुम् साधर्म्यम् अडियाकवरुम् ऐक्यभ्रमत्तुक्कु वैधर्म्यदर्शनम् निवर्तकमाम्' इति वक्ष्यते ।

ननु तत्त्वनिरूपणं सर्वैरपि सिद्धान्तिभिः क्रियत इति न तव पृथक् किञ्चित् कर्तव्यमस्ति ॥ ते त्वन्यथा निरूपयन्ति, अतस्तत्र मया परिष्कृतिर्विधेयेति चेत्—परिष्क्रियतां तर्हि नूतनतया पृथिव्यादिकमपि सर्वम् ; किं जीवादिमात्रनिरूपणेनेत्यत्राह—तत्त्वशब्दम् इति । शब्दस्यास्य भावप्रत्ययान्तत्वेपि शास्त्रकारानादिसंकेतेन धर्मधर्म्यादिरूपप्रामाणिकसर्ववस्तुसाधारण्यात् पृथिव्यादिकमपि तत्त्वमेवेति तन्निरूपणमपि प्राप्तमेव । अथापि मुमुक्षूणां प्रकृत्यात्मभ्रान्त्यादिवारकतया जीवादिनिरूपणमेवोपयुक्तमिति सन्निकृष्टत्वात् तद्वाचित्वमेव तच्छब्दस्येति भावेनाह शिल द्रव्यविशेषङ्गळिले इति । चिदचिदीश्वरेषु इत्यर्थः । विवक्षाविशेषत्ताले=स्वल्पोपयुक्तपृथिव्यादिनिरूपणस्यापि मुमुक्षु-

---

(பாசுரத்தின் பொருள்) சித் அசித் ஈச்வரன் என்ற பாகுபாடு உடைய தத்துவங்கள் மூன்றையும் விளக்கிக் காட்டும் வேதாந்தங்களாலே—இவைகளின் அறிவை முத்திக்கு வித்து என்று நம்பியிருக்குமவர்களையும் வாதத்தில் குழப்பமுறச் செய்யும் துர்வாதிகளையும் தூரத்தில் ஒதுக்குவோம்.

அஜ்ஞாநம் கர்மா முதலிய தொடர்ந்துவரும் சுழலில் சிக்கி ஸாரமற்ற ஸம்ஸார ஸாகரத்தில் மூழ்கிக் கிடக்கும் ஒரு மனிதனுக்கு—தன்னைச் சார்ந்து வந்துள்ள புறப் பொருட்களை ஆராய்ந்து அறியாமையாலே, "நான் என்பது இந்த உடலே' என்ற மயக்கம் உண்டாகிறது. அப்படியே தனக்கு மேலுள்ள இறைவனை விவேகித்து உணராமையாலே—நான் சுதந்திரன்' என்ற தடுமாட்டமும் ஏற்படுகிறது. இந்த இரண்டு மதிமயக்கமும் கழிய நிரூபணம் செய்யவேணும். இங்கு தத்துவம் என்றது, பொதுவில் ப்ரமாணங்களால் அறியப்படும் எப்

***த்தாலே விசேஷித்து ப்ரயுக்தமாம். இத் தத்வங்களுக்கு ஸாதாரணமான ரூபங்களைக் குறைத்தும் அஸாதாரணரூபங்களைப் பொது வாக்கியும், மற்றும் ப்ராமாணிகங்களைக் கழித்தும் அப்ராமாணிகங்களைக் கூட்டியும் பரவாதிகள் கலங்குவர்கள்.***

---

विषयेऽत्यन्तानुपयुक्तकाकदन्तपरीक्षासदृशत्वं तु—अत्यन्तोपयुक्ततत्त्वत्रयनिरूपणायैव, "भोक्ता भोग्यं प्रेरितारञ्च मत्वा" इति श्रुत्या विवक्षितत्वेन। **प्रयुक्तमाम्** इति। अस्मदाचार्यैरिति शेषः। सर्वसिद्धान्तिभिरिति वा। तदा तु, शिष्टप्रयुक्तविशेषणस्थले इत्यस्य सामान्यतः तत्तदभिमतसत्कृतितत्त्वनिरूपणस्य विशेषेष्वित्यर्थो भाव्यः। अत एव, 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः। तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः॥', "अशेषविदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्" इत्यादिरीत्या बहुधा वादा दृश्यन्ते। अथ तत्त्वविषयकमतभेदे कारणान्याह **इत्तत्वङ्गळुक्कु** इति। **साधारणरूपङ्गळै क्कुरैत्तुम्**=सामान्यतः तत्तदितरवृत्तिधर्माणां तदवृत्तित्वं प्रतिपाद्य। अत्र-सर्वसाधारणस्य वाच्यत्वस्येश्वरादेरवृत्तित्वं, तादृशस्यैव सत्यत्वस्य चिदचिदवृत्तित्वं, चिदीश्वरसाधारणस्य कर्तृत्वादेश्चिदवृत्तित्वं, चिदचित्साधारणस्य ब्रह्मशरीरत्वादेश्चिदवृत्तित्वम् इत्यादिकं तत्तद्वादिभिः प्रतिपादितं द्रष्टव्यम्। **असाधारणरूपङ्गळैप्पोदुवाक्कियुम्**=तन्मात्रवृत्तिधर्माणां तदितरवृत्तित्वं प्रतिपाद्य। ब्रह्मत्वस्येश्वरमात्रवृत्तेः, 'त्रिविधं ब्रह्ममेतत्' इत्याद्यापाततदर्शनेन चिदचित्साधारण्यस्य, अचिदीश्वरासाधारणस्य पराधीनभोक्तृत्वाभावस्य, 'पुरुषस्तु पुष्करपलाशवन्निर्लेपः' इति रीत्या चित्साधारण्यस्य च प्रतिपादनेनेत्याशयः। एवं प्रामाणिकेष्वेव प्रकारेषु किञ्चिदन्यथाभावकथनेन वादिनां विप्लवमुक्त्वा, सर्वथैव प्रामाणिकप्रकारपरित्यागादिरूपं विप्लवान्तरमप्याह **प्रामाणिकङ्गळै** इति। जीवेश्वरयोः प्रामाणिकमहम्प्रत्ययगोचरत्वादिकं, ब्रह्मणः प्रसिद्धं जगदुपादानत्वादिकञ्चापलप्य, ब्रह्मणोऽविद्याश्रयत्वं जीवस्य स्वातन्त्र्यादिकञ्चाप्रामाणिकमारोपितवन्त इत्यर्थः। **परवादि** इति। तथा च सर्वेष्वप्येतादृशेषु तत्त्वेषु निरूप्यमाणेषु, 'आत्वापोद्घापनस्युः कतिकति कविवीचित्रवत् तत्तदर्थेष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः' इत्युक्तरीत्या बहुधा मतिभेदप्रादुर्भावान्मतभेदावतार इति सर्वमपि तत्त्वं व्याकुलीभवतीति भावः॥

अथ, "सदसद्भूमिकाभेदैस्तत्तत्सिद्धान्तनाटकैः। उपप्लुतस्य तत्त्वस्य शुद्ध्यर्थोऽयमुपक्रमः" इत्युक्तरीत्या क्षोभशान्त्यै सङ्क्षेपेण तत्त्वं विभजते **तत्त्वेति**॥ अनेन तत्त्वत्वं तत्त्वसामान्यलक्षणं द्योतितम्। तेन न सामान्यधर्मज्ञानमन्तरा विशेषजिज्ञासाया अनुपपत्तिः। इह लक्षणत्वमपि केवलं व्यावहारिकत्वादेव भवति; न तु व्यावर्तकत्वात्। सर्वस्यापि तत्त्वत्वेन लक्ष्यतया व्यावर्त्यालक्ष्य-

---

***பொருளையும் சொல்லுமாயினும் குறிப்பாக சில வஸ்துக்களை உணர்த்தும் கருத்தில் இங்கு உபயோகிக்கப்பட்டுள்ளது. இத் தத்துவங்களுடைய பொதுத்தன்மையைச் சுருக்கியும் தன்னேற்றமான தன்மைகளைப் பொதுவாக்கியும், உண்மையில் உள்ளவைகளை இல்லை செய்தும், இல்லாதவைகளைக் கூட்டி வந்தும் பிறமதத்தினர் நம்மை மயக்குவர்,***

(तत्त्वविभागம்)

தத்துவங்கள் த்ரவ்யாத்ரவ்யமெனத் துக்களாயிருக்கும். இவை எல்லாவற்றுக்கும் பொதுவான ஆகாரங்கள் காரணத்வ-வேத்யத்வ-வாச்யத்வாதிகள்.

वस्त्वभाव. देते ज्ञेयम् । तत्त्वत्वञ्च यथावस्थितत्वरूपं प्रामाणिकत्वम् ॥ तदुक्तं वात्स्यायनभाष्ये "सतः सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वम् । असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वमिति। एतेन-लक्ष्यतावच्छेदकस्यैव तत्त्वत्वस्य कथं लक्षणतेत्यपि प्रत्युक्तम् ॥ द्रव्य द्रव्येति । अत्राद्रव्यत्वं द्रव्यत्वाभावः; न तु द्रव्यभिन्नत्वम्; द्रव्यस्यापि यत्किञ्चिद्द्रव्यभिन्नत्वात् । नापि सर्वद्रव्यभिन्नत्वम् । तदपेक्षयोक्तस्यैव लघुत्वात् । तथाच द्रव्यत्वतदभावाभ्यां तत्त्वविभजनात् सर्वतत्त्वक्रोडीकारो भवति । नीलपीतेत्यादिना रूपविभजने यथा रक्तात्मककोट्यन्तरसद्भावः, तथा प्रवृत्तेऽसम्भवात् । "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायात् । एतेन-द्रव्यगुणेत्यादिना नैयायिकादिकृतपदार्थविभजनानौचित्यमुक्तं भवति । आत्मगुणभूतस्यापि ज्ञानादेः सिद्धान्ते द्रव्यत्वाङ्गीकारात् । तथाच द्रव्यत्वगुणत्वयोः परस्परसमानाधिकरणत्वेन परस्परासमानाधिकरणावान्तरधर्मप्रकारकबोधजनकशब्दप्रयोगरूपविभागत्वानुपपत्तिस्तन्मते भवति । एवं केषाञ्चित् भावाभावरूपतया पदार्थविभागोऽपि प्रत्युक्तो वेदितव्यः । "भावान्तरमभावो हि कया(स्य)चित्तु व्यपेक्षया" इति सिद्धान्ते भावस्यैवाभावरूपताङ्गीकारात् । भेदेति । "घटो रूपवान्" इति प्रत्यक्षेण रूपघटयोराश्रयाश्रयिभावप्रतीत्या तस्य च भेदव्याप्यत्वेन द्रव्याद्रव्ययोर्भेदः प्रत्यक्षित इति भावः । न चेदं प्रत्यक्षं बाधितविषयं द्विचन्द्रप्रत्यक्षवदिति वाच्यम् । अस्य प्रमाणान्तरानुगृहीतत्वात् दृष्टान्ते तदभावेन मिथो विशेषात् । द्विचन्द्रप्रत्यक्षं हि दोषमूलतया चन्द्रैकत्वज्ञानेन बाधितम् । इदं तु न तथा । प्रत्युतानुमानानुगृहीतञ्च भवति । तथाहि—यथा पिण्डत्वावस्थापन्नस्य वस्तुनः तद्विहाय घटत्वावस्थापत्तिदर्शनम्, न तथा पूर्वरूपस्योत्तररूपेऽवस्थापत्तिदर्शनम् । अपितु पूर्वरूपादन्यदेव रूपमुत्तरत्रोत्पद्यते । तथाच घटो रूपात् स्वगताद्भिन्नः तदवृत्तिदशाख्यधर्मयोगात् । यो हि यदवृत्तिधर्मवान् स तद्भिन्नः; यथा पटः कुड्यात् इति ।

अथ सम्यक्प्रतिपत्तिहेतुभूतसाधर्म्यवैधर्म्यविमर्शनरूपत्वान्निरूपणस्य प्रथमं द्रव्याद्रव्यरूपसमस्तवस्तुसाधर्म्यमाह इवै इति । द्रव्याद्रव्येत्यर्थः । आकारः साधर्म्यम् । समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यम् । समानो धर्म इति यावत् । कारणत्वेति । न हि लोके किञ्चिदल्पमपि वा अकारणभूतं वस्त्वस्ति । न हि वयं त्रसरेण्वतिरिक्तद्व्यणुकपरमाणुद्वयमङ्गीकुर्मः । यतः, "पारिमाण्डल्यात्मकमणुपरिमाणं न कस्यापि कारणम्" इति नैयायिकपरिभाषितप्रक्रियया तयोः परिमाणस्य न कारणतेत्यव्याप्तिशङ्का स्यात् । एवं—अत्र श्येनः पततीति गगनस्यापि प्रत्यक्षसिद्धत्वाङ्गीकारात् तदीयपरिमाणस्यापि

தத்துவங்கள்—த்ரவ்யம், அத்ரவ்யம் என்று பொதுவில் இரு பிரிவுகளை உடையன. இவ்விரு பிரிவுக்கும் பொதுதன்மை—எல்லாவற்றிலும் ஒன்றைப் பற்றி காரணமாய் நிற்றல், அறியப்படுதல், சொல்லப்

द्रव्याणि गुणाश्रयत्वादिलक्षणानि.

प्रत्यक्षकारणत्वमस्त्येवेति न नैयायिकमत इव तत्राग्याप्तिरपि । किं बहुना—स्थूलजगदारंभे समस्तसूक्ष्मद्रव्यशरीरकतया ब्रह्मणः कारणत्वमस्तीति सर्वस्यापि द्रव्यस्य कारणतावच्छेदककोटिप्रविष्टत्वेन निष्कृष्य तत्तत्स्थूलावस्थां प्रति कारणत्वमेष्टव्यमेवेति, अद्रव्याणामप्युत्तरक्षसमानाधिकरणाद्रव्यान्तरकारणत्वं निराबाधमेवेति च बोध्यम् । वेद्यत्वेति । सामान्यतो विशेषतो वा यस्य कस्यचित् ज्ञानविषयत्वं, विशेषत ईश्वरीयज्ञानविषयत्वं वा साधर्म्यमित्यर्थः । एतेनेदम्, वक्ष्यमाणं वाच्यत्वञ्च ब्रह्मणि नास्तीति नानयोस्सर्वपदार्थसाधर्म्यरूपतेत्यद्वैतिनां पक्षः परिहरणीयो भवति । तथासति ब्रह्मणोऽप्रामाणिकत्वापत्त्या शशशृङ्गतुल्यता स्यादिति बोध्यम् । वाच्यत्वेति । वचनविषयत्वेत्यर्थः । शब्दरूपस्य वचनस्य स्वयं सविषयकत्वाभावेपि याचितमण्डनन्यायेन तज्जन्यज्ञानस्य तदीयशक्तेर्वा सविषयकत्वात् वचने तदारोप्य व्यवहृतमिति बोध्यम् । अतएवोभयत्र ज्ञानाविषयत्वपर्यवसानेऽपि वेद्यत्ववाच्यत्वयोर्भेदेन निर्देशोपपत्तिः ; वेद्यत्वस्य साक्षात् ज्ञानविषयत्वरूपत्वात् वाच्यत्वस्य परम्परया तद्विषयत्वरूपत्वादिति । ननु सिद्धान्ते ईश्वरेच्छादिरूपशक्तिखण्डनात् कथं तामादाय वचनस्य सविषयकत्वोपपादनमिति चेन्न ; तदनभ्युपगमेपि अर्थबोधकत्वात्मकशक्तिसद्भावात् । अन्यथा शक्तिशब्दस्यैव सिद्धान्ते निरर्थकत्वापातात् । अत्र वाच्यत्वं वागिन्द्रियजन्यज्ञानविषयत्वमिति केषाञ्चिद्व्याख्यानं मन्दम् ; वागिन्द्रियस्य कर्मेन्द्रियान्तर्गतस्योच्चारणकरणत्वेन चरितार्थतया ज्ञानजनकत्वनियमाभावात् । क्वचित् तदुत्तरकालं ज्ञानोत्पत्तिदर्शनेऽपि श्रोतृगतस्य तस्य तदीयश्रवणेन्द्रियजन्यतया व्यधिकरणवक्तृगतकर्मेन्द्रियभूतवागिन्द्रियजन्यत्वाभावादिति । अथवा वेद्यत्ववाच्यत्वेति प्रमेयत्वाभिधेयत्वेत्यर्थः । तत्र-प्रमेयत्वं प्रमासामान्यविषयत्वम् । अभिधेयत्वं अभिधातुं योग्यत्वं शाब्दप्रमामात्रविषयत्वरूपमिति भिदा बोध्या ॥ वाच्यत्वादीत्यादिना सत्तायोगादिग्रहणम् ।

इत्थं साधर्म्यमुक्त्वा, लक्षणमन्तरा व्यावृत्तलक्ष्यप्रतिपत्त्ययोगादुद्देशक्रमेण प्रथमं द्रव्यलक्षणमाह द्रव्यमिति । गुणाश्रयत्वादिलक्षणमिति बहुव्रीहिः । गुणाश्रयत्वं द्रव्यस्य लक्षणमित्यर्थः । गुणाश्च—सत्वरजस्तमांसि, शब्दस्पर्शरूपरसगन्धाः, संयोगः शक्तिश्चेति दशैवेत्यन्यत्र विस्तरः । अपृथक्सिद्धघाख्यस्वभावसम्बन्धेनैतद्विशिष्टत्व द्रव्याणां सामान्यलक्षणमित्यभिप्रायः । समवायाख्यः सम्बन्धोऽग्रे निराकरिष्यते वैशेषिकभङ्गे । अत्र द्रव्याणां स्वरूपेण नित्यत्वाङ्गीकारात् नूतनावस्थावैशिष्ट्यमात्रस्यैवोत्पत्तिशब्दार्थत्वात् न "उत्पन्नं द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठति" इति व्याहृतायातारोऽस्मास्वस्तीति नोत्पन्नविनष्टघटादावव्याप्तिर्भविष्यति । अद्रव्ये गुणाद्यभावाच्च नातिव्याप्तिरपीति बोध्यम् । गुणाश्रयत्वादीत्यादिनाऽवस्थाश्रयत्वपरिग्रहः । द्रव्यसामान्यस्यावस्थावत्त्वमवर्जनीयम् । परिणामिनि अचेतनद्रव्ये पूर्वोत्तरपरिणामा एवावस्थाः । अपरिणामिजीवेश्वरयोस्तु मूर्तान्तरसंयोगा एव ताः । आगन्तुकोऽपृथक्सिद्धधर्मोऽवस्थेति कीर्त्यते । अपृथक्सिद्धधर्ममात्रस्यावस्थारूपत्वे आत्मापृथक्सिद्धज्ञानादेरप्यवस्थात्वं स्यात् । अत्र आगन्तुकत्वनिवेशः । तच्चानित्यत्वरूपमिति ज्ञानादेर्नित्यत्वान्न दोषः ।

नन्वेवमपि शब्दस्याद्रव्यत्वपक्षे तत्र शक्तिस्वीकारे तस्या अनित्यत्वात् शब्दापृथक्सिद्धत्वाच्च शब्दं प्रति शक्तेरप्यवस्थात्वापत्तिः । न चेष्टापत्तिः, तथासति शब्दस्य द्रव्यत्वाभ्युपगमापत्तेरिति चेन्न । स्वाश्रयोत्पत्त्यनन्तरं तत्रोत्पद्यमानत्वरूपत्वादागन्तुकत्वस्य । स्वाश्रयसमानकालीनप्रागभावप्रतियोगित्वमिति यावत् । अद्रव्येषु सर्वत्र शक्त्यादेस्स्वाश्रयेण सहैवोत्पत्त्यङ्गीकारेण तत्प्रागभावस्य स्वाश्रयसमानकालीनत्वाभावात् । अद्रव्येषु सहजैव शक्तिः, मन्त्रादिना मध्ये आधेयशक्तिस्तु द्रव्येष्वेवेत्यभ्युपगमात् । घटस्य कदाचिदागन्तुकपटेन सह संयोगे सति पटस्यापि घटं प्रत्यवस्थात्वापत्तिवारणायापृथक्सिद्धत्वनिवेशः । पटस्य घटं विनापि पृथक्स्थितिसम्भवेन तं प्रत्यपृथक्सिद्धिविरहान्न दोषः । न च पटस्यापि घटावस्थाविशेषरूपत्वे काऽनुपपत्तिः पूर्वं शब्दस्येव घटस्य तावतापि द्रव्यत्वाङ्गीकारे बाधकाभावात् । घटस्य द्रव्यत्वेनैव सर्वैः परिगणनात् इति वाच्यम् । स्वतन्त्रपटादिपदार्थस्य तथाविधान्यपदार्थं प्रति अवस्थात्वप्रसिद्ध्यभावात् । न च पुरुषेण दण्डधारणकाले दण्डवत्त्वावस्थाशब्दप्रयोगात् तद्वत्त्वस्य च दण्डरूपतया तस्यापि स्वतन्त्रपदार्थस्यावस्थात्वानुपपत्तिरिति वाच्यम् । उभयत्रावस्थाशब्दार्थयोर्वस्तुनोर्भेदात् । तत्र देशकालौ ह्यवस्थेति कृत्वा लौकिकानां तथा प्रयोगः । इह द्रव्यलक्षणघटकावस्थात्वं तु अन्यादृशमुक्तरीत्यैव परिभाषितव्यम् । अन्यथा उभयस्याप्येकरूपत्वे देशकालरूपावस्थावत्त्वमादायाद्रव्येष्वप्यशेषेषु अतिव्याप्तिसाम्राज्यं स्यात् । न हि देशकालाद्यसम्बन्धि किञ्चिदस्ति वस्तु । अथवा-दण्डवत्त्वं न दण्डरूपम्, अपितु तत्संयोगरूपमिति परतन्त्रस्य संयोगस्यावस्थात्वं सर्वसम्प्रतिपन्नमिति तदभिप्रायेण लौकिकानां तथाप्रयोगो भाव्यः । **यत्त्वत्र रत्नपेटिकायामुच्यते**—आधेयतासम्बन्धेन गगनादिमत्त्वमादाय शब्दादौ तद्दोषतादवस्थ्यवारणायापृथक्सिद्धत्वनिवेशः । गगनस्यापि स्वाश्रयीभूतब्रह्मसमानकालिकप्रागभावप्रतियोगितया आगन्तुकत्वसम्भवोऽस्ति इति शब्दान्तर्भावेण तदभावेऽपि न क्षतिः । ननु निवेशितेऽप्यपृथक्सिद्धत्वे गगनादेरपि ब्रह्मापृथक्सिद्धतया पूर्ववत् शब्दान्तर्भावेण तदभावेऽपि तद्दोषतादवस्थ्यम् । अपृथक्सिद्धिसम्बन्धेनागन्तुकधर्मवत्त्वविवक्षायां तु धर्मेऽपृथक्सिद्धत्वविशेषणं व्यर्थं स्यात् । स्वापृथक्सिद्धधर्मवत्त्वं स्वस्य लक्षणमित्युक्तौ अननुगमात् सामान्यलक्षणत्वहानिरिति चेन्न—अपृथक्सिद्धिसंबन्धेनागन्तुकधर्मवत्त्वस्यैव लक्षणतया विवक्षितत्वात् । धर्मेऽपृथक्सिद्धत्वविशेषणं तु अपृथक्सिद्धेर्लक्षणतावच्छेदकसम्बन्धत्वलाभायैवेति । **तन्न ;** एवमपि शक्तिरूपधर्ममादाय शब्द एवोक्तदोषतादवस्थ्यात् । न च शक्तेरुक्तरीत्या शब्दे आगन्तुकत्वं नास्तीति वाच्यम् । गगनस्य ब्रह्मणीव तस्याः द्रव्येषु तथात्वसम्भवात् । न च केवलं गगनस्यैकत्वेन तदादायातिव्याप्तेरसुवचत्वेऽपि, सहजशब्दशक्तेः द्रव्येष्वाधेयशक्तिभ्यो भिन्नत्वात् कथं तामादाय शब्देऽतिव्याप्तिरिति तदवस्थ्यमिति वाच्यम् । व्यक्तिभेदेऽपि तज्जातीयस्यागन्तुकत्वसम्भवात् । अन्यथा सर्वत्र गगनस्वरूपैक्येऽपि तदागन्तुकत्वस्य ब्रह्मण्येव सम्भवेन तद्विशिष्टगगनवत्त्वं ब्रह्मण एव, न शब्दस्येति तत्राप्यतिव्याप्त्यसम्भवात् । आगन्तुकत्वोपलक्षितधर्मवत्त्वमेवात्र विवक्षितमिति चेत् न ; प्रक्षाळनाद्दीप्त्यादिन्यायकवळितत्वेन तथाविवक्षाया हेयत्वात् ।

இங்ஙனல்லாக்கு அத்ரவ்யம். குணாச்ரயமாய்த் தோற்றின வஸ்துவை இசைந்து குதர்க்கங்களாலே குணங்களைக் கழிப்பாக்கும் குணரூபாதிகளை இசைந்து ஆச்ரயமில்லை என்பார்க்கும் ஸர்வஸாதாரணமான इदमित्थम् என்கிற விசிஷ்-

---

ततोऽपि वरं आगन्तुकत्वविशिष्टधर्मत्वनिवेशनम्। तथात्र भवन्मतेऽपृथक्सिद्धत्वविशेषणं व्यर्थमेव प्रसज्यते। ततश्चापृथक्सिद्धत्वविशेषणप्रयोजनं अस्मदुक्तरीत्यैव बोध्यमिति ॥

अथाद्रव्यलक्षणमाह **इङ्गल्लादु** इति। गुणाश्रयसामान्यभिन्नमित्यर्थः। अत्रस्थाश्रयात्यन्तभेदोऽप्यत्र लक्षणतयोपलक्षणीय एव। अथाद्रव्यत्वस्य द्रव्यप्रतियोगिकतया द्रव्यसिद्धावेवाद्रव्यसिद्धिः; द्रव्यसिद्धिश्च तल्लक्षणभूतगुणाख्याद्रव्यसिद्धिसापेक्षेत्यन्योन्याश्रय इति चेन्न। "रूपवान् घटः" इत्यादिप्रत्यक्षेण परस्परानपेक्षयोर्द्रव्याद्रव्ययोर्धर्मधर्मिभावप्रतीतौ अनन्तरं लक्षणजिज्ञासायां रूपादिधर्मयोगित्वं द्रव्यलक्षणमिति प्राक् द्रव्यं साधयित्वा पश्चात् तद्भिन्नत्वेनाद्रव्यसिद्ध्युपपत्तेः अथ परोक्तरीत्योभयाङ्गीकारमाक्षिप्य समाधत्ते **गुणाश्रय** इति। अत्र वैभाषिकेष्वेव केचित् सौत्रान्तिकैर्मिलित्वा एवमाहुः, "निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः। शब्देन सह पञ्च वा। त एव पृथिवीत्वेन, एकैकमहासत्त्वे जलादित्वेन च व्यवह्रियन्ते। दर्पणादिव्यञ्जकभेदेन मुखादीनां मलिनत्वदीर्घत्वादिविकल्पवत् सव्यदक्षिणविकल्पवच्च चक्षुरादिग्राहकभेदेनैव रूपरसादिविकल्पसम्भवात् एक एव वा पदार्थोऽस्तु इति। **तदुक्तं सर्वार्थसिद्धौ**, "वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः। शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन्" इति। **वत्सी**=वैभाषिकमाता। तत्पुत्रसम्बन्धिनो **वात्सीपुत्राः**। एत एव बौद्धेषु नित्यात्मतत्त्वाङ्गीकारिण इति **तत्त्वसङ्ग्रहपञ्जिकायां** (३३६) श्लोके दृश्यते। रूपादिषु चतुर्ष्वेव केचित् शब्दात्मानः=शब्दस्वरूपाः। न शब्दस्तत्त्वान्तरमिति **अपरे** सौत्रान्तिकादयोऽब्रुवन्नित्यर्थः। एकतत्त्ववादोऽपि तद्ग्रन्थेषूक्तः, "अत्थि रूअइएग एअ वयत्ति अत्तभेआदो (अस्ति रूपादित्वेनैकं गृह्यतेऽभेदादिति)। अस्य तु विस्तरस्तत्त्वसागरादिषु बोध्यः। अत्र, "निराधार" इति केवलगुणसद्भावपक्षस्य सूचनम्, "निर्धर्मक" इति केवलधर्मिसद्भावपक्षस्य च। **कुतर्कङ्गळाले** इति। **आश्रयसिद्धि एन्बार्क्कुम्** इत्यत्राप्येतदन्वेति। कुतर्कश्च, "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिता" इत्याचक्षरीत्या कथञ्चिदवीक्षणेऽपि बहादौ, "अयमंशो धर्मी, अयमंशो धर्मः इत्याद्यवधारणाभावप्रतिपादनादिरूप इति बोध्यम्। तदिदं दूषयति, **सर्वसाधारणे** ति। वक्ष्यमाणैकार्थग्रहणादिवत् अस्य विशिष्टप्रत्ययस्य चिन्तासंस्कारपाटवाद्यनपेक्षणेन सर्वपुरुषसुलभत्वात् सर्वसाधारण्योक्तिः। तेन चायं रूपवान् इति द्रव्यगुणभेदग्राहि सर्वजनोपलम्भविरोध उक्तो भवति। **विशिष्टप्रत्ययमुम्** इत्यस्याग्रे **कूडादे** इत्यत्रान्वयः। एवं, इदमित्थम् इति विशिष्टप्रत्ययेन सामान्यतो धर्मधर्मिभावं समर्थ्य द्वीन्द्रियग्राह्यैकद्रव्यसमर्थनमुखेन एकैकेन्द्रियग्राह्यनाना-

---

இங்ஙனல்லாதது அத்ரவ்யம். இது—குணம்; அதற்கு இருப்பிடமான த்ரவ்யம் என்ற இரண்டில்–ஒன்றை இசைந்து மற்றொன்றை குயுக்திகளாலே மறுப்பவர்கள் சிலருண்டு, அவர்களுக்குப் பொதுவில்

प्रत्ययமும், दर्शनस्पर्शनங்களாலே एकार्थग्रहणமும், प्रत्यभिज्ञामात्रமும், विशदाविशद-प्रत्ययविभागமும், विशेषाग्रहமடியாக வருகிற संशयविपर्ययங்களும் கூடாதே

गुणमात्राङ्गीकारपक्षं दूषयति दर्शनस्पर्शनेति । अत्रापि पूर्ववदन्वयः । "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" इति न्यायसूत्रम् । अयमाशयः--अस्ति हि दृष्टमेव स्पृशामीति द्वीन्द्रियग्राह्यवस्तुविषया बुद्धिः । न सा संशयः ; विरुद्धानियतकोट्यनालम्बनत्वात् । नापि विपर्ययः ; स्वारसिकबाधकादर्शनेनानन्यथासिद्धत्वात् । न चैवम्भूताया यथार्थाया अस्याः गुणमात्राङ्गीकर्तृमते विषयलाभः सम्भवति । तथाहि—न तावद्रूपमात्रमस्या विषयः ; तत्र त्वगिन्द्रियाप्रवृत्तेः । अन्यथाऽन्धस्यापि रूपोपलब्धिप्रसङ्गात् । एवमेव स्पर्शमात्रविषयकत्वमपि प्रत्याख्येयम् । तत्र च चक्षुषोऽसमर्थत्वात् । अन्यथा अस्पृशतोऽपि दृशा स्पर्शोपलब्धिप्रसङ्गात् । न चोभयं विषयः । इन्द्रियाणां नियतविषयत्वादेव । अतो द्वीन्द्रियग्राह्यं रूपस्पर्शाश्रयभूतं ततोऽतिरिक्तं द्रव्याख्यं वस्तु गमयतीदं प्रत्यक्षमिति । इदं वस्तु स्पर्शभिन्नं चक्षुर्विषयत्वात् रूपवत् । एवं रूपभिन्नं स्पार्शनविषयत्वात् स्पर्शवदित्यनुमानद्वयमिहाभिप्रेतम् । एवं धर्मिणो धर्मभेदं साधयित्वा ज्ञातुः स्थैर्यमपि साधयति-प्रत्यभिज्ञामात्रमुमिति । इन्द्रियभेदमनपेक्ष्य मनसैव पूर्वापरगृहीतात्मरूपार्थप्रत्यभिसन्धानमपि ज्ञातुःस्थैर्ये लिङ्गमित्यर्थः । अन्यथा रूपादिपदार्थातिरिक्तात्मानङ्गीकारे, अङ्गीकारेऽपि तस्य क्षणिकसन्तानरूपत्वस्वीकारे वा सोऽहमित्यादिप्रत्यभिज्ञा न घटते । ज्ञातुरेवाभावात् । भावे वा तावत्पर्यन्तमेकस्यानवस्थानादिति भावः । एवं धर्मधर्मिभेदं ज्ञातृस्थैर्यञ्च साधयित्वा एकस्मिन् धर्मिणि बहूनां धर्माणामेकव्यक्तत्वमाह विशदाविशदेति । स्फीतालोकमध्यवर्तिनि घटादौ भूयोधर्मग्रहणं विशदप्रत्ययः । आलोकादिसहकारिवैकल्येन घटादौ कतिपयधर्ममात्रग्रहणमविशदप्रत्ययः तथा चैकस्मिन् धर्मिणि नानाधर्मसद्भाव एव प्रत्ययगतं वैशद्यतदभावौ उपपद्येते इति भावः । एवमेकस्मिन् विविधधर्मसद्भावे, तेषु स्वरूपनिरूपकत्व-निरूपितस्वरूपविशेषणत्वाभ्यामपि द्वैविध्यमावश्यकमित्याह—विशेषाग्रहमडियाग इति । अडि=मूलम् । स्वरूपनिरूपकतयाऽसाधारणीभूतशुक्तित्वाग्रहे ततोऽतिरिक्ततुल्यधवलभास्वररजतत्वादिनानाधर्मोपस्थितौ च शुक्तिं दृष्ट्वा, इदं रजतं रजतं वेति संशयो भवति । शुक्तौ शुक्तित्वग्रहेऽपि तस्यासाधारण्याग्रहे शुक्तिं दृष्ट्वा, शुक्तिरियं रजतं वेत्यपि संशयो भवति । ततश्च, विशेषाग्रहेत्यत्र विशेषत्वविशिष्टधर्माग्रहो विवक्षितः । स चोक्तरीत्या क्वचिद्धर्मस्य विशेष्यस्यैवाग्रहात्, क्वचिच्च विशेषस्य विशेषणस्याग्रहात् भवति । यत्र तु विशेषस्य शुक्तित्वादेः सर्वथाऽग्रहः, तद्विरुद्धधवलरजतत्वादेश्चैकोपस्थितिश्च भवति, तत्र शुक्तिं दृष्ट्वा, "इदं रजतम्" इति विपर्ययो भवति । अधिष्ठानातिरिक्तधर्मान् अनभ्युपगच्छत इदं सर्वं न घटते । भाने सर्वभानात् संशयाद्यनुपपत्तिः । अभाने च सर्वस्याप्यभानात्

வரும்—"இது இத்தகையது"—என்ற வ்யவஹாரம சரிப்படாது போம். பார்த்தும ஸ்பர்சித்தும வரும், வெள்ளைப் பனிக்கட்டி குளிர்ந்திருக்கிறது-என்பது போன்ற தொடர் அறிவும் அவர்களுக்குக் கூடப்படாது.

स्ववचनविரோதமும் வரும். இப்படி धर्मधर्मिகளுடைய अत्यन्तभेदம் निर्बाध-மாகையாலே निर्गुणब्रह्मवादादिகள் निर्मूलங்கள்.

द्रव्यம் परனுக்கு प्रकाशिக்குமதென்றும் தனக்குத்தானே தோன்று

कुल संशयादिः । भाताभातांशभेदाभावात् । तदुक्तमाचार्यैः, "अधिष्ठानस्य कात्स्न्येन भानेऽभाने च न भ्रमः । भाताभातांशभिदा कथं निर्धर्मके भवेत् ॥" इति । इदमुपलक्षणम् कथञ्चित् जातेऽपि वा संशयादिके कथं बाधकज्ञानादिना तन्निवृत्तिः । तस्य पूर्वज्ञानादनधिकविषयत्वात् । ततश्च स्वरूपनिरूपक-निरूपितस्वरूपविशेषणीभूतनानाधर्माश्रितो धर्मी यावन्नाङ्गीक्रियते, तावदिदं सर्वमनुपपन्नमेवेति भावः तदुक्तं भास्कराचार्यैः, "आविर्भावतिरोभावधर्मकेष्वनुयायि यत् तद्धर्मि, यत्र वा ज्ञानं प्राक्धर्मप्रहणाद्भवेत्" इति । आविर्भावधर्मः=धर्मिग्रहणनियतग्रहणो धर्मः इदन्त्वादिः आविर्भावात् । तिरोभावधर्मः=धर्मिग्रहणसमये कदाचित्तिरोधानार्हो धर्मः शुक्तित्वादिः । एतेष्वनुगतो धर्मी इत्येकं लक्षणम् । लक्षणान्तरं यत्र वेति । यत्र वा वस्तुनि निरूपितस्वरूपविशेषणीभूतधर्मग्रहणात् पूर्वं ज्ञानं स्वरूपनिरूपकधर्ममात्रविशिष्टतया भवति तद्धर्मीति आनन्दायिन्यामिदं व्याख्यातम् । सर्वसाधारणं दूषणमाह स्ववचनेति । इदमित्थमिति प्रत्ययस्य स्वेनाप्यङ्गीकारात् । इदमित्थं न भवतीत्यङ्गीकारेऽपि धर्मिणि इत्थंभावाभावरूपेत्थम्भावान्तराङ्गीकारप्रसङ्गाच्च धर्मधर्मिभावदूषणं स्वोक्तिविरुद्धमित्याशयः । तथाच न्यायसिद्धाञ्जनम्, "इदमित्थन्त्वयोः किञ्चिद्देकेनापि भज्यते । इदं नास्तीति वाचोऽपि भङ्गोऽन्यतरभङ्गतः" इति । ननु "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म" इत्यादिना निर्विशेषचिन्मात्रस्यैव प्रामाणिकत्वप्रतीत्या कथं धर्मधर्मिभेदसिद्धिरित्यत्राह इप्पडि इति । अत्यन्तभेदम्=अभेदासमानाधिकरणो भेदः । निर्गुणब्रह्मेति । गुणाः=विशेषाः सजातीयविजातीयस्वगतभेदरूपाः । तद्रहितं ब्रह्मेत्यर्थः । त्रिविधभेदस्वरूपञ्चोदाहृतम्, "वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः । वृक्षान्तरात्सजातीयः, विजातीयश्शिलादितः" इति । वादादीत्यादिना भेदाभेदवादग्रहणम् । तथाचाद्वितीयश्रुतेः सद्दशान्तरनिषेधपरत्वेन निर्विशेषवस्तुसिद्धौ न किञ्चिदपि प्रमाणमिति भावः ।

एवं द्रव्याद्रव्यभेदेन पदार्थान् विभज्य तयोर्भेदञ्च साधयित्वा, सम्प्रति द्रव्यं विभजते द्रव्यम् परनुक्कु इति । परस्मा एवेत्यर्थः । ततश्च स्वस्मै अपि भासमानस्याऽऽत्मनः परस्मै अपि

---

வை? "அதுவே இது" என்கிற ஓர் உறுதிப்பாடுடைய அறிவும் கூட உதிக்க வழியில்லை. அவர்கள் தெளிவான அறிவு இது, தெளிவற்றது இது என்பதை எப்படி நிர்ணயிப்பார்கள்? ஒரு பொருளின் தனித்தன்மை தெரியாமையின் காரணமாக வரும்—ஐயம், விபரீத எண்ணம்—இவையும் பொருந்தா, தன் பேச்சே முரண்படும். ஆக இவ்விதம்-தன்மை அதுடைய பொருள்-என்ற இரண்டும் கலவெட்டாகத் தெரியபடியால்-தன்மையற்ற ஒருபொருள் பரம்மமாகும் என்பாருடைய வாதங்கள் தலைசாய்ந்தொழிந்தன.

மதென்றும் இரண்டு வகை. இவற்றை पराक् என்றும் प्रत्यक्கென்றும், अनात्माவென்றும் आत्माவென்றும் சொல்லக்கடவது. आत्मवर्गத்தில் सर्व-शरीरित्वादिகளாலே ईश्वरனைப் பிரித்து இத்तत्वங்களை चिदचिदीश्वरர்களென்

---

भासमानत्वेपि न विभागक्षतिः । विभागस्य परस्परासमानाधिकरणावान्तरधर्मबोधकत्वावश्यम्भावात् । एवकारेण स्वस्मैभासमानत्वव्यवच्छेदात् । **परस्मै** इत्यत्र चतुर्थ्यास्तादर्थ्यार्थकत्वात् परगतप्रयोजनकत्वं भाने लभ्यते । प्रयोजनञ्च संशयनिवृत्त्यादि । तथाच परमात्रसमवेतसंशयनिवृत्त्यादिप्रयोजनकज्ञानविषयत्वं घटादिपराग्द्रव्यलक्षणं फलितम् । आत्मादिप्रत्यग्द्रव्येषु च-तज्ज्ञानस्य कदाचित्, 'अहमस्मि न वा' इत्यादिस्वसमवेतसंशयादिनिवर्तकतया परमात्रसमवेतसंशयनिवृत्तिप्रयोजनकेत्यादिलक्षणासंभवात् नातिव्याप्तिः । इदञ्च घटादीनां परस्मै भानं कादाचित्कं बद्धान् प्रति । नित्यमुक्तादीन् प्रति तु नित्यम् । **तनक्कुत्तान् तोनूरुम्** इति । स्वस्मै स्वयंप्रकाशमित्यर्थः । प्रकाशमानत्वं घटादावप्यस्तीत्युक्तं स्वयंप्रकाशत्वमिति । स्वात्मकज्ञानविषयत्वमित्यर्थः । घटादिविषयकज्ञानस्य घटाद्यनात्मकत्वान्न दोषः । एवमपि धर्मभूतज्ञानस्य घटादिविषयप्रकाशनवेळायां स्वयंप्रकाशत्वेन स्वात्मकज्ञानविषयत्वसत्वात् स्वस्मै स्वयंप्रकाशत्वोक्तिः । स्वसमवेतसंशयनिवर्तकतावच्छेदकस्वनिरूपितविषयतावत्त्वमिति तदर्थः । धर्मिस्वरूपचैतन्यस्य स्वयमेव सर्वदा भासमानत्वात् तत्फलभूतसंशयनिवृत्त्यादेः स्वस्मिन्नेव विद्यमानत्वेन तत्र लक्षणसमन्वयः । धर्मभूतज्ञानस्य तु स्वात्मकज्ञानविषयत्वेन स्वनिरूपितविषयतावत्त्वेऽपि तज्ज्ञानजन्यस्य संशयनिवृत्त्यादेः स्वस्मिन्नसमवेतत्वेन नातिव्याप्तिः । इदञ्च-स्वस्मै स्वयंभानं सार्वदिकं बद्धमुक्तादीनां सर्वेषाम् । सुषुप्तावपि आत्मभानस्याविच्छेदात् । अनयोरेव पर्यायेण विभागान्तरमाह-**इवट्रै** इति । पूर्वोक्तयोरेव यथासंख्यं अत्र शब्दान्तरेण निर्देशः । परस्मै अञ्चतीति पराक् । प्रति=प्रतीपं, पूर्वोक्तविपरीततयेत्यर्थः । स्वस्मै इति यावत्, अञ्चतीति प्रत्यक् । प्रायः पदार्थानां परस्मै भानस्यैव प्रसिद्धतया, आत्मवस्तुनश्च तत्प्रातिलोम्येन स्वस्मै भानात् तन्नामकत्वमिति भावः । **आत्मत्वं**=अहमिति भासमानत्वम् । तदभावोऽनात्मत्वम् । अथात्मानात्मनोरेव द्वयोश्चिदचिदीश्वररूपतत्त्वत्रयात्मना विभागं तत्र चिच्छब्दस्य जीवमात्रे संकोचञ्च सयुक्ति वक्ति-**आत्मवर्गत्तिल्** इति । द्वयोस्त्रेधा विभागे तत्रान्यतरस्य द्वैविध्यावश्यंभावात् आत्मानात्मनोः कस्य द्वैविध्यमित्यत्रात्मवर्गस्यैव द्वैविध्यमाह-**आत्मवर्गत्तिल्** इति । आत्मसामान्यस्य शरीरप्रतिसम्बन्धिस्वरूपशरीरित्वे तुल्येपि, "यस्य पृथिवी शरीरम्" इत्यादिना स्वेतरसर्वद्रव्यशरीरवत्त्वस्येश्वरे श्रुतत्वात् तेनाकारेण तं जीववर्गात् पृथक्कृत्य सामान्यतस्तत्त्वस्य त्रेधा निर्देश इति भावः । **चिदचिदीश्वरर्गल्**

---

திரவ்யங்கள்—பிறருக்கே தோன்றுமதென்றும் தனக்குத்தானே தோன்றுவதென்றும் இருவகையாக இருக்கும் இவற்றை முறையே—பராக், ப்ரத்யக் என்றும், அநாத்மா, ஆத்மாவென்றும் சொல்லுவர். இவ்வாத்மாக்களுள்—உலகமே உடலான தன்மையினால் ஈச்வரனைப் பிரித்து சித் அசித் ஈச்வரன் என்று மூன்றாக எண்ணும் போது—சித் என்ற சொல்

னும் போது गोबलीवर्दन्यायத்தாலே चिच्छब्दம் जीवविषयம்.

(साधर्म्यवैधर्म्यங்கள்)

अचेतनங்களுக்கும் चेतनங்களுக்கும் பொதுவாய், ईश्वरனுக்கில்லாத आकारங்கள் आधेयत्वादिகள். "सर्वत्र वसति" इत्यादि [என்றது] व्याप्तिमात्र-

---

**एन्नुम्पोदु** इति। "तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः" इत्यादावित्यादिः। वस्तुनः विभागस्य परस्परासमानाधिकरणधर्मैरेव कार्यतया चित्त्वस्य ज्ञानात्मकत्वरूपस्य जीवेश्वरसाधारणतया जीवाचिदीश्वरेत्येव प्रयोक्तुमुचितमिति भावः। तथापि अन्यथोक्तितात्पर्यमाह-**गोबलीवर्दन्याय** इति। "गामानय, बलीवर्दमानय" इत्यादिरीत्या गोबलीवर्दशब्दयोस्सहप्रयोगे सामान्यवाचिना गोशब्देन बलीवर्द-स्यापि ग्रहणसम्भवात् पृथक् बलीवर्दशब्दप्रयोगवैयर्थ्ये प्राप्ते तद्वैयर्थ्याय प्रथमप्रयुक्तगोशब्दस्य बलीवर्दव्यतिरिक्तगोविषयत्वाश्रयणं गोबलीवर्दन्यायः। तद्वदत्रापि-चिदचिदीश्वरेत्यत्र चिच्छब्द ईश्वरव्यतिरिक्त-चिन्मात्रविषयो भाव्य इत्यर्थः। अत्र **वैयाकरणा** गोबलीवर्दन्यायसंज्ञां नेच्छन्ति। **महाभाष्ये**—गोबलीवर्दमिति समाहारद्वन्द्वोदाहरणदर्शनात्, द्वन्द्वे च व्याप्यव्यापकभावरहितपदार्थतावच्छेदकधर्मभेद-स्यावश्यकत्वेन गोत्वस्य स्त्रीत्वविशिष्टव्यक्ताविव स्वीकर्तव्यतया बलीवर्दसाधारण्याभावेन गोशब्दार्थसङ्कोचा-प्रसक्तेः। ततश्च तन्न्यायस्य ब्राह्मणपरिव्राजकन्यायादिसमाख्यैव युक्तेति **प्रदीपोद्योतादौ** विशदमिति। **तन्न**। यतः गोबलीवर्दमिति भाष्योदाहरणेऽपि—गामानय, बलीवर्दमानयेत्यादाविव एतन्न्यायसञ्चारोत्तरकाले प्रथमप्रयुक्तव्यतिरिक्तविषयकत्वस्य फलनात् फलितस्य व्याप्यव्यापकभावरहितपदार्थतावच्छेदकभेदस्य सम्भवेन द्वन्द्वसमासोपपत्त्या लोके प्रसिद्धगोशब्दस्य बलीवर्दसाधारण्यं नापोदितं तावतेति न्यायस्यास्य सैव संज्ञा भवितुमर्हतीति।

अथ चिदचिदीश्वराख्यतत्त्वत्रयस्य प्रत्येकं लक्षणतस्तत्तदितरसर्वव्यावृत्तस्यापि सजातीयविजातीय-व्यावृत्त्यर्थं साधर्म्यवैधर्म्ये वक्ष्यन् सम्प्रति चिदचितोरीश्वरवैधर्म्यमाह—**अचेतन** इति। अत्राचेतनस्य प्रथमं निर्देशः शास्त्रनिरपेक्षप्रतिपत्तिक्रमेण कृतः। अचेतनं हि आपामरं प्रथमबुद्ध्या-रूढम्। **पोदुवाय्**=साधर्म्यतया। **ईश्वरनुक्किल्लाद**=ईश्वरस्य वैधर्म्यरूपम्। एतेन—"यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्" इत्युक्तरीत्या किञ्चित्प्रति साधर्म्यस्यैवान्यत्प्रति वैधर्म्यरूपत्वं भवतीत्युक्तं भवति। **आधेयत्वादिगल्** इति। चिदचितोरीश्वरस्वरूपायत्तस्वस्वरूपस्थितिप्रवृत्तिकत्वेन तं प्रत्याधेयत्वमेतयोरित्यर्थः। **आदिना** तदीयसङ्कल्पायत्तस्थित्यादिमत्त्वरूपविधेयत्वस्य पारार्थ्यरूपशेषत्वस्य च परिग्रहः। अत

---

*மீதமுள்ள ஜீவனையே சொல்லும்; இது கோக்களும் காளைகளும் என்ற இடத்தில் கோக்கள் என்ற சொல் மீதமுள்ள பசுக்களைச் சொல்லும் கணக்கில்*

*ஈச்வரனுக்கின்றி மற்ற எல்லாப் பொருளுக்கும் பொதுவான தன்மை—ஒன்றைப் பற்றி நிற்றல் என்பது முதலேயாம் ஈச்வரன்—எங்குமுள்ளன்—என்பதற்கும்—அவன் எங்கும் பரந்துள்ளான் என்றதுவே கருத்தாகும்.*

**परம் । नियाम्यत्वशेषत्वादिகள் आश्रितवात्सल्यादिप्रयुक्तங்கள். अचित்துக்கும் ईश्वरனுக்கும் பொதுவாய் जीवனுக்கில்லாத आकारம் पराधीनभोक्तृत्वाद्यभावம்.**

एवेश्वरस्य विषये अतिव्याप्तिमाशङ्क्य वक्ष्यति—नियाम्यत्वशेषत्वादिगल् आश्रितवात्सल्यप्रयुक्तङ्गल् इति । जीवे तद्धर्मकत्वस्य पूर्वमकथने उत्तरत्र तादृशाशङ्कानुत्थानात् । परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्शेषीति शेषशेषिभावो जगद्ब्रह्मणोर्बोध्यः । ननु, "सर्वत्रासौ वसति समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥" इति श्रीवासुदेवनामनिर्वचनेन तत्र सर्वत्रासौ वसतीति विग्रहपक्षे भगवतस्सर्वनिरूपिताधेयत्वलाभात् कथं तस्य तद्वैधर्म्यत्वमित्यत्राह सर्वत्र वसतीति । तथाच तत्र धात्वर्थः केवलं व्याप्तिरूपस्संयोग इति सर्वद्रव्यसंयोगित्वमेव तेन लभ्यते, न त्वाधेयत्वमिति न दोष इति भावः । ननु संयोगेन वृत्तिस्थले संयोगित्वस्यैवाधेयत्वरूपतया तद्दोषतादवस्थ्यमिति वाच्यम् । तथासति बदरादिसंयोगिनः कुण्डादेरपि बदरं प्रत्याधेयतापत्त्या संयोगित्वमात्रस्य तद्रूपत्वाभावात् किन्तु संयोगप्रतियोगितारूपस्याखण्डधर्मान्तरात्मकस्य वा तस्याङ्गीकार्यत्वात् ब्रह्मणि च तदभावेनादोषात् । विशदमिदं व्युत्पत्तिवादे सप्तमीप्रकरणे । ननु, "सर्वत्र वसति" इत्यनेन ब्रह्मणि सर्वसंयोगित्वमात्रकथने, "सर्वत्रासौ वसति, समस्तं चात्र वसति" इति निर्देशभेदानुपपत्तिः, तस्यार्थभेदप्रयुक्तत्वात् । न च परस्परसंयोगित्वप्रतिपादनं निर्देशभेदप्रयोजनं भवितुमर्हति । संयोगस्य द्विनिष्ठत्वमधिगतवतां एकेनैव वाक्येन तत्सिद्ध्युपपत्तेः । तथाच निर्देशभेदोपपादनाय प्रथमवाक्ये सर्वानुयोगिकसंयोगप्रतियोगितायाः द्वितीये सर्वप्रतियोगिकतदनुयोगितायाश्च भेदेन ब्रह्मणि स्वीकार्यतया प्रथमनिर्देशानुसारेण ब्रह्मणस्सर्वनिरूपिताधेयतायाः संयोगप्रतियोगितादिरूपाया लाभादुक्तदोषतादवस्थ्यमिति चेत्—सत्यम् । तथाप्यन्यस्य अपायत्तस्वस्वरूपस्थित्यादिमत्त्वरूपान्यनिरूपिताधेयताया आत्वावताऽपि ब्रह्मण्यलाभेनादोषात् । तादृशाधेयताया एव तद्वैधर्म्योक्तेः । तथाच, "व्याप्तिमात्रपरम्" इत्यत्र मात्रपदेनैतादृशाधेयत्वस्यैव व्यवच्छेदः । न त्वाधेयत्वमात्रस्येति बोध्यम् । इदं सर्वं नारायणशब्देपि तत्पुरुष-बहुव्रीहिसमासपक्षयोर्बोध्यम् । नन्वीश्वरस्यावतारदशायां पित्रादिपारतन्त्र्य-वसिष्ठशेषत्वाद्याकारदर्शनात् कथं तेषामीश्वरवैधर्म्यत्वोक्तिरिति शङ्कायामाह नियाम्यत्वेति । न त्वीश्वरस्वरूपप्रयुक्तमिति भाव । तथाच स्वाभाविकाधेयत्वादिकमेव ईश्वरस्य वैधर्म्यमित्युक्तं भवति । आश्रिताः=भक्ताः प्रपन्ना वा । तेषु वात्सल्यं="स च मम प्रियः" इत्यादिसिद्धः गोर्वत्स इवाऽऽश्रितनिष्ठदोषानादरहेतुस्स्नेहविशेषः । आदिना स्वस्वातन्त्र्यादिग्रहः ।

एवमचिज्जीवयोरीश्वरवैधर्म्यमुक्त्वा सम्प्रति अचिदीश्वरयोर्जीववैधर्म्यमाह—अचित् इति । अचिदीश्वरसाधारणः जीवव्यावृत्त आकार इत्यर्थः । पराधीनभोक्तृत्वाद्यभावम् इति । अचितः भोक्तृत्वस्यैवाभावेन विशेष्याभावात्, ईश्वरस्य भोक्तृत्वसद्भावेपि तदीयस्य तस्य स्वाधीनतया पराधीनत्वाभावेन विशेषणाभावाच्च पराधीनत्वविशिष्टभोक्तृत्वादेरभाव उभयत्राविशिष्ट इति समन्वयः । जीवे तु भोक्तृत्वस्य तत्पराधीनतायाश्च प्रामाणिकत्वेन विशिष्टप्रतियोगिसत्त्वात् तदभावाभावेन नातिव्याप्तिश्च । भोक्तृत्वादीति

ஜீவனுக்கு स्वाधीनभोक्तृत्वம் भ्रान्तिसिद्धம். ईश्वरனுக்கு पराधीनभोक्तृत्वं गुणकृतம். जीवेश्वरர்களுக்குப் பொதுவாய் अचित्துக்கில்லாதவை ज्ञातृत्वभोक्तृत्वादिகள். करणங்களுக்கு ज्ञातृत्वादिव्यवहारம் औपचारिकம். இப்படி ஓரொன்

कर्तृत्वादिपरिग्रहः । ननु—"ईश्वरोऽहमहं भोगी" इत्यादिना जीवस्यापि स्वाधीनभोक्तृतादर्शनात् पराधीनभोक्तृत्वाभावोऽक्षतः इति कथं तस्य जीवव्यावृत्तत्वमित्यत्राह—**जीव** इति । तथाच—"तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इति रीत्या प्रकरणस्य जीवभ्रान्तिप्रतिपादनपरत्वात् वस्तुतस्तस्य कर्तृत्वादिकं पराधीनमेवेति तत्त्वविशिष्टकर्तृत्वाद्यभावस्तद्व्यावृत्त एवेति भावः । **अथ** भगवता—"दास्यमैश्वर्ययोगेन ज्ञातीनाञ्च करोम्यहम् । अर्धभोक्ता च भोगानां वाग्दुरुक्तानि च क्षमे" इत्यादिकथनात् तस्य भोक्तृत्वादिकमपि पराधीनमेवेति कथमुक्तोपपत्तिरित्यत्राह—**ईश्वर** इति । "मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । तेन वञ्चयते लोकान् मायायोगेन केशवः" इत्यादिना तस्याऽऽश्रितनियिकत्वसौलभ्यादिगुणकृतत्वाद्युक्त्या न वास्तविकं तदिति भावः । एवं अचिदीश्वरयोर्जीववैधर्म्यमभिधायाथ जीवेश्वरयोरचिद्वैधर्म्यमाह—**जीवेश्वर** इति । **ज्ञातृत्वं**=ज्ञानाश्रयत्वम् । **भोक्तृत्वं**=भोगाश्रयत्वम् । भोगश्चानुकूलतया प्रतिकूलतया वा कस्यचिदनुभवः । **आदिना** कर्तृत्वपरिग्रहः । ननु चक्षुर्जानातीत्यादिना चक्षुरादिकरणानां ज्ञानाश्रयत्वव्यवहारात् अचेतनस्याप्यस्ति ज्ञातृत्वमित्यत्राह—**करण** इति। **आदिना**—"हस्तौ कुरुतः" इत्यादिसिद्ध-कर्मकर्तृत्वग्रहणम् । **औपचारिकमिति**। जानातीत्यादौ आख्यातस्याऽऽश्रयत्वार्थकत्वात् ज्ञानाश्रयत्वादिरूपमुख्यार्थस्य चक्षुरादौ बाधितत्वेऽपि तत्प्रसरणहेतुत्वाश्रयत्वरूपगौणार्थमादाय निर्वाह इति भावः । हस्तादीनां च कृत्याश्रयत्वबाधेपि तज्जन्यशिल्पचेष्टाद्याश्रयत्वमादाय गौणत्वं स्वीकार्यमिति च बोध्यम् ॥

एवमेतावता तत्त्वत्रये एकैकव्यावृत्तोभयसाधारणधर्मानुक्त्वा अथोभयव्यावृत्तैकैकासाधारणधर्मान्याह इप्पडिओरोन्नुक्कु इति। अत्रैतदनन्तर सर्वकोशेष्वपि इव्विरण्डुक्किल्लाद इत्येव पाठो दृश्यते ।

அவன் தன்னை பக்தர்களுக்குக் கட்டவும் அடிக்கவும் ஆம்படி அடிமைப் பொருளாக ஆக்கி வைத்திருப்பது அவர்களிடம் தனக்கிருக்கும் வாத்ஸல்யாதிகளால் வந்த நிலையாகும் அசித்தான ஜடப்பொருளுக்கும் ஈச்வரனுக்கும் பொதுவாய்ஜீவனுக்கில்லாத தன்மையும் உண்டு அவை–பராதீனமாகி ஒன்றை அநுபவிப்பதில்லாமை முதலியவையே ஜீவன் தன்னை, ஸ்வதந்த்ரனாக அநுபவிப்பவன் நான்—என்று நினைத்திருப்பது வீண் ப்ராந்தி அதுபோலே ஈச்வரன், தன்னை, "பராதீனமாக அநுபவிப்பவன் நான்" என்று கருதுவது ப்ராந்தியல்ல பின் ஏதெனில், அது எளிய தன்மையாலே வருகிறது ஆகும் ஜீவனுக்கும் ஈச்வரனுக்கும் பொதுவாய் அசேதனங்களுக்கில்லாத ஆகாரம்–அறிவுடைமை, அநுபவிக்கும் ஆற்றல் முதலியனவாகும் இந்திரியங்களை அறிவுடையன எனக் கூறுதல் முக்கியப் பொருளிலல்ல இவ்விதம் ஓரொன

றுக்குண்டாய் இவ்வி(ஈரி?)ரண்டுக்கில்லாத आकारங்கள் अज्ञत्वादिகளும் परतन्त्रचेतनत्वादिகளும் निराधारत्वादिகளும். अचिद्विकारமான अन्तःकरणத்துக்கு ज्ञातृत्वादिகளைச் சொல்லுவார்களுக்கும் முடிவில் आत्मापलापம் प्रसंगिக்கும். जीवனுக்கு अवस्थाविशेषத்திலே निरपेक्षस्वातन्त्र्यமும் ईश्वरனுக்கு अज्ञत्वமும்

---

अथापि ओरोन्रुकु इति वीप्सानुसारेणोत्तरत्रापि ईरिरण्डुकिल्लाद इत्येव तु युक्तम् ; द्वयोर्द्वयोरवृत्तिः एकैकमात्रवृत्तिरित्यर्थः । प्रथमं अचितस्तथाविधधर्मं दर्शयति-अज्ञत्वादि इति । आदिनाऽनात्मत्वपरिग्रहः । अज्ञत्वञ्च ज्ञानानाश्रयत्वम् । न त्वज्ञानाश्रयत्वम् । एतेन-ज्ञानाज्ञानयोस्सामानाधिकरण्यानुभवात् "घटोऽज्ञ." इत्यादिव्यवहाराभावाच्च ज्ञानाश्रयत्वप्रसक्तिशून्येषु घटाद्यचेतनेषु कथमज्ञत्वमिति शङ्का परास्ता । अज्ञ इत्यत्र नञः, "अनुदरा कन्या" इत्यादाविवाल्पत्वार्थविवक्षायां अल्पज्ञ इति तात्पर्येण घटादिषु तथा प्रयोगविरहेपि ज्ञानात्यन्ताभावविवक्षया तेषु तथा प्रयोगे बाधकाभावात् ; घटोऽचेतन इति प्रयोगवदिति भावः । सम्प्रति जीवस्य तथाविधं धर्ममाह परतन्त्रचेतनत्वादि इति । अचितः परतन्त्रत्वेपि चेतनत्वाभावात् ईश्वरस्य चेतनत्वेपि परतन्त्रत्वाभावाच्च विशिष्टमिदं जीवमात्रनिष्ठमेवेति भावः । आदिना अणुचेतनत्वस्य ग्रहणम् । इदानीम् ईश्वरस्य तथाविधधर्ममाह निराधारत्वादि इति । आदिना विभुचेतनत्वपरिग्रहः । ननु ज्ञातृत्वस्याचेतनेष्वसम्भवश्चेतनेष्वेव संभवश्चोक्तो न युक्तः ; चेतनस्यात्मनो नित्यनिर्विकारतया ज्ञानक्रियारूपविकाराश्रयत्वासंभवात् । किन्त्वचेतनपरिणामभूतान्त.करणस्यैव तत्संभव इत्यत्राह अचिद्विकारेति । विकाराश्रयत्वसंभवद्योतनाय तस्याचिद्विकारत्वोक्तिः । प्रकृतिपरिणाममहत्तत्त्वपरिणामभूतः आन्तरो मांसपिण्डविशेषः अहङ्कारग्रन्थिः=अन्तःकरणम् । तस्यैव ज्ञातृत्वं सांख्या अद्वैतिनश्चामनन्ति । स्वात्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनं अभिव्यञ्जकानां स्वभावः । यथा दर्पणजलादीनां स्वात्मस्थतया मुखचन्द्राद्यभिव्यञ्जकत्वम्, तथैव स्वच्छद्रव्यमन्त.करणं ज्ञानस्वरूपमात्मानं स्वनिष्ठतयाऽभिव्यनक्ति अहं जानामीतीति । आत्मापलापम् इति । अयं भावः- अन्तःकरणस्यैव ज्ञातृत्वे तत्समानाधिकरणकर्तृत्वभोक्तृत्वाहंशब्दवाच्यत्वादीनामपि सर्वेषां धर्माणां तस्मिन्नेवाभ्युपगन्तव्यत्वे प्राप्ते किमर्थः पुष्करपलाशवन्निर्लेपस्यात्मनोऽङ्गीकार इति चार्वाकादिवदचेतनवर्गमात्रात् सर्गाद्युपपत्तिरिति अन्तत आत्मापहार एवैतत्पर्यवस्येदिति । ननु जीवस्य परतन्त्रचेतनत्वोक्तिर्विरुध्यते । "स स्वराड् भवति" इत्यादिना तस्य मुक्तौ निरपेक्षस्वातन्त्र्यश्रवणात् । तथैवाचितोऽज्ञत्वमसाधारणमित्यपि न शोभते ; "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिना ब्रह्मणोऽज्ञानाश्रयतया जीवभावोपदेशात् इत्याशङ्क्याह जीव इति । परतन्त्रस्यापि स्वव्यापारे स्वातन्त्र्यमापेक्षिकमस्तीति तत् व्युदसितुं

---

றுககு உண்டாய, ஈரிரண்டிறகு இல்லாத தனமைகள்—அறிவற்றமை முதலியனவும, பரதநதிர சேதனனுகை முதலியனவும், ஆதாரமற்று நிற்கை முதலியனவும் ஆக ஜடபபொருளான உள் மனததிறகே அறிவுடைமை யைக் கற்பிககும சிலர்ககும் முடிவில் சரீராதிகளைவிட வேருன ஆத்மாவே இல்லை எனற भावமே வநது சூழும், இப்படியே—ஜீவர்களுக்கு மோக்ஷாதி

**கொள்ளுவார்க்கும் ईश्वरापलापம் வரும்.**

**(ஜீவதத்துவாதிகாரம்)**

**இத்தரத்வங்கள் மூன்றில் शास्त्रोपपत्तिनिरपेक्षமாக संप्रतिपत्तिक्रमத்தாலே அசித்தை முற்பட நிரூபிக்கை प्राप्तமானு(மாகி)லும் भोक्ता என்றும், भोग्यं என்றும், प्रेरिता என்றும் श्रुति சொன்ன அடைவே, தன்னை அறிந்து,**

---

निरपेक्षत्वविशेषणम्। सार्वपथीनं स्वातन्त्र्यमिति यावत्। **ईश्वरनुक्कु अज्ञत्वमुम्** इति। **कोल्लुवार्कु** इति। मुक्तौ जीवस्वातन्त्र्यवादिनः भास्करीयाः। तथाच तदधिकारे वक्ष्यति "ईश्वरनोडे मुक्तर वेण्डिनपडि विभक्तरायुम् अविभक्तरायुम् निर्पर्हळ्" इति। ईश्वराज्ञत्ववादिनोऽद्वैतिनः। **ईश्वरापलाप** इति। सर्वथा स्वतन्त्रेण जीवेनैव जगत्सृष्ट्यादिकार्यनिर्वाहात्, ईश्वरस्याप्यज्ञानाश्रयत्वे तस्य जीवाद्वैलक्षण्येन च कृतमीश्वरेणेति तदपह्नव एव पर्यवस्यतीति भावः। परतत्त्वाधिकारे चेदं स्पष्टीभविष्यति।

एवं सामान्यतः तत्त्वत्रयमुद्दिश्य साधर्म्यवैधर्म्याभ्यां पृथक् च लक्षयित्वाऽथ प्रथमं जीवतत्त्वपरीक्षां करिष्यन् तत्प्राथम्यं आक्षिप्य समाधत्ते **इत्तत्त्व** इति। मून्ड्रिल इति सप्तम्यर्थघटकत्वस्य अचित्तै इति अचित्यन्वयः। तस्यैव प्रथमनिरूपणीयत्वे युक्तिमाह **शास्त्रोपपत्ती**ति। शास्त्रं शब्दप्रमाणात्मकम्। उपपत्तिर्युक्तिरनुमानात्मिका। तन्निरपेक्षा च सम्प्रतिपत्तिः प्रत्यक्षमेव। तस्याश्च क्रमः "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्" इत्युक्तप्राथम्यरूपः। शास्त्रानुमानयोर्व्युत्पत्तिव्याप्तिग्रहादिषु प्रत्यक्षोपजीवनात्। **मुर्पड**=जीवादपि पूर्वं। **अयं भावः**—चार्वाकवैभाषिकप्रभृतयोपि हि प्रत्यक्षेण अचिद्वर्गमभ्युपगच्छन्तीति तस्यैव सर्ववादिसम्प्रतिपन्नता भवति। अनन्तरमुपपत्त्यादिना जीवजातस्याङ्गीकार आस्तिकानां सम्मतो भवति। ततोप्युपरि वेदान्तिनः शास्त्रबलादीश्वरमभ्युपगच्छन्ति। तत्र तत्र प्रत्यक्षासम्भवात्। तथाच निरपेक्षप्रत्यक्षप्रमाणेन सर्ववादिसिद्धतयाऽचित्पदार्थनिरूपणमेव प्रथमङ्कार्यमिति। समाधत्ते **भोक्तेति**। अत्र भोक्ता भोग्यं प्रेरितारञ्च मत्वेति श्रुतिर्विवक्षिता। **अडैवु** क्रमः। वैदिकैरस्माभिर्वेदोक्तक्रमस्यै-वाङ्गीकर्तव्यत्वादिति भावः। ननु श्रुतिरेव कथमेवं कथयतीत्यत्राह **तन्नै** इति। अयमाशयः—"आत्माभि-मानानुगणपुरुषार्थव्यवस्थया" इत्युक्तरीत्याऽयमधिकारी स्वमात्मानं यथा यथा मन्यते तत्तदनुगुणमेव पुरुषार्थं कामयते, तथैव चोपायान् परिगृह्णाति, विपरीतांश्च त्यजतीति, प्रथमं स्वस्वरूपप्रतिपत्तौ आवश्यिकायां

---

*தசையிலே ஸர்வ ஸ்வாதந்திரியமும், ஈச்வரனுக்கு தன்னடியார் திறத்தில் குற்றங்களில் அறியாமையும் உண்டென்பவர்களுக்கும் முடிவில் ஈச்வரனில்லை என்ற தீமை வந்துறும்*

*இத்தத்துவங்கள் மூன்றில்—சாஸ்திரம் யுகதி முதலியவைகளின்றி வெறும் ப்ரத்யக்ஷம் கொண்டே அறியக்கூடிய அசித்தை முதலில் நிரூபிக்க வேணும் ஆயினும் ச்ருதிகளில்—'அநுபவிக்கும் ஜீவன், அநுபவிக்கப்படும் அசேதனம், இவ்விருவரையும் நடத்திப் போகும் ஈச்வரன்' என்று ஓரிடத்தில் கூறியுள்ள க்ரமத்தை ஒட்டியும், முதலில் தன்னை யறிந்த பிறகு தானே ஜீவன்—தன்க்கு இது ஏற்கும், ஏற்காது என்று பகுத்தறியப்*

தனக்கு த்யாஜ்யோபாதேயங்களை விவேகிக்க வேண்டுகையாலே யதோபதேசம் ஜீவ-தத்த்வத்தை நிரூபிக்கிறோம்.

ஜீவனுக்கு லக்ஷணம் ஆதேயத்வ-விதேயத்வ-சேஷத்வாணுத்வங்களில் ஒன்றோடே கூடின சேதனத்வமாதல், அஹந்த்வமாதல். ஆதேயத்வாதிஸம்பந்தநியமத்தாலே அசித்த்ரவ்யம்

---

तदर्थमेव जीवस्य स्वस्य निरूपणं तेन तेन कार्यमिति । अथाप्यसांप्रदायिकत्वशंकां निराकरोति **यथोपदेशमि**ति । "तत्त्वेन यश्चिदचिदीश्वर" इति "स्वाधीनत्रिविधचेतनाचेतन" इति च पूर्वाचार्य-सूक्तिदर्शनात् अयमपि क्रमस्तत्सम्मत एवेति भावः । न्यायसिद्धाञ्जनादौ तु प्रत्यक्षसिद्धत्वादचिन्निरूपण-प्राथम्यमभिप्रेतं भवति । अथ यथाप्रतिज्ञं प्रथमं जीवलक्षणमाह **जीवनुक्कु** इति । अत्र "....मातल् इत्येव **सर्वकोशेष्व**पि वाक्यसमाप्तिर्दृश्यते । अथापि आम् इति क्रिया तत्र पूरणीया ; कोशेषु द्रष्टव्या वा । आधेयत्वादीनां स्वरूपं पूर्वमेवोक्तम् । **अहन्त्वं** अहंशब्दवाच्यत्वम् । तथाचाधेयत्वे सति चेतनत्वं, अथवा आधेयत्वे सति अहन्त्वमित्यादिरीत्याऽऽधेयत्वादिभिश्चतुर्भिस्सह चेतनत्वाद्योर्द्वयोः विकल्पेन योगे अष्टौ लक्षणानि भवन्ति । आधेयत्वादिमात्रस्याचेतनेषु, चेतनत्वादेरीश्वरे चातिव्याप्त्या परस्परवैशिष्ट्यकरणम् । नन्वणुत्वे सति चेतनत्वादिकमेव लक्षणमस्तु, किमाधेयतादित्रिकग्रहणेनेत्यत्राह **आधेयत्वादी**ति । तथाचाधेयत्वादीनां लक्षणत्वकथने जीवस्य तत एव ब्रह्मशरीरत्वसिद्धिरित्यादिकं फलं तेषामस्तीति भावः। आधाराधेयभावादीनां द्विनिष्ठत्वेन व्यासज्यवृत्तित्वद्योतनाय सम्बन्धत्वोक्तिः। **नियम**पदेन कदाचिदाधेयत्वविधेयत्वादिमतो घटपुत्रादेर्भूतलपित्रादिकं प्रति शरीरत्वव्युदासः । यत् यत्प्रति नियताधेय-त्वादिमत् द्रव्यं, तत् तत्प्रति शरीरमिति व्याप्तौ दृष्टान्तः **अचिद्द्रव्यं** इति । यथाऽयमचेतनपरिणाम-भूतो देहः जीवं प्रति शरीरम्, उक्तसम्बन्धनियमात्—तथैव तत्सम्बन्धनियमेन जीवोऽपीश्वरं प्रति शरी-रमित्यर्थः । यद्यप्येकस्मादेव सम्बन्धनियमाज्जीवेश्वरयोश्शरीरात्मभावसम्बन्धसिद्धिरिति त्रितयकथनं व्यर्थम्, तथापि आधाराधेयभावकथनेन भगवद्ज्ञानशक्त्यादेर्भगवन्तं प्रतीवास्माकमपि तं प्रति अपृथक्सिद्धस्वरूप-तावगतिः भवति ; शेषशेषिभावोदाहरणेन आत्माभिमानानुगुणपुरुषार्थव्यवस्थया भगवत्प्राप्त्येकप्रयोजन-त्वमस्माकं सिध्यति ; नियन्तृनियाम्यभावप्रतिपादनेन परतन्त्रस्वरूपानुगुणोपायपरिग्रहश्च भवतीति प्रयोजनभेदो बोध्यः । नन्वाधेयत्वादिसम्बन्धनियमेन जीवस्येश्वरशरीरत्वं न सिद्ध्यति ; जीवस्याधेयत्वे

---

*புறப்படுவான் என்ற யுக்தியை ஒட்டியும் எமக்கு பூர்வாசாரியர்கள் உபதேசித்த க்ரமத்திலே முற்பட ஜீவதத்துவத்தை நிரூபிக்கிறோம். இந்த ஜீவனுக்கு அடையாளம் எது என்னில்—ஒன்றைப் பற்றி நிற்றல், பராதீன மாக இருத்தல், மற்றொன்றுக்காகவே அமைந்திருத்தல், அணுவாயிருத்தல் என்ற நான்கில் ஒன்றை எடுத்து, அத்துடன் கூட்டிய சேதனத் தன்மை யோ, அத்துடன் கூடிய நானென்னும் தன்மையோ ஆகும். முன்னெடுத்த*

**போலே जीवனும் ईश्वरனுக்கு शरीरமாயிருக்கும்.**

**शरीरादिகளுக்கு प्रकारियாய் வேறொன்றுக்கு प्रकारமன்றிக்கே தோற்று கிற जीवன் आधेयனாகக் கூடாதென்னில்? आत्मस्वरूपமாதல் अस्मदादिகளுடைய धर्मभूतज्ञानமாதல் आश्रयமான ईश्वरस्वरूपத்தை ग्रहिக்கமாட்டாமையாலே गन्धादि-गुणங்கள் गुणिயை யொழியத் தோற்றுமா போலவும், चक्षुस्स्पर्शनங்களாலே**

---

प्रत्यक्षविरोधादित्याशङ्कते **शरिरादि** इति। स्वशरीरादिके प्रतीत्यर्थः। **आदिनेन्द्रियादिपरिग्रहः।** प्रकारी=विशेष्यम्; आधार इति यावत्। वेरोन्रुक्कु=ईश्वरादिकं प्रति। प्रकारः=विशेषणम् आधेयमिति यावत्। **तोत्तुकिर** इति। देवोहं मनुष्योहं इत्येव भानात् "मच्छरीरी ईश्वरः" इत्यभानाच्चेत्यर्थः। **आधेय** इति। तथाच यदि जीवे प्रत्यक्षबलात् किञ्चिदङ्गीकर्तव्यं, तर्हि तस्य स्वशरीरादिकं प्रति आधारत्वमात्रं स्वीक्रियताम्। न त्वीश्वरं प्रत्याधेयत्वमित्येवं पूर्वपक्षे प्राप्त इत्यर्थः। तत्र देवोहमित्यादि-प्रतीतिसद्भावः किं जीवस्येश्वरशरीरत्वे बाधकतयाऽभिमतः, अथवा "ईश्वरो मच्छरीरी" इति प्रतीत्यसद्भावः? न प्रथमः; एकं प्रति शरीरिण एवान्य प्रति शरीरत्वसम्भवात्। शरीरशरीरिभावस्यापेक्षिकत्वात्, पितृपुत्रभाववत्। द्वितीये तु तादृशप्रतीत्यभावस्तदा प्रतिबन्धकस्स्यात्, यदि सत्यामपि सामग्र्यां तादृशप्रतीति-र्न स्यात्। तदानीमेव तदभावस्य विषयाभावसाधकतया प्रतिबन्धकतोपपत्तेः। न च तथा प्रकृतेऽस्ति। जीवस्येश्वरशरीरत्वे स्थितेपि विशेष्यभूतेश्वरग्रहणसामग्र्यभावात्, "ईश्वरो मच्छरीरी" इति प्रत्ययविरहोपपत्तेः। न तु विषयाभावादित्याशयवान् समाधत्ते **आत्मस्वरूपे**त्यादिना। आत्मस्वरूपस्य स्वस्वापृथक्सिद्ध प्रत्यक्त्वै-कत्वानुकूलत्वाख्यधर्मत्रयव्यतिरेकेण वस्त्वन्तरग्राहकत्वाभावात् ईश्वरस्य च तद्व्यतिरिक्तस्य तेन ग्रहणा-योगादिति भावः। तादृशवस्त्वन्तरग्रहणं हि धर्मभूतज्ञानस्यैव धर्मः। **तदुक्तं श्रीमद्रहस्यत्रयसारे** धर्मभूतज्ञानत्तुक्कु विषयित्व एररम्; विषयित्वमावदु तन्नै योलिन्ददोन्नै काट्टुकै इति। तन्नैयोलिन्ददु स्वपृथक्सिद्धम् न तु स्वभिन्नम्। तथासति धर्मिणोपि स्वभिन्न प्रत्यक्त्वादिधर्मत्रयप्रकाशकतया विषयि-

---

*நான்கில் முதல் மூன்றும் கட்டாயமாக ஜீவனுக்கு இருபபதினுல் அசே தனப் பொருளைப் போல சீவனும் பரமாத்மாவுக்கு சரீரமாகிறுன். தனது சரீரத்தை உடையவனுய், மற்ெருருவருக்கும் சரீரமாகத் தோன்ருதவனுய் இருககிற சீவனை ஈச்வர சரீரமெனறது எப்படி கூடும் எனில், கேளுங்கள் ஓர் உதாஹரணம்—சந்தனக்கட்டையின மணம் அதின்றி தனித்துத் தோன்றுவது போல் ஈசவரனின்றி சீவன் தனிததுத தோன்றுகிறுன் அங்குக் காரணம, மணமறியும் மூக்கினுல், அதையுடைய மலரை அறிய முடிவதில்லை இங்கும் ஆத்ம ஸ்வரூபமோ—அவனுடைய ஜ்ஞானத் தனமை யோ ஈசவரனை அறிய எட்டாது மற்ருேர் உதாஹரணம்—கண் முதலிய வற்ருல் ஆத்மாவினுடைய இந்த பூதவுடல் அவனை விட்டுத் தனித்துதானே தோனறுகிறது எப்போது நம்மை உடைய ஈச்வரன் சாஸ்திர பிரமாணங் களாலே அறியபபடுகிருனே—அபபோது நம்மையும் நாம் அவனுடலாகக காணக் குறையில்லை. இதே நியாயம் அசேதனங்களிலும் வரும்.*

மநுஷ்யாதிஶரீரங்கள் ஶரீரியை யொழியத் தோற்றுகிறுப் போலவும், ஜீவன் ப்ரகாரியை யொழியத் தோற்றுகிறுகையாலே ப்ரகாரியோடே கூட காட்ட வல்ல ப்ரமாணம் பெற்றபோது ஆதேயமாயத் தோற்றக்குறையில்லை. இந்த

त्वापतेः। **अत्र केचित् तन्नैयोलिन्ददु** इत्यस्य स्वभिन्नार्थकत्वमेव स्वीकृत्योक्तदोषपरिहाराय प्रत्यक्त्वादि-धर्माणां धर्मिवत् स्वातन्त्र्येण स्वयंप्रकाशत्वमेवाहुः। तेषां **श्रुतप्रकाशिका-भावप्रकाशिका-न्याय-सिद्धाञ्जनविरोधपरिहारादि**ग्रन्थविरोधः **अस्मदध्यात्मविद्यागुरुभिः सारबोधिन्यां** तद्वाक्य-व्याख्यानावसरे स्पष्टमुपपादितस्तत्रैव द्रष्टव्यः। **अस्मदादि** इति। संसारिणामित्यर्थः। यद्यपि धर्मभूतज्ञा-नस्य स्वापृथक्सिद्धसर्ववस्तुग्रहणसामर्थ्यसद्भावात् तेनेश्वरग्रहणं सम्भाव्यं, तथापि संसारदशाया-मस्मदादिज्ञानस्य कर्मणा संकुचितत्वात् तदसंभव इति भावः। आधारं विनाऽऽधेयमात्रस्य प्रतीति-सद्भावमुदाहरति—**गन्धादीति**। **आदिना** रसग्रहणम्। तद्ग्राहकयोर्घ्राणरसनयोर्द्रव्यग्रहणायोग्य-त्वादिति भावः। प्रकृतशरीरशरीरिणोर्विषय एव तादृशप्रतीतिमुदाहरति—**चक्षुरि**ति। स्पर्शनं=त्वगिन्द्रियम्। तयोरात्मपर्यन्तग्राहकत्वाभावादित्याशयः। नन्वेवं पिशाचादिकं प्रत्यपि अस्मदादि-जीवानां शरीरत्वं स्यात्। न चात्रास्मच्छरीरी पिशाचादिरिति प्रतीतिविरहो बाधकः। ईश्वरविषय इवात्रापि प्रकारिणोऽप्रत्यक्षत्वादप्युपपत्तेरित्यत्राह—**प्रकारि** इति। **प्रमाणं**="सर्वं ह पश्यः पश्यति" इत्याद्युक्तमुक्तिकालीनसर्वसाक्षात्कारिविकसितज्ञानविशेषः। तेनेश्वरस्यापि साक्षात्कारात्, तदैव प्रकारि-प्रतीतिभावभाविप्रकारप्रतीत्या जीवानामीश्वरशरीरत्वाद्याधेयत्वग्रहणं सम्भविष्यतीति भावः। तथाच पिशाचादीनां तथात्वे प्रमाणाभावान्न तच्छरीरत्वं कदापि भवतीत्यपि भाव्यम्। **अत्र केचित्**, "प्रकारियोडे काट्टवल्लप्रमाणं=वेदान्तवाक्यानि, "यस्यात्मा शरीरम्" इत्यादीनि इति व्याकुर्वन्ति। **तन्न**। अत्र वाक्ये यस्यात्मा शरीरमित्यादिवाक्यप्रतिपन्नशरीरात्मभावस्यैव प्रसिद्धप्रत्यक्षविरोधेन अनुपपन्नताया आशङ्कितत्वेन, पुन-स्तद्वाक्यार्थप्रदर्शनेनैव तन्निरासस्य सन्दर्भविरुद्धतापातात्। "न हि यो यद्विषमूर्छितस्स तेनैवोत्थाप्यते" इति न्यायात्। **अत्रैतदुक्तं भवति**—पूर्वं शरीरादिकलुक्कु प्रकारियाय् वेरोन्रुक्कु प्रकार मन्रिक्के तोट्रुकिर इत्येतद्वाक्ये तोट्रम् इति किं ज्ञानसामान्यं विवक्षितम् उत प्रत्यक्षमात्रम्। आद्ये—यस्यात्मा शरी-रमित्यादिभिर्वाक्यैः ब्रह्मप्रकारतयैव जीवस्य बोधात् कथं "प्रकारमन्रिक्के तोट्रुकिर" इत्याक्षेपः प्रवर्तते तद्वाक्यस्याप्रामाण्यशङ्कया चेदाक्षेपः, कथं तदा तेनैव तत्प्रशमनम्; तदच्छाद्य विस्मृत्य वा पूर्वपक्षप्रवर्तने तद्वाक्यप्रदर्शनेनैवालं भविष्यति। द्वितीये तु अस्मद्रीत्या व्याख्यानमेवोचितम्। अत एव हि दृष्टान्तविवया प्रत्यक्षमेवोदाहृतं मूले इति। न तु जीवानां ब्रह्मशरीरतयाऽप्रतिपत्तिमात्रम्। न त्वन्यशरीरतया प्रतिपत्तिरपि। सा चाप्रतिपत्तिर्विशेष्यभूतब्रह्माग्रहणप्रयुक्तापि पश्चाद् ब्रह्मग्रहणे सति परि-पूर्णविषया भविष्यतीति युक्तं जीवानां ब्रह्मशरीरत्वम्। अचेतनानां तु अन्यशरीरतयैवोपलब्ध्या तन्न युज्यत एव। न ह्येकस्य शरीरं भवत् अन्यस्यापि शरीरं भविष्यति। द्वैराज्यप्रसङ्गादित्यधिकाशङ्कायामुत्तरवाक्यमतिदि-शति **इन्दन्यायम्** इति। अत्रायमधिकः परिहारः—पृथिव्याद्यचेतनानां, "अनेन जीवेनात्मनाऽनुप्रविश्य"

ஸ்யாயம் ப்ருதிவ்யாதிகளிலும் துல்யம்.

(விதேயத்வபரீக்ஷை—) தான் நினைத்தபடி த்ருஷ்டாத்ருஷ்டார்த்தப்ரவ்ருத்தி பண்ண வல்லனாகையாலே ஸ்வதந்த்ரனாய்ப்போருகிற ஜீவன் விதிநிஷேதசாஸ்த்ரயோக்யனாய் வேறொருத்தரு(ருக்கிட்ட)னிட்ட வழக்காகான் என்னில், ஈச்வரன் இவனுக்கு ஜ்ஞானசக்த்யாதிகளைக் கொடுத்து ஹிதாஹிதோபதேசங்களை அறிந்து ப்ரவர்த்திக்க வல்லனாம்படி நியமித்துவைக்கையால் இவனுடைய விதேயத்வ சாஸ்த்ரவச்யத்வா

इत्यादि ।त्या जीववर्गं प्रति शरीरत्वेऽव्गतेऽपि, “यस्य सर्वाणि भूतानि शरीरम्” इत्यन्तर्यामिब्राह्मणाद्यनुसारेण भगवच्छरीरत्वस्याप्यैष्टव्यत्वादुभयं प्रत्यप्यचेतनानामेकदैव शरीरत्वं प्रामाणिकमेव । न च द्वैराज्यादिप्रसङ्गः । तत्रेश्वरस्यैव सर्वप्रधानत्वात् इति । **श्रीमद्रहस्यत्रयसारे** पक्षान्तरमप्युक्तम्, “जीवर्गळाले धरिक्कप्पडुगिर शरीरङ्गळुक्कु जीवद्वारा आधारमाग इरुक्कुमेन्रु शिलर् शोल्लुवर्” इति । अत्रानयोः पक्षयोः पूर्वतम एव सिद्धान्तीकरणार्हः ; प्रमाणानुगुण्यात् । अत एव तत्र ग्रन्थे-पूर्वस्मिन् पक्षोपन्यासे आचार्यकथितत्वमूचे । एतत्तत्त्वञ्च मूल एवानुपदं स्पष्टीभविष्यति ।

एवं स्वतन्त्रतया प्रतीयमानत्वेऽपि जीवस्येश्वरं प्रति आधेयत्वमुपपाद्य, सम्प्रति विधेयत्वम-प्युपपादयति **तान् निनैत्तपडि** इति । पूर्वं “जीवनुक्कु स्वाधीनभोक्तृत्वम् भ्रान्तिसिद्धम्” इत्यनेन स्वतन्त्रतया पुण्यपापफलभोक्तृत्वं नास्तीत्युक्तम् । इह तु स्वतन्त्रतया भोक्तृत्वाभावेऽपि कथञ्चित् स्वातन्त्र्यमात्रमस्त्विति शङ्कयोत्थानमिति न पुनरुक्तिः । स्वेच्छानुविधायिप्रवृत्तिशीलत्वं स्वातन्त्र्यम् । वायूदकादिप्रेरिततृणादिवत् परेच्छया प्रवर्तमानत्वं पारतन्त्र्यम् । जीवश्च यथेच्छं दृष्टार्थकृष्यादिप्रवृत्ति अदृष्टार्थयागादिप्रवृत्तिञ्च करोतीति तस्य स्वातन्त्र्यमेवेति भावः । **ईश्वरन् इत्यादि** । सर्वप्रशासितेश्वर-स्वप्रशासितृत्वसिद्धये उभयात्मके जगति अचेतनेषु भोग्यत्वं चेतनेषु भोक्तृत्वं तदनुगुणज्ञान-शक्त्यादिकञ्च सङ्कल्प्य विहरति । ततश्च जीवः ईश्वरदत्तज्ञानतया हिताहितोपदेशं श्रुत्वा तदाहित-शक्तिकतया यथाप्रतिपत्ति तत्र तत्र प्रवर्तते । एवञ्च जीवस्वातन्त्र्यस्येश्वरसंकल्पायत्तत्वेन, तस्य तत्पार-तन्त्र्यकाष्ठाफलतया जीवस्य विधेयत्वशास्त्रवश्यत्वादिकञ्च सम्भवत्येवेति भावः । तदुक्तं **रहस्यत्रयसारे,** “अचित्तुक्कळ् शब्दादिकळै ईश्वरनुण्डाक्कच्चुमक्किराप्पोले [जीवन्] इव्वळवु स्वातन्त्र्यत्तै एडुत्तुच्चुमक्कैयुम् भगवत्पारतन्त्र्यकाष्ठै इरुन्दपडि” इति । **अन्यत्र** च, “भोग्यं मुकुन्दगुणभेदमचेतनेषु भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव । पाञ्चालिकाशुकविभूषणभोगदायी सम्राडिवात्मसमया रहमेदसे त्वम् ॥” इति । नन्वेवं जीवो यदीश्वराधीनप्रवृत्त्यादिर्भवति, तदा वस्तुनस्तस्य स्वातन्त्र्यहानेः निगलितपुरुषे धावनाद्यादेशवत्

தான் நினைத்தபடி இஹலோக பரலோக விஷயங்களில் முயற்சிக்கக் கூடிய ஸ்வாதந்திரியம் உடையனாய், 'செய், செய்யாதே' என்ற வேதங்களின் கட்டளைக்கு மட்டும் உட்பட்டவனை சீவனை—மற்றவனுக்குப் பரா தீனனுக்கல்லாமல் என்னில்,—ஈச்வரன் இவனுக்கு அறிவு, ஆற்றல் முதலியவைகளைக் கொடுத்து நன்று தீது அறிந்து அதற்கேற்ப முயலும்

திகள் கூடும். कायकरणकर्मकालादिஸாபேக்ஷனாய் ப்ரவர்த்திக்கிறவனுக்கு விதிநிஷேத-சோதநாவிஷயத்வம் लोक-वेद-सर्वसिद्धान्तसिद्धமாகையாலே ஈச்வரஸாபேக்ஷதையிலோ (னுமொ)ரு விரோதம் வாராது.

तं प्रति शास्त्रीयविधिनिषेधसाफल्यं कथं भविष्यति इत्यत्राह **कायकरणे**ति । शरीरेन्द्रियेत्यर्थः । कर्म=प्राचीनमदृष्टम्, गमनादौ ईप्सिततमं ग्रामादि वा । कर्म क्रियेति केषाञ्चिद्व्याख्यानं त्वनादेयम् । क्रियाजनिकायाः पुरुषप्रवृत्तेः क्रियापेक्षत्वाभावात् । तथाच जीवप्रवृत्तिसामान्यस्य, "अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् । विविधा च पृथक् चेष्टा,...." इत्युक्तरीत्या यथा अनेकपदार्थसापेक्षत्वेऽपि न तस्य विधेयत्वे विरोधः, तथैव दैवञ्चैवात्र पञ्चममित्युक्तेश्वरसापेक्षत्वेऽपीति भावः । यदिदमीश्वरसापेक्षत्वमात्रे विरोधोद्भावनम्, तदिदमीश्वरप्रद्वेषफलमेवेति च बोध्यम् । तथा चाधिकरणसारावली, "मैवं कर्माक्षकाल-प्रभृतिपरवशे कर्तृतां तत्फलञ्च स्वीकृत्यात्मेशनात्ते श्रुतिशतविदिते द्वेष इत्थं दुरन्तः" इति । स्वतन्त्रस्यापी-श्वरस्य जीवप्रवृत्तिं प्रति प्रत्यक्षप्रतिबन्धकत्वाभावात् न निगलतुल्यतेत्यभिप्रायः । ननु कर्तारं प्रत्येव हि विधिनिषेधशास्त्राण्यर्थवन्ति भवन्ति । स च, स्वतन्त्रः कर्तेति **पाणिन्यनुशिष्टः** । तच्चा-न्यानधीनस्वव्यापारवत्त्वरूपं लोके प्रसिद्धमिति कथमीश्वरपरतन्त्रस्य जीवस्य पुण्यपापकर्तृत्वं तत्फलभाक्त्व-दण्डयत्वादिकञ्चेति चेन्न, पाणिन्यनुशिष्टस्वतन्त्रकर्तृत्वस्य कर्मत्वादिवत् परिभाषामात्रत्वात् । न हि तत्र कर्मेति चलनात्मकं कर्म विवक्ष्यते । ग्रामादेस्तदयोगात् । किन्तु, "कर्तुरीप्सिततमं कर्म" इति क्रियाजन्यफलशालितया कत्रभिप्रेतत्वमेव तत् । तद्वत् प्रकृतेऽपि कर्तृत्वं समभिव्याहृतक्रियाकारकान्तर-व्यापारानधीनत्वक्रियानुकूलव्यापारवत्त्वरूपमिति **व्युत्पत्तिवादादौ** निर्णीतम् । तथा चाऽऽपेक्षिकस्य कर्तृत्वात-न्त्र्यस्येश्वरपरतन्त्रत्वेऽपि जीवे नानुपपत्तिः । तथा हि-राजपुरुषः काष्ठैः स्थाल्यामोदनं पचतीत्यादौ राजपुरुषस्य राजेच्छाधीनप्रवृत्तिमत्तोऽपि समभिव्याहृतपाकक्रियाकारकान्तरकाष्ठादिव्यापाराधीनप्रवृत्तिमत्त्वविरहमात्रेण पाकक्रियाकर्तृत्वमुच्यते । न हि पुरुषस्य पाके स्थितं स्वातन्त्र्यं राजपारतन्त्र्यविरोधि । न हि राजा पाकक्रियाकारकान्तरम् । येन तत्पारतन्त्र्यं पुरुषस्य पाकक्रियास्वातन्त्र्यं विहन्यात् । एवमेवेहापि जीव-स्येश्वरपरतन्त्रत्वेऽपि विहितनिषिद्धक्रियकर्तृत्वादिकमुपपद्यत एव । ईश्वरस्य तत्तत्क्रियाकारकान्तरत्वाभावात् । न च काष्ठैः पचतीतिवत् ईश्वरेण जीवः कर्म कुरुत इत्यादिप्रयोगसद्भावात् तत्रेश्वरस्य करणकारकतया तदधीनस्य जीवस्य कथं तस्यां कर्तृत्वमिति वाच्यम्; "साधकतमं करणम्" इति विधानेन तत्पा असाधा-रण्यलाभात् ईश्वरस्य च साधारणकारणतया तस्य कुत्रापि जीवकर्तृकक्रियायां करणत्वानुपपत्तेः । उक्त-प्रयोगस्तु "हेतौ" इति विहितहेतुतृतीयया निर्वाह्यः । तया अकारकेणापि केनचित् न तदर्थः कारकं भवति ।

படி அவனை அமைத்து வைக்கையாலே, சாஸ்திரத்திற்குக் கட்டுப்பட்டு வனுயினும் ஈச்வரனுக்கும் சொல்லிற்றுச் செய்பவனாக இருக்கலாம், மேலும் உடல், இந்திரியங்கள், கர்ம, கால, தேசங்கள் இவைகளின் உதவியின் மூலம் செயல்படும் ஜீவனுக்கு சாஸ்திர வசப்படுத்தும் தன்மை என்று உலகம் சாஸ்திரம் இரண்டையும் அறிந்த பெரியோர்கள் ஒப்புகிறார்கள்.

तथा त्वत्र—धनेन कुलं विद्यया यश इत्यादिषु द्रष्टव्यम्। तत्र क्रियाध्याहारे प्रमाणाभावात्। अस्तु वा प्रकृते "ईश्वरेण जीवः कुरुते" इत्यादौ प्रेरितः इति क्रियाध्याहारः। तस्याश्च प्रेरणक्रियायामीश्वरः कर्तैव भवतीति तदानीमपि सा कर्तृतृतीयैवेति न प्रकृतक्रियायामीश्वरस्य करणत्वम्॥ नन्वस्ति तत् ईश्वरेण जीवो मुक्तिं लभत इत्यादौ। जीवकर्तृकमुक्तिलाभे ईश्वरस्यासाधारणकारणत्वेन करणत्वात्। तथा च तत्र समभिव्याहृतकारकान्तरव्यापाराधीनव्यापारशालिनो जीवस्य कथं कर्तृतोपपद्येत; कर्तृस्वातन्त्र्यस्योक्तरूपस्यापि हानेरिति चेत्—मैवम्। अत्रापीश्वरेणानुगृहीत इति मध्ये पूर्ववत्क्रियान्तराध्याहारात् तत्रेश्वरस्य कर्तृत्वात्। अत्रायं निष्कर्षः—कर्तृतानिर्वाहको व्यापारः प्रवृत्त्यात्मको यत्न एव; न तु पाकयागादिरूपः। तस्य निर्वाह्यकर्तृताफलभूतक्रियात्मकत्वात्। तथाच पाकादेः कारकान्तराधीनत्वेऽपि देवदत्तादेः पाकादिप्रवृत्तिः तत्क्रियाकारकान्तरकाष्ठाद्यनधीनैव। तदधीनताया स्तत्सापेक्षतातिरिक्ततज्जन्यतारूपत्वात्। न हि कारकचक्रं स्वायत्तीकृत्य व्यापारयतः तच्चक्रवर्तिनः कर्तुः कारकान्तरसापेक्षत्वेऽपि तदधीनप्रवृत्तिमत्त्वम्, राज्ञो राष्ट्रनिर्वाहस्य अमात्यमापेक्षत्वेऽपि तदधीनत्वासंभववत्। प्रत्युत काष्ठादिव्यापार एव तद्व्यापाराधीन इति कर्तुर्देवदत्तादेरीश्वरपारतन्त्र्येऽपि स्वातन्त्र्यदण्डच्युतादेर्न मनागपि क्षतिरिति।

परायत्ताधिकरणश्रुतप्रकाशिकायां तु स्वातन्त्र्यपारतन्त्र्ययोरविरोधोऽन्यथा न्यरूपि, "न च स्वातन्त्र्यं पराधीनत्वञ्चेति व्याघातः; अमात्यस्वातन्त्र्ये तदभावात्। तदभावश्च अमात्यप्रवृत्तेः राज्ञा अनिवारणात्। अत्रायं सङ्ग्रहः—वैधर्म्यं यावता न स्याद्विधानप्रतिषेधयोः। नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न ततः परः॥ बाह्यान्तःकरणव्याप्तितच्छक्त्याधानधारणैः। साधारणोपकारैस्स्यात् इच्छादेः कारणं परः॥ (इच्छादे:= प्राथमिकेच्छाप्रवृत्त्यादेः) ...सामर्थ्ये सत्यवार्यत्वात् स्वतन्त्रो जीव उच्यते। .... न स्वातन्त्र्यं पराधीनस्वरूपात् प्रच्युतं भवेत्। स्वातन्त्र्यदायिना पुंसा तत्प्रवृत्त्यनिवारणात्॥" इति। (पराधीनस्वरूपात्= जीवात्।) **अधिकरणसारावल्यामपि** तत्रैव, "कर्तृत्वं स्यात् कदाचित् करणवति परप्रेरणनिर्व्यपेक्षम्" इत्यादिभिस्त्रिभिश्श्लोकैरयमेव विषयो विमृष्टो दृश्यते। तत्र यद्यपि **चिन्तामण्याद्यनुसारेण** श्रुतप्रकाशिकोक्तप्रक्रियाखण्डनमिव प्रतीयते, तथापि सूक्ष्मदृष्टौ पक्षान्तरस्यैव कस्यचित्खण्डनमित्युचितं वक्तुम्। प्रथमप्रवृत्तौ ईश्वरेऽत्यन्तौदासीन्यस्यैव तत्र निराकरणात्। **निर्व्यपेक्ष**मिति कथनात्। श्रुतप्रकाशिकायामीश्वरे तत्र साधारणकारणतारूपेण कथञ्चिदभिसन्धेरङ्गीकारात् इत्यपि भाव्यम्॥ नन्वत्र पूर्वापरग्रन्थविरोधः प्रतिभाति। पूर्वं "तान् निनैत्तपडि" इत्यादिना स्वतन्त्रस्य कथं शास्त्रवश्यत्वमित्याक्षेपात्। अत्र तु, 'कायकरण....सापेक्षनाय्' इति तद्विपरीताभिधानात् इति चेत्—मैवम्। जीवस्य शास्त्रवश्यतां प्रति मनाया स्वातन्त्र्यपारतन्त्र्योः सद्भाव आवश्यक इत्यत्र पूर्वोत्तरग्रन्थयोस्तात्पर्येणादोषात्। न हीश्वरवत् सर्वथा स्वातन्त्र्ये, अचेतनकाष्ठादिवत् सर्वथा पारतन्त्र्ये वा जीवस्य सोपपद्यते। अत एव हि **श्रीरहस्यत्रयसारे** "अत्यन्तपरतन्त्रनान अधिकारियै क्कुरित्तु....ओरु कर्तव्यत्तै विधिक्ककुम्पडि एन्" इत्यत्र अत्यन्तेत्यधिकं पदं प्रायोजि।

(சேஷத்வபரீக்ஷை—) चेतनனாகையாலே स्वार्थமாகவன்றிக்கே प्रवर्तियாத जीवனை परशेषभूतன் என்ன ஒண்ணுமென்னில்? दासादिகள் स्वार्थप्रवृत्तராகாநிற்கச்செய்தே राजादिகளுக்கு शेषமாகை लोकसिद्धம். स्वार्थप्रवृत्तकर्ताவை क्रियाविशेषங்களுக்கு शेषமாக परीक्षகர் निर्णயித்தார்கள்.

---

एवमियता ग्रन्थेन जीवस्येश्वरं प्रति आधेयत्वविधेयत्वे उपपाद्येदानीं शेषत्वमपि स्थापयितुं शङ्कते **चेतन** इति। स्वप्रयोजनाभावे, "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायादप्रवर्तमानस्य च अचेतनतुल्यतया चैतन्यमेव व्यर्थं स्यादित्यभिप्रायः। **शेषभूत** इति। "शेषः परार्थत्वात्" इति **मीमांसासूत्रे** परोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वमेव प्रयाजादीनां यागशेषत्वमित्युक्तम्। तत्र स्वोद्देशाभावेन स्वार्थाभावस्सिद्धः। एवमेव, 'परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपम्' इति **वेदार्थसङ्ग्रहोक्त**तल्लक्षणेऽपि परगतातिशयाधानातिरेकस्य स्वार्थस्य कस्याप्यभावो विवक्षितः। न च शेषित्वस्यैतत्प्रत्यनीकाकारतया स्वार्थप्रवृत्तत्वरूपस्य फलनात् यदोदारस्य कस्यचित् परदुःखापनोदनार्थमेव प्रवृत्तिः तदा तस्मिन् शेषित्वमव्याप्तम-तिव्याप्तञ्च शेषत्वमिति वाच्यम्। उदारपुरुषबुद्ध्या परार्थस्याप्यात्मार्थत्वादुक्तदोषानापत्तेः। **प्रसिद्धं ह्येतत्** "अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यादि। एवं कृतामाशङ्कां जीवस्वरूपोचितदासदृष्टान्तदानेन धुनोति **दासादि इति। अयं भावः**—एकस्मिन् पुरुषे एकदा स्वार्थपरार्थ-प्रवृत्तयोर्न मिथो विरोधः। यथोक्तोदारे। एवञ्च दासादेर्वेतनग्रहणादिजन्यस्वसन्तोषार्थं प्रवृत्तावपि, अत्यन्त-विधेयस्य तस्य स्वसन्तोषोऽपि स्वामिसन्तोष एवान्तर्भवतीति स्वार्थं प्रवर्तमानोऽपि दासादिः परार्थमेव प्रवर्तत इत्यायातम्। **इयांस्तु विशेषः**—यत् स्वामिनः प्रवृत्तौ पाञ्चालिकाशुकवैभूषणभोगदानन्यायेन परार्थ आनु-षङ्गिकः, स्वार्थ एव तु प्रधानम्। भृत्यप्रवृत्तौ चैतद्विपरीतम्। तत्तत्स्वरूपौचित्यस्यैवात्र नियामकत्वात्। अत एवोभयत्रोभयविधप्रवृत्तिसद्भावेऽपि पूर्वस्मिन् स्वामित्वमेव, उत्तरस्मिन् भृत्यत्वमेवेति व्यवस्थोपपद्यते। एवञ्च चेतनस्य जीवस्य स्वार्थप्रवृत्तावपि तदंशस्यानुषङ्गिकतया परमात्मप्रयोजनस्यैव प्राधान्यमिति तस्य तच्छेषतोपपत्तिरिति। इदञ्चोदाहरणमानुषङ्गिकतया स्वार्थान्वयेऽपि नैव शेषत्वस्य हानिरिति प्रदर्शनायोक्तम्। वस्तुतस्तु प्रधानतया स्वफललाभेऽपि न तद्धानिरिति दर्शयितुं मीमांसकसम्मतं दृष्टान्तान्तरमाह **स्वार्थ-प्रवृत्ते**ति। प्रधानतयैव स्वार्थस्वर्गादिकं प्रति प्रवृत्तेत्यर्थः। अधिकारित्वावस्थायामित्यादिः। तदैव हि यजमानः फलकामनया तत्साधने प्रवर्तते। **क्रियाविशेषङ्गलुक्कु**=यागादीनाम्। **शेषमाक** इति। कर्तृत्वावस्थायामित्यादिः। **परीक्षकर्**=मीमांसकाः। **निर्णयित्तार्कळ्** इति। तृतीयाद्ये,

---

அது போலவே இவனுக்கு ஈச்வர வச்யதையும் வரலாம். இவன் ஒரு சேதனனுகையாலே தனக்கன்றியில் ஏதும் செய்யான் என்றிருக்கும் போது ஜீவனை—ஈச்வரனுக்கு சேஷபூதனுகிறுன் என்று எப்படி சொல்லுவது? என்னில்—உலகில் அடிமையானவர்கள் தங்களுக்கென்று சில செய்யச் செய்தேயும் அரசன் முதலியோர்க்காகவும் உபயோகப்படுவது கண்கூடு தனக்கென யாகம் செய்யும் எஜமானனை யாகத்திற்கு அவன் உறுப்பு

ஈச்வரனைப் பற்ற ஈசிதவ்யங்களினுடைய சேஷத்வம். "உறவேல் நமக்கு இங்கு ஒழிக்கவொழியாது" என்னும்படி நிற்கும் எனகிறவிது விசேஷம்.

(சரீரத்வம்–) संघातादिरूपமன்றிக்கே தான் शरीरியாயிருக்கிற जीव னுக்கு शरीरत्वंகூடாது (டுமோ) எனனில்? மற்றுள்ளார் சொல்லும் शरीर लक्षणங்கள் எல்லாம் अव्याप्त्यतिव्याप्तिदुष्टங்களாகையாலே अनन्यथासिद्ध லக्षणवेद-

"पुरुषश्च कर्मार्थत्वात्" इत्यादिसूत्र इत्यादिः। अधिकार्यवस्थायां स्वार्थस्वर्गादिये फलाय यजमानेनोपादेयतया यागादिकं प्रति तस्य शेषित्वेऽपि कर्तृत्वदशायां कर्मसादुगुण्याद्यर्थमेव तस्योपादेयतया वैपरीत्येन तस्य यागशेषत्वमेवेति भावः। तथाच तद्वत् प्रकृतेऽपि जीवस्याविवेकादिदशायां स्वानर्थाद्यर्थप्रवृत्तिदर्शनेन तस्याश्च भगवदर्थत्वे पर्यवसानायोगात्तः शेषत्वाप्रतीतावपि प्रबोधानन्तरकाले भगवन्मुखोल्लासार्थमेव तेन प्रवृत्तेः शेषत्वोपपत्तिरिति बोध्यम्। ननु यजमानं प्रति दासादेरेव, क्रियां प्रति कर्तुरेव च, जीवस्य भगवच्छेषत्वमौपाधिकं कादाचित्कं स्यादित्यत्र ततोऽस्य विशेषमाह ईश्वरनैप्पट्र इति। ईशितव्यङ्ग्=शेषभूतश्चिद्वर्गोऽचिद्वर्गश्च। **उरवेल्** इत्यादि। इयं भगवन्तं प्रति श्रीगोदाया गाथा। नमक्कु= ईश्वरस्य तव, ईशितव्यानामस्माकञ्च, इङ्गु=परस्परयोर्विषये, **उरवु एल्** शेषशेषिभावसम्बन्धः खलु **ओलिक्क**=नाशयितुं यत्ने कृतेऽपि, **ओलियादु**=न नश्यति। अत्र-यत्ने कृतेऽपि न नश्यतीति सामान्योक्त्या, अल्पशक्तिभिरस्माभिरिव सर्वशक्तिना त्वयापि आवयोस्संबन्धो न नाशयितुं शक्य इति व्यज्यते। **एन्नुम्पडि निर्कुमदु**=एकरूपा या स्थितिः सा। अनौपाधिकत्वेन यावत्स्वरूपभावित्वमिति यावत्। **विशेषम्**=दासकर्त्रादिभ्यो व्यावृत्तिः। शेषत्वम्...**निर्कुमदु एन्गिर** विशेषम् इत्यन्वयः। अत्र— तथास्थितेरेवेतरव्यावृत्तिरूपत्वोक्तिर्भावान्तराभावनयात् द्रष्टव्या।

नन्वाधेयत्वादिनियमैर्जीवस्येश्वरशरीरत्वं न युक्तिमत्। आत्मनोऽसङ्घातात्मकस्य, सङ्घातात्मकदेहं प्रति देहिनस्तदसंभवादित्याशङ्क्याह **संघातादिरूपमन्रिक्के** इति। पृथिव्यादिभूतसङ्घातानात्मकेति, पाणिपादादिसङ्घातानात्मकेति वाऽर्थः। **आदिना**, "चेष्टेन्द्रियार्थाश्रय शरीरम्" इति सूत्रोक्तचेष्टाद्याश्रयपरिग्रहः। प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा 'चेष्टा हिताहितप्राप्तिपरिहारार्थस्पन्दः' इति च। चक्षुरादीनीन्द्रियाणि। **अर्थः** सुखदुःखोपभोगः शरीरत्वेतन्निरूप्याश्रयत्वञ्च क्रमेण समवायाधिष्ठानत्वावच्छेदकत्वसंबन्धैर्बोध्यम्। तथाचात्मनो देहलक्षणवैधुर्यात्, अन्यादृशदेहलक्षणकरणेनैव दुष्पपादनेऽपि तस्य स्वशरीरं प्रति शरीरित्वस्य प्रत्यक्षसिद्धतया शरीरत्वशरीरित्वयोरेकत्र समावेशविरोधाच्च, आत्मनः परब्रह्मशरीरतेति भावः **मट्रुळ्ळार्** इत्यादिस्समाधानग्रन्थः अन्ये नैयायिकादय इत्यर्थः। **अव्याप्त्यतिव्याप्तीति**। तथाहि-चेष्टाश्रयत्वं शिलादिरूपावस्थाशरीरेऽव्याप्तम् न च तदलक्ष्यम्।

என்றார்கள் மீமாம்ஸகர்கள், ஈச்வரனைப் பற்ற உலகத்தின் உபயோக உறவு "நமக்கு இங்கு ஒழிக்க ஒழியாது" என்னும்படி இருப்பது ஒற்றும்

தான் பலவற்றின் தொகுப்பாக இராது மேலும் தான் ஒரு சரீரத்துக்கு உடையவனாக இருக்கும்போது இந்த ஜீவன் ஈச்வரசரீரமாவது எப்படி?

प्रयोगानुसारத்தாலே, चेतनனைக் குறித்து आधेयत्व-विधेयत्व-शेषत्वनियमத்தாலே अपृथक्सिद्धविशेषणமான द्रव्यं शरीरமென்று लक्षणமானபின்பு अचित्तைப் பற்ற शरीरியான जीवனுக்கு ईश्वरனைப் பற்ற शरीरமாகை विरुद्धமன்று. अचेतनद्रव्यம் ईश्वरனுக்கு अद्वारकமாகவும் सद्वारकமாகவும் शरीरமாம் चेतनன் शरीरமாமிடத்தில द्वारप्रसङ्गமில்லை

---

स्थावरादिभाववत् तस्यापि पापादिफलत्वेन तद्वश्यंभावात् । "अन्तस्संज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति वचनात् । न च तत्र चेष्टाभावेऽपि तद्योग्यतास्तीति वाच्यम् ; तद्योग्यतायास्तत्कारणतावच्छेदकधर्मवत्त्वरूपत्वेन तस्याश्च यावन्निरूपयितुमशक्यत्वात् । चेष्टाया अत्यन्तमनुपलब्धेस्तत्र तद्योग्यताकल्पनानुपपत्तेः । यदि स धर्म आधेयत्वादिरित्युच्यते, तर्हि स एवास्तु शरीरलक्षणमिति स एव सिद्धान्तः । एवमिन्द्रियाश्रयत्वमपि विकल्प्य दूष्यम् । किमत्राश्रयत्वं संयोगः अथ समवायः, उतापृथक्सिद्धिः आहो उपष्टम्भकत्वं अथवाधिष्ठानत्वं विवक्ष्यते ? नाद्यः—घटादिष्वतिव्याप्तेः, रश्मिद्वारा सन्निकर्षाच्च चक्षुरसनादिसंयुक्तत्वात् । न द्वितीयः, शरीरेन्द्रिययोस्तन्मते समवायानभ्युपगमादव्याप्तेः इन्द्रियावयवानामेवेन्द्रियसमवायित्वेऽतिव्याप्तेश्च । सिद्धान्ते समवायस्यैवानभ्युपगमादप्रसिद्धिश्च । अत एव तृतीयोऽपृथक्सिद्धिपक्षेऽपि प्रतिक्षिप्तः । तस्याः सिद्धान्ते समवायस्थानीयत्याभ्युपगमात् दूषणतौल्यात् । नापि चतुर्थः-तदुपष्टम्भकत्वस्य तन्निष्ठकार्यजननशक्त्युपष्टम्भकत्वरूपत्वेनेन्द्रियं प्रति शरीरस्येव प्राणस्यापि प्राणस्यैव वेन्द्रियोपष्टम्भकत्वात् तत्रातिव्याप्तेः नैव पञ्चमोऽपि अधिष्ठानत्वस्याश्रयत्वातिरेकात् तन्निरासेनैव निरासात् । न च यत् यन्निष्ठं सत् कार्यकरं भवति, तत् तस्याधिष्ठानमिति शरीरमेव तथेति वाच्यम् ; रसनास्पर्शनादेरिन्द्रियस्य विषयनिष्ठतयैव कार्यकरत्वाद्विषयेऽतिव्याप्तेः एवमेतावच्छेदकत्वमाश्रयत्वमित्यपि दूषणीयम् । एवमर्थाश्रयत्वमित्यत्र भोगावच्छेदकत्वं यदि विवक्ष्यते, तदोक्तरीत्या शिलाशरीरादिष्वव्याप्तिः । स्थावरादिशरीरेष्विव शिलादिषु शरीरेषु सूक्ष्मान्तस्संज्ञाया अपि दुर्लभत्वात् । योग्यताश्चानुपदं दूषितत्वात् । भोगस्थानत्वविवक्षायां गृहादिष्वतिव्याप्तिश्चाधिका । एवं पृथिव्यादिपञ्चभूतसंघातत्वं शरीरत्वमित्यपि, "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इत्युक्तभगवद्विग्रहेऽव्याप्तम् । शिरःपाण्यादिसंघातरूपत्वमपि शिलादिशरीर इत्यादिकं स्वयमूहनीयम् । एवमेतावता परोक्तं शरीरलक्षणं दूषयित्वा, सिद्धान्तरीत्या तल्लक्षयन् तस्याव्याप्त्यादिदोषदूरगत्वं सामान्यतो दर्शयति—अनन्यथासिद्धेति । अत्र लोकशब्देन स्मृतिर्ग्राह्या । लोक्यते वेदार्थोऽनेनेति लोकः । अय भावः—यथा लोके घटत्वादिशब्दा एकाकारनानावस्तुषु प्रयुज्यन्ते, न तथा शरीरशब्दः । किं तु कृमिकीटपतङ्गसर्पनरपशुप्रभृतिषु परस्परात्यन्तविलक्षणसंस्थानवत्सु द्रव्येषु अगौण एव, "यस्य पृथिवी शरीरम्" इत्यादिना धर्मभूतज्ञानव्यतिरेकेषु श्रुत्या, "सोऽभिध्याय शरीरात् स्वात्", "तानि

---

எனில் சரீரம் எனபதற்கு பிற மதத்தவர் காட்டும் அடையாளங்களெல்லாம் மிகுதி குறைபாடு உள்ளவைகளாகையாலே, அசைக்க முடியாத வேதங்கள் காட்டின முறையில், ஒரு சேதனனுக்கு எது அவனைச்சார்ந்து

सर्वाणि तद्वपुः", "तत्सर्वं वै हरेस्तनुः" इत्यादिस्मृत्या च प्रयुज्यमानो दृश्यते । अतोऽनन्यथासिद्धैतादृशप्रयोगबलात् सर्वसाधारणमन्यदेव लक्षणं वक्तव्यमिति । किं तल्लक्षणमित्यत्राह **चेतनस्येत्यादि** इति । चैतन्यविशिष्टं प्रतीत्यर्थः । तेन-चैतन्यमात्रस्यात्मस्वरूपं प्रति आधेयत्वनियमसद्भावेऽपि न तं प्रति तस्य शरीरत्वापत्तिः । स्वविशिष्टं प्रति स्वस्याधेयताविरहात् । तथासति स्वस्यापि स्वविशेष्यतावच्छेदकीभूतस्वाधेयत्वप्रसङ्गेनात्माश्रयात् । तदुक्तं **न्यायसिद्धाञ्जने** स्वस्वज्ञानभिन्नसमस्तवस्तुशरीरकत्वमीश्वरलक्षणमिति । तन्न्यायस्य जीवज्ञानेष्वपि तुल्यत्वात् । अत्र स्वस्वज्ञानभिन्नसमस्तेति कथनात्, तत्तज्जीवज्ञानानां तत्तज्जीवान् प्रति शरीरत्वस्योक्तयुक्त्या असम्भवेऽपि ईश्वरं प्रति शरीरत्वमस्त्येव ; स्वस्य स्वाधेयतापत्तिविरहादिति द्योत्यते ॥ न च स्वज्ञानस्य स्वं प्रति शरीरत्वे किं बाधकमिति वाच्यम् ॥ स्वसंकल्पाधीनत्वरूपविधेयत्वस्य स्वज्ञानेऽसंभवात् । ज्ञानभिन्नसंकल्पाभावात् । अथाप्याधेयत्वेन तच्छरीरमस्त्विति चेत् न । चेतनप्रतिसंबन्धित्वेनैव शरीरत्वव्यवहारात् । अत एव यस्य पृथिवी शरीरमित्यादिवत् यस्य ज्ञानं शरीरमित्यप्रयोगः । न च "शूऴ्न्ददनिरुपेरिय शुडर्ज्ञानविन्नमेयो" इति **वकुळाभरण**गाथायाः, "महदादिकमप्यभिव्याप्य ततोऽपि महत्तरज्ञानानन्दत्वमित्यर्थिकाया व्याख्याने **षट्सहस्र्यां**, "त्वदीयसङ्कल्पज्ञानस्यापि त्वमात्मा" इति ज्ञानसामानाधिकरण्यस्य शरीरात्मभावघटितत्वैव व्याख्यानात् अस्ति तज्ज्ञानस्यापि तमात्मानं प्रति शरीरत्वमिति वाच्यम्; तत्रात्मशब्दस्यापृथक्सिद्धविशेषणं ज्ञानं प्रति विशेष्यभूतस्त्वमित्येतत्परत्वेन मुख्यात्मत्वविरहात् । ततः स्वज्ञानस्य स्वं प्रति शरीरत्वासिद्धेः । तथैव हि चतुर्विंशतिसहस्रिकाया व्याख्यायते स्म । **आधेयत्वादीति**। आधातुं विधातुं च योग्यतेत्यर्थः । तेन रुग्णशरीरे नाव्याप्तिः । फलोपधानाभावेऽपि तत्पुरुषकर्मोपार्जिततया पूर्वोत्तरकालयोः कार्यदर्शनेन च स्वरूपयोग्यतसत्त्वात् । **नियमश्च** व्याप्तिः । आधेयत्वनियमः=नियताधेयत्वम्, स्वसत्ताव्यापकाधेयत्वमिति यावत् । स्वं शरीरम् । एवञ्च नियमपदेन भृत्यादिव्यावृत्तिः । तेषामनियतविधेयत्वादिमत्त्वात् । प्राणेन्द्रियादिव्यावृत्तिश्च । आकाशाहङ्कारादिभ्य उत्पन्नानां तेषामात्मायत्तसत्ताकत्वाभावात् । एतेषां त्रयाणां सम्बन्धानां नियमा एव वेदार्थसङ्ग्रहादिषु शरीरलक्षणतयोक्ताः । तत्र च प्रत्येकमेवैतेषां लक्षणत्वमिति लक्षणत्रयं फलति ; न तु परस्परविशिष्टस्य । तथासति एकैकमात्रस्यैव सम्यक्त्वेन शेषवैयर्थ्यात् । केचित्तु दळानां प्रसिद्धव्यावर्त्याभावेऽपि, "आधेयत्वमात्रस्य शरीरलक्षणत्वे आधेयस्याप्यविधेयस्य कस्यचिच्छरीरत्वं स्यादिति रीत्या शङ्कितव्यावर्त्यसत्त्वेन तद्व्यावृत्त्या सार्थक्यं भविष्यति । यथा जन्मादिकारणत्वत्रितये ब्रह्मलक्षणे इति वदन्ति । तन्न ; प्रभुसंमिते स्वतन्त्रे वेदशास्त्रे तथोपपत्तावपि युक्तिप्रधानेषु आस्माकीनेषु ग्रन्थेषु तथाभावासंभवात् । ब्रह्मणि जगज्जन्मकारणेऽपि, स्थितिकारणतत्त्वान्तरसद्भावे ब्रह्मणो बृहत्त्वहानिवत् प्रकृते हान्यभावाच्च । एतत्त्रितयफलितं लघुलक्षणान्तरमाह **अपृथक्सिद्धविशेषणेति** । अत्रापि चेतनं प्रतीत्यनुवर्तते । तत्पदप्रयोजनञ्च पूर्ववदेव भवति । अस्याश्चापृथक्सिद्धेः पूर्वोक्तं सम्बन्धत्रयमुपपादकमिति द्योतयितुं **नियमेनेति** तृतीयाप्रयोगः । यस्य चेतनस्यापृथक्सिद्धविशेषणं यत् द्रव्यं भवति, तत्तस्य शरीरमित्यर्थः । एवञ्च शरीरलक्षणे यत्तच्छब्दघटनात् शरीरत्वस्य पितृपुत्र-

[அணுத்வம்] ஶரீரம் போனவிடமெல்லாம் ஜீவர்களுக்கு ஸுகாதி-கார்யங்கள் காண்கையாலும், அங்கே ஆத்மகமனத்தையும் கல்பிக்கும்போது கௌரவம்

---

भावादिवत्सप्रतियोगिकत्वं लभ्यत इति स्वशरीरं प्रति शरीरिणोऽपि जीवस्य ब्रह्म प्रति शरीरत्वमुपपद्यत इत्याह आनपिन्बु इति । सप्रतिसम्बन्धिकत्वे सिद्ध इत्यर्थः । अचित्तैप्पट्र=अचित्परिणामभूतस्वशरीरं प्रति । तथात्र शरीरत्वशरीरित्वयोरेकप्रतियोगिकयोरेवैकत्र समावेशविरोधः, न त्वन्यान्यप्रतियोगिकयोरपीति भावः । नन्वचेतनानामीश्वरशरीरत्वं किं साक्षात्, अथ परम्परया? आद्ये, "अनेन जीवेनात्मनानुप्रविश्य" इति जीवद्वारेश्वरस्याचेतनाधिष्ठानोक्तिविरोधः । द्वितीये च, नारायणवासुदेवादिशब्देषु साक्षाच्चेतनतुल्यमचेतनाधिष्ठानवचनव्याघातः इत्यत्राह **अचेतनद्रव्यमिति** । तथा चोभयप्रामाण्यायोभयथाप्यधिष्ठानाङ्गीकारात् सर्वोपपत्तिरिति हृदयम् । अत्र मतभेदतत्तारतम्यादिकं प्रसङ्गात् पूर्वमेव विवृतं न विस्मर्तव्यम् । अथाचेतनन्यायेन चेतनस्योभयथापीश्वरशरीरत्वं प्राप्तं प्रतिषेधति **चेतनन्** इति । अचेतनस्याधिष्ठेयत्वे जीवस्य द्वारत्वक्लृप्तौ, "अनेन जीवेन" इति प्रमाणसद्भाववत्, जीवस्याधिष्ठेयत्वे न पदार्थान्तरस्य द्वारताग्राहिप्रमाणमस्ति, न वा तादृशस्तर्क इत्यभिप्रायेणोक्तं, द्वारप्रसङ्गोऽपि नास्तीति ।

एवं जीवस्येश्वरशरीरत्वं स्थापयित्वाऽथ तस्याणुत्वमपि समर्थयिष्यन्, प्रथमं तद्विभुत्ववादिमतं, तदुक्तयुक्तिप्रमाणपुरस्सरमनुवदति **शरीरं पोनविडमिति** । सुखादेरात्मधर्मत्वेनान्यत्रापि सुखाद्युत्पत्तिस्थले तत्सत्त्वमावश्यकमित्येवंरीत्या तस्य सर्वगतत्वेन विभुत्वमवर्जनीयमिति तेषामाशयः । ननु तत्र तत्र शरीरवत् तत्प्रयुक्तात्मगमनस्यापि सिद्धौ तत एव शरीरस्येव तस्य विभुत्वमनपेक्षितमित्यत्राह **अङ्गे** इति । शरीरगमनस्थल इत्यर्थः । उभयसम्प्रतिपन्नशरीरगमनेनैव सर्वनिर्वाहे विप्रतिपन्नात्मगमनकल्पनं गौरवपराहतमित्याशयः । ननु कल्पनायां हि गौरवं दोषः । अहं गच्छामीति प्रतीतिस्वारस्यात्तु तत्रात्मगमनमपि

---

*நிற்பதாய், அவனிட்ட வழக்காய், அவனுக்கேயாக அமைந்ததாய் இருக்கிறதோ, அந்த விட்டுப் பிரியாத த்ரவியம் அவனுக்கு உடல் என்று சரீரத்திற்கு அடையாளம் கூற வேண்டியதாயிற்று, அதனால் அசேதனமான ஒரு உடலைப் பெற்றிருக்குமிவன் ஈசுவரனுக்கு உடலாயிருப்பது நமக்கு உடன்பாடே, அசேதனமான பொருள்களில் சில ஜீவனை இடையிட்டு ஈச்வரனுக்கு சரீரங்களாக இருக்கும், மற்றும் சில அவனை இடையிடாதே நேராக ஈசுவர சரீரங்களாய் நிற்கும், ஜீவன்—ஜீவனை இடையிட்டு ஈசுவரனுக்கு சரீரமென்று சொல்லவொண்ணாது*

*இங்கு, ஜீவன் ஒவ்வொருவனும் எங்கும் பரந்துள்ளான் என்று சிலர் சொல்லுவர் அதற்கு வருமாறு காரணமும் காட்டுவர், எப்படி எனில்— அவர்களுக்கு சரீரம் போனவிடமெங்கும் ஸுகதுக்கானுபவம் நேருகிறது. உடலுடன் அணுவான ஆத்மாவும் அங்கு செல்லுகிறது என்றால்— இருபொருள்கள் செல்லுகின்றன என்று நிரூபணம் செய்வது கடினமாக*

வருகையாலும், தூரங்களிலே இவர்களுடைய अदृष्टविशेषங்களாலே भोग्यविशेषங்கள் பிறக்கையாலும், योगिகளும் नित्यரும் मुक्तரும் ஒருக்காலே பல शरीरங்களை परिग्रहिக்கையாலும், 'नित्यः सर्वगतः स्थाणुः' इत्यादिप्रमाणங்களாலும், जीवனும் ईश्वरனைப் போலே विभुவாக வேண்டுகையால் अणु என்ற இடம் अन्यार्थமென்று சிலர் சொல்லுவர்கள் எங்கும் सुखादिकार्यங்கள் காண்கையும், यथाप्रमाणं शरीर-

सिद्धमेवेत्यत्राह **दूरङ्गळिले** इति । अत्रेदमाकूतं, देवदत्ते शरीरेण सह क्वचित्स्थिते सति ततो दूरतरेऽपि देशविशेषे तददृष्टाधीनभोगोदयदर्शनात्, तददृष्टस्य च तद्देशेन साक्षात्सम्बन्धाभावात्, अदृष्टवत्तदात्मसंयोगस्यैव तदुपनायकतया तदनुरोधेनात्मनां सर्वदेशव्यापित्वमावश्यकमिति । तदुदाहृतं **न्यायकुसुमाञ्जलौ**, "कारीरीजनितसंस्काराधारपुरुषसंयोगात् जलमुचां सञ्चरणजलक्षरणादिरूपा क्रिया" इति । ततश्चात्मनां विभुत्वसिद्धौ अहं गच्छामीत्यादेः श्वेतं गच्छतीत्यादेरेव विशेषणीभूतदेहादिमात्रगमन एव तात्पर्यमवसेयमिति । सिद्धान्तिनापि सम्मन्तव्यं निदर्शनं दर्शयति **योगिगळु**मिति । सौभर्यादय इत्यर्थः । तैः कदाचित्कायव्यूहपरिग्रहात् आत्मनोऽणुत्वे तत्रैकमेव शरीरं सजीवम्, अन्यत्सर्वं निरात्मकमिति तत्र सुखदुःखादिभोगापलापप्रसङ्ग इति हृदयम् । मुक्तादीनां, 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतेर्नानाशरीरपरिग्रहः प्राप्तः । अविभुत्वेऽपि क्रमेण नानादेहपरिग्रहसम्भवादुक्तम् **ओरुक्काले** इति । इयं मध्यस्थोक्तिर्भाव्या ; आत्मविभुत्ववादिनैयायिकादिभिर्मुक्तस्याशरीरत्वांगीकारात्, नित्यस्य स्वरूपेणैवानङ्गीकाराच्च । एवमात्मनो विभुत्वे तर्कमुक्त्वा तदनुग्राह्यं प्रमाणमप्याह **नित्यस्सर्वगत** इति ।'....अचलोयं सनातनः' इति **गीता** । "तद्वत् जीवो नभोपि च (नभोपमः ?)" इति **रत्नपेटिको**दाहृतवचनान्तरम् । ब्रह्मवत् जीवोऽपि सर्वगत इति तदर्थः । नन्वत्राणुस्वरूपस्यापि जीवस्य धर्मभूतज्ञानद्वारा भवन्ती व्याप्तिरुच्यत इत्यत्राह **जीवनुमि**ति । तथाच जीवविभुत्वबोधकवचनानामान्यपर्ये परमात्मन्यपि तेषां वचनानां तत्स्यादिति प्रतिबन्दिरत्राभिप्रेयते । ननु, "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादिजीवाणुत्वबोधकवचनानां का गतिरित्यत्राह **अणु** इति । यथा ब्रह्मणि, "अणोरणीयान्" इत्यादिवाक्यानां आकाशवत्सूक्ष्मस्वरूपत्वे तात्पर्यम्, तथैवात्रापीति भावः । **शिलर्**=नैयायिकादयस्सांख्याश्च । **वरदविष्णुमिश्रैस्तु**, जीवस्य धर्मभूतज्ञानस्येव संकोचविकासयोगित्वमुक्तम् । एवं पूर्वपक्षं प्रदर्श्य श्रुतिबलाज्जीवस्याणुत्वं सिद्धान्तयिष्यन् परोक्तविभुत्वयुक्तीः क्रमेण खण्डयति **एङ्गु**मिति । शरीरगमनदेशे

---

இருக்கும், இவனிங்கு இருக்கும் போதே தூரதேசங்களில் இவனுடைய பாக்கியத்தால் பழம் முதலியன இவனுடைய மரங்களில் பழுக்கக் காண்கிறோம். புண்ணிய பாக்யம் உடைய இவனுத்மா அங்கு இருந்தால் தான் அது கட்டப்படும் யோகிகள் முதலானோர் பல சரீரங்கள் எடுத்து அவற்றினுள்ளே புகுந்து நிற்கிறார்கள், "நித்தியன்—எங்குமுளன்" என்று இவனை ஸ்ம்ருதிகள் வர்ணிக்கின்றன- ஆக இவற்றால் ஜீவனும் பரமாத்மாவைப் போல் ஸர்வவ்யாபியானவன். அவனை—"அணு" என்றும்

विशिष्टனை आत्माவினுடைய गमनத்தாலே கூடும். वचनसिद्धத்தில் कल्पनागौरवம் வாராது अदृष्टமாவது ईश्वरबुद्धिविशेषமாகையாலே दूरத்தில் भोग्यविशेषसृष्टिக்கு भोक्ताவின் सन्निधि வேண்டா योगिप्रभृतिகளுக்கு ஒரு शरीरத்தில் हृदयத்திலே आत्मस्वरूपமிருந்தாலும், एकशरीरத்தில் शिरः-पाणि-पादादिகளிற்போலே, शक्ति-विशेषविशिष्टज्ञानव्याप्तिविशेषத்தாலே ஒருக்காலே अनेकशरीराधिष्ठानம் கூடுமாகை

---

सर्वत्रेत्यर्थः । यथाप्रमाणमिति । "चन्द्रमसमेव ते सर्वे गच्छन्ति", "अटन्नपि महीं कृत्स्नाम्" इत्यादिश्रुतिस्मृतीः, अहं गच्छामीति स्वानुभवञ्चानुसृत्येत्यर्थः । उक्तं कल्पनागौरवमपि परिहरति वचनसिद्धत्तिलिति । केवलयुक्तिसिद्ध एव कल्पनागौरवं दोष इत्यर्थः । तदुक्तं न्यायसिद्धाञ्जने, "आत्मगमनमुपलम्भश्रुत्याद्यनुकूलम् । विभुत्वकल्पनं तु न तथेति लाघवमिच्छता तदेव फलितम्" इति । तदेव=लाघवम्; निस्सारतेति यावत् । दूरे भोग्यविशेषसृष्टिमप्यन्यथा निर्वहति अदृष्टमावदु इति । बुद्धिविशेषः=प्रीत्यप्रीतिरूपः । तथाच भोक्तृविशेषविषयकप्रसादादिरूपादृष्टवत्सर्वगतेश्वरसंयोगस्य तत्रतत्राक्षततया भोक्तुस्तस्य तत्रासन्निधानेपि भोग्यपदार्थोत्पत्तेर्न हानिरित्यर्थः । अथाणुभूतेनात्मना नानादेहपरिग्रहमपि समर्थयति योगिप्रभृतिगळुक्कु इति । अन्वयश्चास्याग्रे युगपत् अनेकशरीराधिष्ठानोपपत्त्येत्यनेन । प्रभृतिशब्देन नित्यमुक्तानां ग्रहणम् । एकशरीरत्तिलित्यादिः दृष्टान्तग्रन्थः । अत्र शिरःपाणिपादादिषु युगपदनेकाधिष्ठानोपपत्तिवदित्यग्रेतनमाकृष्य व्याख्येयम् । यद्यप्ययं दृष्टान्तस्सिद्धान्तिनामेव प्रसिद्धः । न त्वात्मविभुत्ववादिनां परेषाम् । तथापि, "हृदि ह्ययमात्मा",...."अभ्युपगमाद् हृदि हि" इत्यादिश्रुतिसूत्राभ्यां, अहमिति हृदयस्पर्शनपूर्वकस्वानुभवेन च सिद्धस्यास्यार्थस्य पूर्वपक्षिणाप्यनपोद्यत्वाभिप्रायेणैवमुक्तिरिति भावः । ज्ञानव्याप्तिमात्रस्य बहिरपि सर्वत्र सत्त्वेन भोगार्थाधिष्ठानानुपपादकत्वात् शक्तिविशेषविशिष्टेति

---

சுருதி சொல்லுகிறதே எனால்— அதற்கு—ஸூக்ஷ்மம் பொருள். அவன்—என்று கருத்து கொள்ளலாம் இத்யாதி. இதற்கு மறுமொழி கூறுகிறோம் ஜீவன் அணுவே இவனுடல் போகுமிடங்களிலெல்லாம் இவனும் போகிறான்—இப்படியே ப்ரமாண வசனங்கள் கூறுவதால் இதை நிரூபிப்பதில் ஏதும் கஷ்டமில்லை. இவன் போகாத இடங்களில் இவன் அனுபவிக்கப் பழங்கள் பழுப்பதற்கும் இவன் அங்கு இருக்க வேண்டியதில்லை. புண்யம் முதலியன ஈசுவரனுடைய உகப்பும் வெறுப்புமே. அவன் எங்கும் பரந்துள்ளதால் தூரத்திலும் இவனுக்காகப் பொருள்களைப் படைக்கிறான். யோகிகள் பல சரீரங்களை எடுத்துக் கொள்ளுமிடங்களிலும் ஜீவன் எல்லா சரீரங்களிலும் நுழைந்து நிற்கவில்லை. பின்னை? பழைய சரீரத்தில் ஹ்ருதயபாகத்தில் தான் இருக்கிறான். ஒருவித தபஸ் சக்தி யென்ற தனது ஸங்கல்பத்தினால் மற்ற தனது உடல்களை ஆட்டி வைக்கிறான். எப்படி போல எனில்—ஒரு சரீரத்திற்குள்ளேயே

யாலே अजागळस्तनकरस्वरूपव्याप्तியைக் கூறிக்க வேண்டுவதில்லை अन्यथा-

ज्ञानव्याप्तिविशेषणम्। न ज्ञानविशेषणम्। पूर्वदोषानतिवृत्तेः। **शक्तिविशेषः** ममेदमित्यभिमानविशेषः। कर्मणां प्रतिपुरुषं विचित्रतया कस्यचित् एकदेहमात्रे तादृशाभिमानसिद्धिः। अन्येषां तपश्शक्त्या देहेष्विति विभागः। अत्रेदं बोध्यम्—अङ्गीकृतेऽपि आत्मनो विभुत्वे देहसमपरिमाणत्वे वा करचरणादितत्प्रदेशेषु धर्मभूतज्ञानविषयीकाराभावे तत्तदवच्छेदेन सुखदुःखानुभवानुदयात्, तस्मिन्नवश्याभ्युपगन्तव्ये सति, आत्माणुत्वेऽपि तेनैव तदुपपत्त्या तद्विभुत्वाभ्युपगमो व्यर्थ इति। **ओरुकाले** इति। परकायप्रवेशे क्रमेण नानाशरीराधिष्ठानम्। कायव्यूहे तु युगपदिति भावः। ननु **श्रीरहस्यत्रयसारे** तत्त्वत्रयचिन्तनाधिकारे, "शरीरधारणं द्विविधम्। तत्सत्तामात्रप्रयोजकम् सुखदुःखोपभोगतदुपायानुष्ठानोपयुक्तञ्च" इति। तत्राद्यं सुषुप्त्यादिसर्वदशासाधारणं धर्मिस्वरूपसम्बन्धाधीनम्। द्वितीयं जाग्रत्स्वप्नयोः पूर्वोक्तादधिकं धर्मभूतज्ञानविषयीकाराधीनमित्युक्तम्। युक्तश्चैतत्। अन्यथा शरीरधारणस्यात्मस्वरूपसम्बन्धाधीनत्वविरहे शरीरस्यात्मानं प्रति आधेयत्वानुपपत्त्या शरीरलक्षणस्यैव हानापत्तेः। तथा च कायव्यूहे एकस्यैव शरीरस्य सात्मकतया तत्र तल्लक्षणोपपत्तावपि निरात्मकान्यशरीराणां तदनुपपत्तिस्स्यात्। तदर्थं सर्वत्रात्मस्वरूपव्याप्तिरेष्टव्येत्यत्राह **अजागळस्तनकरेति**। स्तनौ हि पातुरनुभवितुश्चालिङ्गनादिनार्हौ भवतः। अजाया गळे स्तनौ हि तथाविधोपयोगद्वयाभावात् व्यर्थाविति प्रकृतेऽपि जीवविभुत्वकल्पनं तथैवेति भावः। अत्रायमभिसन्धिः,—यद्यपि शरीरसत्ताप्रयोजकधारणं धर्मिस्वरूपसंबन्धाधीनमित्युक्तम्। तथापि तथोक्तेः, यावच्छरीरभावी सुषुप्त्यादावपि विद्यमानः इन्द्रियव्यापारमनपेक्ष्य केवलकर्माधीनो यो धर्मभूतज्ञानविषयताविशेषः, तदधीनत्व एव तात्पर्यमवसेयम्। **स्वरूपसम्बन्धाधीनं**= स्वरूपानुबन्धि—सुषुप्त्यादिसार्वकालिक—प्रयत्नत्वावस्थानापन्नधर्मभूतज्ञानविषयताधीनमित्यर्थात्। अन्यथा "अस्य सोम्य महतो वृक्षस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति, द्वितीयां जहाति अथ सा शुष्यति" इत्यादिना वृक्ष एव स्थितस्य जीवस्य तदेकदेशभूतशाखासु धर्मभूतज्ञानसंकोचविकासयोरेव तच्छोषणाशोषणप्रयोजकत्वकथनविरोधात्। **शोषणं**=शरीरस्य सत्ताहानिः। शोषणाशोषणयोः साक्षादात्मस्वरूपसम्बन्धाधीनत्वे तु, अणुभूतात्मापगमे वृक्षे सर्वशोषणं वैकृतस्स्यात्, अपरतः तदनपगमे सर्वपोषणं वा स्यात्। न त्वेकशाखायाश्शोषणं, अन्यस्या अशोषणमिति। द्वितीयं पतनप्रतिबन्धात्मकं पुरुषार्थतदुपायानुष्ठानार्थशरीरधारणं तु, प्रयत्नावस्थापन्नेन्द्रियव्यापाराधीनजाग्रदादिदशामात्रभाविधर्मभूतज्ञानविकासायत्तमिति पूर्वतोऽस्य भेदो बोध्यः। तथाच निरात्मकदेहस्यापि प्रथमनिर्दिष्टधर्मभूतज्ञानविशेषविषयत्वात् शरीरलक्षणाद्युपपत्तिरिति। नन्वन्तरत्वाधिकरणे भाष्ये, "यः प्राणेन

ஜீவன் இருந்தவிடத்திலிருந்து கொண்டே கால்முதல் தலைவரை ஆட்டி வைப்பதுபோல். ஆகையால் ஜீவன் எங்கும் தங்குகிறான் என்றதும் ஆட்டின் கழுத்தில் இரு ஸ்தனங்கள் தொங்குவது போல்—வீணே

सिद्धाणुत्वोत्क्रान्तिगत्यागतिकण्ठोक्तियாலே सर्वगतादिशब्दம் प्रकरणानुगुणமாக अनुप्रवेश-

प्राणिति" इति निरुपाधिकं सर्वप्राणिप्राणनकर्तृत्वं परमात्मन एव। प्रत्यगात्मनस्तु सुषुप्तौ प्राणनं प्रति कर्तृत्वायोगात्" इत्युक्तिविरुद्धतया अत्र सुषुप्तौ जीवस्वरूपसम्बन्धाधीनत्वं कथं शरीरसत्तायामुच्यते? तादृशत्वस्यैव प्राणनकर्तृत्वात्मकत्वादिति चेन्न; शरीरधर्मस्य प्राणनस्योच्छ्वासनिश्वासादिकर्तृत्वात्मकतया तत्कर्तृतात्मकप्राणयितृत्वस्य परमात्मनिष्ठत्वेऽपि, कालसम्बन्धात्मकसत्तालक्षणशरीरधर्मभूतप्राणनप्रयोजकत्वस्य जीवस्वरूपनिष्ठत्वे विरोधाभावात्। ननु निरात्मकशरीरेषु आत्मस्वरूपसम्बन्धविरहे कथं तेषु सौषुप्तिकस्वरूपसुखार्थप्रवृत्तिर्घटते। सुषुप्तौ स्वरूपसुखस्यैवानुभाव्यत्वात्। विकसितधर्मभूतज्ञानस्य च तदा तत्राभावेन सुखस्वरूपतदनुभवार्थप्रवृत्तेरप्ययोगादिति चेत्—मैवम्। जाग्रदवस्थाभाविशरीरादिप्रेरणायासजनितदुःखशान्त्यर्थमेव तदा तत्र प्रवृत्त्युपपत्तेः। न च, "स्वापे सुखत्वाभिज्ञानात् तद्विच्छेदे च रोषतः। तदर्थमन्यत्यागाच्च श्रुतिस्मृतिशतैरपि" इत्यादिना सुषुप्तौ सुखार्थप्रवृत्तिकथनं विरुध्येतेति वाच्यम्; तस्य सात्मकदेहविषयत्वात्। तथा च कायव्यूहस्थले धर्मभूतज्ञानव्याप्त्यैव सर्वनिर्वाहे स्वरूपविभुत्वक्लृप्तिर्व्यर्थेति। नन्वेवमपि निरात्मकदेहेषु अहम्बुद्ध्यवच्छेदकत्वं न स्यात्। धर्मभूतज्ञानप्रसरणात्तद्भवतीति चेत्, घटादिष्वपि तत्प्रसङ्गः; तस्य सर्वत्राविशेषादिति चेन्न—आत्मनो देहैकदेशस्थितौ तत्र करचरणादिष्विव देहान्तरेष्वपि एकाहम्बुद्ध्यवच्छेदकत्वोपपत्तेर्घटादिवैलक्षण्यात्।

एवं जीवस्याणुत्वे बाधकयुक्तिपरिहारात् साधकयुक्त्या च स्थिरीकृते सति, तद्बलेन विभुत्ववचनस्य निर्वाहमाह **अनन्यथासिद्धे**ति। इदं **कण्ठोक्ती**ति पदञ्चाणुत्वादिपदेषु प्रत्येकं, अनन्यथासिद्धाणुत्वकण्ठोक्तीति रीत्यान्वेति। जीवस्याणुत्वं साक्षादेव श्रूयते, "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादौ। न चेयं श्रुतिः ईश्वराणुत्वश्रुतिवत् सौक्ष्म्यादिपरतया नेतुं शक्या। "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयः", "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादिनाऽणुसदृशं किञ्चिद्वस्तूदाहृत्याणुत्वप्रतिपादनात् तत्रैव तात्पर्यस्य दृढीकरणात्। उत्क्रान्तिश्च, 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" इति श्रूयते। न चेयमपि विभोः शरीरगमनादिना नेया, शरीरदेशेभ्य इति शरीरापादानकगमनस्यैव तत्र प्रतीतेः। परिच्छिन्ने प्रदेशे स्थितस्य तं विहायोत्तरदेशसंयोगानुकूलव्यापार उत्क्रान्तिः। सामान्यतः पूर्वदेशात् उत्तरदेशसंयोगहेतुव्यापारो गतिः। अत्रापि पूर्वदेशत्यागसद्भावेऽपि तदप्रतीत्या उत्क्रान्तितो वैलक्षण्यम्। सा च गतिः, "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति श्रूयते। आगतिश्च गतिवैपरीत्येनोत्तरदेशात् पूर्वदेशसंयोगानुकूलव्यापारः तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इत्यादौ श्रुता। **सर्वगतादिशब्दमि**ति। "नित्यस्सर्वगतस्स्थाणुः, क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा, लोके सर्वमावृत्य तिष्ठति"

ஆக ஜீவன் அணுவென்றும், மேலே கிளம்பி மேலுலகம் செல்லுகிறுன என்றும் வருகிறுன் போகிறுன் என்றும் சுருதி திட்டவட்டமாகக் கூறுவதால் அவனை முன்பு—எங்கும் வியாபகன்—என்று கூறிய

योग्यत्वादिகளைச் சொல்லுகிறதென்னலாம்.

जीவன இப்படி विभुवன்றிக்கே ஒழிந்தாலும் 'स्थूलोऽहम्', 'पादे मे वेदना' इत्यादिप्रतीतिக்கு अनुगुणமாக देहपरिमाणனாய் அவ்வோ देहங்களுக்கு ஈடாகச் சிறுப்பது பெருப்பதாகிறான் என்கிற जैनपक्षமும் இப்ப்ரகாரத்தாலே निरस्तம் 'स्थूलोऽहम्' என்றது 'नीलोऽहम्' என்னுமா போலே देहात्मभ्रममूलம் पादादिகளில் वेदनादिव्यपदेशமும் ज्ञानव्याप्तिविशेषத்தாலே கூடும் இங்ஙன் கொள்ளாத

---

इत्यादौ प्रकरणस्य जीवविभुत्वे तात्पर्यानिश्चयात्, प्रमाणान्तरानुसारेणैकैकस्यापि जीवस्य सर्वत्रानुप्रवेशयोग्यत्वादिकमेव तत्र विवक्षितमित्यर्थः। योग्यत्वादीति आदिना अग्निर्यथैको भुवनं प्रविष्टः, वायुस्सर्वत्रगो महान्” इत्यादौ अग्न्यादेरिव जीवजातीयस्य सर्वव्याप्तत्वं संगृह्यते। एवमियता प्रबन्धेनात्मविभुत्वपक्षं परिहृत्य जैनसम्मतं देहसमपरिमाणत्वपक्षमपि प्रत्याह जीवनिति। विभुवन्रिक्के योळिन्दालुमित्यनेन उक्तासु अणुत्वसाधकविभुत्वबाधकयुक्तिषु विभुत्वबाधकयुक्तिमात्रस्य तत्सम्मतत्वं अणुत्वसाधकयुक्तेः कथञ्चिदन्यथानिर्वाह्यत्वञ्च द्योत्यते। इत्यादिप्रतीतीत्यादिना, “कृशोऽहम्”, “शिरसि मे सुखम्” इत्यादिप्रतीतीनां सङ्ग्रहः। वक्ष्यमाणसङ्कोचप्रदर्शनाय, कृशोऽहमिति प्रतीतेः, देहसमपरिमाणत्वसिद्धये, “शिरसि मे सुखम्” इति प्रतीतेश्चात्रावश्यं क्रोडीकार्यत्वात्। ततश्च जीवस्य शरीरे शिरःप्रभृतिपादपर्यन्तव्याप्तित्वसिद्ध्या देहसमपरिमाणत्वम्, तत्तत्स्थूलकृशदेहप्रवेशेन सङ्कोचविकासशीलत्वञ्च लभ्यत इति तदभिमानः। देहपरिमाण इति बहुव्रीहिः। देहगतस्थौल्यादिपरिमाणसदृशपरिमाणवानित्यर्थः। नन्वात्मनः कथं कार्श्यं स्थौल्यं च स्वाभाविकं परिमाणं भवितुमर्हति? परस्परविरोधादिति चेत् तत्राह अव्वोदेहङ्ङळुक्कीडाग इति। तथाच यथा देहस्य तदुभयं कालभेदादिनोपपद्यते संकोचविकासशक्तिमत्त्वात्, तथैवात्मनोऽपि तत्सर्वमुपपद्यत इति भावः। इप्प्रकारत्ताले=पूर्वोक्तानन्यथासिद्धाणुत्वादिश्रुतिबलेन। तर्हि स्थूलोऽहमिति किमुच्यते, तत्राह स्थूलोऽहमिति। न हि नीलोऽहमिति प्रतीतिबलात् आत्मनि नीलत्वादिकमपि त्वयेष्यते। ततश्च तत्र नीलदेहाभेदभ्रममूलत्वादिवत् भ्रममूलकत्वेन न प्रकृतेऽपि स्वार्थसाधकत्वमिति भावः। भ्रमादीत्यादिनाऽपर्यवसानवृत्तिग्रहणम् एतत्पक्षे, नीलोऽहमित्यादीनां प्रमात्वेऽपि नीलादिशरीरक इत्यर्थस्यैव लाभात् तदानीमपि न प्रकृते स्वार्थसाधकत्वमिति तु भेदो बोध्यः। एवं, “पादे मे वेदना” इत्यादिप्रतीतिमपि निर्वहति पादादिगळिलिति। ज्ञानव्याप्तिविशेषत्ताले इति। अत्र, ज्ञानव्याप्तेः शरीरैकदेशपादादिष्वेव

---

*தற்கு—எங்கும் உள்ள சரீரங்களில் கர்மாவை யொட்டி புகமுடியும் என்றோ—அணுவான அநேக ஜீவன்கள் எங்கும் குழுமியுள்ளார்கள் என்றோ கருத்து கொள்ளவேணும்.*

*இங்கு ஜைனர் சொல்லுவர்—ஜீவன் ஸர்வ வியாபியாக வேண்டாம். அணுவும், 'நான் பருமன்', 'என் காலில் நோய்' என்றிப்படியுள்ள அனுபவங்களை யொட்டி உடலுக்கிடாக பெருப்பது சிறுப்பதாக உடலுக்கு ஏற்ற அளவுடையவன் ஆகட்டும் என்று. இதுவும் புதிதில்லை பழையபடியே கண்டனம் கண்டு கொள்வது, “நான் பருமன்” என்பது—நான் கறுப்பு—என்பது போலாம். அதாவது உடலுக்கும் உயிருக்கும்*

போது योगिகளுடைய नानादेहपरिग्रहदशैயில் आत्माவுக்கு विच्छेदादिदोषமுண்டாம். अशरीरदशैயில் आत्मपरिमाणத்துக்கு नियामकமுமில்லையாம்.

निर्विकारश्रुतिबलத்தாலே मुक्तिदशैயில் आनन्त्यश्रुति 'प्रदीपवदावेशः' என்கிறபடியே

---

सुखाद्यनुभवार्थत्वकथनात्, शरीरान्तरे तदकथनात् पूर्ववत्, शक्तिविशेषविशिष्टत्वानुकीर्तनम्। सुषुप्त्यवस्थशरीरसत्ताप्रयोजकज्ञानव्याप्तिव्यावृत्तये विशेषशब्दः। अथात्मनोऽणुत्वानङ्गीकारे, "एवञ्चात्मा कार्त्स्न्यम्" इति सूत्रोक्तरीत्या प्रबलदोषान्तरमाह **इङ्गन्कोल्लादपोदु** इति। तथाच तन्मतेऽपि योगमहिम्ना कायव्यूहपरिग्रहस्थले नानाकायसमपरिमाणनानाजीवाङ्गीकारायोगात् नानाकायसमपरिमाणैकजीवस्यैवाङ्गीकार्यतया बृहद्भूतस्य तस्य तत्तद्देहबहिःस्थले विच्छेदः तत्तद्देहेषु प्रवेशश्चेति सर्वमिदं क्लिष्टमनिष्टञ्च भवतामिति भावः। इदमुपलक्षणम्—अयोगिनामपि जीवानां उच्चावचगजपिपीलिकादिदेहप्रवेशे शरीराद्बहिर्विच्छेदादिः सङ्कोचविकासादिर्वा भवेदित्यपि बोध्यम्। ननु तपनातप-रत्नालोकानामिवावयवोपगमापगमावन्तरा आत्मनोऽपि सङ्कोचविकासावेष्येते। तथा तथाभूतस्यापि धर्मभूतज्ञानस्येव नित्यत्वञ्चाक्षतमित्यत्राह **अशरीरदशैयिलि**ति। अशरीरतादशायामित्यर्थः। मुक्ताविति यावत्। मुक्तेरशरीररूपत्वं तेषामपीष्टम्। स्फुटीभविष्यति तत् तदधिकारे। तन्मते आत्मनः स्वतोऽपरिमितत्वात्तत्परिमाणार्थमेव शरीराङ्गीकारात्तदा तत्परिमाणनियामकाभावप्रसङ्ग इति भावः। न चायमिष्टः प्रसङ्ग इति वाच्यम्; तथासति जीवे मुक्तिकालीनापरिमितत्वाकारस्यैव स्वाभाविकत्वप्रसङ्गेन संसारदशास्थपरिमाणस्यौपाधिकतालाभात् आत्मविभुत्ववादपर्यवसानापत्तेः। ननु "वालाग्रशतभागस्य" इत्यणुत्वेन श्रुतस्यात्मनः, तत्रैव, "स चानन्त्याय कल्पते" इति विभुत्वश्रवणात् सङ्कोचविकासावेवाङ्गीकर्तव्यावित्यत्राह **निर्विकारश्रुती**ति। "अच्छेद्योऽयमदाह्योऽयम्" इत्यादिनाऽऽत्मनो निर्विकारत्वप्रतिपादनात्, अणुत्वोत्क्रान्त्यादिकण्ठोक्त्या चानन्त्यश्रुतिर्धर्मभूतज्ञानव्याप्तिपरतयैव व्याख्येया। बद्धदशायां च ज्ञानस्य सङ्कोचोऽङ्ग्यकारि। अतः परिशेषात् मुक्तावेव तादृशी व्याप्तिर्व्यवतिष्ठत इति भावः। प्रदीपवदिति सूत्रार्थस्तु एकदेशे स्थितस्याप्यात्मनः सर्वशरीरेष्वपि चैतन्यद्वाराऽनुप्रवेशो नानुपपन्नः प्रदीपवत्=एकदेशस्थितस्यापि प्रदीपस्य यथा प्रभया देशान्तरेषु व्याप्तिः तद्वत्। तथा हि दर्शयति श्रुतिः—"वालाग्रशतभागस्य"

---

வாசியறியாமையால் வந்தது, 'என பாதத்தில் நோய் என்பது அங்கு இவன் அறிவு=உணர்ச்சி சென்று உணர்த்துகிறதாகையால் சரியாகிறது இவ்விதம் ஸித்தாந்தி கூறுவதை ஒத்துக்கொள்ளாது போனால்—யோகிகள் பல சரீரங்கள் எடுக்கும் போது சரீரங்களுக்கிடையே—ஆத்மாவின் தொடர்ச்சி அறுபட்டுவிடும் சரீரமே இல்லாத போது ஆத்மாவுக்கு எவ்வித அளவுமின்றிக்கே போகக் கூடும் அப்போது அளவிட்டுக் கூற சரீரமில்லையன்றோ? ஜீவன் "மாறுதலற்றவன்" என்று பரமாணவாக்யம் கூறுவதாலே—மோக்ஷதசையில் அவன் பெரியவனாகிறான் என்றதற்கு வேறு கருத்து அதாவது—

**धर्मव्याप्ति**யாலே **घटि**க்கும் **वृक्षशाखादि**களில் **जीव**ன் விட்ட **प्रदेश**ம் **शुष्क**மாம் என்றதுவும் **अदृष्टविशेषनियतप्राणवायुद्वाराधिगरित्या**த்தாலே **निर्वहि**க்கலாம் **स्वरूप**மொழிய **ज्ञान**மில்லாமையாலே **स्वरूपव्याप्ति**யை **ज्ञानव्याप्ति** என்று **सांख्यादि**-கள் சொல்லுவார்கள். இதுவும் **'अहं जानामि'** என்கிற **अबाधितप्रत्यय**த்தாலும்,

---

इत्यारभ्य "स चानन्त्याय कल्पते" इत्यन्तेनेति। ननु "अस्य सोम्य महतो वृक्षस्य" इत्याद्युक्तं शाखाशोषणादिकं जीवस्य सर्वदेहव्याप्तत्वेऽपि सङ्कोचविकासशालित्वादुपपद्यते। न तत्करीत्या ज्ञानव्याप्त्यादिकं तेन सिद्ध्यतीत्यत्राह **वृक्षशाखेति। एनूरदुवुमिदन्तं** श्रुत्यर्थानुवादः। प्राणवाय्वादीत्यादिना पूर्वोक्तज्ञानव्याप्तिस्वीकारः। अणुभूतेनापि जीवेन महतो वृक्षस्य शाखोपशाखासु अदृष्टविशेषमूलकप्राणवायुविशेषज्ञानसम्बन्धविशेषाद्युपाधिद्वाराधिष्ठितत्वाङ्गीकारात् क्वाचित्कदाचित्तदुपाधिविगमे तत्प्रदेशः शुष्यति। अन्यस्तु नेत्येतावतैवोपपत्तौ न प्रमाणान्तरविरुद्धं स्वरूपसंकोचादिकं कल्पनीयमित्यत्र ज्ञेयम्। नन्वस्य शाखाशोषणादिन्यायस्य मनुष्यकरचरणादिष्वपि तुल्यतया कथं तत्र सर्वावयवेषु प्राणसञ्चारादिः? "हृदि प्राणः" इति तस्य हृदयप्रदेशमात्रवृत्तित्वादिति चेन्न—अत्रत्यप्राणशब्दस्य प्राणवायुसामान्यपरत्वात्। वाद-मृगादिशब्दस्येव तस्यापि सामान्यविशेषोभयवाचित्वाङ्गीकारात्। अस्ति च प्राणः सामान्यतः स्थावरेष्वपि। तदुक्तम्, "न तु दृष्टान्तभावात्" इत्यत्र **भाष्ये**, "स्थावरेषु प्राणसद्भावेऽपि तस्य पञ्चधावस्थाय शरीरधारकत्वं परं नास्ति" इति।

ननु स्वरूपातिरिक्तज्ञानाभावात् ज्ञानव्याप्तिः स्वरूपव्याप्तावेव पर्यवस्यति। अतश्च नात्माणुरिति सांख्यादयोऽत्र प्रत्यवतिष्ठन्ते **स्वरूपमொழிய** इति। तथाच सांख्यसूत्रतद्भाष्यादिकं "निर्गुणत्वान्न चिद्धर्मा", "ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन। ज्ञानस्वरूप एवात्मा नित्यः पूर्णस्सदा शुचिः" इति। **सांख्यादीत्यादिना**द्वैतिपरिग्रहः। तदिदं निराह **इदुवुमिति। निरस्तमि**त्यग्रेतनेनान्वयः। **अबाधितप्रत्ययेति**। अहमर्थस्यात्मनो ज्ञानाश्रयत्वं हि तदर्थ इति भावः। नन्वहं जानामीत्यत्राहमर्थोऽन्तःकरणमेव। तस्याप्यध्यासकृतमेव तदाश्रयत्वम्। अतो नैतावतात्मनो ज्ञानाश्रयत्वसिद्धिरित्यत्राह **अहमर्थमे** इति। "हन्ताहमिमास्तिस्रो देवताः", "यस्मात्क्षरमतीतोहम्" इत्यादिश्रुतिस्मृतिषु तथैवावगमादिति भावः। अस्तु तर्हि जडरूपस्यात्मनो ज्ञानगुणकत्वं नैयायिकवदित्यत्राह **आत्माज्ञानस्वरूपेति**। "अत्रायं पुरुषस्स्वयंज्योतिः", "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिना

---

அவனுடைய அறிவு பெரியதாகிறது என்று கொள்ள வேணும் ஸூத்ரகாரரும்—விளக்கு போல் விரிகிறது—என்று இதையே சொன்னார். "மரத்தின் ஒரு கிளையை ஜீவன் விட்டபோது அது உலர்ந்து போகும்" என்றதற்கும்—ஏதோ ஒரு நியதியை ஒட்டிய ப்ராணவாயு கிளையில் பரவாவிடில் அது உலரும் என்றே அபிப்பிராயம்

ஸாங்கியர்கள்—ஜீவன் என்னும் பொருளே அறிவின் வடிவு அதாகு இன்னொரு அறிவு என்னும் தன்மை கிடையாது. ஆகையாலே அறிவு

**अहमर्थ**மே **आत्मा**வென்று **सर्वप्रमाण सिद्ध**மாகையாலும் **आत्मा ज्ञानस्वरूप**னுமாய் **ज्ञानगुणक**னுமாய் இருக்குமென்று சொல்லுகிற **श्रुतिस्मृति शत**ங்களாலும் **निरस्तम्. ज्ञानस्वरूप**னென்னும் **वाक्य**ங்களில் **अवधारणं जडांशव्युदासादि परम्.**

இப்படி **चेतनत्व**முண்டாலும் **अहन्त्वम्** கூடுமோ? **अहङ्कार**ம் **त्याज्य**மென றன்றோ **शास्त्र**ங்கள் சொல்லுவது. ஆகையால் **अहङ्काररूप**மான **अन्तःकरण**மே **अहमर्थ**மென்று சொல்லுவர்கள் **आत्मा प्रत्यग्रूप**னென்று **अध्यात्मनिरूपक**ர் எல்லாம்

---

तथा प्रतीतेरिति बोध्यम् । ननु, "विज्ञानघन एव" इत्यत्रैवकारेण ज्ञानगुणकत्वव्युदासात् नोक्तं युक्तमित्यत्राह **ज्ञानस्वरूपनि**ति । •न तु तत्र ज्ञानगुणकत्वांशव्युदासः, तस्यान्यत्र प्रमाणप्रतिपन्नतया व्युदसितुमशक्यत्वादिति हृदयम् । तदुक्तं **श्रुतप्रकाशिकायाम्**, "**घन**शब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः" इति । आत्मनोऽहमर्थत्वमुक्तमाक्षिपति **इप्पडि** इति । अहं जानामीत्यबाधित-प्रत्यक्षेणेत्यर्थः । उण्डानालुमित्यभ्युपगम्यवादः । अन्तःकरणाहमर्थत्ववादिसांख्यादिमते स्वयंप्रकाश-ज्ञानस्यान्तःकरणेन स्वात्मस्थतयाऽभिव्यंजनात् अहं जानामीत्यस्याध्यासरूपतया ज्ञानाश्रयत्वरूपस्य चेतनत्वस्य वस्तुतोऽभावात् । **अहन्त्वम्**=अहंशब्दवाच्यत्वम् । **शास्त्राणि**="अहङ्कार बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥" इत्यादीनि । अत्र त्याज्यतयोक्तस्याहङ्कारस्यै-वाहन्त्वरूपतयोपादेयस्यात्मनोऽतद्रूपत्वं प्राप्तमिति भावः । तर्ह्यहमर्थः क इत्यत्राह **आगैयालिति** । **अहङ्काररूपमान**=अहङ्काराख्यतत्त्वपरिणामभूतम् । एव अहंशब्दवाच्यत्वं, त्याज्यतयोक्ताहङ्कारः, तन्नामा तत्त्वविशेषश्चेति एतत्त्रितयस्यैकत्वाभिमानेन प्राप्तं पूर्वपक्षमेतम्, तेषां परस्परं भेदप्रदर्शनेन निराकरोति **आत्मा प्रत्यगि**ति । प्रत्यक्त्वं स्वस्मै स्वयंभासमानत्वमित्युक्तं पूर्वमेव । एतादृशस्य च तस्य

---

*பரவுகிறது—என்றதற்கு ஆத்மா பரவுகிறான் என்றே பொருள் எனக் கூறுவர். அது அங்ஙனன்று நான் அறிகிறேன் என்ற ஸர்வ உலகாநுபவத்தினால் நான் என்னும் ஆத்மாவும் அறிவும் வேறு வேறு தன்மையாகிறது. ஆத்மா தானும் அறிவுவடிவாய் அறிவு என்னும் தன்மையதாய் இருக்கிறது என்று பலபல ச்ருதிகள் பேசுகின்றன "ஜீவன் முழுவதும் ஜ்ஞானக் கட்டியாகவே இருக்கிறான்" என்ற இடத்தில—ஏ—என்றும் தேற்றம் ஜடாம்சக் கலப்பு துளியும் கிடையாது என்று சொல்ல வந்தது சரி போகட்டும் ஆத்மா அறிவுடையனே ஆயினும்—அஹம் என்னும் பதத்திற்குப் பொருளாவானோ? அஹம்—நான் என்று அஹம்பாவம் கூடாதென்றல்லவோ சாஸ்திரம் கூறும் ஆகையால், அஹங்காரமென்றும், அந்தக்கரணம் என்றும் கூறப்படும் உள்மனமே அஹம் என்ற சொல்லின் பொருள் என்று ஸாங்கியர் சொல்லுவர் இது சரியன்று. வேதாந்திகள் அனைவரும் ஆத்மாவை—தனக்கே தான் தோன்றும் பொருள்—*

*இசைகையாலும்* **अहमर्थ***மல்லாததற்கு* **प्रत्यक्त्वं** *கூடாமையாலும்* **अहङ्कारत्याग-वचनं देहात्मभ्रम-गर्वादिपरित्यागपर***மாகையாலும்* **तत्त्वविशेष***த்தில்* **अहङ्कारशब्द***ம்* **अहमर्थ***மல்லாததிலே* **अहम्बुद्धि***யை* **जनि***ப்பிக்கையாலே* **प्रयुक्त***மாகிறதாகை யாலும்* **'ममेदं'** *என்று* **इदङ्कारगोचर***மான* **शरीर***த்திற் காட்டில்* **अहम्बुद्धि***யாலே*

---

वैशेषिकादिभिर्वक्ष्यमाणरीत्याऽऽत्मन्यनङ्गीकारात् सर्वसिद्धान्तीत्यनुक्त्वा अध्यात्मनिरूपकेत्युक्तिः। आत्मविषय-कशास्त्रकारैरित्यर्थः। अहन्त्वानङ्गीकर्तृभिरपि अद्वैतिभिः आत्मनि प्रत्यक्त्वाङ्गीकारादेवमुक्तिः। अस्तु तत्र तदङ्गीकारः। तावताऽहन्त्वस्य किमायातमित्यत्राह **अहमर्थमल्लाददर्कु** इति। "अहमर्थो न चेत् आत्मा प्रत्यक्त्वं नात्मनो भवेत्" इति **भाष्यमि**हाभिप्रेतम्। इदंशब्दवाच्यप्रपञ्चस्य पराक्त्वेन ततो व्यावृत्तं प्रत्यक्त्वमहंबुद्धिबोध्य एव पर्यवस्यतीति तदभावे तदभाव इत्याशयः। अथाहङ्कारत्याग-वचनगतिमाह **अहङ्कारत्यागवचन**मिति। अयं भावः—अहङ्कारशब्दस्य त्रिष्वर्थेषु प्रयोगो दृष्टचरः। "अथातोऽहङ्कारादेशः" इत्यादौ अहङ्क्रियत इत्यहङ्कारो नामाऽऽत्मा। तस्यादेशः=अहंशब्दघटनेनो-पदेशः। स न त्यक्तुं शक्यः। तथासति आत्मनाशस्यैव पुरुषार्थत्वापत्तेः। "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इत्याद्युक्तो महत्तत्त्वकार्यभूतोप्यहङ्कारोऽस्ति कश्चित्। तस्याप्याप्रळयस्थायिन आमुक्ति अस्मदादिभिस्सम्बद्धस्य न त्यक्तुं शक्यता। ततश्च परिशेषादेवमेव वक्तव्यम्—"आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज।.. .अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः" इत्यादि**विष्णुपुराणोक्त-**देहात्मभ्रमो वा, "गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः"- इत्युक्तः उत्कृष्टजनावमानहेतुगर्वो वाऽत्र त्यक्तव्यतयोक्त इति नात्मनि त्वदुक्तरीत्याहन्त्वत्याग इति। एतेनात्राहङ्कारशब्दस्य गर्वपरत्वे **गीतायां** उपरितनदर्पशब्देन पौनरुक्त्यमिति शङ्का परास्ता। यत्राहङ्कारशब्दमात्रस्य श्रवणम्, तत्र स्थले एवंनिर्वाह-सम्भवादिति। **तत्त्वविशेषेऽहङ्कारशब्दप्रयोगं निर्वहति तत्त्वविशेषत्तिलिति**। तथा चानहमि=अहमर्थ-भिन्ने देहे अहंबुद्धिकरणत्वात् तत्त्वविशेषे स शब्दः च्विप्रत्ययान्ततया प्रयुज्यत इति भावः। "अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते" इत्युत्तरार्धमभिप्रयन् देहादिव्यावृत्ततयाऽऽत्मन एवाहंशब्दवाच्यतेति स्थापयति **ममेदमिति**। ममेदं गृहमित्यादौ गृहादिव, ममेदं शरीरमित्यादावपि शरीरात् तदेकदेशान्तः-करणाच्चाहंशब्दवाच्यतयाऽऽत्मा विविच्यत इत्यर्थः। पूर्वमेव सूचितं वैशेषिकादीनामन्यथाङ्गीकारं दर्शयन्त

---

*அதாவது—ப்ரத்யக் என்பர். அஹம்—நான்—என்று தோன்றுத பொருளுக்கு எப்படி அந்த ப்ரத்யக்பதார்த்தத் தன்மை வரும்? அஹங்காரம் கூடா தென்றால் கர்வம் கூடாதென்று தான் கருத்து அநதக்கரணம் என்னும் உள் மனதை அல்லது-தத்துவாந்தரத்தை அஹங்காரமென்று பேரிட்டமைப்பதற் குக் காரணம்-அஹம் என்ற ஆத்மாவல்லாத தேஹத்தில் மதிகேடர்களுக்கு அஹம்—ஆத்மா—என்ற அறிவைப் பிறப்பிக்கையே ஆகும். ஆத்மாவை அல்லாத வற்றிலிருந்து பிரித்தறிய—'நான்', 'இது' என்ற சொற்களைத் தானே கையாளு கிறார்கள் ஆகையால் அஹம் என்றது ஆதமாவைத் தான் ஆத்மாவின்*

आत्माவை பரிக்கையாலும் अहमर्थமே आत्मा ॥
இவன் धर्मभूतज्ञानத்தாலே தனக்குத் தான் प्रकाशिக்கையே प्रत्यक्त्वமென்று जडात्मवादिகள் சொல்லுவர்கள் श्रुतिस्मृतिबलத்தாலே स्वयंप्रकाशत्व-ज्ञानाश्रयत्वादिகள்(त्वங்கள்) सिद्धिக்கையாலே स्वरूप. धर्मங்கள் இரண்டாலும் தனக்குத

इवनिति । आत्मेत्यर्थः । तनक्कु त्तान् इत्यखण्डस्य स्वस्मा इत्येवार्थः । न तु स्वस्मै स्वयमिति । धर्मभूतज्ञानेनेति करणान्तरनिर्देशविरोधात् ; तन्मतविरोधाच्च । अयमाशय.—स्वयंप्रकाशं न किमपि वस्त्वस्ति । सर्वस्यापि ज्ञानेन परेण वेद्यतया जडत्वात् । इयांस्तु विशेषः—यत् आत्मा तथाभूतोपि स्वस्मै=स्वव्यवहारादिप्रयोजनाय भासते । इतराणि तु घटादीनि वस्तूनि परस्मै-परप्रयोजनायेति । अत एव प्रत्यक्-परागभेदोप्युपपद्यते । न पुनर्धर्मभूतज्ञाननिरपेक्षमात्मनः कदापि भानम् । सुषुप्तावपि तद्भानप्रसङ्गात् । मन्मते तु तदा धर्मभूतज्ञानोत्पादविरहान्नानुपपत्तिरिति । तदेतत् प्रतिक्षिपति श्रुतिस्मृतीति । "अत्रायं पुरुषः स्वयंज्योतिर्भवति, 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते', 'ज्ञानस्वरूपमत्यन्तनिर्मलं', 'तथा हेयगुणध्वंसादवबोधादयो गुणाः" इत्यादयोऽत्र विवक्षिताः । ज्ञानस्य द्रव्यत्वाङ्गीकारेण ज्ञानस्वरूपस्याप्यात्मनो ज्ञानगुणकत्वे न गुणे गुणानङ्गीकारसिद्धान्तविरोधः । सुषुप्तावप्यात्मानुभवो विद्यत एव । "एतावन्तं कालं सुखमहमस्वाप्सम्" इति सुप्तोत्थितस्य परामर्शात् । सुषुप्तिकाले तद्व्यवहाराभावस्तु तदानीं धर्मभूतज्ञानविकासाभावादप्युपपद्यते । एवमन्यदप्यूह्यमिति । स्वरूपधर्मङ्गळिरण्डालुमिति । अत्रायं विवेकः—

प्रत्यक्त्वैकत्वानुकूलत्वविशिष्टतयात्मनः स्वरूपेण सर्वदा भानम् । नित्यत्वाणुत्वादिधर्मविशिष्टतया तु तस्य सुषुप्तिभिन्नकाले धर्मभूतज्ञानेन भानमित्युक्तं पूर्वमेव । तत्र प्रत्यक्त्वं=अहन्त्वम् । अहं वा अनहं वा, एकोहम् अनेको वेत्यादिसंशयस्य कदाप्यनुदयात्तेषां त्रयाणां धर्माणां धर्मिणा सदा भानम् । अन्येषां निरूपितस्वरूपविशेषणधर्माणां तु संशयोपि कदाचिद्भवतीति धर्मभूतज्ञानेन भानम् । नन्वात्मस्वरूपेण सर्वदा स्वस्वरूपे आनुकूल्यभाने आत्महननायोद्बन्धनादौ प्रवृत्तिर्न स्यात् । हननहेतुभूतद्वेषादिघटितसामग्र्या अनुपपत्तेरिति चेन्न—अनुकूले आत्मनि अत्यन्तसुखरागेणैव तत्प्रतिबन्धकदुःखनिवारणपूर्वकं तत्संरक्षणीयत्वबुद्ध्योद्बन्धनादिप्रवृत्त्युपपत्तेः । अथवा आत्मनो मन्दानुकूल्यस्यैव सर्वदा धर्मिभास्यत्वाभ्युपगमेनाल्पानुकूलतया भातात्मस्वरूपापेक्षयाऽधिकतरसुखलाभलोभेनोद्बन्धनाद्यर्थप्रवृत्त्युपपत्तिः । तदुक्तं विरोधपरिहारे आचार्यैरेव, "मन्दमान आनुकूल्यम् निर्विकारस्वरूपप्रकाशत्ताले एप्पोदुम् तोत्ति तीव्रमान आनुकूल्यम् अनादिकर्ममूलभगवत्सङ्कल्पविशेषत्ताले तिरोहितमाय् पिन्बु योगादिदशैकळिले धर्मभूतज्ञानत्ताले अनुभाव्यमाकिरदु" इति ।

---

வடிவு ஜடமானது என்று சொல்லும் நையாயிகன் முதலியோர்—தனக்குத் தானே தோன்றுகையாகிற ப்ரத்யக்தன்மையானது ஜீவனுக்கு—தன்னுடைய அறிவு எனனும் தன்மையாலே ஏற்படுகிறது என்பர் இது சரியல்ல ச்ருதி ஸம்ருதிகளாலே ஜீவன் ஓர் அறிவின் வடிவினன், அறிவு என்னும் தன்மையும் பெற்றவன் என்று ஏற்படுவதால்—தன்னாலும் தனக்குத் தான்

ननु सुखमहमस्वाप्समिति सुप्तोत्थितपरामर्शेन ह्यात्मनोऽनुकूलस्वरूपत्वमुच्यते। तर्हि तत्तुल्यन्यायात् दुःखमहमस्वाप्समित्यपि प्रतीतेरात्मनो दुःखरूपतापि प्रसजतु। न च तादृशप्रतीतिर्नास्तीति वाच्यम्; लोके तथापि केषाञ्चित्प्रतीतिसम्भव(द्धा?)वात्। अत एव हि पातञ्जलयोगशास्त्रे अभावप्रत्ययालम्बना वृत्तिर्निद्रेति सूत्रे, 'सुखमहमस्वाप्सम्', 'प्रसन्नं मे मनो विशदीकरोति', 'दुःखमहमस्वाप्सम्', 'स्त्यानं मे मनो भ्रमत्यनवस्थितम्', 'गाढं मूढोऽहमस्वाप्सम्', 'गुरूणि मे गात्राणि क्लान्तं मे चित्तम्' इति व्यासभाष्यं दृश्यते इति चेत्—अत्रोच्यते—किमिह भवतां सिषाधयिषितम्? किमात्मनो दुःखरूपत्वम्, अथ सुषुप्तौ दुःखप्रतिभासमात्रम्। नाद्यः, "तदेतत् वित्ता प्रेयः" इत्यादिश्रुत्या 'सर्वेषामेव जन्तूनां नृप स्वात्मैव वल्लभः। इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि' इति तदुपबृंहणभूतभागवतवचनादिना चात्मनस्सुखमात्ररूपताया एव प्रमितत्वात्। अत एव न द्वितीयोऽपि। पूर्वोक्तप्रमाणबलेनात्मनस्सुखमयत्वस्यैव सम्प्रतिपन्नतया सुषुप्तौ तत्प्रतिभानेऽपि दुःखरूपतायास्तथा तदानीं प्रतिभानायोगात्। तर्हि दुःखमहमस्वाप्समिति परामर्शः कथं घटते? तद्रूपताया धर्मिभास्यत्वाभावे धर्मभूतज्ञानभास्यत्वस्यैव वक्तव्यतया सुषुप्तौ च तत्प्रसरणाभावादिति चेत्—न; अनायत्या दुःखमयस्वप्नानुभवस्यैव तथा परामर्शाङ्गीकारात्। उक्तसूत्रभाष्याद्यनुसारात्। तथाहि—योगश्चित्तवृत्तिनिरोध इत्युपक्रान्ता निरोद्धव्या वृत्तीः प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति पञ्चधा प्रविभज्य चतुर्थवृत्तिविषये इदमुच्यते अभावप्रत्ययालम्बना वृत्तिर्निद्रेति। यस्मिन्नावारके तमसि बाह्यवस्त्वभावः प्रतीयते, तत्तमोऽभावप्रत्ययः तद्विषयीकुर्वन्ती चित्तवृत्तिर्निद्रा। यदा सत्वसचिवं तमस्तत्राविरस्ति, तदा सुखमहमस्वाप्समिति परामर्शः। यदा तु रजसा सह तमः, तदा दुःखमहमस्वाप्समिति। यदा तु इमे अभिभूय केवलं तम एव तिष्ठति, तदा गाढं मूढोहमित्यादि। तथाचात्रोक्ताया निद्राया बाह्यविषयविरक्तचित्तवृत्तिविशेषत्वस्य स्फुटतया सुषुप्तौ च वृत्तिसामान्यविलयात् इयं निद्रा स्वप्न एव; न तु सुषुप्तिरिति। एतेनेदमप्युक्तं भवति—उदाहृतभाष्योक्तस्य सुखमहमस्वाप्समिति प्रत्यवमर्शस्यापि दुःखमहमस्वाप्समिति परामर्शतुल्यतया वृत्तिविशेषत्वावगमात् न स्वरूपसुखत्वसाधकतोपपद्यते। किन्त्वितोऽन्यस्यैवेति। ननु सुषुप्तेश्चित्तवृत्तिसामान्यविलयरूपत्वे समाधितुल्यतापत्त्या कृतं तदधिगमप्रयत्नेनेति चेत्, सत्यम्। तथापि तस्यास्तमःकार्यत्वेनास्मद्यत्नं विनाऽऽगमनवत् अचिरादेव गमनस्यापि सम्भवेन निरन्तरसमाधिसुखाभिलाषिणां हेयत्वात्। तदाह निद्राविषये वाचस्पतिः—एकाग्रतुल्यापि निद्रा तामसत्वेन सबीजनिर्बीजसमाधिद्वयप्रतिपक्षेति सापि निरोद्धव्यैवेति। सिद्धान्ते तु भगवद्व्रजनरूपसमाधेस्सुषुप्त्यादिवैलक्षण्यमतिस्फुटमिति न तत्र काचिदाशङ्काऽङ्कुरति। न चैवमत्र निद्रायास्स्वप्नरूपत्वे उत्तरत्र, "स्वप्ननिद्रालम्बनं वा" इति सूत्रेण तयोः पृथङ् निर्देशो विरुद्ध्येत इति वाच्यम्। गोबलीवर्दन्यायेन तत्र स्वप्नस्यार्धप्रबोधरूपतां निद्राया एवोक्तस्वप्नात्मकताञ्चाश्रित्य कथञ्चित्समाधेयत्वात्। इत्थमेव च निद्रास्वरूपं न्यायसिद्धाञ्जनेप्युपवर्णितम्। "निद्रा तर्हि कस्यावस्था? चिन्तालस्यक्लमादिभिस्समूर्च्छतो मनसः; ज्ञानस्यैव वा। सैव च सुषुप्त्यादिकारणम्। कथं तर्हि "अभावप्रत्यया" इत्यादिपा-

रमर्षं सूत्रम्? इत्थम् समाधिमधिगच्छतो वृत्त्यन्तरवन्निरोद्धव्यत्वाभिप्रायम्; निरोधपरत्वात् प्रकरणस्येत्ययमर्थ आत्मसिद्धावुक्तः इति। तत्र हि न निद्रा सर्वथा वृत्तिरूपा। अत्यन्तमन्तःकरणसमीलनात्। अथवा न वृत्त्यन्तरम्। किन्तु—इन्द्रियोपरमतारतम्यवशात्तदानीमविशदसुखदुःखानुभवसत्त्वात् प्रमाणरूपवृत्तिरेव। यद्वा पूर्वोक्तप्रमाणादिवृत्त्यभावकारणभूतप्रचिततमोगुणालम्बना विलक्षणा वृत्तिरेवेति त्रयः पक्षाः प्रत्यपादिषत। तत्र प्रथमः पक्ष एवं निर्वाह्यः—निद्राया अवृत्तित्वे तस्यास्सुषुप्तित्वमेवाभ्युपगन्तव्यम्। ततश्च पश्चात् सुखमहमिति प्रत्यवमर्शबलादात्मस्वरूपस्य तद्रूपत्वप्राप्तिवत् दुःखमहमिति प्रतीतिबलात् तस्य तद्रूपतापि प्राप्नुयादिति तु पूर्वः प्रश्नस्तथैव तिष्ठति। तत्रेत्थं समाधातव्यं भवति—निद्राया अवृत्तित्वपक्षे आत्मसिद्धावेव तादृशाः परामर्शाः जागरारम्भकालिकसुखदुःखमोहोपधायकमनःप्रसादस्थैर्यस्तैमित्यादिलिङ्गानुभवाधीनसुखाद्यनुमितिरूपा एवोक्ता इति न तैरात्मनो दुःखादिरूपत्वसिद्धिः। किन्तु विलक्षणेन, "सुखमहमस्वाप्सम्" इत्येवंविधेन सुखांशस्वरूपानुभवजनितस्मृतिस्वापकालांशानुमित्युभयरूपपरामर्शमात्रेण सुखरूपत्वमेव सिध्येत्। अत्र सुखरूपस्वात्मानुभवस्य संस्काराधानद्वारा स्मृतिजनकत्वं च न्यायसिद्धाञ्जनव्याख्यानयोः किञ्चिद्भेदेन समर्थितं तत्रैव द्रष्टव्यम्।

न चैवं सति आत्मस्वरूपानुभवस्य संस्कारानाधायकत्वं विस्तरश आत्मसिद्धौ प्रतिपादितं विरुद्ध्येतेति वाच्यम्; विषयभेदात्। आत्मस्वरूपमात्रविषयकस्मृतेरेव तत्रापादिततया तादृशानुभवसद्भावेपि तस्य संस्कारानाधायकत्वेन तादृशस्मृत्यसंभवस्यैव तत्र प्रदर्शितत्वात्। सुखमहमिति सुखत्वविशिष्टतया तु तदनुभवेन भवत्येव स्मृतिः। परन्तु अस्मिन् पक्षे द्वितीयपक्षे च यद्यपि अभावप्रत्ययालम्बना वृत्तिर्निद्रेति योगसूत्रविरोधः प्रतिभायात्; तस्यास्तत्रातिरिक्तवृत्तित्वावगमनात्—अथापि तत्सूत्रस्य प्रकरणानुरोधेन निरोधपरत्वात् न वृत्तित्वबोधने तात्पर्यमिति पूर्वोक्तरीत्या परिहर्तव्यं भवति।

एवं न वृत्त्यन्तरत्वमिति द्वितीयपक्षे सुखमहमस्वाप्समित्यादीनां निद्राकालिकसुखाद्यनुभवजनितस्मृतिरूपतया उक्तरीत्या नात्मस्वरूपे दुःखत्वादिसाधकत्वम्। तेषां धर्मभूतज्ञानदशापरामर्शरूपत्वात्। तथैवातिरिक्तवृत्तित्वपक्षे तृतीयेऽपि बोध्यम्। द्वितीयकल्पे तेषां परामर्शानां प्रमाणादिरूपवृत्तिजनितस्मृतिरूपत्वम्, तृतीयकल्पे विलक्षणवृत्तिजनिततद्रूपत्वमिति भिदा बोध्या। अत्र निद्राया केवलं प्रचिततमोगुणमयविलक्षणवृत्तिरूपत्वेऽपि पञ्चीकृतप्रपञ्चे मात्रया सत्त्वरजसोरप्यन्वयस्यावर्जनीयतया तदंशोद्भवाभिभवभेदेन सुखमहं दुःखमहं इत्यादिपरामर्शभेदा भवन्तीति च भाव्यम्।

सिद्धान्तबिन्दौ तु दुःखमहमित्यादेः किञ्चिदन्यथानिर्वाहः कृतः। तथाहि—ननु दुःखमहमिति कस्यचित्परामर्शात् सुषुप्तौ दुःखानुभवोप्यस्तु। मैवम्। तदानीं दुःखसामग्रीविरहेण तदुत्पत्त्ययोगात्। सुखस्य त्वात्मस्वरूपत्वेन नित्यत्वात्। शय्यादेरसमीचीनत्वेन च दुःखत्वोपचारात् दुःखमहमित्यादिप्रत्ययोपपत्तेः। अथवा अवस्थात्रयस्यापि परस्परमेळनेन त्रैविध्याङ्गीकारात् सुषुप्तावपि

दुःखानुभव उपपद्यते। तथाहि प्रमाज्ञानं जाग्रज्जाग्रत्, शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः, श्रमादिना स्तब्धीभावः जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्, स्वप्ने स्वप्नदर्शनं स्वप्नस्वप्नः, स्वप्नदृष्टस्य पुनरुत्थाय कथयितुमशक्यत्वे स्वप्नसुषुप्तिः। तथैव सुषुप्त्यवस्थायामपि सात्त्विकी सुखाकारा या वृत्तिः सा सुषुप्तिजाग्रत्। तदनन्तरमेवोक्तरीत्या सुखमहमित्यादिः परामर्शः। तत्रैव राजसी या वृत्तिः, सैव सुषुप्तिस्वप्नः। ततः पश्चादेव दुःखमित्यादिप्रत्यवमर्शः। तदैव च या तामसी वृत्तिः एषैव सुषुप्तिसुषुप्तिः। तदुत्तरकालमेव च गाढमूढोहमस्वाप्समिति प्रत्यय इति। तथाचात्र ग्रन्थे पक्षद्वयमुक्तं भवति। तयोः प्रथमपक्षे दुःखमित्यादिप्रतीतेर्गौणित्वेन नात्मनो दुःखरूपत्वसाधनक्षमत्वं तस्या इति तात्पर्यम्। द्वितीये **योगभाष्याद्युक्त**दिशा जाग्रदादीनां तिसृणां दशानां नवविधत्वं प्रतिपाद्य तत्राष्टमी या विधा सुषुप्तिस्वप्नरूपा, तस्यामेव दुःखमहमित्यादिपरामर्शोत्पत्त्यङ्गीकारात्, तदानीञ्च धर्मभूतज्ञानप्रसरणरूपवृत्तिसद्भावेन तस्यैव दुःखात्मकत्वं सिद्ध्यति, न तु धर्मिण आत्मन इति तात्पर्यम्। समस्तवृत्तिविरहस्तु नवम्यां सुषुप्तिसुषुप्तावेवेति सैव मुख्यसुषुप्तिशब्दार्थ इति। अत एव, "जाग्रत् स्वप्नश्च सुप्तञ्च गुणतो बुद्धिवृत्तयः" इति **भागवतै**कादशस्कन्धवचने सुप्तपदमपि सुषुप्तिजागरसुषुप्तिस्वप्नविषयं मन्तव्यम्। तयोरेव वृत्तिरूपत्वादिति।

आस्तामेतत्। पूर्वं 'आत्मनि मन्दमानुकूल्यं सर्वदा धर्मिभास्यं भवती'त्युक्तम्। तत्र किञ्चिद्विचार्यते—धर्मिभास्यं मन्दानुकूल्यं किं धर्मिणस्स्वाभाविकाकारः, अथ कर्माद्युपाधिकृतः? तत्र न प्रथमः; सर्वेषामपि वस्तूनां मन्दानुकूल्यप्रातिकूल्योदासीनत्वानां कर्मकृतत्वस्य **श्रीरहस्यत्रयसारे** तत्त्वत्रयचिन्तनाधिकारे स्पष्टमुक्तत्वात्। न च मुक्तावपि विना कर्माद्युपाधि कस्तूरिकाद्यपेक्षया लशुनादौ मन्दानुकूल्यादिकं प्रतीयत इत्येवानुभव इति वाच्यम्; तस्याद्ययावदसम्प्रतिपत्तेः। मुक्तादीन् ईश्वरं प्रति च सर्वस्य तीव्रानुकूलतयैव तुल्यं भानस्वीकारात्। अन्यथा मुक्तौ लशुनादौ मन्दानुकूल्यस्यापि भाने सर्वत्र भगवद्विभूतितया विकसितज्ञानेन भासमानतीव्रानुकूलतया साकं विरोधश्च प्रसजेत्। न ह्येकमेव वस्तु एकदैवैकपुरुषं प्रति मन्दं तीव्रञ्चानुकूलतया भासत इति युक्तमङ्गीकर्तुम्। अन्यथा **सप्तभङ्ग्या** किमपराद्धम्? न चैकेनैकदैव एकं वस्तु दर्शनस्पर्शनाभ्यां आनुकूल्यतारतम्यवदुपलभ्यत इति नेदमनिष्टमिति वाच्यम्; तत्रापि तत्तदिन्द्रियग्राह्यरूपस्पर्शादिष्वेवानुकूल्यतारतम्यप्रतीत्या विषयभेदेनाविरोधात्। नापि द्वितीयः; कर्मकृतस्य मुक्तिदशाव्यावृत्तस्य मन्दानुकूल्यस्य धर्मिभास्यत्वासंभवात्। यावत्स्वरूपभाविन एव धर्मस्य तेन भानाङ्गीकारात् यथा प्रत्यक्त्वादेरिति चेत्—

अत्र **रङ्गरामानुजमुनय** आहुः—कर्माद्युपाधिकृतस्यापि मुक्तिदशाव्यावृत्तस्य मन्दानुकूल्यस्य धर्मिभास्यत्वं तावदङ्गीकार्यम्। सुषुप्तौ तथा दर्शनात्, अस्वाप्सं सुखमित्यादौ। तदानीं धर्मभूतज्ञानस्यात्यन्तसङ्कोचात् परिशेषाद्धर्मिभास्यत्वस्यैव स्वीकरणीयत्वात्। न चात्मनि सुषुप्तौ तीव्रानुकूल्यं भासते। न वा तदानीं भासमानं मन्दानुकूल्यं आत्मनस्स्वाभाविकाकारः। यद्यपि मुक्तौ ग्राहकमात्म-

தான் தோற்றலாம், தோற்றுமிடத்தில் शरीरादिகளைப் போலே चक्षुरादि-

स्वरूपमस्ति, तथापि ग्राह्यस्य मन्दानुकूल्यस्यौपाधिकस्य तदानीं कर्माद्युपाधिविरहेण विरहात् न तदानीं तद्भानापत्तिः। यथा नित्यस्यापीश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्यापि न तदतीततादशायां तद्विषयकत्वम्; अन्यथा तस्य विसंवादितापत्तेरिति॥ तदेतत् रत्नपेटिकाकृतो न सहन्ते। तथा हि—आत्मनि सदा मन्दानुकूल्यं संसारदशायामेव भासते धर्मिस्वरूपेण, न तु मुक्तावित्यङ्गीकारे, धर्मिस्वरूपस्य संकोचविकासयोरापत्तिः। प्रत्युत विपरीततया तस्य संसारे विकासः मुक्तौ संकोच इत्यप्यापद्येत। न्यूनाधिकविषयसंयोगवियोगयोरेव तथारूपत्वात्। एतेनेश्वरज्ञानोदाहरणं प्रत्युक्तम्। धर्मिज्ञाने विकारप्रसङ्गं प्रति धर्मज्ञानस्यानुदाहरणीयत्वात्। तथात्वेपि दृष्टान्तासिद्धेश्च। यतः ईश्वरज्ञानं यस्मिन् वस्तुनि यत्कालवृत्तित्वं कदाचित् गृह्णाति तस्मिन् तत् सर्वदा गृह्णात्येव। तथा हि—यं घटं कदाचित् यत्कालवर्तित्वेनेश्वरो जानाति, तं तथैव कालत्रयेऽपि जानाति। न तु कदाचिन्न जानाति, अन्यथा वा जानाति। येन तस्याज्ञत्वान्यथाज्ञत्वयोः प्रसङ्गः। इयांस्तु विशेषः—तत्कालात्प्राक् तं भविष्यतीति, तत्काले च भवतीति तदनन्तरकालेऽभूदिति गृह्णन्त्या ईश्वरबुद्धेरुल्लेखभेदाः परं भवन्ति। सर्वथोल्लेखभेदेपि तत्कालवर्तनरूपधात्वर्थस्य न कदाचिदपि बुद्धौ विपर्यासः। तादृशोल्लेखभेदाश्च शब्दप्रयोगाधिकरणपूर्वापरकालभेदप्रयुक्ता इति। किञ्च मन्दानुकूल्यस्य मुक्तावभाने पूर्वोक्तविरोधपरिहारश्रीसूक्तिविरोधः, तत्र तस्य सर्वदा निर्विकारस्वरूपप्रकाश्यत्वस्वीकारादिति। अतश्चैवं सिद्धान्तयितव्यमत्र—आत्मस्वरूपस्य वैषयिकसुखापेक्षयोत्कृष्टसुखरूपत्वं हि वक्तव्यम्। एवञ्चानेनेतरसुखावधिकोत्कर्षः सुखत्वञ्चात्मस्वभाव इत्युक्तं भवति। तत्र सुखत्वमात्रं सर्वदा निर्विकारस्वरूपप्रकाश्यं भवति इत्येतत्तात्पर्येणैव पूर्वोक्ता सूक्तिः प्रवृत्ता। तत्रानुकूल्यस्य मान्द्यं नाम इतरसुखावधिकोत्कर्षाविशेषितत्वम्। तथा च मन्दानुकूल्यं सर्वदा भासत इत्यस्य तदविशेषितसुखरूपतामात्रं सर्वदा भासत इत्यर्थोपपत्तिः। वैषयिकसुखापेक्षयोत्कर्षस्तु सुखगततीव्रतारूपः प्रायो भगवत्सङ्कल्पेन तिरोहितस्सन् योगादिदशायामेव भासत इति न कोपि दोष इति॥ एतदुपरि किञ्चिदालोचयामः—धर्मिस्वरूपेण मन्दानुकूल्यं भासते इत्यत्र मन्दशब्दः उत्कर्षाविषयकज्ञानविषयार्थको वाच्यः। यथाश्रुते उत्कर्षाविशेषितत्वरूपमान्द्यस्य आनुकूल्येऽनन्वयात्। उत्कृष्टतया ज्ञातेऽज्ञाते वाऽऽत्मानुकूल्ये वस्तुवृत्त्योत्कर्षविशेषितत्वस्यैव सत्त्वात्। यथा लोहितवह्निं जानातीत्यत्र लोहितपदस्य लोहितारोपविषयोऽर्थः। अन्यथा तत्रापि तत्पदमुख्यार्थस्य लौहित्यविशिष्टत्वस्य वस्तुतः वह्नावनन्वयापत्तेः। तस्य भास्वरशुक्लत्वात्। विशदश्चैतत् द्वितीयायां यज्ञपत्युपाध्यायमतोपन्यासे व्युत्पत्तिवादे। ततश्चोक्तरीत्या धर्मिस्वरूपेण नित्यदा स्वस्मिन्नानुकूल्यमात्रं भासते, वैषयिकसुखावधिकोत्कर्षो न भासते इत्यत आनुकूल्यस्योत्कर्षाविषयकज्ञानविषयत्वरूपमान्द्योपपत्तिरिति इत्यलं पल्लवितेन।

नन्वात्मनः स्वरूपधर्माभ्यां गृह्यमाणत्वे—"अव्यक्तोऽयमचिन्त्योऽयम्" इत्यादौ तस्याव्यक्तत्वादिकथनं कथ घटते? व्यक्ततया गृह्यमाणत्वादित्यत्राह तोट्रुमिडत्तिलिति। प्रकाशमानत्वेऽपीत्यर्थः।

கஞக்கு **விஷய**மல்லாமையாலே **ஆத்மா**வை **அவ்யக்த**ன் என்கிறது **शरीरादि**களோடு **सजातीय**னென்று **चिन्ति**க்கவொண்ணாமையாலே **अचिन्त्य**னென்கிறது, சிலர் **ज्ञानविषय**த்துக்கு **स्वयंप्रकाशत्व**ம் கூடாதென்பர்கள் **ज्ञानविषय**மானாலும் **ज्ञानान्तर निरपेक्ष**மாகவும் **प्रकाशि**க்கையாலே **स्वयंप्रकाश**னென்னலாம் இது **धर्मभूतज्ञान**த் துக்கும் **तुल्य**ம் **ज्ञानविषय**மல்லாததொன்றை ஒரு **प्रमाण**த்தாலேயும் **स्वयंप्रकाश**

शरीरादिकमत्र व्यतिरेकमुखदृष्टान्तः। तथाच **मोक्षधर्म**वचनम्, "इन्द्रियैर्गृह्यते यद्यत् तत्तत् व्यक्तमिति स्थितिः। अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्" इति। अतीन्द्रियं=शास्त्रैकसमधिगम्यम्। आत्मनोपि तथात्वादव्यक्तत्वमिति भावः। एवमचिन्त्यत्वमपि व्याख्याति **शरीरादी**ति। तथाच तत्र **गीताभाष्यम्**, "स्वेतरवस्तुविसजातीयता तत्तत्स्वभावयुक्तत्वेन चिन्तयितुमप्यनर्ह" इति। ननु यद्यात्मा स्वरूपातिरिक्तेन धर्मभूतज्ञानेनापि भासेत, तर्हि तस्य घटादिवज्जडत्वापत्त्या स्वयंप्रकाशता न स्यात्। अनन्याधीनप्रकाशत्वस्यैव स्वयंप्रकाशत्वरूपत्वादित्याक्षिपति **शिलरि**ति। केचित् अद्वैत्यादय इत्यर्थः। तदुक्तं तन्मतानुवादे **भाष्यकारैः**, "तस्मात्सदनुभूतिरेव। सा च स्वतस्सिद्धा, अनुभूतित्वात्। अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः" इति। किञ्च स्वयंप्रकाशस्य ज्ञानान्तरविषयताकल्पनमपि व्यर्थम्। तदप्युक्तं तत्रैव, "किञ्चानुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्। सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना कदाचिदपि घटादिवदप्रकाशा दृश्यते। येन परायत्तप्रकाशाऽभ्युपगम्येत" इति। तदेतन्निराकरोति **ज्ञानविषयमानालुमि**ति। तथाच नित्यत्वाणुत्वादिना केनचिदाकारेण धर्मभूतज्ञानवेद्यत्वेऽपि प्रत्यक्त्वैकत्वादिनाऽऽकारान्तरेण तन्निरपेक्षप्रकाशत्वमप्यस्तीत्या आकारभेदेनोभयोपपत्त्या नानयोरन्योन्यप्रतिक्षेपकत्वम्। घटादेरिव नित्यत्वादिवैशिष्ट्यस्य सतोपि स्वयमप्रतीत्या तदंशविशिष्टात्मभाननिर्वाहाय तस्य परायत्तप्रकाशताऽप्यवश्याश्रयणीयेति भावः। एवमात्मनि सिद्धमाकारद्वयं धर्मभूतज्ञानेऽप्यतिदिशति **इदु धर्मभूते**ति। "घटमहं जानामि" इति त्रिपुटीसाक्षात्कारे मातृमेययोरिव मितेरपि भानात् तस्या

தோன்றககூடும், அறிவுத தன்மையாலும் கூடும் ஜீவன் எப்புலனுக்கும் தோன்றாமையாலே—அவனை அவ்யக்தமான பொருள் என்று கூறுவர் உடலுடன் அவனை ஓர் இனம் என்று எண்ண முடியாமையாலே—அசிந்தியன்—என்கிறது.

இங்கே சிலர்—வேறு ஒரு அறிவாலே அறிவிக்கபபடா நிற்கும் ஒன்றுககு சுயமே பிரகாசிக்கும் பெருமை கிடையாதென்பர் அதங்ஙனன்று ஒரு அறிவாலே அறிவிககபபடுகிற பொருளும்—ஒரு ஸமயத்தில அதை எதிர்ப்பார்க்காமலும தானே தோன்றலாம் இது அறிவு எனும் தன்மைக்கும் பொருந்தும் எவ்விதத்திலும் அறிவுககெட்டாததை ஒரு ப்ரமாணம் கொண்டும் சுயம் பிரகாசமென ஸாதிக்க முடியாது. அறிவின் வடிவினனை ஆத்மா தனக்கேயாகத் தான் தோன்றும் அவனுடைய அறிவெனும் தன்மையானது—ஏதோ சில உலகப்பொருள்களைத் தன் மஹிமை

**सिद्ध**மாகையாலும் **आत्मा ज्ञानस्वरूप**னுமாய் **ज्ञानगुणक**னுமாய் இருக்குமென்(ப்ப னெ)ன்று சொல்லுகிற **श्रुतिस्मृति शत**ங்களாலும் **निरस्तम्. ज्ञानस्वरूप**னென்னும் **वाक्य**ங்களில் **अवधारणम् जडांशव्युदासादिपरम्**.

இப்படி **चेतनत्व**முண்டானாலும் **अहन्त्वम्** கூடுமோ? **अहङ्कारम् त्याज्य** மென்றன்றோ **शास्त्र**ங்கள் சொல்லுவது. ஆகையால் **अहङ्काररूप**மான **अन्तःकरण**மே **अहमर्थ**மென்று சொல்லுவர்கள் **आत्मा प्रत्यग्रूप**னென்று **अध्यात्मनिरूपक**ர் எல்லாரும் இசைகையாலும் **अहमर्थ**மல்லாததற்கு **प्रत्यक्त्वं** கூடாமையாலும், **अहङ्कार-त्यागवचनं देहात्मभ्रम-गर्वादिपरित्यागपर**மாகையாலும், **तत्त्वविशेष**த்தில் **अहङ्कारशब्दम्** **अहमर्थ**மல்லாததிலே **अहम्बुद्धि**யை **जनि**ப்பிக்கையாலே **प्रयुक्त**மாகிறதாகையாலும், '**ममेदम्**' என்று **इदङ्कारगोचर**மான **शरीर**த்திற்காட்டில் **अहम्बुद्धि**யாலே **आत्मा**வைப் பிரிக்கையாலும் **अहमर्थ**மே **आत्मा**॥ இவன் **धर्मभूतज्ञान**த்தாலே தனக்குத் தான் **प्रकाशि**க்கையே **प्रत्यक्त्व**மென்று **जडात्मवादि**கள் சொல்லுவர்கள், **श्रुति-स्मृतिबल**த்தாலே **स्वयंप्रकाशत्व-ज्ञानाश्रयत्व**ங்கள் (**त्वादि**கள்) **सिद्धि**க்கையாலே **स्वरूप-धर्म**ங்கள் இரண்டாலும் தனக்குத் தான் தோற்(ன்)றலாம்.

தோற்றுமிடத்தில் **शरीरादि**களைப் போலே **चक्षुरादि**களுக்கு **विषय**மல்லாமையாலே **आत्मा**வை **अव्यक्त**ன் என்கிறது **शरीरादि**களோடு **सजातीय**னென்று **चिन्ति**க்கவொண்ணாமையாலே **अचिन्त्य**னென்கிறது. சிலர் **ज्ञानविषय**த்துக்கு **स्वयंप्रकाशत्व**ம் கூடாதென்பர்கள் **ज्ञानविषय**மானாலும் **ज्ञानान्तरनिरपेक्ष**மாகவும் **प्रकाशि**க்கையாலே **स्वयंप्रकाश**னென்னலாம் இது **धर्मभूतज्ञान**த்துக்கும் **तुल्यम्. ज्ञानविषय**மல்லாததொன்றை ஒரு **प्रमाण**த்தாலேயும் **स्वयंप्रकाश** மென்று **साधि**க்கவொண்ணாது **धर्मि** தனக்குத் தான்தோற்(ன்)றும் **धर्मभूतज्ञान**ம்

---

अपि विषयप्रकाशनवेलायां स्वाश्रयपुरुषाय स्वयम्प्रकाशत्वमुपेयम्। सा च वेला वर्तमानत्वावस्थैव। ततश्च तस्या एव मितेः कालान्तरे ज्ञानान्तरवेद्यत्वमप्यविरुद्धम्। स्वाश्रयायेत्युक्तथा वर्तमानतादशायामपि परं प्रति तस्या ज्ञानान्तरवेद्यत्वं सिद्ध्यति। तदप्युक्तं **श्रीभाष्ये**—अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्; स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति। अथ स्वप्रकाशस्य ज्ञानान्तरवेद्यत्वानङ्गीकारं स्वक्रियाव्याघातेन दूषयति **ज्ञानविषयमिति**। स्वयम्प्रकाशाया अप्यनुभूतेरन्यैस्तद्रूपत्वे आक्षिप्ते सति, अनुभूतिरनन्याधीनस्वधर्मे-त्याद्यनुमानेनैव तस्यास्तथात्वस्य त्वया साधनीयत्वेन ज्ञानान्तरवेद्यत्वमायातमेवेति तदनङ्गीकारस्त्वव्याहत इति भावः। यद्युभयोः स्वयम्प्रकाशत्वादिकं तुल्यमिष्यते, तर्ह्यनयोः को विशेषः? येन धर्मधर्मिभावसिद्धि-रित्यत्राह **धर्मी**ति। एतद्वाक्यार्थश्चानुपदमेव प्रदर्शितः। धर्मज्ञानस्य विषयप्रकाशनकाल एव स्वयंप्र-

---

யினால் தன்னை உடையவனை ஆத்மாவுக்குக் காட்டும்போது தானும் அவனுக்குத் தானே தோன்றும் வேறொன்றின் மஹிமை அது தோன்றக்

**विषयप्रकाशकाल**த்திலே**स्वाश्रय**த்துக்குதானே தோற்றும் இரண்டுக்கும் **स्वयंप्रकाश-त्व**மிசையாதே **ज्ञानान्तरविषय**மல்லாததொன்றும் **प्रकाशि**யாதென்னுமவர்கள், தாங்கள் இசைந்த **सर्वज्ञज्ञान**த்தையும், **ज्ञानलक्षणादिज्ञान**ங்களையும் மறந்தார்களா

काशतोक्तथा बद्धस्य च कदाचिदेव विषयप्रकाशात् तदीयधर्मज्ञानस्य सङ्कोचपूर्वकविकासस्सिद्ध्यति। धर्मिणस्तु सर्वदा स्वयम्प्रकाशत्वात् न संकोचादिरित्यपि भेदो बोध्यः। यथा प्रभाप्रभावतोस्तेजस्त्वसाम्येपि धर्मः प्रभा सङ्कुचति विकसति च; न धर्मीति। अथ स्वयंप्रकाशत्वमेवापलपतां मतमनूद्य खण्डयति **इरण्डुक्कुमि**ति। ज्ञानं वा अन्यजडपदार्थो वेति न कश्चिद्विशेषः। सर्वं ज्ञानान्तरस्यैव विषयः। घटादिकम् अयं घट इति ज्ञानेन विषयीक्रियते। तदेव ज्ञानं व्यवसाय इति व्यवह्रियते। तदपि ज्ञानं घटमहं जानामीत्यनुव्यवसायेन वेद्यत इति **वैशेषिकादयो** वदन्ति। अयं घट इति ज्ञानेन विषये घटे जनितां ज्ञाततां दृष्ट्वा तेन लिङ्गेनात्मनि ज्ञानोदयोऽनुमीयत इति **भाट्टा** आहुः। ततश्चात्र **एन्नुमवर्कळि**ति सामान्यत उभयेषामप्यनुवादः। **सर्वज्ञज्ञाने**ति। सर्वज्ञेश्वरनिष्ठसर्वविषयकज्ञानेत्यर्थः। अयं भावः—ईश्वरज्ञानमेकमेव सर्वविषयकमिति सर्वसम्प्रतिपन्नम्। असर्वविषयकत्वे ईश्वरस्यास्मत्तुल्यतापत्तेः। नानाज्ञानवत्वे नित्यज्ञानवत्तानुपपत्तेश्च। तथाच तदीयज्ञाने सर्वं विषय इति स्वयमपि विषयीभवति। एवञ्च तद्ज्ञानस्य सिद्धा स्वयम्प्रकाशता। तदुक्तं **न्यायसिद्धाञ्जने**, "स्वधीविशेषं सर्वज्ञोऽप्यध्यक्षयति वा न वा। आद्ये सिद्धा स्वतस्सिद्धिरन्यत्रासर्ववेदिता" इति॥ ननु सर्वं प्रमेयमित्यस्मदीयज्ञानेपि स्वस्य स्वविषयत्वमावश्यकमितीश्वरज्ञानपर्यन्तानुधावनं व्यर्थम्। तत्र सर्वत्वव्यापकप्रमेयत्वभाने तदन्तःपातिनस्स्वस्यापि भानावश्यंभावादिति चेन्न—ज्ञानस्वयंप्रकाशतावादिपक्षेषु तस्येदन्तया विशदावभासस्यैवेष्टत्वेन सर्वं प्रमेयमित्यादिषु तथाविधविषयताभावेन तत्प्रदर्शनायोगात्। ईश्वरस्य तु करतलामलकवद्विश्वं पश्यतो ज्ञान एव तत्सद्भावादिति। नन्वीश्वरोपि नैकेन ज्ञानेन सर्वं जनाति; किन्तु परस्परावगाहिभिरनित्यैर्नानाज्ञानैरेव। तथाच तस्य सर्वज्ञत्वमर्थसमाजाधीनं भवति। [ईश्वर एव स्वरूपेण नास्तीति मीमांसकपक्षो वाऽस्तु] इत्यत्राह **ज्ञानलक्षणादी**ति। सर्वव्यवहारहेतुर्ज्ञानं बुद्धिरिति बुद्धिलक्षणज्ञाने स्वस्यापि विषयत्वमेष्टव्यम्। व्यवहारहेतुत्वरूपानुगताकारोऽष्टव्यसर्वज्ञानविषयकत्वे तादृशस्वविषयताया अपि दुर्वारत्वात्। स्वस्यातादृशत्वे चाव्याप्त्यापत्तेः। तथाच **सर्वार्थसिद्धिः**,—"बुद्धिलक्षणधीर्हि लक्ष्यभूतकृत्स्नबुद्ध्यभिव्याप्तासाधारणधर्मविषया तद्योगेन स्वात्मानमपि विषयीकरोति" इति। अत्र,

காரணமன்று 'எப்பொருளும் எந்நாளும் வேறொரு அறிவின் பலத்தாலே தான் தோன்றும் சுயம்பிரகாசமான பொருளே கிடையாது' என்று நையாயிகமதஸ்தர்கள் கூறுவர் அவர்கள் தங்கள் மதத்தையே மறந்தனர் போலும். ஈசுவரன் தனது அறிவால் எல்லாவற்றையும் அறிகிறானெனில்— அவனது அறிவும் அந்த அவனது அறிவாலேயே அறியப்பட்டதாக முடிவதால் அறிவுக்கு சுயம்பிரகாசத்வம் ஏற்படுமல்லவா? மேலும்—அறிவுக்கு அடையாளம் கூறுமிடத்து—இவ்வாறு உள்ளதெல்லாம் அறிவெனப்படும்—

மத்தனை **ईश्वर**னுக்கு **एकोनसर्वज्ञ**த்வம் கொள்ளுவார்க்கு **श्रुतिस्मृति-स्वाभिमतविरोध**முண்டாம் அவனுக்கு **अन्योन्यग्राहक नेकज्ञा**னங்களைக் கல்ப்பார்க்கும், முடிவில் **स्वयंप्रकाशत्व**ம் **दुष्परिहर**ம். ஒரு **वस्तु**வை **ज्ञानविषय**மன்றென்பார்க்கு **स्ववचनविरो-**

---

"ज्ञानलक्षणादिज्ञान" इत्यादिशब्दो भिन्नक्रमः । ज्ञानलक्षणज्ञानादीति फलितम् । तथा चेहादिपदेन शब्दशब्दग्रहणम् । शब्द इति शब्द इति विग्रहे तस्य शब्दस्य शब्द एवार्थ इति ज्ञानलक्षणज्ञान इव स्वस्मिन् स्वविषयकत्वं भवतीति भावः । नन्वीश्वरः स्वज्ञानं विना अन्यत् सर्वं जानाति । एकोनसर्ववेदित्वाङ्गीकारादिति न ज्ञानस्वयंप्रकाशतासिद्धिरित्यत्राह **ईश्वरनुक्कु इति** । श्रुतिस्मृतयः= यस्सर्वज्ञ इत्याद्याः । **स्वाभिमतविरोधे**ति । स्वज्ञानमात्रविषयकाज्ञानं हीश्वरे भवदभिमतम् । स्वज्ञानाज्ञाने तद्बाधकत्वं, कस्यचित् तद्विषयत्वं, कस्यचित्तदविषयत्वमित्यादीनामपि तदनुबन्धिनां बहूनां विषयाणां तेन दुर्ग्रहतया नानाऽज्ञानं तस्य प्रसजेदित्याशयः ।

नन्वीश्वरस्यैकं ज्ञानं स्वव्यतिरिक्तसर्वविषयकम् । अपरञ्च ज्ञानं पूर्वज्ञानविषयकमिति परस्परग्राहकज्ञानद्वयेनैव सार्वज्ञ्यसिद्धिर्विना स्वयंप्रकाशतां भवतीति शङ्कायामुत्तरमाह **अवनुक्कु इति** । एकज्ञानस्य स्वव्यतिरिक्तसर्वविषयत्वे, ज्ञानान्तरनिष्ठस्वसामानाधिकरण्यस्यापि स्वव्यतिरिक्तत्वाविशेषात् स्वविषयत्वं वाच्यम् । ततश्च स्वमविषयीकुर्वता स्वेन स्वसामानाधिकरण्यस्यापि विषयीकर्तुमशक्यत्वात् अकामेनापि स्वस्य स्वविषयत्वं वक्तव्यमिति स्वयम्प्रकाशत्वमन्ततो दुष्परिहरमिति निगर्वः । न च ज्ञानान्तरनिष्ठं स्वसामानाधिकरण्यं न स्वेन वेद्यते ; अपितु तृतीयेन ज्ञानान्तरेणेति वाच्यम्—तदानीं तृतीयज्ञानसामानाधिकरण्यस्यापि ततोऽन्येन ग्राह्यतापत्त्या ईश्वरे बहुज्ञानकल्पनापातात् न ज्ञानद्वयमात्रेण निर्वाहः । अत एव मूले **अनेकज्ञाने**त्यनेकपदप्रयोगः । अथवा ईश्वरस्यान्योन्यग्राहकानेकज्ञानस्वीकारेपि अन्ततस्सर्वज्ञानक्रोडीकार एकेन ज्ञानेन आवश्यकः । अन्यथा स्वस्य सर्वज्ञत्वं स्वयमपि न जानातीत्यसर्वज्ञतुल्यताया दुर्वारत्वात् । तथाच स्वस्य स्वविषयत्वं दुर्वारमिति ज्ञानस्वयंप्रकाशतासिद्धिरिति भावः ॥ एवमात्मनां तद्धियाञ्च स्वयम्प्रकाशत्वं प्रसाध्य ज्ञानवेद्यत्वमपि स्थापयितुं एकात्मवादिनां मते आत्मनोऽवेद्यत्वोक्तिमपि दूषयति **ओरु वस्तुवै इति** । "इदं ज्ञानविषयो न" इत्याकारकज्ञानविषयत्वादिति

---

என்று சொல்லி அறிவிக்கும்போது உண்டான அறிவு, தன்னைத்தானே பிரகாசப்படுத்திக்கொள்ளுகிறதல்லவா ; நாங்கள்—ஈசுவரனின் அறிவு எல்லாவற்றையும் பிரகாசப்படுத்துகிறது என்னமாட்டோம். பின்னை ; தன்னை நீக்கி மற்றுள்ளவற்றை எல்லாம் வெளியிடுகிறது என்போமென்னில்—இது எல்லா ப்ரமாணங்கள், தன் மதம் இவைகளுக்கு முரணாகும் ஈசுவரனுக்கு ஒன்றை ஒன்று பிரகாசப்படுத்தும் பல அறிவுகள் இருக்கின்றன. எல்லாவற்றையும் ஓரறிவாலே அறிகிறான் என்பது இல்லை எனில்—அப்போதும்–ஈசுவரன் தன்னை எல்லாமறிந்தவனாக ஓரறிவாலே நினைக்கும் இடத்தில் அறிவின் சுயம்பிரகாச சக்தியை மறுக்கவொண்ணாது. இப்பொருளை அறியவே முடியாது என்று ஒருவன் சொல்லும் போது–அதை

धादिदोषம் வரும். இத்தாலே 'ज्ञानविषयமாகில் विकारादि दोषம் வரும்' என்கிற तर्कமும் व्याप्तिशून्यம் निर्विकार வஸ்துவையும் निर्विकारமென்கிற ज्ञानविषयமாக இசைய வேணுமிறே

आत्माவுக்கு जननमरणज्ञानाज्ञानादिदशैகளும், जीवர்களை ईश्वरன் सृष्टित्தான் என்கிற श्रुतियும் 'पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' 'वासुदेवे प्रलीयते' इत्यादिस्मृति वाक्यங்களுமுண்டாயிருக்க, जीवனை अविकार्यனென்றும் नित्यனென்றும் சொல்லுகிறபடி எங்ஙனே என்னில்—பிறப்பது இறப்பதாகிற शरीरத்தோடுண்டான संबन्धासंबन्धविशेषमात्रத்தாலே இவனுக்கு जननमरणங்கள் சொல்லுகிறது धर्मभूत-ज्ञानத்தினுடைய विकारமும் संकोचமுமே ज्ञानाज्ञानदशैகள் ஆகையால் ज्ञानदशैகளில்

---

भावः । आदिना, "येनाक्षरं पुरुषं वेद सत्यम्" इत्यादिश्रुतिविरोधोपि बोध्यः । आत्मनो ज्ञानविषयत्वे बाधकमुद्धरति इत्ताले इति । अनुभूतिरेव परमार्थः । सा च स्वतस्सिद्धत्वान्न वेद्या । अत एव निर्विकारा च । इतरत् सर्वं ज्ञेयत्वात् सविकारं मिथ्येति हि तन्मतम् । व्याप्तिशून्यमिति । तर्के आपाद्यापादकयोर्व्याप्तेरावश्यकत्वेन वक्ष्यमाणरीत्या ज्ञेयत्वेप्यविकारित्वोपपत्तेरिदमदूषणमेवेति भावः । ज्ञेयत्वेपि निर्विकारत्वं साधयति निर्विकारेति । अन्यथा तस्य निर्विकारत्वरूपसाध्यधर्माश्रयत्वे प्रमाणाभावान्न स्वाभिलषितसिद्धिरिति हृदयम् । नन्वात्मनां कथं निर्विकारत्वनित्यत्वादिकमुच्यते ; जननमरणादीनां विकाराणां तेषूपलम्भादित्याशङ्क्य समाधत्ते आत्मावुक्कु इति । अत्र जननमरणादिदशाचतुष्टय-योगोपि निर्विकारत्वे बाधकः । नित्यत्वे तु जननमरणरूपे द्वे दशे एवेति विभज्य बोध्यम् । श्रुतिः, "प्रजापतिः प्रजा असृजत", "तोयेन जीवान् व्यससर्ज भूम्याम्" इत्यादिः । पुरुषश्चेति । "प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी" इति पूर्वार्धम् । वासुदेव इति । "वासुदेवस्य यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन" इति पूर्वभागः । पिरप्पदिरप्पदु इत्यादिः समाधानग्रन्थः । "अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः" इत्युक्तरीत्या जननमरणवद्देहसंयोगवियोगावेवात्मनो जननमरणे, न तु स्वत इति न नित्यत्वानुपपत्तिरिति भावः । अत्र विशेषशब्दः प्रत्येकमन्वेति । शरीरसत्तानाशादिहेतुस-म्बन्धविशेषमाह । तेन परकायं प्रविष्टस्य जीवस्य न तमादाय जन्मादिव्यवहारप्रसङ्गः । अथ ज्ञाना-ज्ञानदशे निर्वहति धर्मभूतेति । तथाच तयोरपि जननमरणयोरिव साक्षादात्मस्वरूपगतत्वाभावात्

---

இவன் ஒருவாறு அறிகிறனாகையால்—இது முரண்பட்ட பேச்சாம் இதனாலே—ஒரு பொருள் அறிவுக்கெட்டினால் அது ஒருவித மாறுதலை அடைகிறது என்பதற்கு பிரமாணமில்லை. மாறுதலற்ற பொருளையும் "மாறுதலற்றது" என்று அறிகிறோமே? இங்கு ஓர்சங்கை—ஜீவனுக்கு பிறப்பு இறப்பு-மூப்பு அறிவு அறியாமை முதலிய மாறுபாடுகள் உலகப்ரஸித்தம், கடவுள் ஜீவனை படைத்தான் என்றது வேதம். அவன் இவனிடம் ஒன்றிவிட்டான் என்றது ஸ்ம்ருதிவசநம் இவ்விதமிருக்க ஜீவனை- மாறுதலற்ற நித்தியப்பொருள் என்பது எங்ஙன் கூடும் என்று. இதற்கு ஸமாதாநம்—

இவனுக்கு வரும் **सुखदुःखेच्छाद्वेषप्रयत्न**ங்களும் **धर्मभूतज्ञान**த்தினுடைய **अवस्था-विशेष**ங்கள் இப்படி **आत्मस्वरूप**த்தில் **घटादि**களில் போலே **अव्यवहित**மாக **नामान्तरभजनार्हविकार**ம் தட்டாமையாலே[**नित्य**] **निर्विकार**னென்னலாம். **द्रव्य**மாவது **उपादान**மாக வேண்டுமாகையாலே **आत्मपरमात्मा**க்களுக்கு **शरीरसंयोगादि विकार**ங்கள் **निषेध्य**ங்களன்று, **जीवविषयसृष्टिलयवाक्य**ங்கள் **विशिष्टवेष**த்தாலே நடக்கையால் இவனை **नित्य**னென்னக் குறையில்லை

---

न सविकारत्वादिप्रसक्तिरिति भावः। अत्र मूले क्वचिद्वाक्यान्तरदर्शनमपपाठः। उक्तार्थत्वादसङ्गतत्वाच्च। अथ धर्मभूतज्ञानस्यावस्थान्तराणि दर्शयति **आकैयाले** इति। धर्मभूतज्ञानस्यैव साक्षात्सविकारत्वादित्यर्थः। **ज्ञानदशा**=जाग्रदादिदशा। एतेन सुषुप्तौ सुखादिभानस्य धर्मिस्वरूपाधीनत्वसिद्ध्या धर्मभूतज्ञानदशात्वव्यावृत्तिः। एतत्तत्त्वं च प्रागेवाऽऽवेदितम्। आत्मनो निर्विकारत्वं निगमयति **इप्पडि** इति। घटादिर्व्यतिरेकदृष्टान्तः। परम्परया सत्त्वादुक्तं **अव्यवहिते**ति। आत्मन्यव्यवधानेन वायुसंयोगादीनामवस्थानां विद्यमानतयोक्ते **नामान्तरभजनार्हे**ति। यथा मृदि पिण्डत्वघटत्वाद्यवस्था नामान्तरं [रूपान्तरञ्च] भजन्ते, न तथेह वायुसंयोगादय इति, साक्षात्तद्वत्त्वेपि नात्मनां सविकारत्वमिति भावः। ननु निर्विकार इत्यादौ निरादिशब्दानां प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकतया साक्षाद्विकारविशेषाभावमात्रबोधकत्वेन सङ्कोचो विना नियामकं न शोभन इत्यत्र नियामकं दर्शयति **द्रव्यमि**ति। "बालो युवा जातः", "तदात्मानं स्वयमकुरुत" इत्यादौ निर्विकारयोरपि जीवपरयोरुपादानत्वप्रतीत्या तन्निर्वाहार्थं कथञ्चित्सविकारत्वमपि स्वीकर्तव्यमिति साक्षाद्विकाराश्रयशरीरसम्बन्धादिकं द्वारं तत्राभ्युपगम्यते। इयांस्तु विशेषः—ईश्वरस्योपादानतानिर्वाहार्थमेव शरीरसंबन्धोऽङ्गीक्रियते। जीवस्य तु कर्मफलभोगायापीति। ततश्चोक्तरीत्या निर्विकारशब्दशक्तिसङ्कोचो न्याय्य एवेति बोध्यम्। एवं जीवस्य सृज्यत्वादिश्रवणेऽपि नित्यत्वमक्षतमित्याह **जीवविषये**ति। **विशिष्टवेषे**ति। अपृथक्सिद्धिसम्बन्धवत्शरीरविशिष्टत्वेन रूपेणेत्यर्थः। तथाच विशेषणभूतशरीरादिगतास्सृष्ट्यादय आत्मनि विशेष्ये आरोप्यैव

---

கேண்மின்—பிறபபிறப்பு மூப்பு மூன்றும் உடலுக்கே உண்டு. அவ்வித உடலுடன் இவன் சுட்டுண்டு கிடபபதால் இவனையும், பிறந்தான், இறந்தான் என்று போல் சொல்லுவது முக்கியப்பொருளிலல்ல அறிவு, அறியாமை என்னும மாறுதல் இவனிடம் நேராக இல்லை, பின்னை, இவனுடைய தன்மையான ஜ்ஞானப்பொருளில் இருககிறன, இப்படியே இவனுக்கு வரும் ஸுகம் துக்கம் முதலிய மாறுதல்களும் இவனுடைய ஜ்ஞானப் பொருளில் இருப்பவையே ஆகையாலே-மண் பிண்டத்தில் குடம் முதலிய மாறுதல்கள் நேராக இருபபது போல், இவனிடம் பிறபபுமுதலிய மாறுதல்கள் நேராக இல்லாமையாலே—இவனை மாறுதலற்றவன் என்கிறது பிறப்பு முதலிய மாறுதலுககுட்பட்ட உடலோடு இவனுககு ஸம்பந்தமிருந்து அதனுல் ஒனறுவிடட முறையில் இவனுக்கும மாறுதல் வருவது வரவேற்கத் தககதே ஏனெனில்—திரவியங்கள் எல்லாம்—மாறும் காரணமாக இருக்க

**प्रत्यभिज्ञै**யாலே **जीव**னுடைய **स्थिरत्व**மும், **वीतरागजन्मादर्शन**த்தாலே **देहान्तरानुवृत्ति**யும், **शास्त्र**த்தாலே **सर्वकालानुवृत्ति**யும் **सिद्धि**க்கையாலே **सुषुप्त्यादि**களிலே **अहमर्थ**ம் அழியுமென்றும், **आशरीरस्थायि, आप्रलयस्थायि, आमोक्षस्थायि** என்றும்

व्यवह्रियन्त इति आत्मा नित्य एवेति भावः। नन्वात्मनो ज्ञानरूपत्वात् सुषुप्त्यादौ तस्य नाशो भवति। तथाच न नित्यत्वं तस्येत्यत्राह **प्रत्यभि**ज्ञेति। देहात्मवादिनस्तदितरात्मवादिनश्चेति सामान्यतो वादिद्वैधे स्थिते, पूर्वे चार्वाका भवन्ति। अनन्तरा अपि द्विविधा स्युः आत्मनित्यत्ववादिनस्तदनित्यत्ववादिनश्चेति। तत्र प्रथमे वेदान्तिनो वयम्। चरमे चत्वारः। तत्रैको ज्ञानात्मवादी **बौद्धः**। स तु [देहे स्थितेपि] आत्मनः क्षणशो भिदुरत्वमाह। ततश्च प्रथमं तन्मतं दूषयति **प्रत्यभि**ज्ञेति। **य** एवाहं सुषुप्तः स एवाहं प्रबुद्ध इति प्रत्यभिज्ञाप्रत्यक्षेण पूर्वापरकालयोरात्मानुवृत्तिलाभान्न सुषुप्तावप्यात्मनाशः। ननु सिद्ध्यतु नाम प्रत्यभिज्ञया सुषुप्तावप्यात्मानुवृत्तिः। तथापि तस्य प्राणेन्द्रियादिष्वन्यतमरूपस्य देहेन सह विनाशदर्शनेन न देहान्तरानुवृत्तिरिति वादिनं द्वितीयं चार्वाकैकदेशिनं प्राणाद्यात्मपक्षनिष्ठं निराकरोति **वीतरागे**ति। इदं न्यायसूत्रम्। सरागस्यैव जन्मदर्शनादित्यस्य व्यतिरेकोक्तिरियं दाढर्याय। ततश्चोत्तरजन्महेतुभूतो रागः पूर्वजन्मन्यावश्यक इति तयोरेकात्मानुवृत्तिरावश्यकीति नात्मनो देहावधित्वं युक्तियुक्तमिति भावः। अथाप्यात्मा आप्रळयं तिष्ठतु। ततः प्राक् सरागस्य जन्मपरम्परोपपत्तेः। तदनन्तरञ्च, "पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" इति तत्र लयो भविष्यति इति तृतीयं पौराणिकाभासपक्षम्, "न प्रेत्य संज्ञाऽस्ति" इति श्रवणात् प्रेत्यभावाख्यमोक्षान्तो जीवभावोऽस्त्विति चतुर्थं औपनिषदाभासपक्षञ्चैकोक्त्या निराकरोति **शास्त्रत्वाले** इति। "नित्यो नित्यानाम्" "न जायते म्रियते वा" इत्यादिशास्त्रबलेनात्मनो नित्यत्वसिद्ध्या पुरुषलयवचनस्याविभागेनावस्थानपरत्वात् प्रेत्य=मृत्वा, संज्ञा=देहादिभिरेकीकृत्य भ्रमः नास्तीति श्रुत्यन्तरस्यापि तात्पर्यात् आत्मनित्यत्वे न सङ्कटं किञ्चिदिति भावः। यद्यप्यत्रात्मनस्सर्वकालानुवृत्तिबोधकशास्त्रेणैव सर्वशङ्कासमुन्मूलनं भविष्यतीति प्रत्यभिज्ञादिप्रमाणान्तरानुसरणं व्यर्थं प्रतिभाति, तथापि प्रत्यक्षमात्रवादिचार्वाकादिदृष्ट्या प्रमाणभूतप्रत्यभिज्ञादेः सति सम्भवे नोपेक्षणं न्याय्यमिति धिया सोपानपर्वक्रमतः अन्ते शास्त्रं प्रमाणतया प्रत्यपादीति बोध्यम्।

வேண்டும், ஜீவனும் திரவியம். இவ்விதமே—ஜீவன் பிறந்தான்—என் பதற்கு—ஜீவனுடைய இந்த புதிய உடல் வந்தது—என்று பொருளா கையாலே அவன் நித்தியப்பொருளாகக் குறையில்லை "அன்றிருந்த நான் இன்றுமிருக்கிறேன்"—என்று நினைப்பதால் ஜீவன் முன்பின்காலங்களில் ஸ்த்திரமாக இருக்கிறான் என்றேற்படுகிறது இந்த ஜநமத்தில் சிற்றின்பம், வெகுளிமுதலியன செய்பவனுக்கு மறுபிறவி காண்பதால்—இவன் பிறவிகள் தோறும் தொடருகிறான் என்று தேறுகிறது, பிரமாணவசனங்களாலே எக காலத்திலும் உள்ளான் என்றே நிர்மானிக்கிறோம், ஆகையால்—ஜீவன், ஆழ்ந்த உறக்கத்தில் அழிவான் என்றும், உடலழியும் போதழிவான் என் றும், ப்ரளயகாலத்திலழிவான் என்றும் முக்திகாலத்திலழிவான் என்றும்

சொல்லுகிற पक्षங்கள் निरस्तங்கள். प्रत्यक्षोपपत्ति-शास्त्रங்களாலே आत्माவினுடைய देहादिवैलक्षण्यம் चार्वाकादिमतभङ्गத்திலே பரக்கச் சொல்லக் கடவோம்

இஜ்जीवतत्त्वம் अनुवृत्तसंसारா என்றும், निवृत्तसंसारர் என்றும், संसारात्यन्ता-

नन्वथापि देहात्मवादिचार्वाकमतशिक्षणं कथं कार्यमिति शङ्कायां तस्य वक्ष्यमाणत्वमाह प्रत्यक्षेति। अहमहमिति स्वात्मसाक्षिकं प्रत्यक्षम्। समाहितमनसां प्रत्याहारदशायां जायमानं प्रत्यक्षं च। ममेदमिति शरीरात्मनोर्भेदसाधकप्रतीतिरुपपत्तिः। 'हृदि ह्ययमात्मा', 'पिण्डः पृथग्यतः' इत्यादिकं शास्त्रम्। अत्रापि फलतस्तन्मतनिराकरणात् परक्क=विस्तरश इत्युक्तम्।

एवमियता प्रबन्धेन जीवतत्त्वं साङ्ग लक्षयित्वाथ तद्विभजते इज्जीवतत्त्वमिति। अयं भावः—जीवसामान्यस्य संसरणस्वरूपयोग्यता तावत् वर्तते। सा च संसृतिजनकतावच्छेदकधर्मयोगरूपा। स च धर्मः परतन्त्रचेतनत्वम्। तत् यद्यपि नित्यमुक्तयोरपि सम्भवति, तथापि सहकारियोग्यतां विना तन्मात्रस्य फलोपधायकत्वायोगात्, तस्याश्च सापराधचेतनत्वरूपायाः नित्यप्रत्यक्षितभगवदभिप्रायेषु नित्यमुक्तेष्वसंभवात् तदितरे केचनैवात्मानस्तदुभयविधयोग्यतावत्त्वेन बद्धास्संसारानुवृत्तिविशिष्टा भवन्ति। तदनुवृत्तिश्च तत्तदवच्छिन्नध्वंसानुदयः। न तु संसृतेरुत्तरोत्तरक्षणसम्बन्धः। शरीरसम्बन्धाख्यसंसारस्य तत्तद्व्यक्तिभेदेन भेदात् तेषु कस्याप्युत्तरोत्तरक्षणसम्बन्धाभावात्। ध्वंसानुदयश्च ध्वंसप्रागभावः। ततश्च संसारत्वावच्छिन्नध्वंसप्रागभावाधिकरणत्वं बद्धत्वमिति पर्यवसितम्। संसारत्वावच्छिन्नध्वंसाधिकरणत्वं मुक्तत्वम्। मुक्ताश्च स्वबद्धतादशायामनुष्ठितैः मोक्षोपायैरुदितेन भगवत्सङ्कल्पेन निवृत्तबन्धा उच्यन्ते। बन्धश्च चक्रवत् परिवर्तमाना अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धादय एव। तन्निवृत्तिश्च परमपदपर्यङ्कारोहणानन्तरं भवति। संसारात्यन्ताभाववन्तो नित्या अनन्तगरुडादयो भवन्ति। यद्यपि ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानङ्गीकारात् संसारध्वंसप्रागभाववति बद्धे, संसारध्वंसवति मुक्ते च न संसारात्यन्ताभावसंभव इति तद्वान् नित्यो भिन्नस्ताभ्यां भवति। स्वयं व्यक्तिभेदाच्च। तथापि बद्धान्मुक्तस्य कथं भेदः? पूर्वं संसारध्वंसप्रागभाववत एव पश्चादनुष्ठितोपायेन तद्ध्वंसवत्त्वात् व्यक्त्यैक्येन कथं त्रिधा विभाग इति चेन्न—संसारध्वंसप्रागभावसंसारध्वंसविशिष्टतावेषेण बद्धमुक्तयोरपि दशाभेदसद्भावात् त्रिभजनोपपत्तेः। अत एव बद्धमुक्तेत्यादिरीतिमुपेक्ष्यानुवृत्तसंसारेत्यादिप्रकारादरणम्। वकै=प्रकारः। यथाऽचेतनेप्रकृतिमहदहंकारादिषु चतुर्विंशतित्वादिना विभागोपि दशाभेदनिबन्धनः; न व्यक्तिभेदनि-

இது போலச் சொல்லுமவை எல்லாம் சரியான பேச்சாகா. காட்சியாலும யுக்தியாலும், சாஸ்திரங்களாலும் ஜீவன, உடல் கண் காது முதலிய கருவிகள் இவை எல்லாவற்றையும் விட வேறுபட்டவன் என்பதை சார்வாகரைக் கண்டிக்குமிடத்தில் காட்டக கூடவோம

ஜீவாகள்—ஸம்ஸாரத்திலழுந்தியவர், கரையேறியவர், ஸம்ஸாரத்தையே காணாதவர் என மூவகையினர், இவர்கள் எல்லோரும் அறிவு

**भाववान्**கள் என்றும் மூன்று வகையாயிருக்கும் இவர்கள் எல்லோருக்கும் **स्वरूप**ம் **एकप्रकार**ம். **यथासंभवं धर्मभूतज्ञानसुखादिवैषम्य**த்தாலே **विशेष**ம் **इच्छाप्रयत्नादि-वैषम्य**த்தாலே **मुक्त**ர்க்கும் **नित्य**ர்க்கும் **अन्योन्यभेद**ம்

**आत्मभेद**மில்லை என்பார்க்கு **सर्वशरीर**த்திலுமுண்டான **ज्ञान**மும், இதின் **अवस्थाविशेष**ங்களான **सुखदुःखादि**களும் **सर्वे**ர்க்கும் **स्वनिष्ठतया प्रतिसंहित**ங்

---

बन्धनः, तथाऽत्रापि बद्धमुक्तयोर्भाव्यमिति। नन्वथापि तद्ध्वंसप्रागभावयोरधिकरणे तदत्यन्ताभावस्यैवानङ्गीकर्तव्यत्वात् संसारध्वंसीयप्रागभाववति बद्धे संसारात्यन्ताभाववृत्तौ किं बाधकं भविष्यतीति चेन्न; संसारध्वंसप्रागभाववतः संसारतत्प्रागभावान्यतरवत्त्वनियमेन तत्र तदत्यन्ताभावस्यानङ्गीकार्यत्वात्। अव्याप्यवृत्तित्वज्ञानं विना प्रतियोगिमति तदत्यन्ताभावग्रहणायोगात् तत्प्रागभाववति चोक्तन्यायेन तदत्यन्ताभाववृत्त्यनुपपत्तेरिति। नन्वेषु त्रिषु जीवेषु यदि घटपटादीनामिव स्वरूपवैलक्षण्यं स्फुटं चकास्ति, तर्हि तत्पुरस्कारेणैव तेषां विभजनं न्याय्यम्। न तु संसृत्यनुवृत्त्यादिनेत्यत्राह **इवरूक्रिति**। तथा च, "निर्दोषं हि समं ब्रह्म", "पण्डितास्समदर्शिनः" इति सर्वत्र सर्वजीवस्वरूपाणां ज्ञानाकारत्वेना वैलक्षण्यात् न तेन विभजनमित्यर्थः। ननु तर्ह्यवैलक्षण्ये तेषामैक्यमेवास्त्वित्यत्राह **यथासम्भवमि**ति। तत्तत्कर्मानुगुण्येनेत्यर्थः। तथाच तत्तत्पुरुषेषु कर्मानुगुणतया ज्ञानसुखदुःखादितारतम्यसत्वेन तेषामभेदायोग इत्यर्थः। **विशेषो** भेदः। नन्वेवमपि नित्यानां मुक्तानाञ्च परस्परं स्वावान्तरतश्च कथं स्वरूपभेदः? कर्मकृतज्ञानसंकोचाद्यभावादेकरूपसुखानुभवाच्चेत्यत्राह **इच्छाप्रयत्नादी**ति। "स यदि पितृलोककामो भवति", "कामान्नी कामरूपी" इत्याद्यागमबलात् कर्माभावेपि परमपुरुषेच्छाधीनस्वेच्छाप्रयत्नादिभेदेन नित्यमुक्तयोः परस्परं भेदः प्रतीयत इति भावः।

नन्वात्मभेदे हि जीवत्रैविध्यवर्णनं युज्यते। "यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम", सर्वाणि शरीराणि मय्येवात्मवन्ति शरीरत्वात् एतच्छरीरवदित्याद्यागमानुमानादिभिरैकात्म्यस्यैव न्याय्यत्वादित्यत्राह **आत्मभेद**मिति। तथाच चैत्रात्मा मैत्रात्मतादात्म्यरहितः तदीयज्ञानसुखाद्यप्रतिसन्धातृत्वादिति प्रत्यनुमानपराहतेः, आत्मान्तरनिषेधवचसां नानाकारजीवसद्भावनिषेधे तात्पर्यात् न सर्वजीवस्वरूपैक्यमिति

---

வடிவினர் என்பதில் துளியும் வேறுபாடில்லை ஆனால்—அவரவர்களின அறிவுத் தன்மை மாறுபாட்டால் வேறுபடுவர் ஸம்ஸரித்துக் கரையேறிய முக்தி பெறற ஜீவர்களுக்கும் ஸம்ஸாரத்தையே எநநாளும காணாத திருவ நந்தாழ்வான் பெரிய திருவடி போன்ற நித்திய புருஷாகளுககும் எனன வாசி எனில்—அவரவர் அறிவு முயற்சிகள் வேறுபாட்டாலே ஒருவர்கொருவர் வாசியுண்டு, உலகத்தில் ஒரே ஆத்மாதான் உண்டு என்பாாக்கு—எல்லா உடல்களிலும் நிகழும் ஸுகதுக்காதி வேறுபாடுகள் எலலாம் ஓரிடத்தில் நிகழுவதாக ஒவ்வொருவரும் உணரவேணுமே என்ற கேள்வி எழும் ஆத்மா

களாக ப்ரஸக்திக்கும். शरीरभेदத்தாலே नियमம் கொள்ளில் स्वप्नसौभरि(यादि)-वृत्तान्तादिविरोधம் வரும். करणभेदமும் नियामकமன்றென்னுமிடம் बाह्यकरणभेदத்திலே காணலாம் अन्तःकरणादिभेदமும் प्रयोजकமல்லாமை कल्पादिकालத்தில் योगि-

बोध्यम् । अथ चैत्रमैत्रतादात्म्येपि शरीरभेदात् कारणात् परस्परज्ञानादिप्रतिसन्धानाभाव उपपद्यत इत्यत्राह शरीरभेदेति । नियमः=प्रतिसन्धाननियमः । स्वप्ने वेतोवस्तावत्—सन्ध्याधिकरणे श्रीभाष्यकारैः "अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमन-राज्याभिषेक-शिरश्छेदादयश्च पुण्यपापफल-भूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्टयोपपद्यन्ते" इत्युक्तत्वात् स्वाप्नशरीरावच्छेदेनानुभूतस्यापि पुनः प्रबोधे शयानदेहावच्छेदेन प्रत्यभिज्ञाप्रमाणत्वात् देहभेदे प्रतिसन्धानाभाव नियमस्य व्यभिचारो बोध्यः । कैश्चित् स्वाप्निकार्थसृष्टेर्मायामयत्वेन दुर्निरूपत्वाङ्गीकारेपि सर्वसम्प्रतिपन्नसत्यभूतोदाहरणान्तरेण व्यभिचारं दर्शयति सौभर्यादीति । तन्नामा कश्चन महर्षिरन्तर्जले तपस्यन् सम्मदाख्यं सपुत्रपौत्रपरिवारं मत्स्यराजमविदूरे चरन्तमवलोक्य स्वयमपि जातदृच्छ्यः कलत्रकामो गत्वा पञ्चाशन्मान्धातृपुत्रीरुपयेमे । तासां प्रार्थनया प्रत्येकमावसथादिकं निर्माय तपोमहिम्ना स्वयमपि स्वीकृततावत्सङ्ख्याकदेहस्सन् चिरं ताभी रेमे इति विष्णुपुराणे चतुर्थांशकथाविशेषोऽत्र ज्ञेयः । एवञ्च तत्रापि देहभेदेपि प्रतिसन्धानानुवृत्तिर्दृष्टेति व्यभिचारः । आदिना जातिस्मराणां जडभरतादीनां वृत्तान्तोऽपि ग्राह्यः । तेषां हि, "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" इति योगसूत्रोक्तरीत्या संस्कारसंयमकृतसानुबन्धतत्साक्षात्कारेण तदनुबन्धिनां पूर्वजन्मनामपि विशदतमा स्मृतिरुदयत इति तत्रापि देहभेदेपि प्रतिसन्धानं भवतीति व्यभिचार इति भावः । अथ शरीरभेदस्य प्रतिसन्धानविरहप्रयोजकत्वाभावेपि करणभेदस्यैव तदस्तु । ततश्च चैत्रमैत्रयोरैकात्म्येपि करणभेदादेव तदभावोपपत्तिरित्यत्र—किं बाह्यकरणभेदोऽत्र तन्नियामकतया विवक्षितः, अथान्तःकरणभेदः इत्येवं विकल्पं हृदि निधाय तयोः प्रथम आह करणभेदेति । पूर्वोक्तसौभर्यादिशरीरेषु शरीरभेदवत् करणानां चक्षुरादीनामपि भिन्नतया तत्र प्रतिसन्धानानुपपत्तेः । चैत्रादीनामयोगिनामपि शरीरेषु बाह्य-करणभेदेपि, "योहं घटमद्राक्षं सोहमिदानीं स्पृशामि" इति प्रतिसन्धानानुपपत्तिश्च भवतीति भावः । द्वितीयेप्याह अन्तःकरणेति । अयमाशयः—कल्पान्ते प्रकृतिपर्यन्तानां सर्वेषां स्वकारणे विलयात्

ஒன்றாயினும் உடல் வெவ்வேறாகையாலே அக் கேள்வி எழாதெனில்—கனவில் ஒருவனே பல உடல் எடுத்து எல்லாம் தனக்கே வந்ததாக உணர்வதும், ஸௌபரி என்னும் மஹாரிஷி பல உடலெடுத்து எல்லாம்தாமே அநுபவித்து மகிழ்ந்ததும் அப்போது சரிப்படாது. இம் மாதிரியே—இந்திரியங்களின் வேறுபாட்டால் அனுபவம் வெவ்வேறு இடத்தில் என்பதும்—நமது உடலில் நடக்கும் நிகழ்ச்சிக்குப் பொருந்தாது. இதுபோலவே, உள் மனம் என்னும் அந்தக்கரண வேறுபாடும் காரணமாகாது. கல்பம் முதலில் ஸ்ருஷ்டி துவங்கும்போது யோகிகள் பலர் முன்கல்பத்தில்

களுடைய पूर्वकल्पानु[भूत]स्मृत्यादிகள் சொல்லுகிற शास्त्रங்களாலே அறியலாம் இ प्रतिसन्धानप्रसङ्गம் ஏகாம்சத்தாலே भेदाभेदवादிகளுக்கும் வரும். सर्वज्ञனை ईश्वरனுக்கு सर्वजीवदुःखप्रतिसन्धानादिகளும் प्रसङ्गிக்கும்

आत्माக்கள் பலராய் कल्पந்தோறும் சிலர் मुक्तராய்ப்போகக்கடவதாலால் போன कल्पங்கள் अनन्तங்களானபடியாலே இத்தனை நாள் संसारिக்களும் मुक्तராய்ப்போகவேண்டாவோ என்பார்க்கு, एकजीवனை போதும்

---

अन्तःकरणस्यापि तथा विलीनस्य कल्पादौ पुनः सृष्ट्या, "तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्", "स्वयमागतविज्ञाना निवृत्ते धर्मनास्थिता." इत्यादिना तत्सद्भ्रजातिस्मरेषु अन्तःकरणभेदेऽपि पूर्वकल्पप्रतिसन्धानं दृश्यत इति। अथ केवलानात्मनामभेदे स्वीक्रियमाणे एवायं प्रसङ्गः। न तु तेषां भिन्नाभिन्नत्वस्वीकारे। चैत्रमैत्रयोर्भेदांशमादाय प्रतिसन्धाननियमोपपत्तेरित्यत्र जीवबहुत्वाश्रयणेन किं जीवानां परस्परं भेदाभेदावभिमतौ? किं वा जीवस्येश्वरस्य चेति विकल्पमभिप्रेत्य तत्र प्रथमं शिरो दूषयति **इष्टप्रतिसन्धाने**ति। अयमभिप्रायः—भेदाभेदयोरेकत्र समावेशविरोधात् तत्परिजिहीर्षया भेदस्यौपाधिकत्वं अभेदस्यैव स्वाभाविकत्वञ्च स्वीकार्यम्। तथा च चैत्रमैत्रयोस्स्वाभाविकाभेदांशमादाय परस्परं सुखदुःखादिप्रतिसन्धानप्रसङ्गस्तेषामपि भवतीति। अथ द्वितीयं शिरो दूषयति **सर्वज्ञे**ति। सर्वज्ञत्वात् जीवभेदं स्वस्मिन् जानात्येव। ईश्वरत्वात् तस्मिन् जीवदुःखादिप्रतिसन्धानञ्च नेष्टव्यमिति अहो महत् सङ्कटमिति पदद्वयप्रयोगतात्पर्यम्।

अथात्मनां भेदवादे दोषमाशङ्क्य प्रतिबन्द्या समाधत्ते **आत्मे**ति। अत्रैतदुक्तं भवति—यदि जीवा अनन्तसंख्याका भवन्ति, तदा, "अनादिर्भगवान् कालः" इति अतीतकल्पानामप्यनन्तकोटिसंख्याकतया प्रतिकल्पं द्वित्राणां मुक्तावपि एतावता गतेनानेहसा सर्वेषां मुक्त्यवश्यंभावात् केषाञ्चिदात्मनामिदानीं संसारोपलब्धिविरोधः। न चातीतेषु कल्पेषु न केनापि मोक्षोपायोऽनुष्ठित इति सम्भवति। तथा सति शास्त्रस्याननुष्ठापकत्वलक्षणाप्रामाण्यप्रसङ्गात्। तस्मादात्मैक्यमेव स्वीकार्यम्। तेनैकेनात्मना अद्ययावदनुष्ठितो मोक्षमार्ग इति कार्यदर्शनादनुमीयत इति न सङ्कटं किञ्चिदिति। तदेतत् परिहरति **एकजीवे**ति।

---

நடந்த நிகழ்ச்சிகளை அந்தக்கரண வேறுபாடு உடபினும் தம்முள் திரட்டி நினைத்து உபதேசங்கள் செய்ததாக சாஸ்திரங்கள் கூறுகின்றனவே இவ்விதமான கேள்வி பாஸ்கராதி மதத்திலும் வரும் எல்லா ஆத்மாக்களும் ஒன்றாகியும் வேறாகியுமிருப்பதாகச் சொல்லும் போது—ஒன்று என்னும் பாகத்தை மட்டும் எடுத்துக்கொண்டு முன்போல் கேட்கலாமல்லவா? எல்லாமறிந்த ஈசுவரனும் ஜீவர்களோடு தனக்குள்ள ஒருமைத் தன்மையையும் அறிவானாகையால் முன்சொன்ன கேள்வி ஈசுவரனையும் பிடிக்கும்

ஆனாலும் ஆத்மாக்கள் பலரிருந்தால். ஒரு கல்பத்துக்கு சிலர் என்ற விழுக்காடு கடந்துபோன அளவிறந்த கல்பங்களில் எல்லோரும் இந்நாள் வரை முத்தி பெற்று முடிந்து போயிருக்க வேணுமே என்னில்—சொல்லு

போன காலம் अनन्तமாயிருக்க இத்தனை நாள் இவன் मुक्तனாகாதொழிவா னேன் என்று चोद्यம் வரும் இப்போதும் संसारம் காண்கையாலும் मोक्ष-सामग्री வாராமையாலும் என்னும் परिहारம் अनेकात्मवादத்திலும் तुल्यம் இதற்கு முன்னே अनन्तात्माக்கள் मुक्तரானால் இப்போது संसारिகள் शेषित्த படி என் எனனில், अनन्तங்களான एकजातीयங்களில் கருத்தவையும் வெளுத்தவையும் கழிந்தவையும் நின்றவையும் தனித் தனியே अनन्तங்களாய் இருக்கிறாப் போலே अनन्तात्माக்கள் मुक्तராலும் अनन्तात्माக்கள் शेषित्து

---

तथाऽस्मिन्नपि पक्षे जीवानन्त्यमतेऽपि कालानन्त्यवद्भावात् एतावन्तं कालं कथमयं न मुक्तः? कथञ्चो-पायं नान्वतिष्ठत्? इति शङ्कातङ्को जनिष्यत एवेति तात्पर्यम्। अथैकात्मवादे संसारस्याविच्छिन्नत्वेना-प्यनिवृत्तेरेव मोक्षत्वादनेनात्मना मोक्षो न प्राप्तः। प्रत्यक्षबलेन कार्याभावात् सामग्र्यभावस्य सूहत्वान्न प्रतिबन्धावकाश इति चेत् आह इत्येदु इति। अनन्तात्मवादेऽपि प्रत्यक्षानुसारिण्याः पूर्वोक्तायाः कल्प-नायास्सुकरत्वात् समस्समाधिरिति भावः। अत्र संसारोपलब्धेः सामग्र्यभावादिति हेतुभागस्य साध्यांशः पूर्ववाक्यात् 'एतावता कालेनेमे नामुच्यन्त' इति पूरणीयः। नन्विदानीं बद्धानन्त्यदर्शनरूपो हेतुः प्रत्यक्षा-भासः। बद्धानामेव मुक्तत्वात् अतीतकालानन्त्येन मुक्तात्मानन्त्यसिद्धौ अद्यदिनं बद्धात्मसंख्याह्रासस्या-वर्जनीयत्वादित्याशङ्क्याह इदक्कुमुन्ने इति। अनेन वर्तमानादतीतस्य कालस्यानन्त्यं अभिप्रेतम्। अतीतकालस्य परिमितत्वे हि इदानीं संसारिणामानन्त्यमुपपद्येतेति भावः। संसारिणः=अनन्तसंख्याका बद्धाः। वक्ष्यमाणानुसारादेवमेव व्याख्येयम्। न हि केवलं संसारिबद्धात्मत्वमेवाक्षिप्य समाधीयते। समुचितं दृष्टान्तमाह अनन्तङ्गळान इति। अयमर्थः—व्रीहित्वरूपैकरूपसामान्यजातीयव्रीहिव्यक्तीनामानन्त्येऽपि तत्तद्विशेषजातीयस्थितानामोषधीनां व्रीहीणामपि प्रत्येकमानन्त्यं प्रामाणिकमिति तद्वदेव जीवानामान्त्यस्या-

---

கிறோம் உலகத்துக்கு ஒரு ஆத்மா தான் என்ற உன் கக்ஷியிலும், கடந்த காலம் அளவற்றதாகையால் ஏன் இதுவரை இவன் முக்தனாகவில்லை என்ற கேள்வி வரவே செய்யும், "நான் என்ன செய்ய? இப்போதும் ஆத்மா ஸம்ஸாரத்தில் இருக்கக் காண்கிறோம், இதனால்—இதுவரை இவனுக்கு மோக்ஷம் பெறத் தக்க சூழ்நிலை இல்லை என்று ஊஹிக்கிறோம்" என்னில்— இச்சமாதாநம்—அநேகம் ஆத்மாக்களை ஒப்புக்கொண்டவனுக்கும் ஸமமானதே. ஆனால்—இதற்கு முன்பே அனந்தகோடி ஆத்மாக்கள் முக்தி பெற்றுவிட்டார்களானால், இப்போதும் அனந்தகோடி ஆத்மாக்கள் மிச்சமாக இருக்கக் காரணமென்னெனில்—ஆத்மாக்கள் எல்லோரும் ஒரு இனமே. ஆனாலும் முக்தி பெற்றவரும் அனந்தகோடி பேர் ஸம்ஸாரத்தில் உழலுப வரும் அப்படியே. ஒரே மாட்டின் இனத்தில்—கருத்தவை, வெளுத்தவை, இருப்பவை, இறந்தவை—எல்லாம் தனித்தனியே அனந்தகோடியாக

**संसरि**க்கலாம் **परापरजातीय**ங்களிலும் **क्षणकला**திகளிலும் **समुदाय**த்திலும் **विभाग**த்திலும் **आनन्त्यमात्र**ம் **तुल्य**மாய் **तारतम्य**முண்டாயிறே இருப்பது.

---

प्यानन्त्यम्, प्रत्येकं तद्विशेषभूतबद्धमुक्तानामपीति। ननु बद्धमुक्तयोर्न सामान्यविशेषभावमात्रं सम्बन्धः। येनेदमुदाहरणं रोचेत। किन्तु पूर्वं बद्धानामेव पश्चान्मोक्ष्यमाणतया अतीतकल्पानन्त्येन मुक्तात्मसंख्याधिक्यसिद्धौ बद्धात्मनां संख्या परिमितैव स्यादित्येवं वैरुद्ध्यसंख्यासम्बन्धोऽपि युगपदुभयोरानन्त्यासम्भवरूपो वर्तते। ततश्चोक्तदृष्टान्तो विषम इत्यत्र सम्यक् दृष्टान्तान्तरमाह **परापरेति**। एतदुक्तं भवति—व्यापकद्रव्यत्वावच्छिन्नं परजातीयम्। व्याप्यपृथिवीत्वाद्यवच्छिन्नमपरजातीयम्। तत्र द्रव्यजातीयसंख्यापेक्षया प्रत्येकपृथिव्यादिजातीयसंख्या परिमितैव। तत्समुदायात्मकत्वात् द्रव्यस्य। अथाप्युभयोरानन्त्यमविशिष्टमेव विलोक्यते। तथैव गतस्य कालस्यानन्त्येन मुक्तानामपरिमितसंख्याकत्वं बद्धानां परिमितसंख्याकत्वञ्च स्यादेव। तथात्वेऽप्युभयोरानन्त्यमविशिष्टमेव स्वीकार्यम्। परिमिता अपरिमिताश्च द्रव्यपृथिव्यादयः पदार्थाः, बद्धमुक्तात्मका जीवाश्च न हि संख्यातुं शक्यन्ते। युक्त्या तत्तस्य(?) परिमितस्यापरिमितस्य वा प्रत्यक्षं गणनातीततया दुर्ग्राह्यत्वादिति। **क्षणे**ति। अत्रेयं प्राचां कालगणनप्रक्रियाऽमरकोशोक्ता, “अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला। तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्॥ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च। पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ॥ द्वौ द्वौ माघादिमासौ स्यात् ऋतुस्तैरयनं त्रिभिः। अयने द्वे गतिरुदक् दक्षिणाऽर्कस्य वत्सरः॥ मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः। दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम्” इति। अत्राप्युत्तरोत्तरं क्षणादिघटनया कल्पान्तकालपरिगणनात् क्षणादयोऽपरिमिताः कल्पादयस्तु परिमिता एवेति युक्त्या निर्णेयत्वेऽपि प्रत्यक्षानुभवेन क्षणादयः कल्पान्ताः कालास्सर्वेऽपि संख्यातिगा **अनन्ता** एवेत्यभ्युपगमनीयमिति भावः। परापरजातीयादिषु अनुगततया परिमितत्वापरिमितत्वरूपतारतम्यनियामकाकारप्रदर्शनं **समुदायविभागे**ति सामान्यविशेषेत्यर्थः। क्षणादिपदार्थघटितत्वात् कल्पादिकालस्य घटकीभूतक्षणादीनामपरिमितत्वं तद्घटितकल्पादेः परिमितत्वं, सामान्यभूतानां द्रव्याणां व्यापकजाती-

---

இருப்பது போல். ஆனாலும், மும்மடங்கு பெரிய வைகுண்டலோகத்திலே, இந்த உலகில் உழலுபவரைவிட அதிகம் பேர் இருப்பதும், இங்கு குறைந்த பேர் இருப்பதும் எப்படி கூடும்? இரண்டிடத்திலும் இருப்பவர் அனந்தகோடி பேர் என்றீரே நீர் என்னில்—கவனமாகக் கேள். பொது வில் மாட்டின் இனமும் அனந்தகோடியே அதற்குள்ளே காளைகளின் இனமும் அனந்தகோடியே ஆயினும் மாட்டினத்தின் கணக்கு அதிகம், காளையினத்தின் கணக்கு குறைவு என்று ஒப்புக்கொள்ளுகிறோமே. அது போலவே இதுவும். அம்மூதிரி மற்றொரு உதாஹரணம் கணநேரங்கள்—கல்பகாலங்கள்—இரண்டுகளும் தனித்தனி அனந்தகோடிதான் ஆயினும் கணநேரங்களின் கணக்கு அதிகம், கல்பகாலங்களின் அளவு குறைவு,

இப்படியானாலும் அபசாராநுவ்ருத்தியால் சிலர்க்கு நித்யஸம்ஸாரம் கூடுமென்னும் பக்ஷத்திலும், எல்லோரும் ஓரளவிலே பகவத்க்ருபையாலே முக்தராய் விடுவார்கள் என்னும் பக்ஷத்திலுமுள்ள ப்ரமாணபலாபலங்கள் கண்டு கொள்வது

---

यानामपरिमितत्वं विशेषभूतानां ज्यापजातीयतृणत्यादीनां परिमितत्वञ्च युक्तमेवेत्याशयः ।

ननु बद्धानन्त्यसमर्थनं सर्वेऽपि कदाचिद् भगवत्सङ्कल्पेन मोक्ष्यन्त इति सम्प्रदायविरुद्धम् । नित्यं संसरन्ति केऽपि इत्यप्यस्ति सम्प्रदाय इति चेन्न ; विरुद्धसम्प्रदायद्वयानुत्थानाय त्वाह इप्पडि-यानालुमिति । बद्धानन्त्यसमर्थनेऽपीत्यर्थः । अन्वयश्चास्य, पक्षद्वयेऽपि प्रमाणबलाबले द्रष्टव्ये इत्यनेन बोध्यः । तथाच तेषामानन्त्यकथनमात्रेण नान्यतरपक्षसिद्धिः । अस्योभयपक्षसाधारण्यादिति भावः । अपचारानुवृत्त्येति । सापराधचेतनत्वस्यैव संसरणं प्रति सहकारियोग्यतारूपत्वादिति भावः । शिलर्क्कु= परतन्त्रचेतनस्वरूपतत्स्वरूपयोग्यतावतां मध्ये केषाञ्चित् । नित्यसंसारेति । संसरणस्वरूपयोग्यत्वेऽपि यथाऽनन्तगरुडादीनां सहकारियोग्यतायाः कदाप्यप्राप्त्या नित्यसूरित्वम्, तथैव केषाञ्चिज्जीवानां स्वरूपयोग्यानां सापराधत्वरूपसहकारियोग्यतायाः कदाप्यनपायात् नित्यसंसारित्वमित्यभिप्रायः । अत्र च पक्षे प्रमाणानि— एकं पादं नोद्धरति सलीलायै (एकं पादं=पादोऽस्य विश्वा भूतानीत्युक्तं प्रकृतिमण्डलं सलीलाया अविच्छेदाय नोद्धरति=कदापि नोपसंहरतीत्यर्थः), तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु, अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः इत्यादीनि । पक्षान्तरमाह एल्लोरुमिति । इदानीं संसरन्तस्सर्वेऽपि इत्यर्थः । भगवत्कृपेति । यथा संसरणं प्रति सापराधत्वं सहकारियोग्यता, तथा मुक्तिं प्रति भक्तिप्रपत्त्यन्यतरस्य सहकारियोग्यतारूपत्वेन तद्वशीकृतभगवत्सङ्कल्पात् सर्वेषामपि कदाचिन्मुक्तिलाभोऽवर्जनीय इत्याकूतम् । अत्रेदं प्रतिभाति—परतन्त्रचेतनत्वं न केवलं संसरणं प्रत्येव स्वरूपयोग्यता ; अपितु मुक्तिं प्रत्यपि । "ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा", "वने वा नगरे वापि मां नासदितुमीश्वरः" इत्यादिप्रमाणात् । तत्र संसरणं प्रति सापराधत्वं सहकारियोग्यता । मुक्तिं प्रति अनुष्ठितोपायत्वम् । ततश्च सर्वेऽपि जीवास्ततत्सहकारिसमवधाने तत्तद्योग्यत्वात् तत्तद्भजन्त इति न, नित्यं केषाञ्चित्संसार एवेति पक्षश्शोभते इति । भगवच्छब्दवाच्यहेयप्रतिभटत्वं स्वाश्रितस्य हेयभूतसंसारानिवर्तकत्वेनोपपद्यते तस्येत्यभिप्रायेण भगवच्छब्दप्रयोगः । "एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते" इति वचनं कृपाशब्देन स्मारितम् । अस्मिन्नपि पक्षे प्रमाणानि—ब्रह्मविदाप्नोति परम् इत्यादीन्येव । अविशेषेण जीवसामान्यं प्रति

---

இப்படி ஆத்மாக்கள் அனந்தமான பேராக இருந்தாலும்—சில ஜீவர்கள் தொடர்ந்து பகவதபசாராதிகளைச் செய்து நித்தம் ஸம்ஸாரத்திலேயே அழுந்திக் கிடப்பர் என்று சிலர் சொல்லுவர் அவர்களும் ஏதேனும் ஒரு காலத்தில் பகவத்க்ருபையாலே புரிந்து முக்தி பெறுவர் என்றும் சில ஆசார்யர்கள் சொல்லுவர் இவற்றை ப்ரமாணங்களைக் கொண்டு

अनादिकर्मविशेषप्रवाहवैषम्य த்தாலே बद्धர்க்கு मोक्षத்தில் முற்பாடுபிற் பாடுகளும் கூடும் முற்பட முक्तராணர்க்கும் பிற்பட मुक्तராணர்க்கு மெல்லாம் पुनरावृत्ति இல்லாதமையும் மேலுள்ளஆனந்தமும் समानம்.

प्रवृत्तत्वात्। न चास्य कचिज्जीवविषयेऽपवादसम्भवति। अपवादकाभावात्। न च नित्यसंसारिसद्भावबाधकत्वयनबलात् कस्यचित्स्वरूपं मोक्षोपायविरुद्धमिति कल्पयितुं युज्यते। विकल्पासहत्वात्। तथाहि—किंरूपो विरोधस्तयोः? न हि तयोस्स्वरूपत एव विरोधः भावाभावयोरिवेति सम्भवति। मानाभावात्। नापि हिमवद्विन्ध्ययोरिव भिन्नदेशत्वलक्षणः। जीवं प्रत्येव मोक्षोपायविधानात् तस्य तद्वृत्तित्वात्। नापि भिन्नकालत्वलक्षणः। नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमात् फलकाले तद्वृत्तित्वावश्यम्भावात्। किञ्च नित्यसंसारिसद्भावे स किमहमिति सन्देहोदयेन कस्यापि निष्कम्पं मोक्षोपायप्रवृत्त्युदय इति। प्रमाणबलाबलेति। अत्रेदं वक्तव्यम्—यद्यपि नित्यसंसारिसद्भावे स्वस्मिन्नपि तथात्वोत्प्रेक्षया मोक्षोपायाप्रवृत्त्यवसादो भवेदिति शङ्क्यते—तथापि सा "स्वरूपयोग्यभवेऽपि सहकार्यनवस्थितेः। विमुक्तिर्मम सिध्येद्वा न वेति विचिकित्सते॥ अनर्थोऽपि यः कश्चित् तथ्यमात्ममनोरथः। (आत्मनो मनोरथः तथ्यमेव निर्थोर्यापीति इति शब्दाध्याहारेणान्वय.) पाक्षिके फलभूयस्त्वे सांयात्रिकवदीहते॥ यथा कथञ्चिदारब्धे व्यापारे गरुत्वर्मनि। प्रसीदन्नीश्वरो बुद्धिं प्रयच्छति च निश्चलाम्' इति सर्वार्थसिद्धिप्रदर्शितपादेतदेशा सुपरिहरैव भविष्यति। तथापि तत्र प्रमाणाभावात् उत्तर एव पक्षः सम्प्रतिपन्नः। न च लीलाविभूत्यनुच्छेदवचनं प्रमाणम्। आत्मानन्त्यात्, प्रत्येकं मुक्तत्वेपि तदनुच्छेदोपपत्तेः। नापि क्षिपाम्यजस्रमिति वचनं प्रमाणम्। अजस्रं=चिरमित्यर्थे तथाकथनात्। न तु नित्यमित्यर्थे। तदिदं पक्षद्वयं तत्त्वमुक्ताकलापे, "एवं सङ्गृहीतं निश्शेषात्मापवर्गे विरतविहरणो विश्वकर्ता तथा स्यात्, नित्यं चेत् कोपि दुःस्येत् निरुपधिकदयाहानिरस्येति चेन्न। पक्षः पूर्वो यदि स्यात् विहरणविरतिस्स्वेच्छया नैष दोषः शिष्टे पक्षे निरुद्धा निरुपधिकदया कुत्रचिन्नित्यमस्तु॥" इति।

ननु यदि सर्वेषां मुक्तियोग्यत्वम्, तर्हि सर्वेप्येकदैव मुच्येरन्। "समोहं सर्वभूतेषु" इत्युक्तोदारपरमपुरुषप्रसादस्य मुक्तिहेतोः प्राप्तौ पौर्वापर्यनियामकाभावादित्यत्राह अनादिकर्मेति। "कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे तत्तत्काले विपक्विर्निर्भवति हि विविधा सवासिद्धान्तसिद्धा" इति रीत्या विषमविपाकसमयवात् प्रसादहेतुसामग्र्यास्तत्पुरुषभेदेन मुक्तिलाभस्य पौर्वापर्यं युक्तमेवेत्यर्थः। नन्वेवं पूर्वमुक्तानन्दात् पश्चान्मुक्तस्यानन्दन्यूनतायाः अनिवार्यत्वान्मुक्तानां परस्परमीश्वरेण च भोगसाम्यवचनं विरुध्येतेत्यत्राह मुक्तेति। अयं भावः—परस्परं मुक्तानां भोगसाम्यञ्च स्वस्य यावान् भोगः परस्यापि तावानिति यावत्त्व-

ஆராய்ந்து எது உசிதமென்று தெரிந்து கொள்ளுங்கள் அநாதிகாலமாகத் தொடர்ந்து வரும் கர்மப்ரவாஹத்தின அவ்வோ விளைவுகளுக்கு ஏற்ப முக்தி பெறுவதில் சிலர்க்கு முற்பாடும், சிலர்கு பிற்பாடும் ஏற்படுகிறது.

முன்னும் பின்னுமாக முக்தியடைந்தவர்க்கெல்லாம், திரும்பாமையும், அங்குச்சேர்ந்தபிறகு வரும் ஆனந்தமும் ஸமமாகவேயிருக்கும், மீண்டும் திரும்

புனராவ்ருத்தியில்லை என்றது மீண்டும் ஸம்ஸரிக்கையில்லை என்றபடி. अर्वाचीनभगवल्लोके ... भगवत् सालोक्यादिमात्रத்தை मोक्षமென்றவிடம் ஆஸக்தியாலே சொன்ன ... सर्वकर्मक्षயத்திலும் आनन्दतारतम्यம் கொள்ளும் पक्षங்கள் प्रमाणोपपत्ति

त... टतं भवति। ते च यावद्वनावत्त्वे विषयकृते एव, न कालकृते ततश्च मुक्तिलाभे कालवैषम्येऽपि मुक्त्यनन्तरं सर्वेषां सर्वविषयानुकूल्यावभासस्य तुल्यतयाऽऽनन्दतारतम्याभावेन साम्यवचनोपपत्तिः। अस्तु वा कालकृते एव ते यावत्त्वनावत्त्वे। कालश्च न प्रारम्भकालः। अपि तूत्तरकालः। ततश्च प्राक्तनानौ-र्वापर्येऽपि सर्वेषां पुनरावृत्त्यभावात् उत्तरकाले भोगानुवृत्तेस्सर्वविषयेऽपि तुल्यत्वात् न्यूनाधिकस्यैव परस्यापि यावत्तावद्भोगविशेषानवच्छिन्नतम्। तदुक्तं रहस्यत्रयसारे पिर्पिडमुक्तरानारक्कुम् नाळेमुन्ने पोक्कुम्पोरुळि-ल्लै। (पश्चान्मोक्ष्यतामपि कालहानिरेव न तु भोग्यवस्तुहानिरिति)। ननु मुक्तानामपि "इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्" इति प्रकृतिमण्डल प्रति पुनरावृत्तिः श्रूयत इत्यत्राह पुनरावृत्तिरिति। पुनरावृत्तिश्चावृत्तिरेव। पुनश्शब्दश्चाविवक्षितार्थत्वात् न पौनःपुन्यवाचकः; अपितु वाक्यालङ्कारार्थः। अत एव "इमं मानवमावर्तं नावर्तन्ते" इति पुनश्शब्दं विनापि प्रयोगः। ततश्चैकवारावृत्तावदोष इति शङ्का परास्ता। अथवा "पुनर्नावर्तयिष्यति" इति भाष्यवाक्यमिहाभिप्रेतम्। तत्र तु पुनश्शब्दः संसृतिचक्रे पूर्वतनावृत्तिमपेक्ष्य प्रयुक्त इति बोध्यम्॥ सा च नोत्तरदेशप्रहाणपूर्वकपूर्वदेशप्राप्तिरूपाऽत्र विवक्षिता, अपितु पूर्वपरित्यक्तप्रकृतिसम्बन्धात्मकसंसृतिकारणपरिग्रहरूपा तत्कार्यभूतभगवदनुभव-विच्छेदप्राप्तिरूपा वेति भावः। इच्छानुगुणस्वेच्छया प्रकृतिसम्बन्धवर्जनवान् तदनुभवान्तर्भावितप्रकृति-मण्डलानुभवस्य मुक्तैः कदाचिदास्थीयमानत्वेऽपि न दोष इति भावः। अथ "मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन। इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत" इत्यादिना मोक्षवैविध्यश्रवणात् मुक्ताना-मेकविधभोगेन साम्यप्रतिपादनं विरुद्धमेवेत्यत्राह अर्वाचीनेति। "लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः" इति प्रकारेण प्रमाणेषु समानभोगत्वरूपेण सायुज्यमात्रस्यैव मुख्यमोक्षत्वं व्यवस्थापितमिति बहुवचनान्तलोकशब्दोक्तकार्यवैकुण्ठेषु अर्वाचीनभगवल्लोकेषु सालोक्यादीनां तदपूर्वविप्रकर्षान्मोक्षव्यवहारस्तत्र मुख्यो नेति मोक्ष एकविध एवेति भावः।

अथ मुक्तौ आनन्दतारतम्यवादिनो निरस्यति सर्वकर्मक्षय इति। अत्र क्षयेपीत्यपिना सुखादि-

பாமை எனபது மீண்டும் ஸம்ஸாரத்திற்குட்படுகை யில்லை என்றபடி. வைகுண்டலோகத்திற்குக் கீழுள்ள வியூஹலோகங்களில் பகவானோடு ஒரே உலகில் தங்கும் பாக்யத்தையே ஜீவனுக்கு மோக்ஷமென்றார் சிலர். அது வைகுண்டலோகாநுபவத்திற்கு சமீபமாயிருப்பதுபற்றி அவ்விதம் கூறினார் ஜீவர்களுடைய ஸர்வ கர்மங்களும் கழிந்து முக்தியில் அவர்கள் சுய உருவத்

तारतम्यप्रयोजकस्य कर्मणो निश्शेषक्षयेऽपि मुक्तौ तत्तारतम्यकथनविरोधो द्योत्यते । अत्र पक्षा इति तादृशेषु बहुषु पक्षेषु प्रथममानन्दतीर्थीयानां मतमनूद्यते। तथा हि-तैत्तरीयानन्दवल्याम्, "स एको मानुष आनन्दः" इत्यादिषु प्रतिपर्यायं "श्रोत्रियस्य चाकामहतस्य" इति वाक्यमेकरूपं पठ्यते । विषयवैराग्येण सह भगवन्तं भजित्वा ये मुक्तास्त एवाकामहतश्रोत्रियाः । तथाच तस्य मुक्तौ मानुषानन्दप्रभृतिब्रह्मानन्दपर्यन्त-बहुविधानन्दतारतम्यवत्त्वं तावत् प्रतीयते । न च कर्मोपाधितारतम्यस्य निश्शेषविनाशात् कथं सुखादि-तारतम्यमिति वाच्यम् ; तदभावेऽपि भक्त्याद्युपायतारतम्यस्यावर्जनीयत्वात् । न हि मन्दशक्तिना मनुजेन क्रियमाणा भक्तिः सहजसंसिद्धदेवयोनिविशेषैः क्रियमाणया भक्त्या तुलनामर्हति । तथा सति किमु वक्तव्यं भगवन्नाभिजातचतुर्मुखादिकृतभगवद्भजनादितुल्यतां प्रति । किञ्च मुक्तौ तत्तारतम्यं साक्षादेव श्रूयते । "अक्षण्वन्तः कर्णवन्तस्सखायो मनोजवेष्वसमास्ते बभूवुः" इति। "मनसैतान् कामान् पश्यन् रमते" इत्यादि-ष्विव मनश्शब्दितज्ञानावस्थाविशेषाः मनोजवाः । आनन्दा इति यावत् । तद्विषये असमाः=तारतम्यवन्त-इति तदर्थः । कथं तर्हि भोगसाम्यं मुक्तानामिति चेत्—स्वस्वरूपोचितभोगवत्त्वे सर्वेषां मुक्तानां साम्यमिति वा ईश्वरस्य तत्र वैषम्यं पक्षपातो नेति वा तदर्थात् भोगतारतम्येऽपि तदुपपत्तेः ; यथा न्यूनाधिकपरिमाणानां घटानां जलपूर्णत्वे साम्यम्, तथेति । एतन्निरस्यति प्रमाणोपपत्तिविरुद्धेति । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा", "निरञ्जनः परमं साम्यमुपैति" इत्यादिसाम्यबोधकप्रमाणविरुद्धस्तारतम्यवादः। न चानन्द-तारतम्ये प्रमाणानि प्रदर्शितानीति वाच्यम् ; तेषामन्यार्थत्वात् । तथा हि-तैत्तरीये प्रतिपर्यायं मनुष्या-द्यानन्दस्य मुक्तेऽतिदेशेऽपि न तदानन्दतारतम्यं प्रसज्यते । समुद्रगोष्पदन्यायेन ब्रह्मानन्दसब्रह्म-चार्यानन्दशालिनि मुक्ते तन्न्यूनमनुष्याद्यानन्दसद्भावनात्रस्य तत्र विवक्षितत्वात् । तत्तन्मात्रवन्मुक्तात्मभेदस्य तत्र शब्दतोऽप्रतीतेः । सर्वेषु पर्यायेषु, "श्रोत्रियस्य चाकामहतस्य" इत्येतावन्मात्रस्यैवाविशेषेण श्रवणात् । एतेन प्रथमपर्याये, "स एको मानुष आनन्दः" इत्यस्यानन्तरं, "श्रोत्रियस्य चाकामहतस्य" इति वाक्यमपठित्वा यच्छाङ्करभाषणम्, यच्च "मनुष्यानन्दाद्विरक्तस्याकामहतश्रोत्रियस्य मनुष्यानन्दातिशयो विहत इति तदपठनम्" इति विवरणमानन्दगिरीयम्, तदुभयं निरस्तं वेदितव्यम्। उक्तरीत्यैवोपपत्तेः। मनुष्या-नन्दाद्विरक्तस्य श्रोत्रिये मुमुक्षौ मुक्ते वा तदुपरितनमनुष्यगन्धर्वाद्यानन्दस्याप्यतिदेशासम्भवेन विरोधात् तत्पर्यायेऽपि तस्य पठितुमयोग्यत्वात् । यदपि "मनोजवेष्वसमाः" इति प्रमाणप्रदर्शनम्, तदपि "कीर्तिमान् असमो राजा, निस्समास्तत्र पण्डिताः, यथा चोळनृपस्समाऽद्वितीयोऽस्ति भूतले" इत्यादिष्विवासमादिशब्देन मुक्तादिभिन्नस्य कस्यचिदपि बद्धादेः तादृशानन्दशालिनोऽभावाभिप्राय मिति न विरुद्धम् । एवञ्चास्मदीया एव केचित् प्रथमपर्याये श्रोत्रियस्येत्यादिकं यन्न पठन्ति ; ग्रन्थाक्षरैस्तथैवामुद्रयंश्च, तदुभयमस्मदीयोप-निषद्भाष्यप्राचीनान्ध्रकोशादिविरुद्धमिति बोध्यम् । या च उपायतारतम्यं फलतारतम्यप्रयोजकमित्युपपत्तिरुक्ता

---

தூடன் இருக்கும் போதும், அவர்களிடம் ஏதோ தடையாக இருப்பது போல் கருதி அவர்களிடையே ஆனந்தாநுபவத்தில் ஏற்றகுறைவுகள் இருப் பதாகச் சொல்லும் மாத்வர் மதம் ப்ரமாணவசனங்கள யுக்தி இவற்றுக்கு

सापि न युज्यते ; यतः भक्त्याद्युपायानुष्ठानेन देशविशेषे भगवदनुभवप्रतिबन्धकप्रकृतिसम्बन्धनिवृत्तेरेव साध्यतया भक्तेषु तत्तारतम्यस्य भवतामप्यननुमततया गुरुणा लघुना वोपायेन प्रकृतिसम्बन्धस्य निश्शेष-निवृत्तौ सत्यां स्वाभाविकानन्दाविर्भावस्य सर्वेष्वप्यैकरूप्यावश्यम्भावात् । परिपूर्णपरमोदारभगवद्विषये भक्तितारतम्येपि भक्तानामेकरूपफलभाक्त्वे विरोधाभावात् । लोकेपि क्वचित् गुरुलघुनोः रत्नवाणिज्य-कृष्यादिकर्मणोश्शक्ताशक्ताधिकारिभेदेनैकरूपार्थार्जनोपायतादर्शनेनोपायतारतम्यस्य फलतारतम्यं प्रत्यप्रयो-जकत्वाच्च । किञ्चोपायतारतम्यं नाम प्रकृते किंरूपमभिप्रेयते ? दहरशाण्डिल्यादिविद्याभेदरूपञ्चेत्—तद-प्रयोजकं फलभेदं प्रति । विकल्पेप्यविशिष्टफलत्वस्य निर्णीतत्वात् । नाप्यधिकारिनिष्ठं ज्ञानशक्त्यादि-तारतम्यम् । ज्ञानशक्त्यादेस्साक्षान्मोक्षोपायत्वानङ्गीकारात् । न चोपासनात्मकज्ञान एव किञ्चित्तारतम्यं विवक्षणीयम् । ज्ञाने विषयकृततारतम्यं विना घटादिष्विव विधान्तरस्य दुर्निरूपत्वात् । ब्रह्मात्मकप्रधान-विषयस्य च सर्वविद्यास्वप्येकरूपत्वात् । उपास्यतावच्छेदकगुणरूपविषयाणामप्रधानतया तद्भेदस्याप्रयोजक-त्वात् । नाप्युपासननिष्ठं वैशद्यावैशद्यादिरूपं तत् । अपसिद्धान्तात् । "तदधिगम उत्तरपूर्वाघयोः" इत्युक्तरीत्या सर्वाधिकारिविषयेप्यन्तकाले उपासनस्य दर्शनसमानाकारतारूपवैशद्यप्राप्तेरविशिष्टत्वात् । इयांस्तु विशेषः—यदस्मादृशामल्पशक्तिज्ञानानामुपासनस्य तद्दशाप्राप्तिश्चिराद्भवति ; शक्रचतुर्मुखादीनान्त्वचिरादेवेति । यदुक्तं स्वस्वरूपोचितेत्यादि, तदपि न ; जीवस्वरूपस्य सर्वस्यैकरूप्यात् । अत एव जलपूर्णघटादिदृष्टा-न्तोपि दृष्टान्त एव (दृष्टस्वनाश एव) ; तेषां विषमपरिमाणत्वात् । साम्यं परममुपैतीत्यत्तेदृशवैषम्या-भावस्य कथञ्चिदप्यप्रतीतेश्चेति ।

अत्रास्मद्वेदान्तविद्यागुरवस्तु फलतारतम्यं मुक्तौ एवं विकल्प्य दूषयन्ति । किमानन्दतारतम्यं एकमुक्तानन्दनिष्ठं अपरमुक्तानन्दपर्याप्तसंख्याव्याप्यत्वव्यापकत्वान्यतरावच्छेदकीभूतसंख्याविभाजकधर्मवत्संख्या-पर्याप्त्यधिकरणत्वरूपं संख्याकृतं, किं वा तत्संयुक्तयावत्प्रदेशसंयुक्तत्वे सति तदसंयुक्तप्रदेशसंयुक्तत्व-तदभावान्यतररूपं परिमाणकृतम्, अथवा तद्विषययावद्विषयकत्वे सति तदविषयविषयकत्वतदभावान्यतररूपं विषयकृतम्, यद्वा परस्परासमानाधिकरणजातिमत्त्वरूपं स्वरूपकृतमिति विकल्पे जीवस्वरूपानन्दे एतादृश-तारतम्यस्य तन्मतरीत्याप्यप्रामाणिकत्वमेवेति । न च स्वरूपानन्दे एतादृशतारतम्याभावेपि धर्मभूतानन्दे संख्याकृतं तत् संभवत्येव । "स एको ब्रह्मण आनन्दः" इति पूर्वतनप्राजापत्यानन्दशतकस्यैकब्रह्मा-नन्दत्वातिदेशेन प्रकरणस्यास्य संख्याकृततत्तारतम्यप्रदर्शनार्थत्वप्रतीतेरिति वाच्यम् ; तत्रैकत्वशतत्वा-दीनां केवलं श्रोतृबुद्धिसमारोहार्थत्वेन स्वार्थतात्पर्याभावात् । "उपर्युपर्यब्जभुवोपि पूरुषान् प्रकल्प्य ते ये शतमित्यनुक्रमात् । गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते" इत्युक्तरीत्या प्रकरण-स्यानुक्तांशप्रदर्शनपरत्वेन ब्रह्मणोऽपरिच्छिन्नानन्दवत्त्व एव तात्पर्यात् । न तु तत्संख्याने । अत्र जीवानामानन्दस्वरूपत्वं तद्वैषम्यञ्चेत्थमभिहितं तन्मते ..."जीवा नीचोच्चभावं गताः ; मुक्तिर्नैजसुखा-नुभूतिरमला भक्तिस्तु तत्साधनम् ; स्वस्वयोग्यस्वस्वरूपानन्दाभिव्यक्तिरेव हि । मुक्तिस्तु पूर्णप्रज्ञानां मते

विरुद्धங்களாம், ஆகையால் केवलात्मानुभवத்தையும் मोक्षமென்றது अन्यपरம் साक्षा

विष्णोः प्रसादतः” इति। एवमस्मदीया एव केचिद्वदन्त, “मुमुक्षूणां सदाचारवैकल्यं यावदायुषम्। भवेत् यदि तदानन्दे न्यूनतां जनयेद्ध्रुवम्॥ क्रियावानेष इत्यादिश्रवणात् स्मरणादपि। आनन्दे तारतम्यं स्यात् आचारे तारतम्यतः॥ इत्याद्यापस्तम्बवचनबलान्मुक्तौ आनन्दतारतम्यमिति। तदपि—मुक्तौ पूर्वोक्तदिशाऽऽनन्दसाम्यलाभेनेह लोके विद्यमानतादशायां मुमुक्षूणां भगवदनुभवसंकोचादिपरं नेयमित्यदोषः। तत्र वचने मुक्ताविन्त्यनुक्तेः। एवं—प्रपन्नस्य भगवत्कैङ्कर्यं फलम्। “सदा पश्यन्ति सूरयः” इति वचनात् भक्तस्यानुभवः फलमिति केषाञ्चिद्वादोपि विफलः। कैङ्कर्यस्यानुभवपरीवाहरूपत्वेन तदभावेऽभावात्। कैङ्कर्येऽपर्यवस्यति केवलानुभवमात्रे स्थातुमशक्यत्वात्। मूले पक्षाः इति बहुवचनेन सर्वेऽपीमे पक्षा विवक्षिताः। अधिकमनन्ताचार्यवादावल्यादाववलोकनीयम्।

ननु सर्वकर्मक्षयेण कैवल्यं प्राप्तानां भगवदनुभवाभावात् आनन्दतारतम्यस्यावर्जनीयतया मुक्तानां सर्वेषामानन्दसाम्यवचनमनुपपन्नम्। न च न सा दशा मुक्तिरिति वाच्यम्; “स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता” इति तस्यापि मुक्तित्वकीर्तनादित्यत्राह आकैयालिति। मुक्तौ तत्तारतम्यस्य सर्वथा प्रमाणोपपत्तिविरुद्धत्वादित्यर्थः। केवलात्मानुभवः=भगवदनुभवरहितात्मानुभव। अन्यपरमिति। “जरामरणमोक्षाय मामाश्रित्य यतन्ति ये” इति जरामरणादिहेतुभूतकर्ममात्रनिवृत्त्या भगवदनुभवप्रतिबन्धककर्मवर्गे जाग्रति सति यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः” इत्यादिरीत्याऽऽकर्षकात्मानन्दमात्रतृप्तानां “विरजापरमव्योम्नोरन्तरा केवलस्मृतः” इति निर्दिष्टस्थानविशेषभाजां मुक्तत्वव्यपदेशस्य “विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः” इत्यादिष्विव मुक्तयदूरविप्रकर्षेण गौणत्वान्न मुख्यमुक्तावानन्दतारतम्यमिति भावः। अस्य मुख्यमुक्तित्वे साधनतो गतितश्च दुर्निरूपत्वं गीताभाष्ये तदापातप्रतीतेरपि सूत्रभाष्याविरोधेन नेतव्यत्वमित्यादिकं तात्पर्यचन्द्रिकायां विशदमनुसन्धेयं जिज्ञासुभिः॥ अथापि सायुज्यरूपसाक्षान्मुक्तौ सालोक्याद्यनुभवाभावेन तत्तारतम्यमावश्यकमेवेति शङ्कायामाह साक्षान्मोक्षेति। तदुक्तमाचार्यैरेव, “बद्धोऽसौ स्वाधिकारानुरूपतया शक्येषूपायेषु प्रविश्य संपरिपूरितेषु तेषु संसारपदवीसञ्चरणक्लेशनाशेनात्यद्भुतार्चिरादिगत्याऽऽतिवाहिकैर्देवैरुन्नीतः विमलमधुरसुरभिशीतळविरजा-

முரணும், ஆகையாலே, கேவலம் ஜீவர்கள் தம்மை மட்டும் அனுபவித்து மகிழ்தலும் மோக்ஷம் என்று சிலர் சொல்லுவதற்கும், அது மோக்ஷத்தில் சேர்ந்து முடியும் என்று கருத்து ஆக—முக்கியமான மோக்ஷநிலையில்—பகவானோடு ஒரே உலகத்தில் இருந்து பெறப்படும் ஆனந்தம் முதலியன அடங்கும் சுருதியில—ப்ரஹ்மத்தோடு விரும்பியவைகளையும் முக்தி பெற்ற ஜீவன் அநுபவிப்பான் எனறதற்கு—அனைத்தெல்லாமுடைய அரவிந்தலோசனனை அநுபவிப்பான் என்று பொருள் அறிவுக்கு எங்கும் செல்ல

मोक्षத்தில் सालोक्यादिகளெல்லாம் अन्तर्भूतங்களாயிருக்கும் उभयविभूतिविशिष्टன் अनुभाव्यனாகையாலே कामान् इत्यादिகள்...विशिष्ट भगवदनुभवपरம். ज्ञानसंकोच-निवृत्ति இப்போது साध्यैயாகச்செய்தே பண்டுமுண்டாயிருக்கக் காணாத आकारங்கள் காண்கையாலும் उपाधिनिवृत्तिயில் स्वरूपप्राप्ताकारங்கள் வருகிறன வாகையாலும் स्वरूपादिகளில் आविर्भावம் சொல்லுகிறது இங்ஙன் இசையா

प्रवाहमवगाह्य पवित्रपाणिनाऽमानवेन करस्पर्शविधूतवासनाविशेषः दिव्यदेशं प्राप्य सर्वेश्वरेण सलोकः, अप्राकृतामृतमयविलक्षणविग्रहयोगेन सरूपः, दिव्यजनपदनगरादिकं क्रमेणावाप्य सहस्रस्थूणादिवत्योदित-दिव्यमहामणिमण्डपे कौषीतकीब्राह्मणाद्याघोषितपर्यङ्कविशेषे श्रीमदनन्ताख्यदिव्यशय्यायां "तया सहाऽऽ-सीनम्" इति रीत्योपविष्टं नित्यं नित्यसूरिबृन्देन संस्तूयमानं श्रीमन्नारायणमुपगम्य सामीप्यं भजमानः, इत्थं प्राकृतगुणान् सर्वान् हित्वा भगवद्गुणेषु गाढावगाढः अपुनरावृत्तिकतया तदनुभवति" इति। एतदेव सायुज्यमिति प्रथते। ततश्च सहस्रे शतमिव सायुज्ये सालोक्यादिकमन्तर्भवतीति। ननु न केवलं ब्रह्मानुभवो मुक्तिः। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा" इति तदतिरिक्तकामानुभवस्यापि श्रवणादित्यत्राह उभयविभूतीति। "सर्वं ह पश्यः पश्यति, ब्रह्मविदाप्नोति" इत्यादिना सर्वविभूतिविशिष्टब्रह्मानुभवलाभेन तदनन्तर्गतं न किञ्चिदस्तीति कामशब्दोपि तदीयगुणपर इति तद्विशिष्टब्रह्मानुभव एव तत्र विवक्षित इत्याशयः। ननूभयविभूतिविशिष्टब्रह्मानुभवस्य मुक्तित्वे, तस्य, तदनुगुणधर्मभूतज्ञानविकासादेश्च तदैव जायमानतया मुक्तेस्साध्याकारसम्बन्धरूपत्वमेवेति, तत्र तत्कालीनज्ञानकैङ्कर्यादिषु चाविर्भावादिशब्दो न प्रयोक्तुमुचितः। पूर्वमेव स्थितस्य प्रकाशो ह्याविर्भावः। ततश्च, "रूपधाविर्भाव", "आविरस्तुमम सहजकैङ्कर्यविधयः" इत्यादिकमनुपपन्नमित्यत्राह ज्ञानसङ्कोचनिवृत्तीति। धीविकासविशेष इत्यर्थः। इप्पोदु=मुक्तौ। साध्येति पूर्वपक्षहेतुद्योतनम्। मोक्षोपायानुष्ठानेनेति शेषः। तत्र प्रथमं ज्ञानविकास-विशेषे आविर्भावादिशब्दं समर्थयते पण्डुमुण्डागिरुक्क इति। पूर्वमेव विकासार्हज्ञानाद्याकाराणां सत्त्वेऽपीत्यर्थः। तर्हि को विशेष इदानीमित्यत्राह काणादवाकारङ्गळिति। यद्यपि पूर्वमेव विका-सयोग्यं ज्ञानादिकं जीवे स्थितम्, अथापि विकासाख्यकार्योपधानमिदानीमेव दृश्यत इत्यर्थः। एवं ज्ञानस्वरूपस्य नित्यतया तत्राविर्भावादिशब्दौचित्येपि मुक्तिस्वरूपस्य तत्कालीनकैङ्कर्यादिस्वरूपस्य च सर्वथाऽऽगन्तुकत्वेन तयोस्तत्प्रयोगः कथमिति शङ्कां पृथग्वारयति उपाधीति। कर्मनाश इत्यर्थः। स्वरूपप्राप्तेति सिद्धान्तहेतुगर्भविशेषणम्। तथाच कैङ्कर्यादीनामागन्तुकत्वेपि स्वरूपानुबन्धित्वेन स्वरूप-

முன்பிருந்த தடை இப்போது ஒழிகிறது என்பது ஓர் புத்தம்புதிய நிகழ்ச்சியே யாயினும்—இப்போது முக்தியில் ஆத்மா சுய உருவுடன் மறு மலர்ச்சி பெறுகிறான் அவனுடைய அறிவும் அவ்வாறே என்றுசொல்லுவதன் கருத்து—பண்டே உண்டாகியிருந்தும் ஆத்மாவின் சுய தன்மைகள் இப்போது தான் காணப்படுகின்றன என்றும், அறிவை அடைத்திருந்த கர்மாக்கள்

தார்க்கு "तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इत्यादिप्रमाणங்கள் विरोधिக்கும். मुक्तदशैயில் पाषाणकल्पत्वादि पक्षங்கள் எல்லாம் श्रुतिस्मृति सूत्रोपपत्ति विरुद्धங்களாகையாலே अनादरणीयங்கள் · मुक्तனுடைய अशरीरत्वादि श्रुतिகளும் कर्मकृतशरीरादिनिवृत्तिपरங்கள்

आत्माக்களுக்கு कर्तृत्वभोक्तृत्वங்களன்றிக்கேயிருக்க बद्धர் मुक्तர் नित्यர் என்றிவ்

---

प्राप्ततया जातानामप्युत्तरत्र सर्वदाऽनुवृत्तिर्भविष्यतीतीममंशं द्योतयितुं "आविस्स्युर्मम सहजकैङ्कर्यविधयः" इत्युक्तमिति हृदयम् । तथाच ज्ञानादिष्वाविर्भावशब्दो मुख्यः, कैङ्कर्यादिषु तु गौण इत्युक्तं भवति । तथाच **रहस्यत्रयसारे**ऽनुगृहीतम्—ज्ञानद्रव्यस्य तदीयसर्वविषयविकासार्हतारूपायाश्शक्तेश्च नित्यतया तयोराविर्भावशब्दो मुख्यः । अथापि सर्वविषयविकासस्य दुःखनिवृत्त्यादेः संकल्पकैङ्कर्यादीनाञ्चागन्तुकत्वेपि तानि निवृत्तप्रतिबन्धकस्वरूपोपाधिकानि पश्चात्सर्वदा भविष्यन्तीति द्योतयितुं तेषु आविर्भावादिशब्दप्रयोग इति । स्वरूपादीति **आदि**ना कैङ्कर्यादिग्रहणम् । ननु ज्ञानादीनामप्यागन्तुकत्वेनास्तु तेष्वप्याविर्भावशब्दस्य गौणत्वमिति चेदाह **इङ्ङनिशैयातार्क्कु** इति । तत्र मुख्यत्वानङ्गीकर्तॄणामित्यर्थः । नित्यत्वात्ते गुणाः प्रकाश्यन्त एव, न जन्यन्त इति स्पष्टं कथनादिति भावः । ननु "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः न प्रेत्यसंज्ञाऽस्ति" इत्यादिना मुक्तौ अशेषविशेषगुणोच्छित्त्या पाषाणकल्पताया एवावगमात् कथं तत्राऽऽनन्दसंभव इत्याशङ्कायामाह **मुक्तदशे**ति । अयं पक्षो वैशेषिकाणां प्रसिद्धः । **आदिना** बौद्धाना स्वरूपोच्छित्तिमुक्तिपक्षस्य, अद्वैतिनां निर्विशेषब्रह्मभावपक्षस्य च ग्रहणम् । "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यादिश्रुतेः, "मम साधर्म्यमागताः, सायुज्यं प्रतिपन्ना ये तीव्रभक्तिसमन्विताः" इत्यादिस्मृतेः, भोगमात्रसाम्यलिङ्गाच्चेत्यादिसूत्रस्य, पाषाणकल्पत्वादेरपुरुषार्थत्वेन तत्र पुरुषार्थत्वबुद्ध्या प्रवृत्त्ययोग इत्याद्युपपत्तेश्चेमे पक्षा विरुद्धा इति सर्वथाऽनादरणीयमेवैतदिति भावः । तर्हि, न ह वै सशरीरस्येत्यादेः कथन्निर्वाह इति चेत्—आह **मुक्तनुडैये**ति । "स एकधा भवति, त्रिधा भवति" इत्यादिना मुक्तैरप्राकृतैकानेकशरीरपरिग्रहस्येच्छानुसारेण सद्भावप्रतीत्या तदविरोधायाशरीरत्वश्रुतिः प्राकृतकर्मकृतदेहाभावमेव बोधयतीति स्वीकार्यमिति भावः । नन्वात्मनां नित्यनिर्लेपानां कर्तृत्वभोक्तृत्वाद्यभावेन बन्धककर्मकर्तृत्वरूपं बद्धत्वं परिपूर्णब्रह्मानुभवितृत्वरूपं नित्यत्वमुक्तत्वादिकञ्च न युज्यत इति आत्मत्रैविध्योक्तिर्विरुद्धेति सांख्यमतमाशङ्क्याह **आत्माक्कलुक्कु** इति । एकस्मिन् शरीरे जाग्रदादिषु केवलसाक्षित्वात् यथात्मैक्यम्, तथैव

---

வியகிறுல் அதன் சுய தன்மைகள் விளக்கமாகத் தெரிகின்றன என்றும் ஆகும். இங்ஙன் கொள்ளாது போனுல் "ஆத்மாவின் அறிவு நித்தியமானது—அவைகள் அடைப்பு நீங்கிறுல் வெளிப்படுகின்றன. இதுதான் உண்மை அவைகள் புதியதாக உண்டாகின்றன என்பது தவறு" எனக் காட்டும் பிரமாண வசனங்களோடு முரண்படும் முகதியில—ஜீவன் கற்பாறைபோல் ஏதுமற்று நிச்சலனமாக இருப்பான் என்ற நையாயிக மதம் எல்லா

विभागமுண்டோ? "तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्" என்கிற படியே सर्वரும் नित्यमुक्तனன்றோ என்பார்க்கு पुरुषभोगापवर्ग तदुपायशास्त्रங்களும்

नानाशरीरेष्वपीति तदद्वैतमाशङ्क्य, "जन्मादिव्यवस्थातः पुरुषबहुत्वम्", "इति सूत्रेण जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धम्" इति कारिकया च तन्मते तन्नानात्वसाधनात् तदनुसृत्यात्रापि बहुवचननिर्देशः। आत्मनां कर्तृत्वादिक नास्तीत्यपि तदभिमतम्। तथासति मुक्त्यनुपपत्तिरिति स्वीकारात्। तथाच तद्भाष्ये दृश्यते—तार्किका आत्मनः कर्तृत्वादिकमिच्छन्ति। तेषां मोक्षानुपपत्तिः। अहं कर्तेत्यादिबुद्धेरेव गीतादिष्वदृष्टोत्पत्तिहेतुतयाऽभिधानात् तस्याश्च तन्मतरीत्या सत्यविषयकत्वेन तत्त्वज्ञाननिवर्त्यत्वासंभवात्। अतश्श्रुत्युक्तमोक्षानुपपत्त्याऽकर्तृत्वमात्मनोऽस्माभिरङ्गीक्रियत इति। ननु "भोक्तृभावात्" इति सूत्रेण पुरुषोऽस्ति भोक्तृभावादिति कारिकया अत्र पुरुषस्य भोगस्वीकृत इति भाष्येण च विरोधात्कथं तन्मते भोक्तृत्वाभावकथनं मूलकृतामुपपद्यत इति चेन्न; विषयभेदादुभयोपपत्तेः। उत्तरत्र, "चिदवसानो भोगः" इति सूत्रेण पुरुषेऽङ्गीकृतस्य तस्य चित्येव पर्यवसानोक्त्या भोक्तृत्वस्य स्वरूपस्फुरणात्मकत्वसिद्धेः निषिद्ध्यमानस्य तु तस्य कर्मफलभोक्तृत्वादिरूपत्वात्। अधिकं सांख्यमतखण्डने भविष्यति। **तस्मान्न बध्यत** इति। अस्य च "संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः" इत्युत्तरार्धम्। तथाच प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेप इत्येवाङ्गीकार्यमिति नित्यमुक्ते तस्मिन् न बद्धमुक्तादिविभाग इति भावः। तदेतत् खण्डयति **पुरुषभोगेत्यादिना**। कर्तुरेव नियोजनीयतया पुरुषस्याकर्तृत्वे "स्वर्गकामो यजेत, मुमुक्षुर्ब्रह्मोपासीत" इत्यादिभोगापवर्गोपायविधायकवचननिचयविरोधस्स्यादिति भावः। ननु पुरुषस्याकर्तृत्वेपि, विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि चेति विज्ञानशब्दितपुरुषीयान्तःकरणस्य प्रकृतिविकारभूतस्य कर्मकर्तृत्वसम्भावनया शास्त्रसार्थक्यमिति चेत्तत्राह **स्वसिद्धान्ते**ति। पूर्वोक्तरीत्या स्वेनापि पुरुषभोक्तृत्वस्वीकारात् तद्द्वैविध्यकल्पने प्रमाणाभावात्, प्रकृतेरेव कर्तृत्वाङ्गीकारे तत्समानाधिकरणभोक्तृत्वस्यापि तद्गामितापत्तेश्चेति स्वसिद्धान्तव्याघात एवेति भावः। तथाच वेदान्तसूत्रं—शक्तिविपर्ययादीति। नन्वकर्तुरपि भोक्तृत्वं दृष्टम् "अकर्तुरपि फलोपभोगोऽन्नाद्यवदिति सांख्यसूत्रे पाचककृतान्नादेरकर्त्रापि राज्ञोपभुज्यमानत्वादिति हि सिद्धान्तितमिति चेन्नैवम्। भोक्तृत्वपदेन सुखदुःखान्यतरभोक्तृत्वस्यैव विवक्षितत्वया तस्य च सुखादिहेतुभूतकर्मकर्तृत्वसामानाधिकरण्यावश्यंभावात्। "शास्त्रफलं प्रयोक्तरि" इति न्यायात्। अन्यथा सर्वपुरुषसाधारणान्तःकरणादेः कर्तृत्वे तत्फलोपभोगस्यापि सर्वसाधारण्यापत्तेः। तथाच उपलब्धिवदनियम इति सूत्रे श्रीभाष्ये आत्मनो कर्तृत्वे

பிரமாண வசனங்களோடும் விரோதமடையும் முக்தியில் ஜீவனுக்கு உடலில்லை என்றால் கர்மவினைப்பயனைய் வரும் உடலில்லை என்றுபொருள்

ஆத்மாக்கள் அனைவரும் எக்காலத்தும் முக்தர்கள் அவர்களுள் ஸம்ஸாரமுடையவர், அது அற்றவர் என்ற பிரிவு தோன்றலாகாது இவை எல்லாம் உடலுக்குத் தான் என்று சிலர் சொன்னார்கள் அவர்களுக்கு—ஜீவனுடைய இஹபரலோக ஸாதநங்களைச் சொல்லும் சாஸ்திரங்களெல்லாம் வீணாகும்.

**स्वसिद्धान्तवाक्य**ங்களும் **विरोधिक्**கும். இப்படியே **मोक्ष**த்தை **नित्यमात्रहेतुकम्** என்பார்க்கும், **अविद्या-काल-नियति-यदृच्छादिविशेषहेतुक**ம் என்பார்க்கும், **निर्हेतुक**ம் என்பார்க்குமுள்ள **विरोध**ம் கண்டு கொள்வது.

**हेतुसाध्य**மானாலும் **उत्तरावधि**யில்லையாகலாம் என்னுமிடம் **प्रायश्चित्तादि-**

---

प्रकृतेश्च कर्तृत्वे तस्यास्सर्वपुरुषसाधारण्यात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः; नैव वा कस्यचित्। आत्मनो विभुत्वाभ्युपगमात् सन्निधानमपि सर्वेषामविशिष्टम्। अत एव चान्तःकरणादीनामपि नियमो नोपपद्यते। यदायत्ता व्यवस्था स्यात्" इति।

एवं मोक्षस्वरूपं विशोध्य पराभिमतं तत्साधनभेदमपि शोधयति **इप्पडिये** इति। उक्तपक्ष इवेत्यर्थः। अन्वयश्चास्याग्रे विरोधो द्रष्टव्य इत्यनेन। **नित्यमात्रहेतुके**ति। नित्यभूतप्रकृत्यादिमात्रहेतुकेत्यर्थः। मात्रशब्देन वक्ष्यमाणविशेषहेतुव्यवच्छेदः। मोक्षो नित्यसिद्ध अहेतुक इति यावत्। तदुक्तम् "आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थारम्भः" इति सूत्रावतारिकायां सांख्यप्रवचनभाष्ये प्रकृतेरेव स्रष्टृत्वं स्वमोक्षार्थम्। तस्यानित्यत्वादिति। आत्मार्थत्वात्=स्वार्थत्वात्। आत्मार्थारम्भः=जीवात्मार्थारम्भः। तथाऽविद्याहेतुकत्वं ज्ञानकर्मसमुच्चयवादिनां भास्करादीनां पक्षः। अविद्या=विद्येतरत् कर्म। तत्र ज्ञानहेतुकत्वं स्वस्यापि सम्मतमिति तदनुत्कीर्तनम्। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते, कर्मणैव हि संसिद्धिमास्थिता जनकाद्य इत्यादिकमत्र प्रमाणम्। कालः=प्रशस्तः कालः उत्तरायणादिः। न तु कालसामान्यम्। तद्धेतुकत्वस्यानिराकार्यत्वात्। "अग्निर्ज्योतिरहःशुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥" इत्यादिकं भीष्मादीनामुत्तरायणकालप्रतीक्षा चात्र तद्धेतुकत्वे प्रमाणमिति केचिद्वदन्ति। नियतिः=विधिः, जन्मान्तरीयं स्वकृतं सुकृतमिति यावत्। यदृच्छा=दैवादागतं सुकृतम्। **आदिना**ऽज्ञातसुकृतपरिग्रहः। एतदन्यतमहेतुकत्वमपि मुक्तेः केषाञ्चिदिष्टम्। **संकल्पसूर्योदये** चाद्दराचार्याः, "कालस्वभावनियतियदृच्छादिषु वस्तुषु। कारणं किमिवात्रेति तापसैरपि चिन्तितम्" इति। अत्र=मुक्तौ। यद्यपि अविद्यापि कर्म नियत्यादिरपि। तथापि—सुकृतसामान्यं पूर्वत्र। उत्तरत्र तद्विशेष इति भिदाऽनयोर्बोध्या। **निर्हेतुके**ति। अस्मदीयानामेव केषाञ्चिदयं पक्षः। भगवतः पुत्रस्थानीयानामस्माकं मोक्षो दायधनमिव स्वतः प्राप्त इति प्रतिबन्धकनिवृत्त्यंशेऽपि न हेत्वपेक्षेति **विरोधे**ति। एषां परस्परविरोधः, उपासीतेत्युपायविधिविरोधः, "निशि नेति चेन्न...अतश्चायनेऽपि दक्षिणे" इत्यादिसूत्रविरोधः इत्यादिकं भाव्यमित्यर्थः। ननु मोक्षस्योपायसाध्यत्वे घटादिवत् कादाचित्कत्वापत्त्योत्तरत्र तदभावे संसारोन्मज्जनप्रसङ्ग इत्यत्राह **हेतुसाध्ये**ति। हेतुसाध्यभावपदार्थस्यैवोत्तरावधिसद्भावेन ध्वंसप्रतियोगित्वं दृश्यते यथा घटादेः

---

அவர்களின் சொந்தமான ஸாங்கிய சாஸ்திரமும் முரண்படும இவ்விதமே மோக்ஷத்தைப் பற்றி பலவித விவாதங்கள் இருக்கின்றன நித்தியமான ஒரு காரணத்தால் மட்டுமே வருகிறது அறியாமை, காலம், ஓர் இயற்கையின் நியதி, தற்செயலான நிகழ்ச்சி இவைகள் மூலம் வருகிறது ஓர் காரணமு மின்றியே வருகிறது இத்யாதி இவை எல்லாம் மிகவும் முரண்பட்டவை

साध्यपापक्षयादि களிலே प्रसिद्धம்

संसारம் आरोपமென்னிலும் आरोपावस्थैயும் आरोपनिवृत्त्यवस्थैயும் பிரியக் (கண்டு)கொள்ளவேணும். இவர்களுக்கு कर्तृत्वभोक्तृत्वங்கள் இல்லை என்கிற शास्त्रங்கள் निरपेक्षकर्तृत्वादिनिषेधपरங்கள் गुणकर्तृत्वம் சொன்னவிடம் क्षेत्रज्ञனுடைய

ध्वंसस्य तु तादृशत्वेपि तथात्वनियमो न । यथा प्रायश्चित्तसाध्यस्यापि पापक्षयादेः । न हि क्षीणमेव पापं स्वरूपतः पुनरुदयते । तथैव मोक्षस्यापि सर्वपापध्वंसरूपत्वादुत्तरावध्यभावोपपत्तिः । ध्वंसस्य ध्वंसाभावादिति भावः । ननु मोक्षस्य संसारनिवृत्तिरूपत्वेन जीवस्य वस्तुतो निर्लेपस्य संसारासंभवात्तस्मिंस्तदारोप एव वाच्य इति केयं तन्निवृत्तिः ? कथञ्च तस्याः हेतुसाध्यत्वमित्यत्राह संसारमिति । न गतिविशेषात् निष्क्रियस्य तदसम्भवात्, न कर्मणाप्यतद्धर्मत्वादित्वादिभिस्सूत्रैः निष्क्रियस्य जीवस्य गत्यसंभवात् शरीरप्रवेशाद्यनुपपत्त्या, कर्मणोपि कर्तृभूतप्रकृतिगतत्वेन जीवधर्मत्वाभावात् न जीवस्य तन्निबन्धनस्संसार इति प्रतिपादनात्, प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् । प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा" इत्यादिस्मृतेश्च प्रकृतिपुरुषान्यताख्यातिहानेः पुरुषे संसार आरोपित इति तन्मतम् । पिरियक्कोळ्ळवेणुमिति । संसारस्य जीवे आरोपितत्वेपि आरोपावस्था तन्निवृत्त्यवस्था च व्यवस्थया पृथक् प्रतिपन्ने एवेति मोक्षस्याहेतुसाध्यत्वे एकतस्सर्वदा तदारोपो वा, अपरतस्सर्वदा तन्निवृत्तिर्वा भवेदिति तयोर्व्यवस्था न स्यादित्याशयः । ननु जीवस्य कर्तृत्वाद्यङ्गीकारे प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥....ईश्वरोहमहं भोगीत्यादिना तस्य कर्तृत्वभोक्तृत्वादिनिराकरणं कथमुपपद्यत इत्यत्राह इवर्कळुक्कु इति । जीवानामित्यर्थः । जीवगतकर्तृत्वादेरनेकपदार्थसापेक्षतया तस्य निरपेक्षं कर्तृत्वादिकं नास्तीत्येतत्परः पूर्वोक्तप्रवाद इति भावः तथा च गीतावचनं, "शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा तस्यैते पञ्च हेतवः ॥ ...तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इति । ननु "प्रकृतेः क्रियमाणानि" इत्यत्र प्रकृतेर्गुणैः=सत्वादिभिः क्रियमाणानि कर्माणीति व्याख्यानात् गुणानामेव कर्तृत्वं गीताचार्याभिमतं प्रतीयत इत्यत्राह गुणकर्तृत्वमिति । क्षेत्रज्ञोऽत्र बद्धः । "एतत्

ஒரு காரணத்தின் மூலம் மோக்ஷம் கிடைப்பதானால், அப்போது குடம் முதலிய பொருள் போல், மோக்ஷமும் தோன்றி மறைந்துவிட வேணுமே என்னில்—காரணத்தின மூலம் தோன்றுபவை எல்லாம் மறைந்துவிட வேணுமென்று கட்டாயமில்லை உதாஹரணமாக—பாபம் தொலைகிறது ப்ராயசசித்தம் என்னும் காரணத்தால் ஆனாலும் அத்தொலைவு தொலைந்து போன அதே பாபம் மீண்டும் வநது விடுவதில்லையே? ஸம்ஸார ஸம்பந்தம் ஜீவனுக்கு உண்மையல்ல தனனிடம் அவன் ஏறிட்டுக் கொண்டது தான் என்னும் அவாகளுககும்—ஏறிட்டுக கொண்டதும், அது கழிந்ததும் வேறு வேறாகக் கொள்ளவேணும் "ஜீவனுக்கு ஒன்றைச் செய்யும் சக்தியில்லை,

मुख्यமாக வர्तिப்பிக்கலாம். सत्व रजस्तமஸ்ஸுக்களுக்கு आवार्यावारकभावமும் सन्निवेशविशेषங்களும் சொல்லும் वाक्यங்களை उद्भूतसत्वादिगुणविशिष्टமான त्रिगुणद्रव्यप्रदेशविशेषத்திலே तत्परங்களாக்கலாம்

இவற்றில் सत्वமாவது लाघवप्रकाश सुखविशेषங்களுக்கு कारणமாயிருப்ப

---

नुसारेण मुख्यमेव निर्वाह्यमुत्तरवाक्यमादाय। पूर्ववाक्यमादाय तु यत्र साक्षादेव तमआदिषु वर्णव्यपदेशः, तादृशश्रुतिवचनानां गौणतया निर्वाहः क्रियते। तमआदिगणानां तेजोबन्नरूपविकारासम्भवात्। अजाया एव सम्भवादिति। अस्मिन् पक्षे मूले अजामन्त्रगतेति। तदुपलक्षणमन्यवाक्यस्यापीत्यपि भाव्यम् ननु सत्वादीनां केवलगुणत्वे द्रव्यैकसाधारणावार्यावारकभावादिकथनं सन्निवेशविशेषप्रदर्शनञ्च कथमुपपद्येयातामित्यत्राह सत्वेति। "रजस्तमश्चाभिभूय सत्वं भवति भारत। रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा॥" इत्यादिनोद्भूतसत्वादीनामनुद्भूतगुणान्तरावारकत्वमुच्यते। "वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः" इत्यायुर्वेदोक्तवातपित्तकफादीनां द्रव्याणां दोषभूतानामिव तत्तद्गुणकाहारसेवनादिनेदं भवति। सन्निवेशेति। ऊर्ध्वाधोभागादिस्थितिरित्यर्थः। तथा च पौराणिकं वचनम्—"ऊर्ध्वं सत्वविशालस्तमोविशालश्च मूलतस्सर्गः मध्ये रजोविशालः ब्रह्मादिस्तम्बपर्यन्तः" इति। भास्करभाष्ये तु "लोहितशुक्लकृष्णामिति श्रुतिस्वारस्यानुरोधेन शुक्लशब्दितं सत्वमेव मध्ये तिष्ठति। उभयोरपि भागयोरजस्तमसी" इति सन्निवेशविपर्यासः प्रत्यपादि। उद्भूतेति। तथा च संस्थानलक्षणसन्निवेशादेः द्रव्यधर्मतया केवलं गुणभूतसत्वादौ याथाश्रुतेऽसंभवेऽपि उद्भूततत्तद्गुणकप्रकृतिद्रव्यप्रदेशविशेषनिष्ठत्वविवक्षया तेषां निर्वाहः कार्य इति भावः। केचित्तु "स्यान्नागरद्राविळवेसरञ्च क्रमेण वै सत्वरजस्तमांसि।" इत्यादिशिल्पशास्त्रोक्तविमानानां सत्वादिरूपाणां श्रीपाद्मे क्रियापादे नवमाध्याये, "आस्थूपि कण्ठमारभ्य चतुरश्रं प्रकल्पितमित्यादिना सन्निवेशाः प्रपञ्चिता इति प्रकृतमूलं तन्निर्वाहपरं व्याख्यान्ति। तन्न ; तत्र सत्वादिशब्दस्य विमानविशेषवाचितया द्रव्यपरत्वेन स्फुटत्वात्तत्र सन्देहानुदयात्।

एवमेतावता सत्वादीनां केवलगुणत्वे बाधकान्युद्धृत्याथ तेषां प्रत्येकं लक्षणं कार्यद्वारा दर्शयति इवற்றில் इति। सत्वादिसमुदायघटकेत्यर्थः। लाघवं="पतनस्वभावत्व गुरुत्वं, तदभावो लघुत्वम्" इति न्यायतत्त्वोक्तरीत्या गुरुत्वाभावरूपम्। तत एव पततपदार्थस्वभावतया गुरुत्वमपि न गुणान्तरम्। अतीन्द्रिये तस्मिन् तद्धेतुगुणान्तरत्वकल्पने प्रमाणाभावात्। एतच्चोपरि स्पष्टीभविष्यति। प्रकाशः=

---

கொள்ளலாம் இம்முக் குணங்களுக்குள் ஒன்றையொன்று மூடிமறைப்பதாயும் கீழ்மேல் நடுவிலுள்ளதாகவும் கூறும வசனங்களுக்கு—இம்முக் குணங்களும் தலையெடுத்த அவ்வவோ பிரகிருதியின் பாகங்களில் உண்டாகும் நிகழ்ச்சிகளே கருத்தாகும

இம்மூன்று குணங்களில் – ஸத்துவமாவது - அடை அற்ற நிலை, நல்ல அறிவு, சுகம் இவற்றுக்குக் காரணமான ஒரு தன்மை இது - இன்பம், அறிவாற்றல இவைகளில டனிதனை ஈடுபடச்செய்து ஸம்ஸாரத்தில் ஆழ்ங

தொரு குணविशेषम் இது सुखஸங்கத்தாலும் ज्ञानஸங்கத்தாலும் क्षेत्रज्ञரை நிபந்திக்கும் என்றது अनुचितसुखज्ञानसङ्गविषयம் இவ் सत्वं சிலர்க்கு 'जायमानं हि पुरुषं यं पश्येत्

यथार्थतया विषयावभासः । रजआदिना विपरीतबुद्धिजननात् । सुखविशेषः=प्रकृष्टं सुखम् । सुखाभासस्य रजआदिनापि जननात् । अत्र, "सत्वं लघु प्रकाशकमिष्टमिति **सांख्यकारिका** । इष्टं=सुखम् । "तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम्" इत्यत्र "अरोगताहेतुः" इति **गीताभाष्योक्त**-मप्यत्रोपलक्षणीयम् । अत्र लाघवहेतुत्वे सति गुणत्वमित्यादिरीत्या प्रत्येकमेव लक्षणत्वं वाच्यम् । अन्यथा शेषवैयर्थ्यात् । द्रव्ये रजआदौ चातिव्याप्तिवारणाय यथासंख्यं विशेष्यविशेषणं भम्म् । एवमपि सर्वकार्यकारणभूतायां शक्तौ अतिव्याप्तिवारणाय शक्त्यतिरिक्तत्वं असाधारणकारणत्वं वा निवेश्यम् । एवमेव सुखादिहेतुत्वघटितलक्षणे शक्त्यतिरिक्तत्वनिवेशपक्षे शब्दादीनामप्युक्त-विशेषणत्रयवत्त्वात् प्रसक्तातिव्याप्तिवारणायातीन्द्रियत्वमपि क्रोडीकार्यम् । तेषाञ्चैन्द्रियकत्वात् सत्वादी-नाञ्चागमैकसमधिगम्यत्वान्नातिव्याप्त्यसम्भवौ भवतः । असाधारणकारणत्वनिवेशपक्षे तु नेदं देयम् । शब्दादीनां सुखदुःखादिसाधारणकारणत्वात् । ननु तत्त्वप्रकाशकस्य सत्वस्य गीतादिषु कथं बन्धकत्वोक्तिः? तथात्वे वा तस्य बन्धमोक्षोभयकारणत्वमुच्यमानं कथं घटते ? परस्परविरुद्धो-भयहेतुत्वस्यैकस्मिन्नसंभवादित्यत्र सत्त्वव्यक्ति[दशा]भेदेनोभयोपपत्तिं वाक्यद्वयेनाह **इदु सुखसङ्गे**ति । **अयं भावः**—सुखसामान्यं यथावस्थितवस्तुविषयकज्ञानसामान्यञ्च सत्वसमन्यस्य कार्यं भवति । विशेषश्च विशेषस्य । तत्र स्वरूपानुचितसुख-तादृशवस्तुविषयकज्ञानविशेषौ अनतिप्रवृद्धसत्वकारितौ, स्वरूपोचितौ तु तौ प्रवृद्धसत्वकारितौ च भवतः । तथा च यत्र सत्वस्य ज्ञानसुखादिसङ्गद्वारा बन्ध-कत्वमुक्तम्, तत्र, "तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चा-नघ" इत्यादौ, सत्वमनतिप्रवृद्धं तत्कार्यभूतसुखज्ञाने चानुचितत्रैवर्गिकफलविषयके ग्राह्ये । यत्र तु "सत्वात्सञ्जायते ज्ञानं ज्ञानान्मोक्षोऽभिधीयते" इत्यादिना सत्वस्य मोक्षकारणत्वमुक्तं भवति, तत्र सत्वं प्रकृष्टं अत्यन्तविवृद्धञ्च ग्राह्यम् । सुखज्ञाने च स्वरूपोचिते इति । एतदेवाह **इस् सत्वमि**ति । यदेवान्यत्र बन्धहेतुः तदेवेत्यर्थः । **शिलर्कु**=जन्मान्तरकृतजन्तुजायमानदशाभाविमधुसूदनकटाक्ष-हेतुभूताज्ञातयादृच्छिकादिसुकृतविशेषशालिनाम् । **जायमानं ही**ति ॥" "सात्त्विकस्य तु विज्ञेयस्य

காற்படச் செய்யும் என்பதற்குக் கருத்து வேறு. அதாவது - சிற்றின்பம் - சிற்றறிவு முதலியன உண்டாக்கும் என்று ஆனால் இந்த ஸத்துவமே - சிலர்கு-கருவிலே திருவுடையராய் எம்பெருமானின் கடாக்ஷம் பெற்ற வர்க்கு—ஒரு புண்ணியம் விளையும் வேளையிலே மிகவும் தலைதூக்கி நின்று இறையின்பத்தில் மூட்டி அதன் மூலம் முக்தி தரும் இதற்குப பலர்

मधुसूदनः' इत्यादिகளிற்படியே ஒரு पुण्यविपाकदशैயிலே अत्यन्तोद्भूतமாய்க் கொண்டு भगवदनुभवसुखादिमङ्गத்தாலே मोक्षोपयुक्तமாம். இதற்கு वृत्र घण्टाकर्ण क्षत्रबन्धु तुलाधार विदुर धर्मव्याध शबरी गोपिका कौसल[नीळा कंस जह्नु] प्रभृतिகளும் उदाहरणம்.

---

वैमोक्षार्थचिन्तकः" इत्युत्तरार्धम् । मधुसूदनः=मधुकैटभसूदनसूचितरजस्तमस्सूदनसमर्थकटाक्ष-विशेषवान् भगवान् । मधुकैटभौ हि रजस्तमस्स्वरूपौ भगवच्छास्त्रप्रसिद्धौ । एतेन भगवत्कटाक्ष-विशेषप्रभाव उक्तो भवति । ओरु पुण्यविपाकेति । कर्मणां पूर्वकृतानां विषमविपाकसमयत्वात् जाय-मानकटाक्षवशतः कस्यचित्पुण्यस्य भवति तादृशी विपक्वता, येन स मोक्षान्तैश्वर्यभाक् भवतीति भावः । अत्यन्तोद्भूतत्वं=एकैकांशमात्रावशिष्टे रजस्तमसी यथाऽभिभूय सत्वं स्वकार्यकरणसमर्थं भवति, तथा चतुर्दशभिरंशैरभिवृद्धिः । भगवदनुभवसुखादीत्यादिना तदात्मकपरभक्तितः पश्चाद्भाविन्यौ परज्ञानपरमभक्ती दर्शिते भवतः उत्तरोत्तरभगवदनुभवेच्छा परज्ञानम्, तद्विच्छेदासहनं परमा भक्तिरिति सम्प्रदायः । सत्वस्य भगवदनुभवप्राप्तिहेतुत्वं "सत्वं विष्णुप्रकाशकम्, सात्विकैस्सेव्यते विष्णुः, सात्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्" इत्यादिषु प्रसिद्धम् । मोक्षोपयुक्तेति । प्रवृद्धसत्वं, पुरुषस्य निस्संकोचभगवदनुभवं विना स्वात्मधारणस्याप्यशक्यतापर्य-न्तमभिनिवेशमुत्पाद्य भगवताप्यनतिक्रमणीयं लक्ष्मीचरणारविन्दादि शपथं कारयित्वा सर्वतो भगवन्तं परिवार्य आकारयित्वा पुरुषाय सपद्येव मोक्षानन्दप्रतिपादनेच्छां तदनुगुणव्यापारञ्च भगवत उत्पाद्य पुरुषस्य सर्वबन्धविनिर्मोकपूर्वकमोक्षप्रयोजकं भवतीति भावः. सत्त्वगुणस्यैवं फलत्वे पौराणिकोदाहरणा-न्याह इदक्कु इति । सत्वस्य मोक्षोपयोगित्व इत्यर्थः । वृत्रासुरस्य कथा, भारते शान्तिपर्वणि, "सत्येन तपसा चैव विदित्वा संक्षयं ह्यहम् । न शोचामि न हृष्यामि भूतानामागतिं गतिम्" इति सात्त्विकतया स्वयमसुरयोनिरपि सुखदुःखयोस्समो भूत्वा सनत्कुमारमासाद्य विदितभगवत्प्रभावः भगवन्तमेव कीर्तयन् "एवमुक्त्वा स कौन्तेय ; वृत्रः प्राणानवासृजत् । योजयित्वा तथात्मानं परं स्थानमवाप्तवान्" इति मुक्तिं प्रापेति श्रूयते । घण्टाकर्णकथा च हरिवंशस्था । तथाहि कुबेरा-नुचरः पिशाचरूपी सः, "सततं दूषयन् विष्णुं घण्टामाबध्य कर्णयोः । मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन्" इत्यन्वर्थघण्टाकर्णनामकः पूर्वं तामसः "अहं कैलासनिलयं आराध्य वृषभध्वजम्" इति शिवभागवतो भूत्वा तत्संकाशे सत्त्वगुणोन्मेषेण मोक्षं भिक्षित्वा "मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः । तस्मात् गत्वा च बदरीं तत्राराध्य जनार्दनम्" इति स्वयं तद्दानाशक्तया तेन निराकृतः उपायं बोधितश्च तथैवानुष्ठाय, "स च स्वर्गी गतस्वर्गं आज्ञया केशवस्य ह" इति स्वर्गशब्दितमोक्षलोकं जगामेति पाद्मोत्तरपुराणे क्षत्रबन्धुकथाऽवगन्तव्या अयञ्च सूर्यवंशीयो राजापशदो राज्याद्भ्रष्टो

---

உதாஹரணம் வ்ருத்திரன், கண்டாகர்ணன், க்ஷத்திரபந்து, துலாதரன், ஸ்ரீவிதுரர், தர்மவ்யாதர், ஸ்ரீசபரி, கோபகன்னிகள், கௌஸலன் முதலானோர்

नष्टश्च कानने पर्यटन्, "क्षत्रबन्धुरिति ख्यातो राजा प्राणिविहिंसकः ॥" इति दस्युभिस्समं संसर्गेण तामसपुरुषो भूत्वा अतिहिंस्रः नारदं कदाचित् पथ्यपश्यत्। नारदश्च, "संत्यक्ते बन्धुलोकेन तस्मिन् दुर्वृत्तचेतसि। चिन्तां चकार स मुनिः क्षत्रबन्धौ दयापरः" इति कृपया तस्मै तत्त्वान्युपदिदेश। ततश्चाचार्यकटाक्षेण सत्त्वोद्रिक्तो मुक्तोऽभूदिति। "अन्यत्राप्युक्तं", "पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत्। आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत्" इति। पुण्डरीकोऽपि नारदस्यैव शिष्यः। **तुलाधारश्च**, "वाराणस्यां महाप्राज्ञः तुलाधारः प्रतिष्ठितः" इति वाराणसीवासी, विक्रीणन्तश्च पण्यानि तुलाधारं ददर्श हेति वैश्यवृत्तिः कश्चन धार्मिकः। तत्सकाशे धर्मसूक्ष्माननुपरीक्षत् जाजलिर्नाम ब्राह्मणः। एवञ्च राजसयोर्नरयोरपि सत्त्वप्रधानतयाऽयं तेनसह, ततोऽचिरेण कालेन तुलाधारस्स एव च दिवं गत्वा-महाप्राज्ञौ विहरेतां यथा सुखमिति मुक्तिं भेजतुरिति **शान्तिपर्वणि** श्रूयते। विदुरश्च महाप्रभावः, "शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे॥" इति शूद्रजातिः. भगवता कृष्णेन "भीष्मद्रोणावतिक्रम्य माञ्चैव मधुसूदन। किमर्थं पुण्डरीकाक्ष भुक्तं वृषलभोजनम्" इति ज्ञानवयोवृद्धान् भीष्मादीनप्यतिक्रम्य "संभ्रमैस्तु य-गोविन्द एतन्नः परमं धनम्" इति सादरं विदुरप्रार्थितेन तद्गृहमुपगम्य "विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च" इति स्वयंभोजनादिभिस्सभाजित इति **महाभारते** प्रसिद्धः। किरातवंशोत्पन्नो धर्मव्याधश्च, "पिता माता च भगवन्नेतौ मे दैवतं परम्। यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम्॥" इति मातृपितृशुश्रूषणनिरतः "मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्" इति मिथिलानगरे मांसविक्रेता बभूव। तं कदाचित् "यदि विप्र न जानीषे धर्मं परमकं द्विज। धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम्" इति कयाचित्पतिव्रतया प्रेषितः कौशिको नाम ब्राह्मणस्समागच्छत्। स च तस्मै धर्मसूक्ष्माण्युपदिदेशेति **भारतारण्यपर्वणि स्थितम्**। शबरी च "श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी" इत्युक्ता पम्पातीरे मतङ्गाश्रमे निवसन्ती—"आगमिष्यति ते रामस्सुपुण्यमिममाश्रमम्। स ते प्रतिग्रहीतव्यस्सौमित्रिसहितोऽतिथिः" इत्याचार्यानुशिष्टा भगवदागमनं यावत्तत्रैव प्रतीक्षमाणा आगते तस्मिन्, "मया तु विविधं वन्यं सञ्चितं पुरुषर्षभ। तवार्थे पुरुषव्याघ्र पम्पायास्तीरसम्भवम्" इति सम्प्रार्थ्य फलमूलान्युपहरन्ती, "शबर्या पूजितस्सम्यक् रामो दशरथात्मजः।" इति भगवन्तं सम्यगाराध्य तेन सन्दृष्टा "पादमूलं गमिष्यामि यानहं पर्यचारिषम्" इति स्वाचार्यचरणावगादिति **श्रीमद्रामायणकथाऽत्रानुसंहिता**। गोपिका च बृन्दावने श्रीकृष्णरासमण्डले प्रवृत्ते तदीयं वेणुरवं श्रुत्वेतरासु सर्वासु गोपकन्यासु तत्संश्लेषणसुखाय स्वैरं गतासु "काचिदावसथस्यान्ते स्थित्वा दृष्ट्वा बहिर्गुरुम्। तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना॥ तच्चित्तविमलाह्लादक्षीणपुण्यचया तदा। तदप्राप्तिमहदुःखविलीनाशेषपातका॥ चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्। निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका" इति स्वयं तत्र गन्तुमक्षमा महत्तरतच्चिन्तनसुख-दुस्सहतदलाभजदुःखाभ्यां तदैव विनष्टाशेषपुण्यपापतया विगलितबन्धना "चिन्तयन्ती" इत्युक्त्या **चिन्तयन्तीत्येव** सम्प्रदाये कृत

ரஜஸ்ஸாவது चलनोपष्टम्भहேதுவாய रागविशेषादिजனகமாய்க்கொண்டு कर्मवश्यருடைய ப்ரவ்ருத்திவிசேஷங்களுக்கு காரணமான गुणविशेषम् இது काम्य निषिद्धकर्मविशेष

---

नामधेया मुक्तिं प्रापेति कथा विष्णुपुराणेऽधिगन्तव्या। एवं भागवतेपि। शान्तिपर्वणि 'क्षेमदर्शी नृपसुतः यत्र क्षीणबलः पुरा। मुनिं कालकवृक्षीयमाजगामेति नश्श्रुतम्' इत्यारभ्य कौसल्यकथा प्रतिपाद्यते। तथाहि मैथिलेन राज्यात् भ्रंशितस्स तं मुनिमासाद्य "अलब्ध्वा मद्विधो राज्यं ब्रह्मन् किङ्कर्तुमर्हति। अन्यत्र मरणाद्दैन्यादन्यत्र परसंश्रयात्। क्षुद्रादन्यत्र चाचारात् तन्ममाचक्ष्व सत्तम" इति पृष्ट्वा तेनर्षिणा प्रतिबोधितः मैथिलेन सन्धिं प्रापितश्च। "ततः कौसल्यमाहूय मैथिलो वाक्यमब्रवीत्। धर्मेणो बुद्धितश्चैव बलेन च जितं मया। अहं त्वया चात्मगुणैर्जितः पार्थिवसत्तम। आत्मानमनवज्ञाय जितवद्वर्तितां भवान्" इति शत्रुणैव संस्तुतः क्रमेणोद्रिक्तसत्वो मुक्तोऽभूदिति। अस्य तु नाम कौसल्यकोसलेत्यादिरूपेण बहुधा श्रूयते। अत्रमूले अस्यानन्तरं "नीलाजङ्घनुकंसप्रभृति" इत्यनेकोदाहरणमपि क्वचित् दृश्यते। तदा तेषामपि कथा तत्र तत्रोक्तदिशाऽनुसन्धेया।

अथ रजोलक्षणमाह रजस्सावदु इति। सत्वादीनामचेतनप्रकृतिगुणत्वेन केवलघटाद्यचेतनविषये देहाद्यचेतनोपहितचेतनविषये च कार्यभेदविवक्षया प्रथमं रजसः केवलाचेतनसाधारणकार्यविशेषं दर्शयति चलनोपष्टम्भेति। एवं सत्वस्यापि केवलाचेतनसाधारणं लक्षणं पूर्वं "लाघव प्रकाश सुखादि" इत्युक्तत्रितये लाघवहेतुत्वरूपं बोध्यम्। चलनं=देशान्तरसंयोगानुकूलो व्यापारः। उपष्टम्भः=धारणं पोषणं वा। राजसाहङ्कारादीनां सात्विकतामसेन्द्रियभूतोभयाप्यायकत्वात्। "उपष्टम्भकं चलञ्च रजः" इति साङ्ख्यकारिका। अत्रापि प्रत्येकलक्षणत्वं दलानां प्रयोजनादिकञ्च सत्वलक्षण इव भाव्यम्। अथ चेतनैकान्तं रजःकार्यमाह रागविशेषादीति। इदञ्चात्रैव वक्ष्यमाणे रजसः प्रवृत्तिहेतुत्वे द्वारकथनम्। नित्यमुक्तप्रवृत्तीनां केवल भगवदिच्छानुगुणस्वेच्छामूलकत्वात् न तत्र रजःकार्यरागापेक्षेत्यत उक्तं कर्मवश्येति। ततश्च रागादिहेतुत्व.कर्मवश्यप्रवृत्तिहेतुत्वादिकमपि रजोलक्षणं बोध्यम्। ननु सत्वरजोलक्षणे परस्परमतिप्रसक्ते भवतः। सत्वगुणेन प्रथमं ज्ञानसुखसंगजननेऽपि ततस्तत्साधनेषु प्रवृत्तिरपि तेन जायत इति तस्मिन् प्रवृत्तिहेतुत्वस्यानिवार्यत्वात्। एवं रजसा उपायेषु रागादिना सङ्गसमनन्तरं तत्फले सुखविशेषेपि सगोऽवश्यम्भावीति सुखहेतुत्वस्य रजस्यपि प्रसक्तत्वादिति चेत्—अत्र तात्पर्यचन्द्रिका—"सत्वगुणः सुखं प्रधानीकृत्य तदर्थतयाऽन्यत्र सज्जयति। "प्रयोजनेषु सज्जन्ते न विशेषेषु पण्डिताः" इतिवत्। रजोगुणस्तु तत्तद्वस्तूनि क्रियास्वरूपञ्च प्रधानीकृत्य सुखमल्पं प्रभूतं वेत्यत्र उदासीनो भवति। राजदाराभिलाष दुष्पुत्रसंरक्षणवृथाचेष्टादिषु एतद्व्यक्तम्" इति।

---

ரஜஸ்ஸாவது—அசைவு புஷ்டி இவற்றுக்கும், ஆசை முதலியவற்றைத் தூண்டி அதன் மூலமாக ஸம்ஸாரத்தில் சிக்கியவர்களின் முயற்சிகளுக்கும் காரணமாய் அமைந்த ஒரு குணம் முன் போலவே இது சிலர்க்கு—பயனைக்கருதியும்—தடுக்கப்பட்டவைகளிலும் முயற்சியைத் தந்து இடை

सत्त्वத்தால் வர்த்திக்கும் இதுதானே अतिप्रवृद्धसत्त्वத்துக்கு गुणीभविத்து நின்று निवृत्तिधर्मங்களில் शीघ्रप्रवृत्तियால் निस्तारहेतुவுமாம்

तमஸ்ஸாவது गौरवावरणविशेषादिहेतुவான गुणविशेषம் இது प्रमादालस्य

---

तथाचोभयस्योभयकारणत्वेपि तत्तत्कार्यासाधारणकारणत्वं तत्तल्लक्षणीकरणीयमिति उभयत्र, "प्रधानी कृत्य" इति शब्दाभिप्राय इति बोध्यम्। ततश्च, "यजन्ते सात्विका देवान् यक्षरक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" इति कर्मवश्यानां तत्तद्गुणानुगुणविविधरागप्रवृत्त्यादि-दर्शनात् एवमेव प्रवृत्तदोषवारणायात्रापि मूले रजःकार्यरागप्रवृत्त्यादिवैलक्षण्यद्योतनाय रागप्रवृत्तिविशेषशब्दौ प्रयुक्तौ। अथ तदेव वैलक्षण्यं दर्शयति इदु काम्येति। रजसा कर्मसु स्पृहाजनने तदारम्भेण पुरुषस्य पुण्यापुण्यरूपतत्फलानुभवसाधनभूतासु योनिषु नियतं जन्मेति एवंप्रकारेण रजसो बन्धकप्रवृत्तिवि-शेषहेतुत्वमित्यर्थः। उभयोपकारकस्य रजसः सत्वगुणं प्रति किञ्चित्कारमाह इदुताने इति। रज एवे-त्यर्थः। गुणीभवनं=अप्राधान्यं अङ्गता च। सा चोपकारकत्वात्। निवृत्तिधर्माः=मोक्षार्थं क्रियमाणाः क्रियाः। शीघ्रप्रवृत्ति इति। रजोगुणस्य प्रवर्तकत्वस्वाभाव्यादिति भावः। अत्रेदमवधेयम्—यदा रज उद्भूतं भवति, तदा तस्य पूर्वोक्तकाम्यनिषिद्धकर्मप्रवृत्तिहेतुता। यदा तु सत्त्वमभिवृद्धं भवति, तदाऽस्य प्राधान्यहानेः स्वकीयं कार्यकृत्त्वं विहाय सत्वेन स्वकार्यजनने स्वस्वभावानतिलङ्घनेन अयं रजोगुण तत्र निवृत्तिधर्मप्रवृत्त्यादौ शैघ्र्यमात्रमाधत्ते। एवमेव रजसः उद्रिक्ततमोगुणजन्याधोगतिहेतुकर्मस्वप्यपि शैघ्र्यांशमात्रप्रयोजकत्वं भाव्यमिति। निस्तारः=संसारान्मोक्षः। हेतुवुमाम् इत्यप्यर्थकाव्ययेन रजसः पूर्वोक्तबन्धकत्वाकारग्रहणम्। सत्वगुणोक्तरीत्या रजसि विरोधस्याभासीकरणात् एतादृशाकारद्वयोपपत्तिः।

अथ तमोलक्षणमाह तमस्सु इति। गौरवम्=असति प्रतिबन्धे पतनहेतुभूतं पृथिवीजलगतं विलक्षणं स्वरूपं, तादृशशक्तिविशेषो वा। न तु वैशेषिकादीनामिव गुणान्तरम्। तदुक्तं न्याय-सिद्धाञ्जने, "किं तर्हि वस्तुतो(नो) गुरुत्वम्? श्रूयताम्। शक्तयनभ्युपगमपक्षे विलक्षणं स्वरूपमेव। तदभ्युपगमपक्षे तद्विशेष एवेति। विलक्षणत्वं=तेजस्त्वादिभिन्नत्वरूपम्। पृथिवीजलगतस्वरूपञ्च पृथिवीत्वजलत्वे एव। पृथिवीजले हि गुरुणी। शिक्यादिधृतदधिभाण्डादौ गुरुत्वोपपत्त्यर्थं असति प्रतिबन्धक इति। आवरणं=ज्ञानसंकोचः। तथा च सांख्यकारिका, "गुरुवरणकमेव तमः" इति। अस्य तमसः बन्धकताप्रकारमाह इदु प्रमादेति। अनवधानतेत्यर्थः। आलस्यं=अङ्गगौरवप्रयुक्तः कार्यानारम्भः। निद्रा=विषयभोगमरीचिजालैः श्रान्तस्येन्द्रियप्रवृत्त्युपरतिः। सा च सुप्तिसुषुप्तिभेदभिन्ना।

---

யூறு செய்யும் வேறு சிலர்க்கு தலையெடுத்த ஸத்துவ குணத்துக்கு உதவி கரமாய்நின்று—முக்திக்கான வழிகளிலே விடாமுயற்சியை உண்டாக்கி சீக்கிரமே முக்தி பெறவும் வைக்கும்

தமஸ்ஸு—பளுவான தன்மை, அறிவின்மை மயக்கம் முதலியன தரும் ஓர் குணமாகும். இது எல்லோருக்குமே—அறிவுக்குறைவு, சோம்பல், தூக்கம்

निद्रादिகளை उत्पादिத்துக்கொண்டு तमस्ஸாலே बन्धिக்கும். இதின் कार्यங்களில் अनुचितविषयानुपलब्धियும் अवसरप्राप्तनिद्रैயும் बन्धकங்களாகாது இக் गुणविभागத்தை 'तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्' इत्यादिகளிலும், गुणकार्यविभागத்தை

सुप्तौ बाह्येन्द्रियप्रवृत्तिमात्रस्योपरमः। अत एव पुरुषस्तदा मनसा स्वप्नं पश्यति। मनसोऽप्युपरतिः सुषुप्तिः। निद्रादीत्यादिना मूर्च्छाज्ञानसामान्यानुदयादिकं ग्राह्यम्। इयांस्तु विशेषः—यथा सत्त्वं मोक्षकारणमपि कदाचित् पुरुषस्य जायमानभगवत्कटाक्षविरहिणोऽनुचितविषयज्ञानसुखादिसङ्गजननद्वारा बन्धकं भवति, यथा च रजः स्वयं बन्धकमपि प्रकृष्टसत्त्वस्य गुणीभवत् मोक्षार्थप्रवृत्तिशैघ्र्यजननादिना मोक्षप्रयोजकं भवति, न तथा तमः स्वकार्यातिक्रमेण कदापि गुणान्तरस्य कार्यं करोतीति तस्यात्यन्तक्रौर्यहेयतादिकं बोध्यमिति। ननु तमसो निद्रा ज्ञानानुत्पत्त्यादिस्वकार्यद्वारा बन्धकत्वे, "यत् सारभूतं तदुपाददीत", 'अन्या वाचो विमुञ्चथ' इत्यादिना मुमुक्ष्वपेक्षितस्यानुपयुक्तज्ञानाभावस्य "नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥....युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति योगपरिकरतयोक्ताया निद्रायाश्च बन्धकत्वापात इत्यत्राह इदिन् कार्यङ्गळिल् इति। यद्यपि ज्ञानद्रव्यस्योपयुक्तानुपयुक्तकृत्स्नविषयव्याप्तत्वरूपं विभुत्वं स्वाभाविकमिति अनुपयुक्तविषयसम्बन्धसंकोचस्यौपाधिकत्वावश्यम्भावात् मूर्च्छादिवत् सोपि तमःकार्यमेव। एवं रजोवष्टम्भेन प्रवृत्तिशीलानामिन्द्रियाणां तदुपरतिरूपनिद्रापि तद्वत् तमःकार्यमेव। तथापि तयोर्मुमुक्ष्वपेक्षितयोगपरिकरत्वस्यापि प्रामाणिकतया तमःकार्यत्वेपि न तयोः बन्धकत्वमिति भावः। न चैवं सत्त्वरजसी इव तमोपि मोक्षहेतुर्भविष्यतीति पूर्वोक्तव्यवस्थानुपपत्तिरिति वाच्यम्; तस्य मोक्षविरोधिप्रशमनमात्रोपक्षीणतया मुक्तिसाधनत्वाभावात्। यथा भक्त्युत्पत्तिविरोधिनिरसनार्थं कृतानां कर्मणाम्। अत एव मूलेऽत्र, "बन्धकं न भवति" इति व्यतिरेकनिर्देशः। न तु पूर्वमिव, मोक्षोपयुक्तम्, निस्तारहेतुः इत्यन्वयत इति भाव्यम्। अवसरप्राप्तनिद्रेति। अवसरः=सन्ध्याद्वयदिवादिनिषिद्धकालभिन्नकालः। बन्धकं=बन्धद्वारम् ॥

अथ गुणतत्कार्यविवेचने प्रमाणं प्रयोजनञ्चाह इग्गुणविभागत्तै इति। "....सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्। प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत" इति श्लोकशेषः गीताचतुर्दशाध्यायस्थः। गुणकार्येति। तत्तद्गुणकार्यश्रद्धाहारतपोदानादीत्यर्थः। यद्यपि पूर्वमेव गीतायां, "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्"इत्यादिना तत्तद्गुणकार्यभूतप्रकाशादिविभागः प्रदर्शितो भवति, अथापि साक्षाद्गुणकार्यप्रकाशादेस्तत्र प्रपञ्चनम्, इह तु इच्छादिपरम्परया तत्कार्यभूहारादि

முதலிய கெட்ட பழக்கத்தை ஈய்ந்து அதனைவழியே மனிதர்களைக் கெடுக்கும் ஆனால் இதிலும் ஓர் நன்மையுண்டு தவறான வழியினில் அறிவு குறைதலும், குறிப்பிட்ட காலங்களில் தூக்கமும் இதன் காரியங்களாயினும் வரவேற்கத்தக்கவையே. முக்குணங்களின் பிரிவை ஸ்ரீ கீதை பதினான்கா

सप्तदशाध्यायादिகளிலும் கண்டு. सत्त्वोपादेयतान्तिमे' என்கிறபடியே सात्त्विकांशम् उपादेयமென்று அறிந்துகொள்வது இவ்விभाग 'அவரவர் தமதமது' என்கிற பாட்டிலும் संगृहीतம்

இவை மூன்றும் ஒரு द्रव्यத்தில் रूपरसादिगुणங்கள் போலவும், ஒரு சரீரத்தில் वातपित्तकफங்கள் போலவும், प्रदेशभेदத்தாலும் कालभेदத்தாலும் ஸாம்ய

---

विभागप्रदर्शनमिति विशेषः। एतादृशविभागप्रदर्शनस्य कृत्स्नाध्यायसाध्यत्वात् श्लोकविशेषाननुदाहृत्य सामान्येन "सप्तदशाध्यायादि" इत्यूचे। सत्त्वोपादेयतेति। "ईश्वरे कर्तृताबुद्धिस्सत्त्वोपादेयतान्तिमे। स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते" इति गीतार्थसङ्ग्रहश्लोकः। तथात्र गीतावचनम्, "त्रैगुण्यविषया वेदाः निस्त्रैगुण्यो भवार्जुन। निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान्॥" इति। निस्त्रैगुण्यत्वं=अन्योन्यसंकीर्णगुणत्रयरहितत्वम्। नित्यसत्त्वस्थत्वं=प्रचुरसत्वस्थत्वम्। अतो न मिथो विरोधः। गुणत्रयविभागे सति तत्तत्तत्तमात्रज्ञानात् इतरद्वयहेयताबुद्धिपूर्वक सत्वस्योपसम्पादनश्रद्धा भवतीति तदेतन्निरूपणफलमिति भावः। अस्मिन् गुणत्रयविभागे प्रमाणतया वकुळाभरणगाथामुद्धरति इवविभागम् इति। इयं प्रथमशतकस्था। अस्यास्संस्कृतश्लोकात्मना विवरणं तु—ते ते स्वस्वमतैर्गतैरनुगुणं तांस्तान् भजन्ते सुरान् सर्वेशत्वमनीषया चरणयोस्तेषां भृशं प्रश्रिताः॥ यद्यप्येवमथापि, तेऽपि कुशलास्स्वीयाशिषां पूरणे हेतुस्तत्र समस्तवस्तुनिलयश्रीविष्णुशास्तिक्रमः॥ नन्वेषां गुणानां कार्यद्वारा प्रत्यनीककारणां कथमेकत्र स्थितेर्भवेष्यति? कथञ्चित्तत्सम्भवेऽपि तादृशानां कार्याणां परस्परप्रतिबन्धात् एकमपि वा कार्यं न स्यात्। गुणानामुद्भवाभिभवाभ्यां कार्यविशेषोत्पत्तिरिति चेत्, तयोर्व्यवस्थापकं किमिति शङ्कायामाह इवैमून्रुम् इति। रूपरसादीति। विलक्षणकार्याणां गुणानामेकत्र स्थितिमात्रे इदं निदर्शनम्। रूपरसादिभिर्विलक्षणप्रत्ययश्चोपजननात्। परस्परमुद्भवाभिभवेन तादृशानां गुणानां एकत्र स्थितौ तत्रापि प्रकृतानुसारेण देहे स्थितौ अन्तरङ्गमुदाहरणं वातादीनि। एतेषां परस्परमुद्भवानुद्भवौ चायुर्वेदादिषु प्रपञ्च्यते, "वृद्धिस्समानैः सर्वेषां विपरीतैर्विपर्ययः" इति। समानैः=तत्तद्गुणानुकूलैराहारैः। वृद्धिः=उद्भवः। प्रतिकूलैर्विपर्ययः=अननुगुणाहारसेवनेन अनुद्भवः क्षय इति यावत्। "शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः। तेषां गुणानां साम्यश्चेत् तदाहुस्स्वास्थ्यलक्षणम्। उष्णेन बाध्यते शीतं उष्णं शीतेन बाध्यते" इत्याश्वमेधिकेपि। शीतोष्णे कफपित्तरूपे। तथा कुसुमाञ्जलावपि, "अन्यदा वातपित्तश्लेष्मणां त्रिदोषाणां

---

மத்தியாயத்திலும், அவற்றின் விளைவுகளை பதினேழாம் அத்தியாயத்திலும் காணலாம் இவற்றில் பதினெட்டாம் அத்தியாயத்தில் கூறியுள்ளபடி ஸத்துவகுணமே கைக்கொள்ளத்தக்கது இவற்றை எல்லாம் "அவரவர் தமதமது"—என்னும் பாசுரத்தில் ஆழ்வார் அருளிச்செய்தார்.

இவை மூன்று குணங்களும் - ஒரே திரவியத்தில் - வர்ணம் சுவை முதலியனவும், ஒரே உடலில் வாதம் பித்தம் கபம் என்னும் மூன்று தாதுக்களும் கலந்திருப்பதுபோல், கலந்துநின்று, இடம் காலம் இவைகளின்

**वैषम्य**ங்களை அடைந்து, **वैषम्य**த்தாலே **अन्योन्यमभिभवि**த்து, சில **उद्भूत**ங்களாய் சில **सहकारि**களாய்ப் போரா நிற்கும் **सत्वरजस्तम**ஸ்ஸுக்களால் **வரும் गति**

---

चयप्रकोपप्रशमानियमेपि कदाचित्त्रिदोषसन्निपातस्स्यात् । तदा देहोपसंहारः" इत्यादि । श्लेष्म=कफम् । चयः=त्रयाणां साम्यावस्था । तदा देहस्वास्थ्यम् । प्रकोपप्रशमौ=वृद्धिक्षयौ । त्रिदोषसन्निपातः= त्रयाणामेकदा प्रकोपः । तदा देहनाशः । तथैव कालानलपवनसलिलानामेकदा सन्निपाते ब्रह्माण्डाख्येश्वरशरीरस्याप्युपसंहारस्तत्रैव निदर्शितः । अनलादीनि त्रीणि देहस्थवातादितुल्यानि । **प्रदेशभेदकालभेदे**तीदं दृष्टान्तदार्ष्टान्तिकोभयान्वयि । जलप्रायानूपादिदेशवासेन कफादिवृद्धिः, "तदन्तकाले संशुद्धिं याति नारायणालये", "यत्किञ्चिदपि कुर्वाणो विष्णोरायतने वसेत्" इति भगवत्क्षेत्रवासादिना सत्वादिवृद्धिश्च भवति । कालभेदः=ग्रीष्मवर्षर्त्वादिः कृतकलियुगप्रभातरात्र्यादिश्च । तत्रापि पित्तादीनां सत्वादीनाञ्च वृद्धिर्जायते । **साम्यवैषम्येति** । एतदुक्तं भवति—एषां त्रयाणां गुणानां प्रथमं द्वे अवस्थे, साम्यवैषम्याख्ये भवतः । वैषम्यस्य वक्ष्यमाणरीत्या त्रेधा विभागे आहत्य चतस्रोऽवस्था भवन्ति साम्योद्भूतत्वानुद्भूतत्वसहकारित्वाख्याः । तत्र सत्वादीनां त्रयाणां साम्यावस्थायाः प्रलयदशामात्रभावित्वेन प्रकृतविचारानुपयोग एव । **अत एव मूले**, "साम्यवैषम्ये प्रतिज्ञातयोर्द्वयोर्मध्ये उपरि वैषम्यमात्रानुधावनं कृतम् । यद्यपि वातपित्तादीनां त्रयाणां साम्ये देहस्वास्थ्यमेव ; न तु देहोपसंहारः, तथापीह सत्वादिगुणत्रयसाम्ये तु ब्रह्माण्डाख्येश्वरदेहप्रळय एव भवति इति। **अत्रेदं बोध्यम्**-सत्वतमसोरुद्भूतत्वे रजस्तयोस्सहकरोति । तत्तत्कार्यनिवृत्तिधर्माधोगतिहेतुकर्मविषयकप्रवृत्तौ तेन शैघ्र्यातिशयस्य जननीयत्वात् । एवं तमोपि स्वान्यगुणद्वयसहकारि भवति । सत्वोद्रेके मोक्षार्थप्रवृत्तौ अनुपयुक्तपदार्थविषयकानुपलब्ध्यवसरप्राप्तनिद्रादानादिना, रजसि च तथाविधे तत्कार्यकाम्यनिषिद्धकर्मप्रवृत्तौ मोहादिजननद्वारा चोपकारात् । सत्वं तु स्वान्यरजोगुणमात्रस्यैव सहकारि । तत्कार्यभूतकाम्यकर्मप्रवृत्यादौ तदुपायादिगोचरप्रकाशस्य तेन जननात् । न तु सत्वं कदापि तमसस्सहकारि । तत्कार्यज्ञानावरणादौ सत्वस्यात्यन्तविरोधेनानुपकारकत्वादिति । तदा सत्वस्य केवलमनुद्भूतत्वदशैव भवति । अत एवानुद्भूततासहकारितादशयोः पृथक्कीर्तनमप्युपपद्यत इति ।

ननु, "**ब्रह्मा विश्वसृजो धर्मः** महानव्यक्तमेव च । उत्तमां सात्विकीमेतां गतिमाहुर्मनीषिणः" इति चतुर्मुखादीनां उत्तमसात्विकजन्मोक्त्या सत्वे उत्तमत्वस्य च शुद्धत्ववत् रजस्तमस्सामानाधिकरण्याभावरूपतया आविरिञ्चात् गुणत्रययुक्तत्वेन कर्मवश्यत्वामङ्गळत्वादिकथनं कथं युज्यत इत्याशङ्क्याह **सत्वरज**

---

பிரிவுக்கேற்றபடி – ஸமநிலை – மாறுபட்ட நிலை **இவைகளை** யடைந்து, இரண்டாம் நிலையில் ஒன்றையொன்று அமிழ்த்தியும் எழுந்தும் நின்று சிலவை பிரதானங்களாயும், சிலவை உதவிகரங்களாயும் நடவா நிற்கும் (முதல் ஸமநிலையில் உலகம் அழியும்) இம்முக்குணங்களால் **வரும்** பிறவிகளை, மறுமுதலிய-பெரியோர் – உத்தம ஸத்துவப்பிறவி, மத்திமஸத்துவப்

கவோ மன்வாதிகள் उत्तममध्यमाधमविभागத்தாலே ஒன்பது வகையாக்கி ब्रह्मादिகள் उत्तम सात्त्विक गति என்று சொல்லச் செய்தே, ब्रह्मादिகளுக்குப் பதினாலு கூறு, ஸத்துவம், ஒரு கூறு ரஜஸ்ஸு. ஒரு கூறு தமஸ்ஸு என்று தொடங்கி, सर्वजन्तु க்களுக்கும் गुणत्रय तारतम्यம் சொல்லுகையாலே, 'ब्रह्माद्याः सकला देवाः' 'न तदस्ति

---

इति । मनुस्मृतौ द्वादशाध्याये "येन येन, गुणेनेमान् संसारान् प्रतिपद्यते । तान् समासेन वक्ष्यामि" इति गुणानुगुणजन्मावाप्तिमुपक्षिप्य, "देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः । तिर्यक्त्वं तामसा नित्यं इत्येषा त्रिविधा गतिः ॥" इति सामान्येन तामसराजससात्त्विकगतित्रैविध्यं प्रतिज्ञाय, "त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः । अधमा मध्यमा चाग्र्या कर्मविद्याविशेषतः ॥" इति तत्तत्पुरुषीयकर्मज्ञानाद्यनुगुणं एकैकापि अधममध्यमोत्तमभेदेन अधमतामसी मध्यमतामसी उत्तमतामसी इत्यादिरीत्या नवधेत्युक्त्वा, "स्थावराः क्रिमिकीटाश्च" इत्याद्यष्टश्लोक्या मध्यमसात्त्विकान्तगतिप्रकारान् प्रदर्श्यानन्तरमुच्यते "ब्रह्मा विश्वसृजः" इत्यादि । ब्रह्मा=चतुर्मुखः । विश्वसृजः=नव प्रजापतयः धर्मः महान् अव्यक्तमिति तत्तदभिमानिन्यो देवता विवक्ष्यन्ते । "एवच" इत्यनन्तरं इति शब्दोऽध्याहर्तव्यः । इत्येतां गतिं=इत्येतादृशजन्मप्राप्तिं उत्तमसात्त्विकीमाहुरित्यर्थः । अधममध्यमसात्त्विकगत्योः कथञ्चिद्रज-स्तमोन्वयसम्भवेऽपि उत्तमसात्त्विकगतौ न कथमपि तदन्वयसम्भव इति शङ्कितुरभिप्रायः । अथ समाधानगर्भं ब्रह्मादि इति वाक्यम् । अत्र, "गुणान् षोडशधा भङ्क्त्वा यत्र सत्त्वं चतुर्दश । अन्यद्द्वयं तथैकैकं तदेवोत्तममुत्तमम् ॥ एवं गुणानामन्योन्यतारतम्यविभेदतः । स ससर्ज जगत्सर्वं नवधा सृष्ट्युपक्रमे ॥" इति श्रीविष्णुरहस्यवचनमिति काञ्ची=अय्याकृष्णताताचार्या आहुः । परन्तु मुद्रितकोशेष्वधुना नेदं वचनमुपलभ्यते । उत्तममुत्तमम्=उत्तमसात्त्विकम् । नवधेति पूर्वोक्तरीत्या भाव्यम् । तथाच चतुर्मुखादिषूत्तमसात्त्विकेष्वपि षोडशधा विभक्तगुणांशमध्ये सत्त्वस्य चतुर्दशभागास्सन्ति । इतरयोस्तु द्वावं-शाविति आहत्य तेषामपि षोडशांशत्रिगुणयुक्तत्वोपपत्तिरित्यर्थः । तारतम्य इति । तथा च केषाञ्चि-दुत्तमसात्त्विकत्वादिनामकरणे तत्तद्गुणप्राचुर्यमेव निमित्तम् ; न तु गुणान्तरस्य व्यवच्छेद इति भावः । ब्रह्माद्या इति ।....मनुष्याः पशवस्तथा । विष्णुमायामहावर्तमोहान्धतमसावृताः ॥ इति श्रीविष्णुपुराण-वचनम् । विष्णुमाया=प्रकृतिः । "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्त

---

பிறவி, அதமஸத்துவப்பிறவி என்றுறுபோலே ஒன்பது வகையாக்கி, நான் முகன் முதலானோரை - உத்தமஸாத்துவிகப் பிறவியில் அடக்கியுள்ளார்கள். ஆயினும் - அவர்களும் முக்குணப்பிறவிகளே ஏனெனில் - ஒவ்வொரு குணத் தையும் பதினாறு கூறாக்கி, நான்முகப்பிறவியில், பதினான்குகூறு ஸத்துவம், மற்றும இருகுணங்கள் இருகூறு என்ற அளவிலுள்ளன என்று எல்லாப் பிறவிகளும் முக்குணமயங்களே என்று வேறு வசனங்கள் கூறுகின்றன. நான்காம் வர்ணத்தவர்களிடம் தமோகுணம், க்ஷத்திரியர்களிடம் ரஜஸ்ஸு, பிராம்மணர்களிடம் ஸத்துவம் தலைதூக்கும் என்ற வசனங்களெல்லாம்

**पृथिव्यां वा' इत्यादि**களிற்படியே **क्षेत्रज्ञ**ரெல்லாரும் இச்**गुणत्रय**த்தாலே **बद्धर्** இப்படி **'तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम्' इत्यादि**களும் **शरीरोपादानद्रव्यतारतम्य**த்தைச் சொல்லுகிறன

**सात्त्विकादिकल्पभेद**ங்களுக்கீடாக **पुराणभेद**ங்களைச் சொல்லி, **'सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्'** எனகையாலே **सत्वा-**

---

यदेभिस्स्यात् त्रिभिर्गुणैः" इति वचनमुक्तस्यैवार्थस्य व्यतिरेकप्रदर्शनपरम् सत्त्वम्=जन्तुः । ननु पूर्वं "देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः" इत्यादिना मनुष्यसामान्यस्य राजसत्वोक्त्या, 'तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम्" इति मनुष्येष्वेव सत्वादितारतम्यकथनं कथमुपपद्यत इत्यत्राह **इप्पडि** इति । उक्ततारतम्यवदित्यर्थः । अयं भावः—पूर्वमुक्तं गुणत्रयतारतम्यं मानसं तत्तत्प्राणिषु प्रायस्संभावितमपि न नियतम् । ब्रह्मादेरपि कदाचिद्रागद्वेषादिदर्शनेन गुणान्तरोद्रेकस्यावश्यवक्तव्यत्वात् । इह "तमश्शूद्रे" इत्यादौ तु मनुष्येषु चातुर्वर्ण्यव्यवस्थया कर्मानुष्ठानाय गुणभेदकथनात् इदं तत्तारतम्यं शरीरोपादानभूतपृथिव्यादिपञ्चभूतगतत्वेन शारीरं सत् औत्पत्तिकं आमरणमनुवर्तमानं नियतमिति सत्वादिद्वैविध्याश्रयणान्न दोष इति ।

एवमधस्तादुत्तमसात्त्विकगतित्वेनोक्तस्यापि चतुर्मुखस्य गुणान्तरयोगप्रतिपादनेन तत्तत्कल्पाद्यनुसारतः तस्य गुणत्रयोन्मेषवशात् नानाविधपुराणप्रवक्तृत्वसंभवम्, तेषु सात्त्विकपुराणस्यैवोपादेयत्वञ्चाह **सात्त्विकादी**ति । तथाच **मात्स्यपुराणे,** "सङ्कीर्णास्सात्त्विकाश्चैव राजसाश्चैव तामसाः । कल्पाश्चतुर्विधाः प्रोक्ताः ब्रह्मणो दिवसाश्च ते ॥ यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्यतस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥ अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते ।" इत्युक्त्वाऽथ पठ्यते, "सात्त्विकेषु तु कल्पेषु" इति । **तेष्वेवे**ति निमित्तसप्तमी । सात्त्विकपुराणानां परगतिनिमित्तत्वे द्वारकथनं "सत्वात्सञ्जायते ज्ञानम्" इति । प्राबल्यं=सम्यग्ज्ञानजननद्वारा मोक्षप्रापकत्वम् । दौर्बल्यमप्येतद्विपरीतरूपं तामसपुराणादीनामर्थादुक्तं भवति । एतेन, "पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सकम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः" इति **महाभारते** वैष्णवधर्मशास्त्रे कथनमपि पुराणसामान्यस्य केवलं हेतुना=तर्केण निराकरणं न न्याय्यमित्येतत्परम्; न तु अत्यन्तपरिग्राह्यतापरमिति

---

அவ்வோ ஜீவர்களுடைய உடலுக்குக் காரணமான பஞ்சபூதங்களை மனதிற் கொண்டு சொல்லுகின்றன ஸாத்துவிகம், ராஜஸம் தாமஸம் இவை கலந்த ஸங்கீர்ணம் என்று கல்பங்களுக்கேற்ப புராணாதிகளை பிரித்து "ஸாத்துவிக கல்பத்தில் இயற்றப்பட்ட ஸாத்துவிக புராணங்களில் எம்பெருமானின் பெருமை பரக்கப்பேசப்படும் அதை நன்கறிந்து யோகாப்பியாஸத்தினால் பலர் பரகதியடைவர்" என்று பிரமாணங்கள் கூறுவதால். ஸத்துவகுணம் நல்ல அறிவைத் தரும் என்றபடியிலே ஸாத்துவிக புராணங்

'सञ्जायते ज्ञानं' इत्यादिகளிற்படியே **सात्त्विक पुराण**ங்களினுடைய **प्राबल्य**மும் **राजस तामस संकीर्ण पुराण**ங்களினுடைய **दौर्बल्य**மும் சொல்லப்பட்டது **साधारण**மான **शिल्पशास्त्र**த்திலுமுள்பட, **"स्यान्नागरं द्राविड[ळ] वेसरं च क्रमेण वै सत्त्वरजस्तमांसि ॥ महीसुरोर्वीपति वैश्यकास्ते हरिर्विधाता हर आदिदेवः ॥** என்று **गुणोत्कर्षापकर्षक्रमं** சொல்லு

सिद्धम् । अन्यथा मात्स्यपुराणादौ विशिष्य तारतम्यादिकथनं विरुध्येत । यथा तत्रैव, "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥" इति प्रशसितस्यापि सांख्यपाशुपतादेः श्रुतिं पुरस्कृत्य केवलतर्कबलं विना ब्रह्मसूत्रे निराकरणं कृतम्, तथेत्यपि भाव्यम् । ननु "यस्मिन् कल्पे तु यत् प्रोक्तम्" इत्यादिना न सात्त्विकपुराणप्राबल्यभगवत्पारम्यादिकं सिद्ध्यति । पृथक् पृथक् देवतात्रयपारम्यवादिनां सर्वेषां पुराणानां युगपत्तथाऽर्थस्थितिबाधेन सर्वाप्रामाण्ये प्राप्ते तत्परिहारायोक्तवचने कालभेदेन तत्तदृतुषु तत्तत्पुष्पफलादिप्रादुर्भाववत् तत्तद्देवतापारम्यप्रकाशनात् सर्वेषामपि पुराणानां प्रामाण्यं देवतानां पारम्यञ्चोच्यत इति शङ्कायामाह **साधारणमान** इति । तटस्थेत्यर्थः । इदम्परशास्त्रापेक्षया मध्यस्थशास्त्रं ह्यतिप्रबलमिति भावः । पुष्पादिप्रादुर्भावस्येव देवतापारम्यस्योत्तमगतिप्रापकत्वादेश्च कालिकाव्याप्यवृत्तित्वायोग इति तु बोध्यम् । अस्य च विस्तरेण विचारः **पाशुपताधिकारे** भविष्यति । **स्यान्नागरेति** । (?)आदिदेवः=अधिदेवता । अयमाशयः-नागरादिनाम्ना त्रिविधं विमानं सत्त्वादिगुणप्रचुरतत्तज्जातिदेवताविशेषादियुक्तमत्राभिधीयते तेषां सन्निवेशविशेषाश्च **श्रीपाद्मे क्रियापादे नवमाध्याय** एवमुपवर्ण्यन्ते "नागरं द्राविडं चैव वेसरञ्चेति वै त्रिधा । आस्थूपि कण्ठमारभ्य चतुरश्रं प्रकल्पितम् ॥ यामायताश्रम् अथवा नागरं तदुदाहृतम् । वस्वश्रमायतं धिष्ण्यं षडश्रमथवायतम् । उक्तं तत् द्राविडाह्वानं वृत्तं वृत्तायतं पुनः ॥ वेसराख्यं तदाख्यातं एवं त्रिविधमिष्यते ॥" इति विमानानां तत्तत्सन्निवेशकल्पने तत्तद्गुणाविर्भावो भवति । विमाने ब्राह्मणजातीयत्वादिकं गजादिष्विव प्राशस्त्याद्यर्थमारोप्य व्यवह्रियते । तथा सत्त्वे तत्तद्देवताभिरधिष्ठीयन्ते । एवञ्च नागरस्य विमानस्य सत्त्वगुणमयत्वब्राह्मणजातीयत्वहरिदेवताकत्वादिभिः प्राशस्त्यकथनात् मध्यस्थदृष्ट्यापि भगवत्परत्वमप्रकम्प्यमिति । अतः तेष्वेव योगसंसिद्धा इति पूर्वोक्तसात्त्विकपुराणाद्युत्कर्षः सुस्थिर इति च ।

---

கள் மிகப்ரபலமாகின்றன ராஜஸம், தாமஸம், முக்குணங்களும் கலந்த ஸங்கீர்ணம் என்றவகையிலான புராணங்கள் அவ்வாறல்ல பல சொல்லி என்? ஒரே வார்த்தை கூறுவோம் ஸர்வஸாதாரண கலையான சில்ப சாஸ்த்திரத்திலுங்கூட ஸத்துவத்தின் பெருமை நிலைநாட்டப்பட்டுள்ளது. கோயில்களுக்குமேல் அமைக்கும் விமானங்கள் மூன்றுவகை யாகின்றன, நாகரவிமானம் திராவிட விமானம், வேஸரவிமானம் என்ற முறையேயாம்

கையாலே सात्त्विक पुराणोक्त भगवदुत्कर्षं सुस्थिरம் ॥ இவ்விभागமெல்லாம் कालस्वभाव-नियति यदृच्छादिमात्रத்தாலே என்னும் पक्षங்கள் उपनिषத்திலே पूर्वपक्षங்களாகச் சொல்லப்பட்டன

---

ननु सत्वादीनां सुखदुःखादिकारणत्वमसिद्धम्। कालस्वभावादिभिरेव तत्तज्जननस्य तैस्तैर्वादिभिस्वीकारादित्यत्राह **इत्रविभागमेल्लाम्** इति। सत्वादिवैषम्यादेव सुखादिवैषम्यमिति व्यवस्थेत्यर्थः। **यदृच्छादिमात्रे**त्यनेन सत्वादिगुणवैषम्यव्यावृत्तिः। तथाहि **श्वेताश्वतरोपनिषदुपक्रमे,** "ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म? कुतः स्म जाताः? जीवाम केन? क्व च सम्प्रतिष्ठा? अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्" इति कैश्चित् ब्रह्मविद्भिः कांश्चिद्ब्रह्मविदस्सम्बोध्य, कारणीभूतं ब्रह्म कीदृक्? देतारूपम्? कुतः केन कुत्रास्माकमुत्पत्तिः स्थितिर्लयश्च क्रमेण भवति? केन प्रेरिता दुःखमयेषु जन्मसु विशिष्टां स्थिति वर्तामहे इति कांश्चित्प्रश्नान् उपक्षिप्य, सामान्यतो ब्रह्म कारणमिति सिद्धे हि तद् ब्रह्म किंरूपमिति विशेषे जिज्ञासोदेश्यति, तदेव त्वसिद्धं बहुभिर्बहुधा कारणकथनादिति विचिन्त्य पूर्वपक्षा उपन्यस्यन्ते। "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुषः" इति। कालस्सर्वकारणमिति ज्योतिर्विदः। तत्तद्वस्तुस्वभाव एवेति चार्वाकाः। नियतिलक्षणं कर्मेति मीमांसकाः। यादृच्छिकं सर्वमहेतुकमिति माध्यमिकाः। पञ्च भूतान्येव कारणमिति चार्वाका एव केचित्। योनिः प्रकृतिः कारणमिति सांख्याः। पुरुष इति योगाः—इति तदर्थः। अथ सर्वमिदं खण्डयते "इति चिन्त्यम्" इति। तत्र हेतुः "संयोग एषां न त्वात्मभावात् आत्माप्यनीशस्सुखदुःखहेतोः" इति। एतेषामचेतनानां चेतनानां वा परस्परं विना संयोगं कार्यारम्भायोगात् संयोगे वक्तव्ये स संयोग एतेषां **आत्मभावात्**= स्वस्वभावादेव न भवति। स्वभावस्यानतिक्रमणीयत्वेन सर्वदा संयोगप्रसङ्गात्। आत्मा पुरुषोप्यनीशः= न कारणम्। तस्य संयोगस्य सुखदुःखोभयहेतुत्वात्। न हि कश्चिदपि स्वयं स्वदुःखोत्पादने प्रवृत्तो भवति अनुन्मतस्य तथा प्रवृत्त्यसंभवात्। तस्मात् समस्तसुखदुःखातीत एवान्यः कश्चित् सर्वमिदं परस्परं संयोज्य जगदुत्पादयतीति सिद्धान्त इति एते वादा उपनिषदि पूर्वपक्षतयैव विवक्षिताः। अतो न सत्वादिगुणफलतारतम्यकथनस्यासिद्धिरिति भावः।

---

அவை—ஸத்துவம், ரஜஸ்ஸு, தமஸ்ஸு என்ற குணமும், பிராம்மணர் க்ஷத்திரியர், வைசியர் என்ற ஜாதியும் கொண்டவை, அவற்றுக்கு தேவதைகள்—ஹரி, நான்முகன், ஹரன் ஆவர் என்று சொல்லியுள்ளதைப் பார்க்கலாம். இப்பிரிவுகளெல்லாம் — கால ஸ்வபாவ நியதிகளாலும் தற்செயலாகவும் நேர்ந்தவைகள் என்று வாதிப்பது—ச்ருதிகளில் பிறர் செய்யும் வாதங்களாக எடுத்துக் கழிக்கப்பட்டது.

''**नित्या सततविक्रिया**'' இத்யாதிகளாலே **क्षणक्षरणस्वभाव**மான **त्रिगुणद्रव्य**த்துக்கு **प्रळयकाल**த்திலும் **सृष्टिकाल**த்தில் **प्रदेशान्तर**த்திலும் **गुण**ங்களினுடைய **उद्भवाभिभवादिभेद**மற்று இவை **सम**ங்களாய் நிற்கையாலே **निस्तरंगसमुद्र**த்தில் போலவும் **तरङ्गितैकदेशावस्थै**யில் **भागान्तर**த்தில் போலவும் **सदृशविकारसन्तान**ம்

---

ननु प्रकृतिगतगुणवैषम्यस्यैव जगत्कारणत्वे, प्रकृतेः "नित्या सततविक्रिया" इति नित्यपरिणामित्वोक्त्या वैषम्यातिरिक्तपरिणामाप्रसिद्धेर्मीमांसकानामिवास्माकमपि प्रलयाभावप्रसङ्ग इत्यत्राह **नित्या सततविक्रियेति**। "अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते॥" इति प्रतिक्षणं क्षरणस्वभावतयोक्तेत्यर्थः। अत्र प्रकृतेः परिणामो द्विविधः—समो विषमश्चेति। कचित्काले प्रकृतेस्सर्वप्रदेशेष्वपि सम एव परिणामः। कचिच्च तस्या एकदेशे सः। एकदेशान्तरेषु तु विषमः तथाच प्रकृतेर्वैषम्यातिरिक्तसमपरिणामस्यापि प्रसिद्ध्या यथायथं सर्गप्रळयोपपत्तिः सततपरिणामत्वसम्भवश्चेति सदृष्टान्तं समाश्वासयन् प्रथमं प्रकृतेस्सर्वप्रदेशेष्वपि समपरिणामकालमाह **प्रळयकाले** इति। अत्र सर्वप्रदेशेष्विति पूरणीयम्। प्रदेशान्तरेति वक्ष्यमाणानुसारात् उभयत्राप्यपिः समुच्चयार्थः। ततस्समुच्चित्य सर्वकालेष्वपि परिणामसद्भाव उक्तो भवति। काचित्कसमविषमोभयपरिणामकालमाह **सृष्टिकालेति**। प्रदेशान्तरं=महदादिविषमविकाररहितभागान्तरम्। तथा च प्रकृतौ न सर्वदा सर्वप्रदेशेषु विषमो विकारः, न वा विकारसामान्याभाव इति प्रळयोपपत्तिस्सततविक्रियत्वसमर्थनञ्च भवतीति भावः। वैषम्यशब्दार्थमाह **उद्भवाभिभवादिभेदेति**। यथार्हंप्रतिबध्यप्रतिबन्धकतावच्छेदकशक्तिविशेषेत्यर्थः। शक्तेर्गुणसाधारण्यपक्षाभिप्रायेणेदम्। तदभावे तु, प्रकृतिगतायास्तस्यास्सामानाधिकरण्येन गुणनिष्ठत्वं बोध्यम्। **समाः** परस्परप्रतिबन्धकतावच्छेदकतुल्यशक्तिमन्तः। **निस्तरङ्गसमुद्रे**ति। प्रळये प्रकृतेस्सर्वत्र समपरिणामत्वे दृष्टान्तः। तथा च यथा निस्तरङ्गपयोनिधौ उपरिविजृम्भमाणवीचीतरङ्गफेनबुद्बुदादिविषमपरिणामाभावेपि सुसूक्ष्मनिरीक्षणीयजलवेणीसञ्चरणरूपसमपरिणाम इदानीमपि नवपाषाणाख्याविख्यातसेतुसन्निहितक्षेत्रे दृश्यते तथेति भावः। अथ सृष्टिकाले तदनु [illegible] देशविशेषे समपरिणामसद्भावे दृष्टान्तः **तरङ्गितैकदेशे**ति। तरङ्गिणस्य वाताहतिप्रयुक्ततया अपारे अकूपारे कचिद्वातविक्षोभात्कल्लोलवेल्लनं कचित्तदभावश्चोपपद्यत इति, तद्वत्प्रकृतावपि भगवत्सङ्कल्पवात्यावैचित्र्यात्

---

இப் ப்ரக்ருதியில் எப்போதும் மாறுதல்கள் நேர்ந்த வண்ணமிருக்கும் என்கையாலே, பிரளயஸமயத்தில் எல்லா பிரக்ருதியின் பிரதேசங்களிலும், ஸ்ருஷ்டி நடக்கும் நேரங்களில் பிரகிருதியின் பிற பிரதேசங்களிலும் முக்குணங்களும் ஏற்றத்தாழ்வுகளின்றி நிற்கையாலே அதிக வேறுபாடற்ற மாறுதல்கள் நடக்கும் எதுபோல வென்னில்—பிரளய ஸமயத்திலே, எங்கும் அமைதியான—ஆனால் சிறுசிறு அலைகளெழும் கடல் போல. ஸ்ருஷ்டி காலத்திலே, கொந்தளிக்கும் கடலினுடைய மற்றொரு அமைதியான பிரதேசம்போல இப்படி வேறுபாடுள்ள மாறுதல், அதற்ற மாறு

நடக்கும் இப்படி **समविषमविकारविशिष्टवेष**த்தாலே **समष्टिव्यष्ट्यादिविभागம்** சொல்லுகிறது மேல் **उत्तरोत्तर**ங்களுக்கு **पूर्वपूर्वावस्थै**கள் **समष्टि**களாய் நிற்கும்.

**अव्यक्त**ம் **अक्षर**த்திலே **लयि**க்கும் என்றும், **अक्षर**ம் **तम**ஸ்ஸிலே **लयि**க்கும் என்றும், **तम**ஸ்ஸு **एकीभवि**க்கும் என்றும் **श्रुति** சொல்லுகையாலே **अव्यक्त**த்துக்கு முன்னே, இரண்டு **अवस्थै** கொள்ளவேணும் இங்கு **अक्षरशब्द**த்திலே **क्षेत्रज्ञसमष्टिविवक्षै** கொண்டாலும் **अव्यक्त**ம் **क्षेत्रज्ञ विकार**மல்லாமையாலும் **क्षेत्रज्ञ**ன்

---

क्वचिद्विषमः क्वचिच्च समः परिणाम इति भावः । एवमेव समविषमविकारद्वयसमर्थनेन समष्टिव्यष्टिवि-भागमपि निर्वहति **इप्पडि** इति वाक्यद्वयेन । **समष्टिः**=समुदायदशा । **व्यष्टिः**—तदेकदेशदशा । **आदिना** व्यक्ताव्यक्तदशाग्रहणम् । महदाद्यात्मना परिणामात्पूर्वं प्रकृतौ समुदायदशायां भवति समः परिणामः । सैव समष्टिदशोच्यते । अन्यस्तु विषमो व्यष्टिर्भवति । एवमेव महत अहङ्कारात्मना परिणामेपि समष्टिव्यष्टिभाव इत्याह **मेल्** इति । महदादिषु उपरितनेष्वपीत्यर्थः । एवमेव भाविन्या दशाया अपेक्षया पूर्वदशायास्समष्टित्वकथनेन अण्डसृष्टेः प्राग्दशापि समष्टिरित्याख्यायत इत्यपि बोध्यम् । अग्र एवेदं स्पष्टीभविष्यति । ननु त्रिगुणादिशब्दवाच्यायाः प्रकृतेरेव सर्वाणि तत्त्वानि प्रति समष्टिरूपत्वेन तस्या अपि पूर्वं कस्याप्यचेतनस्यानङ्गीकर्तव्यत्वतः **सुबालोपनिषदि,** "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति ततोपि पूर्वं दशाद्वयश्रवणं कथं युज्यत इत्यत्राह **अव्यक्ते**ति । अयमभिसन्धिः—अक्षरतमसी द्वे तावत् न सर्वथा अव्यक्ततो वस्त्वन्तरम् । तत्त्वसङ्ख्याधिक्यप्रसङ्गात् । नापि सर्वथा तयोः अव्यक्तपर्या-यत्वञ्च । उक्तश्रुतिविरोधात् । अतोऽव्यक्तस्यैव गुणत्रयसाम्यरूपाव्यक्तत्वावस्थाप्रहाणं विना मात्रया तत्र भेदमवलम्ब्य अक्षरतमस्त्वावस्थे भविष्यतः । अव्यक्ततो महदादिप्रादुर्भावे तु अव्यक्तत्वावस्था-प्रहाणपूर्वकमेवोत्तरावस्थारम्भो भवतीति तत्रैव तत्त्वान्तरत्वस्वीकार इति । **सुबालोपनिषद्व्याख्याने श्रुत-प्रकाशिकाचार्या** एवं निदर्शनानि प्रकृते प्रदर्शयन्ति—भूतलनिहितबीजस्थानीयमत्यन्तनिमग्नभेदं परस्मिन्नेकीभूतं अविभक्तं तमः । ततो विभक्तम् । तत्तु भूतलनिस्सृतबीजस्थानीयम् सलिलसंसृष्टद्रव-यवबीजतुल्यं अक्षरम् । उच्छूनबीजसमानं अव्यक्तम् अङ्कुरस्थानीयो महान् । काण्डपत्रपुष्पादि-

---

தல்களை முறையே, வ்யஷ்டி, ஸமஷ்டி என்பர், மேன்மேலும் பிறக்கும் மாறுதல்களுக்கு முன்னுள்ள மாறுதல் ஸமஷ்டி என்னப்படும்.

"அவ்யக்தம் அக்ஷரத்திலே லயம் பெறும், அக்ஷரம் தமஸ்ஸிலே தமஸ்ஸு ப்ரம்மத்துடன் ஒன்றும்" என்கிற சுருதியின்படி, அவ்யக்தம் என்னும் மூலப்ரக்ருதிக்கும் மேலே இரண்டு நிலைகள் அக்ஷரம் தமஸ்ஸு என்று கொள்ளவேணும் என்று தோன்றுகிறது ஆனால் அக்ஷரம் என்பது ஜீவர்கள் அனைவருடைய ஸமஷ்டிபுருஷனாகிய நான்முகனைத்தான் குறிக்கும் அவன்—அவ்யக்த தமஸ்ஸு பரம்பரையின் நடுவிலே சேரமாட்டான் ஆகையால் அக்ஷரம் என்றது—ஜீவஸமஷ்டியுடன் சேர்ந்த அசேதநம்

तमःपरिणाममல்லாமையாலும் क्षेत्रज्ञसंसृष्ट चिदवस्थाविशेषம் अङ्गीकार्यம் கயம் சொல்லுகிற प्रकरणத்திலே तमस्ஸுக்கு एकीभावத்தைச் சொல்லுகையாலே तमोवस्थै கழிந்து மேல் வருவதோர் अवस्थान्तरமில்லை प्रपञ्चसृष्ट्यर्थமாக विभक्त

स्थानीया अहङ्कारादय इति। अत्र न्यायसिद्धाञ्जनोदाहृतं न्यायसुदर्शनस्थं वाक्यमनुधेयम्— "द्विविधा हि स्मृतिकाराः। केचिदव्यक्तकारणवादिनः केचित्तमःकारणवादिनश्च इति। अव्यक्तस्यैव सूक्ष्मावस्थाभेदोऽक्षरं तम इति नातीव भेद इत्यव्यक्ते पर्यवस्यतामभिप्रायः। तमपि भेदमुरीकृत्य तमसि पर्यवस्यताम्। तस्मादुभयेषामविरोध." इति। ननु, "अव्यक्तमक्षरे लीयते", "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्" इत्यादौ अव्यक्तशब्दसहपठितस्याक्षरशब्दस्य "क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादाविव जीवसमष्टिवाचकत्वमेव युक्तम्। अव्यक्तस्य सर्वदा क्षरणस्वभावस्याक्षरत्वासम्भवात्। ततश्चेहाक्षरस्याव्यक्तावस्थाविशेषत्वं कथमित्याशङ्क्याह इङ्गु इति अक्षरस्याव्यक्ततमोमध्यपठनस्खल इत्यर्थः। क्षेत्रज्ञसमष्टिविवक्षेति। क्षेत्रज्ञसमष्टि=चतुर्मुखः(?) तद्विवक्षा=तन्मात्रविवक्षा अव्यक्तेत्यादि। यदि मध्यपठितमक्षरं जीवसमष्टिस्स्यात्, तदा तस्या अव्यक्ततमोभ्यामन्यद्रव्यत्वेन, तस्यामव्यक्तस्य कथं लयोक्तिः, तस्या वा तमसीति अव्यक्तमेव जीवसमष्टिगर्भतयाऽजहल्लक्षणावृत्तेरक्षरशब्दवाच्यं वक्तव्यमित्यर्थः। तथाच न्यायसिद्धाञ्जनम्, "यत्तु भाष्यादिषु अव्यक्तसहपठितस्याक्षरशब्दस्य चेतनविषयतया बहुश उपादानम्, तत् परव्याख्यानमनुरुध्य वा, स्वरूपतो निर्विकारे जीवे सूज्यत्ववचनाचिद्रूपविकारवत्त्वेऽपि यथाऽक्षरशब्दप्रवृत्तिः, तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेऽपि शक्तिकल्पनापपद्यत इति प्रतिपादयितुं वा, क्वचित्क्षरे प्रकृतिविशेषे अक्षरशब्दप्रयोगस्य मुख्यत्वायोगात् परब्रह्मरूपाक्षरसम्बन्धेन लक्षणायां प्रयोजनाभावात् जीवसम्बन्धेनाजहल्लक्षणायां लयविशेषादिप्रतिपादनौचित्यात् "उभावेते लीयेते परमात्मनि" इति द्वयोरपि लयाभिधानाच्चाजहल्लक्षणैव युक्तेत्यभिप्रायेण वेति न कश्चिद्विरोधः" इति।

ननु अव्यक्तात्पूर्वमवस्थाद्वयमेवेति कथं नियम्यते? त्रिगुणं माया शक्तिरित्यादिरीत्याऽधिकतत्त्वानामपि कैश्चित्परिगणनात्। अवस्थान्तरस्याप्यवश्यकत्वादित्यत्राह लयेति। एकीभावेति। "पृथिव्यप्सु प्रलीयते" इत्यारभ्य पृथिव्यादीनां जलादौ लय ऊचे। तमसस्तु "तमः परे देव एकीभवति" इति एकीभाव एव। ततश्च ज्ञायते तमोवस्थातिरिक्ता न कापि दशा ततः पूर्वमस्तीति। तथाहि तत्रोत्तरोत्तर-

அவ்யக்தத்திற்கும் மேலான ஓர் ஸூக்ஷ்மநிலைமை எனபதுதான சரி லயம் சொல்லிவரும் வரிசையில் தமஸ்ஸுக்கு லயம் சொல்லாமையால் — உலகத்தின் தோற்றத்திற்கு என, மஹாதமஸ்ஸிலிருந்து பிரித்தெடுத்த தமஸ்ஸு அதோடே சேர்ந்ததுதான் என்று தேறும். தமஸ்ஸு என்ற நிலைகழிந்து மேலே ஒரு நிலை வாராது.

மான अंशम் महातमஸ்ஸோடே अविभक्तமாமளவேயுள்ளது "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि", "अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये संप्रलीयते", "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम॥" இத்யாதிகளிலே प्रकृतिपुरुषர்

---

पृथिव्यादीनां पूर्वपूर्वजलादौ लयो नाम जलादिपरिणामभूतपृथिव्यादेः पृथिवीत्वाद्यवस्थाप्रहाणपूर्वकं पृथिव्याद्यात्मनाऽपरिणते पूर्वमेव स्थिते जलादौ प्रविश्य जलत्वाद्यवस्थाप्राप्तिरेव। यथा घटस्य ध्वंसः तदात्मनाऽपरिणतभूभागे प्रविश्य स्वस्वभावपरित्यागेन तदात्मना स्थितिः। तमसः परस्मिन्नेकीभावश्च न तथा; किन्तु तमस्त्वावस्थाप्रहाणं परमात्मत्वप्राप्तिश्च विनैव परमात्मनि प्रविश्य विभागानर्हतयाऽवस्थानमात्रम्। ततश्च तमस्त्वावस्थायाः कदाचिदपि प्रहाणायोगात् मायाशक्त्यादीनां निरन्तरनियतक्रमपृथिव्यादितमोन्तत्त्ववर्गे तत उपरि च निवेशायावकाशालाभात् न तत्त्वान्तरसद्भाव उपपद्यते। अव्यक्त एवाक्षरतमस्त्वाद्यवस्थावत् अन्याः काश्चनावस्थाः काममुत्प्रेक्ष्यन्ताम्, यदि तत्र प्रमाणं स्यात्। अन्यथा महदादिष्वपि बुद्ध्यादिशब्दप्रयोगमात्रेण तथोत्प्रेक्षा स्यादिति। तमोवस्था=तमस्त्वावस्था। अत्र षट्त्रिंशत्तत्त्ववायादिदूषणं **पाशुपताधिकारे** भविष्यति। तर्हि तमसो ब्रह्मणि एकीभावानन्तरं को नाम **विशेषो** भविष्यतीत्यत्राह **प्रपञ्चेति**। विभक्तांशः=विभक्तं तमः। महातमसा=परदेवताशरीरभूतेनाविभक्ततमसा। यद्यपि तमसः, "तमः परे देव एकीभवति" इति परब्रह्मण्येवाविभागः श्रूयते, न त्वविभक्तमहातमसि। तथाप्युत्तरोत्तरतत्त्वानां पूर्वपूर्वतत्त्वशरीरके परमात्मन्येव लयस्यास्मत्सिद्धान्तसिद्धतयाऽत्रापि परे देवे महातमश्शरीरके एव विभक्ततमसोन्तर्भाव इत्यालोच्य विशेषणीभूतशरीरमात्रनिष्कर्षविवक्षया महातमसि अविभाग उक्त इति।

अथ प्रकृतेरीश्वरविकारत्वं वदतो **यादवप्रकाशस्य** मतमनूद्य दूषयति **प्रकृतिर्येति**। **विष्णुपुराणवचनमिदम्**। व्यक्तं=महदादिकम्। अव्यक्तं=मूलप्रकृतिः। परमात्मनः पृथक् कथनादिह पुरुषो जीवः। उत्तरश्लोके तु—निष्क्रियत्वोक्त्या लयाधारत्वेन च पुरुष ईश्वरः। स च श्लोकः **भारते मोक्षधर्मस्थः**। अव्यक्तस्य लयमुक्त्वा अथ सृष्टिमाह—**तस्मादिति**। इदमपि वचनं तत्रत्यमेव। नारायणात्पूर्वोक्तादित्यर्थः। "नारायणो जगद्योनिरनन्तात्मा सनातनः" इति हि पूर्वमस्ति। "अव्यक्तं पुरुषे ब्रह्मन्" इति पूर्वोपात्तस्य

---

ப்ரக்ருதியும் புருஷதத்துவமும் பரமாத்மாவில் லயமடைகிறன என்பது போன்ற வாக்கியங்களில் இவ்விரண்டுக்கும் பிறப்பு இறப்பு சொல்லுகை யாலே—ப்ரகிருதியினின்றும் மஹத் என்னும் பொருள் பிறப்பதுபோல், இவ்விரண்டும் ஈசுவரனுடைய உருவமாறுதல் ஆம் என்கிறவர்கள் முதலில் தங்கள் மதத்தை மறந்தார்கள் ஈசுவரனும் இவ்விரண்டுடன் சேர்ந்து பிரம்மத்தினின்றும் தோன்றுகிறேன் என்பது அவர்கள் மதம் அதாவது யாதவப்ரகாசரின் கொள்கை ஈசுவரனும் பிரக்ருதியும் அநாதியானவர்கள்

களுக்கு **उत्पत्तिलय**ங்களைச் சொல்லுகையாலே இவை, **महदादि**கள் **प्रकृति-परिणाम**ங்கள் ஆனாற்போலே, **ईश्वर**னுடைய **स्वरूपविकार**ங்கள் என்று **भ्रमकத**து, **ईश्वरात् प्रकृतिपुरुष**ர்கள் என்று சொல்லுமவர்களுக்கு, "**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि**" **इत्यादि**களும் **ईश्वर**னுடைய **नित्यनिर्विकारनिरवद्यत्वश्रुति**களும் **प्रकृतिपुरुषेश्वर**ர்கள் **सन्मात्रब्रह्म**த்தினுடைய **नित्यव्यष्टि**கள் என்கிற **स्वमत**மும் விரோதிக்கும் **भोक्ता**க்களுக்கு **स्वरूपोत्पत्ति** கொள்ளில் **अकृताभ्यागमकृतविप्रणाशादि**களும் வரும் ஆகையால் **कार्य**ங்களான **सर्वेतर**ங்களுக்கும் **तत्तत्पूर्वावस्थ चिदचिद्विशिष्ट-**

---

वचनस्यैतदनन्तरत्वेपि लयस्वरूपविचारणप्रकरणे सङ्ग्रत्यतिशयात्पूर्वमुपादानम्। **उत्पत्तिलये**ति। अप्ययपूर्वकमेवोपनिषत्सु सृष्टेः प्रतिपादनेपि, उत्पन्नस्यैव विनाश इति वस्तुक्रममनुसृत्यैवमुक्तम्। उत्पत्तेः पुरुषार्थसाधनौपयिकत्वेनाभ्यर्हितत्वाच्च। सिद्धान्तिसम्मतविशिष्टेश्वरविकारत्वनिरसनेनैषां केवलेश्वरस्वरूपविकारत्वं वक्तुं प्रथमं तदनुगुणं दृष्टान्तमाह—**महदादी**ति। **भ्रमेत्ति** इति सिद्धान्तिबुद्ध्या निर्देशः। **ईश्वरादि**ति। तदुक्तं **यादवप्रकाशाचार्यैस्तत्त्वविचारणायाम्**, "ईश्वरात् प्रकृतिपुरुषौ। प्रकृतेर्महान्। महतोऽहङ्कारः" इत्यादिना। एवमनूदितं दूष्यते **प्रकृतिमि**ति। अत्र प्रकृतिपुरुषयोरनादित्वोक्त्या साक्षादेवोत्पत्तेः, अनादिभावस्य नाशायोग इति न्यायेन प्रळयस्य चानुपपत्तिरिति भावः। एवं प्रकृतिपुरुषस्वभावबोधकवाक्यविशेषविरोधवत्, ईश्वरस्वभावबोधकवाक्यविरोधमप्याह **ईश्वरे**ति। अथ स्वोक्तिविरोधञ्चाह **प्रकृतिपुरुषेति**। तथाच तन्मतमत्रैव भास्करमतभङ्गे प्रदर्शयिष्यते, "सन्मात्रं ब्रह्मैकमेव तत्त्वम्। इदं सर्वतत्त्वसमष्टिरूपम्। अत्र ईश्वरपुरुषप्रकृतिरूपविभागत्रयं नित्यमि"ति। **प्रकृत्यधिकरणे** एतन्मतविचारे **श्रुतप्रकाशिकाचार्यश्च**—"बहु स्यामिति प्रकृतिपुरुषेश्वरभेदेन विभागं दर्शयति" इति। तथा च स्वकीयस्य त्रयाणां ब्रह्मविकारत्ववचनस्य विरुद्धमिदम् "ईश्वरात्प्रकृतिपुरुषौ" इति द्वयोस्तद्विकारत्वकथनमिति भावः। अथ पुरुषस्य स्वरूपत एवोत्पत्तिविनाशाङ्गीकारे दोषान्तरञ्चाह **भोक्त्रे**ति। इदं वक्ष्यमाणदोषे हेतुगर्भविशेषणम्; साङ्ख्यसिद्धान्त इव पुरुषस्य भोक्तृतानङ्गीकारे तस्योत्पत्तिविनाशवतां पक्षेपि वक्ष्यमाणदोषस्यासंलग्नकतापत्तेः। **स्वरूपोत्पत्ती**त्युच्छेदस्याप्युपलक्षणम्। **अकृताभ्यागमे**ति। जीवस्वरूपस्य सादित्वे कदाचिदिदम्प्रथमतयोदितस्य तस्य देहसम्बन्धतत्फलभोगाद्यर्थं स्वेनाकृतं परकृतमेव कर्म स्वीकार्यम्। अन्यथा तदीयदेहसम्बन्धादेः कर्मानधीनत्वेनेश्वरस्येव यथेच्छावतारत्वाद्यापत्तेः एवं कदाचित्कस्यचिदत्यन्तं स्वरूपोच्छेदेऽङ्गीक्रियमाणे स्वकृतानामभुक्तफलानामकृतप्रायश्चित्तानाञ्च बहूनां कर्मणामकाण्डे विप्रणाशश्च भवेदिति भावः। अधिकं **चार्वाकभङ्गे**ऽनुसन्धेयम्। **आदि**नेश्वरस्य वैषम्यनैर्घृण्यादिदोषोपि ग्राह्यः। ननु पुरुषादीनां स्वरूपत उत्पत्त्याद्यनङ्गीकारे तेषामपि श्रूयमाणा सृष्टिः कीदृशी भविष्यतीत्यत्राह **आகையால்** इति। स्वरूपोत्पत्तौ दोषादित्यर्थः। **कार्ये**ति। सिद्धान्ते

---

என்ற பிரமாணவசனம், ஈசுவரன் மாறுதலற்றவன் என்ற சுருதி இவைகளுக்கும் முரணாகும் ஜீவனாகிய புருஷனுக்கு இதற்கு முன் இல்லாத புதுப்

**परमात्मा**வின் பக்கலிலே **विशेषणद्वारकावस्थान्तरापत्तिलक्षणसृष्ट्यादि**களை யுள்ளது. இவ்வர்த்தத்தை, "**मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ॥**" என்று **परिगृहीत**ரான மஹர்ஷி, "**आसीदिदं तमोभूतम्**" என்று தொடங்கி, "**सोऽभिध्याय शरीरात् स्वात्**

---

प्रकृतिपुरुषादीनां स्वरूपतो नित्यत्वादङ्गीकारात् अनित्येत्यनुक्तिः। तथापि विशिष्टवेषेण **विशेषण-द्वारा** तेषामपि कार्यत्वमुपपद्यत इति बोध्यम्। सर्वतत्त्वानां=अकार्यत्वेन पराभिमताकाशादिसर्वपदार्थानामपि तत्तत्पूर्वावस्थे ये चिदचितौ तद्विशिष्टपरमात्मनि इत्यन्वयः। एतदुक्तं भवति—"तत्तेजोऽसृजत" इत्यादौ तेजआदीनां सृष्टिर्नाम न तेजआदीनामेव साक्षात् स्वरूपेण वाय्वादिभ्य उदयो भवति। सत्कार्यवादे तेजआदिद्रव्यस्वरूपस्य नित्यत्वाङ्गीकारात्। किन्तु तत्तत्पूर्ववाय्वादित्वावस्थापन्नाचिद्विशेषशरीरकपरमात्मनि तत्तदुत्तरतेजस्त्वाद्यवस्थाप्राप्ताचिद्विशेषविशिष्टात्मकावस्थान्तरापत्तिरेव। इयमचिद्रूपविशेषणद्वारिकाऽवस्थान्तरापत्तिः परमात्मनो भवति। एवमेव, "नारायणात् ब्रह्मा जायते" इत्यादौ पूर्वतनसूक्ष्मत्वाख्यावस्थापन्नचिद्विशेषशरीरके परमात्मनि चतुर्मुखत्वरूपस्थूलत्वावस्थापन्नचिद्विशेषविशिष्टात्मकावस्थान्तरापत्तिरपि भवति। सा च चिद्रूपविशेषणद्वारिकेत्युच्यत इति। ननु जीवस्य स्वरूपोत्पत्त्यादिस्वीकारेपि नाकृताभ्यागमादिदोषप्रसंगः। प्रळयेपीश्वरे जीवविभागशक्तेरनुवृत्त्यङ्गीकारादित्यत्राह **इत्यर्थं** इति। तथाच जीवविभागशक्त्यनुवृत्त्यादेस्त्वत्संमतस्य मैत्र्यादिभिरनुपबृंहितत्वात्, अस्मदुक्तार्थस्य चोपबृंहणात् एवमेव सिद्धान्तयितव्यमिति भावः। **मनुरिति**। "तदेतच्छ्रूयतां अत्र सम्बन्धे गदतो मम" इत्युत्तरार्धं **श्रीविष्णुपुराणे केशिध्वजखाडिक्यसंवादे**। संबन्धे=मोक्षतत्साधनसम्बन्धे॥ "यद्वै किञ्च मनुरवदत् तद्भेषजम्", "मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते।" इत्यादिप्रसिद्धप्रभावस्स इति हृदयम्। वेदार्थं स्मृत्वा=न तु कपिलादिवत् वेदार्थं रुद्धार्थं स्मृत्वा। **परिगृहीत** इति। पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवता पराशरब्रह्मर्षिणाप्युक्तरीत्याऽऽप्तत्वेन परिगृहीत इत्यर्थः। **आसीदिति**। ...."अप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥" इति

---

பிறப்பு ஒப்புக்கொண்டால்—பிறக்கும்போது அநுபவிக்கப் பிறர் செய்த கர்மாக்களை தான் எடுத்துக் கொள்ளல், தான் தொடர்பற்று இறந்து விட்டால், தான் செய்து—ஆனல் அநுபவியாத கர்மாக்களை பிறரிடம் கொடுத்தல் போன்ற குறைகள் சொல்லவேண்டிவரும் ஆகையால் உலகில் காரியமாகிய எல்லா திரவியங்களுக்கும் உற்பத்தியாவது—நேர் கொடுநேராக அவற்றின் உருவம் புதியதாக உண்டாகிறது என்றல்ல. பின்னை அவற்றின் முன் நிலை உள்ள அவ்வோ திரவியங்களுக்கு அந்தர்யாமியான ஈசுவரனிடமிருந்து, மேலே வரும் நிலையுடன் அவ்வோ திரவியங்கள் மாறுதலடைவது தான். இவ் விஷயத்தை—பராசராதிகளாலே வேதார்த்தங்களை வெளியிடுபவர் என்று கொண்டாடப்பட்ட மநுமஹர்ஷி,

सिसृक्षुर्विविधाः प्रजाः'' என்று உபப்ருஹித்தான் தமஸ்ஸுக்கு அவ்வருகே என்றும், தமஸ்ஸை மேலுக்கும் என்றும் சுருதிகள் சொல்லுகையாலும், "तमसः परमो धाता", "एकं पाद नोद्धरति स्वलीलायै", "अपेत्याहमिमां हित्वा संश्रयिष्ये

---

पूर्णश्लोकः । इदं जगत् तमोभूतं, "अक्षरं तमसि लीयते" इति तमोवस्थापन्नमासीत् । **अलक्षणत्वात्** शब्दस्पर्शादिरूपलक्षणकृतप्रत्यक्षयोग्यताया अभावात् प्रळये **अप्रज्ञातं** प्रकृष्टज्ञानरूपप्रत्यक्षाविषयः । **अप्रतर्क्यम्**=केवलानुमानागम्यम्, **अविज्ञेयं**=आगमजन्यविशेषज्ञानागोचरः । तर्हि त्रिविधप्रमाणागोचरत्वात् किं तदा शून्यमेव सर्वमभूत्? नेत्याह **प्रसुप्तमिव सर्वतः** । सुषुप्तौ यथा परमात्मनि जीवस्या-पृथगवस्थानम्, तथैव जगतोऽपि प्रळये परमात्मन्यपृथगवस्थानमित्यर्थः । **सोऽभिध्याये**ति । "अप एव ससर्जादौ तासु वीर्यमवासृजत्" इत्युत्तरार्धम् । मध्ये केचन श्लोका गताः । सः="ततस्स्वयम्भूर्भगवान्, अव्यक्तस्सनातनः, तेन नारायणस्स्मृत." इत्युक्तवक्ष्यमाणप्रकारो भगवान् । **अभिध्याय**=सङ्कल्प्य । **स्वाच्छरीरात्**=स्वकीयशरीरभूतात्तमसः । अप एवादौ ससर्जेति समस्तसमष्टितत्त्वसृष्ट्युपलक्षणम् । वीर्यं=अण्डोत्पादनशक्तिं तास्ववासृजदित्यर्थः ।

अथ प्रकृतौ विरुद्धधर्मबोधकवचनानां निर्वाहं दर्शयति **तमस** इति । "विश्वं पुराणं तमसः परस्तात्, आदित्यवर्णं तमसस्तु पारे" इत्यादिकमिह विवक्षितम् । तमो भिनत्तीति । **सुबालोपनिषदि**, "अपुनर्भवया कोशं भिनत्ति, कोशं भित्वा शीर्षकपालं भिनत्ति, शीर्षकपालं भित्वा पृथिवीं भिनत्ति" इत्यप्तेजो-वाय्वाकाशमनोभूतादिमहदव्यक्ताक्षरभेदनमुक्त्वा, "अक्षरं भित्वा मृत्युं भिनत्ति" इति श्रूयते । **अपुनर्भवया**=**मूर्धन्यया** सुषुम्नाख्यया नाड्या । **उत्क्रान्ते** । जीव इति शेषः । **कोशं**=हृदयकोशं । अत्र स्थानप्रामाण्यात् मृत्युशब्दः तमःपरः । अन्यत्र, "यस्याक्षरं शरीरम्" इति पठित्वा तदनन्तरं "यस्य तमः शरीरम्" इति पठनीये यस्य मृत्युश्शरीरमिति पठ्यते । तमसः परमो धाता शंखचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यश्शाश्वतो ध्रुवः." इति श्रीमद्रामायणे मन्दोदरीवचनम् । एकं पादं="पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इत्युक्तपादचतुष्टयात्मकभगवद्विभूतौ लीलाविभूतिरूपमेकं पादम् । स्वलीलारसार्थं स भगवान् नोद्धरति=नो संहरति । समुद्धरन् चेत् लीलारसं नानुभवेदित्यध्याहृत्य व्याख्येयम् । **आकरो** द्रष्टव्यः । **अपेत्याह**मिति । "मम त्वमन्या नित्यमहङ्कारकृतात्मकमिति पूर्वार्धम् । अस्यापि मूलं अन्वेष-णीयम् । अयं मुमुक्षोरनुसन्धानप्रकारः । अनया प्रकृत्या सह अहङ्कारकृतात्मकं=ममकारस्याहङ्कार-पूर्वकत्वात् तत्कृतं ममत्वं=सम्बन्धं अपेत्य=अतिक्रम्य इमाञ्च हित्वाऽहं निरामयं=निरवद्यं परमात्मानं

---

"ஈசுவரன் பிரளயம் முடிந்த பிறகு தனது சரீரத்திலிருந்து உலகைப் படைத்தான்" என்று விளக்கியுள்ளார் இந்த தமஸ்ஸு ஓரளவுக்குட பட்டது "தமஸ்ஸுக்கு அவ்வருகே பரமபதமுள்ளது; ஈசுவரனுடைய செல்வத்தில் இந்த தமஸ்ஸு கால்பங்கு தான ; இந்த தமஸ்ஸை தாண்டித் தான் பரமபதமடைய வேண்டும்". என்றிவ்வாறு வசநங்கள் இதன்

**निरामयम् ॥"** **इत्यादि स्मृति**களாலும் இத் தமஸ்ஸுக்கு **परिच्छिन्नत्वं सिद्धि**க்கையால் இதற்கு **व्यापित्वानन्तत्ववचनं** **स्वकार्यव्याप्ति-नित्यत्व-अंशानन्त्य,-भोगानन्त्यादिपर**ம் இதற்கு **सांख्य**ர் சொல்லும் **सर्वव्यापित्वानुमान**ம் **श्रुत्यादिबाधित**ம் இது **लौकिक तमस्स**ன்றென்னுமிடம் **तमोज्योतिस्सु**க்கள் இரண்டும் **उदि**யாத காலத்திலே

संश्र.यिष्य इत्यर्थः । **परिच्छिन्नत्वे**ति । तमसः पारवर्तित्वमेकत्वैकांशत्वत्याज्यत्वादिकथनात् अव्यापित्वरूपं परिच्छिन्नत्वं लभ्यत इत्यर्थः । **व्यापित्वानन्तत्ववचने**ति । 'अनन्तस्य न तस्यान्तः संख्यानं वापि विद्यते', 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा', "तदनन्तमसंख्यातप्रमाणञ्चापि वै यतः" इत्यादिकमित्यर्थः । अत्र साक्षादपि अनन्तत्वादिकीर्तनेन व्यापित्वं लभ्यते । सर्वगतक्षेत्रज्ञवर्गस्य अनया वेष्टितत्वकथनादपि अर्थादस्या व्याप्तित्वं प्राप्तमित्याशयः । ननु सिद्धान्ते विभुनोरप्यजसंयोगस्वीकरात् प्रकृतिपरमव्योम्नोरुभयोरपि परस्परं व्यापित्वे काऽनुपपत्तिः । तमसः परस्तादित्यादिकमपि परमपदस्य प्रकृतिविलक्षणत्वमेवाह ; न तु तदव्याप्तत्वमिति चेत्—न । "सप्तमीपञ्चमीप्रथमाभ्यः दिग्देशकालेष्वस्तातिः" इति विहितस्यास्य प्रत्ययस्य विलक्षणत्वार्थकताया अतिक्लिष्टत्वात् । "पादोऽस्य विश्वा भूतानि" इति स्पष्टं परिच्छिन्नत्वोक्तेश्च । अनन्तत्वं नाशरहितत्वरूपं नित्यत्वम् । व्यापित्वमपि स्वकार्यभूतप्रपञ्चमात्रव्यापित्वरूपं न सर्वदेशव्यापित्वरूपम् । अथवा महदादिरूपांशानन्त्यं शब्दस्पर्शाद्यनुभवरूपभोगानन्त्यं च भवत्वित्याशयेनेदं समाधत्ते **स्वकार्यव्याप्ती**ति । एतेन प्रकृतेस्सांख्योक्तं सर्वव्यापित्वानुमानमपि निरस्तमित्याह **इतक्कु** ति । पृथिव्यादीनि सकारणकानि, स्वाधिकपरिमाणकारणकानि च ; कार्यत्वात्, परिच्छिन्नत्वाच्च मृत्पिण्डोत्पन्नकलशवत् । प्रकृतिर्विभ्वी मूलकारणत्वात्, यन्नैवं तन्नैवम् ; यथा मृदादिकमित्यादि सांख्योक्तमनुमानं पूर्वोक्तपरिच्छिन्नत्वबोधकश्रुत्यादिबाधितमित्यर्थः । **आदि**ना युक्तिबाधोऽपि बोध्यः । तथाहि परिच्छिन्नत्वं स्वाधिकपरिमाणकारणकत्वं अणुभूते नित्ये जीवे भग्नव्याप्तिकम् । कार्यत्वे सति परिच्छिन्नस्य तथात्वमपि स्वन्यूनपरिमाणतन्त्वारब्धे पटे व्यभिचरितमिति ।

एवमेतावता तमश्शब्दो मूलप्रकृतिवाचीति कृत्वा तदुपरि विचाराः प्रावर्तन्त । अथ तदेव कथम्? तमश्शब्दस्यान्धकाराद्यनेकार्थत्वसम्भवादित्यत्राह—**इदु लौकिके**ति । न लोकप्रसिद्धान्धकार इत्यर्थः । अपि तु श्रुत्येकसिद्धप्रकृतिद्रव्यमेव तम इति भावः । **श्वेताश्वतरे** चतुर्थाध्याये,

அளவைக் கூறுகின்றன இவ்விதமிருக்கும் போது இதை—எங்குமுள்ள தாகவும் கணக்கற்றதாகவும் கூறும் சில வசனங்களுக்குக் கருத்து என்ன வெனில்—தனக்குக் கீழே இது எங்குமுள்ளதாகவும், எப்போதுமுள்ள தாகவும் எண்ணற்ற பாகங்களையும் போகங்களையும் உடையதாகவும் காட்டுவதே [கருத்து] இதை எங்குமுள்ளதாக ஸ்தாபிக்கவே ஸாங்கியர் முயலுவது வேதவிருத்தம் இந்த தமஸ்ஸு என்பது உலகில் உள்ள இருளாகாது என்னுமிடம் ச்ருதியில் விளங்குகிறது இருளும் வெளிச்சமும்

वर्तिक्किऱतेन्नैयाले सिद्धम्, इन्द तमस्सैप्पऱ्ऱ मायाशब्दम् विचित्रसृष्ट्युपकरणत्वत्तयाले उपपन्नम्. इदु मिथ्यार्थवाचि एन्बार्क्कु, "देवमायेव निर्मिता", "तेन मायासहस्रं तत्" इत्यादिप्रयोगङ्गळ् विरोधिक्कुम्. प्रयोगान्तरङ्गळिलुम् मिथ्यार्थप्रकाशनङ्गळिले मायाशब्दत्तुक्कु मुख्यत्वम् मिथ्यार्थत्तिल प्रयोगम् औपचा-

---

"यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः" इति श्रूयते। "नासीत्तमो ज्योतिरभून्न चान्यत्" इत्यन्यत्र महोपनिषदि च। तथा च तमसो लौकिकत्वे तत्कालस्य रात्रिभिन्नत्वतमोरात्र्यायोग इति भावः। अथ तमश्शब्दवाच्यायाः प्रकृतेः, "मायां तु प्रकृतिं विद्यात्" इत्यादिना मायामात्रत्वप्रतिपादनात् मिथ्यात्वमेव सिध्यतीति वादमपि निराकुरुते इन्दतमस्सै इति। अयं भावः—सत्यमिथ्यार्थसाधारण्येनाश्चर्यभूत एवार्थे मायाशब्दः प्रयुज्यते। अनाश्चर्यभूतशुक्तिकारजतादिषु मायाशब्दप्रयोगादर्शनात्। केवलमिथ्यार्थवाचित्वे तु तस्य तत्रापि प्रयोगप्रसङ्गात्। तन्मतव्यामोहितानां केषाञ्चित्तत्र, "मायिकं रजतम्" इत्यादिप्रायिकप्रयोगास्तु नादर्तव्याः। प्रकृतौ च महदादिनानाविधनीचोच्चप्रपञ्चसृष्ट्युपकरणत्वादाश्चर्यमयत्वमस्त्येवेति। अथ मायाशब्दस्य मिथ्यार्थवाचित्वे प्राचीनप्रयोगविरोधं दोषमाह इदु इति। "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादौ न हि जानक्या मिथ्यात्वं प्रतिपिपादयिषितम्। अपित्वाश्चर्यावहसौन्दर्यशालित्वमेव। एवम्, "तेन मायासहस्रं तच्छम्बरस्याऽऽशुगामिना। बालस्य रक्षता देहमैकैकश्येन सूदितम्" इत्यपि शम्बरासुरस्य मायासहस्रमिथ्यात्वं न कथञ्चिदपि प्रतिपादयति। तथासति तस्य ज्ञानमात्रनिवर्तनीयत्वेन सुदर्शनसूदनीयत्वानुपपत्तिः। तेन=सुदर्शनेनेत्यर्थो हि तत्र प्राकरणिकः। ननु लोके ऐन्द्रजालिकादिष्वपि मायाविशब्दप्रयोगात् तत्कृतेन्द्रजालस्य मायात्वं मिथ्यात्वरूपमेव प्राप्नोतीत्यत्राह प्रयोगान्तरेति। तथा वैन्द्रजालिककृतस्य स्वशिरश्छेदादिरूपमिथ्यार्थप्रतिभानस्यैव इन्द्रजालस्य स्वयं सत्यभूतस्य मायाशब्दमुख्यार्थत्वमिति क्व मायाया मिथ्यात्वमित्यर्थः। यदि कश्चिन्मिथ्याभूतनच्छिरश्छेदादावेव मायाशब्दव्यवहारः, तदाप्याह—मिथ्यार्थेति। तथाच यत्र शक्यार्थगतगुणयोगादिकमादायार्थान्तरे न निर्वाहो भवति, तत्रैव हर्यादिशब्दानां नानार्थेषु तुल्यं मुख्यत्वम्। इह तु शिरश्छेदादेर्मिथ्याभूतस्य मायाशब्दवाच्याश्चर्यावहभ्रमणिकप्रतिभानविषयत्वादपि गौणं मायात्वमुपपद्यत इति न तत्र तस्य मुख्यत्वमिति हृदयम्। ननु यदि माया मिथ्यार्थप्रतिभानमात्रम्, तर्हि नीतिशास्त्रादिषु भेदेन मायेन्द्रजालरूपोपायविशेषकथनं विरुध्येत; उभयोरपि मिथ्यार्थप्रतिभानवाचित्वेन

---

*இல்லாதபோதும் இந்த தமஸ்ஸு இருக்கிறது என்பது சுருதி இதையே மாயை என்பதற்கும் காரணம் வருமாறு. அதாவது—பல பல விதங்களில் விசித்திரமாகப் பொருளை உண்டுபண்ணுகிறது என்பதுதான் மாயை எனில் பொய் என்பது தான் பொருள் என்பர் சிலர் அது சரியன்று சீதை தேவமாயைபோல் உள்ளாள், சம்பராசுரனின் ஆயிரமாயிரம் மாயை களை சக்கிரத்தாழ்வான் அழித்தான் என்பது போல் உலகில் வழங்குகிறது.*

रिகம் இப்படி நீतिशास्त्रोक्तसामादिसप्तोपायங்களில் मायेन्द्रजालविभागமும் अन्यथा-परिणामशक्तियாலும் अन्यथाप्रकाशनशक्तियாலும் கண்டுகொள்வது.

"प्रकृतिः कारणं माया तमस्सद्सदक्षरम्। अव्याकृतमसद्व्योम योनिः शक्तिरजा त्रयी ॥ अलिङ्गं गुणसामान्यं प्रधानं मूलकारणम्। विद्याऽविद्या चाङ्गभावः ग्रन्थिः पाशश्च जालकः ॥ सलिलं प्रतिमा बुद्धिः कालोऽव्यक्तं कला निशा। मृत्युर्ब्रह्म समुद्रश्च वाक्प्रज्ञा नियतिर्लयः ॥"

पौनरुक्त्यापातादित्यत्राह—इप्पडि इति। मायाशब्दस्य क्वचिद् गौणतयापि प्रयोगदर्शनादित्यर्थः। सामादिसप्तोपायेति। यथाह कामन्दकः—"साम दानञ्च दण्डश्च भेदश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिताः ॥" इति। अत्र सामादिचतुष्टयं मुख्योपायः। अन्ये त्रयोऽमुख्योपायाः इति तात्पर्येण द्वैराश्यकरणम्। तदुक्तं सर्वार्थसिद्धौ, "नीतिशास्त्रेषु मुख्यामुख्यसङ्कलनेन सप्तविधोपायपरिगणनम्" इत्यादि। अत्र मायायास्स्वरूपोदाहरणादिकमपि कामन्दकीय एवं दृश्यते—"कामतो रूपधारित्वं शस्त्रास्त्राश्माम्बुवर्षणम्। तमोनिलीनता चैव इति माया तु मानुषी ॥ जघान कीचकं भीम आश्रितस्स्त्रीसरूपताम्" इति॥ तत्रैवेन्द्रजालस्वरूपञ्च, "मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम्। दूरस्थानाञ्च सैन्यानां दर्शनं ध्वजशालिनाम् ॥ छिन्नपाटितभिन्नानां संस्कृतानाञ्च दर्शनम्। इतीन्द्रजालं द्विषतो भीत्यर्थमुपकल्पयेत्" इति॥ अन्यथापरिणामेति। तथाचोक्तवचनैरनयोः पूर्वस्मिन् अन्यथापरिणामः उत्तरस्मिन् अन्यथादर्शनमात्रम्, न तु परिणाम इति भिन्नार्थकतयैव प्रयोगान्नास्माभिस्तत्र किञ्चिन्निर्वाह्यमित्यर्थः। एवं प्रकृतौ मायाशब्दनिर्वाहं प्रदर्श्याथान्येषामपि तन्नामधेयानां यथायथं निर्वाहमाह प्रकृतिः कारणमिति। अस्य चाऽऽकरो ज्ञेयः। स्वविकारान् प्रकरोतीति प्रकृतिरित्यादौ योगवृत्तिः, मायाशब्दादौ रूढिवृत्तिः, ग्रन्थिपाशशब्दादौ बन्धकत्वादिगुणयोगात् गौणवृत्तिः, विद्याऽविद्यापदादौ सत्त्वादिना विद्याविद्यादिजनकत्वरूपशक्यार्थसंबन्धमादाय लक्षणावृत्तिश्चेति यथासंभवं निर्वाह इत्यर्थः। सदसत्त्वम्=कार्यकारणरूपत्वम्। अक्षरशब्दार्थश्चानुपदमेव वक्ष्यते। नामरूपव्याकरणाभावादव्याकृतत्वम्। असत्त्वं=केवलं कार्यावस्थराहित्यम्। उभयावस्थत्वात्। "निचाय्यत्वादेवं व्योमवच्च" इति सूत्रोक्तरीत्या व्योमसदृशतया स्वकार्यवर्गव्याप्तत्वेन व्योमेत्युच्यते। "योनिश्च हि गीयते" इति योनिरुपादानकारणं भवति प्रकृतिरचेतनजगतः। शक्तित्वमपि तस्या भगवदपृथक्सिद्धविशेषणत्वात्। त्रयी=गुणत्रयमयी। अलिङ्गम्=उद्भूतशब्दादिलिङ्गरहितम्। अङ्गभावः=अहम् प्रत्यप्राधान्यवती। धर्मधर्मिणोरभेदविवक्षया तथा निर्देशः। जालकः=मत्स्यग्राही साधनविशेषः। तद्वत्प्रकृतिरपि मोहनत्वात् "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा रङ्गात्" इति चेतनानां स्वस्मिन् ग्राहिका भवति। सलिलं=तद्वत्सततचलनपरिणामिनी।

---

அங்கெல்லாம் பொய்ப்பொருளில்லையே நீதிசாஸ்திரங்களில்—ஸாமம் தானம் முதலிய ஏழுவிதமான பிறருடைய வசீகரண உபாயங்களில் மாயை—இந்திர ஜாலம் என இருவகையுண்டு முதலாவது—பொருளை உண்மையிலேயே வேறாக மாற்றிவிடும், இரண்டாவது—பொருளை வேறாக காட்டுவதோடு சரி இம் முக்குணப்பொருளை—பிரகிருதி, காரணம், மாயை, ஸதஸத்—

என்றார்போலவும், மற்றும் இதுக்குச் சொல்லும் **रजःप्रभृति**களான பேர்களுக்கெல்லாம **यथासंभवं योग-रूढि-गोण(गौणी?)लक्षणावृत्ति**களாலே **उचितनिर्वाह**முண்டு.

**अव्यक्ततमोमध्यपठित**மான **अक्षरशब्द**த்தை ஜீவ**विषय**மாக எடுத்த **ग्रन्थ**ங்களுக்கு **तदवस्थत्रिगुणद्रव्यविशिष्टचेतनसमष्टिविशेष**த்திலே **तात्पर्य**ம் ॥ **अक्षरशब्दं प्रकरणानुगुण**மாக **"अक्षरं न क्षरं प्रोक्तं अश्नोतेर्वा सरोऽक्षरम्"** என்கிற **व्युत्पत्ति**களாலே **प्रकृतिपुरुषेश्वर-**

---

सत्त्वगुणसमुद्रेके प्रतिभाबुद्ध्यादिहेतुत्वात्तद्रूपत्वम्। स्वविकारान् कलयतीति **काल** उच्यते। **कला**=भागवतोंशः। **निशा**=तद्दवारिका तत्त्वज्ञानानाम्। **मृत्युः**=संसृतिहेतुः। बृहत्त्वात् ब्रह्मापि सा भवति। नदीनां समुद्र इव स्वकार्याणां पर्यवसानभूमित्वात् समुद्रः। **वाक्**=तदुपलक्षितकर्मेन्द्रियकारणम्। **प्रज्ञा**=तदुपलक्षितज्ञानेन्द्रियकारणम्। **नियतिः**=स्वकार्यनियामिका। **लयः**=स्वकार्यलयस्थानम्। **रजः**=धूळिरिवावारिकेति पूर्ववत्।

ननु, "अक्षरं तमसि लीयते" इत्यत्राक्षरशब्दस्य भाष्ये जीववाचिताकथनं कथं युज्यत इत्यत्राह **अव्यक्ततम** इति। "कूटस्थोऽक्षर उच्यते" इत्यादौ तस्य जीववाचितायामविवादात् **मध्य-पठिते**ति। **ग्रन्थः**=शारीरकाक्षराधिकरणे, 'सा च प्रशासनात्' इत्यत्र, "अव्यक्तमक्षरे लीयते", "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्", "क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादौ प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगात्" इति ग्रन्थः। **तदवस्थे**ति। अक्षरावस्थेत्यर्थः। इह वक्तव्यं सर्वमनुपदमेवोक्तं तत एवाधिगन्तव्यम्। नन्वक्षरशब्दस्य रूढ्या वर्णपर्यायत्वेन कथमर्थान्तरवाचकतेत्यत्राह **अक्षरशब्दे**ति। तथात्र प्रकरणाविरोध एव रूढिप्राबल्यस्यापशूद्राधिकरणे निर्णीतत्वात् प्रकृते च तदभावात् वक्ष्यमाणप्रकारेण प्रकृत्यपादिवाचकत्वमेवेति भावः। "अक्षरं न क्षरं प्रोक्तं (विद्यात्) अश्नोतेर्वा सरोऽक्षरम्" इत्येव पाठः **व्याकरणवार्तिके** दृश्यते। "अथ किमिदमक्षरमिति। अक्षरं न क्षरं विद्यात्। न क्षीयते न क्षरतीति वा **अक्षरम्**। अश्नोतेर्वा सरोऽक्षरम्=अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः। अश्नुत इत्यक्षरम्" इति **महाभाष्यम्**। "सरन्प्रत्ययस्यानुबन्धलोपे सति अनुकरणं सरः" इति **कैय्यटः**। तथाचाश् इत्यत्र शकारस्य ककारे सर इति सकारस्य षकारे चाक्षरमिति रूपसिद्धिर्बोध्या। **प्रकृतिपुरुषे**ति। एषां त्रयाणामपि स्वरूपनित्यत्वेन यथायथं स्वरूपतो धर्मभूतज्ञानतः

---

அக்ஷரம்—அவியாகிருதம் அஸத், வியோம என்பது போன்ற பல பல பேராலே அழைப்பர் அதற்கெல்லாம் தக்கபடி, காரணப்பெயராம், இரண்டாந்தரமான பெயர் என்றவாறு நிர்வாஹம் செய்யலாம்.

அவியக்தம் அக்ஷரம் தமஸ்ஸு என்றவிடத்தில்—அக்ஷரம் என்னும் சொல்லே ஜீவன் என்ற பொருளில் பாஷ்யத்தில் எடுத்ததற்கு—தமஸ்ஸு எனனும் பிரக்ருதியின் நிலையுடன்கூடிய ஜீவர்களின் ஸமஷ்டி என்று தான் கருத்து கொள்ளவேணும் பொதுவில் வியாகரணவிதிப்படி—அக்ஷரம் என்னும் சொல்—அவ்வோ இடங்களுக்கு ஏற்ற வகையால்

**तत्त्व**ங்கள் மூன்றிலும் **प्रयुक्त**ம் இவ்**अचेतनविशेष**மான **अक्षर**த்தை **मुक्त**ருக்கும் **ईश्वर**னுக்கும் **भोगस्थान**மென்று பிறர் சொன்ன **अर्थ**த்துக்கு **मूल**மில்லாமையாலே **अप्राकृतपरमव्योम**த்தில் **अक्षरव्योमशब्दप्रयोग**த்தையும், "**पुराणमाकाशमयम्**" **इत्यादिप्रयोग**த்தையும் கொண்டு இப்படி **उत्प्रेक्षि**த்தார்களாயித்தனை, இவ்

---

स्वकार्यवर्गतोऽधोभागे च व्यापित्वेन च, "अक्षरात् परतः परः", "कूटस्थोऽक्षर उच्यते", "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादौ त्रिष्वपि प्रयोग इति भावः । अथाक्षरशब्दवाच्ये यादवप्रक्रियां दूषयति **इव् अचेतनविशेषे**ति । चेतनस्य वर्णस्य च व्यवच्छित्तये इदं विशेषणद्वयम् । **पिरर्** इति । तथा च **तत्त्वविचारणा**, "परमाकाशो नाम प्रकृतेराद्यावस्था" इत्यारभ्य, "स एवमुक्तानामीश्वरस्य च स्थानम् । शब्दपरिणामशक्तियुक्तत्वात् वागिति चोच्यते । अक्षरमिति च" इत्यादि । **मूलमिल्ला-मैयाल्** इति । अस्यार्थस्य श्रुतिस्मृत्यादिष्वदर्शनादित्यर्थः । प्रत्युत श्रुत्यादिविरुद्धश्चैतदिति **भास्कराद्य-धिकारे** वक्ष्यते । कथं तर्हि तथा तैरुक्तमित्यत्राह **अप्राकृते**ति । वस्तुत एवमेव तैर्विकल्प्यमित्यभिसन्धिः । एतदुक्तं भवति—"तदक्षरे परमे व्योमन्" इत्यादिषु परमव्योमविशेषणतया श्रुतस्याक्षरशब्दस्य न प्रकृतिभागादिवस्तुविशेषनामधेयत्वं युक्तम् । विशेषणत्वेन केवलं यौगिकत्वात् । न हि 'भूधरो नरपतिः' इत्युक्ते भूधरशब्देन पर्वतप्रतीतिः । एवं परमशब्दविशेषितव्योमापि न प्राकृताकाशः । तथा च परमव्योम्नि केवलयौगिकाक्षराकाशादिशब्दं प्रयुक्तं श्रुत्वा रूढोऽयमित्यन्यथाजानन्तः तदेवैतदित्यवो-चन्निति । नन्वव्यक्तस्याक्षरे लयो नाम महदादीनां महत्त्वावस्थाप्रहाणवत् नाव्यक्तत्वावस्थाप्रहाणम् । तथासति तत्त्वान्तरतापत्तेः । किन्तु देहादिलये त्रिधातुसाम्यादिवत् गुणत्रयसाम्यापत्तिरेवेति वक्तव्यम् । तथाच ततः प्राक् अव्यक्ते गुणत्रयस्य वैषम्ये स्वीकृते सति अव्यक्तमपि महदादिवत् व्यक्तमेव स्यादित्यत्राह **इव् अक्षरत्तिले** इति । अयं भावः—अव्यक्तं अक्षरे लयात्प्राक् गुणवैषम्ययुक्तमपि न महदादिवत् व्यक्तं स्यात् । गुणवैषम्यप्रयुक्तविकाराणां यदा स्फुटता, तदैव व्यक्तत्वधर्मस्वीकारात् । यथा महदादौ । न त्वव्यक्ततादशायां तथात्वमिति गुणसाम्यस्थितेरभाय एवेति तत्राव्यक्तशब्दप्रयोगस्समञ्जस एवेति । तर्ह्येतादृश्या दशायाः अव्यक्तात् पूर्वमपि तुल्यतयाऽक्षरतमसोरप्यव्यक्तसंज्ञा स्यादिति चेत्तत्राह **रूढि-यालुम्** इति । तथा च योगरूढत्वादस्यास्संज्ञायाः केवलयोगार्थविवक्षामात्रेणान्यत्र प्रयोगं प्रति रूढिशक्तेः पङ्कजपदादाविव प्रतिबन्धकत्वान्नातिप्रसङ्ग इति बोध्यम् ।

---

*பிரக்ருதி, ஜீவன, ஈசுவரன என்ற மூன்று பொருளில் பயின்றுவரும் இவ்விதம் அசேதநமாகிய இந்த அக்ஷரத்தை—முக்தியடைந்தோருக்கும் ஈசுவரனுக்கும் போகம் தருமிடமாக சிலர் வர்ணித்தார்கள் அதற்கு ஆதாரமில்லை. சில வசனங்களில்—பரமபதமாகிய அந்த இடத்தை அக்ஷரம் ஆகாயம்—என்று சொல்லியிருப்பதைமட்டும் பார்த்து மயங்கினார்களாயித்தனை. அவியக்தம் என்று இதைச் சொல்வது—முக்குணங்களுமிதில்*

**वक्षर**த்திலே **லயி**க்கும் என்றெதினை **अव्यक्त**த்தில் **गुणवैषम्य**த்தால் வரும் பிரிவு தோற்றுமையாலுய ... **अव्यक्तशब्दम्** **प्रयुक्त**மாகிறது.

இதில் முற்பட **गुणवैषम्यविभक्तप्रदेश**த்திலே பிறந்த **विकार**ம் மேல்வரும் **कार्य**ங்களெல்லாத்திலும் பெரிதான அளவாலே **महान्** என்று பேர் பெற்றிருக்கும் **अधिकृत तन्त्रानन्यथासिद्धानेकशास्त्र**ங்களிலே **महदहंकारादिक्रम**த்தாலே **सृष्टि** சொல்லுகையாலே '**उद्बबर्ह त्मनश्चैव मनस्सदसदात्मकम् । मनसश्चाप्यहंकार**मभि-

ननु महानिति किमुच्यते? प्राथमिकः प्रकृतेर्विकार इति चेत्, अक्षरमेव तथेति तदेव महानिति, समष्टितत्त्वेषु तथासति सर्वेषामप्युपादानानां स्वकार्यापेक्षया महत्त्वस्यावश्यकतयाऽतिप्रसङ्गादित्यत्राह—**इदिल्** इति अयमाशयः—"गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने । गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम" इति प्रकृतेर्गुणसाम्यप्रदेशे क्वचित् जीवविशेषानुप्रवेशपूर्वकं प्रथमं परमपुरुषसङ्कल्पात्, पवनरयवशात् उदधेः प्रदेशैकदेशे कल्लोल इव, गुणवैषम्याविर्भावात् महदाख्यः प्रथमो विकारो भवति । नाव्यक्ताक्षरादिस्तथा । तत्तदवस्थाया अव्यक्तादिनामान्तरभजनार्हत्वेपि रूपान्तरभजनानर्हत्वात् । एतदुभयार्हावस्थाया एव विकारशब्दार्थत्वात् । स्वकार्यापेक्षया महत्त्वस्य योगार्थस्याऽऽपेक्षिकत्वस्य सर्वसाधारण्येपि पूर्वोक्तरूढ्यर्थस्याप्यत्र मेलनेनास्य पदस्याव्यक्तपदवत् योगरूढत्वान्नान्यत्रातिप्रसङ्ग इति । पूर्वोदात्तश्लोके **गुणसाम्यादि**ति बहुव्रीहिः । **गुणव्यंजनम्**=गुणवैषम्यम् । एवं प्रकृतेर्महतः प्रथमसृष्टिं प्रतिपाद्य मनुस्मृतौ क्रमान्तरप्रतिपत्तिं वारयति **अधिकृते**ति । इदम्परेत्यर्थः । आप्तत्वसाम्येपि क्रमबोधकश्रुतीनामेव सृष्टिक्रमप्रतिपादनैदम्पर्यम् । भूयस्त्वञ्च विवृते । मनुस्मृत्यास्त्वल्पीयस्या धर्मव्यवहारादिप्रतिपादनपरत्वेन सृष्ट्यादौ तदभावश्चेति भाव. । **अनेकशास्त्राणि**=छान्दोग्यसुबालादिश्रुतयः, विष्णुपुराणभागवतमादिस्मृतयश्च । **"गुणसाम्यात्ततस्तस्मात्"** इत्यादि**विष्णुपुराण**-**वचन**मनुपदमेवोपात्तम् । **भारते जनकयाज्ञवल्क्यसंवादे,** "अव्यक्तं च महांश्चैव तथाऽहङ्कार एव च" इत्यादि प्रसिद्धम् । तथा **यमस्मृतौ,** "मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः" इत्याद्युक्तम् । मन्तव्यत्वान्मनः=प्रकृतिः । "महान् वै बुद्धिलक्षणः" इत्याद्युक्त्या बुद्धिर्महान् । **उद्बबर्हे**ति । [परमात्मा] **आत्मनः**स्वस्मात् प्रामाणिकत्वाप्रत्यक्षत्वाभ्यां सदसदुभयरूपं मनः **उद्बबर्ह** ससर्ज । अत्र परमात्मनो मनस्सृष्टिः, "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादाविव परम्परया बोध्या । अत्र यद्यपि, "मनो बुद्धिरहङ्कारः" इत्यत्रैव मनश्शब्दः प्रकृतिपर इति वक्तुं शक्यम्। अथाप्युपरि "मनसश्चाप्य-

வியக்தமாகத் தெரியாமையாலும், இடுகுறிப்பெயராகையாலும் ஆம்

இதில் முக்குணங்களும் ஏற்ற இறக்கமாயிருக்கும் பிரதேசத்தில் முதல் மாறுபாடு ஏற்படுகிறது அதற்கு மஹான் என்று பெயரிட்டார்கள் பிறகு வரப்போவதெல்லாவற்றையும்விடப் பெரியதல்லவோ அது இதற்கென்றே தோன்றின ஆப்தர்களின அசைக்கமுடியாத அநேகவசனங்கள்—மஹான்—அஹங்காரம் என்ற வரிசையில் பிறப்பு கூறுகையாலே—ஆத்மாவின்

**मन्तारमीश्वरम् ॥ महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च । विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥'** *இத்யாதி* **वचन***ங்கள்* **अन्यपर***ங்களாமதத்தினை இம்***महान्, क्षेत्रज्ञ***ர்களுக்கு* **मन***ஸ்ஸு* **अध्यवसाय हेतु***வாம்போது* **सहकारि***யானவளவாகில* **महान् वै बुद्धिलक्षणः** *என்று சொல்லப்பட்டது இதுதனக்கே* **ज्ञातृत्वादि***களைச் சொல்லும்* **सांख्य***ர்க்*

---

हङ्कारम्" इति कथनात् क्रमबाधेन मनश्शब्दो यथाश्रुतार्थ एव। मनसश्च(पूर्वं) अहङ्कारमुद्बर्ह। अहमभिमान-हेतुत्वात् स्वकार्यकरणसामर्थ्याच्च तस्य, "अभिमन्तारमीश्वरम्" इति विशेषणद्वयम् । **आत्मानं** स्वशरीरभूतं महान्तश्चोद्बर्ह । "सर्वाणि त्रिगुणानि च" इति तन्मात्रभूतादिसर्वपदार्थोपलक्षणम् । सर्वस्य गुणत्रयमयत्वात् । पञ्चेन्द्रियाणि चेति चकारात् कर्मेन्द्रियाण्यप्युपलक्षणीयानि । **अन्यपरे**ति । अत्रैषा-मुत्पत्तिक्रमे न तात्पर्यम् । किन्तु साङ्ख्यरीत्या स्वतन्त्रोत्पत्तिप्रतिषेधे, परमात्मसकाशादेवोत्पत्ति-विधाने च तात्पर्यमिति भावः । ननु, "भूतादिं ग्रसते चापि महान् वै बुद्धिलक्षणः" इत्यहङ्कारो-पादानभूतमहत्तत्त्वस्य बुद्ध्यभेदप्रतिपादकविष्णुपुराणवचनस्य का गतिः ? बुद्धिर्ह्यध्यवसायरूपिण्यात्मनो धर्म इत्यत्राह **इम्महानि**ति । सत्यं बुद्धिरध्यवसायात्मा आत्मधर्म एव । अथापि मनसा तस्यां जननीयायां महत्तत्त्वं सत्वप्रधानत्वात् सहकरोतीति तात्पर्येण तथोक्तिरिति भावः । अत्र, "महान् वै बुद्धिलक्षणः" इति महतो बुद्ध्यभेद एवोक्त इति मत्वा यत् **वादिकेसरि**कृततत्त्व**निरूपणे**, "सात्विको राजसश्चैव" इति विष्णुपुराणोक्तमहत्तत्त्वविभागस्य, "प्रवृत्तिञ्च निवृत्तिञ्च" इति **गीतो**क्त-बुद्धिविभागैकार्थ्यप्रतिपादनं दृश्यते, तदप्यनादेयमेव । अस्य—साङ्ख्यपक्षतुल्यतया अत्रैवानुपदं निराकरिष्यमाणत्वात् । ननु महतो बुद्धिलक्षणत्वं बुद्धिधर्मकत्वमेव । अत एव हि तस्यैव ज्ञातृत्वं वास्तविकम् । आत्मनस्तु स्वच्छेऽस्मिन् प्रतिफलनेन, अभिव्यञ्जकानामात्मनिष्ठतयैवाभिव्यङ्ग्याभिव्यञ्जन-स्वाभाव्येन च ज्ञातृत्वमारोपितं भवतीति **तत्त्वसमीक्षो**क्तिरपि घटते इत्यत्राह **इदु तनक्के** इति । महत एवेत्यर्थः । आत्मसद्भावे=अतिरिक्तात्मसद्भावे । **प्रमाणमिल्लैयाम्** इति । "अथ यो वेदेदं जिघ्राणीति स आत्मा" इत्यादिना ज्ञातृतया प्रसिद्धस्यात्मनो महत्तत्त्वानतिरेकादिति अतिरिक्तात्म-सद्भावे प्रमाणाभावप्रसङ्ग इति भावः । अथाहङ्कारादिषु गुणत्रयवैषम्यानुवृत्त्यर्थं तत्कारणभूतमहत्तत्त्वेपि त्रेधा गुणतो विभागं दर्शयति **सात्त्विक** इति । इदु=महान् । एवं त्रेधाविभक्तमहत्तत्त्वविषये सांख्याभिमतं विशेषमनूद्य खण्डयति **शिलर्** इति । अध्यवसायलक्षणमाय्=अध्यवसायरूपवृत्तिविशिष्ट-तया । **तथाच सांख्यभाष्यम्**, "महत्तत्त्वस्य पर्यायो बुद्धिः" इति ।" **तुणै**=अध्यवसायस्य रूपादिविषयोप-स्थापनद्वारा सहकारिणि । चेष्टालक्षणम्=शरीरचेष्टाख्यवृत्तिविशिष्टम् । **कर्मेन्द्रिये**ति । वचनादानादि-

---

*பக்கலில் மனது பிறந்தது, மனதிலிருந்து அஹங்காரம் என்றிப்படி வேறு வகையில் கருத்து கொள்ளலாம் இந்த மஹானை—புத்தியாகவே சிலர் சொல்லுவர் அதற்குக காரணம்—மனிதர்களுக்கு மனதிலுல் புத்தி உண்டாகும் போது இது உதவுகிறது என்பது தான் இதையே அறிவு*

கும் ஆத்மஸத்பாவத்திலே ப்ரமாணமில்லையாம் 'सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्'' என்கையாலே இது குணவைஷம்யத்தாலே மூன்று படியாயிருக்கும் சிலர் सात्त्विकमहान् अध्यवसायलक्षणமாய் बुद्धि என்று பேர் பெற்றிருக்கும் என்றும், இதற்கு ज्ञानेन्द्रियங்கள் ஐந்தும் துணை என்றும், राजस महान् चेष्टालक्षणமாய் प्राणனென்று பேர் பெற்றிருக்குமென்றும், இதற்கு कर्मेन्द्रियங்கள் ஐந்தும் துணை என்றும், मनस्सु இரண்டுக்கும் துணை யென்றும், तामसमहान् त्रुटिलवादिलक्षणமாய் कालமென்று பேர் பெற்றிருக்கும் என்றும் சொல்லுகிற பிரிவுகளுக்கு प्रतिवाक्यம் प्रमाणविरोधங் கண்டுகொள்வது இவை संज्ञामात्रங்களாகில் वाक्यान्तरविरोधமில்லை இந்த महान् முதலான समष्टिதத்துவங்களெல்லாம் பின்பு अण्डा-

रूपचेष्टायास्तत्तद्विषयोपस्थापनद्वारोपकारकाणीत्यर्थः । **मनस्** इति । “उभयात्मकमत्र मनः” इत्युक्तत्वादिति भावः । “अन्यत्र मना अभूवम् । तेन नाश्रौषम्” इत्याद्यनुभवात् मनस्सहकाराभावे कस्यापीन्द्रियस्याप्रवृत्त्या तस्योभयात्मकत्वम् । यथैक एव नरस्सङ्गवशान्नानात्वं भजते—कामिनीसङ्गात् कामुकः, विरक्तसङ्गाद्विरक्तश्च भवति । एवं मनोपि चक्षुरादिसङ्गात् चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नानात्मकं भवतीति तत्र विवरणम् । त्रुटिलवादयो निमेषादपि न्यूनाः कालविभागाः । **कालम्** इति । तन्मते कालाख्यातिरिक्तपदार्थानङ्गीकारात् सर्वपदार्थावारकत्वसाम्याच्च तामसमहानेव काल इत्युच्यत इति बोध्यम् । **प्रतिवाक्यम् प्रमाणविरोध** इति । इदमत्राकूतम्—आत्मधर्मभूताया बुद्धेर्नित्यत्वादजडत्वाच्च न जडभूतमहत्तत्त्वकार्यत्वम् । वायुविशेषस्य प्राणस्य, “आकाशाद्वायुः” इति गगनकार्यतया साक्षात्प्रकृतिकार्यत्वञ्चानुपपन्नम् । “अनादिर्भगवान् कालः” इत्यादिना नित्यः कालपदार्थोऽवगम्यते, न तु प्रकृतिकार्यतामसमहदभिन्नः । मनसस्साक्षात्सङ्कल्पादिजनकत्वेन ज्ञानेन्द्रियत्वमेव, न तु कर्मेन्द्रियोपकारकत्वमात्रात्तदात्मकतेत्यादि । विरोधभूयस्त्वाभिप्रायेण प्रतिवाक्यमित्युक्तिः । ननु सात्त्विकमहान् बुद्धिरित्यादिरीत्या केवलं परिभाष्यते तस्मिन् शास्त्रे ; न तु प्रसिद्धबुद्धितत्त्वाद्यभेदोप्यभिमतस्तत्रेत्याशङ्कायामाह **इवै** इति । बुद्ध्यादिशब्दा इत्यर्थः । नाममात्रे न विवाद इति न्यायादिति भावः । वस्तुतस्तु तेषान्नाममात्रत्वं न तैस्स्वीकर्तुं शक्यम् । संज्ञा विधाय तदनुगुणकार्यभेदानामपि तैः प्रतिपादनात् तासां तात्त्विकत्वप्रतीतेर्दुर्वारत्वादित्यवगन्तव्यम् । ननु कथं महतः अध्यवसायहेतुमनस्सहकारित्वम् ? मनसः प्रतिजीवं भिन्नतया एकस्यानन्ततदुपकारकत्वायोगात् । महतस्स्वकार्यवर्गापेक्षया महत्त्वेन तदुपपत्तौ च, एकदा पुरुषद्वयेऽध्यवसायानध्यवसायदर्शनेन तद्विरोधापातात् । उभयत्राप्येकरूपोपकारस्यैवावश्यम्भावादित्यत्र व्यष्टिसृष्टौ महतः प्रतिशरीरं विभक्ततया तत्तत्पुरुषस्य कर्मानुगुणमुपकारभेदो भवतीति दर्शयति **इन्द्महानिति** । अनयोश्शङ्कापरिहारयोस्तत्त्वान्तरेष्वपि

டையது என்னும் ஸாங்கியர்களுக்கு வேறு ஆத்மாவுண்டு என்கைக்கு பிரமாண வசனங்கள் அகப்படா இதுவும்—ஸாத்துவிக—ராஜஸ—தாமஸங்கள்

स्तर्वैतिव्यष्टिसृष्टியிலே क्षेत्रज्ञர்க்கு प्रतिशरीरம் विभक्தங்களாம்

இம்महाனில்நின்றும் பிறந்த विकारविशेषம் अहंकारம் இது अनात्माவான देहத்தில் अहमभिमानकरणத்துக்கு सहकारियாகையாலே अहंकारமென்று சொல்லப்படுகிறது अहङ्कारतत्त्वமே अहमर्थம் என்று सांख्यரும் मायावादिகளும் சொன்னது आत्मानात्मविवेकश्रुत्यादिविरुद्धம் अहङ्कारம் त्याज्यமென்னுமது देहात्मभ्रमादि

---

तुल्यत्वादुच्यते—"मुदलान समष्टितत्त्वङ्ग्" इति। जीवविशेषस्य कर्मविशेषमनिमित्तीकृत्याण्डसृष्टेः प्राक् महदादीनां सृष्टिः समष्टिः। तदनन्तरं तन्निमित्तीकृत्य शरीरादीनां सृष्टिः व्यष्टिरिति भिदा बोध्या। तथाच गीयते, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचरः॥ इच्छाद्वेषस्सुखं दुःखं सङ्घातश्चेतनाधृतिः। एतत्क्षेत्रं समासेन सविकारमुदाहृतम्" इति। बुद्धिः= महान्। चेतनाधृतिः=चेतनया ध्रियमाणस्संघात इत्यैकपद्यम्। अत्राव्यक्तपर्यन्तं क्षेत्रारम्भकाणां प्रदर्शनम्, इन्द्रियगोचरा इत्यन्तं क्षेत्राश्रितानाम्, इच्छेत्यादेः क्षेत्रविकाराणामिति विशेषो भाष्योक्तो बोध्यः।

एवं महत्तत्त्वनिरूपणादनुक्रमप्राप्तमहङ्कारनिरूपणं प्रारभते इम् महान् इति। महत्तत्त्वादित्यर्थः। अस्यापि महतो विकारित्व्यत्वेन महत्त्वाख्यसमपरिणामसन्ततौ कदाचित् कचेत् ईश्वरस्येच्छावशात् ततोपि विषमपरिणामे जाते तद्वानेवाऽहङ्काराख्यो विलक्षणतत्त्वविशेषो भवतीत्यर्थः। अस्याहङ्कारशब्दवाच्यत्वमुपपादयति इदु इति। तथा चाहङ्कार इत्यत्र कृञ्धात्वर्थः बुद्धिः। देहः अहङ्क्रियतेऽनेनेति अनहमि देहे अहम्बुद्धिहेतुत्वादस्याहङ्कारशब्दवाच्यत्वम्। तथोक्तं श्रुतप्रकाशिकायाम्— "मनसा करणं हि वेदनम्"। यथा, "तदेकावयवं देवं चेतसा हि पुनः पुनः। कुर्यात्" इति। अतोऽहम्बुद्धिरहङ्कारः। च्विप्रत्ययगर्भत्वात् अनहमि अहम्बुद्धिः इते। च्विप्रत्ययस्यात्र सर्वलोपोपि बोध्यः। एतद्विषये मतान्तराण्याह अहङ्कारेति। निर्गुणस्य चिन्मात्रस्यैवाऽऽत्मत्वमुभयोस्तयोः सम्मतम्। अतश्च अहं जानामीत्यादौ ज्ञानाद्याश्रयतया प्रतीयमानो नात्मा भवितुमर्हतीति तद्व्यतिरिक्तोऽहङ्कार एव तत्प्रतीतिगोचरः अहमर्थ इत्यर्थः। तथाच साङ्ख्यभाष्यम्, "प्रत्यक्षस्य बाधात्" इति सूत्रखण्डे, "अहं जानामीति गुणादिप्रत्यक्षस्य अहं गौर इति प्रत्यक्षवत् श्रुत्यैव बाधात्। अन्यथा हि गौरोहमिति प्रत्यक्षबलेन देह एवाऽऽत्मा स्यादिति जितं चार्वाकैः" इति। अद्वैतिभिरपि—"सुषुप्तिमूर्च्छादावहंप्रत्ययापायेपि आत्मानुभवदर्शनात् नात्मनोऽहंप्रत्ययगोचरत्वमिति। श्रुत्यादिविरुद्धमिति। "स कारणं करणाधिपाधिपः", "भोक्ता भोग्यं प्रेरितारञ्च मत्वा" इत्यादिषु ज्ञातृत्वभोक्तृत्वादिमत्त्वैवात्मानात्मविवेचनात्, "अहम्बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते" इत्यहंबुद्धिबोध्यत्वतदभावाभ्यामेव तयोर्वैलक्षण्याच्च तन्न युक्तमित्यर्थः। नन्वहङ्कारस्य तत्त्वरूपत्वे दुस्त्यजस्य तस्य, "अहङ्कारं बलं दर्पं कामं क्रोधं

---

என்று பிரிக்கப்படும் இவ்விஷயத்தில் சிலர் வேறுவிதமாகக் கூறுகிறார்கள் எங்ஙனே எனில்—ஸாத்துவிகமான மஹான் ஒருவிஷயத்தைத் தீர்மானம் செய்யும் போது காரணமாய் நின்று புத்தி என்றுபேர்பெற்று இருக்கும்

கனேயும் उत्कृष्टजनावमानहेतुवான गर्वத்தையும் விடச் சொன்னபடி. क्षेत्रान्तर्भूतமான अहङ्कारतत्त्वத்தையாதல் आत्मावான अहमर्थத்தையாதல் விடச்சொன்ன

ग्रहम् । विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते" इत्यादौ कथं त्याज्यतोक्तिरित्यत्राह अहङ्कारमिति वा ... । देहात्मभ्रमेति । तस्याप्यहंकारशब्दवाच्यतया, "पञ्चभूतात्मके तात ! देहे मोहतमोवृतः । अहं ममेत्येतदुच्चैः कुमतिः कुरुते मतिम्" इति तस्य निषिद्धत्वादित्यर्थः । उत्कृष्टजनेति । तथाच भाष्यम्—"अयमेव चाहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते" इति । तथाच तत्राहङ्कारशब्दः तत्कार्यभूतदेहात्माभिमानगर्वादिवृत्तिविषय इति तस्य त्यागवचनमुपपन्नत इत्याशयः । ननु कारणभूतस्याहङ्कारतत्त्वस्य नित्यं स्थितौ तत्कार्यस्य गर्वादेः कथं सुत्यजत्वमित्यत्राचार्या रहस्यत्रयसार एवमाहु—"एतादृशाचित्सम्बन्धेऽनुवर्तमानेपि तत्कार्यभ्रमरूपाहङ्कारादयः व्याधयः मूलमन्त्रादिसिद्धविवेकाख्यमेषजविशेषेण नश्यन्ति" इति । क्षेत्रान्तर्भूतत्वं पूर्वोक्तरीत्या । शरीरारम्भकेत्यर्थः । आत्मावान अहमर्थम् इति पूर्वोक्तमतव्यावृत्त्यर्थम् । "आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज" इति विष्णुपुराणवचनात्, "बाधकापेताहंबुद्धि साक्षादात्मविषयैव" इति भाषितत्वात्, "अथातोऽहङ्कारादेशः" इति श्रवणाच्च जीवोप्यहंशब्दाशब्दवाच्य इत्यर्थः । तथाचानेकार्थकाहङ्कारशब्दवाच्यविषये प्रकरणानुगुणमेव विशेषनिर्णयः कार्यः अन्यथाऽतिप्रसङ्गात् । तदुदाहृतमागमप्रामाण्ये, "तथाच हरिशब्दस्य

இதற்கு அறிவுக் கருவிகளாகிய கண் முதலிய ஐந்தும் துணை. ராஜஸமஹான் துடிப்பை உண்டாக்கி பிராணன் என்று பெயர் பெறும். அப்போது அதற்கு தொழிற் கருவிகளாகிய கைகால் முதலிய ஐந்தும் துணைநிற்கும் மனஸ்ஸு என்னும் கருவி இரண்டு மஹான்களுக்குமே துணைபுரியும், தாமஸ மஹான்—த்ருடி, லவம் என்னும் சிறிய நிமிஷங்கள் முதலாய் பிரிந்திருக்கும் காலமெனப்படும் என்று. இக்கூற்றில் ஒவ்வொன்றும் தவறுகும் நாங்கள் இவ்விதம் ஒரு ஸங்கேதம் எங்களுக்குள் ஏற்படுத்தியுள்ளோம். வேறில்லை என்றால்-அப்போது அது பரவாயில்லை இம் மஹான் முதலிய ஸமஷ்டி தத்துவங்கள் அனைத்தும், பிரம்மாண்டம் ஸ்ருஷ்டிக்கப்பட்டு ப்ராணிகள் பிறக்கும்போது, ஒவ்வோர் உடலிலும் பிரிந்து நின்றுதவுகின்றன.

இம்மஹானினின்றும் பிறந்த இரண்டாவது மாறுதல் நிலை அஹங்காரமெனப்படும். இது நானென்னும் ஆத்துமா அல்லாத உடலில்—நான்-என ஆத்தும அபிமானம் பிறக்கக் காரணமாகையால் வியாகரணவிதிப்படி—அஹங்காரம் என்னப்படுகிறது இவ்வஹங்காரமே—"நான்" என்னப்படுகிறதென்று ஸாங்கியரும் அத்வைதிகளும் சொன்னது—ஆத்துமா இது—அநாத்துமா அது என்று பிரித்துக்காட்டும் பிரமாணங்களுக்கு மாறுனது. அஹங்காரம் விடத் தக்கதான ஒன்று—என்ற கீதைக்கும்—"உடலே நான்" என்கிற அஹங்காரத்தையும், "நான் உயர்ந்தவன்"—என்னும் அஹங்காரத்தையும்—(அதாவது கர்வத்தையும்) விடவேணுமென்றுதான் பொருளே

படியன்று. दुस्त्यजங்களையும் उपादेयங்களையும் விடச்சொல்லுகை उचितमன்றிறே இவ்வहङ्कारतत्त्वமும் தனக்குக் कारणமான महान् போலே गुणवैषम्यத்தாலே त्रिविधமாய் அடைவே वैकारिकं, तैजसं, भूतादि என்று பெயரையுடைத்தாயிருக்கும் இவற்றில் सात्त्विकाहंकारம் इन्द्रियोपादानம் तामसाहंकारம் तन्मात्रोपादानம் "रजः

दृष्टा मण्डूकवाचिता इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम्। तथा गोशब्दवाच्यत्वात् शब्दश्चापि विषाणवान् ॥?" इति। शृङ्गिपश्वादेरपि गोशब्दवाच्यत्वात् तद्वाचिगोशब्दवाच्यशब्दश्चापि विषाणवान् स्यादित्यर्थः। दुस्त्यजम्=अहङ्कारादिकम्। तस्य दुस्त्यजत्वञ्च अन्यत्रोक्तम्, "तत्त्वेषु परिगणितोऽहङ्कारः न विवेकमात्रेणापैति। सूक्ष्मशरीरध्वंसं यावदनुबध्नाति" इति। उपादेयम्=आत्मस्वरूपादिकम्। "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रेण तस्योपास्यत्वेनोपादेयताविष्करणात्। उचितमन्तिरे इति। "न ह्यशक्यं विदधाति शास्त्रम्, मातापितृसहस्रेभ्योपि वत्सलतरं हि शास्त्रम्" इत्यादिकमिहाभिप्रेतम्। एवमेषां त्याज्योपादेयविभागे प्रमाणतया शास्त्रस्य प्रस्तावात् एतद्धर्मिग्राहकप्रमाणमपि शास्त्रमेवेत्युक्तं भवति। ततश्च—अव्यक्तावृतमहत्तत्वात् अभिमानकार्योन्नेयाहङ्कारोत्पत्तिः इति वादिकेसर्युक्तं निरस्तम्। तत्त्वानुमेयतावादस्य सांख्यसगन्धत्वेन सिद्धान्तविरोधात्। महतीव तत्कार्येऽहङ्कारेपि त्रैविध्यमाह इव् अहङ्कारेति। तदुक्तम्—"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः। त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत" इति। अत्र तृतीयस्य तामसत्वोक्त्या प्रथमद्वितीययोस्सात्त्विकराजसत्वे अपि सिद्धे। अथ महत्तत्व-विलक्षणतयाहङ्काराणां त्रयाणां कार्यभेदमाह इवट्रिल इति वाक्यत्रयेण। सत्त्वकार्यप्रकाशकरत्वादिना इन्द्रियाणा सात्त्विकाहङ्कारोपादानकत्वम्। तथाच श्रीविष्णुपुराणे "तैजसानीन्द्रियाण्याहुः" इति तेषा राजसाहङ्कारकार्यत्वं पूर्वपक्ष्यभिमतमिति आहुरिति प्रयोगेन दर्शयित्वा, "देवा वैकारिकाः स्मृताः" इति स्वमतं कथितम्। देवाः=इन्द्रियाणि। "अग्निर्वाक् भूत्वा मुखं प्राविशत्....आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुत्या तेषां देवाधिष्ठितत्वात्; द्योतनात् प्रकाशनाद्वा। इन्द्रियोपादानमित्यत्रेन्द्रियं प्राकृतं ग्राह्यम्। अप्राकृतस्य तस्य नित्यत्वात्। तामसाहङ्कारम् इति। "भूततन्मात्रसर्गोयं अहङ्कारात्तु तामसात्" इति तदुक्तेः। तत्रैवोपरि, "भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः" इति विवरणात्

யல்லது—உடலுருப்பு போன்ற அஹங்கார தத்துவத்தையும், நான் என்னப்படும் அஹங்காரமான ஆத்துமாவையும் விடவேணுமென்று பொருள் கொள்ளத்தகாது விடமுடியாதவற்றையும், கைக்கொள்ள வேண்டியவற்றையும் விடச் சொல்லுவாருண்டோ? இவ்வஹங்காரமும், தனக்குக் காரணமான மஹானைப் போலவே—முக்குணங்கள் காரணமாக மூன்றாகி முறையே—வைகாரிகம், தைஜஸம், பூதாதி என்று பெயருடையதாகும். இவற்றில் முதலாவது இந்திரியங்கள் பதினொன்றுக்கும் மூலகாரணம் மூன்றாவது—தன்மாத்திரைகள் என்னப்பட்ட பஞ்சபூத ஸூக்ஷ்மங்களுக்கு மூலகாரணம்,

प्रवर्तकं तत्र" इत्यादि वचनங்களாலே राजसाहंकारம் இரண்டுக்கும் प्रवर्तकமாய்க் கொண்டு इन्द्रियतन्मात्रसृष्टिகளுக்கு निमित्तकारணம் ॥

सात्विकाहंकारத்தில் நின்றும் பிறந்தவை इन्द्रियங்கள் இவை अहङ्कार-विशेषங்கள் என்கிற हैरण्यगर्भपक्षம் अहङ्कारத்தில் நின்றும் இவற்றிற்கு उत्पत्ति சொல்லுகிற वाक्यங்களுக்குச் சேராது इन्द्रियங்கள் பதினொன்றில் कर्मेन्द्रिय

---

तामसाहङ्कारः शब्दतन्मात्रस्यैव साक्षादुपादानम्, इतरेषां स्पर्शतन्मात्रादीनां पञ्चभूतानाञ्च परम्परयैवेति, तथैव भूतादिसंज्ञासम्बन्धस्तस्येति च बोध्यम्। अन्यथा सांख्यमत इव सर्वेषां तन्मात्राणां साक्षात्तामसाहङ्कारादेवोत्पत्तिः, तेभ्यश्च तथातथा पञ्चभूतानामित्यङ्गीकारे, "आकाशाद्वायुः" इत्यादिश्रुतिविरोध इत्यग्रे वक्ष्यते। रजः प्रवर्तकमिति। "यदा तमसि सत्वे च रजोऽप्यनुगतं स्थितम्। रजः प्रवर्तकं तत्र बीजेषु च यथा जलम्" इति ब्रह्माण्डपुराणे क्रियापादस्थं वचनम्। प्रवर्तकत्वञ्च तत्कार्यजननेऽनुग्राहकत्वम्। तथाच सात्विकाहंकारेणेन्द्रियादिसृष्टौ बीजेन वृक्षोत्पत्तौ सलिलमिवेदं सहकारि भवतीत्यर्थः। न च राजसाहङ्कारस्य केवलं निमित्तत्वे दण्डादेर्घटादाविव तस्य स्वकार्येन्द्रियादावननुवृत्तेः कथमिन्द्रियाणां चलनादितत्कार्यान्वय इति वाच्यम्। सुवर्णतैजसत्वपक्षे तदुपष्टम्भक पृथिव्यादिगतगुरुत्वकार्यस्य पतनस्य स्वर्णान्वयवदस्यापि कथञ्चिदुपपादनीयत्वात्। नन्वेवमपि तस्य किञ्चित्प्रत्यपि उपादानत्वाभावे प्रकृति-विकृतयस्सप्त इति कीर्तितसप्तत्वसंख्याविरोध इति चेदत्र केचिदाहुः—"तथा वादोऽहङ्कारसामान्यमवलम्ब्य प्रवृत्त.। सामान्येन व्यपदेशा भवन्तीति न्यायात्। आद्यन्तयोस्तथात्वात्। अन्यथा प्रकृतावप्येकदेशस्यैव महदहङ्कारादिरूपेण परिणामात् कथं मूलप्रकृतिरविकृतिः" इत्युक्तिरिति शङ्काया अन्यत्रापि दुर्वारत्वात् इति। अन्ये तु निमित्तकारणं=सहकारिकारणम्। न तूपादानभिन्नं कारणम्। तथाच राजसाहंङ्कारो द्विधाभूय सात्विकादिसंश्लिष्टः इन्द्रियाणामुपादानं भवन्नपि अन्यरूपेण निमित्तञ्च भवति। पञ्चीकृतभूतेषु "वैशेष्यात्तु तद्वादः" इति न्यायेन पृथिव्यादिव्यपदेशवदत्रापि सात्विकत्वादिव्यपदेश इति वदन्ति।

अथोक्तमनुसृत्य क्रमप्राप्तेन्द्रियलक्षणमाह सात्विकेति। "सात्विकाहङ्कारादि ते अहङ्कारविशेषनिर्देशात् इन्द्रियाणीति" बहुवचनेन सर्वेन्द्रियोपदेशाच्च अहङ्कारान्तरादिन्द्रियोत्पत्तिम्, सात्विकाहङ्कारान्मनोमात्रोत्पत्तिञ्च वदन्तो निरस्यन्ते। तदुक्तं सांख्यप्रवचनभाष्ये, "तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च" इति मनो-

---

நடுவிலுள்ள ராஜஸாஹங்காரம், ரஜஸ்ஸுக்குள்ள தூண்டும் குணப்படி முதலாவதையும் முடிவுள்ளதையும் தூண்டி அவ்வவற்றின காரியங்கள் தோன்ற நிமித்தமாக விருக்கும்

முதலாவதான ஸாத்துவிக அஹங்காரத்தினின்றும் தோன்றியவை பதினோர் இந்திரியங்கள் அதாவது கருவிகள் இவற்றையே அஹங்கா ரங்கள் என்று சொல்லும் மதம்—அஹங்காரத்தினின்று இந்திரியங்கள் பிறக்கின்றன என்ற சுருதிக்குச் சேராது பதினோரு கருவிகளில் தொழிற்

पंचகத்தை **राजसाहङ्कार कार्य**மென்று சொன்ன **शैवपक्ष**ம் **श्रुतिस्मृति सिद्ध**மன்று **औचित्यमात्र**த்தாலே **कल्पिக்**கும்போது **अतिप्रसंग**ம் வரும். **कर्मेन्द्रिय**ங்களுக்கு **प्रतिशरीरमुत्पत्तिविनाश**ங்களைக் கொள்ளும் **पक्ष**ம் **सृष्टि**காலத்தில் **एकादशेन्द्रिय**ங்

---

भिन्नानां राजसात्, मनोमात्रस्य च, अहन्तत्त्वाद्विकुर्वाणात् मनो वैकारिकादभूदिति, सात्विकमेकादशकं प्रवर्तते वैकृतादहंकारात् इति च सात्विकादुत्पत्तिरित्ति" इति **इदञ्च विष्णुपुराणेप्यनूद्य** खण्डितमित्युक्तं न विस्मर्तव्यम् । **शैवमते च भोजराजेन**तद्विपरीतमूचे—"तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि" इति । अथ हैरण्यगर्भपक्षं प्रतिक्षिपति **इவை** इति । इन्द्रियाणीत्यर्थः । "इन्द्रियाण्यहङ्कारविशेषाः" इति हैरण्यगर्भोक्तिरिति **सर्वार्थसिद्धिः । शेराது** इति । "त्रिविधोऽयमहङ्कारः महत्तत्त्वादजायत । भूतेन्द्रियाणां हेतुः सः त्रिगुणत्वान्महामुने ॥" इत्यादिनेन्द्रियाणामहङ्कारकार्यत्वावगमादिति भावः । अथ शैवैकदेशिमतमप्यनूद्य खण्डयति **इन्द्रियङ्ङ्ग् इति वाक्यद्वयेन । तदुक्तं तैः** "प्रवृत्तिशीलत्वात् राजसाहङ्कारकार्याणि कर्मेन्द्रियाणीति । **श्रुतिस्मृतिसिद्धमनु** इति । तद्विरुद्धमिति यावत् । "देवा वैकारिकास्स्मृताः" इत्यविशेषेणेन्द्रियाणां सर्वेषां सात्त्विकाहङ्कारकार्यताबोधनात् स्मृतितन्मूलभूतश्रुति विरोधादिति भावः । **औचित्यं**=प्रवृत्तिशीलतालक्षणं सालक्षण्यम् । **अतिप्रसङ्गम् वरुम्** इति । मनसोपि प्रवृत्तिशीलत्वेन तस्यापि राजसाहङ्कारकार्यत्वापात इत्यर्थः । अथात्र यादवप्रकाशमतमपि प्रदर्श्य निराकरोति **कर्मेंद्रिय** इति । अयमभिसन्धिः—"सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्तसप्त" इति सप्तानामेव प्राणानामिंद्रियाणां जीवेन सह तत्र तत्र गमनं श्रूयते । कानि तानि सप्तेन्द्रियाणीत्यत्र विशेष्यते च श्रुत्यन्तरे, "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इति । पञ्च ज्ञानानि=श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि मनः बुद्धिश्चेति सप्तैवेत्यर्थः । एतन्मते बुद्ध्या सह द्वादशेन्द्रियाणीति **श्रुतप्रकाशिका** । तथाच तेषां मध्ये सप्तानामेव जीवेन सहोत्क्रान्तिकाले गतिश्रवणात्, तदतिरिक्तकर्मेन्द्रियपञ्चकं शरीरेण सहोत्पद्यते विनश्यति चेति सिद्धमिति । **सृष्टिकालत्तिले** इति । "भूतेन्द्रियाणां हेतुस्सः देवा वैकारिकास्स्मृताः" इत्यविशेषेण सर्वेन्द्रियाणामादिकाले सृष्टिश्रवणात्, "इन्द्रियाणि तन्मात्रेषु लीयन्ते" इति सर्वेन्द्रियप्रळयावगतेश्च न कर्मेद्रियाणां शरीरोत्पत्तिविनाशसमकालमुत्पत्तिविनाशौ वक्तव्यौ । सप्तानां जीवेन सह गत्युक्तिश्चोपलक्षणार्था । अत एव तमुत्क्रामन्त सर्वे प्राणा अनूत्क्रामति इति सर्वशब्दप्रयोगोप्युपपद्यते । "अध्यत्र-

---

கருவிகளைந்தையும் ராஜஸ அஹங்காரத்திலிருந்து பிறப்பதாகக் கூறும் சைவர்கொள்கை சுருதிஸ்ம்ருதிவசனங்களுக்குப் பொருந்தா ஏதோ ஒரு ஒற்றுமைமட்டும் இருப்பதைக் கருதி இஷ்டப்படி காரணகார்யங்களைக் கற்பித்தால் குழப்பம்தான் உண்டாகும். தொழிற்கருவிகளான கர்மேந்திரியங்கள் உடலோடு உண்டாகி மடிந்துவிடுமென்பதும் சரியல்ல. ஸ்ருஷ்டியின் துவக்கத்திலேயே பதினொரு இந்திரியத்தொகுப்புகளும் அஹங்கார

களும் அஹங்காரத்திலே பிறந்தனவென்கிற வாக்யங்களோடே விரோதிக்கும்

"मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि" इत्यादिवाक्यमुपलक्षण(?)பரம் ॥

ज्ञानेन्द्रियपंचकத்துக்கும் सहकारियாய் संकल्प-स्मृत्यादिகளுக் குத்தானே करण

सायाभिमानचिन्तावृत्तिभेदेन मन एव बुद्ध्यहङ्कारशब्दैर्व्यपदिश्यते" इति भाष्योक्तरीत्या बुद्ध्यास्यमतिरिक्तमपीन्द्रियं नाङ्गीकार्यमिति भावः । नन्वेवम् "हस्तादयस्तु स्थितेऽतो नैवम्" इति शारीरकसूत्रदीपे श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च, वाग्घस्तादीनि कर्मेन्द्रियाणि पञ्च, मनश्चेत्येकादशेन्द्रियाणि । तत्र श्रोत्रादीनि जीवेन सह शरीरान्तरगमनेऽपि गच्छन्ति । वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारकाणि" इति कथनं कथमुपपद्यतान्नामेति चेत्—मैवम् । परमत इव वाग्घस्तादीनां शरीरेण सहोत्पत्तिविनाशाङ्गीकारेपि तेषामिन्द्रियत्वं परमप्रकम्प्यमित्यन्वारुह्य दर्शयितुं प्रवृत्तत्वात्तस्य ग्रन्थस्य । अत एव भाष्यादिषु एकादशेन्द्रियाणामपि गमनं प्रतिपादितमुपलभ्यते । स्पष्टश्चेदं न्यायसिद्धाञ्जने । अथ षडिन्द्रियवादमपि निराकरोति—मनष्षष्ठानीति । गीतावचनमिदम् । अत्र मनसष्षष्ठत्वसंख्यापूरकत्वदर्शनात् इन्द्रियाणां षट्संख्याकत्वं लभ्यते । आदिना "तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् । सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे" इति मनुवचनपरिग्रहः । वाक्पाण्यादिष्विन्द्रियत्वव्यपदेशः चक्षुरादिवत् वचनादिक्रियाहेतुभूतसूक्ष्मांशविषयतया गौण इति तेषामभिमानः । उपलक्षणमिति । इतरेषामपि प्रदर्शकमित्यर्थः । अत्रोपलक्षणपरमित्येव सर्वत्र पाठः । स चोपलक्षणस्य शब्दव्यापारस्य शब्दवाच्यत्वाभावेन शब्दस्य तत्परत्वासंभवात् असमञ्जस इति लेखकप्रमादकृतो बोध्यः । "एका कन्या दशेन्द्रियाणि", "इन्द्रियाणि दशैकञ्च" इत्यादि श्रुतिस्मृतिदर्शनादिति भावः । कन दीप्ताविति धातोः कन्या=सर्वप्रकाशकं मन इति। "मनश्च चञ्चलत्वात् कन्येव कन्या" इत्यानन्ददायिनी।

एवं सामान्यत इन्द्रियविषये वक्तव्यमुक्त्वाथ मनोविषये पूर्वपक्षं दर्शयितुं प्रथमं सिद्धान्तमाह ज्ञानेन्द्रियेति । चक्षरादिभिर्ज्ञानेन्द्रियैः करणैः रूपादिसाक्षात्कारे जननीये मनस्सहकरोति । आत्ममनस्संयोगस्येन्द्रियमनस्संयोगस्य च ज्ञानसामान्यकारणत्वेन, "अन्यत्रमना अभूवं नाश्रौषं अन्यत्रमना अभूवं नापश्यम्" इति मनसि विषयान्तरप्रवणे सति रूपादिसम्बन्धेनापि चक्षुरादिना प्रत्यक्षाजननेन च सर्वज्ञानेन्द्रियाणां स्वकार्यकरणे मनोऽपेक्षितमिति भावः । ततश्च रूपरसादिपञ्चविषयज्ञानसाधनत्वं मनोलक्षणं फलितम् । वस्तुतस्तु रूपादिपञ्चकमध्ये विषयद्वयज्ञानसाधनत्वमेव पर्याप्तम् । शेषवैयर्थ्यात् । एवं मनसः क्वचित्कार्ये सहकारितामुक्त्वा क्वचित्करणत्वमप्याह सङ्कल्पस्मृत्यादीति । आदिना संशयादिपरिग्रहः । यथा चक्षुरादीनां साक्षात्कारजनने मनोपेक्षा,

தத்துவத்திலிருந்து பிறந்துவிட்டன என்றல்லவோ சுருதிவாக்கியங்கள் கூறுகின்றன மனது முதலிய ஆறு இந்திரியங்களைமட்டும் கீதையில் கூறியது மற்ற இந்திரியங்களுக்கும் எடுத்துக்காட்டு.

அறிவுக் கருவிகளான ஐந்து ஜ்ஞான இந்திரியங்களுக்கும் உதவிகர

முமான **इन्द्रिय**ம் **मन**ஸ்ஸு. இது **कर्मेन्द्रिय**ங்கள் **व्यापरि**க்கும்போது **ज्ञानचिकीर्षादि**களைப் பண்ணிக்கொண்டு **उपकारक**மாம் **ज्ञानेन्द्रिय**ங்களையும் **कर्मेन्द्रिय**ங்களையும் பிரியச் சொல்லி **मन**ஸ்ஸு **उभयात्मक**மென்று **सांख्य**ர் சொன்னவிடம் **मन्दम्** **व्यापारमात्र**த்தாலேயாதல், **कर्मेन्द्रियव्यापार**த்துக்கு **परम्परया कारण**மாகையாலேயா

---

न तथा मनसस्सङ्कल्पादिजननेऽन्यापेक्षेति वैलक्षण्यं दर्शयितुं **"ताने करणमुमाय्"** इति मूले स्वयमर्थक **ताने**पदप्रयोगः। ननु मनइन्द्रियस्य स्मृत्यादिकरणत्वे तस्या इन्द्रियजन्यत्वेन प्रत्यक्षताप्रसङ्गः। न च सुखादिसाक्षात्कार एव मनस इन्द्रियत्वेन करणत्वम्। स्मृत्यादौ तु मनस्त्वेनैवेति इन्द्रियत्वावच्छिन्न-जनकतानिरूपितजन्यताया एव प्रत्यक्षत्वप्रयोजकत्वान्नोक्तापत्तिरिति वाच्यम्; सिद्धान्ते सुखादेर्ज्ञान-विशेषतया स्वयम्प्रकाशत्वेन मनोवेद्यताविरहतः एतादृशविभागस्यैव निर्मूलत्वादिति चेन्न—यतः ज्ञातकरणसंस्कारान्यतरजन्यत्वस्यैव परोक्षताप्रयोजकत्वेन तदभावमात्रात् सुखादिसाक्षात्कारस्य प्रत्यक्षतोपपत्तिः। स्मृत्यादिस्तु संस्कारजन्येति, अनुमित्यादिकं ज्ञातकरणजन्यमिति च न तयोस्तत्प्रसङ्गः। प्रत्यक्षत्वापरपर्यायसाक्षात्त्वस्य सिद्धान्ते—"यत्साक्षादपरोक्षात् ब्रह्म" इति रीत्या धर्मिसाधारणतया तत्रेन्द्रियजन्यत्वस्याप्रयोजकत्वमित्यपि बोध्यम्। मनसः कर्मेन्द्रियोपकारे वैषम्यं दर्शयति **इदु कर्मेन्द्रिये**ति। वागादीनामुच्चारणादिकार्यकरणे ज्ञानचिकीर्षाद्युत्पादनद्वारोपकरोति मनः। जानातीच्छति यतते ततश्शरीरचेष्टेति न्यायात्। साक्षात् ज्ञानेन्द्रियोपकारकत्वात् स्वयंसंकल्पादिज्ञानविशेषकरणत्वाच्च मनसो ज्ञानेन्द्रियवर्गेऽन्तर्भावेपि न कर्मेन्द्रियान्तर्निवेशः; वागादीनामिव साक्षात् कर्मकारणत्वाभावात् इति भावः। अथ मनोविषये सांख्यस्थिति शिक्षयति—**ज्ञानेंद्रियङ्गळैयुमि**ति। ज्ञानविकासहेतुत्वे सतीन्द्रियत्वं ज्ञानेन्द्रियत्वम्। कर्मेन्द्रियेद्रियार्थसन्निकर्षादिवारणाय विशेषणविशेष्योभयम्। साक्षात् कर्महेतुत्वे सति. इद्रियत्व कर्मेंद्रियलक्षणम्। ज्ञानेंद्रियेद्रियार्थसन्निकर्षव्यावर्तनाय विशेषणविशेष्यदळद्वयम्। ज्ञानेंद्रियाणामपि ज्ञानद्वारा कर्महेतुत्वादतिव्याप्तितादवस्थ्यवारणाय, साक्षादिति ज्ञानाद्वारके-त्यर्थकम्। **पिरियच्चोल्लि** इति। विभज्येत्यर्थः। एतावत्सिद्धान्तिनोपीष्टम्। तथा च **सांख्यकारिका**—"बुद्धीन्द्रियाणि चक्षुश्श्रोत्रघ्राणरसनात्वगाख्यानि। वाक्पाणिपादपायूपस्थं कर्मेन्द्रियञ्चैव" इति। उभयात्मक-मत्र मनः" इति च। ज्ञानकर्मेंद्रियात्मकमित्यर्थः। **मन्दमि**ति। उक्तदिशा तस्य कर्मेंद्रियात्मकत्वा-भावादिति हृदयम्। ननु न सांख्यानामेवोभयात्मकत्ववादो मनसि भवति; येन तन्निराकरणं युज्येत।

---

மானதாய், நினைவு தீர்மானம் முதலியவற்றுக்கு நேரான காரணமாயுமிருக்கும் இந்திரியம் மனஸ்ஸு இது கருமேந்திரியம் செயல்படும்போது அறிவு அவா முதலியவற்றைப் பண்ணிக்கொண்டு உதவும் ஜ்ஞான இந்திரியங்களையும, கர்ம இந்திரியஙகளையும் பிரித்துக் கூறி—மனஸ்ஸு இருஉருவான ஒரு இநதிரியம் என்று ஸாஙகியர் சொன்னது மோசமான விஷயம் ஏதோ ஒரு தொழிலுக்குக் காரணம் அல்லது கருவிகள் செய்யும் தொழி

தல் இதற்கு कर्मेन्द्रियत्वம் சொல்லில் श्रोत्रादिகளுக்கும் कर्मेन्द्रियत्वம் प्रसङ्गिக்கும் मानसங்களான कर्मங்கள் என்றதுவும் बुद्धिविशेषங்களை யாதல் அவற்றிற்குக் कारणங்களான मनोव्यापारविशेषங்களையாதலாமத்தனை. இம்मनस्ஸுதானே अध्यवसायाभिमानचिन्तै களென்கிற वृत्तिभेदங்களாலே சில இடங்களிலே

किन्तु याज्ञवल्क्यादयोपि तथा स्मरंति, "हस्तौ पायुरुपस्थश्च पादौ जिह्वाच पञ्चमी। कर्मेंद्रियाणि जानीयात् मनश्चैवोभयात्मकम् ।" इति ततश्च वक्ष्यमाणदिशा कथञ्चित्तल्लक्षणसिद्धेरपि तस्योभयात्मकत्व-मुपपादनीयमिति केषाञ्चित्पक्षं प्रतिक्षिपति व्यापारमात्रत्तालेयादलिति । ज्ञानकर्मव्यापारमात्र्यमात्र-वच्छिन्नजनकतानातिकेरर्थः । तादृशव्यापारत्वञ्च धात्वर्थत्वमेव । मात्रशब्दः कृत्स्नार्थकः । ज्ञानाद्वारक-कर्महेत्विंद्रियत्वादिरूपपूर्वोक्तकर्मेंद्रियलक्षणव्युदासार्थो वा । कर्मेंद्रियव्यापारः=कर्मेंद्रियजन्यं कर्म । तत्कारणा=ज्ञानेन्द्रियादिद्वारा । तथाच साक्षाद्यत्किञ्चिद्व्यापारमात्रजनकत्वं, साक्षात्कर्मपरम्परया कारणत्वेन कर्मकारणत्वं वा कर्मेंद्रियलक्षणमिति तच्छिक्षया कथञ्चिन्मनसः कर्मेंद्रियत्वसम्पादने तथैव ज्ञानेंद्रियाणामपि तदापानादिद्रियद्वैराश्यमेव विनश्येदिति पूर्वोक्तयाज्ञवल्क्यवचनमुभयोपकारकत्वेन मनस्यौप-चारिकमेवेति भावः । एनेन तत्त्वत्रयनिरूपणे—मनस्सहकारित्वात् ज्ञानेंद्रियं कर्मेंद्रियञ्च भवति । "उभयात्मकम्मन इति ह्युच्यते इति वादिकेसर्युक्तं "ज्ञानेंद्रियाणा स्वस्वविषयग्रहणवेळायां, कर्मेंद्रियाणां स्वस्वकर्मकरणकाले च मनस्सहकारापेक्षणादुभयात्मकं मन एतेषा सेर्वेषां साधारणं भवतीति तत्त्वत्रयव्याख्यायां वरवरमुन्युक्तञ्च निरस्तं भवति । उभयात्मकं म्मन इत्यस्य सांख्यसिद्धान्तत्वात् । उक्तरीत्योभयात्मकत्वस्य दुरुपपादत्वाच्च । अत एव तत्पक्षपाति विरचिते सिद्धान्तसिद्धाञ्जनेऽपि—ज्ञानेंद्रियलक्षणमुक्त्वा "तच्च षड्विधं मनश्श्रोत्रादिभेदात्" इत्येतावदेवोचे । कर्मेंद्रियेषु मनसोन्तर्भावश्च नोक्तः। ननु मनसः कर्मेंद्रियत्वाभावे कायिक कर्मेत्यादिवत् मानस कर्मेति व्यवहारः कथमुपपद्यतामित्यत्राह—मानसेति । बुद्धिविशेषः= सङ्कल्पादिः । "सङ्कल्पः कर्म मानसम्" इति सङ्कल्पादिषु मनोवधानादेःकर्मणोऽधिकरणेऽभिमततया कार्ये कारणोपचारे इति न तावता मनसः कर्मेंद्रियत्वमित्याशय । अथवा मानसं कर्मेत्यवधानादिकमेवोच्यत इति स व्यवहारो मुख्य एवास्त्वित्याह—अवट्रुक्कु इति । सङ्कल्पादेरित्यर्थः । मनोव्यापारः=अवधानादिः

एवं मनसः कर्मेंद्रियत्व निराकृत्याथ तस्यैव भाष्यादिषु महदहङ्कारादिकार्यप्रतीतिमपि निरस्यति—इम्मनस्सु इति । "हस्तादयस्तु स्थितेऽतो नैवमिति शारीरकसूत्रभाष्ये—"अध्यवसायाभिमानचिन्ताकृवृत्ति-

லுக்கு அறிவை உண்டுபண்ணி அதன் மூலமாகக் காரணமென்று கருமேந்திரிய இலக்கணமமைத்து மனஸ்ஸையும் கர்மேந்திரியம என்னப் பார்த்தால, அப்போது காது முதலிய ஜ்ஞானேந்திரியங்களையும் கர்மேந்திரியமென்னலாம 'ஒன்றைத் தீர்மானிப்பது மனதின் தொழில்' என்ற வசனத்தில—தீர்மானமும் ஒரு தொழில் எனறோ—அல்லது அதற்கு காரணமான மனதின் முயறசி தொழில் என்றோ கருத்துக்கொள்ளலாம் இம் மனஸ்ஸே,—தீர்மானம், நானென்றபிமானித்தல, சிந்தித்தல் எனகிற மூன்று

बुद्धि என்றும் अहङ्कारமென்றும், चित्तமென்றும் சொல்லப்படுகிறதென்று भाष्यத்திலே சொன்னது महदादितत्त्वங்களை निषेधिக்க படியன்று, पुरुषனுக்கு बुद्धि-वृत्तिविशेषங்களைப்பண்ணும் दशैயிலே இதற்கு नामान्तरங்களுண்டென்கையிலே

भेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते" इति भाषणात् मनसोऽध्यवसायादिवृत्तिमहदाद्यभेद-प्रतीतेः न तदतिरिक्ततत्त्वसिद्धिरिति शङ्कितुराशयः। समाधत्ते—पुरुषनुक्कु इति। बुद्धिवृत्ति-विशेषाः—अध्यवसायादयः। तथा च मनस एव महत्तत्वानुग्रहात् अध्यवसायवृत्तिकत्वे बुद्धिनामकत्वम्, अह-ङ्कारानुग्रहेणाभिमानवृत्तिकत्वेऽहङ्कारनामकत्वम्, संस्कारानुग्रहेण चिन्तावृत्तिकत्वे चित्तनात्मकत्वञ्च भवतीति भावः। ननु मनोपेक्षया बुद्ध्यादीनि त्रीण्यन्तःकरणानि भिन्नानि स्वीकार्याण्येव। ततश्च कथमेकाद-शेंद्रियाणि। अत एव सुबालोपनिषदि—"चक्षुश्च द्रष्टव्यञ्च नारायणः" इत्युपक्रम्य सर्वाणि ज्ञानेंद्रियाणि परिकीर्त्याथ, "मनश्च मन्तव्यञ्च नारायणः,—बुद्धिश्च बोद्धव्यञ्च....अहङ्कारश्चाहङ्कर्तव्यञ्च ...चित्तञ्च चेत व्यञ्च नारायणः" इत्युक्त्वानन्तरं कर्मेंद्रियेणोपसंहृतम्। ततश्च करणगणमध्यपाठात् अग्रग्रप्रायन्यायेन एषामपि इंद्रियत्वं सिद्धमिति सांख्यमतं प्रत्याह इत्ताले इति। मनस एव बुद्ध्यादिनामकत्वकथनेनेत्यर्थः। "करणं त्रयोदशविधमवान्तरभेदात्" इति सांख्यसूत्रम्। तत्रावान्तरभेदस्य विवरणम्, अन्तःकरणं त्रिविधमिति। तथाच दशभिरिंद्रियैस्सह मनोबुद्ध्यहङ्काररूपत्रिविधान्तःकरणमेलनेन त्रयोदशकरणानीत्यर्थः। एवंरीत्येति कथनेनात्र चित्तमपि चतुर्थतया परिगणय्य चतुर्दशकरणवादस्तदेकदेशिनां गृह्यते। तथाच तत्त्व-मुक्ताकलापः, "सांख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्ध्यहङ्कारभेदात् चित्तञ्चान्ये चतुर्थं विदुः" इति। अत्रायं सङ्ग्रहोऽन्यत्रोक्तः, "एकं मनोन्तःकरणं नैयायिकमते मतम्। द्विविधं भास्कराः प्राहुः, त्रिविधं कापिला विदुः॥ चतुर्विधं केचिदाहुः तदुक्तिरवधार्यताम्। मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्॥ संशयो निश्चयो गर्व-स्स्मरणं विषया इति। तत्र कापिलभिन्नास्तु वृत्तिभेदाद्विदां विदुः॥ मनः स्मृत्यनुभूतिभ्यां द्विधा भास्कर-भाषितम्। श्रुतिश्च विविधा मानं सर्वेषामिह विद्यते॥" इति। निरस्तमिति। सुबालोपनिषदि बुद्ध्यादीनां करणवर्गमध्यपठनस्य, "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इत्यादावक्षरतमसोरिवावस्थाविशेषपरतया-प्युपपत्त्या तत्त्वान्तरत्वे तात्पर्याभावः। बुद्ध्यादीनां करणान्तरत्वग्राहकस्पष्टवचनाभावादित्याशयः। अत्राधिकम् आनन्ददायिन्यादावनुसन्धेयम्।

ननु—"अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यवह्रियते" इति भाष्ये—"कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति श्रुतौ च कथमध्य-वसायकामादेर्मनोवृत्तिविशेषत्वं मनस्त्वञ्चोच्यते। जीवस्य धर्मभूतज्ञानावस्थाविशेषा हि ते इत्यत्राह—

விதவேலைகளைச் செய்யும்போது முறையே—புத்தி அஹங்காரம், சித்தம் என்று சில இடங்களில் சொல்லப்படுகிறது என்று பாஷ்யத்தில் கூறியது—மஹான் அஹங்காரம் என்று தனித்தத்துவங்களே கிடையாதென்ற கருத்திலன்று. பின்னே? ஜீவனுக்கு இந்தவிதமான மூன்று வேலைகளைச் செய்யும்போது—

யிலே तत्परம் இத்தாலே करणம् त्रयोदशविधம், अन्तःकरणம் त्रिविधம். என்றாற் போலே साङ्ख्यादिகள் சொல்லுமது निरस्तம், இவ்வध्यवसायादिகளும் काम-संकल्पादिகளும் पुरुषனுடைய धर्मभूतज्ञानावस्थाविशेषங்களாயிருக்க இவற்றை मनोवृत्तिகள் என்று சொல்லுகிறபடி என் என்னில், बद्धருடைய धर्मभूतज्ञानத்துக்கு இவ்வवस्थाविशेषங்கள் வருகைக்குக் காரணம் इन्द्रियावस्थाविशेषங்களாகையாலே कार्यத்தையிட்டுக் कारणத்தை उपचरिத்தபடி.

---

इव्वध्यवसायादीति। कामसङ्कल्पादीनामत्र प्रसङ्गवशादुत्कीर्तनम्। नित्यमुक्तादीनां धर्मभूतज्ञानस्य सर्वेषां धर्मिज्ञानस्य चेन्द्रियवृत्त्यनपेक्षणात् क्रमेण—बद्धेति, धर्मभूतेति च प्रयुक्तम्। इन्द्रियावस्थाविशेषाः इन्द्रियवृत्तयः। कार्यत्तै यिट्टु इति। कार्यवाचकशब्दे प्रयोक्तव्ये कारणवाचकशब्दस्य तत्स्थाने औपचारिकः प्रयोग इत्यर्थः। अत्रैवंविधपाठापेक्षया, "कारणत्तै यिट्टु कार्यत्तै उपचरित्तपडि" इति पाठश्चेत् भाषायां स्वरसस्स्यादिति भाव्यम्। तथाचाध्यवसायादीनां साक्षात् मनोवृत्तित्वाद्यभावेपि तत्कार्यत्वात् आयुरादौ घृतादिकार्ये घृतादित्वोपदेशवदौपचारिकव्यपदेशोऽयमिति भावः। ननु मनस इन्द्रियत्वमेव नाङ्गीकर्तव्यम्। तथा सति, "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्येकवाक्य एव मनश्शब्दस्येन्द्रियशब्दात् पृथक्पठनानुपपत्तिः ; इन्द्रियशब्दपठनादेव मनोपि गृहीतमिति पुनर्मनश्शब्दप्रयोगवैयर्थ्यादित्यत्राह इन्द्रियाणीति। पञ्च चेन्द्रियगोचरा इत्युत्तरशेषः। आदिना एकादशं मनश्चात्र, मनष्षष्ठानीन्द्रियाणि, इन्द्रियाणां मनश्चास्मीत्यादिकं विवक्षितम्। अथ मनसोऽनिन्द्रियत्वेप्युक्तं सर्वं समन्वीयते। विजातीयेनाप्यन्येन तत्रतत्र विवक्षितसंख्यापूरणात्। "यजमानपञ्चमा ऋत्विजः प्रचरन्ति" इत्यादिवत्।" इन्द्रियाणां मनः" इति च नक्षत्राणामहं शशीतिवत् सम्बन्धसामान्ये षष्ठी भविष्यति; न तु निर्धारण इत्यत्राह सात्त्विकाहङ्कारेति वैशेषिकोक्तम्-शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वरूपमिन्द्रियलक्षणं तु कर्मेन्द्रियाव्याप्तेर्न समीचीनम्. न च तत् बहिरिन्द्रियाणां चक्षुरादीनां पञ्चाना-

---

மனஸஸாககே மூனறுவிதமான பெயர் வழஙகும் என்று கருத்து இத தாலே, அந்தககரணம என்ற உள்மனதை முன சொன்னபடி மூன்றாக்கி மொததம் இநதிரியஙகள் பதிமூன்று என்னும் சாங்கியர் பக்ஷம் விழும கீழசொனன தீர்மானம், அறிவு, அவா, ஐயம், சிரத்தை முதலியனவெலலாம் மனஸஸின் வேலேகள் என்று கூறியதும்—உணமையில் அவ்வாறலல, ஜீவனுடைய தன்மையாகிய அறிவின் விரிவுகளே அவை ஆயினும் அவவாறு கூறியதற்கு ஒரு கருத்துண்டு ஸம்ஸாரத்தில சிக்கியவர்களுக்கு மேற்கூறியவாறு அறிவின் விரிவு வருவதற்கு மனம் முதலிய இநதிரியங் களின வேலேகள்தான காரணம் அதனல் இதை அதுவென்ருர்கள் ஒரு வாறு, இநதிரியஙகள் பதினென்று என்று திட்டவட்டமாகக் கூறியுள்ள

**'इन्द्रियाणि दशैकं च'** **इत्यादि**களாலும் **सात्त्विकाहङ्कारकार्यद्रव्यत्व**ம் **इन्द्रियलक्षण**மா கையாலும் **मन**ஸ்ஸுக்கும் **इन्द्रियत्व**முண்டாகையாலே **एकवाक्य**த்திலே **मन**ஸ்ஸும் **इन्द्रिय**ங்களுமென்றது **गोबलीवर्दन्याय**த்தாலே **निर्वाह्य**ம். **इन्द्रियमिन्द्रलिंग**

---

मेव लक्षणमिति अन्यत्रेन्द्रिये न तदसत्त्वेप्यव्याप्तिरिति वाच्यम् । अन्तर्बहिरिन्द्रियविभागस्यैवाप्रमाणत्वात् । ततश्च सर्वेन्द्रियानुगतमन्यल्लक्षणं विवक्षणीयमेवेतीदमेव तदिति मनसोप्येतद्वत्त्वात् इन्द्रियत्वं दुर्वारमिति भावः। अथ, "मनस्सर्वेन्द्रियाणि च" इति रूहपरिपठनं परिपाति—**एकवाक्ये**ति। अत्रेदमवधेयम्—विजातीयेन संख्यापूरणमगतिकगतिकम् । यथा—यजमानपञ्चमा ऋत्विज इत्यादौ । तत्र ऋत्विग्यजमानादिसंज्ञानां श्रौतीनां मुख्यतया तत्रतत्र व्यवस्थितत्वात् । वेदान् अध्यापयामास महाभारतपञ्चमान्, ब्राह्मणमग्निं गांश्चैव त्रीणि तेजांसि न स्पृशेत्—इत्यादिकं तु गौणं वेदत्वं तेजस्त्वं च सर्वसाधारणमादाय प्रवृत्तमिति तत्र सजातीयेनैव संख्यापूरणमिति सुगमम् । "भारतः पञ्चमो वेदः" इति तस्य गौणवेदत्वस्मरणात् । इन्द्रियाणां मनश्चास्मीत्यादौ निर्धारणे षष्ठ्येव स्वरसा । तत्प्रायपाठात् । "नक्षत्राणाम्" इति तु तद्बाधात् सम्बन्धसामान्ये षष्ठ्या प्रवृत्तमिति । अन्तर्बहिरिन्द्रियभिदा तु सिद्धान्ते नोपपद्यते । तथाहि किन्नामान्तरिन्द्रियत्वम्? अन्तर्विषयग्राहकत्वमिति चेत्, के तेऽन्तर्विषयाः । न तावत् सुखादिकं तदाश्रयश्च । सिद्धान्ते तेषां स्वयंप्रकाशत्वेन मनोवेद्यत्वाभावात् । नाप्यन्तरवस्थानमात्रादन्तरिन्द्रियत्वं मनसः । चक्षुरादीनामपि बहिरिन्द्रियत्वेनाभिमतानामन्तरेवावस्थानात् । सर्वेन्द्रियकन्दभूते हृदये हि तेषा सर्वेषां नाडीद्वारा स्थितिः । न च बहिरवयवाधिष्ठानकं बहिरिन्द्रियम् । अन्तरवयवाधिष्ठानकं अन्तरिन्द्रियमिति वाच्यम्; तथापि त्वगिन्द्रियस्यान्तर्बहिश्च सर्वदेहं व्याप्नुवत उभयरूपत्वप्रसङ्गेन साङ्कर्यादिति ।

नन्विन्द्रियाण्येकादशैवेति कथन्निर्णयः? "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वेति पाणिनिनाऽनेकेष्वर्थेषु इन्द्रियशब्दविनियोजनात् । इन्द्रशब्दात् मत्वर्थीये घप्रत्यये तस्येयादेशे इन्द्रियमिति रूपसिद्धिः । प्रत्ययार्थसम्बन्धश्चोक्तरीत्या लिङ्गत्वदृष्टत्वसृष्टत्वादिः । ततश्च—"इन्द्रो मायाभिः पुरुरूप ईयते" इत्यदाविवेन्द्रशब्दवाच्यस्यात्मनः लिङ्गमिति, तेन दृष्टमिति वा नानार्थानामिन्द्रियत्वावगमादित्यत्राह **इन्द्रियमिन्द्रलिङ्गमिति** । अत्र पाठान्तराण्यशुद्धानि । केवलमिन्द्रियशब्दस्य "गच्छतीति गौः" इतिवदत्र व्युत्पत्तिमात्रप्रदर्शनेपि गोशब्दस्य गोजातावेव शक्तिरिति व्यवहारान्निर्णय-

---

படியாலும், ஸாத்துவிகாஹங்காரத்தினின்று உண்டான திரவியம் இந்திரியம் என்று இந்திரியங்களுக்கு அடையாளம் கூறியுள்ளபடியாலும், மனஸ்ஸும் ஓர் இந்திரியமென்று தேறியிருக்க—சுருதியில்—ஓரிடத்திலே, "மனஸ்ஸும் எல்லா இந்திரியங்களும் பிறந்தன" என்று பிரித்து எப்படி கூறலாமென்னில்—கேள், கோபலீவர்த்த நியாயத்தை ஒட்டிக கூறலாம். அதாவது மாடுகளையும் காளைகளையும் ஓட்டி வா என்கிறோமே பிரித்து. அது

யென்றது व्युत्पत्तिनिमित्तमात्रपरம் இந்த்ரியங்களென்பதாம் अल्पपरिमाणங்க ளென்னுமிடம் 'अणवश्च' என்கிற अधिकरणத்திலே समर्थितம் विकारिद्रव्यஇ

वस्तुतोऽपि क्रमज्ञानेन्द्रियेष्विन्द्रियशब्दस्यापि शक्तिनिर्णय इति भावः। अथेन्द्रियपरिमाणमाह इत्थंविद्रियेति। अणवश्चेति सूत्रम्। "सर्व एव समास्सर्व एवानन्ताः" इतीन्द्रियाणामानन्त्यश्रवणादाकाशादेरिव विभुत्व प्राप्तमिति पूर्वपक्षे सिद्धान्त्यते—अणवश्चेति। श्रुतौ प्राणशब्दनिर्दिष्टं सूत्रे पुंलिङ्गम्। सर्वाण्यपीन्द्रियाण्यणूनि ; "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति मुख्यप्राणेन सर्वेन्द्रियाणामनुत्क्रान्ति श्रवणात् विभुत्वे च तदनुपपत्तेः परिच्छिन्नपरिमाणत्वे सिद्धे पार्श्वस्थैरप्यनुपलब्ध्या तेषामणुत्वमावश्यकमिति सूत्राशयः। तेषामानन्त्यश्रुतिस्तु "यो हैताननन्तानुपास्ते" इति विहितोपासनार्था वा, स्वकार्यानन्त्यपरा वा भविष्यतीति भावः। सूत्रोक्तमिन्द्रियाणामणुत्वमपि अत्र मूलानुसारात् अल्पपरिमाणत्वरूपमेव ; नात्मन इवात्यन्ताणुत्वमत्र नियुक्तं भवति। तथाच श्रुतप्रकाशिका, "अणुत्वं नाम परिच्छिन्नत्वे सति उपलब्ध्यर्हस्थूलताराहित्यमत्र विवक्ष्यते। न तु जीवात्मस्वरूपवदत्यन्ताल्पत्वम्। तत्र, "बालाग्रशतभागस्य" इति श्रुतिवाक्येनात्यन्ताल्पत्वस्योक्तत्वात् तथाभ्युपगमः। अत्र तूक्तप्रकारमणुत्वं परिच्छिन्नत्वे सत्यतिस्वच्छत्वम्। उत्क्रान्त्यादि, परिच्छिन्नत्वे हेतुः। पार्श्वस्थैरनुपलभ्यमानत्वं स्वच्छत्वे हेतु। एवं विशिष्टपरिमाणत्वमुपपादितं भवति" इति। अन्यत्र च, "न चैतेषां जीववदत्यन्ताणुत्वं दृश्यते तथासति श्रोत्रादीनामनेकाधिष्ठानवर्तित्वं स्पर्शनरसनयोश्च पृथुदेशव्यापित्वं न स्यात्। सिद्धे ह्यणुत्वे विकासशक्त्या वृत्तिविशेषाद्वा आप्यायकप्रचयाद्वा पृथुत्वमङ्गीकार्यम्", "इत्यादि। एवं "सर्व एवानन्ता" इति श्रुतमानन्त्यं निर्व्यूढम्। अथ, "सर्व एव समाः" इत्यवगतं समत्वं नाम किमिति विचार्यते। यदि समपरिमाणत्वम्, तदा देहव्यापित्वगिन्द्रियेण सह श्रोत्रादीनामपि समपरिमाणत्वप्रसङ्गः। त्वगिन्द्रियपरिमाणस्यापि गजमृगमशकादिदेहभेदेन तारतम्यदर्शनानुरोधेनेन्द्रियाणां तत्तद्देहानुगुणसङ्कोचविकासादिविकारापत्तिश्चेत्यत्रेष्टापत्तिमाह **विकारिद्रव्येति**। सततविक्रियप्रकृतिप्राकृतादीत्यर्थः। अयं भावः—"सर्व एव समाः" इति न सर्वेषां समपरिमाणत्वमुच्यते। "सर्व एव समा इति समत्व श्रुतिः कार्यकरत्वविषया" इति श्रुतप्रकाशिकोक्तेः। इन्द्रियाणां समकार्यकरत्वञ्च—यदिन्द्रियं यत्कार्यं क्वचित्करोति, तदिन्द्रियं तत्कार्यं सर्वत्र करोति इत्येवंरूपम्। त्वगादीन्द्रियस्य देहभेदेन सङ्कोचविका-

---

எப்படியோ, இதுவுமப்படித்தான் இந்திரனுகிய ஜீவனுக்கு = அதாவது அவன் உடலுக்குள் தங்கியிருக்கிறுன் என்பதற்கு லிங்கம் = அடையாளம் என்றுற் போலுள்ள பலவித பொருள்களை இந்திரியம் என்னும் சொல் குறிக்கும் என்று வியாகரண நூலில் கூறியுள்ளதும், இந்திரியம் என்ற சொல்லமைப்பை விளக்குவதற்காக வந்தது. இவைகள் மிகச் சிறிய வைகள் என்று வேதாந்தஸூத்திரம் கூறும் பிரகிருதியினுடைய ஸந்ததி

களுககு उपचयादिகளும் पृथुत्वादिகளும் கூடும் स्त्रीकृत्य.संस्थान. स्वराभिप्रायादि களுக்காக स्त्रीन्द्रियமென்றென்றையும், पुरुषकृत्यादिகளுக்காக पुरुषेन्द्रियமென் றென்றையும், कर्ममूलचक्षुरादिप्रवृत्त्यनुपालनार्थமாக (?)जीवेन्द्रियமென்றென்றையுங்

सादिकमस्त्येव । इतरेंद्रियाणि तु न त्वक्तुल्यपरिमाणानि परस्परतुल्यमानानि च । तथापि तेषां सर्वेषां नाणवश्चेति सूत्रोक्तपरिमाणवत्त्वविरोधः । तदुक्तं श्रुप्रः—"परिमाणावान्तरभेदे सत्यपि त्वगिंद्रियस्य सूक्ष्मं शरीर व्यापीदृशमणुत्वमस्त्येवेति" इति । अथ सौगतानामधिकेंद्रियवादमप्युन्मूलयति स्त्रीकृत्येति वाक्यद्वयेन । स्त्रीकृत्यं=तन्मात्रसाधारणं गर्भधारणादि । संस्थानं="स्तनकेशवती नारी" इत्युक्ता आकृतिः । स्वरः=मधुरश्लक्ष्णः कण्ठध्वनिः । अभिप्रायोऽप्येवमेवाधीरतादिविशिष्टः पुंव्यावृत्तः आशयविशेषो बोध्यः । चक्षुरादीनां सर्वव्यक्तिसाधारणतया न तैरेतादृशकार्यनिर्वाह इति एतदर्थं पृथगिंद्रियविशेषकल्पनमावश्यकमिति तेषां मतम् । षडायतनाख्यचक्षुरादिज्ञानेंद्रियाणि विना, कर्मेंद्रियाणि न ते स्वीकुर्वन्तीत्यपि भाव्यम् । पुरुषकृत्यं=रेतोमोक्षणादिकम् । आदिना पुरुषासाधारणालोमशाकृत्यादीनां ग्रहणम् । कर्ममूलेति चक्षुरादिप्रवृत्तयः=निमेषोन्मेषादयः । ते यद्यपि कर्ममूला जीवेनाधिष्ठात्रा कार्यन्ते, तथापि कर्मादीनां तेषां सद्भावेपि जीवच्छरीर एव यस्मान्निमेषादयो भवंति, यदभावाच्च न मृतशरीरेषु, तादृशं किञ्चित् जीवेंद्रियाख्यं कल्पनीयमिति तदभिमानः । अत्र—"जीवनेन्द्रियम्" इति पठितव्यमिति प्रतिभाति । यथाश्रुते जीवेन्द्रियशब्दे समासवैघट्यात् । "कर्ममूलचक्षुरादिप्रवृत्त्यनुपालनाय" इति मूलस्वारस्याच्च । तादृशप्रवृत्त्यनुपालनं जीवनेनैव भवति । न तु प्रवाहनित्येन जीवेनेति । देहव्यापारङ्लाय् इति । एवमेव सर्वत्र पाठो दृश्यते । तदा चक्षुरादयो यथा दर्शनादिव्यापारिणः पृथक् संति, न त्थैतानीन्द्रियाणि तिष्ठंति । अपि तु केवलं तत्तत्स्त्रीपुंव्यक्तिसम्बन्धिदेहव्यापारमात्ररूपाण्येवेति तदर्थो भाव्यः । एवं सौगतैः कथने तत्र परेषामनिष्टाद्यभावात् तत्खण्डनप्रयासादिवैफल्यमेवेति वयमन्यथा पाठमालोचयामः—देहव्यापकत्वायिति । तथा चक्षुरादिवत् प्रादेशिककार्यकरत्वाभावेनेमानि स्त्रीन्द्रियादीनि देहव्यापकानि त्वगिन्द्रियवदिति तदर्थः स्यादिति तु प्रतिभाति । तेषां संप्रदायोऽन्वेष्टव्यः प्रतिबन्द्या तदेतन्निरस्यति—नपुंसकेंद्रियेति । अन्यथा नपुंसकाकृतिकृत्यस्वरादिवैलक्षण्यानिर्वाहादिति

---

களுக்கு விரிவும் சுருக்கமும் கூடும், இங்கு பௌத்தர் ஒரு விநோதம் கூறுவர், அதாவது—பெண்களுக்கு. ப்ரஸவம் உடலமைப்பு மாறுதல் முதலிய வற்றுக்காக ஸ்திரீந்திரியம் என்று ஒன்றையும், ஆண்களுக்கும் விந்து சக்தி, உடற்கட்டு முதலியவற்றுக்காக புருஷேந்திரயம் என்று ஒன்றையும், கர்ம மடியாக வரும் கண் இமைப்பு முதலியன சரிவர நடப்பதற்காக ஜீவேந் திரியம் என்று ஒன்றையும் அங்கீகரிக்க வேணும் என்பர் இவைகள் உடல் முழுவதும் செயல்படும் என்பர். இது சரியல்ல. இப்படியானால் நபும்ஸக

கட்டி, இவை देहव्यापार(?)ங்களாய் நிற்கும் என்ற ஸௌகதர்க்கு நபும்ஸகேந்த்ரியமென்றொன்றையுங் கட்ட ப்ராப்தமாம் अन्यथासिद्धि.परिहारங்களும் துல்யங்களாயிருக்கும்.

मनஸ்ஸை நித்யமென்றும் विभुவென்றும் பிறர் சொன்ன பக்ஷம் 'एकादशं मनश्चात्र दैवा वैकारिकाः स्मृताः', 'मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥' इत्यादिகளாலே बाधितம். मनஸ்ஸை विभुவென்று கொள்ளும் भाट्टர்க்கு निरवयवाकाशयोग-

---

भावः । ननु नैवं नपुंसकेन्द्रियक्लृप्तिप्रसङ्गः । तत्कृत्यादीनां सत्वादिगुणतारतम्यवदेहस्वभावादेवोपपत्तेरिति चेत्—हन्त! स्त्रीकृत्यादीनामपि तथैव तादृशदेहधर्मत्वोपपत्तेः स्त्रीन्द्रियादिक्लृप्तिरपि मुधैव भवेत् । स्त्रीणां देहसाम्येपि काश्चिदेवापत्यानि प्रसुवते, नान्या इति नियमार्थं तत्कल्पनमिति चेत्, नपुंसकेन्द्रियविषयेपि तदवान्तरविशेषमादाय तथैवेति समस्समाधिरित्याह अन्यथासिद्धिपरिहारेति । अन्यथासिद्धिश्च परिहारश्चेति द्वन्द्वस्समासः । अयं भावः—पुरुषेन्द्रियाभावेनैव स्त्रीकृत्यादेः, स्त्रीन्द्रियाभावेनैव पुरुषकृत्यादेश्च सम्भवात् तयोरन्यतरान्यथासिद्धिर्दुर्वारा । अन्यतरेंद्रियाभावो नपुंसकेषु अतिप्रसक्त इति चेत्, उभयेन्द्रियाभावोप्यचेतनेष्वतिप्रसक्तः । नपुंसकाकृत्यादेरुभयेन्द्रियाभावप्रयुक्तत्वस्यैव त्वयाङ्गीकारात् । ततश्च नपुंसकेन्द्रियक्लृप्तिरपि दुर्वारेति । अत एव स्त्रीन्द्रियपुरुषेन्द्रियादिकल्पनमिति न्यायसिद्धाञ्जनव्याख्यानेषु, "इन्द्रियेष्वेव स्त्रीपुन्नपुंसक भेदपरिकल्पनं सौगतानाम्" इति लेखनं दृश्यमानमनुपपन्नं वेदितव्यम् । तैर्नपुंसकेन्द्रियपरिकल्पनाभावात् । न चैवं सति मूले—"स्त्रीन्द्रियपुरुषेन्द्रियादीत्यादिशब्दार्थदारिद्र्यं स्यादिति वाच्यम् ; नपुंसकेंद्रियाभावेपि जीवेन्द्रियं तदङ्गीकृतमादाय तदर्थसुभिक्षत्वादिति । किञ्च पूर्वोक्तव्याख्यानेषु इन्द्रियेष्वेवेति, प्रसिद्धेन्द्रियेष्वेव स्त्रीपुमादिभेदपरिकल्पनोक्तिरप्यन्यथानुवाद एव । प्रसिद्धेन्द्रियातिरिक्ततत्कल्पनस्यैव तदभिमतत्वात् ।

अथ मनोविषये मतान्तराणि निराकरोति मनस्से इति । सुखाद्युपलब्धिसाधनमिन्द्रियं मनः, तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्चेति वैशेषिकपक्षः । मनो विभ्विति भाट्टानां मतम् । मनो

---

இந்திரியமும் ஓப்பவேணும் அவிகளுக்கென்று சில செயல்கள் இருக்கின்றனவல்லவா? இது வேண்டாமென்று சில யுக்திகளால் சொல்லில்—அவையும் வேண்டாமென்பதற்கும் சில யுக்திகள் இருக்கின்றன. இந்த மனஸ்ஸை—நித்தியமானது—எங்கும் வியாபியானது என்று சிலர் சொல்லுவர் அது தவறு. பதினொரு இந்திரியங்களும் ஸாத்துவிகாஹங்காரத்தினின்றும் பிறக்கின்றன என்ற பிரமாண வசனத்தோடு விரோதிக்கும், மனஸ்ஸைத் தன்னுடன் அழைத்துச் செல்லுகிறான் ஜீவன் என்பதால் இது ஸர்வவியாபியல்ல என்று ஏற்படுகிறது மனஸ்ஸை ஸர்வ வ்யாபி என்று கொள்ளும் சில மீமாம்ஸகருக்கு மனஸ்ஸு எல்லோர்க்கும் ஒன்று

**पक्षान्याय**த்தாலே **सर्वात्मा**க்களுக்கும் **मन**ஸ்ஸு **एक**ம் என்று கொள்ள **प्रसङ्गि**க்கும். **कर्णशष्कुल्यवच्छिन्ननित्याकाश**மே **श्रोत्र**மென்றும், **त्वगादि**கள் **वाय्वादिकार्य**ங்களென்றும்

---

विभु सर्वदा स्पर्शरहितद्रव्यत्वात् आकाशवत्, ज्ञानकारणमनःसंयोगाश्रयत्वात् आत्मवदिति तत्रानुमानं प्रमाणयन्ति। देवाः=इन्द्रियाणि। वैकारिका इति तेषां वैकारिकाख्यसात्त्विकाहङ्कारजन्यत्वकथनेन नित्यत्वं बाध्यते। मनष्षष्ठानीन्द्रियाणि ईश्वरो जीवः कर्षति=आकर्षति इति—"शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। मनष्षष्ठानि" इत्यादिना प्रतिपादनादविभुत्वं परिच्छिन्नपरिमाणत्वं ज्ञायत इति तेन विभुत्वबाध इति तात्पर्यम्। अथ विशिष्य मनोविभुत्ववादिनां भाट्टानां स्वसिद्धान्तविरोधमपि दर्शयति **मनस् विभु** इति। एतदुक्तं भवति—मनसोऽणुत्वे तस्य प्रत्यात्मनियतत्वात् आत्मनामनन्तत्वेन तस्याप्यनन्तत्वं सिद्ध्येत्। तस्याकाशवद्विभुत्वाङ्गीकारे तु तद्वदेव तस्यैकस्यैव सर्वपुरुषेष्वपि इन्द्रियत्वापत्तिः। निरवयवस्य तस्य, तादृशाकाशस्य कर्णशष्कुलीभेदेनेव तत्तद्धृदयप्रदेशभेदेनौपाधिकभेदमादायानुभवव्यवस्थोपपत्तेरिति मनसः स्वाभिमतनानात्वहानिरिति। अथ सामान्यत इन्द्रियविषये पराभिमतप्रक्रियां पराकरोति—**कर्णशष्कुली**ति। इदञ्च **वैशेषिक**मतम्—इन्द्रियाणां भौतिकत्वात् आकाशाख्यभूतस्य नित्यविभुत्वेन एकस्यैव सर्वत्र स्थितस्य तस्यैव श्रोत्रत्वं युक्तम्। तत्तत्पुरुषादृष्टोपार्जिततत्तत्कर्णशष्कुल्यवच्छेदभेदेन प्रतिपुरुषं व्यवस्थयोपकारकत्वञ्च भवतीति। इदमुपपत्तिविरुद्धम्। तथाहि—तथासति श्रोत्रस्याकाशमात्रत्ववत् घ्राणादीनामपि सर्वत्रस्थितपृथिवीसामान्यरूपत्वमेवास्तु। न तु तद्विशेषरूपत्वम्। "सा त्रिविधा शरीरेन्द्रियविषयभेदात्" इति ह्युक्तम्। श्रोत्रवदेवात्रापि प्रतिपुरुषमदृष्टाकृष्टतत्तदुपाधिभेदादेव घ्राणादीनामपि व्यवस्थितोपकारकत्वमिति किन्न स्यात्। अथाकाशस्य निरवयवस्य तथात्वेपि पृथिव्यास्सांशायाः कथमेकधा सर्वत्रैकेन्द्रियरूपेण स्थितिरिति चेन्न, आकाशस्यापि सिद्धान्ते सांशत्वात् कथन्तायास्तत्रापि दुर्वारत्वात्। एवमिन्द्रियाणां भूतसृष्टेः पूर्वमेवाहङ्कारादुत्पत्तिश्श्रूयत इत्यस्मिन् पक्षे शास्त्रविरोधोपि भाव्यः। **त्वगादी**ति। अत्रादिना चक्षुरादेः **वाय्वादीत्यादि**ना तेजआदेश्च परिग्रहः। वाय्वादिकार्यत्वं=वाय्वादिसजातीयतदवान्तरभेदत्वम्। श्रोत्रं परं नाकाशावान्तरजातीयम्, अपि तु तत्तत्कर्णशष्कुल्यवच्छिन्नाकाशमेव। त्वगादीनि तु न वाय्वादिमात्रम्, किन्तु तदवान्तरजातिविशेषः इति वैशेषिकप्रक्रिया। यदिन्द्रियं यद्भूतगुणग्राहकं तत् तदवान्तरजातिरिति सामान्यनियमः श्रोत्र उक्तरीत्या भग्नोऽभूत्। किञ्चैवं नियमे

---

தான என்று ஒபபவேண்டியதாக வரும். பாகம் பிரிக்கமுடியாத ஆகாயமே காது என்னும் கருவியாகிறது என்னும் மதத்தில அப்படிதானே ஒப்புகிறார்கள் இப்படி ஓர் ஆகாயமே காது மடல்களாலே மனிதர்கள் தோறும் பிரிக்கப்பட்டு காதென்னும் கருவியாகிறது என்பதும், தோல் என்னும் கருவி முதலியவை—வாயு முதலிய பூதங்களின் வகையைச்

एकेन्द्रियமே ப்ரதேசபேதத்தாலே ஸர்வகார்யகரமென்றும், शरीरव्यापियान த்வகிந்த்ரியமொன்றுமே யுள்ளதென்றும் ஶ்ரோத்ரமும் சக்ஷுஸ்ஸும் विषयத்தை ப்ராபியாதே க்ரஹி

सति—त्वगपि शीतोष्णानुष्णाशीतग्राहिकेति त्र्यात्मिका स्यात्। पूर्वोक्तशास्त्रविरोधश्च। **एकेन्द्रियेति**। इदञ्च बौद्धविशेषस्य मतम्। तथाहि—प्रतिशरीरमेकमेवेन्द्रियम्। यथा मनः एकमेव तत्तद्वृत्तिभेदादध्यवसायादिकार्यभेदं जनयति, तथैवेदमेकमिन्द्रियं तत्तदधिष्ठानभेदात् दर्शनस्पर्शनादिकार्यभेदं जनयतीति न नानेन्द्रियाणामावश्यकता। षडायतनादिबुद्धोपदेशस्याप्ययमेवाभिप्राय इति। अत्रोच्यते—प्रतिपुरुषमेकैकेन्द्रियक्लृप्तिरप्यनपेक्षितैव। इतोप्यतिलाघवात् सर्वपुरुषेष्वपि कर्णशष्कुल्यवच्छिन्नाकाशश्रोत्रन्यायेनैकेद्रियस्यैव तत्तददृष्टकृतोपाधिभेदेन व्यवस्थितकार्यकरत्वोपपत्तेः। इन्द्रियसंख्याबोधकागमविरोधोपि बोध्यः। **शरीरव्यापीति**। अयमपि बौद्धैकदेशिपक्षः। तदुक्तम्—"स्पर्शनस्य पुञ्जस्य भागाश्चक्षुरादयः" इति। शरीरव्यापिनः उभयत्रादिसम्प्रतिपन्नस्यानेकाशावटितस्यैकस्यैव त्वगिन्द्रियस्य करचरणादिप्रदेशभेदेन तत्तत्कार्यकरत्वोपपत्त्या न तदतिरिक्तनानेन्द्रियकल्पना साधीयसीति। तदपि न। चक्षुरादीनामपिसद्भावबोधकश्रुतिविरोधात्। मास्तु त्वगपीन्द्रियमेकम्। देहस्यावयवविशेषा एव तत्तत्कार्याणि करिष्यन्ति। यान् आसाद्य त्वगपि तत्तत्कुर्यादित्युपपत्तिविरोधोपि। **श्रोत्रमुमिति**। यद्यपि चक्षुरिन्द्रियं तेजसाऽऽप्यायितत्वादाप्यायकतेजोंशमादाय मणिप्रभान्यायेन विषयदेशपर्यन्तवृत्तिकं सम्भाव्येत, तथापि श्रोत्रस्याकाशाप्यायितस्य तथाविधवृत्त्यसंभवात् स्वदेशस्थमेव सत् तत् दूरस्थशब्दादीन् गृह्णाति मनोवत्। न च वीचीतरङ्गकदम्बमुकुलन्यायादिना शब्दजशब्दक्रमेण श्रोत्रदेशमायात एव शब्दस्तेन गृह्यत इति नैयायिकोक्तं युक्तम्। तथासति, "दूरे शब्दः समीपे शब्दः" इत्यादिप्रतीत्यनुपपत्तेः। न च शब्दमान्द्यादिना लिङ्गेनैवानुमानिकी तथा प्रतीतिरिति वाच्यम्; तथापि, "प्राच्यां प्रतीच्यां वा दिशि शब्दः" इत्यादौ तथादिग्विशेषानुमापकलिङ्गादर्शनेन तथाविधप्रतीत्यनुपपत्तेः। न च यस्या दिशः शब्दपरम्परा श्रोत्रदेशमायाति, तद्दिश्यश्शब्द इत्यनुमीयत इति वाच्यम्। कदम्बमुकुळादिन्यायवादिभिस्सर्वदिक्ष्वपि युगपत् शब्दमालाया उत्पत्तिवर्णनात् दिग्विशेषायातत्वानिर्णयात्। तस्माद्दूरस्थमेव शब्दं स्वयमप्राप्यैव श्रोत्रं गृह्णातीति बौद्धा वदन्ति। अत्र प्रतिविधीयते—विकारिद्रव्यस्य श्रोत्रस्य स्वतो वा आप्यायकद्रव्यद्वारा वा दूरे शब्ददेशपर्यन्तं वृत्तिप्रसरणे न किञ्चिन् बाधकम्। तद्वृत्तेरतीन्द्रियत्वेन नानुपलब्धिरपि बाधिका। मनोऽपि चक्षुरादिद्वारा विषयदेश प्राप्यैव गृह्णाति। अथवा श्रोत्रदेशे शब्दव्यञ्जकवाय्वागमनवशात् तद्द्वारा विप्रकृष्टमपि शब्दं श्रोत्रं गोचरयति इत्यप्येकः पक्षः। एवं पक्षान्तराण्यपि **न्यायसिद्धाञ्जने** प्रतिपाद्यन्ते। तत्र हि सयूथ्यमतभेदेन शब्दस्य द्रव्यत्वपक्षं प्रपञ्च्यानन्तरमुच्यते—"तदेवमद्रव्यत्वपक्ष एव शब्दस्य श्लाघ्यः। एवञ्च सति श्रोत्रवृत्तिर्वा व्यञ्जकवाय्वागमनं वा शब्दवद्भेर्याद्यवयवागमनं वा शब्दवद्वाय्वागमनमेव वा

சேர்ந்ததவை எனபதும், ஒரே இந்திரியக கருவியே உடலின் உறுப்பு களுககேறப எலலா தொழிலையும் புரிகிறது என்பதும, உடலெங்கும்

கும் என்னும் சொல்லுகிற பக்ஷங்கள் உபபத்திசாஸ்த்ரவிருத்தங்களாகையாலே உபேக்ஷணீயங்கள்

यथाप्रनीति भाव्यमिति । तत्र श्रोत्रस्यैव विकारिद्रव्यतया साक्षाद्वृत्तिः शब्दद्रव्यत्वपक्षे प्रथममभिहिता । व्यञ्जकवाय्वागमनं शब्दस्याकाशगुणत्वपक्षे । शब्दवद्भेर्याद्यवयवागमनं तस्य पञ्चभूताश्रितत्वपक्षे । भेर्याद्यवयवागमनं एवं वर्ण्यते **यादवाभ्युदये**, "सर्पापसारौषधिसम्प्रयुक्ता भेरीव सा भीमतरं ररास" इति । सर्पापसरणार्थौषध्यादिनाऽनुलिप्तभेरीताडने तस्याश्शब्दः यावद्दूरं गच्छति, तावद्दूरं सर्पा अपसरन्ति म्रियन्ते वेति लोकप्रसिद्धिः । तत्र तादृशभेर्यवयवागमनं विना शब्दस्येदृशशक्तिमत्त्वानुपपत्तिरिति हृदयम् । शब्दवद्वाय्वागमनमिति शब्दस्य वायुगुणत्वपक्षेऽभिधीयते इति विशेषः । तथा च शब्दजशब्दकल्पनेन नैयायिकादिप्रोक्तवीचीतरङ्गादिन्यायः सर्वथा नाश्रयणीय इति तु तत्त्वम् । श्रोत्रस्य प्राप्यग्राहित्वाभावे दूषणान्तरं **शास्त्रदीपिकायां** दर्शितम्—"श्रोत्रस्य अप्राप्यकारित्वे सन्निकृष्टविप्रकृष्टस्थितौ युगपच्छब्दावुपलभ्येयाताम् । तयोस्तु क्रमेणोपलब्धिर्न कथञ्चिदप्यप्राप्यकारित्वे समर्थयितुं शक्या । किञ्च—क्षणिको वा शब्दस्स्यात् स्थायी वा? यदि क्षणिकः, ततः प्रत्यासन्नैर्गृहीतमात्रे नष्टः कथं विप्रकृष्टैः पश्चाद्ग्रहीतुं शक्यः? स्थायित्वं तु सौगतानां सर्वथानभिमतमेव । स्थायित्वे तु प्रत्यासन्नाना शब्दश्रावणं चिरकालमनुवर्तेतेति । **चक्षुस्सुमिति** । चक्षुरप्यप्राप्यैव विषयान् गृह्णातीति बौद्धानां वादः । तथा हि चक्षुरुन्मीलितमात्रमेव गगनगतं चन्द्रमसमवगमयति । न च तावद्दूरं युगपत् झटिति चक्षुर्वृत्तिर्गच्छति । असम्भवात् । नापि क्रमेण । तथासति मध्ये स्थितपदार्थपरिच्छेदेन चन्द्रप्रत्यक्षविलम्बापातात् । न हि श्रोत्रेण शब्दसाक्षात्कार इव चक्षुषा दूरासन्नग्रहणतारतम्यमनुभूयत इति । अत्रोच्यते—चक्षुर्वृत्तिः क्रमेणैव चन्द्रमसमवगमयति । अथापि शतपत्रपत्रशतभेदनन्यायेन शैघ्र्यातिशयादन्तरालाग्रहणम् । उदितमात्रे हि दिवाकरे अखिललोकविसृमरालोकजालमवलोकयामः । तस्मादिन्द्रियाणि सर्वाणि प्राप्यग्राहीण्येवेति निर्णयः । अन्यथाऽप्राप्तत्वाविशेषात् इन्द्रियसन्निकर्षाद्यनपेक्षणात् युगपत्सर्वग्रहणप्रसङ्गः । तदुक्तं **सर्वार्थसिद्धौ**, "अतिप्रसङ्गोऽसम्बद्धग्रहणे स्यात्, समं त्विदम् । सम्बद्धग्रहणेऽपीति न सत्, योग्यान्वितग्रहात् ॥ गृहीतस्येष्यते कश्चित्सम्बन्धोऽव्यभिचारतः । न सम्बद्धस्य सर्वस्य ग्रहणं व्यभिचारत." इति । इयांस्तु विशेषः—रसनात्वगादीनां साधिष्ठानानामेव विषयेण प्राप्तिरावश्यकी । चक्षुर्मनसोस्तु अधिष्ठानाद् दूरेपि विषयेण सह सम्बन्धो भवति कार्यकरः । श्रोत्रस्य तूभयथापि पक्षभेदेन भवति इति ।

வியாபித்துள்ள தோல்தான் இந்திரியங்களெனப்படுகிறது என்பதும், கண்ணும் காதும் பொருளிருக்குமிடத்துக்குப் போகாமலே பொருளை அறிவிக்கும் என்பதுமான பிறர் கொள்கைகள், உலக அநுபவம் சாஸ்திரங்கள் இவற்றுக்கு முரணானவை

[ இந்திரியங்களின் பரவருத்தி ]

इन्द्रियवृत्तिविशेषஙகளை கார்யானுரூபமாக யதாசாஸ்த்ரம் கண்டுகொள்வது. स्फटिकसलिलकाचादिव्यवहितங்களை க்ரஹிக்குமிடத்தில் அதிஸூக்ஷ்மங்களான நயனகிரணங்கள் ப்ரவேசிக்கின்றன. இந்த்ரியங்கள் ஸலிலாதி

---

नन्विन्द्रियाणां हृदयस्थानकाना कथं दूरे वस्तुग्राहकत्वमित्यत्रार्थात्पूर्ववाक्योक्तमपि चक्षुश्श्रोत्रादि-वृत्तिभेदं कृत्स्नवैशद्याय पुनः कथयति—इन्द्रियवृत्तीति । एतदुक्तं भवति—यदीन्द्रियस्वरूपमेव वृत्तिः, तदा तस्य परिच्छिन्नतया दूरस्थवस्तुग्रहणानुपपत्तिः । यदि च तद्धर्मः, तर्हि धर्मस्य धर्म्यतिवर्तनायोगाद्दूरस्थग्रह-णानुपपत्तिरेव । अत्रसाङ्ख्या अभिप्रयन्ति—यत्पुरुषीय चक्षुश्श्रोत्रादेर्यावद्दूरस्थवस्तु ग्रहणशक्तिः, तदीयचुक्षुरादे स्तावत्पर्यन्तं प्रथिमा शरीरोत्पत्तिकाल एव जायते । तत्राधिष्ठानाद्बहिरवस्थिततदंशो वृत्तिरित्युच्यते इति । तद साधु । तर्हि चक्षुरादेर्निमीलनदशायामपि बहिरवस्थिततद्वृत्त्या पदार्थदर्शनादिप्रसङ्गः । अन्यथा तत्काले चक्षुषः प्रथिमविरुद्धतयाणुत्वप्रसक्तेः । वृत्तिनाशेपीन्द्रियस्वरूपसत्त्वञ्चाङ्गीकार्यम् । तस्मादेवमेवनिर्णेयं भवति—चक्षुषस्तेज-साऽऽप्यायितत्वात् तेजस इव चक्षुषोपि रश्मय एव वृत्तयो भवन्ति "दिवीव चक्षुराततमि"तिश्रुत्या झटिति वियति 'तद्रश्मिव्याप्तिश्रवणाद्दूरस्थ वस्तुग्रहणाद्युपपत्तिः । भाषितञ्च दर्पणादौ नायनरश्मीना प्रवृत्तिप्रतिघाता-दिकम् । एवं श्रोत्रस्याप्याप्यायकनभोव्याप्तया सर्वत्रदूरस्थशब्दादिग्रहणोपपत्तिरिति पूर्वमेवावेदितम् । वृत्ति-विशेषेति विशेषशब्दः—चक्षुश्श्रोत्रयोर्बहिर्देशेष्वपिवृत्तिः, इतरेन्द्रियाणामधिष्ठानदेश एव वृत्तिरिति भेदमाह—**कार्यानुरूपेति** । अयंभावः —सर्पाणां श्रोत्रेन्द्रियं नयनगोळकवृत्ति । तेनैवतेषा श्रोत्रकार्यनिर्वहणात् । हस्तिनो घ्राणेन्द्रियं शुण्डाख्यहस्ताग्रनिष्ठम् । तेनैव गन्धग्रहणात् । सर्पादीनां पादेन्द्रियमप्युरोवृत्ति । पक्षिणा पक्षपादो-भयवृत्तिचेति यथोपलम्भं यथाशास्त्रंच कल्प्यमिति । इदमत्रबोध्यम् "अवस्थितेरसम्भवाच्च नेतरः" इत्यत्र भाष्ये हृदयस्य सर्वेन्द्रियकन्दत्वोक्त्या तत्तदिन्द्रियाणा नाडीद्वारा हृदयदेशसम्बन्धोभ्युपगमनीयः । एवं—बृहदारण्यके—"प्राणन्नेव प्राणो नामभवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मन" इति तत्तदधिष्ठानस्थस्यैवेन्द्रियस्य तत्तत्कार्यकरत्वोक्त्या हृदयान्नाडीद्वारा प्रतिनियतप्रदेश एवेन्द्रियसञ्चारोपि भवतीति । ननु चक्षुषः प्राप्यकारित्वे उन्मीलनदशायां सर्वतश्चक्षूरश्मिप्रसरणसम्भवात् स्वपृष्ठतोपि पदार्थग्रहण

---

இந்திரியங்கள் பொருள்களைத் தொடும்போது ஏற்படும் தொடர்புகள் அவ்வோ காரிய நிகழ்ச்சிகளுக்கு ஏற்றவகையிலே இருக்கும் என்பது சாஸ்திரங்களில் காணலாம். ஸ்படிக மணி ஜலம் கண்ணாடி இவைகளாலே மறைக்கப்பட்ட பொருள்களை கண் அறிவிக்கும்போது, கண்ணிலிருந்து நுண்ணியகிரணங்கள் அவைகளை ஊடுருவுகின்றன. இந்திரியங்கள் பொருட்களை அறிவிக்கும்போது—நடுவில் இடையூறு நேரிடில்—அவைகளுக்கு தொடர்பு அறுபடுகிறது—அல்லது—இல்லை என்னும் கொள்கைகளிலே பொருத்தங்களைக்கண்டு கொள்ளவும். தூரத்திலுள்ள சம்பகப்பூ முதலியவற்றின் மணங்களுடன் பூவின் பொடிகளும்

களை ப்ரவேசிககுமிடததில க்ஷேபாக்ஷேபமதபேதஙகளில ஔசித்யஙகணடு கொளவது. दूरस्थचपकादिगन्ध-ग्रहणததில் सूक्ष्मமான गन्धवद्द्रव्यம் வாயுவோடே கூட வருகிறது. श्रोत्रादिகளை भौतिकஙகள எனறு

---

करोतु। पुरत एव प्रसरणात् आर्जवेनावस्थानमप्यपेक्षितमितिचेत्, तदापि पुरतोऽविशेषेण कुड्यादिव्यवहित-मप्युपलभ्येत। कुड्यादिभिश्चक्षूरश्मिप्रतिबन्धान्नैवमिति चेत्—तुल्यन्यायात्स्फटिकादिव्यवहितमपि नोपलभ्येते-त्यत्राह—**स्फटिकसलिलेति**। लोके कुड्यादिव्यवहितस्याग्रहणात् स्फटिकादिव्यवहितग्रहणाच्च कुड्यादि-विलक्षणतया स्फटिकादिः रश्म्यनुप्रवेशानुगुणसन्निवेशविशेषवानिति कार्यबलात्कल्प्यमिति भावः। **सलिलं** निर्मलं जलम्। **काचः** मणिविशेषः। **आदिना** सीसकद्रव्याननुलिप्तादर्शादिकं ग्राह्यम्। ननु स्फटिकादौ चक्षूरश्मिप्रवेशे तस्य सरन्ध्रत्वसिद्ध्या स्फटिकभाजननिहितं सलिलमपि परिस्रंसेतेत्यत्राह—**अति सूक्ष्मेति**। तथा च सलिलबिन्द्वपेक्षयापि नायनरश्मीनामतिसूक्ष्मत्वात् तेषा प्रवेशेपिनजलगळनप्रसक्तिरिति भावः। अत्रेदं बोध्यं—चक्षुरप्राप्यकारित्वेऽपि काचादिकमपिकुड्यादिवन्नीरन्ध्रमेव। अथापि—कुड्यादिव्यवहितं नगृह्यते काचादिव्यवहितन्तुगृह्यत इति वस्तुस्वभाववैचित्र्यादेवाभ्युपगमनीयम्। तदेतत्—चक्षुः प्राप्यकारित्वपक्षेप्यनुम-न्यताम्। तदुक्तमाचार्यैः—"नीरन्ध्रेप्यम्बुकाचादौ दृक् प्रभादेः प्रवेशनम्। वस्तुस्वभाववैचित्र्यादितिकेचित्प्र-चक्षते।" इति। अथ चक्षुरादेस्सलिलादौ प्रवेशविषये मतभेततत्तारतम्यादिकं सूचयति—**इन्द्रियज्ञ्लिति**। क्षेपः वृत्तिः प्रसरणमितियावत्। अत्रबौद्धावदन्ति—चक्षुरादीनां बहिःक्षेपो दूरस्थग्रहणायनाश्रयितव्यः। इन्द्रिययोग्यत्वतदभावाभ्यामेवग्रहणाग्रहणयोरुपपत्तेः अयस्कान्तादिवत्। चक्षुरादिबहिःक्षेपस्य छादकतदभावयोश्च कल्पने गौरवात्। अतोक्षिप्तमेवेन्द्रियं स्वरूपयोग्यतया दूरस्थमव्यवहितं गृह्णाति। ननु व्यवहितं योग्यताया अभावात्। अतः क्षेपो नाङ्गीकार्य इति। तन्न। आलोकादिप्रतिबन्धकछत्रादिन्यायेन कुड्यादेः चक्षुर्वृत्ति-प्रतिबन्धकत्वतदभावाभ्यामेव ग्रहणाग्रहणयोरुपपत्तौ अदृष्टचरानन्तयोग्यतातन्नाशादिकल्पन एवातिगौरवात्। अन्यथैकपुरुषापेक्षयैकदा छादकेसति घटादेः पुरुषान्तरम्प्रति कालान्तरेपिभानं नस्यात्। योग्यतायास्सर्वथा नष्टत्वात्। "दिवीवचक्षुराततम्"मिति श्रुतिरपिक्षेपसद्भावमुपोद्बलयति। दिवि आततं चक्षुरिवः आकाशे प्रसृतं नेत्रमिवेति।

नन्वेवमपि घ्राणेनकथं दूरस्थगन्धग्रहणोपपत्तिः? तस्य वृत्तिविरहात्। आप्यायकपृथिव्या रश्मिरहि-तत्वाच्च। न च शब्दइवेन्द्रियदेशमायाति गन्धः। तस्य द्रव्यत्वेन तथोपपत्तावपि गन्धस्य गुणत्वेन स्वाधारहानायोगादित्यत्राह—**दूरस्थेति**। घ्राणस्यावृत्तिमत्त्वेपि गुणस्य स्वाधाराहानावपि सततगतिशीलेन

---

காற்றில்மிதந்து வருகின்றன. ஐங்கருவிகளும்—ஐநது பூதங்களினின்றும் பிறநதவை என்று மஹா பாரததில் கூறியதற்கும்—அவைகளாலே இவற்றுககு புஷ்டி ஏற்படுகிறது என்றுதான் கருத்து என வேதாந்தஸஙகிரஹததிலே அருளிசசெயதார். இமமாதிரியே

महाभारतादिகளிலே சொல்லுவதும் आकाशादिभूतஙகளாலுணடான आप्यायनமடியாக வென்று वेदार्थसङ्ग्रहத்திலே அருளிச் செய்தார். मनःप्राणवाक्குக்களுடைய अन्नमयत्वादिகளைச சொல் லுகிற श्रुतिகளுககும் पृथिव्यप्तेजस्सுககளாலுணடான आप्यायनத்திலே तात्पर्यம்.

---

गन्धवहेन सुरभि चम्पकादि भागाः घ्राणदेशमानीयन्त इति स्वसंयुक्त द्रव्याश्रितत्वप्रत्यासत्त्या गन्धग्रहणसम्भव इति भावः । इन्द्रियार्थसन्निकर्षश्चसिद्धान्ते द्विविधः—तदुक्तं तत्त्वरत्नाकरे—"अत्र वृद्धाविदामासुस्संयोग-स्सन्निकर्षणम् । संयुक्ताश्रयणश्चेति यथासम्भवमूह्यता"मिति । समवायानङ्गीकारात्स्वसंयुक्त समवायेत्यनुक्तिः । संस्थानातिरिक्त जात्यनङ्गीकारात् तस्यचावयवसंयोगरूपतया द्वितीयसन्निकर्षेणैव ग्रहणात् तदर्थे संयुक्त समवेत समवायोप्यनपेक्षितः । शब्दस्यापि द्रव्यत्वे संयोगेनैवालमिति समवायसन्निकर्षोपि मुधा । उक्तरीत्याऽतिरिक्त-जात्यभावात् समवेत समवायस्य, भावान्तराभाववादेऽभावानतिरेकाद्विशेष्य विशेषणभावस्य चानभ्युपगमः । श्रुत प्रकाशिकाया पक्षान्तरमप्युक्तं—"यद्वा घ्राणस्यापिचक्षुष इव रश्मिद्वारा सम्बन्धात् दूरस्थपदार्थगतगन्ध-ग्राहित्वं कल्प्यं, गौरवाभावात् । नकेवलं रश्मिमत्त्वं कल्प्यम् । उक्तं च महाभारते—"नह्यात्माशक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्तमानैरनर्थैर्दुर्धर्षैरकृतात्मभिः ॥ तेषान्तु मनसारश्मीन् यदासम्यङ्नियच्छति । तदाप्रकाशतेह्यात्मा दीपोदीप्य(न्निवा ?)न्निराकृतिरि"ति । इन्द्रियाणां सर्वेषां पञ्चीकृतभूताप्यायनेन तेजस्सम्बन्धा द्रश्मिमत्त्वञ्चोपपद्यत इति ।

एवमिन्द्रियाणामाहङ्कारित्वं प्रतिष्ठाप्याथ तेषु भौतिकत्वबोधकवचनानां सांप्रदायिकं निर्वाहं दर्शयति—श्रोत्रादीति । तदुक्तं भारते—"शब्दश्श्रोत्रं तथाखादि त्रयमाकाशसम्भवम् । वायोस्स्पर्शस्तथाचेष्टात्वक् चैव त्रितयं स्मृतम् ॥ रूपं चक्षुस्तथाव्यक्ति स्त्रितयं तेज उच्यते । रसः क्लेदश्च जिह्वाच त्रयो जलगुणा-स्स्मृताः । घ्राणं घ्रेयं शरीरञ्च तेतुभूमिगुणास्स्मृताः । इत्यादि । वेदार्थसङ्ग्रहेति । "वैकारिकाहङ्का-रादेकादशेन्द्रियाणिजायन्त" इत्युपक्रम्य—"एवमाहङ्कारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं महाभारत उच्यत" इति तत्रत्योग्रन्थः । इदञ्चाप्यायनं स्पष्टमुच्यते मोक्षधर्मेभृगुभरद्वाजसंवादे—"आप्यायन्ते च तै र्नित्यं धातव-स्तैस्तु पञ्चभि"रिति । अथापि—"अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयीवागि"ति श्रुत्येन्द्रियाणां

---

மனஸ்ஸு பிராணன, வாககு இவைகளை—முறையே—அன்னமயம் ஜலமயம், தேஜோமயம் என்று சுருதி சொன்னதற்கும்—அவைகளாலே இவற்றுக்கு புஷ்டி ஏற்படுகிறது என்று கருத்துகொள்ள வேணும்,

வேதாந்திகளில் பாஸ்கரரின் கொள்கையுடைய சிலர்—இந்திரியஙகளை, பஞ்சபூதங் களுடையவும் அஹங்காரம் என்னும் திரவியத்தினுடையவும் விகாரமானகாரியம் என்று சொல்லு மிருவித பிரமாண வசனஙகளையும் கட்டிச்சேர்த்து—அஹங்காரத்தின் துணையுடன்

[ இந்திரிய விஷயத்தில் சில பேதாபேத வாதி பக்ஷ நிரஸனம் ]

इन्द्रियங்களினுடைய भौतिकत्वाहङ्कारिकत्ववाक्யங்கள் இரண்டையுஞ்சேர்த்து अहङ्कारसहितமான

भौतिकत्वमेव प्रतिपाद्यत इत्यत्राह—**मनः प्राणेति**। अन्नमयत्वं—पृथिवीविकारत्वम्। आदिना अम्मयत्वादि विवक्षा। इन्द्रियाणामाहङ्कारिकत्वस्यभूयोवाक्यसिद्धतया इन्द्रियभौतिकत्ववादिभिर्वैशेषिकादिभिरपि श्रुत्युक्तस्यमनः प्राणादिनां पृथिवीजलादिविकारत्वस्यानभ्युपगमात् पूर्वोक्तश्रुतिराप्यायनपरैवेति भावः। अथेन्द्रियाणां उभयविधवचनाविरोधायोभयविकारत्वं वदतां विलक्षणांप्रक्रियामाह—**इन्द्रियगणस्त्वैरेति**। **अहङ्कारसहितेति**। अत्र तन्मात्रापञ्चकमेव साक्षादिन्द्रियोपादानम्। अहङ्कारस्तुनिमितमिति तदभिप्रेतम्। तदुक्तं विष्णुचित्तीये—"अहङ्कारस्येन्द्रियाणि प्रतिनिमित्तत्वमेव। भूतानामेवोपादानत्वम्।" अन्नमयं हिसोम्य मन "इति श्रुतेरितिकेचिदाहु"रिति। अयमत्रक्रमः—तन्मात्रापञ्चकं सात्विकाहङ्कारसहकारेण पञ्चद्वन्द्वानि ज्ञानकर्मेन्द्रियाणि सृजतीति सामान्यतस्स्थिते—तत्र–शब्दतन्मात्रं अहङ्कारेण सह स्वकार्यभूताकाशगत शब्दग्राहकं श्रोत्रं ज्ञानेन्द्रियं, तादृश शब्दोच्चारणहेतुभूतं वाग्रूपकर्मेन्द्रियञ्च जनयति। एवमेव स्पर्शतन्मात्रं स्वकार्यवायुगतस्पर्शग्राहकं त्वचं ज्ञानेन्द्रियं, पदार्थस्पर्शनहेतुभूतपाणिरूप कर्मेन्द्रियंचेतिद्वयं—रूपतन्मात्रं स्वकार्यतेजोगत रूपग्राहकनेत्रं, तादृशतेजः कार्यप्रवृत्तिकारणभूतपादैचेति ज्ञानकर्मेन्द्रियद्वयं, रसतन्मात्रं तादृशजलगतरसंग्राहकरसनां, जलविशेषात्मकमूत्रोत्सर्गहेतुभूतोपस्थंचेति तादृशेन्द्रियद्वयं, गन्धतन्मात्र तादृशपृथिवीगतगन्धग्राहकघ्राणं, पृथिवीरूपान्न विकारभूतमल विसर्जनहेतुपायुं चेतितादृशेन्द्रियद्वयं जनयन्तीति। अत एव तत्तद्भूतोपादानकानामिन्द्रियाणां विषयनियमश्चोपपद्यते। अन्यथाकेवलाहङ्कारोपादानकत्वे मन इवेतरेन्द्रियाण्यपि सर्वसाधारणानि स्युः। ततोमनोमात्रमेवकेवलाहङ्कारप्रकृतिकम्। सर्वेन्द्रियोपकारकञ्चेति। शिलभेदाभेदवादिनःभास्करावलम्बिनः केचित्। नतु यादवप्रकाशीयाः। तत्पक्षेकर्मेन्द्रियाणां शरीरेणसहोत्पत्तिविनाशाङ्गीकारेण तन्मात्राहङ्कारादिकार्यत्वानुपपत्तेः। आहुरित्यस्वरससूचनाय। सिद्धान्तरीत्याहङ्कारोपादानकत्वभूतविशेषाप्यायितत्वाभ्यामपि सर्वातिप्रसङ्गवारणात् सर्वश्रुत्यनुगुणतया तथैवस्वीकार्यमिति। अतएव–"सात्विकाहङ्कारः शब्दतन्मात्रादिपञ्चकं क्रमेण सहकरीकृत्य श्रोत्रवागादि ज्ञान कर्मेन्द्रियपञ्चकं सृजति इत्याहुः—इति तत्त्वत्रयव्याख्यायां—"आहु"रि त्यत्र—तत्त्वविद इति वरवरमुनिविवरणमपि प्रत्युक्तम्। अस्याप्युक्तरीत्या परमतत्वात्।

ஐந்து தந்மாத்ரையினின்றும் முறையே—காது, வாக்குகள்—தோல், கைகள்—கண், கால்கள், நாக்கு, மூத்திரத்வாரம், மூக்கு, மலத்வாரம் இவைகள் பிறக்கின்றன. மனஸ்ஸு மட்டும் தனியாக அஹங்காரத்திலிருந்து பிறக்கும் என்பர் தொழில்கருவிகள் ஐந்துமில்லை என்றால்—அப்போது—அறிவுகருவிகள் ஐந்துமில்லை என்றும் வாதிக்கலாம். இருவித வாதமும் ஒரு மாதிரியாக இருப்பதால், யுக்தி இதிலுமுண்டு, அதிலுமுண்டு. சுருதியில் சில

तन्मात्रपचकத்தில நின்றும் அடைவே श्रोत्र वाक्कுக்களும் त्वक्पाणिகளும் चक्षु:पादங்களும் जिह्वो-पस्थங்களும घ्राणपायुக்களும் பிறக்கின்றன. मनस्सु ஒன்றும केवलाहङ्कारजन्यமென்று சில भेदाभेद-

---

इयास्तु विशेषः—यत्—अत्रमूलोपात्तपरमते इन्द्रियाणां तन्मात्राणि उपादानं, अहङ्कारस्सहकारीनिमित्तंवा। तत्त्वत्रयेतु अहङ्कार उपादानमित्यादि विपरीतः क्रमः। अन्यत्सर्वंतुल्यमिति। अतस्तद्वातादृग्वेति नकश्चि-द्विशेष इति। कस्तर्हिसिद्धान्त इति चेत्—अहङ्कार उपादानं भूतान्याप्यायकानीति। आप्यायकत्वञ्चसहका रित्वनिमित्तत्वाभ्यां भिन्नमेव। उत्पन्नम्प्रति उत्पत्त्यनन्तरं पोषकत्वंह्याप्यायकत्वम्। सहकारित्वादिकन्तु—उत्पत्तेः पूर्वमुत्पत्स्यमानम्प्रतिकिञ्चित्करत्वम्। तथा चाप्ययकत्वपक्षे भूतेभ्यः प्रागेवेन्द्रियसृष्टिरिति, सहकारि-त्वादिपक्षे पश्चात्सृष्टिरिति अहोमहतीभिदाभवति। तथाच तत्त्वत्रयचुळकेनिरटङ्कि वेङ्कटेशदेशिकैः "अहङ्कारो-पादानकाना श्रोत्रादीनां पञ्चानां क्रमशः आकाशादिभूतपञ्चकं "आप्यायकम्। तथैव मनः प्राणवाचामपि पृथिव्यप्तेजांसि" इति।

अथ कर्मेन्द्रियानभ्युपगन्तृवैशेषिकादिमतं निराकुरुते—कर्मेन्द्रियेति वाक्यद्वयेन। तेषामयमाशयः—श्रोत्रं चक्षुस्स्पर्शनञ्चरसनं घ्राणमेवच। अधिष्ठायमनश्चायं विषयानुपसेवते॥— मनष्षष्ठानीन्द्रियाणि प्रकृतिस्था-निकर्षतीत्यादौ कर्मेन्द्रियाणि तावन्ननिर्दिश्यन्ते। नापि तानिकल्पनीयानि। अन्यथासिद्धेः। यद्यपि ज्ञानेन्द्रि-याण्यपि अन्यथासिद्धान्येव। क्रियामात्रस्य करणपूर्वकत्वव्याप्त्यापि सिद्धन्ति करणानि गोळकाद्यधिष्ठानान्येव। नातिरिक्तानीति भवतिशङ्का। अथापि चक्षुरादिना दूरस्थादिग्रहणमनुभूयमानं न गोळकादिमात्रसाध्यमिति तत्र तदतिरिक्तेन्द्रियसिद्धिः। कर्मेन्द्रियत्वाभिमतपाण्यादिविषयेतु आरादधिष्ठानं प्राप्तानामेवक्रियमाणतया नतदति-रिक्तेन्द्रियसिद्धिस्तत्रापेक्ष्यते। पाण्यादिषु कर्मेन्द्रियत्वव्यपदेशः केषाञ्चित् कर्मकरणतामात्रालम्बन एव। किञ्च-शब्देतरोद्भूतविशेषगुणानाश्रयत्वेसतिज्ञानकारणमनस्संयोगाश्रयत्वमिन्द्रियलक्षणम्। आत्मन्यतिव्याप्तिवारणाय विशेषगुणानाश्रयत्वेसतीति। चक्षुरादेरपि रूपादिविशेषगुणाश्रयतयाऽव्याप्तिवारणायोद्भूतेति। इन्द्रियेषुचगुणा अनुद्भूता भवन्ति। एवमप्याकाशस्यैवश्रोत्रत्वात् तत्र शब्दाख्योद्भूतविशेषगुणाश्रयत्वमेवेत्यव्याप्तितादवस्थ्यमत-श्शब्देतरेति। सामान्यगुणमात्राधारकालादिवारणायविशेष्यदळम्। एवञ्चैतादृशेन्द्रियलक्ष्माभावादपि पाण्यादिकं नेन्द्रियमिति। तुल्ययोगक्षेतमतेति। अत्र सिद्धान्तिनोवदन्ति—"यत्रूभयोस्समोदोषः परिहारोपिवासमः। नैकः पयनुयोक्तव्यस्तादृगर्थविचारणे" इति खलु नीतिविदः। यदिकर्मेन्द्रियाणि नाभ्युपगम्यन्ते, तर्हि चक्षुराद्यनुमानेष्वपि नगोळकाद्यतिरिक्तेन्द्रियसिद्धिस्सुवचा। यत्तुदूरस्थग्रहण तदभावाभ्यां वैलक्षण्यमूचे, तदप्ययस्कान्तनयात्समाधे-

---

இடங்களில இந்திரியங்களின எண்ணிக்கை குறைத்துக கூறப்பட்டாலும்—மற்ற விடங-களில சொன்னவையையும் அங்கு கூட்டிககொள்ளவேணும். ஒன்றில் மற்றொன்றுக்குலய

वादिகள் சொல்லுவார்கள். कर्मेन्द्रियங்களைக் கழிக்கப்பார்க்கில் तुल्ययोगक्षेमதையாலே ज्ञानेन्द्रियங்களையும் கழிக்கவேண்டும்படியாம் निपुणनिरूपणம் பண்ணினால் இரண்டு वर्गத்துக்கும் साधक-

यम्। यथाऽन्यत्रादृष्टमपि दूरस्थायः कर्षणस्वभावत्वं कान्ते कल्प्यते, एवमेव पाण्यादावदृष्टमपि दूरस्थदर्शनादिकं गोळकादौ कल्प्यत इति किन्नस्यात्? तत्रचाभिमुख्यादिकमेव वस्तूनां चक्षुरादिना सन्निकर्षः। नन्वाभिमुख्याभावेपि दर्पणादिषु निजमुखादेः पश्चाद्भागवर्तिनाञ्चकथं ग्रहणमिति चेत्? अतिरिक्तेन्द्रियवादिन स्तववाकथं ब्रूहि? चाक्षुषतेजसः प्रतिस्रोतोवृत्त्येति चेत्। तर्हि सा कुड्यादिषु कुतोनभवति? अपर्यनुयोज्यात्स्वभाव-विशेषादिति चेत्; हन्त! अस्तु तर्हि स एवस्वभावविशेषोऽधिष्ठानस्यैवोभयवादिसिद्धस्य। वरं धर्मिकल्पनातो धर्मकल्पनेतिन्यायात्। क्वचिदनिर्देशमात्रेण कर्मेन्द्रिया भावसाधनमपि साहसम् "एकादशेन्द्रियाणीति— एकादशं मनश्चात्रेति चान्यत्र तत्कीर्तनात्। नापीन्द्रियलक्षणाभावस्तेषामिन्द्रियत्ववारकः। कर्मेन्द्रियाणामपि प्रामाणिकत्वे तत्साधारणलक्षणस्यैवत्वयापि प्रणेतव्यत्वात्। नतु यथेच्छं अपूर्णतया कथञ्चित् प्रणीतलक्षणा-भावमात्रतः प्रामाणिकार्थपरित्यागः। तथासति अव्याप्त्याख्यदोषस्यैव दूरीभावापत्तेः। तदुक्तं—"सिद्धानुगममात्रं हि कर्तुं शक्यं परीक्षकैः। न सर्वलोकसिद्धस्यलक्षणेननिवर्तनमिति। लक्षणेन—अपूर्णतयाप्रणीतेन लक्षणात्वाभिमतधर्मेण। इति। ननु चक्षुरादौ गोळकादि साकल्येपि कदचित् कस्यचित् पदार्थदर्शनाद्य-भावात् तदतिरिक्तेन्द्रियस्यसूक्ष्मस्य वैकल्यमेव तत्र प्रयोजकं कल्प्यमिति चेत्तदाप्याह—**निपुणेति**। पाणिपादा-दिष्वपि क्वचिदेवमेवेति तत्राप्यतिरिक्तसूक्ष्मांशवैकल्यं कल्प्यमेव। अदृष्टादि सामग्रीवैकल्यमपि उभयत्र शक्य-शङ्कम्। अतोनानयोः कश्चिद्विशेषोऽन्यत्रत्वदभिमानादिति भावः। अथ कथमेकादशेन्द्रियाणीति निर्णयम्? श्रुतिष्वेवन्यून संख्याश्रवणादित्यत्राह—**शिलश्रुतिकळिलिति**। "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसासह— सप्तप्राणाः प्रभवन्ति तस्मादित्यादौ इत्यर्थः। ज्ञानानि—ज्ञानसाधनेन्द्रियाणि। प्राणाः इन्द्रियाणि। **श्रुति-स्मृतीति**।" एकादशेन्द्रियाणि। दशेमे पुरुषे प्राणाः आत्मैकादश इत्यादिश्रुतिः। कन्या—कनदीप्तौ इति धातोः दीप्यमानं मनः। आत्मेत्यपि मन एवोच्यतेऽत्र। आन्तरत्वात्। "इन्द्रियाणि दशैकञ्च-देवावैकारिकादश। एकादशं मनश्चात्रेत्यादिस्मृतयश्च। **अन्यपरेति**। इदमुपलक्षणमधिकसंख्यावादान्यपर्य-स्यापि। अधिकसंख्याच—" अष्टौग्रहा अष्टावतिग्रहाः—सप्तवैशीर्षण्यानि द्वाववाञ्चै—नववै प्ररुषे प्राणा नाभि-र्दशमी"त्यादौ श्रूयते। एव मेव द्वादशत्वत्रयोदशत्वचतुर्दशत्वकीर्तनमपि। उभयेषामन्यपरत्वञ्चसप्तगत्यधिकरण

மென்னும் மறைவைச்சொல்லும்போது சுருதியில், ஆகாயம் இந்திரியங்களில் லயமடைகின்றது இந்திரியங்கள் தந்மாத்ரைகளில்—என்று கூறுவது—பிரிக்கவொண்ணாத ஒட்டுதலைப்பற்றி சொல்லுகிறது என்றே தீர்மானிக்கவேணும். முன்னும் பின்னும் அவ்வாறே

बाधகங்கள ஸமங்களாயிறேயிருப்பது. சில ஶ்ருதிகளில் ந்யூநேந்த்ரியநிர்தேசங்கள் ஶ்ருதிஸ்ம்ருதிஸித்தேந்த்ரியாந்தரப்ரதிஷேதகங்களாகமாட்டாமையாலே அந்யபரங்கள் லயப்ரகரணத்தில் ஆகாசம் இந்த்ரியங்களிலேயாகவும, இந்த்ரியங்கள் தந்மாத்ரைகளிலேயாகவும் ஓதுகிற வாக்யம ஸம்ஸர்கவிசேஷபரம் என்று பூர்வாபராதி

---

एवं निर्व्यूढं—अधिकसंख्यावादा मनोवृत्तिभेदाभिप्रायाः । न्यूनव्यपदेशास्तु तत्र तत्र विवक्षित गमनादिकार्यविशेषप्रयुक्ता इति ।

अत एवास्यवाक्यस्य न्यूनाधिकसंख्यावादिसर्वप्रमाण निर्वाहमुखेन निगमनरूपत्वात् न पूर्वतनेन—मनष्षष्ठानीति वाक्यमुपलक्षण पर ''मिति वाक्येन पुनरुक्तिरिति बोध्यम् । नन्वेवं केवलाहङ्कारकार्यत्वमिन्द्रियाणां दुर्वचम् । तथाहि—सुबालोपनिषदि द्वितीयखण्डेलयप्रकरणे—"पृथिव्यप्सु प्रलीयते । आपस्तेजसिलीयन्ते इतिक्रमेण "—वायुराकाशेलीयते—आकाशमिन्द्रियेषु—इन्द्रियाणि तन्मात्रेषु—तन्मात्राणि [illegible] इति वाक्यानुपूर्वीश्रूयते । तत्रमध्ये—"आकाशमिन्द्रियेषु—इन्द्रियाणितन्मात्रेषु" इति वाक्यद्वयेपरं लीयत इत्यादिक्रियाश्रवणं न भवति । अथापि तत्र तदनुषङ्गः कार्यः पूर्वापरानुसारात् । अनुषक्तपदस्यार्थवैरूप्ये प्रमाणाभावात् मध्येपि तत्पदं लयार्थकमेवेति स्वीकार्यम् । लयश्चकार्यस्योपादाने प्रसिद्धो, नान्यत्र । एवञ्चाकामेनापि तन्मात्राणामिन्द्रियोपादानत्वमेष्टव्यमिति भौतिकान्येवेन्द्रियाणीति प्राप्तमित्यत्राह—लयप्रकरणेति । अत्र आकाशमिन्द्रियङ्गळिले आक.......ओदुकिरेतिरीत्यालयक्रियां विनाभाषायामनुवादः साक्षात् उपनिषच्छाययाकृतः । संसर्गविशेषेति । यद्यपि विभुन आकाशस्येन्द्रियेणसंयोगः पूर्वमेवास्ति । अथापि वायुपर्यन्तस्य भूतचतुष्टयस्याकाशतापत्तौ तादृशाकाशस्येन्द्रियेण विलक्षणस्संयोगविशेष इदानीमेवोत्पन्न इति विशेष शब्दविवक्षितम् । तथाच तत्र मध्येवाक्यद्वयेलयवाचकं पदं अनुषक्तं भवतु मावा अनुषक्तपदार्थवैरूप्यमावश्यकमेव वक्ष्यमाणप्रमाणानुसारात् । विलक्षणस्चार्थ उक्तपूर्वस्संसर्गविशेष एव । तदननुषङ्गेपि—"आकाशमिन्द्रीयेषु (वर्तत) इति क्रियाध्याहारो वाक्यपूरणायक्रियते । वर्तनमप्युक्तपूर्वस्संसर्गविशेष एवेति न सर्वथालयविवक्षा । येनेन्द्रियाणां भौतिकत्वसिद्धिरितिहृदयम् । एवमर्थवर्णने प्रमाणमुच्यते—पूर्वापरादिपर्यालोचनेदि । अयं भावः—"पृथिव्यप्सु प्रलीयत इत्यारभ्यैतद्वाक्यद्वयं यावत् लयपदं प्रयुञ्जानाभगवती श्रुतिरुपर्यपि तथा करिष्यन्ती मध्येवाक्यद्वये परं विरराम तत्पदप्रयोगात् । ततश्च श्रुति हृदयमत्रसावधानं शोधनीयम् । नहिसास्वहृदयेकिमप्यकुर्वाणाऽचतुरमेवं भाषेत । यदि मध्य

---

கூறப்பட்டுள்ளது என்று அறிந்தவர் கூறுவர். இங்ஙன் சொல்லாதுபோனால்—இந்திரியங்களுக்கு அஹங்காரமே மூலகாரணம்—இந்திரியங்கள் வெறும் காரியங்களே—எதற்கும்

பர்யாலோசனம் பண்ணின நிபுண ஸம்ப்ரதாயம இங்ஙனலலாதபோது ஸாத்விகாஹங்கார கார்யங்களாகவும கேவல-விகாரங்களாகவும் இந்த்ரியங்களை எண்ணுகிற ஶாஸ்த்ரங்களோடே விரோதமுண்டாம் ஸ்ரீகீதாபாஷ்யத்திலும க்ஷேத்ரோபாதானத்ரவ்யங்களைப பிரியக காட்டி இந்த்ரியங்களை க்ஷேத்ராஶ்ரிதத்ரவ்யங்களென்று அருளிச செய்தார

लयेनोपादानोपादेयभावो विवक्षितः, लीयतेपदानुषङ्गश्च, तदानूनमुपरि तत्पदं न प्रयोक्तयम् । लौकिक वैदिक सर्व वाक्यशैली विरोधादिति ।

अत्राकाशताया अपि विलयेन शब्दतन्मात्र परिशेषात्—"इन्द्रियाणि तन्मात्रे तन्मात्रंभूतादौ "इत्येकवचने प्रयोक्तव्ये" तन्मात्रेषु....तन्मात्राणीति" बहुवचन प्रयोगोऽविवक्षितबहुत्वकः शब्दतन्मात्रघटक पूर्वतन गन्ध तन्मात्राद्यवयवबहुत्वाभिप्रायोवा । अत्र श्रुतप्रकाशिकाचार्यैरन्यथापि व्याख्यातम् । तथाहि—"तन्मात्रेषु तन्मात्राणी"ति बहुवचनं यथा श्रुतार्थकमेव । नचैकतन्मात्र परिशेषात्तदनुपपत्तिः । अण्डस्यान्तर्बहिश्चवर्तिनां पृथिव्यादीनां तत्त्वानां पृथगेवलयस्य वक्तव्यत्वेन तत्तत्पृथिव्यादिक्रमेण लये उपक्रान्ते तदान्तर्बहिश्च नाना-शब्दतन्मात्रपरिशेषाद्बहुत्वस्यतदभिप्रायेण सामञ्जस्यादिति । अथवा —"तन्मात्राणिभूतादौ" इति श्रुतिर्नसाक्षाद्यौगपद्येन तन्मात्राणामप्ययपरा । तदाहि शब्दतन्मात्र परिशेषात्—"तन्मात्रं भूतादावित्येकवचनं प्रयोक्तव्यं भवेत् । नापीयं श्रुतिरत्यन्तक्रम निबन्धनपरा । आकाशमिन्द्रियेष्वितिभवतामप्यनभिमतलयक्रम विशेषापातप्रतीतेः । अतः "तन्मात्राणि भूतादावितिलयवचनं साक्षात्परम्परासाधारणतया यथायोगं सर्वेषा तन्मात्राणां भूतादौलयमाह । यथा—यमुनाया गङ्गया संयुज्य सागर गमनेपि गङ्गायमुने सागरं गच्छत इति व्यवहार" इति । एतत्समान प्रकरणे रत्नपेटिकायान्तु किञ्चित्परिष्कृत्यान्यथोपन्यस्यते—तथाहि—"तन्मात्रा-णिभूतादौलीयन्त" इत्यादौ भूताद्यधिकरणकनाशप्रतियोगित्वमेव सर्वतन्मात्राणां शब्दतोलभ्यते । तच्च—गन्धतन्मात्रादेर्भूताद्युपादानकत्वाभावेपि सर्वतन्मात्रेष्वक्षतमेव । भूतादित्वावस्थायास्सर्वतन्मात्रनाशरूपत्वात्, यतः-यथ द्वितीयजलत्वावस्था प्रथम गन्धतन्मात्रनाशरूपा तथा तदुत्तरतन्नाशरूप तृतीयरसतन्मात्रावस्थापि प्रथम-तन्नाशरूपैव एवं रूपतन्मात्रावस्थापि रसतन्मात्रावस्थानाशरूपेतिक्रमेणोत्तरोत्तरं भाव्यमिति । एवञ्च भूतादौसर्व तन्मात्रालयोक्तिर्युक्तेति तत्र तन्मात्राणीत्यादिबहुचनं सार्थकमेव । प्रतियोगिनोपिनाशनाशं प्रति प्रतियोगित्वात् । अन्यथा नाशनाशदशायां प्रतियोग्युन्मज्जन प्रसङ्गात् । अत एव हि नैयायिकैः स्वप्रागभावनाशात्मक घटस्य

காரணமலல என்ற சாஸ்திரங்களோடே விரோதம் வரும். ஸ்ரீ கீதாபாஷ்யத்திலும்—இந்த்ரியங்கள உடலை ஒட்டியவையே ஒழிய உடலுக்கு மூல காரணங்கள் அலல. அவை வேறு இருக்கின்றன என்றருளிச்செய்தார.

[ இந்த்ரியங்களின் ப்ரதிக்ஷேத்ர பின்னத்வம் ]

இவ்விந்த்ரியங்கள் பதினொன்றும் ப்ருதிவ்யாதி தத்வங்களை போலே ப்ரத்யேகம் அஸங்க்யாதங்களாய் க்ஷேத்ரஜ்ஞர்க்கு தனித்தனியே விபக்தங்களாயிருக்கும். 'तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥' என்றதுவும் इन्द्रियान्तरोपलक्षणம். महदादिभूतसूक्ष्मपर्यन्ततत्त्वங்

---

नाश ध्वंसप्रति स्वप्रागभावस्य प्रथमाभाव प्रतियोगिनोपि प्रतियोगित्वमुररीचक्रे। अत एव च न तदानीं घटप्रागभावस्योन्मज्जनं भवति। नन्वत्रभूतादौ तन्मात्राणां साक्षाल्लयः प्रतिपाद्यते। साक्षात्त्वबोधकपदाभावात्। तत्प्रतियोगिकसाक्षाल्लयत्वंहि—तन्नाशाप्रतियोगिकत्वेसति तन्नाशत्वम्। अतोनविरोध इति। निपुणानां-शिष्याचार्यादीनां सम्प्रदायः परम्परा। उक्तवाक्यद्वयस्य संसर्गविशेषबोधकत्वानङ्गीकारे बाधकं दर्शयति— इङ्गनह्लाद् पोदु इति। यदीन्द्रियाणां भूतादौ लयस्स्वीक्रियेत, तदा-देवावैकारिकास्स्मृता" इत्यादिविरोधः। केवल विकारेति—आकाशस्येन्द्रियेषुलयस्वीकारे बाधकम्। तथासतीन्द्रियाणां प्रकृति विकृतित्वा पत्त्या— "अष्टौ प्रकृतयष्षोडशविकाराश्शरीरेतस्य—इत्याधर्वणश्रुतेः," एताः प्रकृतयस्त्वष्टौ विकारानपिमेशृणु इति मोक्षधर्मस्य—" विकाराष्षोडशापरे इति यमस्मृत्यादीनाञ्चविरोधस्स्यात्। इन्द्रियेभ्यस्तत्त्वान्तरोत्पत्तिश्च नान्यत्र-कुत्रापि श्रूयत इति भावः। अत्रैवभाष्यकृतां सम्मतिमाह—श्रीगीताभाष्येति।" महाभूतान्यहङ्कारो-बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्चचेन्द्रियगोचराः। इच्छाद्वेषस्सुखं दुःखं सङ्घातश्चेतनाधृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृत"मिति त्रयोदशाध्याये पठ्यते। अत्र-बुद्धिः महान्। अव्यक्तं-प्रकृतिः। एतत्पर्यन्तंक्षेत्रोपादानद्रव्यकथनम्। इन्द्रियगोचराः विषयाः। एतदन्तं क्षेत्राश्रितद्रव्यगणनम्। इच्छादिकं क्षेत्र विकारः। चेतनस्य आधृतिः आधारः सङ्घातः—भूतसङ्घातः। एतदेव क्षेत्रं शरीरमिति तद् भाष्यम्। अत्रेन्द्रियाणां क्षेत्राश्रितत्वेन क्षेत्रोपादानभूतद्रव्येभ्यः पृथक् प्रदर्शनात् तेषां केवलं विकृतित्वमेव, नतु प्रकृति-विकृतित्वमिति भावः।

नन्विन्द्रियाणामेकादशत्वे प्रतिशरीरमिदानीं तेषामानन्त्यदर्शनं कथमुपपद्यत इत्यत्राह—इவ்விந்த்ரி-யங்களிதி। तथा च समष्टिदशायां तेषामुक्तसंख्यावत्त्वेपि व्यष्टिसृष्टौ तेषामानन्त्यमुपपद्यते। यथा पृथि व्यादि पञ्चभूतानामिति भावः। अत्रैव विषये मनुवचनं प्रमाणयन् तत्रेन्द्रियसंख्यान्यूनतामिधानं परिहरति—

---

இந்திரியங்கள் மொத்தம் பதினொன்றும் தனித்தனியே கணக்கற்றவையாய் பிராணிகள் தோறும் பஞ்சபூதங்கள்போலே பிரிந்திருக்கும். உடலில் ஆறு இந்திரியங்களை கடவுள் படைத்தான் என்றது மற்ற இந்திரியங்களுக்கு எடுத்துக்காட்டு. மஹான் என்னும்

களாலே आकल्पस्थायियாயிருப்பதொரு सूक्ष्मशरीरம பிறககுமென்று साख्யா சொனனதுவும '‘आहत्यैकोनविंशत्या सूक्ष्मदेह' प्रजायते’ என்று आनन्दानुभवன संग्रहित्ததுவும் अन्यपरवाक्यमूलமாகையாலே अविसंभणीयம.

---

तेषामिति । अमितौजसां–अमितशक्तीनां तेषां षण्णामिन्द्रियाणां सूक्ष्मान् अवयवान् आत्ममात्रासु— आत्मसम्बन्धि शरीरेषु सन्निवेश्य सर्वभूतानि-प्राणिनो निर्ममईश्वर इत्यर्थः । इदं व्यष्टि सृष्टिविषयमिति भावः । एतेन कल्पादौ सृष्टानामिन्द्रियाणां आप्रळयमनुवृत्तिरपि दर्शिता भवति । नन्विन्द्रियाणां प्रतिजीवं नियतत्वे तदाश्रय शरीरस्यापि तथात्वं वाच्यम् । न चोत्पत्तिविनाशयोगिनस्स्थूल शरीरस्य तथात्वं सुवच मित्यर्थात्सूक्ष्म देहस्यैव तथात्व भवष्यतीति साख्य समयमनूद्यनिरस्यति—महदादीति । तथाच साख्य-कारिका–“पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासित लिङ्गमिति । पूर्वोत्पन्नं सर्गादौ जातम् । नतुस्थूलदेहवन्मातापितृजम् । तथा च साख्यसूत्रे—“मातापितृजस्थूलं प्रायशः, इतरन्नतथेति । द्रौपदीधृष्टद्युम्नादीना केषाञ्चित् स्थूलदेहस्य मातापितृजत्वाभावात्प्रायश इति । इतरत्सूक्ष्मशरीरं न तथा मातापितृजम् इति तदर्थः । असक्तमित्यस्यैव विवरणं” संसरति निरुपभोगमिति । भोगोनुभवः, तद्रहितम् नियतं प्रतिपुरुषं कल्पादावुत्पद्याकल्पान्तं स्थायि । भावैरधिवासितं कर्मज्ञानवासनाभीरूषितम् । लिङ्ग-मिति सूक्ष्मशरीरस्य नामान्तरम् । महदादिसूक्ष्म पर्यन्तम्–महदादि सप्तदशसंख्याक तत्त्वसमष्टिरूपम् । एकाद-शेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश । अहङ्कारस्य बुद्धावेवान्तर्भाव इति भाष्यम् । बुद्धिरत्र-महान् । एवं सांख्यसम्मतं सूक्ष्मशरीरं निरूप्य ततईषद्भिन्नमद्वैति सम्मतं तत् प्रदर्शयति—आहत्येति । साक्षादित्यर्थः । साख्योक्तसप्तदशभिस्सहाहङ्कारं प्रकृतिञ्च परिगणय्यैकोन विंशति संख्या बोध्या । आनन्दानुभवः न्यायरत्नदीपावली इष्टसिद्धि व्याख्यादीनां निर्माता कश्चिदद्वैती । इदं वचनं न्यायरत्न दीपावलीस्थमिति वेदान्ति । अधिकरण सारावल्यां सूक्ष्मदेह इत्थमभिहितः—“कल्पादौभूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं प्रत्येकं प्राणिभेदे नियतमनियतस्थूल देहानुयायि । लिङ्गाख्यं भस्त्रिकान्तः परुवकवदवस्थायि सांख्यप्रणीतमिति । भस्त्रिका–चर्ममयी पेटिका । परुवकं कृत्रिमाप्रतिमेति बहनः । यादवेतु—“अस्त्री परुवकं सिन्दूरादिद्रव्यस्य भाजन” मिति कुङ्कुमादि करण्डमुच्यते । अयमभिसन्धिः—“प्राणमनूत्क्रामन्तं सर्वेप्राणा अनूत्क्रामन्तीत्यादिना जीवस्यो-

---

தததுவம் முதல அனைததினுடைய ஸூக்ஷ்ம பாகங்களாலே பிரளயம வரை நிலைத்திருககும் ஒரு ஸூக்ஷ்மசரீரம் பிறக்கிறது எனபதுவும் ஸாஙகியருடைய மேலெழுநதவாரியான கொள்கை. அம்மாதிரியே பத்தொனபது தததுவங்களாலே ஸூக்ஷ்மதேஹம்பிறககும் எனறு ஆனந்தாநுபவா எனற அத்வைதி சொனனதும் ஆதரிக்கத்தககதல்ல.

[ தந்மாத்ர நிருபணம் ]

வாஹ்யேந்த்ரியவிஷயங்களான ஶப்தாதிகுணவிஶேஷங்களுக்கு ஆஶ்ரயங்களான த்ரவ்யங்கள் பூதங்கள். இவை ஸூக்ஷ்மங்களென்றும், ஸ்தூலங்களென்றும் இரண்டு வகை. ஸூக்ஷ்மங்களை அவிஶேஷங்களென்றும் தந்மாத்ரங்களென்றும், ஸ்தூலங்களை விஶேஷங்களென்றும், பூதங்களென்றும் விசேஷித்துச் சொல்லும். இக்ஷுக்ஷீரஶர்கராதிகளுக்குப்போலே குணவைஷம்யத்தாலே இந்த ஸூக்ஷ்மஸ்தூலவிபாகம். தந்மாத்ரைகளில் குணங்

---

त्क्रमणं श्रुतं न स्वरूपमात्रेण, अपितु " शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानिसंयाति वायुर्गन्धानिवाशयादिति प्रतिपादित सूक्ष्मशरीरविशिष्टतयैवेतिस्वीकर्तव्ये सति, तस्य सूक्ष्मशरीरस्य स्थूलदेहादुत्क्रान्तिकाले उत्पत्तिस्वीकारे तदुपादानकारणस्य मृग्यतया सर्गादावेवतदुत्पत्तिं आप्रळयमनुवर्तमानत्वञ्च सांख्यास्संगिरन्ते इति । तस्यदूषणमन्यपरवाक्यमूलमिति । उक्तवाक्यैः जीवस्य गमनकाले भूतसूक्ष्माणां गमनप्रतिपत्तावपि तानिभूतसूक्ष्माणि स्थूलदेहारम्भकतया पूर्वं स्थितानीदानीं तेन सह पश्चात्तन देहारम्भाय गच्छन्तीति—एतावन्मात्रे तत्तात्पर्यं पर्यवस्यति । ततश्चोक्तरीतिक सूक्ष्मलिङ्गशरीर सद्भावे ननिर्बन्धं पश्याम इति सोयं पक्षो प्रामाणिकत्वादविश्वसनीयएवेतिभावः ।

एवमियता प्रघट्टकेनेन्द्रियनिरूपण विधायाथभूतानां लक्षणमाचिख्यासुः—" तामसाहङ्कारस्तन्मात्रोपादान " मित्यत्रपूर्वं शब्दतन्मात्रस्यैव तामसाहङ्कारकार्यत्वोक्त्या तस्य सर्वभूतसाधारण लक्षणत्वासम्भवाल्लक्षणान्तरं दर्शयति—**बाह्येन्द्रियेति** । अत्र-भूतेतिलक्ष्यनिर्देशः । लक्ष्यतावच्छेदकं भूतत्वञ्च महाभूततन्मात्रोभयसाधारण धर्मविशेषः । उत्तरत्र भूततन्मात्रारूपेण द्वेधाविभजनात् । अत एवभूततन्मात्रसाधारण्यायात्र—बाह्येन्द्रियविषयत्वं तत्स्वरूपयोग्यत्वरूपं बोध्यम् । " विशिष्टशब्दादिविषयाधिकरणं भूत "मिति न्यायसिद्धाञ्जनवाक्येषु—विशिष्टत्वं नेन्द्रियग्रहणस्वरूपयोग्यतापर्यन्तं न्विवक्षणीयम् । तत्र ततः पूर्वमेव तन्मात्रस्य पृथग्विभजनात् । अत्रोभयसाधारणलक्षणकथनानन्तरं—" अनुद्भूतशब्दादिमत्त्वं तन्मात्राणां, उद्भूतशब्दादिमत्त्वं भूतानामिति तत्तदसाधारणलक्षणं स्वयमूह्नीयम् । शब्दादीत्यादिना स्पर्शादीनां विवक्षा । अत्र-आकाशश्शब्दमात्रस्याश्रयः, वायुश्शब्दस्पर्शोभयाश्रय इत्यादिरीत्योत्तरोत्तरमेकैकगुणवृद्ध्यालक्षणं बोध्यम् । " शब्दैक-

---

காது முதலிய வெளிப்புற கருவிகளுக்குப் புலப்படும் சப்தம் முதலிய குணங்களுக்கு இருப்பிடமான திரவியங்கள் பஞ்சபூதங்களெனப்படும். இவை ஸூக்ஷ்மங்கள் ஸ்தூலங்கள் என்று இருவகை. முதலாமவற்றுக்கு—அவிசேஷங்கள், தன்மாத்திரைகள் என்றும் பெயருண்டு. இரண்டாமவற்றுக்கும்—விசேஷங்கள்—பூதங்கள் எனவும் பெயர் குறிப்பிடுவதுண்டு. கரும்பின் பொருள்களாகிய சக்கரைவெல்லம் இவற்றில் சொல்லுவதுபோல்—

களுக்கு मृदुपरुषादिविभागமற்று, अस्मदाद्युपलंभ योग्यतैயுமற்றிருக்கும். उपलंभयोग्यगुणविभागத்தாலே स्थूलங்களில் शान्तघोरमूढ विभागமுண்டாகிறது. शब्दादिगुणங்கள் தன்னையே तन्मात्रैகளென்பார்க்கு सत्वादिगुणங்களையே मूलप्रकृति என்பார்க்குப்போலே उपादानत्वादिप्रकरण विरोधம் வரும். अहङ्कारமும் तन्मात्रैகளைந்தும் महानுடைய विशेषங்களென்றும் சொல்லுகிற हैरण्यगर्भपक्षமும் श्रुति विरुद्धம். तन्मात्रैகள் भूतादियிலே लयिக்குமென்கிற वाक्यमात्रத்தைக்கொண்டு तन्मात्रैகள் ஐந்தும்

---

गुणआकाशः शब्दस्पर्शगुणोऽनिलः । शब्दस्पर्शौ तथारूपं तद्वानग्निरुदाहृतः ॥ शब्दस्पर्शौ रूपरसौ चातुर्गुण्यमपा स्मृतम् । शब्दस्पर्शरसारूपं गन्धः पञ्चगुणामही ॥ इति भगवच्छास्त्रोक्तेः । इदञ्च भूतानां स्वरूपस्वभावादिकथनमात्रम् । सामान्यलक्षणन्तु - बाह्येन्द्रियग्रहणयोग्यशब्दवत्त्वमात्रमेव । तावत एव पर्याप्तत्वेन शेषवैयर्थ्यात् । अत्र गुणविशेषेति—विशेषपदेनोक्तरीत्या—शब्दमात्रवत्त्वमाकाशलक्षणं, शब्दस्पर्शोभयवत्त्व वायोरित्यादिप्रक्रिययैकैकभूतलक्षणमपिसूचितं भवति । यद्यपि पञ्चीकरणादिना सर्वेगुणास्सर्वत्र संगता इत्यतिव्याप्तिरुक्तलक्षणाना शक्यशङ्का । तथापि पञ्चीकरणोपदेशप्रकरण एव—"यदग्नेरोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपामित्यादिना तत्तद्गुणानां व्यवस्थिततत्तद्भागगततावगमात् तदनुसृत्य स्वाधारद्रव्यमपरित्यज्य तत्तद्भूतभागमिश्रणद्वारा सर्वस्यगुणस्य सर्वत्र संकरोवाच्य इति नातिव्याप्तिः । अपञ्चीकृतभूतलक्षण वेदं बोध्यम् । केचित्तु—गुणानामेव साक्षात्सर्वत्र सङ्गतत्व स्वीकारेपि "वैशेष्यात्तु तद्वादस्तद्वाद" इति सूत्रोक्तन्यायेन भूयोगन्धगुणादिमत्वं तत्तल्लक्षणं ग्राह्यमिति नातिव्याप्तिरित्यप्याहुः । गुणाश्रयत्वमपृथक्सिद्धिसम्बन्धेनविवक्ष्यते । तेन न कालिकादिसम्बन्धमादाय कालादिष्वतिव्याप्तिः । भूतत्वरूपसामान्यधर्मावच्छिन्नस्यावान्तर विशेषधर्मानाह—द्वे इति । तयोरेवनामान्तराणिदर्शयति—सूक्ष्मस्थूले इति । अविशेषेति । "नशान्तानापिघोरास्ते नमूढाश्चाविशेषिण इति सुखदुःखमोहरूपा ये सत्वरजस्तमः कृत तत्तद्गुणोद्भूतत्वरूपाविशेषास्तद्रहिता

---

சிறிய குணமாறுபாடுகொண்டு இந்த ஸூக்ஷ்மஸ்தூல பிரிவுகள் ஏற்படுகின்றன. தன்மாத்திரைகளில் குணங்களுக்கு ஏற்றத்தாழ்வுகளும், நமக்குப் புலனாகும் தன்மையுமில்லை. புலனாகும் ஸ்தூல குணங்களிலும் ஸத்துவம் முதலிய மூன்றின் கலப்பால் முறையே இனிமையும், துன்பமும், மயக்கமும் தரும் நிலைகள் பிரியத்தோன்றுகின்றன. சப்தம் முதலிய குணங்களே—சப்த தன்மாத்திரை முதலியன ஆகின்றன. குணங்களை உடையவை அல்ல என்று சொல்லும்போது—தன்மாத்திரைகளை மேல் வரும் நிலைகளுக்கு மூல காரணமெனச் சொல்லும் வசனங்கள் முரண்படும். இது, ஸத்துவம் முதலிய குணங்களே மூல பிரகிருதி என்ற வாதம்போலுள்ளது. இது சரியல்ல அஹங்காரமும் தன்மாத்திரைகளும்—மஹான் என்னும் தத்துவத்தின் விளைவுகள் என்று சொல்லும் ஒரு கொள்கையும் உண்டு. அதுவும் வேதவிருத்தமாகும். தன்மாத்திரைகள் பூதாதி என்னும் தாமஸ அஹங்காரத்தில் லயமடையும்

தாமஸாஹங்காரத்திலே பிறக்குமென்றும், இவைகளைந்து தன்மாத்ரைகளில் நின்றும் அடைவே ஆகாசாதி பூதங்களைந்தும் பூர்வாபரபாவேன பிறக்குமென்றும் சிலர் நிர்வஹிப்பர். இது ப்ரக்ருதிகள் எட்டு கேவல விக்ருதிகள் பதினாறு என்று எண்ணுகிற ஆதர்வண ச்ருதிக்குச் சேரும். ஆகாசத்தில் நின்றும் வாயு பிறக்குமென்றுப்போலுள்ள மற்றும் பல ச்ருதிகளினுடைய ஸ்வாரஸ்யத்துக்கு அநுகுணமன்று. தாம-

---

इत्यर्थः । तन्मात्रङ्गळिति । "तस्मिन् तस्मिन् तु तन्मात्रं तेन तन्मात्रता स्मृतेति तत्तद्भूतमात्रवृत्तीनीत्यर्थः । तन्मात्रं—तन्मात्रेति द्वेधापि व्यव हारोवर्तते । यदि भूतसूक्ष्माश्च एव तन्मात्रम्, तदा महाभूतेभ्यः पश्चादपि अनन्तसूक्ष्मपदार्था उपलभ्यन्ते, तेपि तन्मात्राणिस्युः तथापि तेषा पृथक् समष्टिसृष्ट्यादिश्रवणात् तन्नामकं तत्त्वान्तरं दुग्धदध्नोर्मध्यावस्थकलिलन्यायत अहङ्कारमहाभूतयोर्मध्ये स्वीकार्यं भवति ।

तदुक्तं सर्वार्थसिद्धौ—"आगमेनविनासिद्धिस्तन्मात्राणाञ्चदुर्वचा । उद्भवानुद्भवाचैस्तु लोके सूक्ष्मादि कल्पने"ति । तत्त्वमुक्ताकलापेपि—"सूक्ष्मस्थूलस्वभाव स्वगुणसमुदयप्रक्रियातारतम्यात्तन्मात्राभूतभेदः कलिल-दधिनयात् कल्पितस्तत्त्वविद्धि"रिति । दुग्धदध्नोर्मध्ये निवृत्तभूयिष्ठमाधुर्यस्येषदम्लस्य कलिलस्यातञ्चनादि साध्यस्य भूयिष्ठाम्लरसदधिभावेन शनैः पश्चात् परिणामसौकर्याय यथा स्वीकारः, तथैवाहङ्कारे स्थूलशब्द गुणकाकाशभावात्पूर्वं सूक्ष्मशब्दगुणक शब्दतन्मात्रस्याप्यभ्युपगमः । एवमुत्तरोत्तरभूतपरिणामायापि तन्मात्रा-न्तराणामाश्रयणमिति । विशेषेति—अविशेषेत्यस्य, भूतेति-तन्मात्रेत्यस्य च प्रतिकोटिः । भूतत्वमत्र महाभूत-त्वम् । भूतत्वमात्रस्योभयसाधारण्यात् । चोल्लुमिति । शास्त्रमिति शेषः । ननु महाभूततन्मात्रयोः कोगुणभेद इत्यत्राह—इक्षुक्षीरेति । इति दण्डिवचनमिह भाव्यम् । तथा च यथेक्षुक्षीरादीनाम्माधुर्यतौल्येपि तदवा न्तरजातिभेदात् इक्ष्वादिभेदः, तथैवेहापि शब्दादि गुण साम्येपि तदुद्भवानुद्भवभेदेन तन्मात्राभूतभेद इति भावः । नन्वसदुपलब्ध्ययोग्यत्वरूपमनुद्भूतत्वं कथं तन्मात्रगतगुणेषु जातमित्यत्राह—तन्मात्रैकळिलिति । मृदुत्वं सावधानेन्द्रियग्राह्यत्वम् । परुषत्वं उत्कटत्वेपि इन्द्रियैर्ग्रहणवेळायां दुस्सहत्वम् । आदिना नयनासेच नकत्वरूपमनुकूलत्वं ग्राह्यम् । एतादृशमृदुत्वाद्यभावोऽस्मदुपलब्ध्योग्यत्वे हेतुः । इन्द्रियस्य मृदुत्वादि विषमदशापन्न शब्दादि ग्रहणएव समर्थत्वादिति भावः । अथ स्थूलेषु मृदुपरुषादि वैषम्य एव किम्प्रयोजक

---

என்ற ஒரு வசனத்தை மட்டும் பற்றிக்கொண்டு—ஐந்து தந்மாத்திரைகளும் தாமஸ அஹங்காரத்திலிருந்து பிறக்கும்—இவற்றிலிருந்து அடைவே முன்னும் பின்னுமாக ஆகாயம் முதலிய ஐந்து பூதங்களும் பிறக்கும் என்று சிலர் விளக்குவர். இது—ஆதர்வணத்தில் "ஒன்றுக்குக் காரணமாக இருக்கும் நிலைபெற்ற பிரகருதிகள் எட்டு. அவ்வாறன நிலையின்றி காரியமாகவே இருக்கக்கூடிய விகிருதிகள் பதினாறு" என்று கூறியதற்குச் சேரும்.

साहङ्कारத்தினுடைய உत्तरोत्तरतन्मात्रजननத்தில் पूर्वपूर्वभूतसहकारिक्रमादिकल्पनै क्लिष्टगति. வேறே சிலர் पूर्वं पूर्वं भूतங்கள் उत्तरोत्तर भूतங்களுக்கு உपादानமென்று சொல்லுகிற பல श्रुति स्मृतिகளைபபாரத்து

---

मित्यत्राह—**उपलम्भयोग्येति**। "न शान्ता नापिघोरास्ते न मूढाश्चाविशेषिण" इति विष्णुपुराणे तन्मात्राणां शान्तत्वादिकं निषिध्यते। भूतेषु तानिप्रसिद्धानि। तत्र च कारणं उपलम्भयोग्यगुणानामेव सत्वादि कृतं वैषम्यम्। सत्वोद्रेकात् सुख रूपत्वं शान्तत्वम्। घोरत्वं रज उद्रेकात् दुःख रूपत्वम्। मूढत्वं तमस्समुद्भवान्मोहात्मकत्वम्। एतान्येव यथाक्रमं पूर्ववाक्ये अनुकूलत्व परुषत्वमृदुत्व शब्दै र्व्यवहृतानि। ननु शब्द तन्मात्रादीनि केवलं शब्दादि गुणरूपाण्येवेति न तेभ्यस्तत्त्वान्तरं भविष्यन्ती त्यत्राह—**शब्दादीति**। "शब्दमात्रं तदाकाशं-आकाशस्तु विकुर्वाणस्स्पर्शमात्रं ससर्जहे" त्यादौ शब्दमात्रादि शब्दैरेव-तन्मात्राणां निर्देशादिति पूर्वपक्षिणां भावः।

अथ सिद्धान्तिनो दृष्टान्तप्रदर्शनं—**सत्वादि गुणेति**। ननु—"सत्वादय एव प्रकृति"रिति सांख्यमते सत्वादिकं द्रव्यरूपमेव। नतु गुणः। तेगुणा इति सिद्धान्तिपक्षेच तद्वत्येव प्रकृतिः नतु त एवेति, कस्यपक्षेणायं दृष्टान्त इति चेन्न। स्वयं कल्पितं दृष्टान्तमादाय कृत्वाचिन्तया प्रत्यवस्थानोपपत्तेः। सत्वादीना समुदाय इव प्रकृतिरिति पक्षमादायसत्वादीनां गुणत्वस्यैव प्रामाणिकतया, तत्पक्षशिक्षणेनवा दृष्टान्तप्रदर्शनमिति। तदा गुणेतिस्वाभिमतकथनम्। उपादानत्वादिप्रकारविरोधेत्यत्र—प्रकरणविरोधेत्येव युक्तः पाठः। "पृथिव्यप्सु प्रलीयत इत्यारम्भ तन्मात्राणिभूतादौ लीयन्त इति कथनात् तन्मात्राणामाहङ्कारिकत्वप्रतीत्याऽद्रव्यस्य तत्त्वा-योगादितिभावः। अथ तन्मात्राणामहङ्कारवत् साक्षान्महत्तत्त्वकार्यत्वपक्षमपि प्रतिक्षिपति—**अहङ्कारमुभिति**। तदुक्तं योगसूत्रमणिप्रभाव्याख्यायां—विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणीत्यत्रसूत्रे—अहङ्कारात्पञ्चतन्मा-त्राणीतिसांख्याः। अहङ्कारस्यानुजा बुद्धेरपत्यानि तन्मात्राणीति योगा इति। **श्रुतिविरुद्धेति**। "तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महतिलीयत इति महतो भूतादिनामकतामसाहङ्कारस्य ततः तन्मात्राणाञ्च क्रमेणोत्पत्तिः व्युत्क्रमेण लयश्चप्रतिपाद्येते इति न तन्मात्राहङ्कारयोर्महतस्साक्षादुत्पत्तिपक्षोयुक्त इति हृदयम्।

अथातः परं तन्मात्रोत्पत्तिक्रमे भूतोत्पत्तिक्रमेच साधुत्वासाधुत्वनिरूपणपूर्वकं बहून् मतभेदान् प्रदर्शयिष्यन् प्रथमं तद्विषये सांख्यपक्षंविमृशति—**तन्मात्रौकळितिवाक्यत्रयेण**। पञ्चापितन्मात्राणि तामसाहङ्कारादुत्पद्यन्ते। तेभ्यश्चपञ्चभ्योयथासंख्यं पञ्चापिभूतानि क्रमेण जायन्त इति सांख्यानां प्रवादः। "तन्मात्राणिभूतादौलीयन्त इत्यत्र तन्मात्राणीति बहुवचनेन सर्वेषा तेषा तामसाहङ्कारे लयप्रतीतेः, "यद्यस्मादभिजायेत तत्तत्रैव प्रलीयत इति न्यायेन तेषां सर्वेषां तामसाहङ्कारादेवोत्पत्तिर्युक्तेति तदभिमानः।

वाक्यमात्रेति मात्रशब्देन—"आकाशाद्वायुः वायोरग्निरिति भूताद्भूतान्तरोत्पत्ति बोधकश्रुत्यन्तरापरामर्शो वक्ष्यमाण एषांबोत्यते । एतदुभयश्रुतिपरामर्शेहि — तामसाहङ्कारात् शब्दतन्मात्र, तस्मादाकाशः, तस्मात्स्पर्शतन्मात्रं—ततोवायुरिति एवं विधः क्रमः कल्प्येत । ततश्च तामसाहङ्कारस्य सर्वतन्मात्रोपादानत्वं "तन्मात्राणि भूतादावि"ति श्रुतिप्रतिपन्नं, भूतस्य भूतान्तरोपादानत्वं—"आकाशाद्वायुरित्यादि वाक्य प्रतिपन्नञ्च साक्षात्परम्परासाधारणमिति निर्व्यूढं स्यात् । तथाचोभय श्रुत्यविरोधोपि भवेत् । तथाचोक्तं—"क्षीरादिदं तत इदञ्चततोदधीति, क्षीराद्धीति वदतां किलकोविशेषः इति । अत्र क्षीरदध्नोमध्ये कलिलवद्न्याप्यवस्थाकाचित्स्यादित्यभिप्रायेण इदं इदमिति द्विः प्रयोगः । प्रकृतेतु भूतद्वयमध्ये तन्मात्रमेकमेवेति विशेषः । विस्तरेणैतदनुपदं भविष्यति । अत्रैवोपरिवाक्ये—"पञ्चतन्मात्रेभ्य आकाशादि पञ्चकं क्रमेण जायत इति वदत्रक्रम कथनं नास्तीति तामसाहङ्काराद्युगपदेव तन्मात्राणामुत्पत्ति रवगन्तव्या सांख्यमते । सांख्यसूत्रभाष्येतु—"स्थूलात्पञ्चतन्मात्रस्य (अनुमानम्) इत्यत्र" तन्मात्राणा मुत्पत्तौ योगभाष्योक्तप्रक्रियैवग्राह्या । यथा—अहङ्काराच्छब्द तन्मात्रं, ततश्चाहङ्कार सहकृतात् शब्दतन्मात्रात् शब्दस्पर्शगुणकं स्पर्शतन्मात्रं, इत्येवं क्रमेणैकैकगुणवृद्धया तन्मात्राण्युत्पद्यन्त" इति प्रत्यपादि । तदानीञ्चास्मिन् पक्षेऽहङ्कारस्य तन्मात्रोपादानत्वं, सिद्धान्ते तन्मात्राणां भूतोपादानत्वमिव साक्षात्परम्परासाधारणं सिद्धयेत् । अथ तन्मात्रेभ्योभूतोत्पत्ति क्रममाह—इव्वैन्दु इति । अडैवे क्रमेण । यथासंख्यमिति यावत् । न त्वेकस्यानन्तरमपरमित्यादिक्रमेणेत्यर्थः । पूर्वापरभावेनेत्युत्तरपद वैयर्थ्यात् । शब्दादि तन्मात्रेभ्यः पञ्चभ्यः आकाशादिभूत पञ्चकं यथासंख्यं उत्पद्यत इत्युक्ते किं युगपत्? इति शङ्काया ने त्याह—पूर्वापरभावेनेति । शब्दतन्मात्रादाकाशं, ततः पश्चात्स्पर्शतन्मात्राद्वायुरित्यादिरीत्येत्यर्थः । अत्र साख्यमते स्पर्शादि तन्मात्राणां पूर्वपूर्व तन्मात्रसहकृतानामेवोत्तरोत्तरभूतारम्भकत्वं द्रष्टव्यम् । अन्यथोत्तरोत्तरभूतेषु गुणवृद्धयनुपपत्तेः । अत्र च—"आकाशाद्वायुरित्यादि श्रौतक्रमो नियामकः । आकाशात् तत्कार्यस्पर्शतन्मात्रात् वायुः तन्नामकं भूतमुत्पन्नम् । वायोः तत्कार्यभूतरूपतन्मात्रात् अग्निः तेज इत्येवं क्रमेण तदर्थोभाव्यस्तन्मते । तदुक्तं सुबालोपनिषद्भाष्ये पूर्वपक्षप्रकरणे—"आकाशाद्वायुरित्यादिवाक्येषु पञ्चम्यन्ता आकाशादिशब्दास्तन्मात्रावस्थाकाशादिभूतपरा इति । अस्य च सांख्यपक्षस्य श्रुत्यन्तरानुगुण्यमप्याह—इदु प्रकृतिकळिति । "अष्टौ प्रकृतयष्षोडशविकाराश्शरीरे तस्य देहिन" इतिवाक्यमत्राभिप्रेतम् । एतदनुगुणा सांख्यकारिकापि—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्चविकारो न प्रकृतिर्नविकृतिः पुरुष" इति । महदादीनां प्रकृतिविकृतीनां सप्तानामपि प्रकृतित्वांशे मूलप्रकृतितुल्यतयैकराश्येनेहाष्टौ प्रकृतय इत्युक्तमिति बोध्यम् । एकादशेन्द्रियाणि पञ्चभूतानीति षोडशविकाराः ।

वेदान्तिपक्षे तु पृथिवीभिन्नभूतचतुष्टयस्योत्तरोत्तरभूतारम्भकतया प्रकृतित्वात् केवलविकारत्वं पृथिवीमात्रस्यैकादशेन्द्रियाणाञ्चेति—द्वादशविकृतयोद्वादशप्रकृतयश्चेत्येव वक्तव्यं भवेदिति—"अष्टौ प्रकृतय इत्यादिकं सांख्यस्यैवानुगुणामित्यभिमानः। तद्वस्तूक्तश्रुतिद्वयानुगुणत्वात् सांख्यपक्ष एवसिद्धान्त इत्यत्रपूर्वं—"वाक्यमात्रे"-तिमात्रशब्दव्यञ्जितमपि — "आकाशाद्वायुरि"त्यादिश्रुत्यन्तरविरोधं स्पष्टं प्रदर्शयति—आकाशेति। पलश्रुतिकळ्—"भूतादेराकाशं आकाशाद्वादुः—तत्तेज ऐक्षत तदपोसृजत ता ऐक्षन्त ता अन्नमसृजन्ते"-त्यादयश्श्रुतयो ग्राह्याः। आसु भूतस्यभूतान्तरोत्पत्तिकारणत्वप्रतीतेः। स्वारस्येति। अत्रेदं बोध्यं—उक्तरीत्या—"आकाशाद्वायुरित्यादौ आकाशशब्दस्तत्कार्यस्पर्शतन्मात्रपरः, वायुशब्दोभूतपर इत्यर्थवर्णने पञ्चमीप्रथमान्तवायुप्रभृतिशब्दानां सहप्रयुक्तानामर्थवैरूप्यं स्यात्। न च सिद्धान्तेपि—आकाशात्स्पर्शतन्मात्रं ततो वायुरित्येवोत्पत्तिक्रमादरणात् "आकाशाद्वायुरिति श्रुतनैरन्तर्यविरोधोदुष्परिहर एवेति वाच्यम्। तत्राकाशवाय्वादि शब्दानां स्थूलसूक्ष्मभूततन्मात्रभेदानादरेणाकाशत्वादिसामान्यधर्मावच्छिन्नवाचितास्वीकारात्। आकाशात् पूर्वमेवक्रमेणोत्पन्नाभ्यां सूक्ष्मस्थूलरूपशब्दतन्मात्राकाशाभ्यां वायुरुत्पद्यते। प्रथमं स्पर्शतन्मात्रं पश्चाद्वायुरुत्पद्यत इति यावत्। तथाचैवं सति नोक्तस्वारस्य भङ्गः। न च सांख्यपक्षेप्येतादृशार्थवर्णनं युज्यते। भूतस्य तन्मात्राद्वारापि भूतान्तरोपादानत्वस्य तेनानङ्गीकारात्। ननु सिद्धान्ते "अष्टौ प्रकृतय इत्यादीनां कथन्निर्वाह इति चेत्—शृणु। न ह्यत्रसामान्यत स्सर्वेषां तत्त्वानां प्रकृति विकृति विभागो विवक्ष्यते। किन्तु शरीरसम्बन्धिनां तत्त्वानां शरीरोपकारकत्वे प्रकृति विकृति त्वादिकृतविशेष एव।" शरीरे तस्य-देहिन इति विभागस्य शरीरवर्तितत्त्वविषयकत्व प्रतीतेः। तत्र—अव्यक्त महदहङ्काराणां पञ्चभूतानाञ्चाह-त्याष्टानां शरीरारम्भकतयातत्प्रकृतित्वम् एकादशेन्द्रियाणां शब्दादिविषयपञ्चकस्य च सम्भूय षोडशाना शरीराश्रितत्वेन तद्विकारत्वञ्चाभिप्रेयते। तन्मात्राणा भूता-पृथग्भावेन पृथक् परिगणन न कृतम्। उपबृंहि-ताचेयं श्रुति र्मोक्षधर्मे जनकयाज्ञवल्कय संवादे—"अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश। अव्यक्तञ्च महांश्चैव तथाहङ्कार एव च। पृथिवीवायुराकाशो आपोज्योतिश्चपञ्चमम्। एताः प्रकृतयस्त्वष्टौ विकारानपि मेश्शृणु। श्रोत्रं त्वक् चैव च क्षुश्च जिह्वा घ्राणञ्च पञ्चमम्। वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च। शब्दस्पर्शौ च रूपञ्च रसोगन्धस्तथैव च। एते विशेषा राजेन्द्र! महाभूतेषु पञ्चसु। इत्यादि। इति।

ननु यदि सांख्यवत् तामसाहङ्कारात्तान्मात्राणां युगपदुत्पादः, तेभ्यश्च क्रमेण पूर्वपूर्वभूतनिरपेक्ष मुत्तरोत्तरभूतारम्भ इत्याश्रीयेत, तदा खलु भवेत्—"आकाशाद्वायु"रित्यादि श्रुतिस्वारस्यविरोधः। वयन्त्वन्यथाक्रमं तदनुरोधिनं कल्पयिष्यामः। तामसाहङ्कारात् उत्तरोत्तरकार्यारम्भे पूर्वपूर्वभूतानां सहकारि

तन्मात्र रूपங்களான सूक्ष्म भूतங்களில் நின்றும் उत्तरोत्तर तन्मात्रங்களும் आकाशादिகளான ஒவ்வொரு भूतங்களும் பிறக்கும். गन्धतन्मात्रம் வேறொரு तन्मात्रத்திற்குக் कारणமன்றிக்கே पृथिवियாகிற

---

तथाऽपेक्षाऽस्तीति । तथासत्याकाशादित्यादौ प्रकृति पदं यथाप्रसिद्धि, तत्तदर्थकमेव । प्रत्ययपदन्तु कारणता-मात्रवाचि नतूपादनतावाचीति वदताम्मतमप्यपाकरोति—**तामसाहङ्कारत्तिनुडैयवित्ति** । अत्र षष्ठी पञ्च-म्यर्थेभवति । **उत्तरोत्तरतन्मात्र जननत्तिलिति** । साङ्ख्य पक्ष इव—तामसाहङ्कारादेकदा पञ्चतन्मात्रोत्पत्तिः, पश्चात्तेभ्यः क्रमेणभूतपञ्चकोत्पत्तिरिति वर्गद्वयमकल्पयित्वा, तामसाहङ्कारात्पूर्वं शब्दतन्मात्रमाकाशंच जायते, तदनन्तरं तस्मादेव तामसाहङ्कारात् स्पर्शतन्मात्रं वायुश्च भवतीति यः परस्परमिश्रणेनैक एव क्रमः कल्प्यते, तद्विषय इत्यर्थः । **पूर्वपूर्वभूतसहकारिनेति** । अत्रैतदुक्तं भवति-तामसोऽहङ्कारः प्रथमं शब्द तन्मात्रं सृजति । तच्चाकाशम् । तदाकाशं सहकारीकृत्य पुनश्च तामसस्स्पर्शतन्मात्रमुत्पादयति । तस्माच्चवायुर्भवति । तदिदमुच्यते—आकाशाद्वायुरिति । आकाशात् सहकारिकारणादित्यर्थः । वायोस्तत्कार्यत्वञ्च सिद्धान्त इव स्पर्श तन्मात्रद्वारकं बोध्यम् । एवं पुनर्वायुसहकृतस्तामसाहङ्कारः रूपतन्मात्र जनयति । रूपतन्मात्रात् तेजः । तदेवोच्यते—वायोरग्निरित्यादिरीत्योपर्यपि भाव्यमिति । **क्लिष्टगतीति** । "आकाशादित्यादौ पञ्चम्याः प्रकरणानुसारेणोपादानार्थकत्वस्यैव न्याय्यत्वेन सहकारितापरत्वं क्लिष्टम् । यदि—आकाशात्—आकाशसहकृतात्स्पर्शतन्मात्रादित्यर्थ स्वीकारेण पञ्चम्या उपादानार्थकत्वमक्लिष्टमित्युच्यते, तदाऽऽकाशादिप्रकृति पदस्य तादृशार्थकत्वमपि क्लिष्टमिति भावः । एवमेतावता तामसाहङ्कारात् उत्तरोत्तरं तन्मात्राजनने पूर्वपूर्व-भूतसहकारिता दर्शिता । "....सहकारिक्रमादि कल्पने"त्यादिपदेनतु ईषद्भिन्नमन्यत्प्रकारद्वयमपि सङ्गृहीतम् । तत्र प्रथमंतत्त्वनिरूपणे वादिकेसर्युक्तं—"अस्माच्छब्दतन्मात्रात् अस्य स्थूलावस्थं व्यक्तशब्दगुणकमाकाशमुत्पन्नम् । एतदुभयमपि भूतादिस्तामसाहङ्कार आवृणोति । इत्थमेव तामसाहङ्कारावृतस्थूलाकाशसहकृतात् विकृत शब्दतन्मात्रात् स्पर्शतन्मात्रमुत्पन्नम् । तस्माद्वायुरुत्पन्नः एतदुभयमपि शब्दतन्मात्रमावृणोति । एवं शब्दतन्मात्रावृतवायुसहकृतात् विकृतात्स्पर्शतन्मात्रात् रूपतन्मात्रं जातम् । ततस्तेजश्चेत्यादिरीत्या तन्मात्रात्तन्मात्रान्तरोत्पत्तौ पूर्वपूर्वभूतसहकारितेति । तत्रद्वितीयं वरवरमुन्युक्तं तत्त्वत्रय व्याख्याया—भूतादेश्शब्दतन्मात्रा जायते । तां च स आवृणोति । तत आकाश उत्पद्यते । अथ शब्दतन्मात्राया स्पर्शतन्मात्रा

---

ஆனால்—ஆகாயத்திலிருந்து வாயு பிறக்கும் என்றாற்போல சொல்லும் பல வசனங்களுக்கு ஒவ்வாது இங்கு—தாமஸாஹங்காரத்திலிருந்து மேன்மேலே தந்மாத்திரைகள் பிறக்கும் போது—முன்முன் பூதங்களைத் துணையாகக்கொள்ளுதல்போன்ற கொள்கைகள் மிகச்சிக்க

பூதமொன்றையும் உத்பாதிக்கு மென்பாகள். இப்பக்ஷத்தில் ஆகாசத்தில் நின்றும் வாயு பிறக்கு மென்றாற்போலே சொல்லுகிற விடங்களில உபாதான விஷயங்களான ஆகாசாதிசப்தங்கள் தன்மாத்ர விசேஷ பரங்களாம். உபாதேயவிஷயங்களான அவை தானே உத்தரோத்தரதன்மாத்ரைகளையும் ஆகாசாதிகளான

जायते । एनां च सा आवृणोति । इत्थं शब्दतन्मात्रावृताया आकाशसहकृतायास्स्पर्शतन्मात्रायाः वायुर्जायते । एतस्यास्स्पर्शतन्मात्राया रूपतन्मात्रमुदीयते । पूर्वा पश्चिमामावृणोति च । एव स्पर्शतन्मावृताया वायु सहकृताया रूपतन्मात्राया स्तेज उदयते इत्यादिरीत्या तन्मत्रायाभूतोत्पत्तौ पूर्वपूर्वभूत सहकारिताक्रम इति । अनयोरपि पक्षयोर्भूतानां सहकारितैवाश्रितेति उपादान पञ्चमीक्लेश एवेति वोध्यम् । अथा "काशाद्वायु" रि त्यादौ पञ्चम्या पूर्वपूर्वभूतानामुत्तरोत्तरभूतोपादानत्वस्यैव स्वरसतः प्रतीतेस्तदेव स्वीकृत्य भूत सहकारित्व वादं परित्यजतां परेषा केषाञ्चित्पक्षं अनूद्यविमृशति—वेरेशिलरिति । "आकाशाद्वायुरित्याद्याश्श्रुतयः ।" आकाशस्तु विकुर्वाणस्स्पर्शमात्रं ससर्जहाबलवानभवद्वायुस्तस्य स्पर्शोगुणोमतः ॥ ततोवायुर्विकुर्वाणोरूपमात्रं ससर्जह । ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यत इति विष्णुपुराणादिस्स्मृतिः । **तन्मात्ररूपङ्गलिति** । अयं भावः—भूतादेस्तामसाहङ्कारात शब्दतन्मात्रमुत्पद्यते । तस्मात् स्पर्शतन्मात्रमाकाशश्च । स्पर्शतन्मात्राद्रूपतन्मात्रं वायुश्चेति रीत्या पञ्चतन्मात्रेभ्योभूतानां पञ्चानामुत्पत्तिः । तथा चा "काशाद्वायु"रित्यादौ पञ्चम्या उपादानपरत्वमेव । भूतानामुपादानत्वमित्यस्य तन्मात्राख्यभूतोपादानत्व एव तात्पर्यम् । शब्दतन्मात्राख्यादाकाशादुपादानात् स्पर्शतन्मात्राद्वारा वाय्वाख्यभूतोत्पत्तिरिति न पूर्वमिवेह क्लेशलेशोपीति । अत्र मूले सृज्यानां निर्देशो—"उत्तरोत्तरतन्मात्रं एकं भूतञ्चे'ति कथनात् एवं विधः क्रमो दर्शितः । तथैव–पूर्वस्मात् शब्दतन्मात्रात् आकाशः स्पर्शतन्मात्रञ्चेति रीत्याविपरीतोप्यन्यः क्रमो विद्यते । तदुक्तं तत्त्वविचारणायां यादवप्रकाशाचार्यैः—"ईश्वरात्प्रकृति पुरुषौ । प्रकृतेर्महान् । महतोऽहङ्कारः । अहङ्काराच्छब्दतन्मात्रम् । शब्दतन्मात्रात् आकाशं स्पर्शतन्मात्रञ्चेति । ननु यथा शब्दतन्मात्रादितः आकाशदिवत् स्पर्शतन्मात्रादिकमपि जायते तदनन्तरतत्त्वभूतवाय्वादिसृष्टिसौकर्याय, तथा किं गन्धतन्मात्रात् पृथिवीवत् तन्मात्रान्तरमप्युत्पद्यते पश्चात्तनकार्यान्तर सृष्टिसौकर्यायेति पृच्छायां नेत्युत्तरयति—**गन्धतन्मात्र-**

லானவை. வேறே சிலர்—முன் பூதங்கள் பின் பூதங்களுக்கு மூலகாரணம் என்று சொல்லும் பல இடங்களைப்பார்த்து—தந்மாத்திரைகள் என்னும் ஸூக்ஷ்மபூதங்களிலிருந்து மேல் மேலான தந்மாத்திரைகளும் ஆகாயம் முதலிய ஒவ்வொரு பூதங்களும் பிறக்கும், கந்த தந்மாத்திரம் மட்டில் வேறொரு தந்மாத்திரத்தை உண்டாக்காமல் பிருதிவீ என்ற பூதம்

पूर्वपूर्वभூतஙகளையும் விவக்ஷிக்கின்றன வென்னுதல், இங்கு तन्मात्रसृष्टியைச்சொல்லி मूत सृष्टिக்கு अनुक्ति என்னுதலாம். அப்போது பृथिवियில நின்றும் ओषधिகளென்று தொடங்கிச் சொல்லுமது विरूपமாம்.

---

मिति । अयमाशयः—भूतादेराकाशस्याकाशादितस्तत्त्वान्तरस्यचवाय्वादेरुत्पत्तौ तन्मात्राणां मध्ये स्वीकरणं प्रयोजनविशेषाय श्रुति प्रामाण्यादायाति । एवञ्चपृथिवीतत्त्वस्यानन्तरमधीतानामोषध्यादीनां पृथिव्यवस्थाविशेषत्वेन तदपेक्षया तत्त्वान्तरत्वाभावात् न मध्ये तन्मात्रान्तरस्य स्वीकारः प्रयोजनवान्प्रमाणवांश्च भवतीति गन्धतन्मात्रात्पृथिव्या एव केवलया उत्पत्तिर्नतन्मात्रान्तरस्येति । तदुक्तं तत्त्वत्रयचुळके—"महान्तमारभ्य पृथिव्यन्त तत्त्वोत्पत्तौ (मध्ये मन्ये) द्रव्यान्तराणि नायान्ति । (कार्यकारणयोरेकद्रव्यत्वावगमात्) किन्तु ताळपलाश ताटङ्कन्यायेनावस्थान्तरापत्तिरेव भवति । पूर्वावस्थातो विजातीयावस्थाप्राप्तौ तत्त्वान्तरमभ्युपगम्यते । पृथिवीत्वाद्यवस्था अविहाय ओषध्यादि पदार्थोत्पत्तौतु न तत्त्वान्तरपरिगणने"ति । अस्मिन् पक्षे "आकाशाद्वायुरित्यादौ पञ्चम्युपपत्तिमाह—इप्पक्षत्तिलिति । स्वोपादान एव लयस्य वक्तव्यतया—"पृथिव्यप्सु-प्रलीयते....वायुराकाशे लीयत इत्यादिलयवाक्यानुगुण्येन — "आकाशाद्वायुरित्यादौपञ्चम्युपादानार्थिकैव स्वीकार्येतिभावः । तन्मात्रविशेषपरेति । सांख्यानामिवैषामपि स्थूलभूतेषु केवल विकृतित्वस्यैवेष्टतया तेषामुपादानत्वं बाधितमिति स्थूलसूक्ष्मसाधारणा आकाशादिशब्दा उपादानत्वार्हशब्द तन्मात्रादिसूक्ष्मभूतपरा इत्यर्थः । नन्वेवं पञ्चम्यन्ताकाशादिशब्दवत्प्रथमान्त वाय्वादिशब्दा अपि तन्मात्रवाचिन एवस्युरैकरूप्यायेति तन्मात्रात्तन्मात्रोत्पत्तिरेवैतावतापि प्रतिपादिताभवति, नतु तन्मात्रात् भूतोत्पत्तिर्नवाभूताद्भूतान्तरोत्पत्तिरित्यत्राह—उपादेयविषयेति । तथा च—"तस्माद्वा एतस्मादात्मन" इत्यत्र—आत्मनः—शब्दतन्मात्रशरीरकात्परमात्मनः आकाशः स्पर्श तन्मात्रमाकाशश्चजायत इत्येवंरीत्या श्रुत्यर्थो भाव्य इत्यर्थः । नन्वेवं सकृदुच्चरित न्यायविरोधात् आकाशादिशब्दानामेकप्रयोगे कथमर्थद्वयवाचकत्वम् ? कथं वा शक्त्यभावात्स्पर्शतन्मात्रं आकाशपदार्थो भवितु मर्हतीत्यत्र पक्षान्तरमाह—इङ्गुतन्मात्रेति । अत्र विपरीतोपि पाठोदृश्यते क्वचित् स च विपरीतार्थ एव भवति । एवञ्चपञ्चम्यन्ताः प्रथमान्ताश्चसर्वेप्याकाशादिशब्दास्तत्तत्तन्मात्रमात्रवाचका इति, आकाशादि

---

ஒன்றை மட்டும் உண்டுபண்ணும் என்று சொல்லுவர். இப்படி கொள்ளில்—ஆகாயத்திலிருந்து வாயுபிறக்கிறது என்ற மாதிரி பயின்றுவரு மிடங்களில்—மூலகாரணத்தைச் சொல்லும் ஆகாயம் என்பது போன்ற சொற்கள் சப்ததந்மாத்ரம் முதலியவற்றைச் சொல்லுகிறது, ஆனால் வினையும் காரியங்களைச் சொல்லும் ஆகாயம் என்பது போன்ற அந்த சொற்

சி ம புராணாதிகளில் प्रतीतिस्वारस्यததைக் கொண்டு भूतादियில் நின்றும் शब्दतन्मात्रं பிறக்கும இதில நின்றும் आकाश, आकाशததில நின்றும் स्पर्श तन्मात्रं இதில நின்றும் वायुவென்று

---

शब्दाना स्थूलसूक्ष्म साधारणधर्मावच्छिन्ने शक्ति रभ्युपेतेति च न पूर्वोक्तन्यायाद्युपरोधः। ततश्च आत्मनः तामसाहङ्कारशरीरकात्परमात्मन॰, आकाशः शब्दतन्मात्रमुत्पन्नः। आकाशात् शब्दतन्मात्रात् वायुः स्पर्श-तन्मात्रमुत्पन्न इत्येवं क्रमेणार्थोबोध्यः। एवं सति शब्दतन्मात्रादाकाशाख्यस्थूलभूतमुत्पन्नं, स्पर्श तन्मात्रात् वाय्वाख्यस्थलभूतमिति रीत्या पञ्चभूतानामुत्पत्तिरत्रानुक्तैवभवति। अनुक्तञ्चान्यतोग्राह्यमिति भावः। तर्हीदमेव-भजतु सिद्धान्ततामित्यत्राह—अप्पो‌ इति। एतदुक्तं भवति—"अद्भ्यः पृथिवी पृथिव्या ओषधय इत्यत्राद्भ्यः रसतन्मात्रात्, पृथिवी स्थूल पृथिवी जायते, पृथिव्याः स्थूलपृथिवीतः ओषधयोजायन्तइत्येवात्रार्थो-वर्णनीयः। ननु पूर्वमिव प्रथमान्त पृथिव्योषध्यादि शब्दस्य स्वार्थेन सह तन्मात्रवाचित्वं तन्मात्रमात्रवाचित्वं वायुज्यते। उक्तरीत्या पृथिव्योषध्योर्मध्ये तन्मात्रान्तरस्यानङ्गीकारादिति वैरूप्यमर्थानामस्मिन्नपि पक्षेभवतीति नायमपि पक्षस्सिद्धान्तताहं इति।

अथ पुराणाद्यानुगुण्येन प्रक्रियान्तरं प्रदर्शयताम्मतमाह—शिलपुराणेति। अत्र—"भूतादिस्तु विकुर्वाण" इत्यादिविष्णुपुराण वचनं पूर्वमेवोपन्यस्तम्। तथा पाद्मपुराणेपि—"पृथिव्यापस्तथा तेजो वायु-राकाशमेवच। एकैकशस्स्वरूपेण कथयामि यथोत्तरम्॥ शब्दमात्रं तदाकाशं भूतादिस्स्वं समावृणोत्। अथा-काशं विकुर्वाणं स्पर्शमात्रं ससर्जह॥ .... ततोवायुर्विकुर्वाणोरूपमात्रं ससर्जहेत्याद्युक्तम्। एवमेव पाद्मसंहिता-दिष्वपि भगवदाराधन प्रकरणे भूतशुद्धिप्रस्तावे तत्त्वोत्पत्तिर्न्यरूपि। प्रतीतिस्वारस्येति। अत्र सर्वत्र भूता-त्तन्मात्रसृष्टे रेव स्पष्टं प्रतीत्या नोक्तपक्षरीत्या तन्मात्रात्तन्मात्रोत्पत्तिर्युक्तेतिभावः। अत्र तन्मात्राणा सृष्टौ विशेषः कश्चिन्न्यायसिद्धाञ्जनेऽभ्यधायि—"एतेषु (चतुर्विंशति) तत्त्वेषु भागत एवोत्तरोत्तरस्सृष्टिः। पूर्वपूर्वैरुत्त-रोत्तरावरणस्य तत्तदाकारेणकार्येषुवृत्तेश्च श्रुतत्वात्। अन्यथा पृथिव्येकपरिशेषप्रसङ्गात्। पूर्वपूर्वंभूतानाम-द्याप्युपलम्भसिद्धत्वाच्च। तन्मात्राणान्तु-आवरकत्वाद्यनाश्रय(व)णान्निश्शेष परिणाम इत्येके। शरीरादेश्चतुर्वि-

---

களை—மேலே வரபபோகும தந்மாததிரங்களையும், ஆகாயம போனற முன முன பூதஙகளையும குறிப்பிடுகினறன எனனவேணும். அல்லது—இஙகு முன் முன தநமாததிரைகளிலிருநது பின பின தநமாததிரைகளுக குததான பிறப்புவாணிக கபபடுகிறது. பூதஙகளுககலல எனனலாம். அபபோதும்—பிருதிவியிலிருநது ஓஷதிகள் எனறு மேலே தொடரும் வாக்கியம முன வாககியததோடு சேராது.

மேலும் இக்ரமத்திலே சிலர் சொல்லுவார்கள். இப்பக்ஷத்திலும் ஆகாசத்தில் நின்றும் வாயு என்றுப்போலே சொல்லுகிற விடங்களெல்லாம் तन्मात्रद्वारकமாகக்கொள்ளுதல், காரணவிஷய

---

शति तत्त्वमयत्ववचनेन तेषामपि एकदेशतः परिणाम इत्यपरे । पूर्वस्मिन् पक्षे-तन्मात्रकार्यभूतेन गुणपञ्चकेन सह शरीरादेश्चतुर्विंशति तत्त्वमयत्वोक्तिरितिवा, सर्वाचित्तत्त्वमयत्वप्रतिपादनपरतयावानिर्वाहः । अपरस्मिन् पक्षे-क्वचित्केषाञ्चित्सृष्ट्यनुक्तिवदविवक्षया (तन्मात्राणां) आवरणाद्यनुक्तिरितिगतिरिति । निस्त्वचो बीजस्याङ्कुरोत्पादनासामर्थ्यवत् पूर्वतत्त्वानावृतस्य पश्चात्तनतत्त्वस्य स्वकार्यकरणाशक्त्या स्थूलभूतानां भूतान्तराऽऽवारकत्वम् । तन्मात्राणान्तुसूक्ष्माणां तदनावारकत्वञ्चयुक्तमिति एकेषां पक्षप्रवृत्तिर्बोध्या । तत्त्वानां आवरणं कार्येषु आवेशरूपावृत्तिश्च—"प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत । प्रधानतत्त्वेनसमंत्वचाबीजमिवावृतम् ॥ यथा प्रधानेनमहान् महता सः (अहङ्कारः) तथावृतः । आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविश"दित्यादौश्रूयते । न्यायसिद्धाञ्जन एव किञ्चिदनन्तरं—"श्रीमद्गीताभाष्य इत्यारभ्य - "महाभूतान्यहङ्कारोबुद्धिरव्यक्तमेवच इत्यादिगीतावचनेन शरीरस्याष्टद्रव्योपादानकत्वं तत्र प्रतिपादितमिति निगम्यते—"एतेन तन्मात्राणां पूर्वोक्तो निश्शेषपरिणामपक्षः परिगृहीत इव सूच्यत" इति । "एनेन शरीरस्याष्ट द्रव्योपादानकत्वप्रतिपादनेन । निश्शेषपरिणामपक्ष इति । अन्यथा क्षेत्रारम्भकाणि द्रव्याणि तन्मात्रमेळनेनाधिकानिस्युरिति तद्व्याख्या । नन्वस्मिन् पक्षे तन्मात्रसृष्ट्या व्यवधानात्—" आकाशाद्वायुरित्यादौ आकाशादेस्साक्षाद्वाय्वाद्युपादानत्वं श्रुतं कथं योयुज्यत इत्यत्राह—इप्पक्षत्तिलुमिति । शोल्लुकिरविडङ्गळ् एवं प्रतिपादन स्थलानि । तन्मात्रद्वारकाणि तन्मात्रद्वारकसृष्टिपराणि । अथावा इ डङ्गळिलिति ससम्यन्त एव पाठोऽस्तु । सृष्ट्यादीनीति पूरणीयम् । तदा तन्मात्रद्वारकाणीत्येतद्यथाश्रुतमेवान्वेति । श्रुतौ स्थूलभूताद्यादशभूतान्तरोत्पत्तेरेव शब्दादवगमेपि उपबृंहणीभूतविष्णुपुराणाद्यनुविधानेन तन्मात्राणामपि मध्येप्रादुर्भावावगत्या—"आकाशादि"त्यादौ पञ्चमी साक्षात्परम्परासाधारण कारणत्वमात्रपरेति स्वीकृत्य—"क्षीराददिदं तत इदञ्चततोदधीति" पूर्वोक्तन्यायतश्श्रुतिपुराणादीनामैककण्ठ्यं प्रतिष्ठाप्य तन्मात्रद्वारा भूतसृष्टावेव तात्पर्यमिति पूर्वोक्त एव सृष्टिक्रम उचित इति भावः । अथैवं

---

சில புராணாதிகள் இயல்பாகச் சொல்லுவதையொட்டி—பூதாதி என்னு மதிலிருந்து சப்ததந்மாத்திரம் பிறக்கும், அதிலிருந்து ஆகாயம், அதிலிருந்துஸ்பரிசதந்மாத்ரம், அதிலிருந்து வாயு என்றிவவாறு சிலர் சொல்லுவர் இந்த படிசொல்லும்போது—ஆகாயத்தி லிருந்து வாயு என்ற மாதிரி வருமிடங்களில் தந்மாத்திரை நடுவேயுண்டாகிறது என்ற ஒரு இடைநிலையை ஒப்பவேணும். அல்லது—காரணத்தைச்சொல்லும் வாயு முதலியசொற்கள்—ஸ்தூலவாயு முதலியவைகளை மட்டும் குறிக்கும், காரியத்தைச் சொல்லும் வாயு முதலிய

வாய்வாதிசப்தங்கள் ஸ்தூலவாய்வாதிபரங்களாகவும் கார்யவிஷயவாய்வாதிசப்தங்கள் க்ரமபாவிஸூக்ஷ்மஸ்தூலவாய்வாதி-விஷயங்களாகவும் கொள்ளுதலாம். ப்ரக்ருதிகள் எட்டு என்கிற இடத்திலே ப்ருத்வீபர்யந்தபூதங்களாயு

---

स्वीकारे श्रुतौ तन्मात्रसृष्टेः कण्ठतोऽनुक्तिदोषस्सिध्येदिति तदुद्धिधीर्षयाह पक्षान्तरं—**कारणविषयवाय्वादि-शब्देति** । "वायोरग्निरित्यादौ पञ्चम्यन्तवाय्वग्न्यादिशब्दा इत्यर्थः । कार्यविषयवाय्वादिशब्दास्तु प्रथमान्ताः । यद्यप्यत्र "कारण विषयाकाशादिशब्दे" त्येवप्रयोक्तुमुचितम् । तथापि—भूताद्भूतान्तरोत्पत्तौ तन्मात्रस्य मध्येऽभ्युपगमं प्रत्येव विप्रतिपत्त्याविचारप्रवृत्तेः तैत्तरीय पूर्ववाक्ये—"आत्मन आकाशस्सम्भूत इत्यत्र, सुबाल-पूर्ववाक्ये—"भूतादेराकाशमित्यत्रच भूतादिशरीरकपरमात्मन आकाशोत्पत्तौ नकिञ्चिद्वक्तव्यमिति तच्छब्दा-संस्पर्शः । न च "आत्मनआकाशस्सम्भूतः आकाशाद्वायुरिति कारणकार्यविषयाकाशशब्देपि मध्ये शब्दतन्मा-त्रोत्पत्तिनिर्णयाय किञ्चित् विचारणीयमस्त्येवेति वाच्यम् । भूताद्भूतान्तरोत्पत्तिविषये कार्यकारणवाचिशब्दाना-मेवात्रविचारणीयतया तत्र तयोस्तद्विषयकत्वाभावात् । भूतादिं प्रत्येवाकाशस्यकार्यत्वात् । नतु भूतान्तरम्प्रति, यथा वाय्वादेः । ननुकथं तर्हि तत्राकाशशब्दः भूतादि कार्यविषयस्सूक्ष्मस्थूलोभयपरस्स्यात् यथावाय्वादिशब्द इति चेत् । एकत्र निर्णीतश्शास्त्रार्थ इतरत्रापीतिन्यायात्तदुपपत्तेः । **क्रमभाविसूक्ष्मस्थूलेति** । तथा च—आकाशात् स्थूलाकाशात्, वायुःस्पर्शतन्मात्राख्यस्सूक्ष्मवायुः स्थूलवायुश्च जातः इत्येवं क्रमेणश्रुत्यर्थोभाव्य इत्यर्थः । अत्राकाशादितस्स्थूलात् सूक्ष्मस्थूलवाय्वादेरुत्पत्तेस्समुदायतोवगमेपि तयोः प्रमाणान्तरसिद्धं पौर्वापर्यमपि विवक्षितमित्यत उक्तं-**क्रमभावीति** । "तन्मात्राणि भूतादौ लीयन्त" इति भूतानां तन्मात्रापरिशेषत्वोक्त्या-स्थूलम्प्रति सूक्ष्मस्यकारणतावगमादितिभावः । एतेन-तत्पक्षखण्डनावसरे-सुबालव्याख्याने—"आकाशाद्वायु" रित्यादीनिवाक्यानि मिथुनान्मिथुनोत्पत्तिवचनानि । पञ्चम्यन्ताना प्रथमान्तानाञ्च पदानामुभयवा-चित्वात् । एवं सति मातापित्रोः पुत्रदुहित्रोरिवस्थूलसूक्ष्मभूतयोर्न परस्परं कार्यकारणभावस्सिध्येत् । पुत्रदुहितरौ प्रति पित्रोरन्यतरस्येव स्थूलाकाशस्यापि स्पर्शमात्रं वायुमपि प्रतिकारणत्वं स्यात् । सूक्ष्मस्येव स्थूलाकाशस्यापि प्रकृत्युत्पन्नस्य (प्रकृत्युपस्थापितस्य) स्थूलं सूक्ष्मञ्चवायुं प्रतिहेतुतयाऽन्वयस्याविशेषेण पञ्चमी-

---

சொற்கள்—அடைவேவரும் ஸூக்ஷ்மஸ்தூலவாயு முதலிய இரண்டையும் குறிக்கும் என்றும் கொள்ளலாம். காரணத்தன்மையுடைய பிரகிருதிகள் எட்டு என்ற இடத்தில, பிருதிவீயாக உள்ள பூதங்களை அதனதன் தந்மாத்திரைகளுடன அடக்கும்படியும், கேவலம் காரியமாகவே உள்ளவை பதினாறு என்ற விடத்தில இந்திரியங்கள் பதினொன்றுடன சப்தம் முதலிய ஐந்து பொருட்களையும் கூட்டவேண்டும்படியும் இருக்கும். சுருதியில் சொன்ன உதாஹரணத்தின் போக்கை கருத்தில்கொண்டு சிலர—முன் முன் பூதங்கள் மேல் மேல் பூதங்களுக்கு வெறும்

மடக்கி விக்ருதிகள் பதினாறு என்கிற இடத்திலே இந்த்ரியங்களுடனே சப்தாதிவிஷயங்களையும் கூட்டவேண்டும்படி நிற்கும். ச்ருதியில உதாஹரணவிசேஷஸ்வாரஸ்யத்தைக்கொண்டு சிலா, பூர்வபூர்வபூதங்க

---

प्रतिपादितत्वात् । स्थूलाकाशस्यस्पर्शमात्रस्थूलवायुजननायोग्यत्वे प्रमाणान्तराभावात् । शास्त्रैकसमधिगम्योह्य-यमर्थः यथाशब्दं स्वीकार्यः । अतोर्थसामर्थ्यादभिमतव्यवस्था दुर्लभेत्युक्तं प्रत्युक्तं वेदितव्यम् । अत्राचार्यैन्य-थैवशब्दार्थप्रतिपादनात् । मिथुनान्मिथुनोत्पत्त्यङ्गीकारे—पुत्रदुहितरौप्रति पित्रोरन्यतरस्येवेत्यादिनोक्त दोषापत्त्या शब्दार्थान्वयदौस्थ्येपि स्थूलान्मिथुनोत्पत्तौ तादृशदोषाभावात् । मिथुनीभूतयोस्थूलसूक्ष्मयोरुत्पत्तिक्रमस्य प्रमाणा-न्तरायत्तत्वप्रदर्शनाच्चेति । ननु भूतस्यापितन्मात्रद्वारा भूतान्तरोपादानत्वे, विहाय पृथ्वीं, चतुर्णामपि भूतानां प्रकृतित्वापत्त्या—"अष्टौप्रकृतय" इत्युक्तिरयुक्तास्यात् । द्वादशप्रकृतयस्स्युः । एवमिन्द्रिय पृथिवीमेळनेन-विकृतयोपि तावत्योभविष्यन्तीत्यत्राह—प्रकृतिकाळिति । भूतानां तन्मात्राणाञ्चावस्थामात्रेणैवभेदात् द्रव्यै-क्यैत्तन्मात्रेषु भूतानामन्तर्भावविवक्षया प्रकृत्यष्टविधत्वमितिभावः ।" विकृतिकळ् पदिनारु एन्रविडत्तिले" इत्येव शुद्धः पाठः । तथा च विकारपदस्य कार्यमात्रवाचितया शरीराश्रितकार्येषु शब्दादिविषयानप्यन्तर्भाव्य तथोक्तिरितितात्पर्यम् ।

अत्रोक्तवक्ष्यमाणबहुपक्षमध्ये अयमेवपक्षस्सिद्धन्तीकरणार्हो भवति । "अस्वरसम्—अतिक्लिष्टमि त्यादिरीत्यातेषां दूषणवदत्रतदकरणात् । केवलं निर्वाह प्रक्रियामात्रस्यैव प्रकाशनात् । बह्वाचार्यसम्मतोयं सृष्टिक्रमः । तथा च सिद्धान्तप्रकरणे सुबालोपनिषद्व्याख्यायामुक्तम्—" अतस्सर्वं परमतं व्याकुलं स्यात् । प्रमाणान्तरागोचर जगत्सर्गप्रळयादौ शब्दानां स्वरससिद्ध एवार्थस्स्वीकरणीयः स्वप्रकरणस्ववाक्यानुगुण्यात् उपबृंहणवचनानुगुण्याच्च । प्रसिद्धानामाकाशादीनां तन्मात्रव्यवहितासृष्टिरभ्युपगन्तव्या । "तमसोभूतादिं भूतादेशकाशमित्यादौ व्यवधानेपिकार्यकारणभावनिर्देशदर्शनात् । तर्हि—"अष्टौप्रकृयथष्षोडशविकारा इति श्रुतेः का गतिरिति चेत्? वेदोपबृंहणनिपुणतरमहर्षि सन्दर्शितैवगतिः । नास्माभिस्तद्विरुद्धनिर्वहणेऽभिनिवेष्ट-व्यम् । भगवताव्यासेन मोक्षधर्मे इत्यारभ्य जनकयाज्ञवल्क्यसंवादादिकमत्र पूर्वोक्तं सर्वं प्रदर्श्यापेक्षितां

---

நிமித்தமாய் நிற்கின்றன. அவ்வோ தந்மாத்திரைகள் அவ்வோ பூதங்களுக்கும், மேல் வரும் தந்மாத்திரைகளுக்கும் மூலகாரணம் என்பர். அப்போதும் மூல காரணத்தைச் சொல்லவந்த அந்த ஸங்கல்பத்திற்கு இது ஏலாது. முன்பூதமே முயன்று பின் பூதத்தின் உருவாக ஆகிறது என்ற வசனங்களுக்கும் இசையாது. ஜலம் முதலியன தேஜஸ்ஸில் அடங்கியுள்ளன என்றதும் பொருந்தாது. ஆகாயம் முதலியன, தமது ஸூக்ஷ்ம நிலையாலே வாயு முதலியவற்றுக்கு மூலகாரணம். ஸ்தூலநிலையாலே நிமித்தமாய் நிற்கிறது

கள் उत्तरोत्तरभूतங்களுக்கு निमित्तकारणங்களா, தந் தாம் तन्मात्रैகளா இவற்றிற்கும் उत्तरोत्तरतन्मात्रैகளுக்கும் उपादान कारणமென்பார்கள். அப்போதும் उपादानप्रकरणமும் भूतங்களினுடைய बहुभवनश्रुतियும்

---

शविचारपूर्वकमन्ते—ईदृशस्मृत्युपबृंहितयानयाश्रुत्या विषयेन्द्रियाण्येव षोडशविकारत्वेन विवक्षितानीति भगवतो भाष्यकारस्यहृदयमिति भगवद्गीताभाष्ये स्फुटमवगम्यत इति ।

एवमेतावता पूर्वभूतानामुत्तरभूतम्प्रति सहकारित्वपक्षमुपादानत्वपक्षञ्च विमृश्याथतेषां निमित्तकारणत्वपक्षमपि प्रस्तौति—श्रुतियिलिति । उदाहरणविशेषस्वारस्येति । तथाहि—छान्दोग्ये "तत्तेज ऐक्षत, तदपोऽसृजत, तस्माद्यत्रक्कचनशोचति स्वेदतेवापुरुषः तेजसएवतदध्यापोजायन्ते । ता आपऐक्षन्त, ता अन्नमसृजन्त । तस्माद्यत्रक्कचनवर्षति तस्माद्भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायत" इति श्रूयते । अत्र तेज आदे स्सलिलादि स्रष्टृत्वं प्रतिज्ञाय तेजः परिणामभूतशोकतापादेः स्वेदादिजलकारणत्वं, जलमयवृष्ट्यादेः पृथिवीपरिणामभूतव्रीहियवादिलक्षणान्नकारणत्वं च प्रदर्श्योपपाद्यते । तत्र तेषां कारणत्वं निमित्तत्वान्नातिरिच्यते । स्वेदस्य जलबिन्दूपादानकत्वात् व्रीह्यादीनां बीजोपादानकत्वाच्च । तथाचैतद्दृष्टान्तेन सर्वभूतानामपि भूतान्तरकारणत्वं निमित्तमात्रत्वमेवेति ज्ञायत इति । अथवा—उदाहरणविशेषः न्यायसिद्धाञ्जने पूर्वपक्षावसरेऽन्यथा प्रदर्श्यते । "ननु" वायोरग्निरित्युपादानत्वविवक्षायां प्रत्यक्षविरोधः । यत्रतृण काष्ठादीनामेव भस्मधूमधूमध्वजादिरूपेण परिणाममदर्शनात् । पर्णादीनाञ्चपार्थिवत्वात् । अप्रत्यक्षैस्तदानीमप्यदृष्टाद्युपनीतै स्तेजोवयवैर्ज्वालारम्भ इति कल्पनस्य गुरुत्वात् । विचित्रारम्भस्यच भस्म धूमाङ्गारादिषु दृष्टत्वेनावर्जनीयत्वात् । स्पर्शविशेषस्य धूमादिगतगन्धविशेषवद्दूरालभास्पर्शादिवदुपपत्तेः । अतस्सलिलस्य सहकारिभेदात् फेनतरङ्गबुद्बुदवत् पृथिव्या एवांशतो हुतवहादि परिणाम इति सिद्धे—वायोरग्निरि त्यादिकं निमित्तकारणत्व मात्रेणाप्युपपद्यत इति । केचित्तु—उदाहरणविशेषः तैत्तरीये—"अन्नात्पुरुष इत्याद्युक्तः । तत्रान्नादिति पञ्चमीनोपादानत्वविषया । पुरुषशब्दवाच्यस्य देहस्य शुक्लशोणिताद्युपादानकत्वेनान्नोपादानकत्वाभावात् । तस्मात्तत्रान्नस्य देहं प्रतिनिमित्तत्वमेवेति तन्न्यायेन आकाशाद्वायुरित्याद्यपि निमित्तत्वमेवाहेति व्याचक्रुः । तन्न । शुक्लशोणितादेरप्यन्नपरिणामत्वेन

---

என்பதும் மிகவிரஸமாகும். இவ்விதம் இன்னும் சிலர் பல நிர்வாஹங்கள் வெளியிடலாம். அவைகள் தோறும்—ஒரு அம்சம் சிறந்திருந்தால்—மற்றொரு அம்சம் அவ்வாறு இருப்பதில்லை. அதனால்தான் சிலர்—இவற்றினுடைய தோற்றத்தின் அடைவு ஆனபடி ஆகிறது என்று உபேக்ஷைசெய்து—பிரதானமாக இவற்றைவிட ஆத்துமாவுக்கு வேறுபாடு தெளிகைக்காக இவற்றின உண்மை உருவம், பிரிவு, தோற்றம் இவைகளைப் பொதுவாக அறியமுயலுவர்.

'अग्न्यवस्थे च सलिले' ''वाय्ववस्थेच तेजसि'' इत्यादिகளும் ஸ்வரஸங்களாகா ஸூக்ஷ்மாம்சத்தாலே உபாதானமாயும் ஸ்தூலாம்சத்தாலே நிமித்தமாயும் நிற்கிற ஆகாசாதிகளில் நின்றும் வாய்வாதிகள் பிறக்கின்றன என்று விவக்ஷிக்குமதுவும் அதிக்லிஷ்டம். இப்படி மற்றும் தோற்றும் நிர்வாஹங்கள் தோறும் ஓர் அம்சத்திலே

देहेऽन्नोपादानकत्वस्याप्रकम्प्यत्वात् । तथाचानन्तरवाक्ये भाष्ये—एष. पुरुषः अयं देहः अन्नरसस्य परिणामः । "अन्नमशितं त्रेधा विधीयते इत्याद्युक्तरीत्या जाठराग्निपच्यमानान्नरसांशनिर्वर्त्यमांसादिमयत्वाच्छरीरस्येति । तर्हि पूर्वभूतानां निमित्तमात्रत्वे किमुपादानं भविष्यत्यनन्तरभूतम्प्रति ? यदि तन्मात्रम्, तस्यापि किमुपादानमित्यत्राह—तन्द्रामिति । स्वस्वतन्मात्राणि एतेषामेतदनन्तर तन्मात्राणाञ्चोपादानम् । तथा च शब्दतन्मात्रात् आकाशं स्पर्शतन्मात्रञ्च । आकाशरूपनिमित्तात् स्पर्शतन्मात्ररूपोपादानाच्चवायू रूपतन्मात्रञ्चेत्येवं क्रमेणोत्पत्तिरिति भावः । यद्यप्येवंविधः क्रमोयादवप्रकाशमतेप्यस्तीति पूर्वमुपवर्णितम् । तथापि तत्र पूर्वपूर्वभूतानामुपादानत्वम्, इहतु निमित्तत्वमितिभिदाबोध्या । एवमेव पूर्वोक्तभूतसहकारित्ववाद वैलक्षण्यमपि विज्ञेयम् । पूर्वोक्तरीत्या सहकारित्वनिमित्तत्वयोर्वस्तुनोर्भेदात् । "अष्टौप्रकृतयष्षोडशविकारा इति श्रुतिस्वारस्यात् पुराणादिषुतन्मात्रेभ्योभूतसृष्टिवचनाच्चोत्तरोत्तरभूततन्मात्राणां स्वस्वतन्मात्रमुपादानम् । श्रुतावुदाहरणविशेषात् पूर्वभूतान्युत्तरभूतानि प्रति निमित्तमिति तदभिमानः । अथ तमेवाभिमानं निराकरोति—अप्योदुमिति । उपादानप्रकरणेति । यद्यपि पञ्चमी हेतुमात्र साधरणत्वादन्यथासिद्धा, तथापि—"आत्मन आकाशस्सम्भूतः आकाशाद्वायुरित्युपादानप्रायपाठानुगृहीता—"वायोरग्निरिति श्रुतिरन्यथासिद्धापि उपादानत्वे प्रमाणं भवतीति भावः । ननूदाहरण विशेषस्वारस्यस्य लिङ्गस्य सन्निधौ प्रकरणं दुर्बलमेवेति शङ्कायामुच्यते—भूतानां बहुभवनश्रुतीति । केवलं निमित्तस्य स्वयं बहुधाकार्यरूपेण परिणामादर्शनात्—"तत्तेजऐक्षत बहुस्यां प्रजायेयेति रीत्याश्रुतं बहुभवनादिकं भूतानामुपादानत्वमेवगमयतीति भावः । उपबृंहमणानुगुण्यञ्चाह—अग्न्यवस्थेचेति । तथा च सलिलादीनामग्न्यादौ लयश्रवणात्—"यद्यस्मादभिजायेत तत्तत्रैव प्रलीयत" इति न्यायेन सलिलादिकम्प्रतितेज आदीनामुपादानत्वमपि सिद्धमित्याशयः । अथ श्रुतावुदाहरणविशेषोपादान प्रकरणोभयानुरोधेनाकाशादीनामवस्थाभेदेनोभयविधकारणतावादेपि दोषमाह—सूक्ष्मांशेति । "आकाशा-

இப்பஞ்சபூதங்களில் சப்தம் முதலிய குணங்கள் நிற்கும் நிலையை சாஸ்திரங்களை யொட்டி, "பூநிலாயவைந்துமாய்"—என்கிற பாட்டிலே காணலாம். வாயு துவங்கி மேல் மேல பூதங்களில் ஸ்பரிசம் முதலிய குணங்கள் அதிகரித்துவருவதை வைசேஷிகமதத்தவரு மிசைந்தார்கள். மேனமேல பூதங்களில முன் முன் பூதங்களுடைய ஒட்டுதலாலே—நீர் சுடு

மிகுதி இருக்கக்குறைகாண்கையாலே, 'இவற்றினுடைய उत्पत्तिक्रमம் ஆனபடியாகிறதென்று उपेक्षिதது, இவற்றிற்காட்டில் आत्माவின் வேறுபாடுதெளிகைக்காக, இவற்றின் स्वरूपविभागमात्र-த்தையும், उत्पत्तिक्रमத்தையும் प्रधानமாக சிலர் अनुसन्धिப்பர்.

— — —

द्वायुरि"त्यादौ पञ्चम्योभयसाधारण हेतुमात्रमभिधीयते । ततश्च प्रकृतिभूताकाशादि शब्दा अपि स्थूल-सूक्ष्मावस्थाद्वययोग्याकाशादिमात्रमभिदधति । तथा च विपरीतार्थस्यापिवक्तुं शक्यत्वेन आकाशात् सूक्ष्मरूपा-दाकाशादुपादानात् स्थूलरूपात्तस्मान्निमित्ताच्चवायुर्भवतीत्यर्थो व्यवस्थयाकथं वर्णयितव्यः? प्रमाणान्तरानुसारादि-त्यपिन । अद्ययावत्सृष्टिक्रमस्यैवानिश्चितत्वात् । ईश्वरस्यतूभयविध कारणतायास्स्पष्ट प्रतिपन्नत्वात् नसंकटं किञ्चित् । "आकाशाद्वायुरि" त्यादावेव वृत्तिद्वयाश्रयणेन व्यवस्थापनमप्ययुक्तम् । तस्य सकृदुच्चरितन्याय विरोधेनातिक्लिष्टत्वादिति भावः । अथान्येषा केषाञ्चिदाचार्याणां तन्मात्रभूताद्युत्पत्तौ अनास्थयाऽनिरूपणेता त्पर्यंदर्शयति—इप्पडि इति । मर्रुमिति । विष्णुपुराणाद्युक्तरीत्याऽऽवारकत्वमात्रमङ्गीकृत्य सांख्यपक्षा-श्रयणेन भूतानां केवलं विकारत्वं तन्मात्राणामेवावारकत्वमिति वादः, सिद्धान्तश्रद्धया भूतानामुपादानत्वमुररी-कृत्य पूर्वतन्मात्रं उत्तरत्रतन्मात्रभूतोभयमपि स्वकार्यकरणशक्तय आवृणोतीतिवादः इत्येवं प्रायेषु नानाविधेष्व-न्यपक्षेष्वपीत्यर्थः । अत्र—"मिकुदि इरुक्कक्कुरै काणकैयाले इत्येवपाठस्स्वरसः । नतु—शिरुक्कक्कुरैक्क-काणकैयाले इति । अयमत्रान्वयार्थः—एवमिह भासमानेषु सर्वेष्वपि निर्वाहेषु, मिकुदि बहुप्रमाणानुगुण्यरूपोय उत्कर्षः, तस्मिन् सत्यपि कस्मिंश्चिदंशे कुरै अन्यानुगुण्य न्यूनताया अपिदर्शनादिति । सांख्यपक्षे—"अष्टौ प्रकृतय इति श्रुत्याद्यानुगुण्येपि" आकाशाद्वायुरि त्याद्यानु गुण्यं न्यूनम् । सिद्धान्तेपि एतद्वैपरीत्यम् । अन्यत्रान्यविधान्यूनतेति रीत्यासर्वेप्युत्पत्ति प्रकारवादास्समान गुणदोषा इति भावः अथवा क्वचित्—मिकुदि शुरुक्कम्, इरुक्ककाणकैयाले इति दृश्यमानः पाठोऽस्तु । तदाप्युक्तएवार्थः । उपेक्षित्तु इति । तथा च तत्त्व मुक्ताकलापः "चिन्तासाफल्यमान्द्यात् श्रमबहुळतया तत्र तद्ज्ञैरुदासी"ति । तर्हिकः प्रधानतया ज्ञातव्योंश इत्यत्राह—इवर्रैक्काट्टिलिति । प्रकृत्यात्मभ्रान्ते स्सर्वानर्थनिदानतया प्रकृति प्राकृतेभ्यः आत्मनोवैलक्षण्य-

---

கிறது—என்பதுபோல் சப்தம் முதலிய குணங்கள் தோற்றுகின்றன. ஆனால் அவை உண்மையில அங்கில்லை என்று சிலர் சொல்லுவர். முன் முன் பூதங்கள், அவற்றின் தந்மாத்திரைகள் இவைகளுடன் சேர்ந்த தமது தந்மாத்திரைகளாலே மேன் மேல பூதங்கள் பிறப்பதாலே மேன் மேலும் குணம் உண்மையிலேயே கூடுகிறது என்றும் சொல்லுவாகள். காரணதசையில் ஸூக்ஷ்மமான குணம், காரிய நிலையில் வெளிப்படையாகத்தோன்றுகிறது

"பூஞ்சபூதங்களில் மேன்மேல் குணம்பெருகுவது."

இப்பூதங்களில் शब्दादिगुणங்கள் நிற்குமடைவை யதாகமம் "பூநிலாயவைந்துமாய்" என்கின்பாட்டிலே அநுஸந்திப்பது.

---

मवश्यावधारणीयमित्यर्थः। स्वरूपविभागमात्रेति। प्रकृतिर्जडरूपा आत्माऽजडः। पूर्वस्य चतुर्विंशतिधा, परस्यचत्रेधा विभाग इत्यादिमात्रेत्यर्थः। मात्रपदेन तन्मात्रभूतादीनां निमित्तत्वोपादानत्वाद्याकारा व्यावर्त्यन्ते। एवमुभयेषां वैलक्षण्य ज्ञानेपि जडपदार्थेष्वङ्कुरन्ती नित्यत्वशङ्काकथङ्कारं व्यावर्तनीयेत्यत्राह—उत्पत्तिमात्रेति। तथा च जडपदार्थेष्वपि पूर्वोक्तशङ्कातङ्कटङ्कणायोत्पत्तिमात्रं तेषामवश्यनिरूप्यम्। मात्रपदेन उत्पत्त्याववान्तर निमित्तोपादानत्वादि विशेषः—किं क्रमिकोत्पत्तिराहो यौगपद्येन ? क्रमेपि क्रिमयमेवक्रमः अथवान्यादृश इत्यादि-श्चर्चा वृथेति व्यावर्त्यते। एवन्तर्हि कथं सुबालोपनिषद् व्याख्यानादिषुसुदर्शनसूर्यादिभिरत्र विषये पराक्रान्त-मिवविलोक्यत इत्यत्राह—प्रधानेति। तथा च तेषामपि तत्कथने न प्राधान्येनाभिनिवेशः कल्पनीयः। अपितु सर्वथा तेभ्य आत्मनो वैलक्षण्य ज्ञापन एवेति भावः। तथा च तत्त्वत्रायचिन्तनाधिकार श्रीसूक्तिः— "एतद्विषये सर्वज्ञोपिमाभव। अत्यन्तानुपयुक्तेष्विव स्वल्पोपयुक्तेष्वपि माभिसन्धिविशेषं वह। अपरिच्छेद्यतया-स्थिते समुद्रे नाविकानां मार्गप्रभृत्यपेक्षितकतिपयपदार्थमात्र विज्ञानवत् अस्मदुक्तं एतावद्विवेचनमेवाव-श्यापेक्षित"मिति।

अथ पञ्चभूतेषु गुणविशेषस्थितावागमसम्प्रदायावाह—इप्पूतङ्गळिलिति। आगमश्चात्र—"शब्दैक-गुण आकाशः शब्दस्पर्शगुणोऽनिल इत्यादिना पूर्वोपात्त भगवच्छास्त्रादिः।" पूनिलायवैन्दुमाय् इति तिरुच्चन्दवृत्ते भक्तिसारगाथा। पृथिवीस्थपञ्चगुणाः जलनिष्ठचतुर्गुणाः तेजस्सम्बन्धित्रि गुणाः वल्वद्वायु-गतद्विगुणौ गगनैकगुणश्चभूत्वा नानास्वभावेनतिष्ठन्तं भवन्तं यथावत्कोवेत्तुमर्हत्तीति भगवन्तं प्रत्युक्तिः। "कार्यं निदनाद्विगुणानधीते इति न्यायेनोत्तरोत्तरभूतेषु गुणाधिक्यमुन्नेयम्।" तस्यागन्धगुणो मतः—पृथिवी-गन्धवती "त्यादिकन्तु तदसाधारणगुणाभिप्रायम्।" रसोहमप्सुकौन्तेयेत्यादिवदत्र "तत्तद्गुणोभवति

---

பனிக்கட்டியில் குளிர்ச்சிபோல வென்றும் சிலர் நிர்வாஹம் கொள்ளுவர். புதியதொருநிலை பிறந்தால் புதியதொரு தத்துவம் தோனறிற்று எனறு கொளளுகிறோமாயினும், ஐந்து பூதங களுடைய கூட்டுறவாலே பிறநத பொருளகள் அவ்வோபூதஙகளின பழைய நிலைகளைவிடா மையாலேயும, கூட்டுறவாலே பிறநத பொருட்களை எணணி முடியாமையாலும பிருதிவி யோடு தத்துவஙகளின வரிசை முற்றுப்பெறுகிறது.

வாய்வாதிபூதங்கள் நாலில் ஸ்பர்சம் முதலாக उत्तरोत्तराधिक्यम் வைசேஷிகருமிசைவர்கள். उत्त-रोत्तरभूतங்களில பூர்வபூர்வभूतसंसर्गத்தாலே—உஷ்ணம் ஜலம்—என்னுமாபபோலே शब्दादिगुणங்கள தோற்று கிறனவென்றும் சிலர் சொலலுவர் கரகையிலே சைத்யம்போலே காரணதசையில குணம காயதசையிலும் நிற்கிறது எனறும் கொளளுவா. अपूर्वस्वभावोत्पत्तियாலே तत्वान्तरपरिगणனையாலும் पञ्चीकृत भूतविकारங்கள அவவோபூதஸ்வபாவஙகளை விடாமையாலும், இவை எண்ணிமுடியாதபடி

---

भगवानिति निर्दिश्यते। सामानाधिकरण्येन गुणानामपि तदपृथक्सिद्धिलाभः। सा च तत्तद्गुणाश्रयद्रव्य द्वारेति पारम्परिकाभाव्या। वायोर्बलवत्ताहि प्राणापानादि रूपेण शरीरधारकत्वात्मिका। "बलवान-भवद्वायुरि"ति चोच्यते। प्रकृतिमारभ्यतत्कार्येषु सत्वादि गुणानुवृत्तावपि आकाशात्पूर्वं तत्कारणेषुभूताद्यादिषु इन्द्रियग्राह्य गुणान्तराभावात् प्रथमत आकाश एवतादृशशब्दाख्यैक गुणारम्भ इति। अथोत्तरोत्तरभूतेषु गुणाधिक्ये वैशेषिकादि सम्मति मप्याह—वाय्वादीति। इयांस्तुविशेषः—आकाशमारभ्यैव तद्गुणभूतशब्द-स्योत्तरोत्तरभूतानुवृत्तिरिष्यतेसिद्धान्ते। तस्यपञ्चभूतगुणत्वे पर्यवसानात्। वैशेषिकेतु तस्याकाशासाधारण-गुणत्वात् वायुमारभ्यैव तदीयस्पर्शस्योत्तरानुवृत्तिरनुमन्यत इति।

अत्र—सिद्धान्तिभिः पूर्वपूर्वभूतस्योत्तरोत्तरं तत्प्रति उपादानतास्वीकारात् उक्त युक्त्या पूर्वभूतगुणा उत्तरभूतेष्वनुवर्तन्त इत्युपपद्यतां तदाधिक्यम्, वैशेषिकमतेतु—तत्तत्परमाणूपादानकत्वकल्पनेन कथं वाय्वादिषु स्पर्शादि गुणवृद्धिरिति चिन्तनीयमेतत्। भूतेषु उक्तं गुणाधिक्यं बहुधोपपादयताम्मतान्याह—उत्तरोत्तरभूतेति। शब्दादीनां पञ्चानां गुणानां तत्तद्भूत प्रतिनियतत्वेपि श्रुत्याद्युक्तपञ्चीकरणेन परस्परं सम्मिश्रणसिध्या तत एवै-कस्यगुणोपरत्रोपलभ्यते यथा उष्णं जलमित्यादौ बह्निगुणो जले। ननु शब्दादीनां वाय्वादावुत्पत्तिः कल्प्येति भावः। न चैवं सति गगनेपिगन्धोपलब्धिरस्त्विवति वाच्यम्। आरोपेसति निमित्तानुसरणात्। न हि निमित्त-मस्तीत्यारोप इति न्यायात्। तत्रोपलब्धिरूपकार्यादर्शनेन कारणान्तर विरहप्रयुक्तसामग्री वैकल्योहनात्। अथैवं निर्वाहे पञ्चीकरण पश्चाद्भावितया तथोपलब्धेः, पूर्वमेवभूतेषु तत्तद्गुणव्यवहारे किन्निदानम्? किञ्च विरुद्धगुणोपलब्धौहि उष्णं जलमितिवन्निर्वाहः कार्यः। नत्वविरुद्धकार्यावगमे। ततस्तत्रकारणगुण

---

ஐந்து பூதஙகளையும் ஒன்றுடன ஒனறு பிணககும்போது—அவ்வோபூதங்களின சுய பாகம் பாதி—மற்ற நாலு பூதஙகளுடைய நாற்கூறு சேர்ந்துபாதி என்று கலபபதால—அதனில் விஞ்சியபாகம் பற்றி அநத அந்தசொலலாலே வியவஹாரம் உலகில நடககிறது மூன்று பூதங்களையும பிணைபபதாகச்சொன்னவிடம் ஐந்து பூதஙகளின் பிணைபபுக்கு எடுத துக்காட்டு, மூனறு பூதஙகளின பிணைபபைச சொலலுமிடஙகளில்—ஒரு பூதத்தின் தனித்த

யிருக்கையாலும், ப்ருதிவீயளவிலே தத்த்வபரிகணனை பர்யவஸிக்கிறது. பஞ்சீகரணம் பண்ணுமிடத்திலே "व्योम्नोऽर्धभागाश्चत्वार: वायुतेज:पयोभुवाम्। इत्यादिகளிற்படியே தன கூறு விஞ்சியிருக்கையாலே," वैशेष्यात्तु तद्वादस्तद्वार:," "त्र्यात्मकत्वात्तु भूयस्त्वात्" என்கிறபடியே ப்ராசுர்யத்தாலே வ்யவஹாரம் நடக்கிறது. த்ரிவ்ருத்கரணம் சொன்னவிடம், பஞ்சீகரணாதிகளுக்கும் உபலக்ஷணம். த்ரிவ்ருத்க்ருதாக்ன்யாதிகளில்

---

सजातीयगुणान्तरस्योत्पत्तिरेवोक्तरीत्यावरमिति वादमपि विनिर्दिशति—पूर्वपूर्वेति। आकाशादिकं शब्द तन्मात्रादिकञ्चयथायथमुपादानीकृत्य जातेन स्पर्शतन्मात्रादिना वाय्वादिजननात् तेषुकारणगत गुणसजातीय-गुणा उत्पद्यन्त उपलभ्यन्ते चेति सर्वमुपपन्नमित्याशय:। अथेतोपिलघुं पक्षं प्रदशयति—**करकैयिलिति**। यथा मेघोदरवर्तिजलेषुस्थितस्यैव स्वभावशैत्यस्य तद्विकृतिभूतवर्षोपलेष्वपि अनुवृत्त्योपलब्धि:, नतु तत्सजातीय शैत्यान्तरस्योत्पत्त्यादिकं तत्र कल्प्यते, तथैव प्रकृतेपि आकाशादौ स्थितस्य शब्दादेरेव वायुत्वादिकार्यावस्थाया-मप्यनुवृत्त्यादिकं भवतु। न त्वपूर्वोत्पत्तिरिति भाव:। त्रिष्वप्येतेषु पक्षेषु श्रेयान् चरम एव। अन्ते निवेशात्। "अवस्थितेरिति काशकृत्स्न" इति सूत्र सन्निवेशक्रमवत्। नन्वाकाशादि पूर्वभूतगुणानां शब्दादीनामुत्तर-भूतेष्वनवृत्तौ सर्वस्याप्येकतत्त्वत्वप्रसङ्ग:। उत्तरेषु वाय्वादिषु पूर्वमविद्यमानोद्भूतस्पर्शादिनूतनस्वभावोत्पत्त्या तेषान्तत्त्वान्तरत्वमिति चेत्, तर्हि पृथिवीपर्यन्तपञ्चीकृतपञ्चभूतै:—"पृथिव्या ओषधय इत्याद्युक्त व्यष्टिपदार्थे-ष्वप्यपूर्वस्य व्याधि प्रशमनशक्त्यादेरुत्पत्त्या तेषामपि तत्त्वान्तरत्वेन परिगणनापत्तरित्यत्राह—**अपूवस्वेभावेति**। अयमभिप्राय: अण्डसृष्ट्युत्तरभाव्योषध्यादि पदार्थेष्वपूर्वस्वभावविशेष दर्शनेपि न तदेव तत्त्वान्तर परिगणने निरपेक्षो हेतु:। अपितु तस्मिन् सति, पूर्वावस्थातत्स्वभावादि प्रहाणमपि। तथाचोषध्यादिषु पृथिवीत्वतत्स्व-भावादि प्रत्यभिज्ञानेन न पूर्वावस्थाप्रहाणादिकमिति नतेषां तत्त्वान्तरत्वमिति। तत्रैव कारणान्तरमप्याह—**इवै एण्णि इति**। समष्टि विषयपदार्थानां पारीमितत्वेन संख्यातुं योग्यत्वेपि, न तथाव्यष्टि पदार्था इत्यपरिगणनं तेषामित्यर्थ:। तर्हि तत्त्वपरिगणनाया: कियानन्त इत्यत्राह—**पृथिवीयळविले** इति। पृथिव्यु-त्तरजात पदार्थजातस्य पृथिवीत्वस्वभावाद्यपरित्यागेन तावत्पर्यन्तमेव तत्त्व परिगणनेत्यर्थ:। नन्वेकस्मिन्नपि भूते भूतान्तराणा सद्भावेन सर्वभूत साङ्कर्यादाकाशादि प्रतिनियतभूतव्यवहारो नस्यात्। साङ्कर्येपि भूयोभागमादाय

---

குணம மற்றொனறில் தோன்றுவதறகுக காரணம்—இவவிரு பூதஙகளுடைய இணைப்பே என்று சுருதிகூறியுள்ளது. அதுபோலவே— ஆகாயத்தில் நீல நிறம், வாயுவில் மணம் குளிரசசிகள, நெருபபில் வெண்மை கருமைகள், ஜலத்தில் கருமை துவர்பபுகள், பிருதிவி யில உஷணம முதலியனதோனறுவதறகும் வேறுபூதங்களின் கூட்டுறவே காரணம் என்று சாஸ்திரம், அநுபவம் முதலியவற்ருலே அறியலாம். பஞ்ச தனமாததிரைகளிலே பிணைப்பை

भूतान्तररूपம் ஸம்ஸர்க்கத்தாலே தோன்றுகிறது என்று ச்ருதி சொன்ன ந்யாயத்தாலே ஆகாசத்தில் நீலத்வாதிகளும் வாயுவில ஸுரபிசீதத்வாதிகளும, வஹ்நியில சுக்லக்ருஷ்ணத்வாதிகளும், ஜலத்தில வர்ணரஸாந்த-ராதிகளும், ப்ருதிவியில் உஷ்ணத்வாதிகளும் பஞ்சீகரணாதிகளடியாகவந்த பூதாந்தரஸம்ஸர்க்கத்தாலே

---

व्यवहारव्यवस्थेति चेत्, कुत्रकस्यभागस्यभूयस्त्वमित्यत्र नियामकाभावादित्यत आह—**पञ्चीकरणेति**।" एवं जातानिभूतानि प्रत्येकं स्युर्द्विधाततः। चतुर्धाभिन्नमेकैकं अर्धमर्धं तथा स्थितम्। व्योम्नोर्धभागश्चत्वारोवायुतेजः पयोभुवाम्। "इति श्लोकक्रमः। एकैकमर्धं चतुर्धाभिन्नं, अर्धं-अर्धान्तरन्तु तथैव अविभक्तं स्थितमित्यर्थः। तथा च तत्त्वमुक्ताकलापः" द्वेधाभूतानिभित्वा पुनरपिचभिनत्त्यर्धमेकं चतुर्धा तैरेकैकस्यभागैः परमनुकलयत्य-र्धमर्धं चतुर्भिः। इत्थं पञ्चीकृतैस्तैर्जनयतिसपर इति।

वैशेष्यादिति शारीरकद्वितीयाध्यायान्तिमसूत्रम्। अत एव सूत्रान्तिमपदस्य द्विरुक्तिः। तत्तद्भूत-भागवैशेष्यात्—आधिक्यात्तत्तद्भूतव्यपदेशः। त्र्यात्मकत्वादिति तत्रैवतृतीयाध्याय प्रथमपादस्थम्। "वैशे-यादि"त्यत्रोक्तं" "प्राधान्येन व्यपदेशाभवन्तीतीमं न्यायं—" आपः पुरुषवचसोभवन्तीत्यत्र प्रकृते अप्शब्दे-योजयति इदं सूत्रम्, देहारम्भकेषु पदार्थेषु अपामेव बाहुल्यं नत्वन्यस्येति बोधयितुम्। अतो न पुनरुक्तिः। त्र्यात्मकत्वात् एकैकस्यापि भूतस्य त्रिरूपत्वात् जीवो भूतसूक्ष्मैस्सर्वैरेव परिवृतोगच्छति। देहारम्भकेषु धातुषु अपामेवभूयस्त्वात् "आपः पुरुषवचसो भवन्तीति तेषामप् शब्दवाच्यत्वमिति पञ्चम्यन्तद्वयस्य साध्यद्वयेना-न्वयादेवं सूत्रार्थः पर्यवसन्नः। अथाप्युक्तसूत्रस्य त्रिवृत्करणमात्रविषयत्वेन पञ्चीकृतभूतादौ व्यवहारनियमे व्यवस्थापकंकिमित्यत्राह—**त्रिवृत्करणमिति**। छान्दोग्येभूतत्रयस्य, तैत्तरीये पञ्चभूतानां, सुबालोपनिषदादौ-सप्ताष्टतत्त्वानां महदहङ्कारादीनामपि सृष्टिप्रतिपादनात् सर्वशाखाप्रत्ययन्यायेन सैकण्ठयाय छान्दोग्योक्तं त्रिवृत्करणमन्येषामुपलक्षणमिति, तदभिप्रायेण प्रवृत्तं ब्रह्मसूत्रमपि पूर्वोक्तं तथैवेति च भावः। आदिना सप्तीकरणादेर्ग्रहणम्।

---

ஏற்படுத்தி, அப்படி இணைந்த அம்சங்களை ஆகாயம் முதலியனவென்கிறோம் என்று சிலர் சொல்லுவது, தத்துவமித்தனை என்று கணக்கிடும் சுருதிகளுக்கும் மற்ற வசனங்களுக்கும் சேராது.

இப்பூதங்கள ஐந்தில்—ஆகாயம் என்பது மற்றவற்றுக்கிடம் தரும். அதாவது— ஸ்பரிசமுடைய கனமான பொருள்களோடு மோதிக்கொள்ளாது. இந்த நிலைமை ஆகாயத் துக்கு முன்புள்ள தத்துவங்களிலும் ஒக்கும். ஆகாயமென்னும திரவியமே கிடையாது

தோன்றுகிறன என்னுமிடம் ஆகமோபபத்திகளாலேயறிந்துகொள்வது தன்மாத்ரைகளிலே பஞ்சீகரண-மாக்கி பஞ்சீகரித்த அம்சங்களை ஆகாசாதிகள் என்கிறது என்று சிலர் சொல்லுமது தத்வபரிகணனை பண்ணுகிற ச்ருதிஸ்ம்ருதிபுராணாதிகளுக்குச்சேராது.

---

अथ "नीलं नभ" इत्यादौ एकभूतासाधारणगुणस्य भूतान्तरवृत्तित्वप्रतीतिं निर्वहति—त्रिवृत्कृतेति। पूर्वं उत्तरोत्तरभूतेषु पूर्वपूर्वभूतसंसर्गेत्यादिनाग्रन्थेन साधारणानां स्पर्शादीनां गुणानां प्रतीति निर्वाहो दर्शितः। इह्त्वसाधारणानामिति न पुनरुक्तिः। भूतान्तररूपं—भूतान्तरस्यजलादेरसाधारणं शौक्ल्यादिरूपम्। संसर्गेण: भूतान्तरसंसर्गेण। छान्दोग्ये सद्विद्यायां—"यथातु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैकाभवति, तन्मे विजानीही" त्यारभ्य—"यदग्नेरोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्येति श्रूयते। ततश्चत्रिवृत्करणेनाग्नौ जलाद्यसाधारण शुक्लतादि प्रतीतिवत्, पञ्चीकृताकाशादि भूतेष्वपि पृथिव्यादिसंसर्ग मूलकतदसाधाण नीलादिप्रतीत्युपपत्तिरिति भावः। भाषितं हि—"यदग्ने रोहितं रूपं तेजसस्तदपामपि। शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता। श्रुत्यैव दर्शिता तस्मात्सर्वं सर्वत्र सङ्गता" इति। ततश्चैक-भूतासाधारण गुणस्य भूतान्तरे वृत्तितयोपलब्धिमात्रमेव। नतु तत्रोत्पत्तिरपीति बोध्यम्। तथा च सर्वार्थ-सिद्धिः—"तदेवं नीरूपस्यापि नभसश्चाक्षुषत्वं निर्विघातम्। भाष्येत्वस्य पञ्चीकरणेन रूपवत्तयाचाक्षुषत्वा-विरोधवचनं वैभवात्स्या"दिति।

आगमः पूर्वोक्तछान्दोग्यादिः। उपपत्तिश्चतत्त्वमुक्ताकलापोक्ता—"शब्दाद्यास्तत्तदक्षप्रतिनियतिजुष-स्सर्वतन्त्र प्रसिद्धाः तैरेकव्यादिसंख्यैर्युपवनहुतभुग्वारिभूम्यस्समेताः। पञ्चीकारादिनैषां विनिमितगुणता व्योमनैल्यादिबोधे, तद्योगात्तत्र तत्तद्गुणजनिरितिचेन्नान्यथात्रोपलब्धे"रिति। अत्रभूम्य इतीकारान्तत्वम्। विनिमितेति—"मेङ् प्रणिदान इति धातोः क्तप्रत्ययान्तं पदम्। प्रणिदानं विनिमयः। एतदुपपत्त्यनङ्गी-कारे जपाकुसुमोपरक्तस्फटिकेपि श्वैत्यविरुद्धरक्तिमोत्पत्त्यापत्तेः। अथात्रप्रसङ्गात् मतान्तरमप्याह—तन्मात्रै-

---

என்றும், இருந்தாலுமிது கட்புலனாகாது என்றும், இது நித்தியமாய், பாகப்பிரிவினையற்றதாய் ஸர்வவியாபியாய் இருக்கும் என்றும், சாருவாகர், பௌத்தர், வைசேஷிகர் முதலானோர் சொல்லுவது—அநுபவம், பொருத்தம், பிரமாணங்கள் இவைகளோடு விரோதிக்கும். இந்த ஆகாயத்தை—ஸர்வ இந்திரிய பிரத்தியக்ஷத்தால் அறியலாம் என்று சிலர் சொல்வதற்கு—ஸர்வபேருடைய இந்திரியத்தால்—அதாவது கண்ணால் காணலாமென்று தான் கருத்து. வாயு முதலிய நான்கு பூதங்களும் தோலால் தொட்டு அறியலாகும். "வாயுவின் ஸ்பரிசம் மட்டும் தான் தொட்டு அறியக்கூடிது. வாயுவை அதனாலே ஊஹித்துத்தான் அறிய-

"ஆகாசம் முதலிய பஞ்சபூத நிரூபணம்"

இப்பூதங்களில் ஆகாசம் अवकाशप्रदानம் பண்ணுகையாவது स्पर्शवद्द्रव्यங்களுக்கு प्रतिहति பண்ணுதொழிகை இது पूर्वतत्त्वங்களுக்கும் तुल्यம். आकाशமென ஒரு तत्त्वமில்லை என்றும், இது अतीन्द्रियமென்றும், இது नित्यनिरंश विभुவாயிருக்கிறது என்றும் बौद्धचार्वाक वैशेषिकादिகள் சொல்லுமது उपलम्भयुक्त्यागम विरुद्धம் இத்தை सर्वेन्द्रियप्रत्यक्षवेद्यமென்று சிலர் செல்லுவதற்கு सर्वருடையவும் इन्द्रियप्रत्यक्षवेद्यமென்று பொருள்கொள்ள प्राप्तம். "अन्यश्चराजन् स परः, तथान्यः

कलिले इति। पूर्वोक्तं पञ्चीकरणं तन्मात्रेष्वेव। तत्र पञ्चीकृतांशसद्भावात्तान्येव तन्मात्राण्युच्यन्ते इति। तदेतद्दूष्यते—तत्त्वपरिगणनेति। "अष्टौ प्रकृतय इति श्रुतिः, उपात्तभारतयमस्मृत्यादिः, विष्णुपुराणवचनञ्चभाव्यमिह। तथा च भूतानां तन्मात्रकार्यभूततत्त्वान्तरत्वानभ्युपगमे भूतादितः युगपदुद्भूत तन्मात्राणां केवलविकृतित्वेनाव्यक्तादयस्तिस्र एव प्रकृतय इति तदष्टत्वश्रुत्यादि विरोधः। तन्मात्राणा पौर्वापर्येणोत्तरोत्तरोपादानत्वेपि गन्धतन्मात्रस्यैतन्मते किञ्चित्प्रप्यतथा विधतया केवलविकृतित्वं दुर्वारमिति पूर्वोक्तविरोधस्तदवस्थ एव। सिद्धान्तेतु गन्धतन्मात्रतोतिरिक्त पृथिव्याख्यभूतसंभवात् तन्माात्राभूतविभागानादरेण प्रकृत्यष्टत्वोपपत्तिरिभावः।

एवमियता प्रबन्धेन तन्मात्रभूतपरीक्षां विधायाथाकाशतत्वं शोधयति। ननु पञ्चभूतेषु आकाशाख्यतत्त्वाङ्गीकारेकिम्मानम्? स्पर्शवद्वाय्वादि द्रव्याणां सदागतिमतामवकाशदानायाकाशाख्यं द्रव्यमावश्यकमिति चेत्, तर्हि तेनावकाशदानं नामकिमभिप्रेतम्? किं किञ्चिदस्ति तेन दीयमानमवकाशाख्य द्रव्यम्? इत्यत्राह—इभ्रूभूतङ्कलिलिति। यथा कुड्यादि स्पर्शवद्द्रव्यं तादृशद्रव्यान्तरसञ्चारं प्रतिबन्धाति, न तथाऽऽकाश इति स्पर्शवद्द्रव्यगत्यप्रतिबन्ध एव तदीयमवकाशदानमिति अवकाशाख्यद्रव्यान्तराभावेऽपि नानुपपत्तिरितिभावः। नन्वाकाशस्यैवचेत् गत्यप्रतिबन्धकत्वरूपमुपकारकत्वम्, तर्हि ततः पूर्वतनानां प्रकृत्यादि द्रव्याणां तत्प्रतिबन्धकत्वमेवोक्तं भवति। न चेष्टापत्तिः। तथा सति विदुषो मुमुक्षोर्देहादूर्ध्वमुत्क्रान्तौ प्रकृत्याद्यतिलङ्घ्याप्राकृत पदाधिरोहणासम्भवादित्यत्राह—इदुपूर्वतत्त्वेपि। वायुप्रभृत्येन स्पर्शगुणोदयात् ततः प्राक्तनतत्त्वानां प्रकृत्यादीनां सर्वेषामयमाकारस्तुल्य एव। अथापि आकाशेतादृगाकारः प्रसिद्धोविलोक्यते, सएव आकाश इत्यस्या-

வேணும்" என்ற வைசேஷிகர்களுக்கு தேஜஸ்ஸு முதலியவற்றிலும் இப்படியே கொள்ள வேண்டிவரும். ஆனால்-அவர்கள் அங்குஸ்பரிசமும் அதனுடைய இருப்பிடமான திரவியமும் இரண்டும் இந்திரியத்தால் அறியப்படுகிறதென்று மாறுபடச்சொல்லுகிறார்கள். தமஸ்ஸு என்னும் இருளின் விஷயத்தில் பலர் பலவிதமாகச்சொல்லுவர். பிருதிவியின் பாகங்களிலுள்ள நீலவர்ணம் மட்டும்தான் இருள்என்று தோன்றுகிறது. அல்லது—தமஸ்ஸு—இருள

வாய்வாதிகள் நாலுபூதங்களும ஸ்பர்சன ப்ரத்யக்ஷங்கள். வாயுவில் ஸ்பர்சமாத்ரமே ப்ரத்யக்ஷம், த்ரவ்யம் அநுமேயமென்னும வைசேஷிகருக்கு தேஜ: ப்ரப்ருதிகளிலும் ஸ்பர்சரூபாதி குணங்களே ப்ரத்யக்ஷங்களென்ன ப்ரஸங்கிக்கும். தம: ப்ரதீதியில பார்த்திவாவயவங்களுடைய நைல்ய குணமாத்ரமே ப்ரகாசிக்கிற தென்பாறகும், தமஸ்ஸு என்று ஒரு

---

क्षरार्थश्चेति अत्र तदुक्तिः । अवकाशं ददातीतिह्याकाशसंज्ञेति हृदयम् । ननु यथाकाशेनदेयमवकाशाख्यं द्रव्य किञ्चिन्नास्तीत्युच्यते, तथा ततोपिवरमाकाशमेवनास्तीतिवादः । तुच्छत्वेनैवतस्य प्रतीतेरिति परेषाम्मतमपाकरोति —**आकाशमिति** । बौद्धेषु चतुर्षु माध्यमिकास्सर्वशून्यवादित्वात् आकाशं स्वरूपेणैव नाभ्युपयन्ति । योगाचारा अपि ज्ञानमात्रास्तित्ववादात्तथा । सौत्रान्तिकास्तुघटादिबाह्यार्थं ज्ञानाकारानुमेयं वदन्तोपि गगनं नाङ्गीचक्रुः । वैभाषिकाश्च, काल्पनिकविचित्रकलापेषु परिच्छेदादाकाशधातुभ्रमं वदन्तीति खपुष्पवत्तुच्छमेवाकाशं तेषामपि । चार्वाकाणामपि पृथिव्यादि चतुर्धातुवादः प्रसिद्ध एव । वैशेषिका आहुः — आकाशमतीन्द्रियम् रूपरहितत्वात् बाह्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्यकारणात्वात् वायुवत् । ध्वंसाद्यदर्शनान्नित्यम् , निरवयवत्वान्निरंशम् सर्वमूर्तद्रव्यसंयोगित्वाद्विभ्वितिच । चक्षुरुन्मीलनक्षण एव विना व्यासंगादिग्रहणं झटित्यापामरं "अयमाकाशः — नीलं नभ इत्यादि प्रतीतिरुपलब्धिः । नीरूपस्यापि प्रत्यक्षत्वोपपत्तिः पूर्वमेवोक्तायुक्तिः । आत्मन आकाशस्सम्भूत इत्यादिरागमः । **विरुद्धमिति** । उत्पत्तिश्रवणात् पञ्चीकरणादिनांशवत्त्वात् महदहङ्कारादि प्रदेशेष्वभावाच्चनाकाशस्य नित्यत्वनिरंशत्वविभुत्वादिकमितिभावः । नन्वाकाशस्सर्वेन्द्रियवेद्य एव ।" गन्धस्सन् रसस्सन्" इत्यादौ कालसम्बन्धित्वरूपसत्ताघटकतया कालस्येव, "इहगन्धः इहरस" इत्यादौ सर्वाधारतयाऽऽकाशस्यापि प्रत्यक्ष भानादितिकेषाञ्चिद्वादं तात्पर्यतो निर्वहति — **इत्थं सर्वेन्द्रियेति** । कालस्येवास्य सर्वाधारतयां प्रमाणाभावात् "नीलं नभ" इति चाक्षुषप्रत्यक्षमात्रविषयत्वप्रसिद्धेश्च "सर्वेन्द्रियवेद्य"- मित्यस्य - सर्वेषामपि चाक्षुषप्रत्यक्षवेद्यमित्यत्रैव तात्पर्यं, नतु सर्वैरिन्द्रियैः प्रत्यक्षवेद्यमित्यत्रेति भावः । इदं कस्यचिदासस्य वचनमिति प्रतिभाति । अन्यथा—आचार्यैस्तत्तात्पर्यवर्णनायोगात् । ननु—यद्याकाशस्सर्वेषां चक्षुः प्रत्यक्षमात्रवेद्यः, तर्हि वाय्वादिरपि किं तथा ? नेत्याह—**वाय्वादीति** । वायौ तत्कार्याग्न्यादिषु च स्पर्शगुणसत्त्वेन स्पार्शनप्रत्यक्षवेद्यत्वमपि तेषां भवतीत्यर्थः । अथवायोरनुमेयत्वमेवेति वैशेषिकसरणिं निरस्यति— **वायुविलिति** । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे उद्भूतरूपस्यकारणतया वायौ तदभावात् तस्यातीन्द्रियत्वम् ।

---

என்று ஒரு தனித்தத்துவம் உள்ளது. வெளிச்சமில்லாதபோது விவரம்புரியாத ஒரு நீலவர்ணத்தோற்றமே இருள் இத்யாதி. இவை எல்லாம் உலக அநுபவத்திற்கு முறணானது தனித்துக்கட்டவேண்டிய சுமையுடையது.

द्रव्यान्तर மென்பார்கும், चाक्षुषप्रत्यक्षाभावदशैयிலே नीलरूपस्मृति प्रमेषிம் என்பார்க்கும், उपलम्भविरोध-कल्पनागौरवादिदोषம் வரும். இப் பூதங்கள் पञ्चीकरणादि प्रक्रियैயாலே சேர்ந்து कर्मविपाकानु குணமாக

---

तद्गतस्पर्शस्तूद्भूतत्वात्स्पर्शनेन गृह्यते । तेन सोनुमीयते । योयं वायौ वातिसति अस्मद्देहादिष्वनुष्णाशीतस्पर्श उपलभ्यते सक्वचिदाश्रितः गुणत्वाद्रूपेवत् इति सामान्यतस्थिते—उद्भूतस्पर्शवत्पार्थिवद्रव्यस्योद्भूतरूपवत्त्व-नियमात् तस्य पार्थिवत्वानुपपत्त्या, अनुष्णाशीतस्पर्शवत्त्वेन जलतेजोरूपत्वस्याप्यसंभवात्, विभुगुणत्वे तदीयस्पर्शस्यसर्वत्रोपलब्धिप्रसङ्गेन विभुद्रव्यभिन्नत्वात् मनोगुणत्वे तदणुत्वेनाप्रत्यक्षत्वापत्त्याच परिशेषात् वाय्वाख्यातिरिक्तद्रव्यसिद्धिरितितदाशयः । तदेतत्प्रतिबन्धानिराह—**तेजः प्रभृतीति** । तेजोजल पृथिवीत्यर्थः । तत्रापितद्गुणारूपस्पर्शादय **एव** प्रत्यक्षाः तदाश्रयद्रव्यन्त्वनुमेयमिति तुल्यन्यायात्किन्नस्यादित्यर्थः । वस्तुतस्तु-चाक्षुषप्रत्यक्षे उद्भूत रूपमिव स्पार्शन प्रत्यक्षे उद्भूतस्पर्श एव कारणं इति यथायर्थंकल्पनीयम् । अन्यथा बहिरिन्द्रियजन्य द्रव्यप्रत्यक्षमात्रे उद्भूतस्पर्श एव कारणमिति हठात्कृत्य वातायनविवरवृत्त्यालोकादेरप्य प्रत्यक्षत्वं स्यादितिनिगर्वः । तथा च वायुः प्रत्यक्ष एवेतिसिद्धम् ।

एवमाकाशवाय्वोः प्रत्यक्षत्वं प्रसाध्य तेजः प्रभृतिषु तद्विवादाभावात् विवादपदं तमः प्रत्यक्षत्वं साधयति—**तमः प्रतीतियिलिति** । **पार्थिवावयवेति** । वियति विक्षिप्तानां सूक्ष्माणां पार्थिवावयवानां कृष्णगुण एव नीलं तम इति प्रकाशत इति नैल्यगुणमात्रं तम इति केषाञ्चित्पक्ष इत्यर्थः । मात्रेति तदाश्रय-द्रव्यव्यावृत्तिः । "तमः खलु चलं नीलं परापरविभागवत् । प्रसिद्ध द्रव्यवैधर्म्यान्नवभ्योभेत्तुमर्हती"ति नैल्या द्याश्रयभूतं नवद्रव्यातिरिक्तं द्रव्यमेवतथाभासत इति **भाट्टाः** । स्पर्शशून्यत्वान्नवाय्वादि चतुष्टये, नीलरूप-वत्त्वान्नाकाशादिपञ्चकेचान्तर्भूतं तम इति तदतिरेकसिद्धिः । चाक्षुषप्रत्यक्षाभावदशा आलोकाभावदशा । आलोकाभाव एव तम इति **वैशेषिकाः** । तन्नयुक्तम् । तमसो भावत्वेनैव स्फुरणात् इति तदुपेक्ष्य **प्राभाकराः**—तद्दशायां यो नीलरूपस्मृति प्रमोषः प्रागनुभूतनीलरूपविषया प्रमुषिताश्रयतत्तांशा यास्मृतिः सैव तमः प्रतीति-रिति नीलरूपाश्रयातिरिक्त द्रव्यविशेष एवतम इति प्राहुः । एवमनूदितं पक्षत्रयमपि दूषयति—**उपलम्भ-**

---

இவவைநது பூதங்களும் பிணைநது, அவரவர் விதிவகையால் மனிதர் காலம் இவை களின் வேறுபாட்டால் அவ்வோபோககியப் பொருள்களாகவும், போக உபகரணங்களாகவும், போகமுண்டாமிடமாகவும் போகம் சுரக்கும் உடல்களாகவும் பிரிந்துதோன்றும். இங்கு சிலர் புத்கலம் என்றீ ஒரே இனமாகிய அணுக்கூட்டம்—பிருதிவியில் திரவம் கடினம் என்று வேறு வேறு நிலைகள் வருவதுபோல்—மாறி மாறி வருவதால் ஐம்பூதததன்மைகளை அடை-

पुरुष भेदத்தாலும், கால भेदத்தாலும், भोग्य भोगोपकरण भोगस्थान भोगायतनங்களாய்க் கொண்டு பரிணமிக்கும். புத்கலமென்று ஒரு एकजातीय-द्रव्यமாய், இது, पर्थिव द्रव्यங்களிலே द्रवकाठिन्याद्यवस्थैபோல்

---

विरोधेति । उपलम्भस्तु नीलंतमश्चलतीत्यादि रीत्यैति केवलं तमसो नैल्यमात्रत्वे तद्विरोधोभवति । कल्पनागौरवन्तु अतिरिक्ततमोवादि भाट्टप्राभाकरयोर्मत इति क्लृप्तद्रव्येष्वेव क्वचित्तमसोन्तर्भाव उचित इति भावः । तत्र तमसोऽबाधित नीलरूपवत्त्वात् पृथिव्यामन्तर्भाव इति न्यायसिद्धाञ्जने आचार्याः प्रतिपद्यन्ते । स्पर्शवद्द्रव्याप्रतिहत्यास्वच्छत्वेनचाकाशेऽन्तर्भवति तमः । तस्मिंश्च पञ्चीकरणादिनापिरूपोपलब्ध्युपपत्तिरिति अथवा—गन्धरसाद्यभावेसति रूपवत्त्वात्तेज एवतमः । तेजस्त्वेपि इन्द्रनीलादिरत्न प्रभायामिव नैल्यस्य स्पर्शाभावस्यचोपपत्तिरिति च श्रुतप्रकाशिकाचार्या दर्शयन्ति । मूल प्रकृतेरेवाक्षराद्यवस्थावदिदमवस्थान्तरमस्तु तम इति भट्टपराशरपादपक्षः । इदञ्चप्रौढिवाद मात्रमिति न्यायसिद्धाञ्जनेऽभ्यधायि । अबाधित नीलरूपवत्ता प्रत्ययात्, सप्तीकरणादिनापि अहङ्कारादि पर्यन्तमेव रूपवत्तासिद्धेः प्रकृतेस्सर्वथा तदसम्भवादिति । इदं सर्वमभिसन्धायैव वरदगुरुभिरन्वग्राहि—"तमोनामद्रव्यं बहळविरळं मेचकं चलं प्रतीमः केनापि क्वचिदपि न बाधश्चददृशे । अतः कल्प्योहेतुः प्रमितिरपिशाब्दी विजयते निरालोकं चक्षुः प्रथयतिहि तद्दर्शनवशादि"ति । द्रव्यमिति साध्यनिर्देशः प्रतिज्ञा । तत्र हेतुः—प्रतीम इत्यन्तम् । हेतुद्योतकं यत इत्यादिकं पूरणीयम् । बहळत्वविरळत्वे यथायथं तत्र तत्र भूयोवयवत्व स्वल्पावयवत्वे । मेचकं नीलं चलमिति विशेषणद्वयकर्मधारयः । तेन तस्य गुण क्रियाश्रयत्वं दर्शितम् । तस्याबाधितत्वमप्याह—केनापीति । तर्हि कथं तस्यभूयोभिरवयवैः दीपनिर्वाणकाल एव युगपत्सौधोदर व्यापित्वम्? तेजोभावरूपतायान्तु युगपत् प्रतिबन्धकतेजोनिवृत्त्या तदुदयस्संभविष्यतीत्यत्राह—अतः कल्प्य इति । प्रदीप प्रभाया इव तमसोपि शीघ्र प्रसरण हेतु स्वभावविशेषः कल्प्यत इत्यर्थः । "तमस्ससर्जभगवानिति साक्षाच्छ्रुतिशब्द एव प्रत्याययति तमस्सद्भावमिति—प्रमितिरपि शाब्दी स्यादेरर्थः । तर्हि तस्यालोकनिरपेक्षं कथं चक्षुषाग्रहणमिति चेदाह—निरालोकं चक्षुरित्यादि । अनुभवानुगुण्येन घटादिदर्शन आलोकसापेक्षत्वस्येवास्यालोकनिरपेक्षताया अपि दर्शने स्वीकार्यत्वमित्यर्थः ।

---

கிறது என்று சொல்லுவர். இது கேட்பதற்கு சிக்கலில்லைபோல் தோன்றினாலும்—திரிகுணம் என்கிற பிரகிருதியிலிருந்து அடைவே பஞ்சபூதங்களின் பிறப்பைச்சொலலும், குற்றமற்ற குணங்கள் கொண்ட மறுக்கவொண்ணுத வேதவாககியங்களுககுச் சேராது. போகம்துய்ககுமிடமான உடல்கள். தேவர், மனிதர், விலங்கு, தாவரம் என்று நான்கு வகையாக இருககும். சில இடங்களில் நான்காவது வகையை—நரகிலவாழும் ஜன்மமாகவும்--தாவர ஜன்மமாகவும் கூறியிருந்தாலும்—ஒன்றுக்கு மற்றென்று எடுத்துக்காட்டென்று கொளளவும். கோணல்

अनियतமாகவருகிற पृथिव्यप्तेजो वायुरूपावस्थைகளை யடைகிற தென்பார்க்கு कल्पनालाघव முண்டாகிலும், त्रिगुण द्रव्यத்தினுடைய नियतक्रमभूतसृष्टि சொல்லுகிற नित्यनिर्दोष दुरपह्नवशास्त्रங்களாலே बाधं

---

एवं परिणताना पञ्चभूतानां प्रयोजनवत्तां प्रदर्शयति—इभ्भूतञ्जलिति। शेन्दु संहतत्वं समागतत्वञ्च प्राप्य। पृथक् स्थित्यर्हं तदनर्हञ्च संयोगद्वयं क्रमेण गत्वेति यावत्। "नानावीर्याः पृथक भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजास्स्रष्टुमसमागम्यकृत्स्नशः॥" इत्यत्र—संहति समागमाख्य दशाद्वयकीर्तनात्। भूतपरिणतिवैचित्र्ये हेतुः—कर्मविपाकेति। फलप्रदानानुगुणदशा विपाकः। पुरुषभेदः देवमनुष्यादि विशेषः। कालभेदः वसन्तादि ऋतुवैचित्र्यम्। देशभेदस्याप्यत्र साध्यत्वात्साधनकोटौ तस्यानुत्कीर्तनम्। भोग्यं शब्द स्पर्शादि। भोगोपकरणं इन्द्रियादि। भोगस्थानं चतुर्दशभुवनाख्यदेशः। भोगायतनं शरीरम्। अत्र जैनमतमनूद्यापाकरोति—पुद्गलेति। जैनमते—जीवधर्माधर्मपुद्गलकालाकाशरूपेण द्रव्यं षड्विधम्। तत्र पुद्गलं वर्णगन्धरसस्पर्शवत् परमाणुरूपमनन्तम्। परमाणवश्चैकरूपाः ननु वैशेषिकादीनामिव पृथिव्यादि नानाजातीयाः। एकरूपाणामेव तेषां सङ्घातदशाया पृथिव्यादिरूपेण परिणामोभवति। तत्र दृष्टान्तः पार्थिव द्रव्येष्वेवाज्य स्वर्णखण्डादिषु द्रवत्वकठिन त्वाद्यवस्थाः। अनियतेति—वैशेषिकाद्यभिमतनियतदशाभेदव्यावृत्तिः। कल्पनालाघवेति। महदहङ्काराद्यङ्गीकर्तृवेदान्त्यपेक्षया तदनङ्गीकारेण वैशेषिकाणां लाघवं प्रतीयते। ततोप्येकजातीय परमाणूनामेवानियतपृथिव्यादि दशाभेदाङ्गीकारि जैनानामिति अत्यन्तकल्पनालाघवमेषामिति भावः। तदेतद्दूषयति—त्रिगुणेति। यदिवयं प्रकृतितोमहदहङ्काराद्युत्पत्तिं युक्तया कल्पयामः तदैवमुपालभ्यामहे। नचैतदस्ति। किन्तु शास्त्रसिद्धत्वात्स्वीकुर्मः। न च तत्र लाघवयुक्तिः क्रमत इति भावः। एतादृशलाघव युक्तया वैशेषिकादिनिराकरणन्तु सुशकम्। तदुक्तं—"तर्कैकालम्बिगोष्ठ्यां भजतुबहुमतिं तादृशीलाघवोक्तिरिति। नियतक्रमेत्यादि। "आकाशाद्वायुः वायोरग्निरित्याद्यनुक्रमेण नियतपदार्थसृष्टीत्यर्थः। ननु "अबावृतमिदं सर्वं अद्भ्योऽग्निरुदपद्यत।"—अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमित्यादिना विपरीतक्रमोपि क्वचिच्छ्रु

---

வாதங்களால தாவரங்களில் ஜீவனில்லை எனருல் மனிதர்களிலும் உடலுக்குள் ஜீவன இல்லை என்று அதேபோல வாதிககலாம். ஆக இவ்விதம பஞசபூதஙகள் வரையிலான ஸர்வமான காரியப் பொருட்களும—பனையோலேயே சுருட்டபபட்டு காதணியாவதுபோலே—மாறுதலை யடைநதமுககுண பிரகிருதியே எனபது எலலா பிரமாணஙகளுக்கும பொருததமானது. பல பாகஙகள் சோநது மற்ருெரு தனிததொகுதியை (அவயவியை) உண்டாக்குகிறது, ஒன்று மற்ருென்றுபோல் தோனறிப் பொய்யாகப பிறக்கிறது, முனபே காரணததில் இளிக்

கண்டு கொள்வது. போகாயதனங்கள் தேவாதிபேதத்தாலே சதுர்விதங்களாய் இருக்கும். நாரகாந்தமாக வும் ஸ்தாவராந்தமாகவும் எண்ணின விடம், ஸ்தாவரநாரகங்களுக்கு உபலக்ஷணம். யுக்த்யாபாஸங்களாலே

---

यत इति चेन्न। तादृशवचनानामण्डसृष्ट्यनन्तरभावि व्यष्टिसृष्टिविषयत्वान्निमित्तकारणविषयत्वाच्च। विपरीतं किन्न स्यात्? इत्यत्र युक्तेश्शास्त्र प्राबल्यमाह—**नित्यनिर्दोषेति**। भोगायतन प्रस्तावात्तद्विभजते—**भोगायतनेति**। यदवच्छेदेनात्मनि भोगो जायते तद्भोगायतनम्। शरीरमित्यर्थः। तत् देवतिर्यङ्मनुष्यादि भेदेन चतुर्विधम्। नन्वत्रादि पदग्राह्यं चतुष्ट्वसंख्यापूरकं किन्नारकि शरीरम्? उतस्थावरशरीरम्। उभयथापिनिर्देशात्। यथाह **शौनकः**—"चतुर्विधोपि भेदोयंमिथ्याज्ञाननिबन्धन.। देवतिर्यङ्मनुष्याख्या राजन्नारकिनस्तथेति।" स्थावरान्तास्सुराद्यास्तु प्रजा राजन् चतुर्विधा इति पाद्मपुराणादौच। "सुरनरतिर्यक् स्थावरात्मक चतुर्विधदेहेति भाष्यञ्च। न चोभयमुभयत्रसमुच्चेयम्। संख्याधिक्य प्रसङ्गात् इत्यत्राह—**नारकान्तेति**। तथा च नारकस्थावरपदयोः परस्परार्थोपलक्षकत्वेनोभयत्रान्तर्भावान्नसंख्याधिक्यं नापितन्न्यूनतेति भावः। ननु स्थावरशरीरस्य भोगायतनत्व प्रत्यक्षप्रत्ययविरुद्धम्। मानुषादिवपुष्विवातिरिक्तचेतनाधिष्ठित्यनुपलब्धेरित्यत्राह—**युक्त्याभासेति**।

इदञ्चचार्वाकाधिकारे भविष्यति। स्थावरेष्वात्मापलापाय चार्वाकदुर्युक्तिं भिक्ष्यते चेत् तदीययैव दुर्युक्त्या गच्छत्स्वपि मनुष्यदेहादिषु सस्यादित्यर्थः। वस्तुतस्तु—स्थावरेष्वपि तदतिरिक्तात्मसद्भावः प्रामाणिकः। तथा च विष्णुपुराणं—"तयातिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषुभूपाल। तारतम्येनवर्तते॥ अप्राणिमत्सुस्वल्पासास्थावरेषुततोऽधिके"ति। अप्राणिमत्सु शिलाकाष्ठादिषु। एवञ्च न युक्तिमात्रेण किञ्चित्प्रतितिष्ठतीति शास्त्रैकशरणताश्रेष्ठेतिबोध्यम्। ननु विश्वस्मिन् जगति भोग्यादीनां बहुधोपलभ्यमानानां कथमेकप्रकृति द्रव्यरूपत्वम्? बुद्धिशब्दान्तरादिभिर्यावता भेदस्यैवावगमादित्यत्राह—**इप्पडीति**। भौतिकं घटादि। **पत्रताटङ्केति**। एकमेवदीर्घं ताळपत्रमुत्तरोत्तरमावेष्ट्यमानं ताटङ्कम् स्त्रीणां प्राक्काले कर्णयोः कुण्डलमभूत्। तत्र ह्यवस्थाभेदमात्रेण नामान्तरभजन कारक व्यापार सार्थक्यादि दृश्यत इति सर्वाविगीतम्।

---

திருந்து பிறகு வெளிப்படுகிறது, என்பதுபோன்ற கொள்கைகள் பிரமாணங்களுக்கு விருத்த மானவை. பிறப்பையும் இறப்பையும்—தோன்றல் என்றும், மறைதல் என்றும் பிரமாணங்கள் கூறுவதற்கும்—மாறிவரும் நிலைகள் என்றே கருத்து.

முக்குண பிரகிருதியில்—கடலில் நீர்குமிழிபோலவும் ஈச்வரனுடைய விளையாட்டுப் பந்துபோலவும், அவன் கைவழியாக விழுவதும் எழுவதுமான அண்டங்கள் பலவுண்டு. அவையத்தனையும் ஒரேஸமயத்தில் பிறப்பிக்கப்படுகின்றனவா? ஒன்றன்பின் ஒன்ருகவா?

ஸ்தாவரங்களில மோக்ஷக்களில்லை எனபார்க்கு ஜங்கமங்களிலும் தேஹாதிரிக்தமாக ஆத்மாயில்லை என்ன ப்ரஸங்கிக்கும். இப்படி மௌதிகபர்யந்தமான கார்யங்களெல்லாம் பத்ரதாட்டகாதிந்யாயத்தாலே அவஸ்தாந்த-

---

आदिना—"पटवच्च यथा च प्राणादि"रिति सूत्रोक्तदृष्टान्तान्तरविवक्षा।" वस्त्रे दीर्घैकतन्तुभ्रमणविरचिते"ति एतद्दृष्टान्त विवरणं तत्त्वमुक्ताकलापे। अवस्थान्तरापन्नेति। कारणात्कार्यस्यान्यत्वं वदन्तोपिह्यवस्थाभेदं स्वीकुर्वन्तीति सर्वसम्प्रतिपन्नावस्थाभेदमात्रेणैव बुद्धि शब्दान्तरकारकव्यापारसार्थक्याद्युपपत्तिरितिभावः। प्रत्यक्षेणातिरिक्तद्रव्यानुपलब्ध्या छान्दोग्यादावसत्कार्य वादनिराकरणेनच कार्यकारणयोरनन्यत्वमेव बहुप्रमाणानुगुणमितिभाव्यम्। अथ पक्षान्तरेषु प्रमाणविरोधमाह—अवयवीति। अवयवद्वयसंयोगादतिरिक्तावयवी जायत इति वैशेषिकादीनामवयविपक्षः। अतिरिक्तावयव्यनङ्गीकारेण परिणामविवर्ताभिव्यक्ति पक्षत्रयं भवति। तत्र प्रथमस्सिद्धान्तिनामिति अत्रनोद् भाव्यते। विवर्तपक्षोमायिनामिष्टः। अधिष्ठानात् विषमसत्ताकोन्यथाभावो विवर्तः। यथा व्यावहारिकसत्ताकात् रज्वादेस्तद्विषमप्रातिभासिकसत्ताकसर्पोपलब्धिः। परिणामपक्षे तूभयोस्समासत्ता, अभिव्यक्तावन्यथाभावोनास्तीति तयोर्वैलक्षण्यमस्माद्भवति। अभिव्यक्तिः पूर्वमेवस्थितस्याविर्भावः। अयं सांख्यपक्षः। "सौक्ष्म्यात्तदनुपलब्धेः कार्यदर्शनात्तदुपलब्धेश्चेति सांख्यसूत्रम्। आदिना" "व्यक्तयुल्लासौविसृष्टिं विकृतिमनियतां तत्त्वपङ्क्तौचसृष्टि" मित्याद्युक्तपक्षान्तराणामीषद्भिन्नानां ग्रहणम्। सर्वप्रमाणविरुद्धेति। "वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येवसत्यमिति श्रुतेः," नासतोविद्यतेभाव इत्यादि स्मृतीनाञ्चविरुद्धमित्यर्थः। अतिरिक्तावयविपक्षे युक्तिविरोधश्चसर्वार्थ सिद्धावेवं प्रादर्श्यत—"पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसम्भवे। पटपङ्क्तिस्समीक्ष्येत क्रमादाधिक्यशालिनी॥ प्राक्सिद्धानां पटादीनामुत्तरोत्तरजन्मनि। अहेतुको विनाशश्चस्थिरपक्षे न युज्यते॥ इति। सत्तात्रैविध्यानङ्गीकारात् प्रातिभासिकरजतोत्पत्तेरेवासिध्द्या च विवर्त पक्षोप्यप्रामाणिकः। कार्यावस्थाविशिष्टस्य पूर्वं कारणे सत्त्वञ्चानुभवविरुद्धं नक्षोदक्षममिति यथा यथं पक्षान्तरेषु दोषोभ्यूहनीयो भवति। अथ विष्णु पुराणादिषु अवस्थान्तरापत्त्यतिरिक्ताविर्भावादीनां धर्माणां

---

என்னில்? ஒரே ஸமயத்தில் என்னும் விடைதான் பல பிரமாணவசனங்களுக்கு ஒத்தது. வேதங்களின் ஸம்பிரதாய்த்தொடர்ச்சி அறுபட்டுப்போகும் எனறும் பயத்தாலே ஒரே ஸமயத்தில் எல்லா அண்டங்களுக்கும் பிறப்பும் பிரளயமும் கூடாது எனறும், காணுமை யாலே மூலபிரக்ருதி முதலியவைகள் வேண்டா வென்றும் நிரீசுவரமீமாம்ஸகர் சொல லுவர். அதுவும் வேதப்புறமதஙகள்போல் தவறு. மூல பிரக்ருதி முதலியவைகளையும் இசைந்து இருபத்தைந்தாவது தத்துவமான ஜீவனை மட்டில் ஒப்பியஸாங்கியமதமும், இருபத் தாருவதான ஈசுவரனும் உண்டு என்கிற நூற்றுக்கணக்கான வசநங்களுக்கு விருத்தம்.

ராதல் त्रिगुणद्रव्यம் தானே என்னுமிடம் सर्वप्रमाणानुगुणம். अवयविविवर्तमित्यवयाद्यादि पक्षங்கள் सर्वप्रमाण-विरुद्धங்கள். "आविर्भावतिरोभावजन्मनाशविकल्पवत्" इत्यादिகளுக்கு अवस्थान्तरापत्तியிலே तात्पर्यம்.

---

कीर्तनमपि तात्पर्यतो निर्वहति—आविर्भावेति। "तदेतदक्षयं नित्यं जगन्मुनिवराखिल"मिति पूर्वार्धम्। अक्षयं—"अनन्तस्य न तस्यान्तस्संख्यानं वापि विद्यते इति जीवानामसंख्येयत्वात् प्रतिसर्गमन्यूनम्" "अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा" इति प्रवाहरूपेण नित्यञ्चतदेतदखिलं जगत् आविर्भावतिरोभावावेव जन्मनाशौ, तद्वाविकल्पवदिति विष्णुचित्तीयव्याख्या। तथाचाविर्भावादि शब्देनावस्थान्तरापत्तिरेव-कीर्त्यत इति। अवस्थान्तरापत्तीति। घटत्वादिरूपैकैकाप्यवस्था पूर्वावस्थस्य विनाश इति स्वावस्थस्योत्पत्तिरिति च शब्दभेदेनव्यवह्रियते इति जन्मनाशादिकं सर्वमवस्थान्तरापत्तितो न व्यतिरिच्यत इत्यर्थः।

ननु भूतभौतिकानामुक्तमेकद्रव्यपरिणामत्वमयुक्तम्। अण्डानामनन्तत्वेन तदन्तर्वर्तिनान्तेषामनेक-द्रव्येभ्यस्तदातदोत्पत्तेरेव युक्तत्वात्। अण्डानामनेकत्वेपि तेषामेकद्रव्यपरिणामत्वं—अनेकेषामपिघटानामेक-मृद्द्रव्यपरिणामत्ववद्युज्यत इति चेत्, तर्हि मृदो घटा इव–किंयुगपदण्डानि स्वकारणाज्जायन्ते? अथ मातुरुद-रादिवापत्यानि, क्रमश इति शङ्कायां यौगपद्यपक्षमेव सम्यक्त्वेन कीर्तयति—त्रिगुणद्रव्येति। गुणत्रयसाम्ये वातादि धातुत्रयसाम्ये देहोपसंहार इव ब्रह्माण्डोपसंहारः, तेषां वैषम्येतु तद्युक्तप्रदेशे महदादि सृष्टिरिति द्योतयितुं त्रिगुणद्रव्येति निर्देशः। अण्डानामस्थिरत्वे दृष्टान्तः—समुद्रेबुद्बुदाः। "जलबुद्बुदवदि"त्यत्र "अनेनास्थैर्यं सूच्यत" इति हि विष्णुचित्तीयम्। भगवतोलीलारूपत्वे सुकरत्वे च दृष्टान्तान्तरम्—क्रीडा कन्दुकम्। अत्र "त्वंन्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः। हरे! विहरसिक्रीडाकन्दुकैरिवजन्तुभि"रिति वचन मभिप्रेतम्। ब्रह्माण्डेति। कर्मवश्यसमस्त चेतनाश्रयशरीरवत्त्वेन बद्धात्मसमष्टि पुरुषशब्दवाच्यः, "योब्रह्माणं विदधाति पूर्व"मिति परब्रह्मणः प्रथमजत्वेन, "सामीप्यात्तु तद्व्यपदेश" इति सूत्रोक्तरीत्याच ब्रह्मशब्दाभिधेयश्चभवन् चतुर्मुखः अण्डान्तः परिणताकाशादि भूतान्यधिष्ठाय कर्मानुगुणदेवादि चतुर्विधभूतजात भोगार्थं चतुर्दशभुवनानि निर्मिमाणः कृत्स्ननिर्वाहकतयातिष्ठतीति इदमण्डं तत्सम्बन्धितया ब्रह्माण्डमुच्यते।

---

ஆப்தர்கள் சொல்லும் இடங்களில் பரமாத்மாவை இருபத்தைந்தாவது தத்துவம் என்றே கூறினுலும் அதற்கு தாத்பரியம் வேறு இதை—இருபத்தைந்தாமவன் வேறு. பரமாத்மா வேறு ஆயினும் அவனுள் இவன் இருப்பதால் இவனே அவன-அவனே இவன் என்று மஹர்ஷி தெளிவாக வெளியிட்டார். ஈசுவரனே இருபத்தாறுவதாகவோ-அல்லது-இருபத்தேழாவதாகவோ எண்ணவேணுமென்று சுருதி சொல்லிற்று. மூலபிரக்ருதியினு

त्रिगुण द्रव्यத்திலே, समुद्रத்திலே बुद्बुदங்கள் போலவும் सर्वेश्वरனுக்கு लीलाकन्दकங்கள் போலவும், அவன் கைவழியாக விழுவதெழுவதாகிற ब्रह्माण्डங்களுடைய युगपत्क्रमसृष्टिपक्षங்களில் यौगपद्य-पक्षம் बहुप्रमाणानुगुणம். सर्वप्रमाणविरुद्धங்கள. "आविर्भावतिरोभावातन्मनाशतिकल्पवत्" इत्यादिகளுக்கு अवस्थान्तरापत्तियிலே तात्पर्यம் त्रिगुणद्रव्यததிலே, समुद्रததிலே बुदबुदங்கள் போலவும सर्वेश्वरனுக்கு लीलाकन्दकங்கள போலவும, அவன கைவழியாகவிழுவதெழுவதாகிற ब्रह्माण्डங்களுடைய युगपत्क्रम-सृष्टिपक्षங்களில यौगपद्यपक्षம் बहुप्रमाणानुगुणம் वेदसम्प्रदायविच्छेदभयத்தாலே युगपत्सृष्टिप्रळयादिகளை

---

युगपत्क्रमेति । अत्र "तदण्डं समभवत्" "महदाद्याविशेषान्ताह्यण्डमुत्पादयन्ति" "तदण्डमभवद्धैमं सहस्रांशुसमप्रभं" इति श्रुतिस्मृत्यादिषु सृष्टिप्रकरणे एकवचनान्ताण्डशब्दस्यैव प्रयोगात् एकदा महदादि-परिणामेपि—अण्डानां एकैकस्यैवेकैकदासृष्टिरिति क्रमेण बह्वण्डसद्भावाभिप्रायेण—"रोमकूपेष्वनन्तानि ब्रह्माण्डा निभ्रमन्तिते—आण्डानां त्वदुदरमामन्तिसन्त" इत्यादि वचनप्रवृत्तिरिति केचिदाहुः । अपरेतु—"एक-कालेऽभिसृज्यन्ते संह्रियन्ते च पूर्ववत् । अण्डानावरणैस्सहस्रमकरोः । इत्यादीनास्पष्टं अण्डानां बहूनां एकदासृष्टि श्रवणात्, तदण्डमभवदित्यादीनां समष्टिदशाभिप्रायाकतयापि निर्वाह इत्याशेरते । "एककाले" इत्यादि रीत्याविशिष्यकथयत् बहुवाक्यजातं यौगपद्यपक्षेविद्यमानं नान्यथानेतुंशक्यम् । अण्डमित्येक वचनन्तूक्तरीत्या समष्ट्यभिप्रायेणापिनेतुं शक्यमिति अनयोर्यौगपद्यपक्ष एव प्रकृष्यत इति भावः । नन्वण्डानांसर्वेषां एके-काण्डगत सर्वपदार्थानांवा न युगपत्सृष्टि सहारावुपपद्येते । "नकदाचिदनीदृशं जगदि" तिरीत्यानकोपिकालो-लोकशून्यः कालत्वादद्यतन कालवदित्यनुमानेन सर्वदाजगत्सद्भावसमर्थनात् । अत एववेदसम्प्रदाया विच्छेदसिद्धिः ।

अन्यथा कृत्स्नब्रह्माण्डनाशे तदन्तः पातिन्यः प्रजाः क्ववर्तन्ताम् । कुपितकपिकोषालान्तर्गतो दुम्बरफलान्तर्मशकसमूहवत् । ततश्चाध्यापकाध्याप्याद्यभाव एव । एवं जगतः प्रवाहनित्यत्वे मूलकारणान पेक्षणेनानुपलब्ध्याच मूल प्रकृत्यादिस्तत्त्ववर्गोऽपि विरमतामितिवादिनं मीमांसकं निरस्यति—वेदसम्प्रदायेति ।

---

டைய தமஸ்ஸு என்பது போன்ற நிலைகளில் ஏதாவதொன்றைத்தனித்து எண்ணினால் ஈசுவரன் இருபத்தேழாவதாகலாம். ஈசுவரனுடைய அந்தர்யாமி என்னும் நிலையைப்பிரித தெண்ணி அவனை இருபத்தேழாக்கலாம் எனறு சிலர் சொல்லுவது பொருந்தாது. தைத்தரீ யாதி உபநிஷதது கொண்டு ஆறு பூதங்கள் பிறப்பதாகச் சொல்லுவது வேறு உபநிஷததுக களுக்கு விருததம். தத்துவஙகளைச் சுருங்கச்சொன்ன இடததில் ஏறச்சொன்ன இடங்களைக் கூட்டி கணக்கிடவேணும். பாலிலிருந்து ஏடு படிகிறது, அதிலிருந்து கலசல் பிறக்கிறது,

யும், उपलम्भाभावमात्रத்தாலே மூலप्रकृति முதலிய तत्त्वங்களையும் இல்லை என்னும் निरीश्वरमीमांसकादि-கள் वेदबाह्निष्कृतர். இவற்றை இசைந்து पञ्चविंशति तत्त्वमात्रத்தைப்பற்றின पक्षம் षड्विंशप्रतिपादकங்களான परश्शत वाक्यங்களாலே बाधितம். आगमशास्त्रங்களில் சிலவிடங்களிலே पञ्चविंशकன் परमात्मा

---

इदञ्चतेषामस्थानभयशङ्कितामात्र ेत्र । जगतो युगपत्सृष्टिप्रळयाङ्गीकारेपि—"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्चे"ति सूत्रोक्तदिशा ईश्वरेण—"धातायथापूर्वमकल्पयदि"ति पूर्वकल्पस्मरणपूर्वक देवादि पदार्थ पुनस्सृष्टिसम्भावनया, अनित्यार्थसंयोगस्यच—"शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्यामि" त्यादिनापरिहारेण न कापि हानिरिति भावः । मीमांसकोक्तकृत्स्नाक्षेपपरिहारस्तु—"वर्षादिवद्भवोपाधिः वृत्ति रोधस्सुषुप्तिवत् । उद्भिद् वृश्चिकवद्वर्णामायावत्समयादय इत्युदयनग्रन्थे द्रष्टव्यः । युगपत्सृष्टिप्रळयौ द्विपरार्धाव-वसानादिषु उत्पत्तिविनाशौ । उपलम्भाभावमात्रेति मात्रपदेन–अनुपलब्धौ योग्यताविशेषणराहित्यं विवक्षितम् । मूलप्रकृतीति । केवलं प्रत्यक्षसिद्धत्वात्पञ्चभूतानिविना मूलप्रकृत्यादीनि मीमांसकैर्नाङ्गीक्रियन्ते । आगमद्वेषात् । अत एव तेषामर्धलोकायतिक संज्ञेति । वेदबहिष्कृतरिति । वेदपूर्वभागे देवताविग्रहादि निराकरणात् उत्तरभागप्रामाण्यस्यैवानङ्गीकाराच्च बौद्धादिवदवैदिकत्वमप्येषां भवतीतिभावः ।

अथ प्रसङ्गात्सांख्यपक्षमपि प्रत्याख्याति—इवरै इति । युगपत्सृष्ट्यादिकमित्यर्थः । पञ्चविंशतीति । सत्वरजस्तमसां साम्यावस्था प्रकृतिः । प्रकृतेर्महान् । महतोऽहङ्कारः । अहङ्कारात्पञ्चतन्मात्राणि उभयमिन्द्रि-यञ्च । तन्मात्रेभ्यो भूतानि । पुरुष इति पञ्चविंशतिर्गण "इति सांख्यसूत्रम् । मूले मात्रपदेनेश्वरव्यावृत्तिः । तथाच तत्रत्यं भाष्यं—"इत्येवं पञ्चविंशतिर्व्यूहः । एतदतिरिक्तः पदार्थो नास्तीत्यर्थ इति । तथैवान्यत्र च— 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमित्यङ्गीकारे ईश्वरप्रत्यक्षे नित्येऽव्याप्तिरितिशङ्कायामाह—ईश्वरासिद्धे रिती"ति—षड्विंशेति । परमात्मेत्यर्थः । मान्त्रिकोपनिषदि—"विकारजननी"मित्यादिना प्रकृतिप्राकृत-चतुर्विंशतितत्त्ववर्गं प्रस्तुत्य—"पिबन्त्येनामविषमामविज्ञाताः कुमारका" इति पञ्चविंशं जीवं निर्दिश्य— "एकस्तु पिबते देवस्स्वच्छन्दोत्रवशानुगां"—इति परमात्मानं प्रकृत्याह—"तं षड्विंशकमित्याहुरित्यादिना । एवञ्चेश्वरतत्त्वबोधकपरश्शतवाक्यप्रतिहतमेतन्मतमिति । ननु पञ्चविंशकजीवात्मातिरिक्तत्वात्परमात्मनषड्विंश-

---

அதிலிருந்து தயிர் தோன்றுகிறது என்றாலும், பாலிலிருந்து தயிர் தோன்றுகிறது என்றாலும் இரண்டுக்கும் பொருளில் வாசியில்லை என்றார்களல்லவா? இங்ஙன் கொள்ளாதபோது, ஸத் வித்தியையைச் சொல்லும் உபநிஷத்துப்படி, ஸத்து என்னும் ஈசுவரன், தேஜஸ்ஸு, ஜலம், பூமி என்ற நாலு தத்துவங்கள்தான் உண்டு என்ன வேண்டியும் வரும். வைதிகப் பெரியோர் ஒருவரும் ஒப்பாத வேறுவேறு தத்துவங்களைக்கூட்டிக்கொண்டு முப்பத்தாறு தத்துவங்கள்

என்றதற்கு तात्पर्यத்தை "अन्यश्च राजन्! सपरः, तथान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्तिह्येक एवेति साधवः ।" என்று महर्षिதானே அருளிச்செய்தான். ஈச்வரனை षड्विंशकனென்றுதல், सप्तविंशकனென்றுதல் என்னவே प्राप्तம் என்று श्रुति தானே சொல்லிற்றிறே. प्रकृतियில் तमोवस्थादिகளே யான

---

त्वमित्येतदयुक्तम् । "तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युत"मिति तस्यैव पञ्चविंशत्वकीर्तनादित्यत्राह— आप्तशास्त्रेति । मोक्षधर्मादीत्यर्थः । तत्रैवकिञ्चित्पूर्वमिदं वचनम्— "अन्यश्चराजन्नि"त्यादि । अत्रपूर्वार्धेन जीवब्रह्मणोर्मिथोविविक्तरूपत्वमभिधाय— "अवस्थितेरिति काशकृत्स्न" इति सूत्रोक्तरीत्या जीवस्य परमात्म वाचकशब्देनाभिधानं शरीरात्मभावनिबन्धनं, नत्वैक्यनिमित्तकमिति तत्तात्पर्यं तेनैव निर्णीतमित्यर्थः । यदीश्वरस्य पञ्चविंशत्त्वं तत्स्थत्वनिबन्धनं तर्हि तस्यवस्तुतः कतमत्वं कीर्तनीयमित्यत्राह—ईश्वरेति । उक्तं-मान्त्रिकोपनिषदि— "तंषड्विंशकमित्याहुः सप्तविंशमथापरे । पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदु"रितिह्य-धीतमित्यर्थः । षड्विंशकस्यैवसतः कथमपरेसप्तविंशत्वं प्राहुरित्यत्रतेषां तात्पर्यमाह—प्रकृति इति । अष्टौप्रकृ-यष्षोडश विकारा" इति चतुर्विंशतिरचेतनानि, पञ्चविंशो जीवः, षड्विंशः परमात्मेतिस्थिते—प्रकृतौ सूक्ष्म-तयाऽक्षरतमोवस्थयोरपिसुबालोपनिषदादौ पृथक्कीर्तनात्—तत्रैकामादायसंख्यावृध्या परमात्मनस्सप्तविंशत्वं सम्पाद्य-मित्यर्थः । चमसाधिकरणश्रुतप्रकाशिकायान्तु अन्यथापि निर्व्यूढम्— "परमात्मनष्षड्विंशकत्वं कालस्य विशेष-णत्वेन प्रकृतितद्विकारेषन्तर्भावात् सप्तविंशकत्वं कालस्य तदनन्तर्भावविवक्षया । पञ्चविंशकेष्वेव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंशकस्तुत्यर्थ मित्यन्यथासिद्धिरीश्वरप्रतिपादनस्य वक्तुमशक्या । संख्यातः पृथक् निर्देशादित्य-भिप्राय इति । एवमेवन्यायसिद्धाञ्जनेपि—" तदेवमव्यक्तोपक्रममहदहङ्कारेन्द्रिय तन्मात्रभूतसृष्टिप्रकरणेषु जीवपरौ पञ्चविंशकषड्विंशकौ । अक्षरतमसोरन्यतरोपक्रमे कालस्य पृथग्गणनेच षड्विंशकसप्तविंशकाष्टविंशकत्वादिकं यथासंभवं भाव्यम् । ........ सत्वरजस्तमसां पृथग्गणनयाऽधिकसंख्यां निर्वहन्तस्तेषां द्रव्यत्वदूषणेन वक्ष्यमाणेन निरस्ता इति । अत्रैवान्येषां केषाञ्चिन्निर्वाहं निरस्यति—ईश्वरेति । स्वरूपपरिणामवत्यचेतने यथायथं चतुर्विंश-तित्वपञ्चविंशतित्वयोः कल्पनेन जीवपरयोष्षड्विंशसप्तविंशत्वाभ्यां संख्यानमेवोचितम् । नत्वपरिणामिन्येक-तत्त्वतया परिगणिते परमात्मन्यवस्थाभेदकल्पनेन । अन्यथा तस्मिन्नेव व्यूहविभवादिरूपावस्थाभेदं जीवे बद्धमुक्ताद्यवस्थाभेदञ्चादायापि तथा परिगणनसम्भवेन तदुपेक्षायानिर्बीजत्वापातादितिभावः ।

---

உண்டு என்ற சைவாகளின வாதம வீணே. திசை என்ற ஒரு நித்தியமான ஸர்வவியாபி யான தத்துவம் உணடெனற வைசேஷிகர்மதம்-அப்படியொருதததுவம் பிரமாணங்களில் தத்துவபரகரணஙகளில் எடாமையாலே எடுபடாது. திசைகளைப் படைத்தான் என்று சொல்லுவது-சுவர்க்கத்தைப் படைததான், நடுவானத்தைப் படைத்தான என்று சொல்லு

றைப்பிரிய எண்ணி ஸஙவிசகன் என்ன லாம். ஈச்வரனுடைய அன்தர்யாமிரூபத்தை த்தனித் தெண்ணி ஸஙாவிசகன் என்கிறது என்று சிலர் சொல்லுமதற்கு ஔசித்யமில்லை.

---

ननु तत्त्वानां चतुर्विंशतित्वादि सङ्ख्यासम्बन्ध एव कथं निर्णीयते। यावता तैत्तरीयादिषु सृष्टिवाक्ये—"आत्मन आकाशस्सम्भूत" इत्यादिनाषण्णामेवतत्त्वानामाम्नानादितिचेदाह—तैत्तरीयेति। धातुस्समष्टि-तत्त्वम्। शरीरारम्भकधातूनामिवैषां जगदारम्भकत्वात्। पञ्चभूतान्यात्माचेति षड्धातवः। श्रुत्यन्तरं-सुबालोपनिषदादयः। तत्रप्रकृत्यादीनां सर्वेषां तत्त्वानांकीर्तनादितिभावः। ननु कथं सर्वश्रुत्यानुगुण्येन नयनं कार्य-मित्यत्राह—तत्त्वेति। सर्वशाखाप्रत्ययन्यायेन परस्परं संकलनीयमित्यर्थः। तथा च सर्वार्थसिद्धिः—"यदि-न्यूनाधिकनिर्देशमात्राद्विरोधः, तदा क्वचिदप्यनुक्तमन्यतोग्राह्यं नस्यात्। ततश्च विद्यैक्येगुणोपसंहारस्त्यज्येत। छान्दोग्येभूतत्रयं, तैत्तरीयेभूतपञ्चकं, अन्यत्र तथा तथान्यूनमधिकञ्च तत्त्वमधीतमिति तत्त्वसङ्ख्याव्यावस्थापनं विलीयेते"ति। तत्त्वपर्यायधातुशब्देनात्मनोपिग्रहणौचित्यात् अत्रमूले—"तैत्तरीयेषड्धातुवाद" इत्युक्तावापि, सर्वार्थसिद्धौ भूतशब्दस्यैव प्रस्तावात् तेनात्मनोग्रहणं नोचितमिति—"तैत्तरीयेभूतपञ्चके"त्युक्तिः। ननु-आत्मन आकाशस्सम्भूत इत्यादौ परमात्माकाशयोर्मध्येऽवश्यवक्तव्यप्रकृत्यादीनामनुक्तिरभावमेवतेषां साधयति। मध्ये तेषां सद्भावेतु-आत्मन इति पञ्चमी आत्मन आकाशकारणत्वंबोधयन्तीबाध्येत। आत्मनः आकाशकारणत्वस्या-संभावितत्वादित्यत्राह—क्षीरादिति। क्षीरदध्नोर्मध्येकललाद्यनेकावस्थासंभववभिप्रेत्य-इदमिद-मित्यसकृन्निर्देश इति रत्नपेटिका। तथा च—क्षीरात्कललं, ततः किञ्चित्, ततोदधीतिवक्तव्ये, केनचिदुच्यते"क्षीराद्दधीति। तथा च तद्वाक्यं यथा नाप्रमाणं, तत्रक्षीरादितिपञ्चम्यास्साक्षात्परम्परासाधारण हेतुत्वमात्रबोधपरत्वात्, तथैव प्रकृतेपि-परमात्मनः प्रकृतिः ततोमहान्, ततश्च परम्परया जातात् शब्दतन्मात्रात् आकाश इति वक्तव्ये-आत्मन आकाश—इति संक्षेपेणतैत्तरीयोक्तिः। पञ्चम्या हेतुत्वमात्रबोधनादिभावः। अस्यश्लोकस्याकरो द्रष्टव्यः। विपक्षे बाधकमाह—इङ्गन् इति अनुक्तमन्यतोग्राह्यमित्यस्यानङ्गीकारे इत्यर्थः। तथाचान्यत्रोक्तस्यापिमेळने चतुर्विंशति जडतत्त्वेष्वेव पर्यवसानं दुर्वारमितिभावः। नन्वनेनैवन्यायेनशैवानां तत्त्वाधिक्यमप्यवर्जनीयंस्यादित्यत्राह—वैदि-

---

வதற்கு ஒப்பாகையாலே, தனியாக ஒரு திசை தத்துவம் உண்டெனபதற்கு அசைக்கமுடியாத சாட்சியாகாது. ஆகாய வெளியில் ஆஙகாங்கு ஸூரியனின் உதயம் அஸ்தமயங்கள் கொண்டு திசைகளை வகுதது வியவஹாிககிறுர்கள என்றும், அஹங்காரம் என்னும் தத்துவமே திசையாக நிற்கிறது என்றும் சிலா சொல்லுவர். இபபடிக் கொண்டாலும், இவை இல்லாத தேசததில தூரம், சமீபம், கிழக்கு, மேற்கு என்று வரும் வியவஹாரங்களெல்லாம்

तैत्तिरीयादிகளின் सृष्टिवाक्यங்களைக்கொண்டு षट्धातुवादம் சொல்லுவார்க்கு மற்றுள்ள श्रुत्यादिகள் विरोधिக்கும் तत्त्वங்களைச் சுருங்கச்சொன்னவிடங்களிலே ஏறச்சொன்ன இடங்களைக் கூட்டிக்கொள்ள प्राप्तம். "क्षीरादिदं तत इदन्तु ततो दधीति, क्षीराद्दधीति वदतां किल को विशेष.[३]"

---

करिति । वैदिकाभासैस्साङ्ख्यादिभिरप्यनभ्युपगतेत्यर्थः । षट्त्रिंशदिति । माया पुरुष इति द्वेतत्त्व, शिवशक्ति सदाशिवेश्वरविद्यातत्त्वानिपञ्च कालनियतिकलाऽविद्यारागतत्त्वानि पञ्चेत्याहत्य द्वादशानां शैवागमसिद्धानामधिक-तयाऽङ्गीकारात्तेषाम्मते प्रकृत्यादिचतुर्विंशतिभिस्सह षट्त्रिंशत्तत्त्वानिभवन्तीतिभावः । आप्तपरिग्रहेति । तेषां शैवागमस्य—"त्वं हि रुद्रमहाबाहो मोहशास्त्राणिकारये"ति भगवन्नियुक्त पशुपतिविप्रलम्भवैभवविजृम्भितत्वात्, आप्ततमपराशरपाराशर्यादिपरिग्रहोनास्तीत्यर्थः । अनादरणीयमिति । एषु केषाञ्चित्स्वरूपत एवासिद्धत्वात्, सिद्धानामप्यपरेषामन्यथासिद्धत्वात्, सामान्यतो वेदविरोधाच्चानादर एव कार्य इत्यर्थः । अथ वैशेषिकाभिमत-दिक्तत्त्वमपि प्रत्याख्याति—दिगिति । सर्वकाले सर्वदेशेष्वपि प्राच्यादि व्यवहारहेतुतया कल्प्यमाना सा नित्याविभ्वी च सिध्यति इति तदभिमानः । तत्त्वपङ्क्तीति । सृष्टिलय प्रकरणेषु तादृशस्य तत्त्वस्याकथ-नादित्यर्थः । ननु पुरुषसूक्ते—"प्राणाद्वायुरजायतेत्यादि तत्त्व सृष्टिं पठित्वा—"पद्भ्यां भूमिर्दिशः श्रोत्रादिति तत्तुल्यतया दिक्सृष्टिरप्युच्यत इत्यत्राह—दिक्सृष्ट्यादीति । स्वर्गान्तरिक्षादीति । "नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौस्समवर्तते"ति स्वर्गान्तरिक्षादिपदार्थानामपि सृष्टिवचनात् तेषां तत्त्वान्तरत्वाभाववत् दिशोपि तत्त्वान्त-रत्वं नास्तीत्यर्थः । तथा च तत्र दिक्सृष्टिवचनं तदभिमानिदेवतासृष्टिविवक्षया दिगुपाधिभूत पदार्थसृष्टिविव-क्षयावोपपद्यत इति भावः । इन्द्रियाणां केवलविकृतित्वेन श्रोत्रस्य दिगुपादानत्वासंभवात्, दिक्सृष्टेः प्राक् प्रकृत्यादीनां सर्वदिक्व्यापित्वावार्यावारकभावाद्यनुपपतेश्च तस्यास्सर्वथा तत्त्वान्तरत्वमसंभवि । एवञ्च वायुक्रिया-धिकरणादौ प्राणस्य तत्त्वान्तरत्वप्रतिषेधन्यायोत्रापिसमान इति भावेनाह—आकैयालिति । तर्हि तस्याः कुत्रान्तर्भाव इत्यत्रकस्यचिन्मतमाह—आकाशमिति । सूर्यगतिविशेषःउदयास्तमयाचलादिदेशेषु सूर्यस्य गति विशेषाः । आदिनोदयाचलादिसंयुक्तसंयोगपरम्पराल्पीयस्त्वभूयस्त्वादिग्रहणम् । तथा च सूर्यगत्योदयाचलात्पूर्व-निर्दिष्टपरम्पराल्पीयस्त्वतः यस्योदयाचलसन्निहितोय आकाशप्रदेशविशेषः स तस्य प्राची । तद्भूयस्त्वतः

---

தக்கவையான சில குறிப்புகள் கொண்டு நடைபெறுகின்றன. காலம் என்னும் தத்துவமும் இவ்விதம் வேண்டாம் என்று எதிர்த்துக் கூறலாகாது. அது உண்டென்ன பல பிரமாணங்கள் இருக்கின்றன.

காலமாவது—க்ஷணம் துவங்கி பிரம்மாவின் பாதி ஆயுளான பரார்த்தம் வரையில் சிறியதும் பெரியதுமான அளவுகளைக் கொண்டதாய், எதிர், நிகழ், கழிந்தகாலம், மூத்தவன்

என்றும், அஹஸ்ஸாமிப்படியாகிறது என்றும் சிலர்சொல்லுவர். இப்படி கொண்டாலும், இவை இரண்டு மில்லாத தேசங்களில் தூரஸ்வாஸந்நத்வ பூர்வாபராதிவ்யவஹாரங்களெல்லாம் உசிதோபாதிவிசேஷங்களாலே நிர்வஹிக்க வேணும். காலப்ரதிபந்தியும் ப்ரமாணபலத்தாலே நிரஸிக்கலாம்.

---

कालस्य निमेषकाष्ठादिव्यवहारास्सर्वे आदित्यादिगतिक्रियोपाधिका भवन्तीति पक्षस्य-आचान् पिळ्ळैकृततत्त्वत्रयविवरणे प्राधान्येनाश्रयणं प्रत्युक्तं भवति। अतिरिक्तकालप्रतिक्षेपकमिव प्रतीतं न्यायतत्त्वशास्त्रस्थं वचनमप्यविरोधेनाह—एकाश्रयेति । एकद्रव्याश्रितेत्यर्थः । अनेकद्रव्याश्रितानेकक्रियासङ्ख्यानां क्षणादिरूपत्वासंभवात् एकाश्रयेति। तथाचैकचक्षुः पक्ष्मस्थ संयोगविभाग हेतुभूतोन्मेषादिक्रिया संख्यैव क्षणादिरूपः काल इति कथनात् तदतिरिक्तकालनिषेध प्रतीतिरिति-पूर्वपक्षिणो भावः। सिद्धान्तस्तु-अतिरिक्तकालसाधकवचनबलात् न्यायतत्त्व एवाग्रे—' सर्वे प्रत्ययाः कालोपश्लिष्टा एवहि प्रतीयन्ते। तदिदमिति देशकालविशिष्टतयैव स्मृतिरपिजायमाना प्रागपि कालानुभवंसाधयति''। इति अतिरिक्तकालस्य प्रत्यक्षत एव साधनाच्च-क्रिया सङ्ख्याकाल इति प्रस्तुतं वचनं, कालपरिणामभूतक्षणादिषु सङ्ख्यानदिषु संख्यानस्य क्रियोपाधिः यथाऽधुनातन घटीयन्त्रादिषु इति प्रदर्शन परमिति। एव मेव भाष्यश्रीसूक्तावपि भ्रमं वारयति–जैनाधिकरणेति। द्वितीयद्वितीयस्थं—"नैकस्मिन्नसंभवादि"त्यारभ्यप्रवृत्तमिदमधिकरणम् । तत्र हि जीवधर्माधर्मपुद्गलकालकाशाधानि द्रव्यणीति जैना इत्यनूद्याथतन्निराकरणावसरे—"कालस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः न च परिहर्तव्या" इति निरूप्यते। अनेन कालाख्य पदार्थपार्थक्यं नास्तीति आपाततः प्रतीयते। तन्नयुज्यत इत्याह—रूपान्तरमिति। इदं विष्णु पुराणस्थं पूर्वमेवोपादाय व्याख्यातम्। प्रकृतिपुरुषेत्यादिरात्मसिद्धौ मङ्गळपद्यम्।''....अनुविदधतिनित्यं नित्यसिद्धैरनेकैः। स्वपरिचरणभोगैः श्रीमतिप्रीयमाणे भवतु मम परस्मिन् पूरुषेभक्तिभूमेति पूर्णश्लोकः। उत्तरार्धे परशब्दविशेषित पुरुषशब्दस्य भगवद्वाचितया प्रयोगात् प्रथमं केवलपुरुषशब्दः-पुरिशेत इति व्युत्पत्त्या शरीरिणं जीवमभिदत्ते। व्यक्तंस्थूलो लोकः। नित्यसिद्धाः अनन्तगरुडाद्याः। तेचभवत्परिचरणैकभोगाः श्रीमतिप्रीयमाणे इत्यनेनदिव्यदम्पत्योरेकं शेषित्वमित्युक्तं भवति। अत्रपूर्वार्धे यदिच्छामिति यद्वृत्तयोगात्, उत्तरार्धेपि-तस्मिन् पुरुषे–इति तच्छब्दाध्याहारः कार्यः। प्रमाणं-विष्णुराणादिकं पूर्वो-

---

பாஷ்ய வாக்யங்களுக்கும் அவ்வாறு தாத்பர்யமல்ல. பாஷ்யத்தை அங்கு ஊன்றி கவனித்தால இது புலப்படும். காலமும எமபெருமானுடை ஒரு தனி யுருவம் என்றும் ப்ரக்ருதி புருஷன், காலம முதலியவாகள் பகவானுடைய ஸங்கல்பததைச்சார்ந்து இருககிருர்கள் என்றும ப்ரமாணஸம் ப்ரதாயங்களுமிருககின்றன. காலமானிகளான அளவுகோல்களை அடுத்தடுத்து வருபவைகளை வைத்துக்கொண்டு காலமே வேண்டாம் என்னும் வேதப்புற

दिक् என்றொரு नित्यविभुतत्वத்தை हेतुकா் கட்டினதும், तत्वपाङ्क्तियिலே परिसङ्ख्यातமன்று! दिक्सृष्ट्यादि சொல்லுமிடம, स्वर्गान्तरिक्षादि सृष्टिवाक्यம் போலே अन्यथासिद्धம. ஆகையாலே तत्वान्तरकल्पकமாகாது. आकाशம் सूर्यगतिविशेषादिகளாலே विभक्तமாய்க்கொண்டு दिक्कகளாகிறது

विभागः । अत्र क्षणादीनां सर्वेषामेवाविशेषेणकालविभागत्वे कथितेपि क्षणस्यैव साक्षात्कालपरिणामरूपत्वम्, अन्येषां तरतमभावापन्नक्षणसमुदायरूपत्वञ्चेति विभज्यबोध्यम् । उक्तञ्च नीतिमालायां—"कालोऽनाद्य-नन्तोऽजस्रक्षण परिणामी मुहूर्ताहोरात्रादिविभागवान् परिणामपरिस्पन्दादिहेतुरिति । एतदर्थश्च सर्वार्थसिद्धौ विवृतः — "क्षणरूप एवकालस्य सर्वदा परिणामः । तत्संख्याप्रकर्षतारतम्यान्मुहूर्तादिविभाग इति । भूत भविष्यदिति । अतीतादि व्यवहारहेतुः काल इति वैशेषिकाः । आचार्या अप्याहुः — "कालोपश्लिष्ट-वेषेणह्यभूरस्तिभविष्यतीन् । प्रयुञ्जतेऽर्थभेदेषु सदाचास्तिमनेहस इति । ज्येष्ठकनिष्ठत्वयोः कालकृतपरापर-रूपत्वमाहुः । विशेषकारणेति । कालस्य कार्यमात्रं प्रति सामान्यकारणत्वेपि निर्दिष्टव्यवहारादीन्प्रति विशेष-कारणत्वमित्यर्थः । ओरु द्रव्यमिति । त्रिविधाचेतनद्रव्येषु त्रिगुणशुद्धसत्वभिन्नाचेतनद्रव्यमित्यर्थः । एतेन-तादृशद्रव्यत्व, क्षणादिपरिणामित्वातीतादिव्यवहारविशेष-विशेषकारणत्वादिकं तल्लक्षणमित्युक्तं भवति । अथकाल-विषयेमतभेदान्प्रदर्शयति—नित्येति । "अनादिर्भगवान् कालःनान्तोस्यद्विज विद्यते" इति कालस्यनित्यत्व-श्रवणात्—यथा नित्य आकाशे घटाद्युपाधिसम्बन्धादेव प्रदेशपरिच्छेदः, न तु स्वतः, तथैवकालेपि क्षणादि-स्सर्वोविभागः सूर्यपरिस्पन्दाद्युपाधिना जायते, न तु तस्य तदात्मना परिणामः । तथाचक्षणाद्यात्मकविभागे कालः केवलं निमित्तमेव नतूपादानमित्युक्तं भवतीति । अथास्मिन् पक्षे प्रमाणविरोधं प्रदर्शयन्नेव सिद्धान्तमपि सूचयति—कालं सपचत इति । स ईश्वरः तत्र नित्यविभूतौ कालं पचते केवलं कालं क्षणाद्यात्मना परिणाम-यति । न तावता क्षणाद्यात्मनापरिणतः कालस्तां विभूतिं पचते । तत्रहेतुमाह—न कालस्तत्रवैप्रभुरितिश्लोक-शेषपादः । तत्र नित्यविभूतौ न कालः प्रभुः नित्यविभूतिस्थ पदार्थानं न कालः परिणामने समर्थ इत्यर्थः । अत्रादिना —"कलामुहूर्तादिमयश्चकालो नयद्विभूतेः परिणामहेतुरि"त्यादिकं विवक्ष्यते ।

मयडत्रविकारार्थकः । तथा च पूर्वोक्तवाक्येन कालस्य नित्यत्वप्रतिपत्तावप्येवमादिना प्रमाणेन साक्षाद्वि-कारान्प्रत्युपादानताप्रतीतेः क्षणाद्यात्मनापरिणामस्तस्य साक्षादेवस्वीकार्यो नतूपाधिद्वारेति भावः । एतेन-एकरूपस्यैव

பொருளில் தோன்றும் அசைவுகளின் எண்ணிக்கையே (கடிகாரமுள்போல) க்ஷணம் முதலிய காலம் என்ற ஸ்ரீ நியாயதததுவ நூலுக்கும் காலம் என்ற தனிபபொருளிலலை என்று கருத்தல்ல பின்னை? க்ஷணம் முதலான காலத்தின் கூறுகளுக்கு ஓர் அளவுகோல சொல்லுவதில்தான் கருத்து. பிரமம ஸூத்ரஜைநாதி கரணத்தில் காலததை மறுப்பதுபோல் காணப்படும்

चेतनருடைய कर्मप्रवाहமும் अचेतनங்களுடைய परिणामप्रवाहமும் ईश्वरனுடைய लीलाकार्यरस प्रवाहமும் अनादियாக प्रवृत्तियாநின்றால் இவற்றில் विशेषप्रयोजनत्वप्रधानत्वादिविभागத்தை वस्त्वनुरूपமாக विवेकिப்பது.

---

श्रुतिस्मृतयः परमात्मनि, घटादेः कुलालादिवत् जगतो निमित्तत्वमेव शब्दस्वारस्यसिद्धं बोधयन्तीत्यर्थः । लोकदृष्टत्यक्तिरेति । लोके मृत्पिण्डकुलालादौ निमित्तोपादानत्वयोर्वैयधिकरण्यस्यैव दृष्टत्वादित्यर्थः । इत्थं तु उपादानतया वेदान्तसिद्ध ईश्वरः । निमित्तमात्रेति । समवाय्यसमवायिकारणभिन्नकारणस्यैव निमित्तकारणतया लक्षणसिद्धत्वेन तस्य तन्मात्रत्वेनाङ्गीकार्यत्वम् ।" सर्वं खल्विदं ब्रह्मे"त्यादेः सामानाधिकरण्यस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च—राजग्रामन्यायेन प्राधान्यविवक्षयाऽप्युपपत्तेरिति भावः । तर्हि जगदुपादानं किमित्यत्राह —उपादानम् इति । "अस्मान्मायी सृजते" इत्युक्तप्रमाणादेवेति भावः । प्रकृत्यादीत्यादिना—उपादानत्वेन वैशेषिकाद्युक्तपरमाणुपरिग्रहः । एतेन—पूर्वपक्षिणां परस्परविरुद्धप्रकृतिपरमाण्वादिषु किमुपादानमिति निश्चयस्याद्याप्यभावेन मिथो विवादेऽपि ईश्वरोपादानतावादिवेदान्त्युपरोधे परं श्वावराहकलहन्यायेनैकमत्यं सञ्जातमहो धिगिति सूच्यते । एवमनङ्गीकारे उपनिषद्विरोधं प्रदर्शयति —इदं न सह्यम् इति । विकारादीति —"अक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ।" इत्याद्युक्तवस्तुविशेषाणां ग्रहणम् । तथा च —"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं—"इत्यादिश्रुतिविरोध इति भावः । एवं वेदान्तविरोधवादिनो नाम्ना-निर्दिशति—योगपाशुपतेति । योगानां कालवन्निमित्तमात्रत्वेऽपीश्वरवाद प्रक्रियानुवादमेव प्रादर्शि । पाशुपता वैशेषिकाश्चेश्वरं कुलालादिवत् सव्यापारमपि अनुमानेन निमित्तमात्रं कल्पयन्ति । योगपाशुपतयोः प्रकृतिर्जगदुपादानम् । वैशेषिके तु परमाणुरिति त्रयाणामेषां मिथो विशेषः । एतेन —"चेतननुम् कारणमाक्रमाद्दान्" इति तत्त्वत्रयेश्वरप्रकरणगतवाक्यव्याख्यानावसरे —"पाशुपतर्क्कु आगमसिद्धेश्वरन् निमित्तकारणम्" इति वरवरमुन्युक्तिश्चिन्त्या भवति । शैवागमे त्वप्यनुमानेनैव निमित्ततयेश्वरसिद्धेरुक्तत्वात् । तद्यथा—"विवादाध्यासितं सर्वं बुद्धिमत्कर्तृपूर्वकम् । कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथे"ति । अयश्चार्थः अत्रैव पाशुपताधिकाराधिकारे—"वेदगूढे" इति वाक्ये तद्व्याख्याने चास्माभिर्विशदीकृतो द्रष्टव्यः । प्रतिज्ञा="येनाश्रुतं भवती"त्यादिका । अत्र कारणविज्ञानेन कार्यस्य विज्ञाततकथनात्, तस्य च तयोरनन्यतयैव निर्वाहत्वात्,

---

என்னில்—அங்ஙனன்று. நிரபதிகநிரதிசய ஆனந்தனாய்த் தான் நினைத்தபோதே தன்னிஷ்டங்களை எல்லாம் தலைக்கட்ட வல்லனாய் இருப்பதால இவனை பரிபூரணகாமன என்பதாலே அவ்வப் போது ஸ்ருஷ்டி விநோதங்களையும் ஜீவரக்ஷணங்களையும் செய்யக் குறையில்லை. சேதனர்

"ஈச்வரன் உலகுக்கு நிமித்தமாத்ரம் என்பதுசரி அன்று"

இப்படி सत्यसङ्कल्पனாய் सर्वकार्यकारणமான ईश्वरन உண்டானாலும் பல श्रुतिस्मृतिகளுடைய स्वारस्यத்தாலும் लोकदृष्टप्रक्रियையாலும் இவன் निमित्तमात्रமாமத்தனையன்றோ? उपादानம் प्रकृत्यादि-

---

प्राधान्यादिविवक्षयाऽन्यथानयनेन प्रतिज्ञादृष्टान्तादिबहुवाक्योपरोधप्रसङ्गाच्चेश्वरस्योपादानत्वं प्रतिज्ञयाऽन-यासिद्ध्यतीतिभावः । दृष्टान्तः=पूर्वोक्तप्रतिज्ञोपपादकः—"यथासोम्यैकेन मृत्पिण्डेनसर्वं मृण्मयं विज्ञातम्स्या"दि त्याद्युक्तः । एवमुपादानत्वे ज्ञापकमुक्त्वा निमित्तत्वे तदाह—बहुभवनेति । "तदैक्षत बहुस्यां प्रजायेये"ति सङ्कल्पकर्तृत्वश्रवणात् कुलालवत् संकल्पविशिष्टतया निमित्तत्वमपि तस्य सिद्धमित्याशयः । अथोभयाकारयोगं समुच्चित्य दर्शयद्वाक्यमाह—वनवृक्षादि निर्देशेति । "ब्रह्मवनं ब्रह्मसवृक्ष आसीदि"तिश्रुतौ द्यावापृथिव्यात्म-कस्य कार्यस्योपादानभूतवृक्षत्वेन, तदुत्पत्तिस्थानतया निमित्तभूतवनत्वेन च परमात्मनो निरूप्यमाणतयोक्तो-भयाकारयोगे ब्रह्मणि सिद्ध इति भावः । आत्मकृतेरिति । इदमप्युभयरूपत्वे प्रमाणम् । "तदात्मानं स्वयमकुरुते"ति श्रवणात् स्वस्यैव प्रपञ्चरूपेण स्वयं परिणामकरणावगतेरुभयात्मकत्वं प्राप्तमितिहृदयम् । "यद्भूतयोनिं परिपश्यन्ति धीरा" इति भूतयोनिशब्दः । "अत्र योनिशब्दश्चोपादानवाचक इति —यथोर्ण-नाभिस्सृजते गृह्णतेचेति वाक्यशेषादवगम्यत इति श्रीभाष्यम् । इह च सूत्रे—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् —अभिध्योपदेशाच्च —साक्षाच्चोभयाम्नानात्—आत्मकृतेः—योनिश्च हि गीयत इति सूत्रोक्तार्थक्रमोऽनुसृत इति भाव्यम् । परिणामादिति सूत्रभाष्यमपीह विभावनीयम् । अत्रैवं रीत्येश्वरस्योपादानत्वेप्यविकारत्वोपपत्तिरनु-पदमेवव्यक्तीभविष्यति । अथापि लोकविरुद्धं निमित्तोपादानैक्यस्य न श्रुतिप्रतिपाद्यतेतिशङ्कायामाह—लोकेपि इति । लोकेपीत्यपिना शास्त्रेऽपि तयोर्भेदानियमदर्शनमभिप्रेतम् । भेदेति । मृद्दण्डादाविति शेषः । चेतनावेत-नेति । स्वप्रयत्नेन स्वज्ञानादिकमुत्पादयति जीवे तदाश्रयत्वयोपादानत्वम्, तदुत्पत्त्यर्थयत्नशालित्वेन निमित्तत्वञ्च समुच्चितः । एवं घटादिकेचाचेतने वाय्वादिना नुन्ने ततः कुड्यादिष्वभिहत्याभिहत्य भिन्ने वसति, भेदाश्रयतया तदनुगुणनोदनाख्यव्यापारवत्त्वेन चोभयविधकारणत्वं बोध्यम् । अत्र च न्यायसिद्धाञ्जनं—परिणामोन्मु-ख्यातिरिक्तेनाकारेणापेक्षितं कारणं निमित्तम् । असमवायीत्यवान्तरविभागस्तु नास्मदीयैरभ्युपगतः । पारिभाषिक-

---

களின் காமப்ரவாஹமும், அசேதநங்களின் மாறுபாட்டின தொடர்க்கியும் ஈசுவரனின் விநோதம் கருணை நிரம்பிய ஸங்கல்ப பரம்பரையும் அநாதிகாலந்தொட்டு ஒழுகிவாரா நின்றால் அவற்றுள் எது முக்யம்? எது விசேஷ காரணம்? எனபவற்றைப் பொருளுக்குத் தக்கவாறு உணர்க.

क्रियातद्व्याकालः" என்ற ந்யாயதத்த்வபந்தத்துக்கும் காலோபாதிஸ்வரூபம் சொல்லுகையிலே தாத்பர்யம். ஜைநாதிகரணத்தில் காலவிஷயபாஷ்யமும் காலநிராகரணபரம் அன்று என்னுமிடம் — 'रूपान्तरं तत् द्विज-कालसंज्ञम् ।" — प्रकृतिपुरुषकालव्यक्तमुक्ता यदिच्छामित्यादिप्रमाणसम्प्रदாயங்களையும், भाष्यம் தன்னில் वाक्यस्वारस्யத்தையும்கொண்டு அறிந்துகொள்வது.

उपाधिपरम्परामात्रத்தைக்கொண்டு காலம் என்றொரு தத்த்வமில்லை என்கிற பாஹ்யமதம் प्रत्य-क्षानुगुणपरश्शतागमवाक्यங்களாலே பாதிதம். உபலம்பத்தையும் ஆகமத்தையும்விட்டு उपपत्तिमात्र-த்தாலே கல்பிப்பார்க்கிறே லாகவதர்க்கம் உத்தரமாகக்கடவது. "अनादिर्भगवान् कालः" என்கிற ஸாமாநாதிகரண்யமும் அந்யபரம். "नित्यंहिनास्ति जगति" इत्यादिகளைக்கொண்டு காலத்துக்கும்

---

जीवमनोहङ्काराभिमान नियतानुबन्धानि सङ्कर्षणादिरूपाणि । तद्वदिहापि स्यात् । "कोभवानुग्ररूप इति प्रश्न सङ्घटनाचे"ति प्रकारान्तरेणापि निर्व्यूढम् । "कालोऽस्मिलोकक्षयकृत् प्रवृद्ध" इत्युत्तरहि तत्रादीयतभगवतेति भावः । एवं कालस्यानित्यत्वपक्षमपि प्रत्याह—नित्यंहीति । "भूतं स्थावरजङ्गमम् । ऋतेतमेकं पुरुष वासुदेवं सनातन"मिति विष्णुपुराणम् । आदिना ' परमार्थस्त्वमेवैकः नान्योऽस्ति जगतः पते" इत्यादि ग्रहणम् । अत्रेश्वरभिन्नस्य सर्वस्योत्पत्तिविनाशाभिधानात् "असम्भवस्तु सतोऽनुपपत्ते"रिति सूत्रोक्तरीत्या सद्भूतब्रह्मभिन्नः कालोऽनित्यः प्राप्नोतीति भावः । अयञ्च पक्षः—"मायाकार्यः काल" इति वादिनां—शैवानां अन्येषां वाबोध्यः । अनाद्यनन्तत्ववचनं—"अनादिर्भगवान् कालः नान्तोस्यद्विजविद्यत" इत्यादिकम् । यद्यप्यत्र भगवच्छब्दसामानाधिकरण्यात् कालशब्दोनकालमात्रपरः । अपितु तदन्तर्यामिपरः । ततश्चानाद्यन-न्तत्वयोर्विशेष्यमात्रनिष्ठत्वेपि नानन्वयादिकम् । अथापि—अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा" इति उत्तरार्धेकालनित्यत्वस्यैव तत इति हेतूकरणात—"जीवमुख्यप्राणलिङ्गादि"ति सूत्रोक्तन्यायेनानाद्यनन्तत्वे विशेषणगतेऽप्यगन्तव्य इति । न केवलं कालानित्यत्वे वचन विरोधमात्रम् । किन्तु युक्ति विरोधोपीत्याह—कालमिति । तत्सृष्टेः पूर्वं, नाशादुत्तरञ्चकालनास्तित्वे—"तदा न काल" इति वचने दाप्रत्ययस्य कालवाचि-तया—"तत्कालेकालोनास्ती"त्यर्थपर्यवसाने व्याघात इत्यर्थः । ननु तर्हि—"सर्वेनिमेषाजज्ञिरेविद्युतः पुरुषादधि । कलामुहूर्ताः काष्ठाश्चेत्यादि श्रुत्याकथंकालोत्पत्ति कथनमित्यत्राह—अप्रशास्त्रेति । विद्युतो

---

னுடல் என்ற முறையிலே ஒருமைப்படுத்திச் சொன்னதாகக் கருதது கொள்ளவேணும். உலகில் ஏதும் நித்தியமல்ல என்ற வசனத்தைக்கொண்டு, காலத்திற்கும் பிறப்பிறப்புகள் உண்டு என்று சொல்லுவர் சிலர். இது காலம் ஆதியந்தமற்றது என்று குறிப்பிட்டுச்சொல் லும் வசனத்திற்கு ஒவ்வாது. காலமில்லாத ஒரு காலமுண்டு என்பது முரண்படும்பேச்சு. நம்முடையவரின் சில நூல்களில் காலம் பிறந்தது என்பதற்கு வருவதும் பிறந்தது மாதும்

उत्पत्तिविनाशம் சொல்லும் பக்ஷம், अनाद्यनन्तस्ववचनத்தாலும், "காலம் ஒரு காலத்திலில்லை" என்றால் स्ववचनविरोधம் வருகையாலும் निरस्तம். आगमशास्त्रங்களிலே कालोत्पत्ति தோற்றுமிடம் परिच्छिन्नकालादिपरம். लीलाविभूतियில் காலம் उत्पत्तिविनाशवत्தாய் नित्यविभूतियில் विभूत्यनुरूपமாக नित्यமாயிருக்கும் என்று சிலர் சொல்லுமது—कालद्वयकल्पनத்துக்கு प्रमाणமில்லாமையாலும், ஒன்றே नित्यமாயும் अनित्यமாயும் இருக்குமென்றால் अनेकान्तवादம் प्रसङ्गिக்கையாலும், विभूतिभेदம்

---

विद्युद्गर्णात्पुरुषाद्धि जज्ञिर इत्यन्वयः। "दिवाकालौ भवत्कृतौ" इति स्मृतिवचनं सर्वार्थसिद्ध्युपात्तम्। अहिर्बुध्न्यसंहितायामपि—"नियतिः काल इत्येते शक्तिस्संकल्पचोदिता। द्विधेत्यनिरुद्धात्मेति। अनिरुद्धात्कालसृष्टिस्तत्त्वत्रयव्याख्यानेऽप्युक्ता व्यूहकृत्यानां प्रपञ्चने—"कालसृष्टिरनिरुद्धकृत्य"मिति। परिच्छिन्नकालादि परमिति। महाकालस्योक्तरीत्या नित्यत्वेऽपि कालविकाराणां क्षणादीनां भगवत्सङ्कल्पेनोत्पत्तिरविरुद्धा। यथा नित्यायाः प्रकृतेरीश्वरसृज्यत्वाभावेऽपि तद्विकृतिभूतमहदादेस्तत उत्पत्तिरिति श्रुतिरपि तद्विषयेत्यर्थः। अथोक्तोभयवचनबलात् कालस्य नित्यानित्यत्वोभयं लीलाभोगविभूतिभेदेनाविरुद्धमस्तीति वदतामेकदेशिनाम्मतमाह—लीलाविभूतीति। अत्र शोल्लुमदु इत्यस्याग्रे—पर, र, शोन्नतामत्तैन इत्यनेनान्वयः। यथा पृथिव्यादीनि भूतानि लीलाविभूतावनित्यानि नित्यविभूतौ नित्यानि, तथेत्याशयः। तदुक्तं तत्त्वत्रये—कालस्तु परमपदे नित्यः। इह त्वनित्य इत्यपि केचिदि"ति। "अस्मद्दर्शनस्थेषु इत्थमपि केचित्कथयन्तीति तदप्यत्र कृत्य दर्शितं भवती"ति तत्र वरवरमुनिव्याख्या। अथैवं नित्यत्वानित्यत्वोभयवर्णने किं कालद्वये, किमेकस्मिन्नेवेति विकल्प्य प्रथममाह—कालद्वयेति। प्राकृतपृथिव्यादिपञ्चभूतवत् पञ्चोपनिषन्मन्त्र प्रतिपाद्यपञ्चशक्तिमयाप्राकृतपृथिव्यादिपञ्चकस्यापि भगवच्छास्त्रसिद्धमिति तत्र व्यक्तिभेदेनोभयोपपत्तावपि, काले तथा प्राकृताप्राकृतविभागे प्रमाणाभावेन तथोक्तिरयुक्तेति भावः। अथ द्वितीयं प्रतिवक्ति—अत्रेति इति। परस्परविरुद्धधर्माध्यासायोगात्, योगे विरुद्धनानाकारवादरूपानेकान्त्यवादापाताच्चनेदमपि प्रामाणिकमित्यर्थः। ननु नित्यत्वानित्यत्वयोस्सहजोऽपि विरोधः स्थितिभेदेन परिह्रियते। यथैकस्यैव वस्तुनः क्वचित्प्रदेशे सत्त्वम्। प्रदेशान्तरे चासत्त्वम् इत्यत्राह—विभूतिभेदेति। शमनमिति करणे ल्युडन्तम्। शामकमित्यर्थः। तत्र, सत्त्वासत्त्व-

---

பிறந்தது என்றாற்போல அதன் உட்பிரிவுகளைச் சொன்னதாக கருத்து கொள்ளலாம். இவ் வநித்தியவுலகில காலம் அநித்தியம், எம்பெருமானுடைய நித்திய உலகில் நித்தியம் என்று சிலர் சொன்னதற்கும் தாத்பரியம் வேறு, இரண்டு காலங்களைககட்ட ஆதாரமில்லை. ஒன்றே நித்தியமாயும் அநித்தியமாயுமிருக்கும் என்பது ஜைனர்களின் பல பட்டறைக் கொள்கைபோல் பரிஹஸிக்கத்தககது. அவை இருக்கும் உலகத்தின் தன்மையை ஒட்டி வேறுபடுகிறது என்றும் தோஷ பரிஹாரம் செய்ய முடியாது ஆனபின்பு-இங்கு உலகில்

विरोधशमनமல்லாமையாலும், लीलाविभूतिயில் अहोरात्रविभागத்தையும், परमव्योमாவில் अनपायप्रभान्वितனான नित्योदितादित्यனாலே ஒருபகலானபடியையும் பற்றச்சொன்னதாமத்தனை.

அங்கும் चेतनाचेतनங்களுடைய व्यापारपरंपरैக்கு कालाधीनपौर्वापर्यம் கொள்ளவேண்டுகையாலே "नकालस्तत्र वै प्रभुः" "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" "दिव्यस्थानमजरञ्चाप्रमेयम्" इत्यादिகளுக்கு कालविशेषनियतजरादिகள் வாராதபடி परसङ्कल्पविशेषமே அங்குள்ள विकारங்களுக்கு नियामकம் என்கையிலே तात्पर्यம்.

योर्देशकालानपेक्षयोस्तथात्वसम्भवेऽपि निरपेक्षयोर्नित्यत्वानित्यत्वयोः कालमात्रगततयावक्तव्यत्वेन तद्धर्मसम्भवात् न दृष्टान्तसाङ्गत्यमित्याशयः । तर्हि तथा वादिनां क आशय इत्यत्राह—लीला विभूताविति । अत्र सूर्योदयास्तमयादिवशात् अहोरात्रादिविभागवत्त्वेन कालस्य नित्यत्वम् । "तदक्षरे परमे व्योमन्नि"त्युक्तनित्यविभूतौ तु—"नैवोदेता नास्तमेता । मध्ये एकल एव स्थाते"ति नित्योदितस्य नायनान्तो प्रभान्वितस्य परव्योमनाथस्य भगवतस्सदा सन्निधानात्—"सकृद्विभातो ह्येवास्य भवती"ति नाहोरात्रविभागकृतकालनियतेति तत्र नित्यः काल इत्येवंभाववन्तेषामित्यर्थः ।

ननु नित्यविभूतावपि यदि कालोऽस्ति कलास्तिष्ठन्ति, तर्हि तत्कृतवस्तुपरिणामादयोऽपि स्युरिति प्रादुः । "नकालस्तत्र वै प्रभु"रिति बाधकं वचनं श्रूयत इति चेत्, तदा तत्र तदङ्गीकारः किमर्थ इति शङ्कायामाह—अङ्गुमिति । परमव्योम्नीत्यर्थः । चेतनव्यापारः—मुक्तानां स्वरूपाविर्भावः—नित्यानां परिपूर्णब्रह्मानुभवकृतकैङ्कर्यविशेषाः । अचेतनव्यापारः—शेषशेषिणोर्भोगोपकरणतत्स्थानादिरूपेण परिणामावस्थानम् । कालाधीनपौर्वापर्येति । "अयमचिरमुक्तः सतु पूर्वमुक्त" इति व्यवहारार्थं कैङ्कर्यरूपभोगादिषु हेतुफलभूतेषु पौर्वापर्यार्थं च तत्र कालोऽवश्यापेक्षितः तस्य सर्वस्य पूर्वोत्तरकालवित्तिनियततारूप्यधर्मघटितत्वादित्यर्थः । अत्र "नकालस्तत्र वै प्रभु"रित्यस्य भावमाह—न काल इति । उक्तार्थकं वचनं कलामुहूर्तादीति ।" .... दुर्ज्ञेयं चागमैर्गम्यमाद्यम् । गच्छप्रभो रक्षचार्तिं प्रपन्नान् कल्पे कल्पे जायमानांश्च मर्त्यान्" इति पूर्वश्लोकः । यद्विभूतेः-

---

இரவு பகல் முதலிய காலப்பிரிவுகள் நடப்பதைக்கொண்டும் மேலுள்ள பரமபதத்தில் பிராட்டி என்னும் பேரொளி படைத்து மறையாத உதய ஸூர்யனாகிய பரமபுருஷனாலே ஒரு பகலாய் உணர்த்தியே யாயிருக்குமதைக்கொண்டும் சொன்னார்களாம். அங்கு சேதனர்கள் அசேதனங்கள் என்ற இவைகளுடைய செயல்கள் முன்னும் பின்னுமாகத் தொடர்ந்து நடக்க காலத்தின் உதவி தேவையாகையாலே—அங்கு காலத்துக்கு செல்வாக்குகிடையாது என்றும்; பல பல பிரிவுகளைக்கொண்ட காலம் பரமபதத்தை மாறுதலடையச் செய்ய

கல்பிக்கலாம். விசேஷித்து ஈச்வரனை வ்யாபகனென்றும், மற்றுள்ளவை யெல்லாம இவனுக்கு வ்யாப்யங்கள் என்றும் சொல்லுமது नियन्तृ नियम्यभावादिகளைக் கூட்டிச் சொல்லுகிறது. ஈச்வரன सर्वत्तிலும் अन्तर्वहि व्याप्तனென்ற ச்ருதிக்கு संभवद्विषयத்திலே तात्पर्यம் இருங்கவலாதபோது ஈச்வரன் தன்னுடைய धर्मभूतज्ञानத்துக்கு बहिर्व्याप्तிக்கு प्रसङ्गिக்கும் ஆகையால் अकालकाल्यशुद्धसत्त्वविभूतियிலும் कालसद्भावத்துக்கு விரோதமில்லை.

---

एवेति भवतीश्वरः कालसंयुक्तः। तथा च कथमीश्वरस्य सर्वं व्यापित्वम्। विभुर्धर्मिणः किम्बाधकं इति सुहृद्भावेनपृच्छाम इति चेत् नन्विदमेव। सर्वव्याप्तस्य स्वासंयुक्तप्रदेशभावेन तत्संयोगानुकूल व्यापाररूपकर्मणो सम्भव एवेति। प्रतिबन्द्यैतत्समाधत्ते —इन्द्रियेति। ज्ञानसामान्यस्येन्द्रियाधीनत्वेऽपि, ईश्वरस्यनिरिन्द्रियत्वेऽपिच तस्यभवदभ्युपगतं ज्ञानवत्त्वं कथमिति परैः कृतं प्रश्नं परिजिहीर्षद्भिर्भवद्भिः—तस्यनित्यज्ञानाङ्गीकार आघोषितः, तत्रेन्द्रियानपेक्षा च। तथैवास्माभिरपि विभुनोर्द्वयोस्संयोग कारणाभावेऽपि संयोगस्तयोरस्त्वजः। कर्मानपेक्षश्चेति स्वीकृते इति तात्पर्यम्। अस्मन्मते जीवेश्वरोभयगत ज्ञानस्यापि नित्यत्वेन न ज्ञाने क्वचिदपि चक्षुराद्यपेक्षा। न च जीवेषु तत्सद्भावोऽनर्थः। ज्ञानस्य नित्यत्वेऽपि तत्प्रसरणस्यानियतत्वात्तदर्थं द्वारतयेन्द्रियापेक्षणात्। ईश्वरेतु ज्ञानवत् ज्ञान प्रसरणमपिनित्यमिति तदर्थमपि तदपेक्षणम्। इत्थमेवास्माकं तत्रस्थितिः। तथा च ज्ञान प्रतिबन्देरस्मन्मते दुष्परत्वात् परमतेन तत्करणमिति बोध्यम्। नन्वीशस्यैकस्यैव सर्वव्यापकत्वात् तद्भिन्न-कालस्याप्यव्यापित्वमावश्यकमिति कथं सविभुर्भविष्यति इत्यत्राह—विशेषित्तु इति। विशिष्य-अष्टाक्षरादिषु-रहस्येषु। तत्र हि नाराअयनंयस्येति बहुव्रीहिपक्षे ईयत इत्ययनमिति कर्मव्युत्पत्तौ भगवतोव्यापकत्वं नारशब्दार्थ प्रपञ्चस्य व्याप्यत्वञ्च प्रतीयते। तथाचात्र फलितस्य व्याप्यव्यापकभावस्य जगद्ब्रह्मणोर्नियम्यनियामकभाव एव तात्पर्यमवसेयम्। अन्यथायथाश्रुतस्य गगनादितुल्यस्य तस्य वैयर्थ्यादिति तत्र परिमाणविशेषोक्तौ ननिर्बन्ध इति भावः। पुनरपि कालविभुत्वं द्विषयामाशङ्कां निराकरोति—ईश्वरेति। "अन्तर्बहिश्चतत्सर्वं व्याप्य-नारायणस्स्थितः" इतीश्वरस्य सर्वपदार्थेष्वप्यन्तर्बहिश्च व्याप्तत्ववचनात् तत् तदितर सर्व पदार्थ परिच्छिन्नत्वस्य ज्ञापकम्। अन्यथा विभुत्वाभिमतकालापेक्षया बहिर्देशाभावेन सर्वमन्तर्बहिश्च व्याप्यतिष्ठतीति निर्देशायोगादिति

---

வதற்கு இருபொருளுமோ—அல்லது—இரண்டில் ஒன்றோ, இடம் விட்டு இடம்மாற வேணுமே? என்னில்? கேள். இரண்டும் இடம்விட்டு இடம்மாறாமலே ஒன்றுடன் ஒன்று இணையலாம் காரணமின்றி காரியம் பிறக்குமா? என்றால்—இந்திரியங்கள் இல்லா திருக்க ஈசுவரனுக்கு அறிவை நீங்கள் ஒப்பியிருக்கிறீர்கள். அதுபோலவே இதுவும் குறிப்பாக ஈசுவரனை வியாபகவஸ்துவாகவும், மற்றுள்ளவை எல்லாம் அவனுக்கு வியாப்பிய வஸ்துக்களாகவும் சுருதிகள் முறையிடுவது முரணாகாதா என்னில்? ஆகாது. அவன

[ சுத்த ஸத்வ நிருபணம் ]

शुद्धसत्वமாவது रजस्तमो रहितமாய் विलक्षण सत्व गुणाश्रय மாயிருப்பதொரு द्रव्यம், இதில் सत्वம் बन्धकसुख सङ्गहेतुவாகாது. இத்द्रव्यம் रक्षाशिक्षादण्डाधिकृतனான स्वतन्त्रस्वामियினுடைய स्वरूप-रूपगुण विभूतिं चोरकारागृहமான लीलाविभूति போலன்றிக்கே, कर्मोपाधिक शरीरத்தைவிட்டு दयातत् फल-

---

तदभिमानः । सम्भवद्विषयेति । सम्भवत्वहिरन्तः प्रदेशवद्विषयेत्यर्थः । तथा च येषां पदार्थानां बहिरन्तः प्रदेशा भवितुमर्हन्ति, अर्थात्—येमध्यमपरिमाणवन्तः, तेषां विषयेहीय—"अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणस्स्थित इति श्रुतिः प्रवर्ततेसार्था । येत्वणवोविभवश्चभवन्ति पदार्थाः तेषां यथाक्रममन्तर्बहिः प्रदेशाभावेन यथा श्रुते तेष्वनुपपत्तेः । यथा—"हृदिह्ययमात्मा" इति श्रुति दर्शितहृदयदेशस्थिति र्जीवस्य हृदयाद्यवयवोपेत-शरीरशालि जीवविषया, नतु तदपेतस्थावरादि विषया । अन्यथा स्थावरादि शरीरेष्वपि तदवयवकल्पनापत्तेः । तथैवेहापीति भावः । तदुक्तं रहस्यत्रयसारे—"अन्तर्व्याप्तिर्नान एतेषां सद्भावस्थले स्वस्व" अयमत्र नास्तीति व्यपदेशानर्हतयासुश्लिष्टास्थितिरेव । बहिर्व्याप्तिरपि—एषां विरहस्थलेऽपि स्वस्यस्थितिरिति । तथा च विभुभूतबहिः प्रदेशरहितकालादिषु तद्रहितस्थलाभावात् बहिर्व्याप्तिर्नतमपेक्ष्येश्वरस्य वक्तव्येति । अत्रेदं बोध्यम्—यद्यपि अण्वा-दिष्वन्तर्व्याप्तिरीश्वरस्योक्तरीत्यान्तः प्रदेशाभावेऽपि परिष्करणेन कथञ्चिन् घटते । तेषां सद्भावाधिकरणे भूयमन्तरि-क्षेणा ईश्वर सद्भावस्याप्यनपोद्यत्वात् । तथा च यदवच्छेदेन यत्राणुर्विद्यते तत्र तदवच्छेदेनैवेश्वरस्यापि विद्यमान-तोपपत्तेरितियावत् । मूर्तयोरेवसमानदेशता विरहात् । यथा घटपटयोः । ईश्वरस्त्वमूर्तः । अतोनतस्य सप्रति-घत्वकृत स्समानदेशताविरोधः । इयञ्चरीतिरीश्वरव्यतिरिक्तकालगगनादीनां विभूनामपि दृष्टा इष्टाच । तेषामन्तः व्याप्ति सामर्थ्यं सत्यपि भगवत इव नियमनशक्त्यभावाद्विशेषो भवति भगवतः । तथाप्यन्तर्व्याप्तेरेवं परिष्कृत्योप-पन्य सनसौकर्येऽपि बहिर्व्याप्तिः—तदसंयुक्तयावत्प्रदेशसंयोगात्मिका, यथाश्रुतैवेति न कालाद्यपेक्षयाभगवतोबहि-र्व्याप्तिर्वक्तव्या । तत्कथनञ्च संभवस्थलाभिप्रायमिति । विरक्षेबाधकमाह—इङ्ग्निति । ईश्वरीयधर्मभूत-ज्ञानस्य सर्वविषयकत्वेन विषयतायाश्चसिद्धान्ते संयोगात्मकतया तद् विभुत्वसिद्धौ—तदपेक्षयापीश्वरस्य यदि बहि-

---

ஒருவனே எல்லாவற்றையும் நடத்திச்செல்லும் நாயகன் என்றும், எல்லாமும் அவனுக்கு அடங்கிய சரக்குகள் என்றும் கருத்து. ஈசுவரன் எல்லாப்பொருட்களையும் உள்ளும் புறமும் சூழ்ந்து நிற்கிறுன் என்றதற்கும்—உள்ளும்புறமும் உடையபொருட்கள் விஷயத்தில் அப்படி அவன் இருக்கிறுன் என்றுதான் கருத்து. இங்ஙனல்லாவிடில், அவன் தனது தன்மையாய் எங்கும் வியாபித்துள்ள அறிவுக்கும் வெளிப்புறம் இருக்கிறுன் என்று கொள்ளவேண்டி வரும். அப்போது அவனறிவுக்கும் எட்டாத ஓர் இடம் உண்டென்று தேறும். ஆகையால்—

விசேஷ யோகத்தாலே உபாயோபேயபூதனான நிருபாதிக சரீரியைப் பெற்றவர்களுக்கு ஸர்வைஸ்வர்யஸ்தானமாயிருக்கும். இத்தை அபரிச்சேத்யஸ்வரூபஸ்வபாவ மென்றது, தமஸ்ஸுக்குமேலே என்றதிற்கு விரோதம் வாராதபடி நிர்வஹிக்கலாம். அண்டத்திற்குப் புறம்பே லோகங்கள் இல்லையென்றும், மூலப்ரக்ருதியினுடைய ப்ரதம விகாரமான ஸூக்ஷ்மப்ரதேசவிசேஷமே பரமபதமென்றும் சொல்லும் பக்ஷங்கள் தம:

---

र्यप्युपपादनयत्नः क्रियेत, तदा तदीयधर्मभूतज्ञानासंयुक्त देशविशेषस्याप्यवश्य स्वीकर्तव्यताया प्राप्तया तद्ज्ञानस्य सर्वविषयकत्वहानिरेवस्यादित्याशयः। तत्रश्चनित्यविभूतावपि कालसद्भावं निगमयति—आकैयालिति। अकालकाल्यत्वं तत्कृतपरिणाम शून्यत्वम्। "नकालस्तत्रवैप्रभुरि"ति वचनात्। "....सर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टमहाविभूति"रिति वेदार्थसङ्ग्रहे। "स्थानंकाल विकालनाविरहितं विस्मृत्यशान्तंशिवं" इति श्रीशठकोपरामानुजयतीन्द्रमहादेशिकाश्च।

एवमुद्देशक्रमानुसारात् त्रिगुणं कालं च परीक्ष्याथशुद्धसत्वं परीक्षितुमाह—शुद्धसत्वेति। "क्षयन्तमस्यरजसः पराके—तमसस्तुपारे" इत्यादि श्रवणात् तदुभयराहित्यम्। क्षयन्तं वसन्तम्। इदमुपलक्षणमिश्रसत्वरहितेत्यपि बोध्यम्। "अवैष्णवानामप्राप्यं गुणत्रयविवर्जि"तमित्युक्तेः। तर्हि गुणत्रयेणापि राहित्ये द्रव्यत्वमेव विद्विव्यतीतित्यत्राह—विलक्षणेति। तदुक्तं—"स्वसत्वभासकं सत्वं गुणसत्वाद्विलक्षणम्" इति। इदञ्चनत्वं स्वयं प्रकाशत्वात् जडभूतलौकिकसत्वविलक्षणमित्यर्थः। अन्यथापि वैलक्षण्यमाह—इदमिति। "सुखसङ्गेनबध्नाति ज्ञानसंगेनचानघे"ति रीत्या बन्धकवैषयिक सुखसङ्गादि जनकं प्राकृतं सत्वम्। इदञ्चाप्राकृतत्वात् विमुक्तिहेतु ब्रह्मानुभवसुखादि सङ्गसम्पादकम्। अत एव शुद्धसत्वसमाख्योपपत्तिरिति भावः। इत्थं तस्य गुणस्यवैलक्षण्यमुक्त्वा तदाश्रयस्य स्थानस्यापि तदाह—इदद्रव्यमिति। शुद्धसत्वाख्यद्रव्यमित्यर्थः। तन्निष्ठवक्ष्यमाणवैलक्षण्य प्रतियोगिभूतां लीलाविभूतिमाह—रक्ष शिक्षेति। यथाभिमत फलवितरणेन विनतानां प्रीणनं रक्षा। इयञ्च-रक्ष्यवस्तु, तदभिसन्धिभेदादिना नानाविधाभवति। "नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिमिति भगवद्व्यतिरिक्तानां तत्सामर्थ्यं नास्ति। शिक्षा-शिक्षणं-शासनम्। इदङ्कुरु माकुर्वित्यादिरूपम्।"

---

காலத்தால் மாறிவிடாத—சுத்த ஸத்துவமய நித்தியலோகத்திலும் காலம் இருக்கக் குறையில்லை.

சுத்த ஸத்துவம் என்னும் பரமபதம்—ரஜஸ்ஸு தமஸ்ஸுக்களற்று தனித்ததொரு ஸத்துவ குணம் உடையதாய் இருக்கும் திரவியம். இதில் தனித்தன்மை வாய்த்திருக்கும் ஸத்துவ குணம் சிற்றின்பங்களைத் தராது. (பேரின்பமளிக்கும்.) உலகத்தைக் காத்து அறிவு புகட்டி, தவறினால் தண்டிக்கும் சுதந்திர ஸ்வாமியான எம்பெருமானுடைய உண்மை உருவம் வடிவு

परत्वादिश्रुति बलத்தாலும் இதனை विशदीकरिக்கிற शास्त्रங்களாலும் निरस्तங்கள், अप्राकृतदेशविशेष முண்டானாலும் அங்கு सायत्तமாயிருக்கிற विग्रहमण्टपादिகளுக்கு नित्यत्वं சொன்னவிடம் देवர்களுக்கு अमृतत्वं சொன்னது போலவும் द्यावन्तरिक्षங்களுக்கு अमृतत्वம் சொன்னதுப் போலவும் चिरकालस्थायित्वपरமாயித்தனையன்றோ? என்னில்; देवादिகளுக்குப் போல் இவற்றுக்கு विशेषित्तது

---

श्रुतिस्स्मृतिर्ममैवाज्ञा - रक्षाकृतनिवेदिनी श्रुतिरसौत्वन्नित्यशास्तिः इत्यादिरत्रप्रमाणम् । दण्डः स्वशासनातिक्रमे अतिक्रान्तवतोहितपर्यवसायी दुःखोत्पादको व्यापारः । अत्र, एवमेवपाठेयुक्तः- न तु दण्डपदं विहाय । "शिक्षविद्योपादाने", "दण्ड दण्डनिपाते" इति धातुनिष्पन्नयोरुक्तरीत्या भिन्नार्थयोरुभयोरपि पदयोरावश्यकत्वात् । ननु कथन्तर्हि "कौटिल्येसति दण्डयन्नित्यर्थे" कौटिल्ये सति शिक्षयाप्यनघयन्नित्युक्तिरिति चेत् । तत्रापि कौटिल्येसति तं दण्डयित्वा, ततः पश्चात् तस्य इदं कर्तव्यं नेदं इति शिक्षामुत्पाद्य रक्षतीत्यर्थपर्यवसानेनादोषात् । स्वतन्त्रस्वामी=स्वातन्त्र्यमिच्छाऽप्रतिघातः । स्वामित्वं फलभाक्त्वम् । भगवत्स्वरूपस्यरूपस्य गुणस्य-विभूतेश्चेति एतेषा येचोराः अपहर्तारः, अपलापिन इति यावत्, तेषां कारागृहं बन्धनस्थानं भवतिलीलाविभूतिरित्यर्थः । अप्रभोरसमर्थस्य प्रशस्तद्रव्यापहारेपि, प्रभोर्यत्किञ्चिद्धनापहारेपि—न चोराणां कारागृहप्रवेशः । प्रकृतेतु अयमीश्वरः रक्षाशिक्षादण्डाद्यधिकृतः । अपहृतञ्चवस्तु, नोपेक्षार्हं स्वरूपरूपगुणादिकम् । इदञ्चमहत्पातकम्—"जितश्चौस्तुभचौर्यस्यसम्राजस्सर्वपाप्मना"मिति वचनात् । चोरस्यानुतापे प्रमुषितद्रव्यप्रत्यर्पणादौ च सति, दयया, तं न दण्डयति । नोचेत्संसारे निपात्यदण्डयत्येवेति दर्शयितु रक्षाशिक्षाद्यधिकृतेत्याद्युक्तिः स्वरूपापहारादिकं रहस्यत्रयसार एवं विशदीचक्रे—ईश्वरस्यैवानङ्गीकारः, विभूत्यन्यतमभूतं कञ्चित् ईश्वरीकृत्येश्वरस्य विभूतिमध्येपरिगणनञ्चेति द्विरूपस्स्वरूपापहारः । रूपापहारश्च "रुक्माभं आदित्यवर्णं" मित्याद्युक्ताप्राकृतविग्रहप्रतिषेधेन परमाण्वादिशरीरकत्वकल्पनम् । गुणापहारोपि—ईश्वरं निर्गुण इति कृत्वा श्रुतिषुतस्यगुणकथनमुपासनार्थमिति, सपरदुःखदुःखी, दोषभोग्य इति वा स्वीकरणम् । विभूत्यपहारश्च प्रपञ्चमिथ्यात्ववादः, तत्सत्यत्वेपि तस्यस्वातन्त्र्यम्, परतन्त्रत्वेप्यसच्छेषत्वम्, इत्यादिरूप इति लीलाविभूतीति ।

---

குணங்கள் செல்வம் இவைகளை இல்லை என்னும் கள்வர்களை அடைக்கும் சிறைக்கூடமாகிய இந்த உலகம் போலன்றிக்கே—வினைப்பயனைபவரும் இந்த சரீரத்தைவிட்டு தன்னுடைய கருணையாலே வந்த பக்தி ப்ரபத்திகளாலே தன்னை அடையத்தானே வழி என்றிருக்கும், உலகமே உடலான ஸர்வசரீரியை ஈசுவரனைப் பெற்றவர்களுக்கு அவனுக்கு அடிமைசெய்து ஆனந்திக்கும் ஆஸ்தானமாக இருக்கும் இந்த உலகம் இந்த உலகு எல்லையற்றது என்பவர்களுக்கும்—பிரகிருதிமண்டலத்திற்கு மேலே இந்த உலகம் உள்ளது என்று வசனங்களுக்கு

इयं लीलार्थाविभूतिः, सातुभोगार्था। परानर्थपर्यवसायी विनोदोलीला। अतथाभूतोभोगः। कर्मोपाधिकश रीरत्यागश्च—"नहवैसशरीरस्यसतः प्रियाप्रिययोरपहतिरस्ति" इत्युक्तः। इदमुपलक्षणम् विद्यामाहात्म्यात् गतिमात्रार्थमनुवर्तमानसूक्ष्मदेहत्यागोपिविवक्षितः। "शरीरंत्यक्त्वा....शरीरिणं प्राप्तवत इति चादूक्तिः। अतोऽ "रूपस्यहेतोर्बहुहातुमिच्छन्" इति दूषणानवकाश इति द्योत्यते। शारीरीति प्रत्ययेनाधिकलाभप्रतीतेः। उभयविभूतिविशिष्टब्रह्मानुभवज्ञापनार्थं शरीरिशब्देनभगवतोनिर्देशः। भगवत्प्राप्तेः कारणमाह—**दयातत्फलविशेषेति।"** वरद! तवखलु प्रसादादृते....वागपिमेनोदियादिति सर्वश्रेयोनिदानभूतायादयायाः, तत्फलभूत-भक्तिप्रपत्ति प्रभृतीनां च योगेनेत्यर्थः। अथवा - तत्फलं - दयाफल कैङ्कर्यादिः। ततश्च - दयायोगेनोपायो भवति - भगवान्। कैङ्कर्ययोगेनोपेयोभवति इति यथासङ्ख्यमन्वयोभाव्यः। भगवतः प्राप्तव्यत्वे औचित्यं दर्शयति—**उपायोपेयेति।** स्वप्राप्तौस्वयमेव साधनतयाश्रुतौ जोघुष्यमाण इत्यर्थः। निरुपाधिकत्वं कर्माद्युपाधिरहितत्वम्। स्वाराज्यं सस्वराड्भवतीत्युक्तोमोक्षः। स्थान प्रभावश्च—"अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मन इत्यादिना महाभारतादिषुद्रष्टव्यः। नन्वस्यलोकस्य—"तेषामपीयत्परिमाणमियदैश्वर्यमिति परिच्छेत्तुमयोग्ये....अतिप्रमाणे कस्मिश्चिद्दिव्यायतने" इत्यादिनाऽपरिच्छिन्नत्वावगमात्, प्रकृतेरपि "तदनन्तमसंख्यातप्रमाणञ्चापिवैयतः इति तथात्व प्रतातेः परस्परंसङ्करावश्यंभावात् प्राकृताप्राकृतलोकव्यवस्थादौस्थ्यमित्यत्राह—**इत्ते इति।** तथा च नित्यविभूतेः "तमसः परस्तात् तमसः परम" इत्यादितस्तमश्शब्दवाच्य प्रकृतिमण्डलादूर्ध्वप्रदेशमात्रवर्तिताया अपि प्रमाण प्रतिपन्नत्वेनोभयाविरोधाय तदपरिच्छेदवाक्यस्यपूर्वोक्तस्य प्रकृतिमण्डलादूर्ध्वप्रदेशमात्रे अपरिमितत्वबोधकत्वं कल्पनीयम्। एवमेवप्रकृत्यपरिच्छिन्नत्वमप्यधः प्रदेशमात्रविषयकम्। ततश्च न लोकद्वयसङ्कर इति व्यवस्थोपपद्यत इति भावः। ननु नित्यविभूतेः प्रकृत्यूर्ध्ववर्तित्वं विरुध्यते। अण्डाद्बहिः कस्यापि लोकस्यासंभवादिति यादवप्रकाशीयानाम्मतमपाकरोति—**अण्डत्तुकु इति।** "सदेवसोम्यदमग्र आसी" दित्याद्यवधारणात् सृष्टेः प्राक्ब्रह्मभिन्ननित्यविभूतिसद्भावे तदयोगात् सोपि लोकोऽण्डान्तरेवावतिष्ठतीत्यकामेनापि स्वीकार्यमिति तदाशयः। तर्ह्यस्माल्लोकात्तस्य कोविशेषोऽण्डान्तरवस्थितत्वे इत्यत्राह—**मूलप्रकृतीति।** "अक्षरेपरमेव्योमन्नि"ति परमपदस्याक्षरशब्दवाच्यतयाप्रकृतेर्याऽऽद्यावस्थाऽक्षरमिति सैव सूक्ष्मावस्था सुखमयी मुक्तानामीश्वरस्यचस्थानं परमपदमुच्यते।" तेषामेषां केचनब्रह्मलोकाः,

---

விரோதமின்றி கருந்து கூறவேணும். அண்டத்திற்கு அப்புறம் உலகங்களே இல்லை என்றும் மூலபிரகிருதியின் முதல் மாறுபாடான ஸூக்ஷ்ம பிரதேசமே இந்த பரமபதம் என்றும் சொல்லுவார்க்கு—பிரகிருதிககு மேலே பரம்பதமுள்ளது என்பது போன்ற வசனங்கள் விரோதிகளும். போகட்டும், பரமபதமிருந்தாலும், அங்குள்ள மண்டப கோபுரங்கள் பகவா

रुद्रस्यान्येसन्तितत्रैवलोकाः, विष्णोरन्येसन्तिविशालालोकाः। तांस्तान् लोकान् तानुपास्यव्रजन्तीति तत्त्वविचारणायामुक्तेः। अधिकं ज्योतिरधिकरणश्रुतप्रकाशिकातत्त्वत्रयव्याख्यानादाववगन्तव्यम्। परन्तु, तत्त्वत्रयव्याख्याने—अस्यस्वपक्षत्वेनकथनं प्रतिभाति। तत्तुचिन्तनीयम्। तदेतन्निराकरोति—तमःपरत्वादीति। श्रुतयश्चानुपदमेवोपात्ताः। आदिना—"शीर्षकपालंभिनत्त्यण्डं भिनत्ति अक्षरंभिनत्तीत्यादीनां वाक्यानां ग्रहणम्। शास्त्राणि—अप्राकृतं सुरैर्वन्द्यं ज्ञानानन्दमयालोकाः। षाड्गुण्यप्रसरोनित्यं स्वाच्छन्द्याद्देशतांगतः। दिव्यंस्थानमजरञ्चाप्रमेयमित्यादीनि। तथाचैभिः प्रमाणैरस्यलोकस्याप्राकृतत्वाण्डबहिर्वर्तित्वादिसिध्द्या, प्राकृसृष्टेरेकत्वावधारणस्य प्रकृतप्राकृतलोकाभावपरतया नाप्राकृतलोकलोप इति भावः।

अथाप्राकृतलोकमात्रमभ्यनुज्ञाय तस्यनित्यत्वंनिषेधताम्मतमपाकरोति—अप्राकृतेति। पूर्वोपात्तवचनबलात्तस्याप्राकृतत्वप्रतिपत्तौ तत्र युक्तिविरोधाभावात्तदभ्युपगमोभवति युक्तः। नैवं तस्य नित्यत्वे। वक्ष्यमाणविरोधादित्याशयः। सावयवेति। यत्सावयवं तदनित्यमितिहि व्याप्तिः। इदञ्चहेतु गर्भविशेषणम्। विग्रहः—"निवासशय्यासन-त्वदीयभुक्तोज्झि तशेषभोजिना-दासस्सखावाहनमासनं मित्याद्युक्तश्शेषशेषाशनगरुडप्रमुखनित्यानां नित्यविग्रहः। "सव्यंपादं प्रसार्ये"त्युक्तः परवासुदेवविग्रहश्च। मण्डपादिः—"देवानां पूरयोध्या तस्यां हिरण्मयः कोशः—अमृतेनावृतां पुरीं-प्रजापतेस्सभांवेश्मप्रपद्ये, सहस्रस्थूणे विमितेदृढउग्रे यत्रदेवानामधिदेवआस्ते" इत्यादिनाश्रुतौ—"दिव्यावरण सहस्रावृते दिव्यकल्पकतरूपशोभिते दिव्योद्यानसहस्रकोटिभिरावृते अतिप्रमाणे दिव्यायतनेकास्मिंश्चित् विचित्रदिव्यरत्नमयदिव्यास्थानमण्डपे," इति श्रीवैकुण्ठगद्ये, "सर्वात्मसाधारणनाथगोष्ठीपूरेपि दुष्पूरमहावकाशम्। आस्थानमानन्दमयं सहस्रस्थूणादिनाम्नातमवाप्नवानी"ति श्रीरङ्गराजस्तवेचानुसंहिताः प्रदेशाः। "सदापश्यन्तिसूरयः" "नित्यंनित्याकृतिधर"मित्यादिना नित्यत्वमुक्तमिति भावः। तस्यगौणत्वेदृष्टान्तः—देवर्कैलिति। देवानां "अमरानिर्जरादेवाः" इत्यादावुक्तममरत्वं न यथाश्रुतार्थम्। देवत्वं कर्मणाप्राप्य पश्चात्तदवसाने स्वर्गाद्भ्रंशश्रवणात्। ततश्चतद्यथाचिरकालस्थायित्वाभिप्रायं तथैवप्रकृतेपीतिभावः। "वायुश्चान्तरिक्षञ्चैतदमृत"मित्यत्रापि वाय्वन्तरिक्षयोः—"भूतादेराकाशं आकाशाद्वायुरि"त्युत्पत्ति कथनादेवामृतत्वं पूर्ववदौपचारिकमिति च। एवमुक्तं पक्षं खण्डयति—देवादिकळ इति। न केवलमुत्पत्ति श्रावणाभाव एव। किन्तु नित्यत्वबोधकवचनान्यापि प्रत्युतसन्तीत्याह—तदाकाशमिति।

---

னுடைய திருமேனி முதலியன எப்படி நித்தியங்களாகும்? அவைகள் பலபல உருப்புகளின் தொகுப்பல்லவோ? ஆகையால் அவைகளை நிததியங்கள் என்று சொன்னது மிகைச்சொல். தேவர்கள் மரணமற்றவர், ஆகாயம் வாயு முதலியன சாசுவதங்கள் என்பதுபோல் என்று சிலர் கலங்குவர். அது சரியல்ல, தேவர் முதலியவர்களின விஷயம்வேறு. இவற்றின்

उत्पत्तिलयवादமில்லாமையாலும், 'तदाकाशं सनातनं' 'सदा हि तस्मिन्निवसामि देवाः' 'नित्यं नित्याकृतिधरं' 'नित्यसिद्धे तदाकारे' 'ध्यातव्यो नित्यलोकस्थः' इत्यादिகளாலே विशेषित्तும் नित्यत्वம் சொல்லுகையாலும், आगमविरुद्धமாக अनुमानம் சொல்லில் अतिप्रसङ्गம் வருகையாலும்

---

"आगच्छविष्णो! भद्रन्ते दिष्ट्या प्राप्तोसिमानद। भ्रातृभिस्सहदेवाभैः प्रविशस्वस्विकान्तनुम्। वैष्णवींतां-महातेजास्तद्वाकाशं सनातन"मित्युत्तरश्रीमद्रामायणे। "सदाहितस्मि" न्नित्यस्याकरोन्वेष्टव्यः। "नित्यं नित्याकृतिधरं तेजसा सूर्यवर्चसम्। भिन्नं सितादिभेदेन चोर्ध्वाधस्संस्थितेनेति श्रीसात्वतसंहितायाम्।" नित्यसिद्धेतदाकार इत्यादि श्रीपौष्करे। "देवोवैकुण्ठनाथस्तु अनन्तासनसंस्थितः। सेव्यश्श्रीभूमिनीळाभिः प्रादुर्भावैस्तुचाखिलैः। शंखचक्रधरो नित्यंजानुन्यस्तैकहस्तवान्। अभयप्रदहस्तश्च नीलजीमूतसन्निभः। ध्यातव्योनित्यलोकस्थोभुक्तिमुक्तिफलप्रद इति बलपौष्करसंहितायाम्। उक्तयुक्ति विरोधमपिपरिहरति— आगमविरुद्धेति। एतद्विग्रहादिकमनित्यं सावयवत्वादित्यनुमानस्य धर्मिग्राहकागमेन साध्यापहाराद्बाधितत्वम्। अन्यथा शरीरत्वादिना भगवद्विग्रहादौ व्याध्याद्यनुमानस्यापि प्रसङ्गात्। तत्तश्चागमाद्धर्मिसिद्धौ तत एव तद्धर्मा अपिस्वीकार्याः। अपरथाऽर्धजरतीयापत्तेरिति भावः। अत्र—"नित्यमाकचोन्नवैनित्य"मितिवचमभङ्ग्या— तत्रैवपरमपदे "परितः पतितैः पतमानैः पादपस्थैश्च पुष्पैरुपशोभिते" इति पुष्पादीनामनित्यतयोक्तानामनित्यत्व-मेवेति सूचितं भवति। यत्तु तत्त्वत्रयव्याख्याने-त्रस्वरमुन्युक्तं—"अवयवसम्बन्धमात्र नानित्यताहेतुः। किन्त्ववयवारब्धत्वम्। अन्यथाकरचरणाद्यवयवसम्बन्धिन आत्मनोपिविनाशस्स्यात्। एवञ्चैतादृशावयवारब्धत्वे प्रमाणाभावात् अस्य(भगवद्विग्रहस्य)करचरणाद्यवयवयोगित्वेपि नित्यत्वमेवेत्यन्यत्राचार्या आहु"रि इति। तन्न। अवयवारब्धत्वस्य तज्जन्यरूपस्यानित्यत्वविस्त्युत्तरकाल वेद्यतयाऽनेन तत्साधनेज्ञसौ अन्योन्याश्रयणात् किञ्च— अनित्यत्वसाधकतयाऽभिमतं सावयवत्वं अवयवप्रतिसम्बन्धित्वरूपमेव। अवयवित्वमितियावत्। तच्चवैशेषिका-दिरीत्यातिरिक्तनिष्ठमव्यासज्यवृत्ति, सिद्धान्त इव समुदायनिष्ठं व्यासज्यवृत्तिर्वाभवत्वित्यन्यदेतत्। तथाचनोभय-थापिभविष्यत्यात्मनोऽवयवप्रतिसम्बन्धित्वरूपं सावयवत्वम्। येन तस्यानित्यत्वमापद्येत। शरीरमेवहि तत्प्रति-सम्बन्धि। नात्मातमपेक्ष्य करचरणादिष्ववयवव्यवहाराभावात्। आत्मातु शरीरप्रतिसम्बन्धी। तथा च नित्य

---

விஷயம் வேறு. அங்கு அவர்களுக்கு வேறிடங்களில பிறபபிறபபு சொல்லிபுள்ளது. இங்கப்படியல்ல. மாருக—இவை நித்தியங்கள் எனறே வசனங்கள் இருக்கின்றன. "பரமபதம் சாசுவதம். அதில ஈசுவரன் என்றென்றும் வீற்றிருக்கிருன. நித்தியமான உருவமுள்ளவன் அவன், நித்திய உலகில நித்யஸித்தமான திருமேனியுடன அவனை நாம்

परमपदத்தில நித்யமாயச் சொன்னவை நித்யங்களாகலாம். நித்ய ப்ராசுர்யத்தாலே நித்யவிபூதி வ்யபதேசம். அதில் உத்பத்திக்ரமஸித்தமன்றிக்கே ஸ்வபாவ நியதமான சப்தாதிகுணக்ரமத்தாலே ஆகாசாதிவிபாகம் உபபந்நம். அப்ராக்ருதபஞ்சபூதங்கள் பஞ்சோபநிஷத்ப்ரதிபாத்யங்களாய் பஞ்சசக்திகள் என்றும் பேராயிருக்கை

---

विभूतौ विग्रहादीनांनित्यत्वे आचार्यपादप्रदर्शितैवगतिरिति सुधियो विभावयन्तु। ननूक्तरीत्या तत्रानित्यपदार्थानामपिसत्त्वे तस्याः नित्यविभूतित्वव्यपदेशो विरुध्येतेत्यत्राह—**नित्यप्राचुर्येति**। ईश्वरस्य नित्यमुक्तानाञ्च तत्तत्कालसिद्धेच्छानुगुणतयाऽनित्यविग्रहादि परिग्रहेण कतिपयानित्यपदार्थसद्भावेपि, तेषामेवनित्येच्छासिद्धा अन्ये विग्रहादयः मण्डपगोपुरप्रोद्यानवापी कूपतटाकछत्रचामरादि परिच्छदप्रभृति पदार्थाबहवोनित्या अपि तत्र सन्तीति भूयसांन्यायात् सलोको नित्यविभूतिरिति व्यपदेशमर्हतीत्यर्थः। अनेनैवन्यायेन—"अनित्यमसुखं लोकमिमं प्राप्यभजस्वमामित्यादौ लीलाविभूते रनित्यलोकताव्यवहारोप्युपपादनीयः। अन्यथात्रापि—प्रकृतिजीवकालादिकतिपयनित्यपदार्थसत्त्वेनाशङ्कातौल्यात्। ननु तत्र मण्डपगोपुरादीनां पाञ्चभौतिकत्वस्य वक्तव्यतया पञ्चानां भूतानाञ्च—"आत्मनआकाशस्सम्भूतः आकाशाद्वायु"रिति क्रमेणोत्पन्नत्वेन पुनरपि तस्याविभूतेरनित्यत्वं दुर्वारम्। आकाशादीनि तत्राप्राकृतानिनित्यानि नोक्तोत्पत्तिक्रमसिद्धानीति चेत्—तर्हि तेषां प्रतिनियताकाशादिशब्दवाच्यत्वमेवकथम्? शब्दादयोहि कारणक्रमेण तत्र तत्रोत्पद्यमानेषु स्वयमेकोत्तरवृध्द्याजायमानाः आकाशादीनामाकाशादिशब्दवाच्यताया व्यवस्थापकादृश्यन्ते। तथा च तेषामुत्पत्त्यभावे सर्वमिदं सङ्कीर्णमिवजायेतेत्यत्राह—**அதில இதி**। अयम्भावः "आत्मन आकाशस्सम्भूत" इत्यादीनां प्राकृताकाशादिपरत्वेनात्रत्याप्राकृताकाशादयोनोत्पद्यन्त एव। तथापि सदासिद्धेषु तेषु तत्तत्स्वभावभूतानां शब्दादीनामप्येकोत्तरवृध्द्यानित्यं भगवदिष्टत्वेन तत एव कारणाद्व्यवस्थयाऽऽकाशादिव्यवहार इति। अत्राकाशादीति वाय्वादि चतुष्टयस्यैकादशेन्द्रियाणाञ्चग्रहणम्। नाकाशव्यतिरिक्तानां सर्वेषामपि। तेषामनुपयोगात्। प्रकृतिस्थानेऽप्राकृतं द्रव्यं स्वीक्रियते। मण्डपगोपुरादीनां सदादर्शनादीनाञ्चकृते पञ्चभूतान्येकादशेन्द्रियाणि च। तथा च तन्मात्राणि प्रकृतिमहदहंकाराश्चानपेक्ष्या एव। यद्यपि तत्र सदादर्शनादीन्यपि नित्यत्वात् नेन्द्रियापेक्षीणि। नापि दर्शनादीनां लक्षणं तत्तदिन्द्रियघटितमूर्तिकम्। रूपविषयकसाक्षात्कारत्वं दर्शनत्वमितिरीत्या विषयघटितस्वरूप-

---

நினைக்கவேணும்." இத்யாதி இவ்வளவு வசனங்களுக்கும் மாறாக நாமாக எதையும் ஊஹிக்கலாகாது. அப்படியானால் மிகவும் விபரீதங்கள் நிகழும். ஆக நித்தியங்கள் என்று சாஸ்திரம் கூறுமவற்றை நாமும் நித்தியங்கள என்றே ஏற்கவேணும். அந்த உலகை நித்திய உலகம் என்பதற்கு பெரும்பாலானவை அங்கு நித்தியங்கள் என்று கருத்து. (சிறுபான்மை

யாலே भगवद्विग्रहादिகளை पञ्चोपनिषन्मयங்களென்றும் पञ्चशक्तिमयங்கள் என்றும் சொல்லுகிறது. இப்படியே இத்த்ரவ்யம் षाड्गुण्य प्रकाशोपयोगादिகளாலே षाड्गुण्यमयமென்றும், अनुकूलस्वभावतैயாலே आनन्दमयமென்றும், अत्यर्थभोग्यமாய்க்கொண்டு प्राप्यமாகையாலே परमपदமென்றும் சொல்லு

---

त्वात्तेषाम् । अथापि विग्रहादियोगिनां तेषां नित्यानां शरीरेषु तत्तदवयववैकल्ये काणादिष्विव दोषोन्मेषाभिमानेनेन्द्रियाणामलङ्कारार्थमावश्यकतेति कथञ्चित्समाधातव्यम् । नत्वेवं महदाद्यभावे दोषश्शङ्क्येत । अत्र पक्षान्तरमप्युक्तं **न्यायसिद्धाञ्जने**— त्रिगुणवदियमपि चतुर्विंशति तत्त्वात्मिकेति केचित् । तथापि तत्त्वानां न प्रकृति विकृतिभावः । तेषां नित्यत्वश्रावणात् । अप्राकृतानां महदादीनां तत्र सद्भावः आकाशादिवदिति । ननु तत्र भगवद्विग्रहादीनामप्राकृतभूत पञ्चकमयत्वमसिद्धम् । तेषां पञ्चोपनिषन्मयत्वस्यैव श्रावणादित्यत्राप्राकृतभूतानां पञ्चोपनिषत्प्रतिपाद्यतयाऽविरोधमाह —**अप्राकृतेति** । पञ्चोपनिषदः पञ्चोपनिषन्मन्त्राः । ते च "परमेष्ठी पुमान् विश्वः निवृत्तिस्सर्व एवचे"त्युक्ताः ।

एतन्मन्त्रपञ्चकप्रतिपाद्यपरमेष्ठयादिदेवताधिष्ठितत्वात् अप्राकृताकाशादीनां पञ्चोपनिषत्प्रतिपाद्यत्वम् । तन्मयस्य भगवद्विग्रहादेरपि पञ्चोपनिषण्मयत्वम् । **पञ्चशक्तीति** । एतानि भूतानि कार्योपयोग्यपृथक् सिद्ध विशेषणानीति शक्तयो भवन्ति । एतदुभयमयत्वञ्च "पञ्चोपनिषदात्मके । पञ्चशक्तिमये दिव्येशुद्धसत्वे सुखाकरे ॥" इत्याद्युक्तं भगवद्विग्रहस्येति । ननु भगवत्स्वरूपापेक्षया नान्यत्किञ्चित्परमपदाभिधेयमस्तिधामादिकम् । "समस्तहेय रहितं विष्णवाख्यं परमं पदम् ।" इत्यादि वचनात् । अत एवास्यलोकस्य "षाड्गुण्यप्रसरो नित्यं स्वाच्छन्द्याद्देशतां गतम् ॥" इति षाड्गुण्यमयत्वमभिधीयते ।" ज्ञानानन्दमया लोका" इति आनन्दमयत्वञ्च । अन्यथा भगवद्व्यतिरिक्तस्याचेतनस्य तत्त्वायोगात् । ततश्च—"तद्विष्णोः परमं पदमि"ति षष्ठीभवत्यभेदार्थिकेत्यत्राह—**इப்படியே** इति । पूर्वोक्तपञ्चोपनिषन्मयत्वादिवदित्यर्थः । **षाड्गुण्यप्रकाशेति** । भगवत्स्वरूपगतषाड्गुण्यप्रकाशोपयोगितयाऽयमपि देशविशेषो हेतुहेतुमतोरभेदविवक्षया—आयुर्घृत"मित्यादाविव षाड्गुण्यमयमित्युच्यत इत्यर्थः । **अनुकूलस्वभावतयेति** । भगवद्विग्रहगोपुरादीनामपि भगवत्स्वरूपवत् ज्ञानाकारतावगमात् तेषामेवानुकूलतया भासमानानामानन्दमयत्वादिकमुच्यते । अनुकूलतया भासमानज्ञानस्यै

---

அநித்தியங்களும் அங்கு உண்டு.) அங்கு ஆகாயம் முதலிய ஐம்பூதங்களுண்டு. ஆனால் அவற்றுக்கும் அவற்றின் குணங்களுக்கும் முற்பாடு பிற்பாடுகள் பிறப்பை ஒட்டி வந்தவை யல்ல. பின்னை ? இயல்பாகவே பகவானுடைய ஸங்கல்பத்தால் ஏற்பட்டவை. அங்கு பிரகிருதியின் ஸம்பந்தமில்லாத—அப்பிராக்ருத பஞ்சபூதங்களுக்கு, பஞ்ச உபநிஷத் என்றும்

கிறதாகையாலே இப்பாசுரங்களில் ஆபாத ப்ரதீதியைக் கொண்டு அர்தாந்தரங்களை கல்பிப்பதற்கு அவகாசமில்லை.

---

वानन्दत्वात् । तथा च रहस्याम्नायब्राह्मणम्—किमात्मिकैवैषा भगवतो व्यक्तिः ? यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान् ? ज्ञानात्मक इति । आचार्यैरप्युक्तं—"विश्वातिशायिसुखरूप ! यदात्मकस्त्वं व्यक्तिं करीश ! कथयन्ति तदात्मिकान्ते । येनाधिरोहतिमतिस्त्वदुपासकानां सार्किं त्वमेव तववेतिवितर्कडोला"मिति । अत्यर्थभोग्येति । ज्ञानानन्दरूपतया परिपूर्णब्रह्मानुभवदेशतयाच भगवत्स्वरूपस्येवास्यापि लोकस्यपरमपदत्वं परमप्राप्यत्वं युक्तमित्यर्थः । इप्पाशुरङ्गळ्=पूर्वोपात्त प्रमाणानि । अर्थान्तरङ्गळ्—अतिरिक्तलोकाभावः षष्ठ्या अभेदार्थकत्वमित्यादि । अवकाशमिल्लै इति ।" स्वयैवप्रभयाराजन् ! दुष्प्रेक्षं देवदानवैः । अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः । इत्यादिस्पष्टवचनसद्भावादिति भावः ।

अथाधिकारान्ते—स्वोक्तस्यसर्वस्यार्थस्याभगवत्तस्सम्प्रदायागतत्वमाहगाथया—तीवकैमारि इत्यादि । अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलस्यार्जुनस्य बुद्धि दौर्बल्य प्रयोजकपापराशिं विनाश्येत्यर्थः । "नयोत्स्य" इति वादिनं "करिष्ये वचनं तव"ति वादिनं कृत्वाहि अर्जुनेविपर्यासो भगवता प्रदर्शितः । अत्रु—जगदुपकृतिमर्त्यं आश्रितवात्सल्यैकविवशश्चभगवान् यदायुद्धरङ्गेऽर्जुन रथिनमात्मानञ्चसारथिं सर्वलोकसाक्षिकञ्चकार, तदा । ओर् तेरिल् अर्जुनस्य स्वाभिमानविषयेरथे । अथवाऽतिविलक्षणेरथे । वैलक्षण्यञ्च—अर्जुनरथस्य पूर्वमेवाश्वत्थामादिविमुक्तैरस्त्रविशेषैः जझ्परितकलेवरस्यापि कृष्णसङ्कल्पेनायुद्धसमाप्तिविधृतत्वम् । अस्य विस्तरः भारतेद्रष्टव्यः । प्रणववच्छेषप्रधानोह्ययंरथः इत्यपिवैलक्षण्यम् । अग्रतस्स्थितावपिसारथित्वात् भगवतश्शेषिणोऽप्राधान्यम् । तदुक्तं—अभिरक्षितुमग्रतस्स्थितं त्वांप्रणवेपार्थरथे च भावयन्तः "इत्यादिना । अर्जुनाविवेकविध्वंसनायभगवताकृतमुपायमाह—आरणम् पाडिय इति । सर्वोपनिषत्सारभूतां गीतां गायत इत्यर्थः । गीतासंज्ञानुगुण्येनात्र गानशब्दप्रयोगः । युद्धभूमौहि रोदनमेवप्रथितम् । अत्रतु गानमिति कोप्ययं विनोद

---

பஞ்ச சக்தி என்றும் ரஹஸ்ய சாஸ்திரங்களிலே பேராகையாலே, அவற்றாலான பகவானுடைய திருமேனி முதலியவற்றை—பஞ்ச உபநிஷந்மயம்—பஞ்சசக்திமயம் என்று சொல்லுகிறது. (பஞ்ச உபநிஷத்=பஞ்சோபநிஷத் மந்திரங்களாலே கூறப்படுமவை, பஞ்சபூதங்கள.) இவ்விதமே—இந்த அப்பிராக்ருத உலகம்—பகவானுடைய ஜ்ஞாநம் சக்தி முதலிய ஆறு குணங்களையும் மறைக்காது எடுத்துக் காட்டுகையாலே, இதை ஷாட்

* தீவகை மாற்றியன்ற்ரோர் தேரிலாரணம் பாடிய நம்
தேவகி சீர்மகனார் திறம்பாவருள் சூடிய நாம
மூவகை யாமறியாத் தத்துவத்தின முகமறிவார்
நா வழியே நடததும் நடைபார்தது நடந்தனமே. 7

---

इति ध्वन्यते। कएवमगायदित्यत्राह— नम् देवकिशीर मकनार इति। कंसस्यकटके तदीयक्रूराव-लोकनपरिहाराय प्रथमं स्वोदरे निक्षिप्य पश्चात् गोकुलेगूढं संवर्ध्यच प्राप्तकाले कृष्णं प्रकाश्यास्माकमुपकृतवतीहि देवकी। तादृश्याः प्रशस्तः पुत्रः। "ब्रह्मण्यो देवकीपुत्र" इति ह्युपनिषदपि घोषयति। मकनार— मातुर्वत्सलः कनिष्ठः। अथवा देवकिशीर् मकनार् कंसेन पूर्वं उपलतले प्रहृत्य व्यापादितान् स्वस्यषडपिशिशून् स्मारं स्मारं सन्तप्तोदराया देवकया गर्भे चन्द्रमा इवशीतीभूयाविर्भूतः। यद्वा देवकि इत्यादि—स्वयं दुर्विभेद्य कंसकृतस्वपादनिगळबन्धमुन्मोक्तुमक्षमयोर्मातापित्रोर्बन्धमोक्षायाविर्भूय—अनन्यगतिकस्य कृत्स्नस्यलोकस्य "बन्धविच्छेत्ताऽहमेवे" त्याघोषयन्निवस्थितः। अथवाथवा देवकीत्यादि—दशरथेनमहिषीभिश्च चत-सृभिर्व्यक्तिभिस्सम्भूयोत्पादिता पत्यचतुष्टयव्यावृत्ततया वसुदेवदम्पतिभ्यां नन्दगोपदम्पतिभ्याञ्चमिलित्वो-त्पादित एकः प्रियः पुत्रः। तादृशेन भगवतास्वस्यसम्बन्धमाह तिरन्वावरुल् शूडियनामिति। तस्यामोघ-कृपापात्रीभूतावयम्। "कृष्णे नमेमोघं वचोभवेत्"—कौन्तेय प्रतिजानीहि नमे भक्तः प्रणश्यती"ति द्रौपद्यर्जुनाभ्यां स्वार्जितत्वेन कीर्तिताया भगवत्कृपाया न वयमपवादभूताः। "मदेकवर्जंकिमिदं व्रतं ते"— "सत्वं सएवरभसो भवदीपवाद्यश्चक्रं तदेव शितधारमहञ्च पाल्याः। साधारणेत्वयिकरीश! समस्त जन्तोर्मातङ्ग-मानुषभिदानविशेषहेतुः" इत्यूचिरेहि आचार्याः। एवं भगवता कृपापात्रीकृतावयं पूर्वाचार्य प्रवर्तितं मार्गं सर्वात्मनाऽनुसराम इत्याह—मूवकैयामिति। अरियात्तत्तुवम् अचेतन तत्त्वम्। प्रकृतिकालनित्यविभूत्याख्य त्रिविधाचेतनवर्ग प्रकारवेदिनां पराशरपाराशर्यादीना सूक्तिमनुसृत्य प्रसृतेन सम्प्रदायाध्वना वयमपि याम इत्यर्थः।

---

குண்யமயம் என்பா. வேண்டப்படுகையாலே ஆனந்தமய மென்பர். மிக ஆசையுற்று நாமடைய வேணடியிருபபதால்—பரமபதம் எனபர். (பதம்=அடையததக்கது.) இங கெல்லாம் இச்சொற்களின மேலெழுந்த பொருளைக்கொணடு விபரீதமாகக் கட்டலாகாது.

(பாசுரததின் கருதது.) அனறு குருக்ஷேததிர யுத்தததின் நடுவே தேரூர்ந்து வேத கீதமாம் கீதையைபபாடி தீவகைகளை மாற்றிய ஸ்ரீதேவகீ புததிரராம் நம் கண்ணன் கழலிணை

इति श्रीकवितार्किक सिंहस्य सर्वतन्त्र स्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

परमतभङ्गे

॥ अचित्तत्त्वाधिकारः तृतीयः सम्पूर्णः ॥

---

नावाक्। "रेखामात्रमपिक्षण्णादामनोर्वर्त्मनः परम्। नव्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ इतिवदिहापि" शिष्याश्शिक्षितबुद्धश्श्रुतिपथे येषां वयं येचनः ॥" इति रीत्यावयं तिष्ठाम इति भावः।

देशिकेन्द्रदयादृष्टिनष्टमोहो व्यतानिषम्।
व्याख्यामचेतनाभिख्य तत्त्वगोचरभागगाम् ॥ 1 ॥

गुणत्रयलसद्वपुः प्रकृतिकार्यवर्गं शनैः
अतीत्यतमनेहसा पुनरुपस्थितेन क्रमात्।
स्वयन्तु परमे पदे विविधकिङ्कृतीः श्रीपतेः
भजन्ति शुभयादृशा गुरुवरस्यधन्या जनाः ॥ 2 ॥

इति श्रीवत्सवंशायनस्य देशिकचरण परायणस्य नारायणस्य

कृतिषु श्रीमत्परमत भङ्गव्याख्यायां देशिकाशयप्रकाशा
भिख्यायां अचित्तत्त्वाधिकारस्तृतीयोऽभूत् ॥ ३ ॥

---

யடைந்து அநுக்கிரஹம் பெற்ற நாம், மூன்று வகையான அசேதநதத்துவங்களின் மரும மறிவார்கள் தமது உபதேசமுறையில நம்மை நடத்திய அடிதப்பாமே நடந்து நன்மை பெற்றோம்.

ஸ்ரீ பரமதபங்கத்தின் அசித்தத்துவாதிகாரம்

தமிழ் மொழி பெயர்பபு முற்றும்

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः । श्रीमते वेदान्तगुरवे नमः ।

श्रीमान् वेङ्कटनाथार्यः कवितार्किक केसरी । वेदान्ताचार्यवर्योमे सन्निधत्तां सदाहृदि । 4 ।

## ॥ परमतभङ्गे परतत्त्वाधिकारः ॥

*வேலைப்புறம் அகம் காண்பதுபோல் வேத நன்னெறிசோ*
*நூலைப்புறம் அகம காண்டலில் நுண்ணறிவின்றி நின்றீர் !*
*மாலைப்பெற வழிகாட்டிய தேசிகர் வாசகமே*
*ஓலைப்புறததி லெழுதுகின்றோம் உள்ளே எழுதுமினே.* *(4)*

---

श्रीः

श्रीमतेलक्ष्मीनृसिंहपरब्रह्मणे नमः

## अथ श्रीमत्परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाभिख्यायां

# परतत्त्वाधिकारः ॥ 4 ॥

मासे नभस्येश्रोणायां श्रेयसेशरणैषिणाम् । काञ्च्यां कृतोदयंकिञ्चित्स्वयं ज्योतिर्भजामहे ॥ 1 ॥

स्थिरत्रसपरिस्फुरन्निखिललोकसृष्टयादिकृत् - रमापतिमुपासितुं तदिह तस्य तत्त्वं ब्रुवन् ।
तनोतु मम निश्चलांमतिमसौ तदूहक्षमां त्रयीशिखरदेशिको दमितवादि वादाहवः ॥ 2 ॥

परतत्त्वाधिक्रियायां चतुर्थ्यां व्याक्रियामहम् । वर्तयिष्यामि विबुधा विमृशन्तु विमत्सराः ॥ 3 ॥

---

*ஸ்ரீ:*

*ஸ்ரீமதே லக்ஷ்மீந்ருஸிம்ம பரப்ரம்மணே நம:*

## ஸ்ரீபரமதபங்கம்—பரதத்வாதிகாரம் மொழிபெயர்ப்பு

(பாசுரத்தின் கருத்து.) கடலின் அகம் புறம் அமைப்பை அறிவதுபோல் வேதநூல் வழிவந்த க்ரந்தங்களின் கருத்தையும் அறிவதில் நுண்ணிய மதியினறி நின்ற உலகத்தீா களே! கேளுங்கள். திருமாலைப்பெற வழிவகுத்த நந்தேசிகன் காட்டிய வாசகத்தை ஓலைகளில் இடுகிறோம். உள்ளே எழுதுமினே!

"ஈச்வரனின் உண்மை"

उक्तங்களான चेतनाचेतनங்களுக்கெல்லாம் ஓருயிராய்—"उत्तम पुरुषस्त्वन्यः" என்கிற படியே உலகு தனஞ்ஞொடொனறி நிறக, வேறு நிற்குமவன ईश्वरன. सौगतादिपरिगणित षोडशविधानु-

---

एवं गतेन ग्रन्थेन—"भोक्ताभोग्य"मिति श्रुतिमनुसृत्य चेतनाचेतनवर्गद्वये निरूपिते-तयोःप्रत्यक्षप्रतिपन्नतया तत्र सम्प्रतिपत्तिं कुर्वतामपि अनधिगते परतत्त्वे विप्रतिपद्यमानानां वक्ष्यमाणार्थस्य साम्प्रदायिकस्य हृदि धारणेन सर्वशङ्कासमुन्मूलनं भविष्यतीति अस्मिन्नधिकारेऽपेक्षमाणानां अवधानं कर्तव्यतयाविधत्ते—वेलैप्पुरम् इत्याद्यगाथया। समुद्रस्यान्तर्बहिर्मानिर्णयो यथादुष्करः, तथैव वेदार्थानुसारि मीमांसाद्वयस्यान्तर्बहिरर्थनिर्णयोपीति तद्रहिततया तदपेक्षित सूक्ष्मधीविशेषशून्या हे मानवाः! श्रुणुतेतिशेषः, इति पूर्वार्धार्थः। अत्रमूले-काण्डल इल इति पदच्छेदेनायमर्थ उक्तः। काण्डलिल इत्यैकपद्येतु-प्रमाणविषये सूक्ष्मबुद्धिरहिता इत्यर्थोभाव्यः। एतदुक्तंभवति-समुद्रस्यान्तर्गाभीर्यमेवापातालनिमग्न पीवरतनुर्जानाति मन्दरमैनाकादिः। तस्य-बहिरायामविस्तारादिकमेव वेत्त्यञ्जनासुतः। नकोप्यस्यान्तर्बहिर्मानद्वयं एक एवसन् वेद। तथैव-कलिकर्मब्रह्ममीमांसकेषु नैकोपि बोधायनादिभिरेकीकृत पूर्वोत्तर मीमांसाभिधतात्पर्योपलब्धिं युगपल्लभते। अपितु-"मीमांसायाः कबन्धं कतिचनजगृहु राहुवल्लं शिरोऽन्ये" इत्युक्तरीत्या तत्तदेकदेशार्थमात्रे पर्यवस्यतीति त्रस्यन्त इमे आचार्याः तादृशान् तत्त्वं बोधयितुमेव हे मितंपचा इत्यत्र सम्बोधयन्ति। न तु सोल्लुण्ठनमिति। समुद्रे नाविकानां स्वमार्गमात्रज्ञानस्यैवपर्याप्ततया तदीयकृत्स्न प्रदेशतत्त्वाज्ञानेनानर्थलेशाभावेपि—"धर्मेप्रमीयमाणेतु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसापूरयिष्यती"ति समस्त पुनर्थस्तोमसाधकत्वमवेदार्थ विचारार्थत्वान्मीमांसायाः तत्राकृत्स्नवेदित्वं आत्मनोऽनर्थायैव भवतीति भावः। ननु-"कुशानर्थान् ततःकेचिदकुशांस्त्रत्रकुर्वते" इति स्वकीयतर्कपाण्डित्येनवितण्डा ताण्डवमकाण्डे कुर्वद्भिर्विरचितानां तेषाग्रन्थानां-"कोवाचक्षुरुदञ्चयेदपि पुरस्साटोपतर्कच्छटाशस्त्राशस्त्रि विहारसम्भृत गास्वादेषु गदेष्वि"ति भवदुक्तरीत्यातीवदुर्बोधत्वादयमनर्थ आपतन् अपरिहरणीय एवेत्यत्राह-मालैप्पेर इत्यादिना। अनायासेन भगवल्लाभाय तत्त्वमार्गं प्रदर्शितवतां पूर्वाचार्याणां वाक्यान्येव वयमत्र पत्रपृष्ठे लिखामः। यूयञ्चसावधानमेतान्येव स्वहृदये कुरुतेत्यवशिष्टार्थः। अपेक्षमाणानां

---

கீழ்காட்டிய ஜடஜீவப் பொருள்களுக்கெல்லாம் ஓருயிராய்—கீதையில் "உத்தம புருஷன் வேறுவான்" என்று உபதேசித்தபடியிலே உலகு தனஞ்ஞொடொன்றி நிற்கத் தான் வேறாய் நிற்குமவனே ஈசுவரன ஆவான. பௌத்தர் முதலியோர் கட்டிய "காணாமை" (அனுபலப்தி) என்ற பதினாறுவித வழிகளாலும் ஈசுவரனையோ அவனுடைய குணவிக்ரஹாதி

पलाब्धिकளாலும் अतीन्द्रियங்களாய் शास्त्रैकवेद्यங்களான ईश्वरस्वरूपरूपगुण विभूतिविशेषங்களை निषेधिக்க வொண்ணாது. जन्माद्यस्य यतः इत्यादिகளிற்படியே निखिलजगदेककारणत्वமும் सर्वशरीरित्व निरा-

---

सौकर्याय सर्वं सङ्कलय्य सदयं देशिका उपादिदिशुः । श्रीराघववियोगेन ताम्यत्यपि भरते—"कच्चित्त्वदुष्टो व्रजसि रामस्याक्लिष्टकर्मण" इति तद्धृदयं प्रश्नेन विशोध्य तदीयं रामविषयकं अनुकूलमाशयं ज्ञात्वा तदनन्तरमेव सन्तुष्टो गुहः यथा चित्रकूटगमनमार्गं स्पष्टमदिदेश, तथाऽस्मदाचार्या अपि स्वान्तेवासिनः "संवत्सरं तदर्धं वे"ति रीत्या परीक्ष्यैवाथ प्रसन्ना उपसन्नेभ्यः सुष्ठु उपदिशेयुः । तदेवचाचार्यवचनं युष्माकं विनाक्लेशं धारणसौकर्याय कोशेषुसङ्कलय्य प्रदर्शयाम इति भावः । **उळ्ळेएळुदुमिने** यावदक्षरराशिग्रहणं-मनसि-"शुकवत्पठन्त" इति रीत्या इदम्मुहुर्मुहुरावर्तयध्वम् । पश्चाद्व्युत्पत्तौ सत्यां सर्वं सम्परिपूर्यते । "स्वाध्यायोऽध्येतव्य" इति वदितिहृदयम् ।

अथ वृत्तेनाधिकारद्वयेनास्य सङ्गतिं विवक्षन्-"प्रेरितारञ्चमत्वे"त्युक्त प्रकृतपरमात्मस्वरूपनितरव्यावृत्तं तथा कीर्तयति—**उक्तेति** । **ओरुयिर्** विलक्षण आत्मा । इतरेषां स्वरूपसत्तादिप्रयोजक इति यावत् । पृथिव्यादीनि तत्त्वानि सर्वाणि पृथक् पृथगुपादाय तावद्वारं तानि प्रति ईश्वरस्यान्तर्यामित्वमत्यादरेणावर्तितमन्तर्यामिब्राह्मणे । तर्हि चेतनाद्यन्तर्यामित्वेपि तत्सजातीयत्वमेवास्तु इत्यत्राह—**उत्तमः पुरुष इति** । "........परमात्मेत्युदाहृतः । योलोकत्रयमाविश्यबिभर्त्यव्यय ईश्वर इति **गीतावचनम्** । लोक्यत इति लोकः । तत्त्रयं=प्रकृतिबद्धमुक्तास्त्रयः । तदाविश्येत्यन्तरात्मत्वमुक्तम् । नित्यान्तरात्मत्वस्याप्युपलक्षणमिदम् । अन्य इति तदन्तरात्मत्वेपि तद्वैलक्षण्य-मुच्यते । तदिदमाह—**उलकु** इति "अत्र उलकु तन्नोडु ओत्रि निर्क वेरुनिररि इति **श्री भक्तिसारसूरिगाथा** हृदिकृता । तत्रेश्वरं सम्मुखीकृत्य कथनात्—निररि (निर्तिष्ठसि) इति शब्दभेदोभवति । स्वापृथक्सिद्धे जगति सर्वत्रान्तरात्मतयाऽवस्थानेपि ततोऽत्यन्तविलक्षणतयातिष्ठसीतितदर्थः । नन्वेतादृशेश्वरस्वरूपाद्यसिद्धा तन्निरूपण-मशक्यम् । तदसिद्धिश्चानुपलम्भात् । यदि स्यादुपलभ्येतेति व्याप्तेः । अनुमास्याम इति चेत् । न । अहो ! महानिपुणोह्यसि । तद्व्याप्तहेतोरप्यनुपलम्भादित्यत्राह—**सौगतादीति** । स्वरूपानुपलब्धिः स्वव्यापकानुपलब्धिः, स्वकार्यानुपलब्धिः स्वकारणानुपलब्धिरिति प्रथमं चतस्रोऽनुपलब्धयः । पुनश्चतानि प्रत्येकं गृहीत्वा तत्तद्विरुद्धवस्तु-

---

களையோ இல்லை செய்யமுடியாது. அவைகள் நமது புலன்களுக்குப் புலப்படாதபடி சாஸ்திர மாத்திர வேத்யங்கள் அன்றோ? ப்ரம்ம ஸூத்திரம்—ஜகத்காரணமிவன் என்று கூறியவாறு காரணத்துவம், உலகுக்கெல்லாம் உயிராய் நிற்கை வேறு ஆதாரம் அற்று இருத்தல், முமுக்ஷுக்களுக்கு உபாஸ்யனானமை, மோக்ஷம் தருகை, முக்தர்களுக்கு முகம்

विषयकोपलब्धि:, तत्तद्विरुद्धवस्तुकार्योपलब्धि:, तत्तद्विरुद्धवस्तुव्याप्तविषयकोपलब्धिरिति तिसृभिरुपलब्धिभिर्मेळने प्रत्येकं चतस्र इति सामस्त्येन षोडशविधानुपलब्धिर्भवति। यद्यपि प्रतिस्तोमं प्रथमां विहाय द्वितीयादीनां तत्तद्विरुद्धवस्तुविषयकोपलब्ध्यादीनां यथाश्रुतेऽनुपलब्धिरूपतैवनास्तीति कथं षोडशानामप्यनुपलब्धित्वमिति भवतिशङ्का। अथाप्यासां उपलब्धीनां स्वरूपानुपलब्ध्यादिवत् अभावसाधकत्वाविशेषात् अनुपलब्धिशब्दवाच्यत्वोपपत्तिरिति भावः। इदञ्च बोधिचित्तविवरणाद्यनुसारेणकथितम्। न्यायबिन्द्वादौतुतासामेकादशविधत्वमेव कीर्तितम्। "अनुपलब्धिभिः" इति तृतीयाया :– निषेधिका इत्यत्र निषेधेऽन्वयः। अतीन्द्रियेति शास्त्रैकवेद्यत्वेहेतुः। "असन्निकृष्ट वाचा यद्वयमत्र जिज्ञासितम्। तादूरूप्येण परिच्छित्तिस्तद्विपर्ययतोपिवे"त्युक्तेः। शास्त्रैकवेद्येति —अतीन्द्रियनित्यासद्रूपशशविषाणादिव्यावृत्तिः। ईश्वरस्वरूपं= वक्ष्यमाणरूपाद्याश्रयभूतं — "एकोहवै नारायण आसीन्नब्रह्मानेशान" इत्यादिप्रतिपन्नं देवतान्तरव्यावृत्तब्रह्मस्वरूपम्। रूपं=" हिरण्मयः पुरुषोदृश्यते-हिरण्यश्मश्रुः"—"न भूतसङ्घसंस्थानः—नित्यं नित्याकृतिधरं—इत्यादिप्रसिद्धदिव्यमङ्गळविग्रहः। गुणाः—"सत्यकामस्सत्यसङ्कल्पः—समस्तकल्याणगुणात्मकोसौ—इत्याद्यवगताः प्राप्यत्वप्रापकत्वोपयुक्ताः दिव्यात्म-देहानुबन्धिनो गुणाः। विभूतयः "सर्वंखल्विदं ब्रह्म"—"तद्विष्णोः परमं पदं–इत्याद्यवगताः नित्यविभूति-लीलाविभूतयः। विशेषशब्दाद्वन्द्वान्तेश्रुतः प्रत्येकमीश्वरस्वरूपादिष्वन्वीय तेषामुक्तं इतरवैलक्षण्य व्यञ्जयति। निषेधानर्हा इति। अत्यन्तातीन्द्रियेष्वेतेषु योग्यानुपलब्धेरभावेन केवलानुपलब्धेरभावसाधकत्वायोगादिति भावः।

एतत्तत्त्वञ्चचार्वाकभङ्गेव्य.ख्यास्यते।

अथशास्त्रत ईश्वरस्वरूपप्रतिपत्तिमाह्—जन्माद्यस्येति। अस्यप्रत्यक्षादि प्रमाणप्रतिपन्नस्य कृत्स्नस्य-जगतः, जन्मादि सृष्टिस्थिति प्रळयसमाहारः, यतोऽतीन्द्रियाद्भवति, तद्ब्रह्मेति पूर्वसूत्रादनुवर्त्यव्याख्येयम्। निखिलजगदेकेति। सृष्टिकारणत्वाद्यवान्तर भेदानादरेण सामान्योक्तिरियम्। एकशब्दः—"ब्रह्मवनं ब्रह्मसवृक्ष आसीदित्युक्तं निमित्तोपादानैक्यं प्राधान्यंवा वक्ति। अत्रेदं बोध्यम्—निखिलजगज्जन्मादित्रितय कारणत्वेषुत्रिषु प्रत्येकमेव ब्रह्मलक्षणं सुवचम्। शेषवैयर्थ्यात्। अत एव न्यायसिद्धाञ्जने—"सर्वकार्यो-त्पादकत्वं ब्रह्मलक्षण"मिति प्रत्येकमेवाभ्यधायि। सम्मतश्चैतत्सूत्रकृतोपि—"अत्ताचराचरग्रहणादि"ति सर्व-संहर्तृत्वमात्रस्यापि तल्लक्षणत्वं कथयतः। जन्माद्यधिकरणे त्रितयोक्तिस्तु-ब्रह्मविष्णुमहेश्वराः क्रमेण सृष्ट्यादित्रय-कर्तार" इति त्रिमूर्तिसाम्यादि वादि पक्षप्रशमनाय। तथाचाधिकरणसारावळी—"प्रत्येकं लक्षणत्वं सुव चमिहबहुदातिर्धीमहिम्ने....सम्भूयाप्याहुरेके फलमपिचतदा शङ्कितार्थव्युदासः" इति। दळानां द्विविधाहि व्या-वृत्तिः प्रसिद्धार्थव्यावृत्तिः शङ्कितार्थ व्यावृत्तिरिति। "रूपरहितस्पर्शवान् वायुरित्यादौ-रूपरहितस्याकाशादेः,

धारत्वादिகளும முமுக்ஷூபாஸ்யत्वमोक्षप्रदत्व मुक्तप्राप्यत्वादिகளும் ईश्वरलक्षणங்கள். सर्वकार्यங்களுக்கும்— "स्याम्" என்கிற सङ्कल्पविशिष्टனாய் கொண்டு ईश्वरன निमित्तமாம் स्वगतसंयोगादिविशेषங்களுக்கு साक्षादुपादानமானாலும் इतरங்களுக்கு सूक्ष्मचिदचिद्विशिष्टனாய்கொண்டு उपादानமாகிறான்.

---

स्पर्शवतः पृथिव्यादेश्च प्रसिद्धत्वात् दळद्वयेन तयोर्व्यावृत्तिः प्रसिद्धार्थ विषयणी। इह तु सकलजगज्जनिहेतुत्वमात्रस्यापि अन्यत्रकाप्यप्रसिद्ध्या दाळान्तरवैयर्थ्येऽपि तद्वत्त्वेनशङ्कितचतुर्मुखादेर्दळान्तरेण व्यावृत्तिः क्रियमाणा शङ्कितार्थ विषयणी भवति इति। सर्वशरीरित्वेति द्रव्यान्तरानाश्रितसर्वद्रव्यशरीरित्वमित्यर्थः। शरीरलक्षणञ्च-प्रागेवविवृतम्। सर्वद्रव्येत्यत्र द्रव्यपदं-सर्वान्तर्गतगुणादेर्द्रव्यत्वघटितशरीरत्वायोगेनासम्भववारणाय। शब्दस्य द्रव्यत्वपक्षे आकाशापृथक्सिद्धे तस्मिन्-तत्तज्जीवापृथक् सिद्धेषु तत्तच्छरीरेषु च साक्षादीश्वरापृथक्सिद्धि विरहेण साक्षात्तच्छरीरत्वाभावात् असंभववारणाय द्रव्यन्तरानाश्रितेति सर्वद्रव्यविशेषणम्। यदि च सर्वेषामप्यस्मन्मते तत्त्वत्रयसमुदायरूपत्वात्—अन्ततः सर्वस्याप्यर्थेतनद्रव्यस्य यत्किञ्चिज्जीवापृथकसिद्धत्वावश्यंभावेन द्रव्यान्तरानाश्रितद्रव्यत्वमेवाप्रसिद्धमितिमन्यते-तदा—"जगत्सर्वं शरीरं त" इत्याद्यनुसारेण द्रव्यान्तरापृथक्सिद्धस्य द्रव्यस्यापि-साक्षादीश्वरापृथक्सिद्धत्वमनिवार्यमिति तन्नदेयं भविष्यति। एवं—स्व-स्वज्ञानेतरत्वमपि सर्वद्रव्यविशेषणं कार्यम्। अन्यथा—"यस्यचेतनस्य यद्द्रव्यं सर्वात्मनास्वार्थेनियन्तुं शक्य" मित्यादिशरीरलक्षणे-चैतन्य विशिष्टानुयोगिकापृथक्सिद्धि प्रतियोगित्वस्यैवनिवेशात् स्ववैशिष्ट्यावच्छिन्नानुयोगिताकापृथक्सिद्धि प्रतियोगितायाः स्वस्मिन् चैतन्ये-चैतन्यवैशिष्ट्यावच्छिन्नस्वनिष्ठानुयोगिताकापृथक्सिद्धि प्रतियोगितास्त्वस्मिन्नीश्वरेचात्माश्रयादिभ्योऽसंभवेनशरीरत्वाभावतः दोषापातात्। अत एववकुळधरवाणीव्याख्याभूतषट्सहस्र्यां—"अदिलुम् पेरिदान मूलप्रकृतिक्कुम् अदिलुमपेरिदान उन् सङ्कल्पज्ञानत्तुक्कुम् आत्मावान नी" इति कुरुकेश्वरोक्तिरपि—ईश्वरसंकल्पज्ञानस्येश्वरं प्रतिशरीरत्वाभावेन तत्प्रति तस्यात्मत्वकीर्तनं केवलापृथक् सिद्धिमात्रतात्पर्येणे"ति—साक्षात्स्वामिभिर्व्याख्याता। निराधारत्वेति। "स्वेमहिम्निप्रतिष्ठित" इत्यादिश्रवणादिति भावः। प्रथमं-सर्वशरीरित्वकथनेन सर्वाधारत्वोपस्थितेः, आधारान्तररहितस्यैव तथात्वमुपपद्यत इति तदुपपादकतया तदेकवाक्यत्वेन विन्यासः कृतः। मुमुक्षूपास्यत्वादीनाञ्चातथात्वात् भिन्नवाक्यताकरणमितिबोध्यम्। मुमुक्षूपास्यत्वेति। एषुत्रिषु जन्मकारणत्वादिष्विव प्रत्येकं पर्याप्तत्वेपि-यउपास्यस्सएवमोक्षाख्यफलप्रदः, यस्तादृशफलप्रदः

---

கொடுத்தல இத்யாதிகள் ஈசுவரனுடைய இலக்கணங்கள். நான் உலகாவேன் என்று எண்ணிச செய்வதால் இவன் உலகுக்கு நிமித்த காரணம். தனனிடமே நிகழும் கடபட ஸம்யோகாதி காரியங்களுக்கு இவன் நேரிலேயே உபாதாந காரணமானாலும், மற்ற வற்றுக்கு ஸூக்ஷ்ம பரபஞ்ச சரீரகனாய்க்கொண்டு இவன் பரம்பரையாக உபாதாநமாகிறான்.

"இவனைகர்த்தா உதாஸீனன் என்றதன் கருத்து"

ஈச்வரனுக்கு கர்த்ருத்வாதிகளையும் उदासीनत्वத்தையும் सर्वविषयமாகக்கொள்ளில் विरुद्धமாம். नियतविषयமாகக் கொள்ளுகைக்கு नियामकம் காண்கின்றிலோம். ஆகையால் ईश्वरविषयक-

---

स एव प्राप्यतया स्वयं फलं च भवति। न तु लोक इवात्रान्य उपायः अन्यत्फलमिति शङ्कनीयमिति-शङ्कितार्थ-व्युदासायैव जन्मादिकारणत्वतयोपादानवत् एषामप्युपादानमिति भाव्यम्। अत एवैषां त्रयाणामेकवाक्यता-सम्पादनम्। "तमेवैकं जानथात्मानं"-"य आत्मदा बलदाः"-"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चि"तेति वाक्यजातमिह प्रमाणम्।

अथपूर्वं—"जगदेक कारणत्वे"त्यत्रैकशब्देन प्रस्तुतं ब्रह्मणो निमित्तोपादानैक्यं तत्तदवच्छेदकाकारभेदादुपपादयति—**सर्वकार्येति**। यथाकुलालकुविन्दादिः—"अहमेतत्कार्यंकुर्या" मितीच्छाकृत्यादिविशिष्टतया घटपटादिकार्यं प्रति निमित्तं भवति, तथैवेश्वरः—"बहुस्यां प्रजायेये"तिसङ्कल्पविशिष्टस्सन्नविशेषेण सर्वकार्यनिमित्तकारणं इत्यर्थः। "**सङ्कल्पविशिष्टतया निमित्तम्**" इति निर्देशेनाचेतनदण्डचक्रादिगतनिमित्तत्वात् चेतनगतस्यतस्यकर्तृत्वपर्यवसानलक्षणं वैलक्षण्यमभिहितं भवति। अचेतनस्य तत्रतत्रकथञ्चित् सहकारितामात्रेण गौणतयानिमित्तत्वात्। **एतेन**—"इवन् तान् जगत्ताय् परिणामिक्कैयाले उपादानमुमायिरुक्कुम्" इति **तत्त्वत्रयव्याख्याने**—"ज्ञानशक्त्यादिविशिष्टनाय्कोण्डु सहकारिकारणमुमाय् इरुक्कुम्" इति **वरवरमुन्युक्तिः प्रत्युक्ता भवति**। सहकारित्वनिमित्तत्वयोर्भेदानवगमकृतत्वात्। "कारणं निमित्तोपादानसहकारिभेदेन त्रिप्रकार मायिरुक्कुम्। अदिल् निमित्तकारणमावदु—उपादानकारणमान वस्तुवै कार्यरूपेण विकरिप्पिक्कुम् वस्तु" इत्येतत्प्रकरणस्थस्ववाक्यविरोधाच्च। न चात्र परिणमयितुरेव निमित्तत्वकथनात्—तत्र ज्ञानशक्त्यादिविशिष्टस्य सहकारिताकथनं कथं विरुद्धमितिवाच्यम्। ज्ञानशक्त्यादिहीनस्य परिणमयितृत्वासम्भवेन तस्य तत्त्व एव पर्यवसानात् तद्वतो निमित्तत्वस्यैव वक्तुमुचितत्वात् इति। एवमीश्वरस्य सर्वकार्यं प्रत्यपि ऐकरूप्येण निमित्तत्वेपि उपादानत्वं न तथा भवति। किन्तु कचित्साक्षात्। कचित्तु परम्परयेति विभज्यदर्शयति—**स्वगतसंयोगादीति**। ईश्वरगतघटसयोगादीत्यर्थः। स.क्ष.त्=निष्कृष्टशुद्धस्वरूपेण।

---

ஈசுவரன கர்த்தா ஆயினும் உதாஸீநன் என்ற இதை ஒவவொரு விஷயததிலும் கொண்டால் முரண்படும் வெவ்வேறு விஷயத்தில் கொளகைககு ஆதாரமிலலை. ஆகையால் அவனைச் சொலலும் ஆகமம் வேறு கருததுளளதாக வேணும் என்னில்—அன்று. மற்றவரைத் துணை கொள்ளாமல் உலகைப் படைபபதிலும் ஜீவர்களின் துயில்

शास्त्रங்கள अन्यपरங்களன்றோ? என்னில—चेतनान्तरसङ्कल्पமொழிய महदादिसृष्टिகளையும் पुरुषர் களுடைய निद्राप्रबोधादिகளையும் நடத்துமிடத்தில் தானே कर्ताவாம். उत्तरकार्यங்களைப் பற்ற हेतुக்களான ज्ञानचिकीर्षादिகளைக் கொடுக்குமது चेतनர் பக்கல் இவனுக்கு विशेषित्து प्रेरकत्वம்.

---

एषां साक्षात्स्वरूपगततयाऽऽगन्तुकतयाच तदुपादानत्वं साक्षादेवेश्वरस्यभवतीति भावः। **एतेन**—एककार्ये निमित्तोपादानयोरैक्यं नसंभवति। विरोधादितिवदन्तः परे प्रत्युक्ताः। सर्वकार्यनिमित्तभूतस्यैवेश्वरस्य स्वगतघट-संयोगादिक प्रत्युपादनत्वस्य दृष्टत्वेन सर्वैरभ्युपगतत्वात्। तादृशसंयोगोपादानत्वाभावे तस्य विभुत्वानुपपत्तेः। **संयोगादीत्यादिना** साक्षादेवेश्वरगतचिदचिदपृथक्सिद्ध्यादिकं विवक्षितम्। **ननु**—द्रव्यप्रपञ्चं प्रति ईश्वर-स्याभिन्ननिमित्तोपादनत्वे नायं संयोगादिदृष्टान्तो भवितुमर्हति। संयोगादीनामद्रव्यत्वेन तत्र तत्संभवेपि द्रव्ये कथन्ताया अशान्तेरिति चेन्न। अस्य-महानमेऽपाषाणमयेवह्निसम्भवेपि पाषाणमये पर्वते कथं तत्सम्भव इति इति प्रत्यवस्थानतुल्यतयोत्कर्षसमाख्यजातिदूषणग्रस्तत्वात्। दृष्टान्ते उत्कर्षेण=अभ्युचयतया दृष्टस्य धर्मस्य साध्यसिद्धिंप्रति प्रयोजकत्वाभिमानेन पक्षेतदभावतस्साध्यासिद्धि प्रत्यवस्थानस्य तल्लक्षणत्वात्। घटसंयोगादौ यदृच्छादृष्टस्याद्रव्यत्वस्य कारणद्रव्यैक्यादिकं प्रत्यप्रयोजकत्वादिति तु परमार्थः। **नचैवं** सति सिद्धान्ते उपादा-नोपादेययोरनन्यत्वप्रवादभङ्गापत्तिरिति वाच्यम्। तस्य द्रव्यमात्रविषयकत्वात्। द्रव्यविषये सत्कार्यवादार्थं तथा स्वीकारनिर्बन्धेपि अद्रव्येषु तथानिर्बन्धाभावेन पूर्वमसतामपि संयोगादीनां सत्सुद्रव्येषूत्पादाङ्गीकारे बाधका-भावात्। **अत्रेदं वक्तव्यम्**—अवस्थाश्रयत्वमुपादानत्वम्। तद्घटकावस्थाच—आगन्तुकापृथक्सिद्धधर्मः। आगन्तुकत्वन्नाम—प्रागभाव प्रतियोगित्वरूपं जन्यत्वम्। ईश्वरगत घटसंयोग सूक्ष्मचिदचिद्वैशिष्ट्यादीनां च तथात्वात् तदुपादाय तस्योपादानत्वोपपत्तिः।

**नचैवंसति**—"उपयन्नपयन्धर्मो विकरोतिहिधर्मिण"मिति तस्य विकारित्वापत्त्या निर्विकारत्वश्रुति विरोध इति वाच्यम्। विकारत्वावस्थात्वघटक जन्यत्वयोर्मिथोविविक्ततया सूक्ष्मचिदचिद्वैशिष्ट्यादिकमादायेश्वर-स्योपादानत्वोपपत्तावपि विकारित्वापत्त्यनवकाशात्। **तथाहि**—विकारत्वघटकजन्यत्वं च प्रागभावाप्रति-योगित्वात्मकनित्यत्वाभावरूपं व्यतिरेकमुखनिरूप्यम्। अवस्थात्वघटकं पुनः, प्रागभावप्रतियोगित्वरूपमेवान्वय-

---

எழுச்சி முதலியவற்றை நடத்துவதிலும் அவனே நேரில் கர்த்தாவாகிறான். ஜீவர்களுக்கு அறிவு தந்து முயலும்படி மூட்டுவதால அவர்கள் விஷயத்திலும், அசேதனங்களுக்கு மேன் மேலென பரிணாம பரம்பரை உதிக்கச் செய்வதால் அவற்றின விஷயத்திலும ப்ரேரகன் அல்லது காரயிதா (செய்விப்பவன) ஆகிறான். இவனுடைய இருநிலையே இரண்டின்

अचेतनங்களில் ப்ரேரகத்வமாவது—कार्यान्तरानुगुणविकारमात्रहेतुत्वம். இவற்றால் कारयिता என்றும் प्रवर्तकனென்றும் சொல்லுகிறது. चेतनाचेतनங்கள் இரண்டுக்கும் இப்படி ப்ரேரகமான वेषம் தானே नियन्तृत्वம். चेतनविषयமாக स्वतन्त्रशास्त्रमुखததாலே பண்ணும் नियमनविशेषம் प्रशासितृत्वம். अचि-त्தைப்பற்ற प्रशासनशब्दம் औपचारिकம்.

---

मुखतः। एवञ्च सूक्ष्मत्वविशिष्टचिदचिदपृथक्सिद्धेः—विशिष्टं शुद्धान्नातिरिच्यत" इति न्यायेन केवलचिद-चिदपृथक्सिद्ध्यनतिरेकात्, तस्याश्चेश्वरे सार्वदिकत्वेनास्या अपिकथञ्चित्प्रागभावाप्रतियोगित्वरूपनित्यत्वप्राप्त्या तद्भावाभावात् न विकाररूपत्वमिति न तामादायेश्वरस्य विकारित्वापत्तिः। सूक्ष्मत्वविशिष्टचिदचिदपृथक्सिद्धे-र्विशिष्टवेषेण प्रागभावप्रतियोगित्वात् अवस्थारूपत्वमिति तामादायतस्योपादानतानिर्वाहश्च। नन्वेवमपीश्वरगत-घटादिसंयोगस्य चिदचिदपृथक्सिद्ध्यादिवत्सार्वदिकत्वाभावेन प्रागभावाप्रतियोगित्वाभावात् विकाररूपतैव प्राप्तेति तमादायेश्वरस्य विकारित्वं दुर्वारमेवेतिचेन्न। नामान्तरभजनार्हत्वस्यापि विकारशब्दार्थान्तर्भावेणेश्वरगत घट-पटाद्यागन्तुकसंयोगतः तत्र नामान्तरव्यवहारविरहात् तदनापत्तेः। अधिकमपेक्षमाणैर्न्यायसिद्धाञ्जनरत्न-पेटिकादौ असत्कृतोपादानतातत्त्वत्रिवेण्यां च द्रष्टव्यम्। तर्हीतरविषयेकथं तस्योपादानतेत्यत्राह—इतरत्प्रतीति। स्थूलचिदचित्प्रपञ्चशरीरकमात्मानम्प्रतीत्यर्थः। अयमर्थः—भाव्यवस्थावतः प्रागवस्थायोगि द्रव्यमुपादानमिति लक्षणात् भाविस्थूलचिदचिद्वैशिष्ट्यात्मकावस्थावत्स्वात्मानम्प्रति सूक्ष्मतद्वैशिष्ट्यात्मकप्रागवस्थावान् ईश्वर उपादान-मितिस्थिते - निष्कृष्टवेषेणावस्थान्तरापत्ते स्वशरीरभूतचिदचिद्गतत्वेन - परम्परयैव तस्य तदुपादनत्वमिति। न च पारम्परिकं तद्गौणमेवेति केवलनिमित्तमात्रेश्वरसिद्ध्यापत्तिरितिवाच्यम्। "जलं वहति देवदत्तः" इत्यादौ घटद्वाराजलवहनेपि देवदत्ते मुख्यतरकर्तृत्ववत्, अत्रापि जगदुपादानताया मुख्यत्वोक्ति सम्भवात्। "न हि स्वाङ्गं स्वव्यवधायकम्" इति न्यायात्।

नन्वीश्वरस्य—कर्तृत्वादिकमसिद्धम्। तथा सति—"साक्षीचेताकेवलोनिर्गुणश्चे" त्यादि श्रुतोदासीन-त्वादिधर्मविरोधात्। "केवलः गुणत्रयवश्यत्वाभावेन फलाभिसन्धिपूर्वककर्तृत्वाभावादुदासीन" इति तस्यक-र्तृत्वाभावव्यासत्वंह्ययमिहितं उपनिषद्भाष्ये। न च कर्तृत्वादीनां उदासीनत्वस्यच समानविषयकत्वे विरोधेपि विभिन्नविषयकतयाऽविरोध इति वाच्यम्। विषयविशेषव्यवस्थापकप्रमाणादर्शनात्। अत ईश्वर बोधकागमानां

---

விஷயத்திலும் நியந்த்ருத்வம் என்னவும்படுகிறது. இதல்லாமல் ஜீவர்கள விஷயத்தில இவனே ப்ரசாஸிதா என்பதுமுண்டு. அது சாஸ்திராதிகள் மூலமாக உபதேசிப்பதாலேற் படுகிறது. ஜடங்களின் விஷயத்தில் அப்படி இவனைக் குறிப்பிட்டால் அது முக்யமன்று.

अन्यपरत्वमेवेति न परतत्त्वविशेषसिद्धिरित्यत्र - कर्तृत्वादीनां उदासीनत्वस्य च स्वरूपं, विषयभेदेनाविरोधञ्च शङ्कापूर्वकं सप्रमाणमाह—ईश्वर त्यारभ्य—"नैर्घृण्य परिहारे" त्यन्तेन महाप्रकरणेन । आदिना कारयितृत्वादि परिग्रहः । विरुद्धेति । एतदुक्तं भवति—"कर्ता कारयिता च सः - साक्षीचेताकेवलोनिर्गुणश्च - अध्यक्षश्चानुमन्ताचे" त्यादिष्वीश्वरस्य श्रुताः कर्तृत्वकारयितृत्वप्रेक्षकत्वानुमन्तृत्वोदासीनत्वादयोधर्माः परस्परं विरुध्यन्ते । लोके प्रयोजकस्य कारयितृत्वं, प्रयोज्यस्यकर्तृत्वञ्चदृष्टम् । एतदुभयव्यतिरिक्तो मध्यस्थः खलु प्रेक्षकोभवितुमर्हति । स्वयमेवप्रवृत्तं अनुमतिदानेन - कुर्विति - प्रेरयन्नन्य एवानुमन्तेत्युच्यते । एषुकृत्येषु सर्वथा यः पराङ्मुख स्सकिलोदासीन उपलभ्यते । तथा च कथमेषा धर्माणा सामानाधिकरण्यमीश्वर इति । नियतविषयेति । व्यवस्थितभिन्नविषयेत्यर्थः । नियामकेति । शास्त्रैकसमधिगम्येऽर्थे स्वेच्छया नियमायोगादितिभावः । तर्ह्युपात्तवचसां कागतिरित्यत्राह—आकैयालिति । "आदित्योयूप" इत्यादाविव प्रत्यक्षप्रत्यनीकार्थश्रुतितात्पर्यायोगात् यथाकथञ्चिन्मुक्तात्मप्रशंसापरा एवैताश्श्रुतयोभवितुमर्हन्तीतिभावः । एवम्पूर्वपक्षेप्राप्ते - अथकर्तृत्वादीनां व्यवस्थितविषयकत्वं प्रदर्श्याविरोधं वक्तुं, प्रथममीश्वरस्य साक्षात्कर्तृत्वे विषयमाह—चेतनान्तरसङ्कल्पेति । चेतनान्तरं=हिरण्यगर्भादिः । चतुर्मुखसृष्ट्युत्तरं व्यष्टिपदार्थानां सर्गे ईश्वरस्य न साक्षात्कर्तृत्वम् । चतुर्मुखं अभ्यन्तरीकृत्यैव तेन तत्करणात् । तस्माच्चेतनान्तरसंकल्पमनपेक्ष्य यदीश्वरः महदादि पृथिवीपर्यन्त समष्टितत्त्वानि स्वयमेव सृजति, तत्र सकर्ता । "अस्मान्मायी सृजते विश्वमेतत्" इति श्रुतेरित्याशयः । किमीश्वरस्य चतुर्मुख सृष्ट्यनन्तरं पुत्रे निवेशितभरस्येवपितुः क्वचिदपि न साक्षात्कर्तृत्वमस्तीति चेदाह - पुरुषेति । नाना विषयविपिनेषु इन्द्रियाश्वान् संप्रधाव्य तदायासेन विक्लबे रथिनिपुरुषे, ईश्वरसारथिर्दयासागरस्स्वोत्सङ्गे सुखमये स्वापेन विश्राम्य, तदवसाने पुनर्भोगार्थं पूर्वसंस्थानादिविपर्यासलेशमपिविनाकरणकळेबरादि सङ्घटनेन सम्बोधयति । निद्रा=स्वापः । आदिना स्वप्नपरिग्रहः । तत्रापीश्वरस्य साक्षात्कर्तृत्वं—"पथस्सृजते सहिकर्ते"ति श्रुतमितिभावः । पूर्वोक्तविधस्यापि पितुस्साक्षात् स्ववल्लभास्विवेति बोध्यम् । इत्थञ्च विधचेतनान्तर सङ्कल्पानवीनकृत्यविशेषेषु ईश्वरस्य कर्तृत्वं चरितार्थमिति प्रदर्श्य-कारयितृत्वस्य ततोऽपि विभिन्नविषयकत्वमाह-उत्तरकार्यप्रतीति । निद्राप्रबोधाद्युत्तरकालं तत्तत्कार्यविशेषानप्रतीत्यर्थः । तथा च चेतनानानचेतनवैलक्षण्याय बुद्धिपूर्वककार्यहेतुताया एव वक्तव्यतया प्रळयस्वापादात्यन्त सङ्कुचितां चैतन्यशक्तिं कार्यानुगुणतया विकासय, तस्यामुत्तरोत्तरं चिकीर्षात्वाद्यवस्थां चोत्पाद्य, चेतनगततत्तत्कार्यकर्तृत्वहेतुता यद्भजतीश्वरः, तदेवतस्यकारयितृत्वं प्रेरकत्वापरपर्यायं भवतीतिभावः । पूर्वोक्त सर्वपुरुषसाधारण चेतनान्तरकर्मसङ्कल्पाद्यप्रयोज्येश्वरगत कर्तृत्व वैलक्षण्यमत्रतदीयकारयितृत्वे द्योतयितुं—"विशेषित्तु - इत्युक्तम् । तत्तत्पुरुषकर्मानुगुणतयेत्यर्थः । तथाचानयोर्विषयभेदेनपरिहार उक्तोभवति । सर्वपुरुष - कतिपयपुरुषविषयकत्वाभ्यामिति हृदयम् । अथवा विशेषित्तु इति = अचेतन

विषयक सामान्यप्रेरकत्वव्यावृत्तिः। **प्रेरकत्वम्**=कारयितृत्वम्। वक्ष्यमाणानुसारात्। **ज्ञानचिकीर्षादीति** प्रयत्नावस्थापि विवक्षिता।

अथाचेतनविषयक कारयितृत्वे विशेषमाह—**अचेतनेति**। मृदादिषु घटादिकार्योत्पत्त्यनुगुणकपालत्वाद्याकारविकारमीश्वरः प्रथमंसङ्कल्प्य तद्द्वाराघटाद्युत्पादयतीति कार्यान्तरानुगुणतादृशविकारमात्र हेतुत्वाकारेणाचेतन विषये तस्य कारयितृत्वमित्यर्थः। **मात्र पदेन** चेतनविषय इव ज्ञानचिकीर्षादिहेतुत्वाव्यवच्छेदः। ततश्च चेतनाचेतनयोर्विषये कारयितृत्वमीश्वरस्येषद्भिन्नमितिबोध्यम्। **अत्रायं विवेकः**-मृदो घटोत्पत्तौ मृदुपादानं कुलालोनिमित्तमितिस्थिते-ईश्वरएवोपादाननिमित्तश्चेत्यपिश्रूयते। **तत्कथमितिचेत् श्रुणु**। घटादिकार्यं तत्रतत्रयदिविशिष्योपादीयते, तदा घटत्वावच्छिन्नकार्यतानिरूपित निमित्तोपादानकारणताया तत्तत्कुलालमृदादिव्यवस्थितव्यक्तिद्वयनिष्ठत्वेपि-घटादेर्जगदन्तर्गतत्वेन समुदायत उपादाने तादृशजगत्त्वावच्छिन्नकार्यतानिरूपितोक्तकारणताद्वयमीश्वर एवेतिनोक्तानुपपत्तिः। ननुजगत्प्रति निमित्ततायाः कर्तृत्वे एव पर्यवसानस्य पूर्वमुक्तत्वेन सर्वाचेतनम्प्रत्यपि स एव कर्त्रेत्युक्तं भवति। ततश्चात्राचेतनवर्गम्प्रति स एव कारयितेति कथनं कथं सङ्गच्छते। नह्येकस्मिन्नेवकार्ये एक एवाकारभेदं विना कर्ता कारयिता च भवति। न च पूर्ववत् कार्यतावच्छेदक धर्मभेदेनोभयोपपत्तिः जगत्त्वावच्छन्नं प्रतिकर्ता घटत्वाद्यवच्छिन्नम्प्रति कारयितेति वाच्यम्। लोकदृष्ट्या द्रविणादि प्रदानेन कर्तृभूत कुलालादि प्रेरकक्रेतृपुरुषादेरेव घटत्वाद्यवच्छिन्नकारयितृत्व स्वीकारात्। अन्यथेश्वरस्य घटत्वाद्यवच्छिन्नकर्तृतास्वीकारेपि कानुपपत्तिः। प्रत्यक्षविरोधादेव हि तथानभ्युपगमः। तथा च समस्समाधिरितिचेन्नैवम्। कार्यतावच्छेदकधर्म भेदासंभवेपि कारणतावच्छेदकाकारवैचित्र्यादुक्तोभयोपपत्तेः। तथाहि—घटाद्यचेतनप्रपञ्चम्प्रति ईश्वरस्यास्तिद्विविधस्सङ्कल्पः। **तत्रैकः**=पूर्वोक्त स्तत्तदाकारेण बहुस्स्यां प्रजायेयेति। तद्विशिष्टतया अचेतनवर्गम्प्रति तस्यकर्तृत्वम्। **अपरस्तु**=घटाद्यचेतन कार्योत्पत्त्यनुगुणविकारजातं तद्धेतुभूताचेतन मृदादिषूत्पादयामीत्यादिः। तद्विशिष्टतयाचतस्यकारयितृत्वम्। साक्षात्तदुत्पत्ति हेतु सङ्कल्पवत्त्वे तत्कर्ता। तदुत्पत्त्यनुगुणपदार्थान्तरोत्पत्ति हेतु सङ्कल्पवत्त्वे च कारयितेतितु **परमार्थः। अत एव**—घटादिकार्यान्तरोत्पत्त्यनुगुण विकारविशेष हेतु सङ्कल्प एक एवेश्वरस्य घटादिकार्ये कारयितृत्वव्यवहारमापादयन्नपि विकारविशेषेकर्तृत्व व्यवहारश्चापादयति। उक्तरीत्याकारणतावच्छेदकाकारभेदसत्वात्। सोयमाकारभेदोयद्येकस्मिन्नेवकार्येस्यात् तदाप्यविरोधं पश्यतु भवानिति। नन्वेवमीश्वरस्य कारयितृत्वाद्युपपत्तावपि प्रवर्तकत्वं कथमुपपद्यत इत्यत्राह—**इवराल इति**। उक्तैरेवहेतुभिरित्यर्थः। तथाचे—"श्वरप्रेरितोगच्छेत् स्वर्गंवा श्वभ्रमेववे" त्याद्युक्त प्रवर्तकत्वमपि कारयितृत्वाद्यनतिरिक्तमित्याशयः। अथ—"यः पृथिवीमन्तरोयमयती" त्याद्युक्तं नियन्तृत्वमप्येतदनन्यत्वेननिर्वहति—**चेतनेत्यादि**। **इत्थं**=चेतन विषये ज्ञानचिकीर्षाद्युत्पादनतः

जीवர்களுக்கு पराधीनकर्तृत्वமுண்டாகையாலே शास्त्रம் सावकाशம. सर्वज्ञனல்லாதவனுக்கு उपदेशसापेक्षமான ज्ञानமும், सर्वशक्तियல்லாதவனுக்கு परसापेक्षकर्तृत्वமும் உண்டாகக் குறையில்லை. जीवன் ईश्वरायत्त प्रवृत्तिமாகில் शास्त्रवश्यனாகமாட்டான் என்பார்க்கு, कायकरणकर्मकालादिसापेक्षமாக

---

अचेतनविषये पूर्वोक्त विकारमात्रोत्पादनतश्च । वेषम्=रूपम् । तथा च पूर्वोक्त प्रेरणस्यैव नियमनरूपत्वेन प्रेरकत्वमेव नियन्तृत्वमिति तदुपपत्त्यैवैतदप्युपपद्यत इत्यर्थः । अथ—"प्रशासितारं सर्वेषां—शास्ताविष्णुरशेषस्ये" त्याद्युक्तं प्रशासितृत्वमपि चेतनविषये प्रदर्शयति—**चेतनविषयेति । शास्त्रम्**=विधिनिषेधौ । तयो स्स्वातन्त्र्यञ्च नियोगपर्यनुयोगानर्हत्वम् । **नियमनविशेष** इति । तथा च चेतनाचेतनविभागं विना यदेतदीश्वरस्य प्रेरकत्वाद्यपरपर्यायं नियन्तृत्वमुक्ते—तत्र चेतनानां विषये यादृशो नियमन विशेषः—आदौ करणकळेबरैर्दयमानमनास्सन् जीवान् घटयित्वा मानं प्रदीपमिव प्रदाय ज्ञानचिकीर्षाद्युत्पादनमुखेन विवेकवल्लरीं वर्धयतीश्वर इति—तादृशमेव नियमनांशमादाय चेतनानां प्रशासितेति प्रथत इत्याशयः । अत्र ज्ञानचिकीर्षाद्युत्पादनमात्रस्य सामान्यतः प्रेरकत्वादि रूपत्वेपि ततोऽधिकं शास्त्रप्रदानाद्यंशमादाय चेतनविषये प्रशासितेति विशिष्य व्यवह्रियते । स्वशासनावबोधि शास्त्राण्यदत्वापि हि सर्वान्तः प्रवेशमात्रेण भूतावेशन्यायतो ज्ञानचिकीर्षाप्रयत्नाद्युत्पादनं कर्तुं शक्यम् । तथा च तस्याप्यत्राधिकं विधानात् नियमनविशेष एव प्रशासनमिति **विवेकः** । नन्वेवमपि शास्त्रस्य मनुष्यमात्राधिकारत्वात् अचेतनविषये कथमीश्वरः प्रशासितास्यात्? न च—"प्रशासितारं सर्वेषां" इत्यादौ—"सर्वत्वमाधिकारिकमि"ति न्यायेनाधिकारिभूत मनुष्यमात्रे सर्वशब्दसङ्कोचादचेतनविषये कः प्रश्न इति वाच्यम् । "एतस्यवाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतेतिष्ठत" इत्यादिनाऽचेतन विषयेपीश्वरप्रशासनस्य स्पष्टं श्रुतेस्तद्धानायोगादित्यत्राह—**अचित्तै** इति । तथा च चेतनं वर्गं शास्त्रमुखेन नियम्य तदुपकरणतयाऽचेतन पदार्थानां भगवताविनियोजनात् तावन्मात्रेणाचेतनांशे तस्य कथञ्चित् प्रशासनं ज्ञातव्यं इत्यर्थः । **औपचारिकम्** इति । यथा पूर्वं चेतनविषये सामान्यतः प्रेरकत्वादृते विशेषतश्शास्त्रादिनापि नियमनमभूत्, तदादायच प्रशासितृत्वं मुख्यमुक्तम्, न तथात्र विशेषाकारसम्भवोस्ति । तस्मात् सामान्यतोऽचेतनविषये यदुक्तं पूर्वं कार्यान्तरानुगुण विकाराद्युत्पादनमुखेन प्रेरकत्वम्, तदेवादायात्र

---

ஜீவர்களுக்கு ஈசுவரனுக்குட்பட்ட கர்த்துருத்வசக்தியுண்டாகையால் சாஸ்திரங்கள் கட்டளையிடுவது சரியானதே. தானே எல்லாமறியமாட்டாத—செய்யமாட்டாத ஜீவர்களுக்கு ஈசுவரனின் உபதேச மூலமாயும் உதவியின் மூலமாயும் அறிவும் செயலும் அமைகிறது என்கையில் யாதொரு ஆக்ஷேபமுமில்லை. ஜீவன்—ஈசுவரனின் உதவியால் செயல்படுகிறுன் என்றுல சாஸ்திரம் இவனைக் கட்டாது என்கிறவர்கள் ஒன்று நோக்கவேணும்.

प्रवृत्तिक्कैயிலும் शास्त्रवश्यत्वम् घटियादபடியாம். अन्तर्यामियायुम् उपदेशमुखत्तालुम् तान प्रेरि-क्क प्रवर्त्तिक्किற चेतनரை அப்போதே மீட்க வல்லவனாயிருகக மீளாதே—“अस्तु” எனறு நிற்கும் நிலை अनुमन्तृत्वम्.

---

विषये प्रशासनमपिवर्णनीयम् । ततश्चात्र प्रशासन इत्यादि विशेषशब्दस्यापि सामान्यपरत्वरूपं गौणत्वमेव-प्राप्तमिति हृदयम् ।

ननु चेतनस्याचेतनवदीश्वरशरीरत्वेनात्यन्तविधेयत्वाच्चेतनाधिकारकशास्त्रवैयर्थ्यम् । स्वतन्त्रतया प्रवृत्तिक्षमो हि नियोज्योभवतीत्यत्राह—जीवेति । यथाऽचेतनानीश्वरदत्तं गन्धादि गुण जातं वहन्ति, तथा चेतना अपि जडव्यावृत्त्यर्थं तेनदत्तां कर्तृत्वादिशक्तिं बिभ्रत एव भरतादिवदत्यन्तपारतन्त्र्यं प्रकाशयन्ति । न तु साङ्ख्यमत इवात्यन्तकर्तृता रहिताः । येन शास्त्रवैयर्थ्यं भवेत् । तथा च सूत्रितं—“कर्ता शास्त्रार्थवत्त्वात्” इतीति भावः । ननु—“स्वतन्त्रः कर्ते”ति पाणिन्यनुशासनात् जीवस्य कर्तृत्वे पराधीनत्वं न सम्भवति । कर्तृत्वस्योक्तरीत्या स्वातन्त्र्यघटितमूर्तिकत्वादित्यत्र सदृष्टान्तं समाधत्ते—सर्वज्ञेति । यथा जीवस्यस्वभाविकज्ञानगुण सम्पन्नस्यापि—“अनादिमायया सुप्तः” इत्युक्तप्रकृतिपरवशस्य मलिनमणेरिव तिरोहितज्ञानस्य—“अज्ञोजन्तु”रितिरीत्याऽचेतनप्राया स्थितिरिति तदपनोदनाय ईश्वरोपदेशाधीनज्ञानत्वमङ्गीक्रियते, तथैव-“स्वयं मृत्पिण्डभूत-स्ये”ति स्वरक्षणेप्यशक्तस्य जीवस्य—“ईश्वरप्रेरितोगच्छेत् स्वर्गं वा श्वभ्रमेववेती”श्वराधीन कर्तृत्वं स्वाभाविक-कर्तृत्वेप्युपपन्नमित्यर्थः । नचोक्तसूत्रविरोधश्शङ्क्यः । व्युत्पत्तिवादोक्तरीत्या तत्क्रियाकारकान्तरव्यापारानधीन व्यापारत्वस्यैव स्वातन्त्र्यरूपत्वेन, ईश्वराधीनकर्तृत्ववत्त्वेप्यस्यानपायात् । न हीश्वरस्तत्तत्क्रिया कारकम् । अपितु दण्डचक्रादीन्येव हि तथा । भवति च तदधिष्ठातुः पुरुषस्य तद्व्यापारानधीनव्यापारवत्त्वम् । यदि नाम कर्त्रा सामान्यतोऽन्यानधीनेनभाव्यम्, तदा वक्ष्यमाणरीत्या कायकरणकर्मकालाद्यपेक्षायास्सर्व प्रवृत्तिषु दुर्वारतया क्वचिदपि पुरुषः कर्ता न भवेत् । कायकरणकालादीनां प्रकृतपचिक्रियादिकारकत्वन्नास्तीति तादधीन्यं न कर्तृतां विहन्तीत्येतत्तु प्रकृतेपि तुल्यमिति तुष्यतु भवान् । तदिदं सर्वं सूचितं—“परात्तु तच्छ्रुतेरितिसूत्रयता ।

---

தனது உடல்கொண்டு இந்திரியங்கள் துணையாக முன் கர்மாநுஸாரம் தகக காலத்தில் ஜீவன் ப்ரவ்ருத்திப்பதிலும் இந்த கேள்வி பிறக்கும். உள்நின்றும் உபதேசித்தும் தான் ப்ரேரித்த ஜீவர்களை அப்போதே மீட்கவும் ஈசுவரனால் முடியும். ஆயினும் மீட்காதே சிற்சில ஸமயங்களில்—ஆயிடுக—என்று அநுமதி செய்து இருப்பதால் இவனை அநுமதிகர்த்தா எனகிறோம்.

ஒருவிஷயத்திலே चेतनाचेतनங்களை प्रवर्तिप्पித்தவளவாலே அவ்வோ कार्यங்கள் निर्वहि யாமையாலே தானும்கூட प्रवृर्त्तिக்கை सहकारित्वம். जगत्सृष्ट्यादिகளில் सहकारियுமிவன்தானே என்பார்க்கு—कालादिகளான सहकारिகளும் இவனுக்கு शरीरங்கள என்கையிலும, सङ्कल्पित्त विषयத்தில் यथासंकल्पம் பின்னை வேறொன்றை अपेक्षिக்க வேண்டா வென்கையிலும் तात्पर्यம்.

---

नन्वीश्वरायत्त प्रवृत्तित्वे जीवस्य शास्त्रवश्यत्वाभावात् शास्त्रवैयर्थ्यं पुनरपिदुर्वारमेवेति आशङ्क्याह—जीवेति । अत्र - जीवश्शास्त्रवश्योनभवति ईश्वरास्यन्यस्याप्यन्तरवश्यत्वदित्यनुमानमभिप्रेतम् । ननु—"श्रुतिस्स्मृतिर्ममैवाज्ञेति वचनात् तदाज्ञाशास्त्रयोरनन्यतावगमेन कथमियमाशङ्केति चेत्—अत्रकेचित्—श्रुतिस्मृत्यादेस्तदाज्ञारूपत्वमनङ्गीकुर्वता बाह्यतुल्येन केनचिदयमाक्षेपः कृत इति व्याख्यान्ति । तन्न । तस्यास्तदाज्ञारूपत्वेपि हृदि स्थितान्तर्यामि प्रेरणस्य प्रत्यक्षतदाज्ञारूपत्वेन परोक्षतदाज्ञारूपशास्त्राद्बलीयस्त्वया, तद्वैयर्थ्यशङ्केत्येवाचार्याशयात् । "आज्ञाकुर्यान्नकुर्यादिति तु निगळिते धावनादेशवत्स्यात् ।" इतिह्युदाहृत-मन्यत्र । निगळनं=अन्तर्यामितयाहृदि प्रविश्य नियमनस्थानापन्नम् । धावनादेशः=कुर्यान्नकुर्यादिति विधिनिषेधतुल्यः । उभयमपि हि तदाज्ञैव । कायेत्यादिना प्रतिबन्द्या समाधानम् । करणं इन्द्रियाणि । कर्म=पुण्यापुण्ये । न हि चेतनाधीनत्वमेव शास्त्रवश्यताविरोधि । पाशाद्यचेतननिगळितस्यापि बन्दिनः शास्त्रवश्यताविरहदृष्टेः । अत ईश्वराधीनताया अनङ्गीकारेपि कायाद्यधीनता प्रत्यक्षसिद्धा कथंवार्येत । अथ तस्यां सत्यामपि जीवस्वातन्त्र्यस्य नहानिः । कायकरणादीनां प्रयत्नतःजीवेन स्वानुकूलतया नेतुं शक्यत्वात् इति यदि मन्यसे, तथैवात्रापि—"कृतप्रयत्नापेक्षस्त्वि"ति सूत्रोक्तरीत्या जीवानां तत्तत्कर्मसु प्रथमप्रवृत्तौ ईश्वरस्यापि सामान्यकारणतामात्रत्वेन विशेषसंरंभाभावात् जीवस्वातन्त्र्यं परिपूर्णमिति शास्त्रसार्थक्यं मन्यस्व । अत्रवक्तव्यं सर्वं सङ्गत्यतिशयवशात् पूर्वमेव जीवतत्त्वाधिकारे विवृतमस्माभिरिति अपेक्षमाणास्ततएवावगच्छन्तु । अत्र पूर्व वाक्ये—जीवानां परसापेक्षत्वेपि कर्तृत्वोपपत्तिरुक्ता । अत्रतु—परसापेक्षकर्तृत्ववतामपि—शास्त्रवश्यत्वकृततत्फलभाक्त्वोपपत्तिरुक्तेति भेदोबोध्यः । अथैवं सर्वदा चिन्तित-निमिषितादिष्वपि जीवान् प्रेरयत ईश्वरस्य—"अध्यक्षश्चानुमन्ताचे" त्युक्तमनुमन्तृत्वं कथं सङ्गच्छते ? स्वयमेववा—अन्येनवा प्रवर्तमानं प्रति—अस्त्विविवादी तृतीयः पुरुषोह्यनुमन्तेत्युच्यते । ननु प्रेरक एवे

---

சேதனர்களையும அல்லாதவற்றையும் சில விஷயங்களில் ஊக்கினபோதும அவ்வோ காரியங்கள் அவர்களாலே தலைக்கட்டுவதில்லை அப்போது ஈசுவரன இளந்தலைக்கு பெருந்தலை சுமப்பதுபோல் கூடநின்றுதவுகிறான். இங்கிலேயே ஸஹகாரித்துவம் எனபபடும் ஜகத்தை ஸ்ருஷ்டிக்கும் போதைக்கு இவனே தனக்கு ஸஹகாரி என்றதறகும் இருவித

இப்படி ஸர்வகார்யவிஷயவ்யாபாரவானான ஈச்வரன-க்ஷேத்ரஜ்ஞருடைய விஷமஸ்ருஷ்டிஹிதாஹிதப்ரேரணாதிகளில விசேஷகாரண மன்றிக்கே—அவர்களுடைய கர்மவைஷம்யம் அவற்றுக்கு ப்ரயோஜகமாகையாலே இவனை உதாஸீனன என்கிறது. கர்மானுகுணகார்யஸ்ருஷ்டி பண்ணுகிறதெல்லாம் இவனுடைய ஃபலப்ரதத்வ ப்ரகாரம். இத்தாலே வைஷம்ய நைர்க்ருண்யபரிஹாரமும் வரும்.

---

त्यत्राह—अन्तर्यामि इति। "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानियन्त्रारूढानि माययेे"ति सर्वत्रान्तरवस्थाय प्रेरयतीश्वरः। यन्त्रारूढानि-शरीराख्ययन्त्रारूढानीत्यस्मद्भाष्यकारा आहुः। ऐन्द्रजालिकः यन्त्रारूढानीवेत्यध्याहृत्य शङ्करभाष्ये व्याख्यानम्। उपदेशमुखेनेति। शास्त्राचार्योपदेशादिनेत्यर्थः। एतेन जीवस्य कृत्यविशेषेषु प्रथम प्रवृत्ति प्रभृतीश्वरःप्रेरक इति कथन्तस्यानुमन्तृत्वमिति विरोधो द्योत्यते। नचेदं—"कृतप्रयत्नापेक्ष" सूत्रे—"जीवेन प्रथमङ्कृतम्प्रयत्नमपेक्ष्य तदनुमति दानेन प्रवर्तयती"त्यादि भाष्येण "प्रथम प्रवृत्तौ ईश्वर उदासीन" इत्यादितत्रत्यश्रुतप्रकाशिकया च विरुध्यत इति वाच्यम्। प्रथम प्रवृत्तावीश्वरस्य सामान्यकारणमात्रत्वेनाभिसन्धिविशेषविरहात् कर्मणामेव प्रधान हेतुतयोदासीनत्वव्यवहारेपि प्रथम प्रवृत्ति प्रभृति सामान्यकारणत्वकृत प्रेरकत्वस्येश्वरेऽक्षतेः कथं तदैवानुमन्तृत्वसम्भव इत्याशयात्। इदञ्चानुपदमेव भविष्यति। अथाप्यविरोधेनानुमन्तृत्वमुपपादयति—अप्योदे इति। सर्वशक्तेन स्वेन प्रेरितस्य जीवस्य सद्यः प्रवृत्ति विघटने ईश्वरस्वातन्त्र्यादेरक्षतत्वेपि तथाऽनिवारणमेवानुमन्तृत्वमित्यर्थः। मीलाते अनिवार्य। अन्तर्भावितणिजन्तमिदं पदम्। नन्वनिवारणे ईश्वरस्यायं जोषम्भावः औदासीन्यमेवावहेत्। नत्वनुमन्तृत्वमिति चेदाह—अस्त्वति। तथा च—"जगद्धि सर्वं स्वपिति त्वयि सुप्ते परन्तपे"ति भगवतो मौने जीवप्रवृत्त्याद्यसम्भवेन—अस्त्विति जीवप्रवृत्त्यादिकमीश्वरोऽनुमनुत इत्यर्थः। तथा च लोके तृतीयपुरुषस्यैवानुमन्तृत्वेपि इहात्यन्तपरतन्त्रजीवविषये प्रेरकएवेश्वरोऽनुमन्तापि भवतीतिभावः।

अथ सहकारित्ववेषं विशदयति-ओरुविषयेति। चेतनाचेतनयोरल्पशक्तिकतया प्रथममीश्वरप्रेरितयोरपि तयोरुत्तरोत्तरप्रवृत्तिंप्रति अवसीदतोः-मस्तके वस्तुभारधारिणोदुर्बलस्य प्रबलइवेश्वरस्सहकरोति इति भावः। नन्वेवं स्वातिरिक्तचेतनाचेतनविषये ईश्वरस्य सहकारित्ववेषोपपत्तावपि जगत्सृष्ट्यादावीश्वरः स्वस्यस्वयं

---

கருத்துக் கூறலாம். ஸஹகாரிகாரணங்களான காலாதிகளும் இவனிட்ட வழக்கு என்றும், முதலில இவன் நினைப்பிட்டபடி முடிக்கையில் வேறொரு துணை தேடவேண்டாம என்றும் அவை ஆகும். இப்படி எல்லாவற்றையும் இவன் செய்தானேயாகிலும் —ஜீவர்களை பலபல படிகளில் பிறப்பிக்கும்போதும் அவர்களுக்கு நன்மை தீமைகள் உண்டாகும் போதும் தான்

"ஈசன் எதற்காக உலகைப் படைக்கிறான்?"

चेतनனானவன் ஏதேனும் ஒரு प्रयोजनத்தை ஒழிய ஒரு प्रवृत्ति பண்ணான். लीलारसத்தையாதல் जीवरक्षणத்தையாதல் காமித்து प्रवृत्तिக்கிறானாகில் अवाप्तसमस्तकामत्वம் கூடாது. ஆகை-

---

सहकारीत्युक्तिः कथमुपपद्यताम्? उक्तं हि सूत्रकृता—उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धीत्यादौ स्वयं सहकारित्वमपि। प्रत्युत स्वव्यतिरिक्तकालादेरेव जगदारम्भादौ स्वसहकारितया स्वयमेव सहकारीतिकथनं वस्तुस्थितिविपरीतञ्चभवति। यद्यप्युपादाननिमित्ताख्यकारणद्वयव्यतिरिक्तं सहकार्याख्यं न तृतीयं कारणं किञ्चिद्भवितुमर्हति। यतः-परिणामिकारणं उपादानम्। परिणामव्यतिरिक्ताकारेणापेक्षितं कारणं निमित्तमित्येवतल्लक्षणम्। कालादीनामपि निमित्तकारण एवान्तर्भावः। तथापि-उपादानभूतं वस्तु यः कार्यात्मना विपरिणमयति, सकर्ता निमित्तम्। एतदुभयभिन्नंकारणं सहकारीतिमात्रयातयोर्भेद इति। अत्रद्वेधानिर्वाहमाह—जगत्सृष्ट्यादि इति। तत्र प्रथमनिर्वाहः—कालादि इति। अयम्भावः सहकारीत्यत्र साहित्यस्यभेदगर्भत्वात् सृष्ट्यादावीश्वरस्य स्वव्यतिरिक्ताः कालादय एव सहकारिणोभवन्ति।" प्रकृतिं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥—"काले शंसति योग्यतां चिदचितोरन्योन्यमालिङ्गतोर्भूताहङ्कृतिबुद्धिपञ्चकरणीस्वान्त प्रवृत्तीन्द्रियै"-रित्यादिप्रमाणसम्प्रदायाभ्यां तथैवावगतेः। तथापि-यथा सूक्ष्मप्रकृतेस्स्वव्यतिरिक्ताया एवोपादानत्वेपि, तस्यास्स्वशरीरतया तच्छरीरकस्स्वयमेवोपादनमिति निमित्तोपादानैक्यं सम्यक् सम्पादितं, तथैव सहकारिभूतकालादेः—"रूपान्तरन्तत् द्विज कालसंज्ञं" "व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापर"मित्यादिनेश्वरशरीरत्वावगमात् तच्छरीरक ईश्वर एव सहकारीति विशिष्टाद्वैतेन निमित्तोपादानसहकार्यैक्यमपि भवतीति। अथद्वितीयनिर्वाहः—सङ्कल्पित्त इति। एतदुक्तं भवति - स्वयमेव सहकारीत्यस्य - सृष्ट्यादौ स्वसंकल्पमात्रसहायोय भवतीति तात्पर्यम्। "बहुस्यां प्रजायेये"त्यादितः यथासङ्कल्पमेवहि सृजति। नान्यप्रतीक्षया कदाचिदस्य मनोरथभङ्गोभवति। यथास्मदादीनाम्। पाञ्चाल्या आपदि पटविवृद्धावयमनुभावोभगवतोऽनुभाव्यः। तथा च वेङ्कटाध्वरिः—"अवेमव्यापाराकलनमतुरीस्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघटनायासपटलम्। विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः पटानां निर्माणं पतगपतिकेतोरवतु न" इति।

---

ப்ரதான காரணமன்றிக்கே அவர்களுடைய விசித்ர காமங்களே விசேஷ காரணமாம்படித் தான் ஒதுங்கி நிற்கையால் ஈசுவரனை உதாஸீநன் என்பார்கள். இப்படி இவன் நிற்பதும் இவனுடைய ஓர் பலப்ரதாந ஸ்வபாவமாகும். இத்தாலே இவனுக்கு பக்ஷபாததோஷமும் க்ரூரன் என்ற பெயரும் வாராது தப்பியது.

யால ஈச்வரன இல்லையாதல निर्व्यापारेश्वरन कालादिகளைப்போலே निमित्तमात्रமாதலாமததனை யன்றோ? எனனில்—नित्यनिरतिशयानन्दனுய நினைததபோதே தன अभिमतங்களை எல்லாம தலைககட்ட வலலனுகையாலே अवाप्तसमस्तकामன் என்கிறதாகையாலே तत्तत्कालाभिमतसृष्ट्यादि लीलारसமும आश्रितरक्षणादिरसமும நடககக் குறையிலலை.

---

अथैवं सर्वकार्येषु कर्तृत्वकारयितृत्व शासितृत्वानुमन्तृत्वादिमत ईश्वरस्य—"अवाक्यनादर"इत्याद्युक्तं उदासीनत्वं कथं सङ्गच्छते? न हि कंचिद्बुधा व्याप्रियमाण उदास्त इति वक्तुं शक्य इति शङ्कायामाह—इप्पडि इति। उपपादितप्रकारेणेत्यर्थः। ईश्वरेति - नियन्तुः कथमुदासीनत्वमिति स्फोरणाय। क्षेत्रज्ञाः= बद्धजीवाः। विषमसृष्टिः=देवादिचतुर्विधनीचोच्चजन्मप्रदानम्। हिताहितप्रेरणम्=विहितनिषिद्धप्रवर्तनम्। विशेषकारणतांविना इति। तत्तःकार्यप्रतिनियतकारणमीश्वरोनभवतीत्यर्थः। तदुक्तं—समोहं सर्वभूतेषु न मे द्वेष्योऽस्तिनप्रियः - निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतोवै सृज्यशक्तयः।" इति। सृज्यानां=प्रजानां, शक्तयः=कर्माणि। अधिकरणसारावल्यामपि—साधारण्येन हेतुस्सलिलमिव विभुस्सर्वकार्याङ्कुराणां वैषम्यन्त्वाविरिञ्चात्प्रतिनियतफलैः प्राणिनां कर्मबीजैरिति। तर्हि तत्र तत्र कार्यवैषम्ये किंविशेषकारणमित्यत्राह-अवर्कलुडैयइति। क्षेत्रज्ञानामित्यर्थः। प्रयोजकं=विशेषकारणम्। तथा च सूत्रं—"नकर्माविभागादितिचेन्नानादित्वादुपपद्यनेचाप्युपलभ्यतेचेति। तत्रहि कर्मणोऽनादित्वस्थापनेन, तादृशं कर्मवैषम्यमेव सृष्टिवैषम्ये प्रधानहेतुरिति, तदंश ईश्वरस्य सामान्यकारणतामात्रत्वेनोदासीनत्वव्यपदेश इति हृदयम्। ननु स्वतन्त्रश्चेदीश्वरः कथं यथेच्छमकुर्वन् जीवानां कर्मापेक्ष्यकरोतीत्यत्राह—कर्मानुगुणेति। फलप्रदत्वप्रकारम्= ईश्वरीय फलप्रदानसङ्कल्पस्य तथाविधत्वात् तदायत्तम्। स्वतन्त्रोपीश्वरः जीवानां प्राचीन कर्मानुसृत्यैव देवादिदेहयोगं ददामीत्येव सङ्कल्प्य तदनुगुणं फलं प्रयच्छति।" स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुरिति तत्र कानाम कथन्तेतिभावः। एवं धर्मिग्राहकप्रमाणसिद्धमीश्वरसङ्कल्पस्य तादृक्त्वं प्रधानसमाधानमुक्त्वा, सूत्रकारोक्तं युक्तिविशेषमप्यभ्युच्चयायदर्शयति—इत्ताले इति। उक्तया कर्मसापेक्षतयेत्यर्थः। परिहारोऽपि इत्यपिना पूर्वोक्तप्रधानसमाधानसमुच्चयः। तथाचेश्वरस्य—"समोहं सर्वभूतेषुनमे द्वेष्योस्तिनप्रिय" इत्युक्त सर्वभूतसमतां संरक्षितुं स्वतन्त्रस्यापि कर्मापेक्षा कल्प्यते। अन्यथा स्वेछया देवतादिसृष्टौ उत्कृष्टे पक्षपातः, दुःखयोनिनिकृष्टस्थावरादिसृष्टौ निष्करुणत्वञ्चापद्यते। ततश्चोक्तदोषद्वयासंस्पर्शाय—"साधुकारी साधुर्भवति—पापकारी

---

அறிவுடையவன் ஏதேனும் ஒரு பயனைக் கருதாமல முயற்சிசெய்யான். ஓர் விநோதத தையோ ஜீவர்களின் பாதுகாப்பையோ உத்தேசித்து முயலுகிறுனுகில் ஈசுவரனை பரிபூரண மனோரதன் என்று சொல்லமுடியாது போகும். ஆகையால் ஈசுவரன இல்லையாதல காலாதி களைப்போல ஏதும் செயயாமல் வெறும் நிமித்த காரணம்மட்டில ஆதல் ஆகவேண்டாவோ

पापीयान्भवति—" इत्यादिरीत्या कर्मानुगुणा विषमसृष्टिः । तत्र च न तस्य पूर्वोक्तदोषद्वयोदयः । यथा—बालेन क्रियमाणं मृदादिभक्षणं तस्यानर्थायेति मन्यमानाः पित्रादयस्तस्य मण्यादिना जिह्वां छित्त्वा निगृह्णन्ति हितबुद्ध्या, तथैवेश्वरोपि—"हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या प्रयच्छति । शस्त्रक्षाराग्निकर्माणि स्वपुत्राय यथा पिते"ति दुःखयोगं हितबुद्ध्यैव जनानां करोतीति भावः । तथा च सूत्रं—"वैषम्यनैर्घृण्ये, न, सापेक्षत्वात्तथा हि दर्शयती"ति । अहुश्च भट्टपराशरपादा अपि—' निम्नोन्नतञ्च करुणश्च जगद्विचित्रं कर्म व्यपेक्ष्य सृजतस्तव रङ्गशेषिन् । वैषम्यनिर्घृणतयोर्नखलु प्रसक्तिः तद् ब्रह्मसूत्रसचिवाश्श्रुतयो गृणन्ति" इति ।

अथैवमीश्वरस्य सकलजगत्स्रष्टुरपि उदासीनत्वाविरोधमुक्त्वा स्रष्टृत्वावाप्तसमस्तकामत्वयोरपि तं वक्तुं प्रथमं पूर्वपक्षमाह—चेतने त्यादिभिर्वाक्यैः । "प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत" इति प्रेक्षापूर्वकारिणस्स्वार्थपरार्थान्यतरप्रयोजनाभिसन्धेरवर्जनीयत्वादित्यर्थः । अस्त्वेवम् । ततः किमित्यत्राह—लीलारसेति । लीलया वक्ष्यमाणलक्षणया योरसः-अनुभवः तमित्यर्थः । इदं स्वप्रोजनम् । नन्वनायाससाध्यानन्दजनकव्यापारस्यैव लीलात्वेन् जगद्विरचनस्य चातथात्वात् न लीलात्वं युक्तमित्यन्यदेव प्रयोजनं वक्तव्यमित्याशयेनाह—जीवरक्षणेति । जगन्निर्माणस्यायाससाध्यत्वेन लीलात्वायोगेपि करुणाप्रयुक्त परप्रयोजनरूप जीवरक्षणाभिसन्धिमूलकत्वेन तद्रूपत्वं भविष्यतीति भावः । अवाप्तसमस्तकामत्वेति । "नानवाप्तमवाप्तव्यमिति ईश्वरस्य सर्वदापूर्णकामस्य एवमादिफलानामपि पूर्वसिद्धतया नैतदर्थमीश्वर इदानीं प्रवर्तेतेति अन्यथाऽवाप्तसमस्तकामताविरोध इति च भावः । तदुक्तं श्लोकवार्तिके—"क्रीडार्थत्वस्सृजतोविश्वं विहन्येत कृतार्थता । सुखैकतानं जनयेज्जगत्करुणयासृजन्नि"ति ॥ कृतार्थता—अवाप्तसमस्तकामता । "जीवेदुःखाकुले विष्णोः कृपाकाप्युपजायते ॥" इति रीत्या करुणाकार्या जगत्सृष्टिरिति पक्षोऽप्यत्रोत्तरार्धेन प्रतिक्षिप्यते-सुखैकतानमिति । न हि पूर्वमेवदुःखोदधौनिरतन्तं करुणार्द्रहृदयस्स्वयमपि पातयन्तीति भावः । तर्हि उपनिषद्वचसां ब्रह्मबोधकानां कागतिरित्यत्राह—आरूढ्याऽ ईश्वरान् इति । "वेदमधीत्यस्नाय दि"ति वाक्येन कृत्स्नस्य वेदार्थज्ञानस्याध्ययनविधेरर्थज्ञानपर्यन्ततायां कर्मसु विनियोगात् अनारभ्याधीतत्वाद्दूरस्था अप्युपनिषदः कर्मकर्तृभूतजीवस्वरूपस्यैव स्तावका इति तासां स्वार्थतात्पर्याभावात् नेश्वसिद्धिरिति भावः । अथवा—"वायव्यं श्वेतमालभेते"त्यादि विधिसन्निधिपठितानां—"वायुर्वै क्षेपिष्ठ देवते"त्यादीनां सिद्धपरार्थवादवाक्यानां कथञ्चिदपि विध्यपेक्षित स्वार्थपरत्वाङ्गीकारायोगेन प्राशस्त्ये वाक्यलक्षणया यागस्य वक्तव्ये सिद्धान्तितेऽपि, यागप्रकरणपठितानामेव तादृशानां—"यन्नदुःखेनसम्भिन्न" इत्याद्यर्थवादवाक्यानां न तथा स्वार्थप्रहाणेन यागप्राशस्त्ये लक्षणाऽङ्गीकार्या । विधिवाक्यघटक स्वपदार्थविवरणाय प्रवृत्तेस्स्वार्थेऽप्यस्यतात्पर्यसिद्धेः । एवमेव दूरस्थानामुपनिषदामपि कालान्तरानुभाव्यफलजनक कर्मकर्तृस्वरूपनित्यनिर्विकारत्वादिस्तावकं

तात्पर्येणैव प्रवृत्तिसम्भवे, न तद्विहाय प्राशस्त्येतात्पर्यं कल्पनीयम्। एवञ्चवयमपि वेदान्ताय नात्यन्ताय लक्षणाद्यकल्पनेनापराध्यामः। आत्मनां कर्मकर्तृत्वभोक्तृत्वाद्यनपेक्षितगुणजात प्रपञ्चनन्तु उपनिषत्सु क्रियमाणं तथा-तथोपासनायस्यात्। अतोनकर्मकर्त्रतिरिक्तेश्वरसिद्धिरिति खण्डदेवेन **मीमांसाकौस्तुभोक्तपक्षोऽस्तु**। अथ—“नित्योनित्यानां चेतनश्चेतनाना” मित्याद्यागमानुसारेणेश्वरोदुर्वार इति आगृह्यते—तदास्तु निर्व्यापारेश्वरपक्ष इत्याह—**निर्व्यापारेश्वरन्** इति। निर्व्यापारत्वेपि निमित्तत्वं सम्भवतीत्यत्र काल उदाहरणम्। **मात्र**-पदेन—कुलालादिवत्सव्यापारनिमित्तत्वस्य, सामान्यत उपादानत्वस्य च व्यवच्छेदः। **अयञ्चपक्षोयोग-सिद्धान्तानुसारिणां भवति।**

अथैवमादिशङ्कायां सिसिद्धान्तयिषुः प्रथमं अवाप्तसमस्तकामत्वस्यस्वरूपं निर्वक्ति—**नित्यनिरतिशयानन्देति**। अयंबहुव्रीहिः। अनेनैतदीयसृष्ट्यादेः पणबन्धचूतादिवत्प्रयोजनान्तरार्थत्वं नास्तीति व्यज्यते। ततश्च-“अवाप्ते” त्यत्रक्तप्रत्ययस्य—“आशंसाया भूतवच्चे” त्यादिरीत्याऽऽशंसार्थकतयाऽवाप्तुमिष्टेत्येव तात्पर्यलाभात् कामानां पूर्वमेवलब्धत्वस्यासिद्ध्या तत्कालाभिमतालब्धलीलारसादिलाभाय सृष्ट्यादौप्रवर्तते। न चैतावता लौकिकपुरुषवदनवाप्त समस्तकामताप्रसङ्गः। इच्छामात्राज्जगदपरथासंविधातुं क्षमतया सर्वशक्तेरिच्छाप्रतिघाताभावस्यैव लोकतो विशेषादितिभावः। तदुक्तं-तत्त्वटीकायां—“यद्यदेष्टं तदातस्य सिद्धिस्तस्याप्तकामते”ति। ततश्चैतावता फलित सृष्ट्यादेरवाप्तसमस्तकामत्वाविरोधं निगमयति—**इच्छनुकृ** इति। ईश्वरस्येत्यर्थः। **इयञ्चक्रीडाऽऽचार्यैरेवान्यत्रोपवर्णिता**—“पश्यन्तीषुश्रुतिषु परितस्सूरिबृन्देनसार्धं मध्येकृत्य-त्रिगुणफलकं निर्मितस्थानभेदम्। विश्वाधीशप्रणयिनि! सदा विभ्रमद्यूतवृत्तौ ब्रह्मेशाद्या दधति युवयो क्षशारप्रचारमिति। एवमानुषङ्गिकं फलं प्रदर्श्य अथ प्रधानं सृष्ट्यादिप्रयोजनमाह—**आश्रितेति**। “अचिदविशेषितान् प्रळयसीमनि संसरतः करणकळेबरैर्घटयितुं दयमानमनाः”।-“अचिदविशिष्टान् प्रळयेजन्तूनवलोक्य जातनिर्वेदा। करणकळेबरयोगं वितरसि वृषशैलनाथकरुणेत्वम्॥” इत्यादिभिः—प्रतिकल्पमेकोपिवामुक्तस्सन् किम्मामाप्नुय दिति हिताभिसन्धिनेश्वरेण जीवोज्जीवनार्थं करणयाकृतत्वात् सृष्ट्यादेस्तत्कार्यत्वमुपपन्नमेवेति भावः। अथैवं लीलार्थं विश्वस्रष्टृत्वस्यावाप्तसमस्तकामत्वाविरोधित्वसमर्थने—“क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे। देवस्यैष स्वभावोयमाप्तकामस्यकास्पृहे”ति **माण्डूक्यश्रुतिविरोधः**। तत्रावाप्तसमस्तकामत्वविरोधमेव हेतूकृत्य सृष्टेर्लीलाप्रयोजनकत्ववादस्य परपक्षत कथनेन निरासदर्शनादिति चेन्न। तत्र यथाश्रुतावाप्तसमस्तकामताविरोधितात्पर्येण निरासेपि, अत्रोक्तपूर्वावाप्तसमस्तकामत्वाविरोधेन सृष्टेर्लीलार्थत्वस्य सिद्धान्तीकरणेऽनुपपत्तिलेशस्याप्यभावात्। अथवा—“लीलामात्रमेवास्य भारत्रयवहन”मित्यादावनायाससाध्यकर्मण्यपि लीलाशब्द-

प्रयोगेण, यथाऽङ्गुलिचालनादयोऽनायाससाध्याः क्रिया न प्रयोजनापेक्षाः, अत एव न तत्र प्रयोजनप्रश्नोदयः, उदयेऽपि वा मौनमेवोत्तरम्, तथैव परमात्मनोऽपि अनायाससाध्या सृष्ट्यादिक्रिया न प्रयोजनापेक्षा, किन्तु स्वयम्प्रयोजनलीलारूपैवेति पक्षोऽस्तु । "अखिलभुवनजन्मस्थेमभङ्गादिलीले" इत्याद्यग्रन्थस्यैवैतत्पक्षसाक्षित्वात् । "केवललीलैकप्रयोजनाः कन्दुकाद्यारम्भा दृश्यन्ते ।" "ध्वंसादेर्लीलैव प्रयोजन" मित्यादिभाष्यस्यापि— "स्वस्यस्वयंदास" इत्यादाविव स्वयम्प्रयोजनत्वे तात्पर्यमिति कूरनारायणमुनयः । रङ्गरामानुजमुनयस्तु— "क्रीडार्थं सृष्टिरित्यन्ये" इत्युक्तवाक्यस्य शङ्करादिभिर्गौडपादकारिकात्वेन व्याख्याततत्वमनुरुध्य तद्वचन-प्रामाण्य एव सन्दिहाना स्वस्पष्टत्वादेरत्रोक्तक्रमेणावाप्तसमस्तकामताविरोधित्वाभावात् लीलार्थत्वमेवाङ्गीकुर्वन्तीव भाति । अत्र चाधिकं जिज्ञासमानैः—प्रयोजनवत्त्वाधिकरण भावप्रकाशिकायां द्रष्टव्यम् ।

नन्वेवं विश्वसृष्टेरीश्वरलीलार्थत्वे तस्यैव प्रयोजकतया फलित्वेन प्राधान्यात्, "देवादिविषमसृष्टौ कर्मैव प्रधानं प्रयोजक" मित्युक्तिर्नसङ्गच्छत इत्यत्राह—चेतनेति । कर्मप्रवाहः=साध्वसाधुकर्मपरम्परा । लीला-कारुण्येति । लीलारसभरितस्वसङ्कल्पः—"सोऽकामयत" इत्यादिकसृष्ट्यर्थः । कारुण्यरसभरितस्तु—"मोक्षयिष्यामी" त्यादिरूपोऽपवर्गार्थः । अनादि इति । "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" "अचेतना परार्था च नित्या सतत विक्रिया ॥" "धाता यथापूर्वमकल्पय" दित्यादिभिरेषामनादित्वावगमादित्यर्थः । इच्छारिति इत्यादि । अयमाशयः—"रूपप्रकारपरिणामकृतव्यवस्थं विश्वं विपर्ययितुमन्यदपञ्च कर्तुम् । क्षाम्यन् स्वभावनियमं किमु वीक्षसे त्वं स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहु" रिति रीत्या स्वतन्त्रेणेश्वरेण सत्यसङ्कल्पेनाभिलषितक्षण एव युगपदेवाशेषमपि जीवजातं नित्यसूरिवर्गमध्ये निक्षेप्तुं शक्नुवानेनापि स्वस्यवैषम्यादिपरिहाराय नानाविधानि जीवकर्माणि प्रधानहेतूकृत्याचेतनानि तत्तज्जीवविशेषभोग्यतया परिणाम्य स्वस्वातन्त्र्य निह्नुतयित्वा क्रमेणैतान् मोक्षयिष्यामीति कोऽपि विनोदः क्रियते । तदानीं लीलारसः कारुण्यरसमभिभूय-प्रवर्तते । जीवस्योपायानुष्ठानकाले च कारुण्यरसो लीलारसम् । एवञ्च स्वतन्त्रेश्वरेच्छैवानादितया प्रवृत्तेष्वेतेषु-तत्तच्चेतन कर्मणां विशेषकारणत्वं, अचेतपरिणामानां कार्यत्वं, विश्वस्येश्वरलीलाभोगार्थतया तत्प्राधान्यञ्च तत्तद्-स्त्वनुरूपतया विभज्य विनियुङ्क्त इति ईश्वरस्य प्रधानकारणत्वेऽपि कर्मणामेव विषमसृष्टौ विशेषप्रयोजकत्वं बोध्यमिति ।

अथैवमीश्वरस्य प्रतिपादितं कारणत्वादिकं स्वीकृत्यापि तदेतन्निमित्तमात्रान्नातिरिच्यत इति सहेतुक-माशङ्क्य निराकरोति इप्पडि इत्यादिमहावाक्येन । फलश्रुतिस्मृतीति । "अस्मान्मायी सृजते विश्वं— जनिता प्रजानां—तस्य त्वष्टा विदधद्रूपमेति—धाता यथापूर्वमकल्पयत्—कर्ता कारयिता च स" इत्यादि

चेतनருடைய कर्मप्रवाहமும் अचेतनங்களுடைய परिणामप्रवाहமும் ईश्वरனுடைய लीलाकार्यसंसार प्रवाहமும் அநாதியாக ப்ரவृत्तिயாகின்றால் இவற்றில் विशेषप्रयोजकत्वप्रधानत्वादिविभागத்தை शास्त्रानुसारமாக विवेकिப்பது.

---

श्रुतिस्मृतयः परमात्मनि, घटादेः कुलालादिवत् जगतो निमित्तत्वमेव शब्दस्वारस्यसिद्धं बोधयन्तीत्यर्थः । लोकदृष्टप्रक्रियेति । लोके मृत्पिण्डकुलालादौ निमित्तोपादानत्वयोर्वैयधिकरण्यस्यैव दृष्टत्वादित्यर्थः । इत्थम् उपादानतया वेदान्तसिद्ध ईश्वरः । निमित्तमात्रेति । समवाय्यसमवायिकारणभिन्नकारणस्यैव निमित्तकारणतया लक्षणतः सिद्धत्वेन तस्य तन्मात्रत्वेनस्वीकार्यम् ।" सर्वं खल्विदं ब्रह्मे"त्यादेः सामानाधिकरण्यस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च—राजपुरुषन्यायेन प्राधान्यविवक्षया उपपत्तेरितिभावः । तर्हि जगदुपादानं किमित्यत्राह—उपादानम् इति । "अस्मान्मायी सृजते" इत्युक्तप्रमाणादेवेतिभावः । प्रकृत्यादीत्यादिना—उपादानत्वेन वैशेषिकाद्युक्तपरमाणुपरिग्रहः । एतेन—पूर्वपक्षिणां परस्परविरुद्धप्रकृतिपरमाण्वादिषु किमुपादानमिति-निश्चयस्याप्यभावेन मिथोविवादेऽपि ईश्वरोपादानतावादिवेदान्त्युपरोधे परं श्वावराहकलहन्यायेनैकमत्यं सञ्जातमहोधिगितिव्यज्यते । एवमनङ्गीकारे उपनिपतदनिष्टं प्रदर्शयति—इत्थंचेद् इति । विकारादीति—"अक्षयविनाशाभ्यां परिणामधर्मिजन्मभिः ।" इत्याद्युक्तावस्थाविशेषाणां ग्रहणम् । तथा च—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्—"इत्यादिश्रुतिविरोध इति भावः । एवं वेदान्तविरोधवादिनो नाम्ना-निर्दिशति—योगपाशुपतेति । योगानां कालवन्निमित्तमात्रनिर्व्यापारेश्वरवादप्रक्रियानुवादमेव प्रादर्शि । पाशुपता वैशेषिकाश्चेश्वरं कुलालादिवत् सव्यापारमपि अनुमानेन निमित्तमात्रं कल्पयन्ति । योगपाशुपतयोः प्रकृतिर्जगदुपादानम् । वैशेषिके तु परमाणुरिति त्रयाणामेषां मिथोविशेषः । एतेन—"चेतननुम् कारणमाक-माट्टान्" इति तत्त्वत्रयेश्वरप्रकरणगतवाक्यव्याख्यानावसरे—"पाशुपतर्कु आगमसिद्धेश्वरन् निमित्तकारणम्" इति वरवरमुन्युक्तिश्चिन्त्या भवति । शैवागमेऽप्यनुमानेनैव निमित्ततयेश्वरसिद्धेरुक्तत्वात् । तद्यथा—"विवादाध्यासितं सर्वं बुद्धिमत्कर्तृपूर्वकम् । कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथेति । अयमत्रार्थः अत्रैव पाशुपताधिकाराधिकारे—"वेदज्ञं" इति वाक्ये तद्व्याख्याने चास्माभिर्विशदीकृतो द्रष्टव्यः । प्रतिज्ञा="येनाश्रुतं भवती"त्यादिका । अत्र कारणविज्ञानेन कार्यस्य विज्ञाततकथनात्, तस्य च तयोरनन्यतयैव निर्वाहत्वात्,

---

என்னில்—அங்ஙனன்று. நித்யநிரதிசய ஆனந்தனுப்தான் நினைத்தபோதே தன்னிஷ்டங்களை எல்லாம் தலைக்கட்ட வல்லனாய் இருப்பதால இவனை பரிபூரணகாமன என்பதாலே அவ்வப் போது ஸ்ருஷ்டி விநோதங்களையும் ஜீவரக்ஷணங்களையும் செய்யக் குறையில்லை. சேதநர்

"ஈச்வரன் உலகுக்கு நிமித்தமாத்ரம் என்பதுசரி அன்று"

இப்படி ஸத்யஸங்கல்பனுய் ஸர்வகார்யகாரணமான ஈச்வரனை உண்டாலும் பல ச்ருதிஸ்ம்ருதிகளுடைய ஸ்வாரஸ்யத்தாலும் லோகத்ருஷ்டப்ரக்ரியையாலும் இவன் நிமித்தமாத்ரமாமத்தனையன்றோ? உபாதானம் ப்ரக்ருத்யாதி-

---

प्राधान्यादिविवक्षयाऽन्यथानयनेन प्रतिज्ञादृष्टान्तादिबहुवाक्योपरोधप्रसङ्गादीश्वरस्योपादानत्वं प्रतिज्ञयाऽनयापि सिद्ध्यतीति भावः । दृष्टान्तः=पूर्वोक्तप्रतिज्ञोपपादकः—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या"दित्याद्युक्तः । एवमुपादानत्वे ज्ञापकमुक्त्वा निमित्तत्वे तदाह—बहुभवनेति । "तदैक्षत बहु स्यां प्रजायेये"ति सङ्कल्पकर्तृत्वश्रवणात् कुलालवत् सङ्कल्पविशिष्टतया निमित्तत्वमपि तस्य सिद्धमित्याशयः । अथोभयाकारयोगं समुच्चित्य दर्शयद्वाक्यमाह—वनवृक्षादिनिर्देशेति । "ब्रह्म वनं ब्रह्म स वृक्ष आसीदि"ति श्रुतौ द्यावापृथिव्यात्मकस्य कार्यस्योपादानभूतवृक्षत्वेन, तदुत्पत्तिस्थानतया निमित्तभूतवनत्वेन च परमात्मनो निरूप्यमाणतयोक्तोभयाकारयोगे ब्रह्मणः सिद्ध इति भावः । आत्मकरणेति । इदमप्युभयरूपत्वे प्रमाणम् । "तदात्मानं स्वयमकुरुते"ति श्रवणात् स्वस्यैव प्रपञ्चरूपेण स्वयं परिणामकरणावगतेरुभयात्मकत्वं प्राप्तमिति हृदयम् । "यद्भूतयोनिं परिपश्यन्ति धीरा" इति भूतयोनिशब्दः । "अत्र योनिशब्दश्चोपादानवाचक इति—यथोर्णनाभिः सृजते गृह्णते चेति वाक्यशेषादवगम्यत इति श्रीभाष्यम् । इह च सूत्रे—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्—अभिध्योपदेशाच्च—साक्षाच्चोभयाम्नानात्—आत्मकृतेः—योनिश्च हि गीयत इति सूत्रोक्तार्थकथनोऽनुसृत इति भाव्यम् । परिणामादिति सूत्रभाष्यमपीह विभावनीयम् । अत्रैवं रीत्येश्वरस्योपादानत्वेऽप्यविकारत्वोपपत्तिरनुपदमेव व्यक्तीभविष्यति । अथापि लोकविरुद्धं निमित्तोपादानैक्यस्य न श्रुतिप्रतिपाद्यतेति शङ्कायामाह—लोकेऽपि इति । लोकेपीत्यपिना शास्त्रेऽपि तयोर्भेदानियमदर्शनमभिप्रेतम् । भेदेति । मृद्दण्डादाविति शेषः । चेतनाचेतनेति । स्वप्रयत्नेन स्वज्ञानादिकमुत्पादयति जीवे तदाश्रयत्वोपादानत्वम्, तदुत्पत्त्यर्थप्रयत्नशालित्वेन निमित्तत्वञ्च समुच्चितः । एवं घटादिके चाचेतने वाय्वादिना नुन्ने ततः कुड्यादिष्वभिहत्याभिहत्य भिन्ने वसति, भेदाश्रयतया तदनुगुणनोदनाख्यव्यापारवत्त्वेन चोभयविधकारणत्वं बोध्यम् । अत्र च न्यायसिद्धाञ्जनं—परिणाम्यनुस्यूतातिरिक्तेन कार्येणापेक्षितं कारणं निमित्तम् । असमवायीत्यवान्तरविभागस्तु नास्मदीयैरभ्युपगतः । पारिभाषिक-

---

களின் காமப்ரவாஹமும், அசேதநங்களின் மாறுபாட்டின தொடர்க்கியும் ஈச்வரனின் விநோதம் கருணை நிரம்பிய ஸங்கல்ப பரம்பரையும் அநாதிகாலந்தொட்டு ஒழுகிவாரா நின்றால் அவற்றுள் எது முக்யம்? எது விசேஷ காரணம்? என்பவற்றைப் பொருளுக்குத் தக்கவாறு உணர்க.

களாகவேண்டோவா? இங்ஙனல்லாதபோது विकारादिदोषङகளும் வாராதோ? என்று योग-पाशुपतवैशेषिकादिसिद्धान्तஙகள் சொல்லுமது—श्रुत्यादिகளில் प्रतिज्ञादृष्टान्तबहुभवनसङ्कल्पवनवृक्षादिनिर्देशात्मकरणभूतयोनिशब्दादिகளாலே निरस्तம். லோகத்திலும் निमित्तोपादानभेदஙகண்டாற்போலே

---

त्त्वात् । अन्यथा निमित्तकारणप्रत्यासन्नं कारणं निमित्तमित्यादिविभागान्तरस्यापि परिभाषितुं शक्यत्वात् । पटाद्यसमवायितन्तुसंयोगादयस्त्वसिद्धा एव । अवयविभङ्गात् । तावत एव तत्त्वात् । संयोगादिकारणतया सिद्धा नोदनादयो निमित्तकोटेर्नातिरिच्यन्ते । ततश्च कारणत्वद्वयमपि चेतनाचेतनयोस्तत्र तत्र सिद्धमिति । ननु निमित्तोपादानत्वयोर्विरोधाप्रसिद्धावपि—प्रथममनुमानेन केवलं निमित्तमात्रतया सिद्ध ईश्वरे पश्चाद्धर्मिग्राहक-प्रमाणविरुद्धतयोपादानत्वसाधनं न युक्तरूपमित्यत्राह—**निमित्तमात्रेश्वरत्वादि** इति । वैशेषिकादीत्यर्थः । जीवस्य स्वप्रयत्नोत्पाद्यज्ञानादिकं प्रत्युपादानत्वे सूपादेऽपि नेश्वरस्य तत्तथा । तदीयज्ञानादीनां तन्मते नित्यत्वात् । अत ईश्वर संयोगाद्यनुसरणम् । इच्छाजसंयोगानङ्गीकारपक्षेणोक्तम् । ईश्वरघटादिसंयोगाद्याशयेनवा । अन्यथा ज्ञानवदेव तत्संयोगेष्यनुपपत्तितादवस्थ्यात् । **उपादानत्वेति** । तत्तज्जनकव्यापारोभयाश्रयत्वादितिभावः । न च द्रव्यविषय एवोपादानत्वस्य मुख्यतया संयोगादिगुणं प्रत्युपादानत्वस्य भाक्तत्वात् नेदमुदाहरणमुचितमिति वाच्यम् । विनिगमकाभावेनविपरिवर्तस्यापि प्रसङ्गात् । अत एव वैशेषिकैः रूपादानापरपर्यायसमवायिकारणं—"यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारण"मिति सामान्यतोलक्षयित्वा—"यथातन्तवः पटस्य । पटश्चस्वगत-रूपा"देरित्यविशेषेण द्रव्यगुणोदाहरणद्वयमप्युदीरितम् । नन्वेवमपि वेदान्तिभिः परिणामिकारणस्यैवोपादानतया-स्वीकारात्तस्यैव निदर्शनीयतया न संयोगादिगुणोदाहरणमनुगुणमिति चेन्न । युक्त्या तयोर्भेदं वर्णयतां वैशेषि-कादीनां खण्डनाय तदीत्यैवोदाहर्तव्यत्वात् । वस्तुतस्तु वेदान्तैरेवोभयविधकारणत्वसिद्धेस्स्वयं कक्षीकारात् ॥

नन्वेवमीश्वरस्योपादानत्वे तत्स्वरूपस्यैव विकार तत्प्रयुक्तक्लेशाद्यास्पदत्वं स्यादित्यत्राह—**अव्यो उपादानेति** । तथाचोपादानत्वं द्विविधम् । किञ्चित्स्वयमेवावस्थाश्रयतयोपादानम् । यथा घटादेर्मृदादि । किञ्चित्तु—अवस्थाश्रयत्वेनोपादानभूतद्रव्यापृथक्सिद्धतयोपादानम् । यथा युवादेर्बालादयः । अनयोः प्रथमे स्वरूपस्य साक्षाद्विकारादिप्रसङ्गेऽपि न द्वितीये तथा । विकारादेस्स्वापृथक्सिद्धविशेषणीभूतशरीरभूतद्रव्या-

---

இப்படி ஸத்யஸங்கல்பனுகவும் ஸர்வகார்யகாரணமாகவும் ஈசுவரன் இருந்தாலும், பல ச்ருதிஸ்ம்ருதிகளுடைய ஸ்வாரஸ்யத்தைப் பார்த்தாலும், உலகில் நடப்பதை நோக்கினாலும் இவன் நிமித்தமாத்திரமே. உபாதாநகாரணம் ப்ரக்ருதி முதலியனவாகும். இங்ஙனல்லாதபோது மாறுதலுக்குட்பட்டு ப்ரம்மம் கெடுமல்லவா? என்று பிறமதஸ்தர் சொல்லுவர். அது சரியன்று. ச்ருதிகளில்—ப்ரதிஜ்ஞை த்ருஷ்டாந்தம் பஹுவாகும் ஸங்கல்பம் வ்ருக்ஷம்

निमित्तोपादानैक्यत्தையும்—चेतनाचेतनங்களிரண்டிலும் स्वव्यापारத்தாலே स्वगतावस्थाविशेषங்கள் வருமிடங்களெல்லாத்திலும் காணலாம். निमित्तमात्रेश्वरवादिகளுக்கும்—ईश्वरसन्निधानयोगव्यनित्य-गुणங்களில் ईश्वरனுக்கு उपादानत्वமுமிசையவேணும்.

---

शव्यवस्थितत्वात्। तदिदमाह—बालन् इति। बालशरीरकस्य जीवविशेषस्य युवशरीरकतया परिणाम इत्यर्थः। एतेन-साक्षाद्विकाराश्रयतया परिणामिद्रव्यस्यैवोपादानत्वं मुख्यम्। ननूपादानीभवच्छरीरादिद्रव्यान्तर व्यवहितस्य तद्विशिष्टस्येति प्रत्युक्तम्। मृद्घटोऽभवदितिवत् बालो युवा समभूदित्यशेषलोकव्यवहाराविशे-षात्। "उदकमाहरती"त्यादौ आहरणक्रियायां मध्ये घटादेरिवात्रापि विशेषणीभूतस्वशरीरादेस्स्वोपादान तायामव्यवधायकत्वात्। न हि स्वाङ्गंस्वव्यवधायकमिति न्यायात्। स्वर्गसाधनापूर्वव्यवहितोपिहि यागस्स्वर्ग-साधनमेव। ननु कारणत्वसामान्यस्य साक्षात्परम्परासाधारण्यात् यागतज्जन्यापूर्वयोरुभयोरप्युभयविधकारण-त्वमिष्टं सर्वेषाम्। नत्वेवमुपादानत्वे द्वैविध्यं दृश्यते। यदि दृष्टं, तर्हि शरीरिणश्चेतनस्य परम्परयोपादनत्वमेव स्यात्। नशरीरवत्साक्षात्। तच्च गौणमेवभविष्यतीति नास्माकं तत्र विप्रतिपत्तिरिति चेन्नैवम्। तर्हि मृत्पिण्डघटकचूर्णानामेव साक्षात् घटाकारपरिणामभाक्तया तस्योपादानत्वानुपपत्तेः। अवयवभूतचूर्णपुञ्ज एव हि, मृत्पिण्ड इति तदनतिरेकात् तत्र नानुपपत्ति रितिचेत्, अहो अत्रापि शरीरविशिष्टस्यात्मनश्शरीरात्म-सङ्घातात्मकस्य विशेषणविशेष्योभयानतिरेकात् उपपत्तिं पश्य। विशेष्यस्य शरीरिणोऽत्र किमर्थं प्रवेशः? प्रथम प्रवेशोहि पश्चात्—स्थितस्यगतिश्चिन्तनीयेति न्यायेनोपपत्तिगवेषणमिति चेत्। व्यवहरन्तिहि—"बालो युवा समपद्यते" त्यदिरीत्या विशिष्टमात्मानं विशिष्टान्तरात्मानं प्रति उपादानतया। ननु त्वदभिमतं शरीरो-पादनत्वमात्रमाश्रित्य-बालं शरीरं युवशरीरं जातमिति। अतोविज्ञायते-शरीरयोः पूर्वापरकालिकयोरुपादानो-पादेयभावे सत्यपि शरीरिपर्यन्तमेव स पर्यवस्यतीति। अधिकमिहैव पूर्वत्रानुसन्धेयम्। आत्मस्वरूपेति। तस्यनित्यत्वेन बाल्यादीनां वयोवस्थाविशेषाणां तस्मिन्नसम्भवादित्यर्थः। "देहिनोऽस्मिन् यथादेहे कौमारं यौवनञ्जरे"तिह्युक्तम्। नामान्तरं=सदेकबहुस्यक्तादिशब्दवाच्यत्वम्। अयञ्चार्थः श्रुतिस्मृत्यादिप्रसिद्ध एवेत्याह—सोभिध्यायेति।.... सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजदिति मनु-

---

நசப்தங்கள் பூதயோநி ஆத்மகரணுதி நிர்தேசங்கள் இவைகளால் இது தள்ளுண்டது. உலக வழக்கிலும் இவ்விரண்டு காரணங்கள் வேறு வேருகவும் ஒன்ருகவும் காணப்படுவது உண்டு. சேதநாசேதநங்களிரண்டிலும் தனது செயலால் தனது நிலை மாறுபடும்போது இது சேர்ந்து காணப்படும். நிமித்தமாத்திரம் ஈசுவரன் என்பார் பக்ஷத்திலும்—அவனிடம் உண்டாகும் அநித்யகுணங்களுக்கு அவன் இருவிதகாரணமும் ஆகிருன் என்னவேணும்.

"பகவான் உலகாக பரிணமமடையும்போதும் மாறுதல் இல்லாதவனே"

அவ்வோ உபாதானத்ரவ்யசரீரகனுய்க்கொண்டு உபாதானசப்தவாச்யனுனல் பாலன் யுவாவாகும் போது ஆத்மஸ்வரூபத்தில் பால்யயௌவனங்கள் தட்டாதாப்போலே நாமாந்தரபஜனார்ஹ விகாரவிசேஷங்களும் க்லேசாதிகளும் ஈச்வரஸ்வரூபத்தில் தட்டாமையாலே நிர்விகாராதிச்ருதிவிரோதமில்லை. "सोऽभिध्यायशरीरा-

---

वचनम् । अत्र च स्मृतौ ब्रह्मणश्शरीरादेव जगत्सृष्टेस्स्पष्टं श्रवणात् गम्यार्थकश्रुत्युदाहरणात्प्रागुदाहरणम् । ऊर्णनाभिप्रभृतीति प्रभृतिशब्देन श्रुतौवक्ष्यमाणोदाहरणद्वयविवक्षा । तथाहि-मुण्डके "यद्भूतयोनिं परिपश्यन्ति धीरा" इति ब्रह्मणो जगदुपादानत्वमुक्त्वाऽनन्तरं-मृदादेरिव निर्विकारस्यानुपमर्दितस्य कार्येष्वननुवृत्तस्य च तस्यकथमुपादानत्वमिति शङ्कात्रयापाकरणाय पठ्यते-"यथोर्णनाभिस्सृजते गृह्णते च यथापृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्" इति । विशिष्टस्योपादानत्वेपि विकाराणां शरीरमात्रे नियन्त्रणस्योर्णनाभिर्दृष्टान्तः प्रथमः । उपादानमनुपमृद्यैव विकारप्रादुर्भावेद्वितीयः, ओषध्यादिष्वपि गन्धग्रहणादिना पृथिवीत्वप्रत्यभिज्ञानेन तदनुपमर्ददर्शनात । सतो जीवतः पुरुषात् केशानां शिरसिजानां, लोम्नां शरीरावयवरुहां तेषाञ्चोत्पत्तौ तृतीये-कारणाशानां कार्येष्वननुवृत्तिर्दर्शितेति । तथा च भट्टपराशरपादाः—"कार्येऽनन्ते स्वतनुमुखतस्त्वामुपादानमाहुः, सातेशक्तिस्सुकरमितरञ्चेति वेलां विलङ्घ्य । इच्छायाञ्चद्विहरति सदारङ्कराजाऽनपेक्षा सैवेशानादतिशयकरी सोर्णनाभौ विभाव्ये"ति ॥ ननु चेतनाचेतनात्मकस्वशरीरमुखतस्तस्योपादनत्वं दुर्वचम् । तस्याशरीरत्वश्रुतिबलेन सशरीरत्वबाधादित्याशङ्कते—अशरीरत्वश्रुतीति । "अशरीरं शरीरेष्वनवस्थेष्ववास्थितम् । महान्तं विभुमात्मानं मत्वाधीरोनशोचति ॥ इति कठवल्ली । अनवस्थेष्वनित्येषु-शरीरेषु, अशरीरं-अशरीरतया अवस्थितमित्यन्वयार्थः । अन्यथातस्य प्रियाप्रियस्पर्शो दुर्वारस्स्यात्-" न ह वै सशरीरस्यसतः प्रियाप्रिययोरपहतिरस्तीत्यादि श्रुतेरितिभावः । अथैवं सर्वथा तस्याशरीरत्वे त्वदभिमतनिमित्तत्वमपितस्य नस्यादित्यत्राह—इन्द्रादिन्यायेति । तथा च - यथाऽनुष्ठितक्रतुशतः कश्चिदिन्द्रपदं भजति, तथोपचितपुण्यविशेषः कश्चिदीश्वरत्वमश्नुते । एवमेव कर्मकृतानित्यशरीरादिमतां तेषामनेकेषां तत्स्थाने प्रवाहरूपेण सन्तन्यमानतया निमित्तत्वमात्रमुपपद्यत इति हृदयम् । तथाचान्तराधिकरणे पूर्वपक्षभाष्यं-"अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन्कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्यादिकरोतीति ।"

---

தனது சரீரமான சேதநாசேதநங்களால் ஈசுவரன உபாதாநகாரணமாகிறான். ஆகையால் பாலன் யுவாவாகமாறும்போது அவனுடைய ஆத்மஸ்வரூபத்தில் யௌவனாதிகள் தட்டாதாப்போலே ஈச்வரஸ்வரூபத்திலும் எவ்விதமான மாறுதலும் க்லேசங்களும் தட்டாமையாலே நிர்விகாரன் என்ற சுருதி வசநத்துக்கு விரோதமில்லை. "தனது சரீரத்திலிருந்து

त्त्वात्" इत्यादिகளுக்கும் ऊर्णनाभिமுதலான श्रुतिசொன்ன दृष्टान्तங்களுக்கும் இப்படி तात्पर्य-ங்கண்டுகொள்வது. अशरीरत्वश्रुतियாலே ईश्वरனை अशरीरன் என்றுகொள்ளுதல், इन्द्रादि न्यायத்தாலே कर्मकृतशरीरங்களைக்கொண்டு कर्मवश्येश्वरप्रवाहपरिग्रहம் பண்ணுதல், इच्छामात्रगृहीता-

---

अस्मिन् पक्षे वक्ष्यमाणपक्षेचाशरीरत्वश्रुतेः स्वाभाविकनित्यशरीराभावे तात्पर्यं ग्राह्यम् । चेतनाचेतनयोस्तु स्वरूपेण नित्यत्वात् तच्छरीरकत्वेतद्विरोध इति भावः । अथास्मिन् पक्षे ब्रह्मणोऽकर्मवश्यत्वादिकं साक्षाच्छ्रूयमाणं विरुध्येतेत्यालोच्य पक्षान्तरमाह—इच्छामात्रगृहीतेति । मात्रपदेन कर्म व्यावर्त्यते । ऐच्छिकत्वादेवानित्य-त्वमपि प्राप्तम् । अशरीरत्वसशरीरत्वमेदमिन्नेऽस्मिन्पक्षत्रयेपि ऐकरूप्येणानङ्गीकर्तव्यांशंदर्शयति—चेतना-चेतनेति । चेतनाचेतनसमस्तद्रव्यशरीरकत्वमनङ्गीकृतश्चेत् तच्छ्रवणस्य कागतिरित्यत्राह—मुख्येति । तथा च गौणी तच्छ्रुतिरित्यर्थः । समस्तद्रव्यशरीरकत्वस्य गौणत्वेन फलितामुपादानत्वगौणतामाह —आकेपाल् इति । तथा च जीवस्य स्वशरीरवदीश्वरस्य जगदत्यन्तविधेयमित्यर्थे तच्छरीरताकथनस्य तात्पर्यात् प्रकृत्यादिगतमेवो-पादानत्वमीश्वर आरोप्यस्तूयत इति भावः । एवम्पूर्वपक्षे प्राप्ते शरीरनिषेधकश्रुतेस्तत्प्रापकश्रुत्यविरोधं विषय-व्यवस्थयोक्त्वा समादधानः प्रयोजकाकारतौल्यात् सममेव गुणकर्मादिविधिनिषेधावप्याह—ईश्वरेत्यादिना । ईश्वरत्वस्येशितव्यसापेक्षतयैश्वर्यरूपत्वेन च ईश्वरस्याशरीरत्वनिर्गुणत्वाद्यङ्गीकारे ईश्वरत्वमेव भज्येतेति बोधनाय—ईश्वरेतिनिर्देशः ।" "सर्वज्ञस्सर्ववित्"—"निर्गुणं निरञ्जन"मित्यादिषु गुणविधिनिषेधौ । "हिरण्यश्मश्रुर्हि-रण्यकेशः"—"अशरीरंशरीरेषु" इति विग्रहविधिनिषेधौ ।" सउश्रेयान् भवतिजायमानः—"नैवोदेता नास्तमेता" इति जन्मनः, "तदैक्षत तदसृजत"—निष्कळं निष्क्रियंशान्त"मिति कर्मणश्चबोध्यौ । मङ्गळ-तदितरेति । ईश्वरस्य कल्याणतमगुणविग्रहादिकं विधीयते । "सत्वादयोनसन्तीशे"—न भूतसङ्घसंस्थानो देहोस्यपरमात्म इत्यादिश्रुतहेयगुणादिकञ्चनिषिध्यत इति सामान्यविशेषन्यायोत्सर्गापवादन्यायाभ्यामवगमात् विषय व्यवस्थासिद्धेरेषां न परस्परं विरोधलेशोपीतिभावः । ननु निषेधस्थले सामान्यविशेषन्यायावलम्बनेन सामान्य-गुणविग्रहादिनिषेधस्य विशेषनिषेधे पर्यवसानमन्यत्रातिप्रसङ्गकम् । अत एव "सामान्यविधिरस्पष्टस्संह्रियेत विशेषत इत्यत्र विधिपदप्रयोगः । सर्वविधेः युगपदनुष्ठानासम्भवेनास्पष्टत्वसंभवात् । सर्वनिषेधस्य तु युगपदनुष्ठा-

---

பகவான் உலகைப்படைத்தான" என்ற மனுவின் வசநம், ச்ருதிசொன்ன சிலந்தி உதாஹரணம் முதலியவற்றுக்கும் இவ்விதமே தாத்பர்யம் கண்டு கொள்வது. உருவ மற்றவன என்று ஓதப்பட்டபடியினால் ஈசுவரனை சரீரமற்றவன் என்றோ, இந்திராதிகளைப் போல கர்மாதீன சரீரங்களைக்கொண்டு ஈசுவரபரம்பரை ஆளுகிறது என்றோ, நினைதத

நித்யசரீரங்களைக்கொள்ளுதல் போக்கி சேதனாசேதனத்ரவ்யங்களை எல்லாம் சரீரமென்று சொன்னதை முக்யமாகக்கொள்ளப்போமோ? ஆகையால் சரீரத்வாரா உபாதானத்வஞ் சொன்னவிடம் உபசாரமாம

---

नसम्भवात् । अन्यथा—"माहिंस्यात्सर्वाभूतानी"त्यादिसामान्यहिंसानिषेधस्यापि "न ब्राह्मणं हन्यात् नात्रेयीं हन्या"दित्याद्युक्तहिंसाविशेषनिषेधे पर्यवसानापत्तेः। तथा च तदितरप्राणिपीडने प्रत्यवायो न स्यात्। सकलप्राणिपीडनस्य सामान्यतः प्रत्यवायजनकत्वं ब्राह्मणादिहिंसायास्तु तदाधिक्यजनकत्वञ्चेति हि तत्त्वस्थितिः। अत एव विशेषनिषेधानां सार्थक्यञ्चेति चेन्न। अत्र मङ्गलगुणविधिर्वर्तते। तत्रेतरप्राणिपीडनविधिर्नदृश्यत इति वैषम्यात्। तथाचोत्सर्गापवादन्यायसहकृतसामान्यविशेषन्यायादस्माकमेष निर्णय इत्युक्तं भवति। ततश्च न पूर्वोक्तातिप्रसङ्गइति बोध्यम्। अधिकं न्यायसिद्धाञ्जनरत्नपेटिकादिष्ववधेयम्। अस्पष्टविध्यादेः स्पष्टविध्यादिषूपसंहारः सामान्यविशेषन्यायः। निषेधस्य विहितव्यतिरिक्तविषयकत्वाश्रयणं उत्सर्गापवादन्यायः। अत्रचश्रुतिघट्टेश्रीभाष्यं—"निर्गुणवाक्यानां सगुणवाक्यानाञ्च विषयं "अपहतपाप्मे"त्याद्यपिपास" इत्यन्तेन हेयगुणान् प्रतिषिध्य—"सत्यकामस्सत्यसङ्कल्प" इति ब्रह्मणः कल्याणगुणान्विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभाव"इति। के ते हेयभूता विग्रहादयः? ये निषेद्धव्या इत्यत्राह—कर्मायत्तेति। इच्छागृहीताभिमतोरुदेहः - युवाऽकुमारः - स्वाभाविकीज्ञानबलक्रियाचे"त्यादिनाऽकर्माद्यायत्तशरीरादिसिद्ध्या कर्माद्यायत्तहेयभूतशरीरादिकमेव निषेध्यमितिभावः। ततश्च सर्वथेश्वरोशरीर—एवेतिपक्षस्य प्रथमस्य निरासं फलितमाह—अशरीरत्वेति। अथ द्वितीयपक्षप्रतिक्षेपमाह—अकर्मवश्यत्वेति। "न कर्मणा वर्धते नोकनीयान्- नित्योनित्यानां - स एवाद्यस उश्वः - सर्वस्येशानः - नतत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिश्रुतेस्तथातथावगमात् इन्द्रादिन्यायेन नानेश्वरपक्षे तदनुपपत्तिरितिभावः। नित्यत्वस्य जीवादिष्विव स्वरूपनित्यतापर्यायत्वव्यावृत्त्या सशरीरस्यापितथात्वसिद्ध्यर्थं त्रैकालिकत्वोक्तिः। अर्थादत्र पक्षान्तरस्यापि निरासमाह—मुक्तेति। अयञ्चपक्षः—"नेतरोऽनुपपत्ते"रित्यत्रावतरणभाष्येप्रदर्शितः—"यद्यप्युपासकात्प्राप्यस्यभेदेनभाव्यम्। तथापि नार्थान्तरं जीवात्मान्त्रवर्णिकं ब्रह्म। किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम्। तदेव—"सत्यंज्ञानमनन्तंब्रह्मे"तिमन्त्रेण विशोध्यत इति। धरियादु इति। मुक्तानामपि नानात्वेनकस्यापि समाधिकदरिद्रताद्यभावादितिभावः। अथ तृतीयपक्षे

---

போதுவரும் அநித்திய சரீரங்கள் உள்ளவன் என்றோ, கொள்ளுதல் போக்கி—உலகமெல்லாம் இவனுக்கு உடல் என்றதை உண்மை என்னப்போமோ? ஆகையால் தனது உடலால் அவன் உபாதானகாரணம் என்றது வேறு கருத்திலாகாதோ என்னில்—அன்று

தத்தென்னயன்றோ? என்னில்—ஈச்வரனுக்கு गुणविग्रहजन्मकर्मादिविधिनिषेधங்களை मङ्गलतदितरविषयव्यवस्थै யாலே அவிருத்தங்கள். ஆகையாலே இவனுக்கு कर्मायत्तशरीरादिகளும் कालायत्तयौवनादिகளும் करणா-

---

स्वेष्टसिद्ध्याऽनिराकरणमाह—**अनित्यशरीरेति** । ईश्वरस्याशरीरत्वश्रुतिपरमतात्पर्यं गृहीत्वा तदविरोधेन "इच्छागृहीताभिमतोरुदेहः" इत्याद्यनुसृत्य यद्यनित्यशरीरवत्त्वं स्वीचिकीर्षसि, तर्हि तत्तुल्यबलाभ्यः "नित्यालिङ्गा स्वभावसंसिद्धिः—यस्य पृथिवी शरीरमित्यादिश्रुतिभ्योपिनित्यानित्यनानाप्रपञ्चशरीरत्वमप्यङ्गीकार्य-मेवेतिभावः ।

एवमीश्वरस्याशरीरत्वेनोपादानत्वासम्भवं निराकृत्याथचेतनाचेतनयोस्तं प्रति—"चेष्टेन्द्रियार्थाश्रय-श्शरीर"मित्युक्तशरीरलक्षणहान्या तत्त्वासंभवात् नेश्वरस्य तद्द्वारोपादानत्वमितिशङ्कामपि निराकरोति—**ईश्वरेति** । आधेयत्वादीनि=धार्यत्वनियाम्यत्वातिशयाधायकत्वानि । तेषांनियमः=यावत्सत्त्वं तथात्वम् । तथाचैषामेव जन्मादित्रितयवत् प्रत्येकं सम्भूयवा शरीरलक्षणतया जगतस्तत्त्वमुपपद्यत इति तन्मुखेनेश्वर उपादानमेवेति-भावः । एतदाकारत्रयफलितं लक्षणान्तरमप्याह—**अपृथक्सिद्धेति** । एतदाकारत्रयस्य प्रयोजकं दर्शयति—**स्वरूपेति** । भगवत्स्वरूपेच्छायत्तस्वस्वरूपस्थितिप्रवृत्तिकेत्यर्थः । एषु - तत्स्वरूपाधीनस्वसत्तास्थितिकत्वात् तदाधेयत्वं, तदिच्छाधीनस्वप्रवृत्तिकत्वात् तद्विधेयत्वं आभ्यां मिलिताभ्यां एषां तत्फलार्थत्वसिद्ध्या पारार्थ्यरूपं शेषत्वं च भवतीति विभागोबोध्यः । अत्राधिकं वक्तव्यं जीवतत्त्वाधिकार एव विवृतं बोध्यम् ।" पूर्वमभिप्रेतं शरीरलक्षणं स्फुटयति—**चेतनेति** । **मुख्यम्** इति । तथा च बालस्य युवभावं प्रतीव ब्रह्मणोपि प्रपञ्चम्प्रत्युपादानत्वं मुख्यं भवतीतिभावः । ननु चिदचिद्विशिष्टब्रह्मपरिणामे सुवर्णादिकवचितायश्शलाका-दिष्विव विशेष्यभूते तस्मिन्नपि विशेषणवत् संकोचविकासादयो दोषाः प्रादुष्युरित्यत्राह—**इப்படி** इति । तथाचायस्सुवर्णादीनां लोहरूपैकद्रव्यत्वेन तत्रत्यविकारवर्गस्य विशेष्यभूतायश्शलाकादिपर्यन्तगामित्वेपि इहेश्वरस्य—"भोक्ताभोग्यं प्रेरितारञ्चमत्वा - अजामेकां....अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगाम-जोऽन्यः" इति चेतनाचेतनविलक्षणतत्त्वान्तरत्वश्रवणात् ते परिणामदोषाः केवलं विशेषणएवभवन्ति । न तु विशेष्ये तस्मिन्नपि । यथा बालस्य युवतया परिणामदशायां अचेतनविलक्षणे चेतने इति भावः । तथा च सूत्रं—न तु दृष्टान्तभावादिति । भाष्येचायमर्थस्तत्र विशदमनुसन्धेयः । अथ चेतनाचेतनविलक्षण-

---

ஈசுவரனுக்கு குணம் விக்ரஹம் முதலியன உண்டு இல்லை என்பன போன்ற ப்ரமாணவ சநங்கள்—மங்களமானவை அமங்களமானவை என்று அவற்றைப் பாகுபாடு செய்து முதல் வகையுண்டு—இரண்டாம் வகை இல்லை என்கின்றனவாகையாலே கர்மமூலமான

यत्तज्ञानादிகளுமே निषेव्यங்களாகிறனவாகையாலே अशरीरत्वसर्वशरीरत्वादிகளுக்கு विरोधமில்லை.
अकर्मवश्यत्वनित्यत्ववैकालिकत्वसर्वेश्वरत्वसमाधिकदरिद्रत्वादिश्रुतिबलத்தாலே ईश्वरप्रवाहपक्षமும் मुक्तனே

---

त्वेपीश्वरस्य विकारवत्तदुभयनिरन्तरसंश्लेषवशात् रुमाप्रक्षिप्तकाष्ठन्यायेन तत्प्रसङ्ग इत्यत्राह—**स्वरूपपरिणामेति** । **प्रमाणं**—"सत्यं ज्ञानमनन्तं ब्रह्म—सत्यञ्चानृतञ्च सत्यमभवदि"त्यादिकम् । "सत्यानृतशब्दितचेतनाचेतनान्तः प्रवेशेन तदीयनामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत्=अजहन्निर्विकारत्वलक्षणस्वस्वभावमेवाभव"दिति **तद्व्याख्या** । **रुमा**=लवणोत्पत्तिस्थानभूतः केदारखण्डः । तत्र प्रक्षिप्तकाष्ठस्य तत्संसर्गविशेषवशात् कालक्रमेण लवणात्मना परिणामदर्शनेपि इहेश्वरस्यागमैकसमधिगम्यस्य निर्विकारतया प्रमाणप्रतिपन्नत्वेन नतत्र विकारादिप्रादुर्भाव एष्टव्यः । नहि वचनविरोधे न्यायः प्रवर्तत इति भावः । तथा च सूत्रं—"न स्थानतोपि परस्योभयलिङ्गं सर्वत्रहीति । ननु निर्व्यापाराशरीरेश्वरपक्षप्रतिक्षेपेण सव्यापारत्वसशरीरत्वादिस्वीकारे तत्प्रेरणायासादिजनितदुःखादिप्रसङ्गोदुर्वार एवेत्यत्राह—**सर्वप्रशासितेति** । यद्यपि—"नहवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"त्यादौ शरीरसामान्यस्यैव दुःखादिप्रयोजकत्वं श्रूयते, तथापि "साधुकारी साधुर्भवति-पुण्यः पुण्येनकर्मणे"त्यादितः कर्मणोपि तत्प्रयोजकत्वावगत्योभयप्रमाणानुगुण्येन कर्मारब्धदेहयोग एव दुःखादौ तन्त्रमित्यभ्युपगम्यते । तच्चकर्म सशरीरस्यापीश्वरस्य न विद्यते । असंसारित्वात् । ईश्वरःकुतो न संसरतीतिचेत्—तत्र तस्य स्वरूपयोग्यतायास्सहकारियोग्यतायाश्चाभावात् । आद्या परतन्त्रचेतनत्वम् । सतु सर्वप्रशासितेति न तस्य तथात्वम् । द्वितीया च सापराधचेतनत्वम् । सर्वप्रशासितुः स्वशासनाववोधिशास्त्रवश्यताविरहेण तदतिवृत्त्यनुवृत्तिकृतनिग्रहानुग्रहानुदयेन न सापराधत्वादिकं तस्य विद्यत इत्युभयथापि न दुःखादिप्रसङ्ग इति भावः । इदमपि सूत्रितं—"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति । **शास्त्रवश्यत्वादीत्यादिना** सापराधचेतनत्वकर्मारब्धशरीरवत्त्वादयोग्राह्याः । नन्वेवमपिकदाचित् स्वेच्छाभङ्गेनेश्वरो विमनायेतापि । क्वचित् प्रळयादिषु सहकारिणामलाभेन क्लिश्येत च । ततो महद्वैशसमित्यत्राह—**सर्वदेति** । सर्वदा सत्यसङ्कल्पत्वान्नेच्छाविघातः, स्वाधीनसहकारिगणकत्वान्नतदलाभ इति भावः । **अयञ्चार्थः**—"उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि । देवादिवदपिलोके"इत्यादिसूत्रभाष्ययोस्स्पष्टः । **भट्टारकाअप्याहुः**—प्रळयसमयसुप्तं स्वशरीरैकदेशं वरद । चिदचिदाख्यं स्वेच्छयाविस्तृणानः । खचितमिव कलापं चित्रमातत्य धून्वन् अनुशिखिनि शिखीव क्रीडसि श्रीसमक्षम् ॥ अचिदविशेषि-

---

சரீரங்களும் காலம் விளைத்த யௌவநாதிப்பருவங்களுமே அவனுக்கு இல்லை என்றுகி
அசரீரனுக்கும் ஸசரீரத்துவம் வருகைக்கு விரோதமில்லை. காமவசமின்றி எக்காலத்திலும்
ஒப்பாரும் மிக்காரும் இலனாய் உலகாளுகிறான் என்றதால்—ஈசுவரபரம்பரையையும் முக்த

ईश्वरன் எனனும் பக்ஷமும் घटियாது. अनित्यशरीरங்களை ईश्वरனுக்குக்கொள்ள விசைந்தால் तुल्य-प्रमाणसिद्धनित्यानित्यसर्वशरीरत्वமும் கொள்ளலாம்.

---

तान् प्रळयसीमनि संसरतः करणकळेबरैर्घटयितुं दयमानमानाः । वरद ! निजेच्छयैव परवानकरोः प्रकृतिं, महदभिमानभूतकरणावळिकोरकिणीमि"त्यादि ।

ननु भगवतः क्लेशाभावे "व्यसनेषु मनुष्याणां भृशं भवति दुःखित" इत्यादिना दुःखित्वप्रतिपादनं विरुध्येत । परदुःखदुःखित्वं हि दया । तदभावेचभगवतो महागुणहानिस्स्यादित्यत्र दयायाः प्रामाणिकं लक्षणान्तरं तदनुगुणं "भृशं भवति दुःखित" इत्यादेस्तात्पर्यान्तरञ्चाह—**परदुःखेति** । इदञ्चलक्षणं भगवच्छास्त्रानुगुणम् । तथा च **पाद्मसंहितायां क्रियायोगसारवचनं**—"यत्नादपि परक्लेशं हर्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ ! सा दया परिकीर्तिता ॥" इति । अभियुक्ता अप्याहुः—"दयाऽन्येषां दुःखाप्रसहनमनन्योसि सकलैः दयालुस्त्व नात इति । "सर्वभूतहितैषित्वं दये"ति व्यासवचनेपि—परहितप्रापणप्रधानफलतया तद्दुःखनिवृत्त्यध्यवसायावश्यंभावात् तद्धितेच्छा स्वव्यापकतद्दुःखनिराकरणेच्छायामेव पर्यवस्यति, यागेच्छा स्वर्गेच्छायामिवेति भावोबोध्यः । **शारीरकरचनानुपपत्त्यधिकरणभाष्ये**—"दयाहि नामस्वार्थनिरपेक्षा परदुःखासहिष्णुते"त्युक्तिरप्येतस्या दयात्मिकाया दुःखनिराकरणेच्छायाः कारणकथनपरेति न विरोधः । दया....असहिष्णुता—दयाकारणमहिष्णुता । आयुर्घृतमितिवत् कारणे कार्योपचारः कार्यावश्यंभावद्योतनार्थः । गङ्गायां घोष इत्यत्र शैत्यपावनत्वादिद्योतनार्थतीरविषयकगङ्गात्वोपचारवत् । अन्यथाऽसहिष्णुताया अभावरूपाया यथाश्रुते दयात्वायोगात् । साहि भावरूपश्चित्तवृत्तिविशेष इति प्रथितं जगति । **उदाहृतभाष्यानुसारेणात्रपि मूलोक्तदयालक्षणे** स्वार्थनिरपेक्षत्वविशेषणंक्रोडीकार्यम् । अन्यथा स्वार्थमेवान्यान् रक्षतः कस्यचित् कुक्षिंभरेः कारुणिकत्वव्यवहारापत्तेः । न च जीवविषये भगवद्दयया क्रियमाणस्य दुःखापनयनस्यान्ते सम्यक् भगवत्कैङ्कर्याद्यनुष्ठान एव पर्यवसानात् भगवानपि स्वार्थपर एव भवतीति न तद्दयायां लक्षणपूर्तिरिति वाच्यम् । अवाप्तसमस्तकामस्य भगवतः सम्यगाराधनेनापूर्वफलानुत्पत्तेः स्वार्थत्वायोगात् । स्वश्रेयसे हि जीवो भगवन्तमारिराधयिषति । **श्रुतप्रकाशिकायान्तु**—"परान् दयया रक्षतोऽन्तेऽदृष्ट[illegible]जनसद्भावेपि प्रथमं परेषामापद्दर्शनेऽवशाश्रुपातादिना दुःखनिराकरणे प्रवृत्तिदर्शनात् सतोपि स्वार्थस्यानभिसंहितत्वेन स्वार्थान-

---

புருஷனே ஈசுவரன என்னுதலேயும் ஒப்புககொள்ளமுடியாது. அநித்தியமான சரீரங்களை அவனுககு இசைநதவர்கள் அதுபோலவே ப்ரமாணம் காட்டியபடியில் நித்ய அநித்யஸர்வ சரீரங்களையும் கொள்ளலாம்.

पेक्षत्वमक्षतम् ।" इति प्रत्यपादि स्वार्थनिरपेक्षत्वं भगवद्दयायाः । **अयमाशयः**—दयालक्षणे स्वार्थानपेक्षेत्येव विशेषितम् । नतु स्वार्थरहितेति । तथा च पररक्षणे शास्त्रतः सुकृतादिस्वार्थसद्भावस्यानपोद्यत्वेपि आदौ परोपचिकीर्षया प्रवृत्तिकाले तदनाकलनात् भवति तदनपेक्षत्वमिति । स्वदुःखनिराकरणेच्छाया निर्घृणेपि सत्त्वात्—**परेति** । **अत्र(अय्या)कृष्णताताचार्यास्त्वेवमाहुः** इह परः स्वव्यतिरिक्तस्स्वानुकूलोग्राह्यः । निरुपाधिकसर्वसुहृदः किञ्चिज्जीवविषये केनचिद्धेतुना निग्रहे जाते आतच्छान्ति तस्मिन् तद्विरुद्धतया दयागुणाप्रवृत्तेः । **तदुक्तं भाष्ये**—"साच(दया)स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणाय कल्पते । प्रत्युतापुंस्त्वमेवावहति । तन्निग्रह एव तत्र गुणः । अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गा"दिति । **तथा रहस्यरक्षायां पृथुगद्याधिकारेप्युक्तं**—"सर्वप्रशासितुस्सापराधनिग्रहस्यापि शास्त्रसिद्धत्वात् तदविरोधेन कारुण्यं नियन्तव्यम् । लोकेपि तथैव व्युत्पत्ते"रिति । अत एव **श्रुतप्रकाशिकायां जिज्ञासाधिकरणसिद्धान्ते दयालक्षणप्रस्तावे**—"अनुकूलेतरजनः पर इति विवक्षित इत्यत्र—अनुकूलश्चासावितरजनश्चेति समानाधिकरणतयाविग्रहोभाव्यः । नतु अनुकूलादितर इति व्यधिकरणतया तत्पुरुषः । अन्यथा तत्रैव-अन्यत्र-तत्पुरुषे पूर्वपद लक्षणाभयात् "ब्रह्मयोनि"मित्यत्र-"ब्रह्मैवयोनि"रिति समानाधिकरणसमासाश्रयणवैघट्ट्यापत्तेः । न च स्वानुकूलपुत्रभार्यादिस्वेतरविषये क्रियमाणस्योपकारस्य स्वार्थपर्यवसितत्वेन स्वार्थनिरपेक्षत्वभावात् दयालक्षणहानिरिति वाच्यम् । स्वानुकूलानां पुत्रभार्यादीनामपि जडोन्मत्तानां रक्षणे स्वार्थस्यकस्यचिदप्यभावेन तत्र दयाकार्यत्वाद्धानेरिति । **अत्रब्रूमः** । दयालक्षणघटकपरशब्देन स्वव्यतिरिक्तस्सर्वोपि विवक्षितः । नत्वनुकूलमात्रम् । तथा सति भगवत्कारुण्यस्य जीवानुकूल्याचरणापेक्षत्वेन निर्हेतुकत्वानुपपत्तेः । "दया सर्वभूतेषु क्षान्तिरनसूये"ति गौतमादिभिरस्मदादीनामपि निर्हेतुकसर्वभूतदयादिगुणावश्यकताविधानात् । किम्पुनरीश्वरस्य । ईश्वरे निरुपाधिकसर्वसुहृत्त्वस्य सर्वैरप्यङ्गीकारात् । न हि लोके स्वानुकूलभार्यापुत्रादिबन्धुमात्ररक्षकं पुरुषं कारुणिकं कथयन्ति । प्रत्युत स्वार्थपरमेव शंसन्ति । न च स्वानुकूलानामपि जडोन्मत्तादीनां रक्षणे नैषदोष इति वाच्यम् । तदानीं दयनीयतायां जडत्वादीनामेव प्रयोजकतयाऽऽनुकूल्यस्यातथात्वात् तदानीमपि परशब्दस्यानुकूलपरतया व्याख्यानायोगात् । **अत एव श्रीमद्रामायणे**—"इयंसा, यत्कृते रामश्चतुर्भिः परितप्यते । कारुण्येनानृशंस्येन शोकेन मदनेनचे"ति प्रथमं प्रतिज्ञायोपरि, तत्प्रतिपादनावसरे—"स्त्रीप्रणष्टेतिकारुण्यात्" इत्यादिना सीतायां पत्नीत्वाद्याकारेण रामस्य कारुण्यासम्भवं—सम्भवेपिवा तस्य तदुत्कर्षावहत्वासम्भवं च मन्वानो महर्षिः सर्वसाधारणं स्त्रीत्वमेवकारुण्यप्रयोजकतयाऽनुससार । न च निग्रहानुग्रहयोर्विरोधेन निग्राह्ये प्रतिकूले दयाया अप्रसक्त्या तस्या अनुकूलमात्रविषयकत्वमर्थादापद्यत इति परोत्रानुकूल

एवेतिवाच्यम् । अहैतुक्यास्तस्यास्सर्वविषयिण्याः प्रतिकूलेप्यविकारिणि सत्त्वाविरोधात् । अतएव हिभगवान् "सर्वज्ञोपिहि विश्वेशस्सदाकारुणिकोपि सन् । संसारतन्त्रवाहित्वात् रक्षापेक्षां प्रतीक्षते" इति स्वस्मिन् अपराधसहस्रमजस्रमाहृत्य स्वकृपायाः कार्यकरत्वं प्रतिषेधत्यपि पुरुषे "कदायं मत्कृपां कृतार्थयिष्यति, कदेमं मोचयिष्यामी'ति सर्वमुक्तिप्रसङ्गादिपरिहारेण लोकयात्रां निर्वोढुं एतत्कृतरक्षणप्रार्थनादिव्याजविशेषस्य अवसर प्रतीक्षोभवतीत्युच्यते । "पशुमारणकर्मदारुणोप्यनुकम्पामृदुरेवश्रोत्रिय" इतिन्यायेन पापानुरूपं तंदण्डयितुं प्रवृत्तोपि भगवान्–तद्विलोकने स्वान्तर्दयोदयमाशङ्कमानः स्वमुखं परावृत्यैव काठिन्यमारोप्य दण्डमति । तस्मा-त्तादृशेपि पुरुषे दया निराबाधा । अपितु यावत्प्रातिकूल्याचरणं तंनानुगृह्णति तस्मिन्वस्तुतो दयालुरपि सन् । प्रतिकूलप्रवृत्तिफलभूतनिग्रहस्यतस्मिन्नुदयात् । दयाकार्यानुग्रहस्यैवनिग्रहेण विरोधात् । एतदुक्तं भवति– सामान्यतो दयास्वरूपस्य सर्वविषयकत्वं निर्हेतुकमेव । तस्मात् प्रतिकूलेपि सा प्रवहत्येव । किन्तु तस्याः अनुग्रहाख्यफलोपधाकविशेषविषयीकारः परं सहेतुकः । आनुकूल्ये सत्येव तमनुगृह्णाति । विपरीते विपरीतम् । तदुक्तमाचार्यैरन्यत्र—"मुकुन्दकरुणां वन्दे मुग्धेष्वधिकवत्सलाम् । स्वरूपसंस्तवौ यस्या निर्हेतुकसहेतुकौ" इति । अयञ्चश्लोकः चिन्तामणौ कुमारवरदाचार्यैरप्युद्धृतः । संस्तवः परिचय इत्यनर्थान्तरम् । फलो-पधायकविशेषविषयीकारे एव हि दयायाः परिचयोभवति जीवेन कृतः । तथा च तादृशविषयतेत्युक्तं भवति । साचसहेतुकैव । अत एव न सर्वमुक्तिप्रसङ्गोपि । एतेनाधुनिकानामेतद्विषयककोलाहलोपि निर्मूलितो भवति । प्राचां ग्रन्थेषूभयथापि व्यवहारात् । एतेनोदाहृतभाष्यादिकमपि निर्व्यूढम् । दया स्वशासनाति वृत्तिव्यवसायिन्यपि वर्तमाना=अनुग्रहरूपफलोपधानेन वर्तमाना न गुणायकल्पते....कारुण्यं तत्र नियन्तव्यं= अनुग्रहाख्यफलं नसूत इति व्यवस्थाप्यम्" इत्याद्यर्थपरत्वसम्भवात् । ततश्चोदाहृतश्रुतप्रकाशिकावाक्येपि अनुकूलश्च तदितरजनश्चेति द्वन्द्व एवकार्यः । तत्रापि लक्षणादिक्लेशविरहात् । प्रत्युत सर्वपदार्थप्रधानत्वेन तस्यैव समासचक्रवर्तित्वात् । "द्वन्द्वस्सामासिकस्यचे"ति गीतोक्तेः । न कर्मधारयो न वा तत्पुरुषः । पूर्व-पदार्थाप्राधान्यपूर्वपदलक्षणादिदोषात् । न च परशब्दस्य स्वव्यतिरिक्तकृत्स्नविषयकत्वं स्वतः प्राप्तमिति, तस्य— "अनुकूलेतरजनः पर" इति व्याख्यानं व्यर्थमिति वाच्यम् । परमकारुणिकस्य परेषु अनुकूलप्रतिकूलविभाग-मन्तरोपकर्तृत्वाख्यमहागुणख्यापनार्थत्वात् तस्येति । अधिकमस्मदीयकरुणातत्त्वविचारणायामनुसन्धेयम् । आस्ता-मेतत् । प्रकृतमनुसरामः पायसं भक्षयामः । दुःखनिराकरणमपि तदनुत्पादनं, उत्पन्नस्य निवारणञ्चेति द्विविधम् । क्वचित् स्थितस्य तदभावस्य परिपालनं, क्वचिच्च तद्ध्वंसस्योत्पादनमिति यावत् । इदमेव च योगक्षेम-साधारणं कारणत्वं सामान्यतस्तदभावप्रयोजकत्वरूपम् । आद्यं नित्यसूरिविषये, द्वितीय बद्धमुक्तयोः । बद्धे यत्कि-ञ्चिद्ध्वंः, मुक्तेऽत्यन्तध्वंस इति भिदा । एवं "भृशं भवति दुःखित" इत्यादेस्तात्पर्यान्तरास्वीकारे दयालक्षणविरोधं

प्रदर्श्यार्थवचनान्तरविरोधमपि प्रतिपादयति—**तेन वञ्चयत** इत्यादिना। "कालस्यहि चमृत्योश्चजङ्गमस्थावरस्यच। ईशते भगवानेकस्सत्यमेतद्ब्रवीमिते॥ ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः। कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः॥ तेन वञ्चयते लोकान्मायायोगेन केशवः। ये तमेव प्रपद्यन्ते न ते मुह्यन्तिमानवाः॥ इति श्लोकानुपूर्वी। कीनाशः=कृषीवलः। **मोहयित्वेति**। "कृत्वाभारावतरणं पृथिव्याः पृथुलोचनः। मोहयित्वा जगत्सर्वं गतस्स्वं स्थानमुत्तमम्॥" इति श्लोकः। **इत्यादि प्रमाणेति**। **आदिना** "मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते। लीला जगत्पतेस्तस्य छन्दतस्संप्रवर्तते॥"—"मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः। कुतोऽन्यथास्याद्रमतस्स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्येत्यादिवचनजातं विवक्षितम्। **एतदुक्तं** भवति—अवतारकाले ईश्वरत्वाननुगुणं भगवतो यत्कृत्यजातं जातं, तत्सर्वं स्वस्मिन्नासुरप्रकृतीनां माययावरतत्त्व-शङ्कामुत्पाद्य तेषां सुदूरपरिहरणार्थमेववा अनुकूलानां दैवप्रकृतीनां स्वस्मिन् मनोरञ्जनार्थं वा भवति। "क्लिष्टं ग्रावसु मालतीमृदुपदं, विश्लिष्य वासोवने जातो, धिक्करुणां, धिगस्तु युवयोस्स्वातन्त्र्यमत्यङ्कुश" मित्यादिरीत्याहि भक्तवर्या भगवतोभार्यापहारादिकमभिवीक्ष्य—"अहो! अस्मत्स्वामिनाऽस्मदर्थमेवेहावतीर्यात्मा क्लेशानांभाजनं कृत इत्यार्द्रहृदयास्तस्मिन्ननुरज्यन्ते, क्रमेणमुच्यन्तेचेति। **भृशंभवतीति**।" 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः। उत्सवेषुचसर्वेषुपितेवपरितुष्यति॥ इति **श्रीरामगुणवर्णने वाल्मीकिः**। **अभिनयेति**। शक्तस्य परदुःखदर्शने तन्निराचिकीर्षाया एव प्रथमं जायमानतया लोके पुरुषान्तरे परदुःखदुःखित्वदर्शनस्याप्यशक्त्यु-पाधिकत्वमेवेति सर्वशक्ते भगवति "भृशंभवति दुःखित" इत्यादिकमुच्यमानं उक्तोभयार्थाभिनय एवेत्यर्थः। तदुक्तं **भगवद्गुणदर्पणे भट्टपराशरपादैः**—"अधिकारी फली जीवोपिहि स्वयं स्वस्य यथा सुखदुःखाभि-मानी, तथा तदतिशयेनवा तदवस्थाभिमानीहि भगवान्। यथा—"व्यसनेषुमनुष्याणां ...पितेव परितु-ष्यती"ति। "बहुस्यां प्रजायेये"ति च। पृथगभिमानित्वेहि न "बहुस्यामि"ति स्यात् इति। **अयम्भावः** यथा स्वस्मिन् देवाद्यात्मना बहुत्वस्य वस्तुतोऽभावेपि भगवान् "बहुस्या"मिति तदवस्थां स्वकीयामभिमनुते, तथा स्वयं दुःखादिदोषदूरोपि स्वाश्रितानां दुःखं स्वदुःखमभिमन्यते। अत एवाऽऽर्द्रीभवति सन्तप्यतेच। न त्वस्यनूतनं किञ्चिद्दुःखान्तरम्। "एकं दुःखं सुखञ्चना" वितिवदिति **एवमेव**—"स्वार्थहर्षशोकाद्य-भावेपि परार्थतत्प्रसक्तिरदोषः। अन्यथा परदुःखदुखित्वादयो गुणाःकथमस्यस्यु"रिति **तत्रत्यवचनान्तरम-**पिनिर्वाह्यम्। स्वार्थहर्षशोकादिः=अनाभिमानिकस्स्वीयोहर्षशोकादिः। परार्थतत्प्रसक्तिः=आभिमानिकस्स्वस्मिन् परकीयतदारोपः। परदुःखदुःखित्वम्=परदुःखाभिन्नदुःखवत्त्वम्। एतत्सर्वमभिप्रेत्यैव **मूले** अभिनयशब्द-प्रयोगः। **एतेन**—"आवतारिकवृत्तान्ते दुःखाद्यभिनयंवदन्। सर्वशास्त्रेष्वविश्वासमाधत्ते मुखभेदत" इत्युक्तं निरस्तं भाव्यम्। **यतः**—आवतारिकवृत्तान्ते दुःखादेस्सत्यता वदन्। भगवत्यपि दोषं स द्रढयन्नपराध्यतीति।

"எல்லா உயிரும் இவனுக்கு உடல் என்னல்"

ஈச்வரனைப்பற்ற ஆधेयत्वविधेयत्वशेषत्वनियमத்தாலே अपृथक्सिद्धविशेषणங்களாய் स्वरूपेच्छायत्तங்களான चेतनाचेतनद्रव्यங்கள் எல்லாத்துக்கும் दिव्यमङ्गलविग्रहத்துக்குப்போலே சேதனனைக் குறித்து अपृथक्सिद्धविशेषणமான द्रव्यம் शरीरம் என்கிற शरीरलक्षणமுண்டாகையாலே இவனை शरीर द्वारा परिणमिக்கிறான் என்றது முख्यம். இப்படி विशिष्टपरिणामத்தில் शरीरभूतचिदचित्तுக்களிற் காட்டில வேறுபட்டவனாகையாலே இவனுக்கு तद्गतदोषங்கள் தட்டாது स्वरूपपरिणामयोग्यனல்லாதபடி प्रमाणसिद्धனாகையாலே रूमाप्रक्षिप्तकाष्ठन्यायம் வாராது सर्वप्रशासिताவான இவனுக்கு शास्त्रवश्यत्वादिகள் கூடாமையாலே क्षेत्रज्ञர்க்குப் போலே सशरीरत्वसव्यापारत्वप्रयुक्तदुःखित्वादि दोषங்களும் प्रसङ्गिயாது. सर्वदा सत्यसङ्कल्पனாய் தானே सहकारिகளையும் வகுத்துக் கொள்ளுகிறான் என்கையாலே इच्छाविघातसहकार्यलाभादिप्रयुक्तक्लेशமும் வாராது.

---

ननु "तेन वञ्चयते लोकान्"—मोहयित्वा जगत्सर्वं इत्यादेः व्यसनेषु मनुष्याणां भृशम्भवति दुःखित इत्यादिकं न विषयः। अत्रोक्तपरदुःखदुःखित्वादेर्भगवति सौलभ्यप्रकटनायोपयुक्ततयाऽभिनयविषयत्वानुपपत्तेः। किन्तूक्तविधोपयोगरहितानां प्रत्युत भगवति अवरत्वशङ्कासमुत्पादकानां आदित्यहृदयानुसन्धानकैलासयात्राद्यावतारिकवृत्तान्तानामेव तद्विषयता युक्ता। अन्यथाऽऽवतारिकवृत्तान्तसामान्यस्य तद्विषयत्वेनाभिनयिकत्वोक्तौ—"ददाम्येतद्व्रतम्मम"इत्यादिराघवसमुद्रवेलावाक्यस्यापि तथात्वेन समुद्रघोषवद्विश्वसनीयत्वापत्त्या वृद्धिमिच्छतोमूलहानापत्तेरिति चेन्न। यतः—"ततो युद्धपरिश्रान्तं समरे चिन्तयास्थितम्।" इत्युक्ततत्रत्यदुःखस्य "भृशं भवति" इत्युक्तदुःखित्वस्यच भगवत्यवरत्वशङ्कासमुत्पादकत्वे न हि कञ्चन विशेषं पश्यामः। यद्यपि पूर्वत्र दुःखं स्वार्थमिति स दोषः, परत्र तु परार्थमिति न तथेति ईषद्वैलक्षण्यंवर्तते। अथापि तेनवैलक्षण्येनानुकूलानां भक्तवर्याणां भगवति मनोरञ्जनतारतम्यसिद्धावपि भगवद्द्वेषिणां भगवति दुर्बलमानुषत्वा-

---

பகவானாலே தாங்கப்பட்டு ப்ரேரிக்கப்பட்டு தனக்கென்றே க்கிக்கொள்ளப்பட்டதனால் அவனைப்பற்றி நிற்கும் அவனதீனமாயிருக்கும் அகில உலகமும் அவனுடைய திவ்ய மங்கள விக்ரஹம் போலே—ஒரு சேதனனை விடாமல் தொற்றியிருக்கும் த்ரவ்யம் சரீரம—என்ற லக்ஷணப்படி சரீரமாவதால் இவன் சரீரத்தினால் பரிணமிக்கிறான் என்றது சரியே. இப்படி பரிணமிக்கும்போது தன் சரீரமான சித அசித்துக்களை விட இவன வேறுபட்டவனாகையாலே இவனுக்கு அவற்றின தோஷங்கள் தட்டாது. தனது ஸவரூபத்திற்கு பரிணாமம் கிடையாதபடி சாஸ்திரங்களில் சொல்லப்பட்டவனாகையால் உப்பளத்தில் விழுந்த கட்டைபோன்று உருவமாறுபாடும் வாராது. ஸர்வரையும் சாஸநம் செய்யுமிவனுக்கு சாஸ்திரக்கட்டுப்பாடு

"ஜீவனுடைய வருத்தங்கண்டு ஈச்வரன் வருந்துகிறுன் என்றதின் கருத்து"

परदु खनिराकरणेच्छा कृया என்கிற லக்ஷணத்துக்கும், "तेनवश्चयते लोकान् — मोहयित्वा जगत्सर्वं"

---

वधारणकृतावज्ञाया एकरूपत्वेनावरतत्त्वशङ्कावहतादृशाकाराणां सर्वेषां आभिनयिकत्वस्यावश्यमेव वक्तव्यत्वात्। "ददाम्येतद्व्रतंममे"त्यादीनान्तु कथञ्चिदप्येवंविधशङ्कासमुत्थापकत्वाभावात्, प्रत्युत परतत्त्वबुद्धिबोधकत्वाच्च-तत्र तथात्वकथनस्यानपेक्षितत्वात्। दोषेति। शक्तस्य परेषां दु:खं पश्यतस्तदपनोदनेच्छैव जायते शोभते च, ननु स्वयं दु:खित्वम्। क्वचित्परदु:खदर्शनोत्तरं स्वस्मिन् दु:खदर्शनेपि तस्याशक्त्युपाधिकत्वेन दयाकार्यत्वाभावात्। "भृशं भवति दु:खित" इत्यस्यापि—"यथा सद्यएव तद्दु:खापाकरणेच्छा भवति तथास्य बभूव लुळितं मन" इति तदसहिष्णुतायामेव तात्पर्यमिति। एवं भाविपरदु:खं केनचिच्चिह्नेनानुमाय स्वयं पूर्वमेव तदपनिनीषया प्रवर्तमानस्य कारुण्ये परदु:खदर्शनजनितदु:खित्वमव्याप्तमिति कृतं विस्तरेण। नन्वीश्वरनिरवद्यत्वादि श्रुतीनां परदशाविषयत्वेन दु:खादिक्लेशभाजनत्वमवतारदशायामविरुद्धम्। नात आभिनयिकत्वं तेषां वक्तव्यमित्यत्राह—सर्वज्ञेति। इदञ्च विशेषणं साभिप्रायम्। स्वस्येश्वरोऽवतारदशाभावि दु:खं जानातिचेन्नावतरेत्। न जानाति चेत् कथं सर्वज्ञ इति। अवतारदशा = रामकृष्णाद्यवतारदशा। भेदाभेदपक्षः = भास्करयादवीयादिः। जैनगन्धिः जैनमतसदृशम्। गन्धस्सादृश्यम्। सर्वस्सगन्धेषु विश्वसतीत्यादिप्रयोगात्। उपेक्षणीयम्—अत्यन्तानुपादेयम्। परमार्थत एव भेदाभेदादिवत् दु:खित्वनिर्दु:खत्वादिविरुद्धधर्मद्वयाङ्गीकारादिति भावः। तदुक्तं वेदार्थसङ्ग्रहे—"कस्तेनलाभः? एकस्यैवैकांशेन नित्यदु:खित्वात्। अंशान्तरेण सुखित्वमपि नेश्वरत्वाय कल्पते। यथा—देवदत्तस्यैकस्मिन् हस्ते चन्दनपङ्कानुलेपः। केयूरकटकाङ्गुळीयकालङ्कारश्च। एतस्यैवान्यस्मिन् हस्ते मुद्गराभिघातः कालानलज्वालानुप्रवेशश्च। तथैवेश्वरस्य स्यादिति ब्रह्माज्ञान पक्षादपि पापीयानयं पक्ष" इति। ब्रह्मव्यतिरिक्तमिथ्यात्वपक्षे ब्रह्मणि जीवाभिन्नतया दु:खादिस्वीकारेपि तन्मिथ्येति नातीवपापं भवति। भेदाभेदादिपक्षेतु सर्वं सत्यमित्यभ्युपगमात् ब्रह्मण्येवांशान्तरावतारादिदशासु दु:खादिस्वीकारे महत्पापमिति अयं पक्षस्तस्मादपि पक्षात्पापीयान्—अत्यन्तं पापीति भावः।

ननु सर्वव्याप्त ईश्वरे समस्तहेयवस्तुसम्बन्धस्य भवतामपि मते सत्यतया उक्तपक्ष इव भवतामपि पक्षे तादृशदोषोदुर्वार एवेत्यत्राह—कर्मवश्येति। इदञ्चहेतुगर्भविशेषणम्। न हेयवस्तूनां तथात्वं तत्स्वभावा-

---

கிடையாதாகையால் சரீரம் கொண்டு காரியம் செய்பவனாயினும் அதனால் ஏதும் க்லேசம் ஜீவர்களுக்குப்போலே ஏற்படாது. எப்போதும் ஸத்திய மனோரதனாய் தனது ஸஹகாரிவர்க்கத்தையும் தானே வகுத்துக்கொள்ளுகிறானாகையாலே—மனோரதபங்கம், தேடின பொருள் கிடையாமை முதலிய துக்கமும் வாராது.

इत्यादिप्रमाणங்களுக்கும் சேர, "भृशं भवति दुःखितः" इत्यादिகளில अनुकूलरञ्जनार्थமாகவும் प्रतिकूलमोहनार्थமாகவும் உண்டான अभिनयத்தைப் பேசுகிறதாகையாலே परदुःखदुःखित्वादिदोषங்களும் கூடாது सर्वज्ञனுக்கு अवतारदशैயிலே अज्ञानदुःखादिகளைச் சொல்லும் पक्षம் भेदाभेदपक्षம் போலே

यत्तम्। येन तत्संबन्धादेव जीव इवेश्वरेपि दोषश्शंक्येत । किन्तु तत्तद्वस्तुभोक्तृपुरुषीयकर्मकृतम्। अत-कर्मवश्यान् प्रत्येव तद्धेयं भवति। नेश्वरम्प्रति। तस्य कर्माभावात्। पित्तोपहतम्प्रति क्षीरस्य तिक्तत्वेपि-पित्तशान्तौ तस्यैव तम्प्रति स्वादुत्ववत् कर्मापगमे नित्यमुक्तान्प्रत्यपि न तद्धेयतेति सर्वस्य स्वतस्सिद्धमनुकूल-स्वभावत्वमेवेति भावः। अद्वारकसम्बन्धः द्रव्यैस्सह। सद्द्वारकस्तु तदाश्रितगुणैस्सह। मृषावादिव्यावर्त-नाय—सत्यसम्बन्धेति। उक्तानुसारेण समाधत्ते—तन्नैव इति तत्सहकारियोग्यताभूतकर्माभावादिति भावः। इदानीं कर्माभावेन प्रतिकूलभावेपि कालान्तरे तत्सम्भवेन तदुदयोस्त्वीश्वरे इत्यत्राप्याह—तनक्कु इति। तथा च तत्प्रति स्वरूपयोग्यतारूपपरतन्त्रचेतनताया अपीश्वरेऽभावादिति भावः। तदाहुः श्रीवत्साङ्कमिश्राः—"परोवा व्यूहोवा विभव उतवाऽर्चावतरणो भवन्वान्तर्यामी ननु वरद! योयो भवसि वै। सस त्वं सन्नैशान् वरगुण-गणान् बिभ्रदखिलान् भजद्भ्यो भास्येवं सततमितरेभ्यस्त्वितरथे"ति॥ ननु स्वयंस्वस्य प्रतिकूलान्यपाकुर्वन्नपि स्वान्तरङ्गाणां प्रतिकूलनिवारणेऽपर्याप्ततया तेषां क्लेशदर्शनेनस्वयमपि निरन्तरं क्लिश्यन् अयं हेयसम्बन्धमाप्नु-यादेवेत्यत्राप्याहइच्छै इति। एतेन—इदानीं केषाञ्चित्क्लेशदर्शनेपि भगवता तदनिवारणे हेतुरिच्छाभाव एव। नत्वसामर्थ्यमित्युक्तं भवति। तैरनुष्ठिते सत्युपाये भगवति च शान्तनिग्रहे तत्सङ्कल्पेन तेषामक्लेशो[illegible]-पलब्धेः। सर्वेषां=अनुष्ठितोपायानां सर्वेषाम्। नन्वेवं भगवतः केनाप्याकारेण हेयसम्बन्धगन्धानर्हत्वे शुद्धा-मलात्मादिशब्दानां तस्मिन् श्रुतानां अप्रसक्तप्रतिषेधत्वापत्तिरित्यत्र प्रतियोगिप्रसक्तिं दर्शयति—ईश्वरेति। प्रत्य-नीकत्वं=स्वाश्रितेष्वपि तदसहत्वम्। शुद्धादिशब्दत्रयस्य प्रायः पर्यायत्वेप्यनुपदमुक्तरीत्याऽपौनरुक्त्यं बोध्यम्। त्रिविधचेतनाः=बद्धमुक्तनित्याः। त्रिविधाचेतनानि—प्रकृतिः कालश्शुद्धसत्त्वञ्च। सामान्यम्—तत्साम्यम्। वस्तुत्वादिना तत्तुल्यन्यायेनेश्वरेपि प्रकृत्यादिवत् स्वरूपविकाराः, जीववत् गुणभूतस्वभावविकाराश्च मा प्रसाङ्क्षि-षुरिति ते शब्दाश्शङ्कितदोषव्यवच्छेदका इत्यर्थः।

பிறா துக்கம் துடைக்க விழைதல் தயை என்ற லக்ஷணத்துக்குச்சேர,— "உலகை மோஹிப்பிக்கிறாள்-என்பது போன்ற வசநங்களுக்கு இசைய,—ஜீவர்களுடைய வ்யஸநங்களில் ஈசுவரன் மிகவும் துக்கிக்கிறான்-இத்யாதிகள் பக்தர்களை வசீகரிக்கவும் சத்ருக்களை மயக்கவும் இவன் செய்யும் அபிநயத்தைப் பேசுகின்றன வாகையாலே உண்மையில் பகவானுக்கு துக்கம் முதலிய துர்குணங்கள் கூடாது. ஸர்வஜ்ஞனுக்கும் அவதாரதசையில்

जैनग्रन्थियாகையாலே उपेक्षणीयம். कर्मवश्यருக்கு हेयங்களான सर्ववस्तुக்களோடும் இவனுக்கும் सद्वारकाद्वारकसत्यसम्बन्धம் உண்டாயிருககச்செயதே - தனனைப்பற்ற प्रतिकूलமொனறுமில்

---

एवमियता प्रबन्धेनेश्वरस्य सर्वविधकारणत्वं कारणत्वाशङ्कितदोषाभावं च सम्यगुपपाद्याथ तादृशेश्वर-परतन्त्रजीववर्गस्य तेन क्रियमाणयोर्बन्धमोक्षयोर्व्यवस्थामुपदर्शयति—इप्पडि इति। अत्रेश्वरस्य सर्वकारणत्वानुवादः जीवबन्धमोक्षयोः केवलं तत्स्वातन्त्र्यमूलकत्वेन तस्य वैषम्यादिदोषशङ्काद्योतनाय भवति। "विचित्रा-देहसम्पत्तिरीश्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन्। हस्तपादादिसंयुते"ति पूर्णपद्यम्। "ईश्वराय निवेदितुम्" इत्यस्यविवरणं—स्वसेवार्थेत्यादि। करणकळेबरेत्युपलक्षणम्। शास्त्राद्युपकरणमपीह विवक्षितम्। तदुक्तं—शास्त्रं भूरि निजस्वरूपमतये स्वाराधनार्थं वपुः स्वध्यानाय मनश्च बुद्धिमनघां लब्धुञ्च तीर्थादिकम्। तत्त्वान्यप्युपदेष्टुमुत्तमगुरून् दत्वाऽनुगृह्णाति न" इति। नः = अस्मान्। अनघां बुद्धिं लब्धुं तीर्थादिकञ्च दत्वेत्यन्वयः। तीर्थस्नानेन मनोनैर्मल्यसम्पादनात्। ननु तर्हि यथा सङ्कल्पं तद्दत्तकरणकळेबरादिना तमभ्यर्च्य जीवा मुक्तौ भगवद्भोगरसयोग्या एवस्युः। न तु लीलारसोपकरणं भविष्यन्ति। सृष्ट्यर्थभगवद्दयायास्सामान्यरूपत्वेन विशिष्य कचित्तस्याभिसन्ध्यभावात् केचन जीवाः तद्दत्तकरणकळेबरादिना तल्लीलोपकरणमपि भवन्तीतिचेत्, किन्तथा कस्यचिदुभयार्थत्वं कचित्। दृष्टमित्यत्राह—आरुकडक इति। दूरपारां नदीं तरितुं कारुणिकदत्तेन केनचित्प्लवेन यथा दुर्भगः कश्चित् नदीपूरमनुसृत्य गच्छन् अन्ततः अब्धौ पतति तद्वदित्यर्थः। "महता पुण्य पण्येन क्रीतेयं कायनैस्त्वया। प्राप्तुं दुःखोदधेः पारं त्वर यावन्नभिद्यत इत्यादिकमिहानुसन्धेयम्। प्रकृतानुसारेण फलितमाह—अम.गप्रवृत्तेति। लीलारसेति। यत्रोपकरणीभूतानामपि परेषां स्वस्येव चेतश्चमत्कारोभवति सम्भोगरसः यथा कामिनां सुहृदाञ्च परस्परम्। अतथाभूतस्तु लीलारसः। यथा राजादेश्शुकादिभिः कन्दु-कादिभिश्च। तत्र प्रथमे-शुकादीनां पञ्जरबन्धादिना क्लेशप्रादुर्भावात् चमत्काराभावः। द्वितीयेत्वचेतनत्वादिना-तदभाव इतिभिदा। तदिदमुच्यते—संसारघटीयन्त्रेति। घटीयन्त्रे हि पार्श्वद्वयपि रज्जुबद्धयोर्घटयोः यदा एकोजलमुद्धरति, उपरस्तदा जलं ग्रहीतुमवनमति। यदाह कविः — "जीवनग्रहणे नम्राः गृहीत्वा

---

அஜ்ஞாந, துக்காதிகள் உண்டு என்பார் பக்ஷம். பேதாபேத முரண்பாட்டைககொள்ளும் பக்ஷம்போல் நிராகரிக்கப்படும். கர்மாவிற்குட்பட்ட ஜீவர்களுக்கு தள்ளப்படவேண்டிய எல்லாப் பொருள்களோடும் இவனுககு நேரிலும் மறைமுகமாகவும் உண்மையிலேயே ஸம்பந்தமுண்டாயிருககச செய்தேயும்-தனனைபபற்ற தள்ளப்படவேண்டியது எதுவும் இலலாமையாலும் அப்படி வருவதற்கு எவவித வாயப்பும் இல்லாமையாலும், மேலும் தன்னைச் சேர்ந்தவர்களுக்குத்தாம் நினைத்தால் அதைபபோக்கும் சக்தி இருப்பதாலும் இவனை சுததன்

லாமையாலும், தனக்கு ஒரு அவஸ்தையிலும் ப்ரதிகூலம் வருகைக்கு யோக்யதை இல்லாமையாலும், இச்சை உள்ள போது ஸர்வருடையவும் ஹேயங்களையும் கழிக்க வல்லவனுகையாலும், ஈச்வரனை சுத்தன் அம-

---

पुनरुन्नताः । किन्निष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जना इति । जीवनं = जीविका जलञ्च । तद्वत् प्रकृतेऽपि यदा जीवो देहमेकं त्यजति, तदैवापरमेकं प्रविशतीति तात्पर्यम् । तदप्युक्तं- "त्वं न्यञ्चद्भिरुदञ्चद्भिःकर्मसूत्रोपपादितैः । हरे ! विहरसि क्रीडाकन्दुकैरिवजन्तुभिरिति । "गतागतं कामकामा लभन्त इति च । अथ संसार घटीयन्त्रे केषाञ्चित्परिभ्रमणोक्त्या अन्येषां पुनरावृत्तिरहितमार्गयायित्वस्यावगमात् तादृशाः क इत्यत्राह— अवसरप्रतीक्षेति । सर्वज्ञोपि हि विश्वेशस्सदाकारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षत" इति ह्युक्तम् । परमकारुणिकेति । तथाचसूत्रं—वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यादि । यावन् इति । अयञ्च—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुनाश्रुतेन । यमेवैष वृणुते तेनलभ्यस्तस्यैष आत्माविवृणुते तनूं स्वामिति श्रुत्यर्थः । अत्र यद्यपि जीवानां भगवद्वरणं निष्कारणमित्येव प्रतीयते, तथापि तदानीं भगवतो-वैषम्यनैर्घृण्यादिदोषापातं परिचिन्त्य तं परिजिहीर्षन्तो भाष्यकृतः— "प्रियतम एवहि वरणीयो भवति । यस्यायं निरतिशयप्रियः स एव हि प्रियतम" इति प्रीतिरूपापन्नभक्त्यादिहेतुकत्वं भगवद्वरणस्यावादिषुरिति तदभिप्रेत्यात्रैतच्छ्रुत्युपादानम् । यं पश्येदिति । "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्विकस्सतु-विज्ञेयस्सवै मोक्षार्थचिन्तक इति पूर्णश्लोकः । अत्र जीवाना जायमानभगवत्कटाक्षमहिम्ना मोक्षार्थचिन्ताया भक्त्यादिरूपाया विधानं द्रष्टव्यम् । जायमानदशाकटाक्षलाभोपि पूर्वकृतपुण्यादिमूलक एवेति च भाव्यम् । वेरिदे इति । इयं श्रीवकुळाभरणसूरिसहस्रेऽष्टमशतकीया काचन गाथा । भगवत्कृपाव्यतिरिक्तां कृपां न जानामि । अस्मत्कृतोपकारमनपेक्ष्य व्याजमात्रेणान्यैः प्रसादाकरणात् अन्येषां दयां नोपजीवामीत्यन्वयः । मत्पालनेनोपकुर्वन् भगवान् कृपापात्रीकर्तुं स्वस्येष्टानाम् प्रीतिपूर्वकम् निर्हेतुकं कृपा कुर्यात् अत्यल्पस्य मम बुद्धौ क्रमेण लोकत्रयमपि स्वोदरे दधत् स नित्यं सन्निधत्त इति यतः, अतोनिर्हेतुकं कृपां चकारेति अर्थः । अत्रापि वेरिदे इत्यंशस्योक्तरीत्यानिष्कारणकृपाकरणार्थकत्वे वैषम्यादिदोषापातात् भगवता दास्यमानमहानन्दरूपफलानु-

---

அமலன் ஹேயமற்றவன் என்று சொல்லும் பெயர்கள் எல்லாம்-மற்றவரைப்போல் இவனிடம் சங்கிதமான குற்றங்களை கழிக்கின்றன.

இப்படியில் ஜகத்திற்கு ஸர்வவிதகாரணமான ஈச்வரன் "விசித்ரமான இந்த தேஹம் ஈசனை வழிபட தந்தது-என்று சொன்ன விதமாக தனக்கென கொடுத்த தேஹத்தைக் கொண்டு, ஆற்றைக் கடக்கக்கொடுத்த தெப்பத்தைக்கொண்டு ஆற்றோடு போய் அகப்படு வாரைப்போல்-கெட்ட வழியே ஒழுகினவர்கள் லீலாரஸத்தை விளைப்பித்து ஸம்ஸார

ஆத்மா हेयप्रत्यनीकன் என்றும் சொல்லும் शब्दங்களெல்லாம் त्रिविधचेतनाचेतनरूपवस्त्वन्तरसामान्यத்தாலே स्वरूपगुणादि विषயமாக शङ्कितदोषங்களை व्यवच्छेदिக்கிறன

---

गुणतयाऽस्मत्कृतोपायाद्यभावेपि प्रपत्त्याद्यल्पव्याजं निमित्तीकृत्य सोऽस्मान्मोचयतीत्यर्थोभाव्यः। एवञ्च रक्षकविषये शास्त्रवेद्यव्याजविशेषानुष्ठातुरक्षणीयस्ये "त्यप्यर्थोऽत्राचार्यसम्मतोऽभिव्यज्यते। विशेषकटाक्षः=मोक्षयिष्यामीति सङ्कल्पः। भोगरसः = ईश्वरेण समानोऽनुभवः। स्वसङ्कल्पिते चेतनशरीरपातसमये सन्निहिते सर्वेश्वरः तस्कराचरितपन्था इव ये आत्मापहारिणां स्वर्गनरकाद्यर्थामार्गाः तेषाम्मुखभूतनाडीविशेषप्रवेशंजीवस्य प्रतिषिध्य शताधिकया ब्रह्मनाड्या तं प्रवेश्य सूर्यकरावलम्बिनमुद्गमय्य—"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त" इति रीत्या अर्चिरादिना नीत्वा पुनरावृत्तिप्रसङ्गरहिते वितमसि पदे विचित्रविभूतिकं आत्मानं नित्यमनुभावयतीति भावः।

ननु व्याजविशेषेण भगवत्कटाक्षलाभवर्णनं न युज्यते। जीवकृतापराधभूयस्त्वादेरेव भगवत्कृपोत्तम्भकत्वाक्षमादित्यत्राह—ஒரளவிலே इति। कदाचिदित्यर्थः। एतेनात्यन्तापराधिनामपि केषाञ्चिद्भगवत्कृपाभावदर्शनोपपत्तिरुक्ताभवति। अपराधभूयस्त्वादेः फलबलकल्प्यत्वेन तदभावे तदभावानुमानेन तदुपपत्तेः। अपराधभूयस्तेति। अत्र—"रघुवर! यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यच्च चैद्यस्य कृष्णः। प्रतिभवमपराद्धुर्मुग्ध! सायुज्यदोऽभूर्वद किमपदमागस्तस्यतेऽस्ति क्षमाया इत्यादिकं प्रमाणतयाविवक्षितम्। अपराधशब्दभूयस्त्वाशब्दाभ्यां—सुकृतभूयस्त्वं अल्पापराधोवा न भगवतः कृपोत्तम्भक इति सूच्यते। एवं शिशुपालादिपुराणकथादर्शनमनुसृत्य कृपाकारणमुक्त्वाऽथभगवच्छास्त्राद्यनुरोधेनापि पक्षान्तरमाह—அதடியாக इति। अपराधभूयस्त्वामूलकेत्यर्थः। तथाहि—अहिर्बुध्न्यसंहितायां—"तिरोधानकरी शक्तिः सा निग्रहसमाह्वया। पुमांसं जीवसंज्ञं सा तिरोभावयति स्वयम्॥" इत्यादिना भगवन्निग्रहशक्त्या जीवस्य संसरणप्रकारं प्रतिपाद्य, तस्यैवानुग्रहात्मकशक्त्या संसारान्मोक्षणप्रक्रियाप्रतिपादनावसरे—"एवं संसृति चक्रस्थे भ्राम्यमाणे स्वकर्मभिः। जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते॥" इत्यभिधीयते। तदिदं वचनं प्रकृतार्थे प्रमाणमित्यभिप्रायः। जीवकृतैः कैश्चिदपराधैः अहैतुक्या भगवत्कृपायाः प्रतिबन्धस्वीकारेपि अपराधभूयस्त्वादिकं तदीयकृपायाः कारणमेवेति

---

சக்ரத்திலே சுழல்வார்கள. ஸமயம் பார்த்திருக்கும் ஸர்வேச்வரனால் பரம கருணையோடு—"யாவனொருவனை வரிக்கிறன்-யாவனொருவனை கடாக்ஷிக்கிறன-வெறிதேயருள் செய்வர் செய்வார்கட்கு-" இத்யாதிகளிலே சொல்லுகிறபடியே ஓர அல்பகாரணத்திற்க்காகக் குளிரக்கடாக்ஷிக்கப்பட்டவர்கள் ஆநந்தபோக மடைய மீளாத மோக்ஷவழி நடப்பார்கள். ஒருக்காலே அபராதங்கள் அதிகமாவதோ-அதடியாக துயரங்கள் அதிகமாவதோ பகவானின்

"ஸம்ஸாரபந்தமும் மோக்ஷமும் ஏற்படும் விதம்"

இப்படி जगन्निमित्तोपादानभूतனன ईश्वरன்—"विचित्रा देहसम्पत्तिः" इत्यादिகளிற்படியே

---

तदभिसन्धिः । अत्ताले=भगवत्कृपया "ईश्वरस्यच सौहार्दं यदृच्छासुकृतं तथा । विष्णोः कटाक्षमद्वेषमाभिमुख्यञ्चसात्विकैः । सम्भाषणं षडेतानिह्याचार्यप्राप्तिहेतवः ॥" इत्यत्रेश्वरकृपया सौहार्दमभिधया यदृच्छासुकृताभिधाज्ञातसुकृतविष्णुकटाक्षविशेषादिपरम्परालाभ इत्यर्थः । तदेतद्दूषयति—अपराधमे इति । यादृशापराधप्रसङ्गे—"उपचारशतेनापि न क्षमामि वसुन्धरे"ति भगवन्निग्रहसङ्कल्प उदेति, तादृशापराध एवेति विरोधं द्योतयत्येकारः । प्रत्येकमपराधानां भगवन्निग्रहजनकत्वेतद्भूयस्त्वायास्तद्भूयस्ताजनकत्वंबर्थसमाजग्रस्तपदार्थन्यायसिद्धम् । नतु तदनुग्रहजनकत्वम् । यथा प्रत्येकं अग्निकणानां दाहकारणानां मिलित्वाप्यत्यन्ततत्करत्वमेव । न तु आसचनजनकत्वं तथा इति भावः । उपकारेति । उपकाररूपत्वादिति भावः । उपादेयेति । नहि युष्माकमेतादृशभगवन्माहात्म्यप्रतिपादकवचनविरचनं शिष्यस्यैतच्छ्रवणानन्तरमपि भूयोऽपराधविधानश्रद्धासमुत्पादनाय भवति । युष्माभिरपि सापराधशिष्यदण्डनादिविधानात् । किन्तु-शिष्याणां प्राचीने काले जन्मनिवा अपराधभूयस्ताया सत्यामपि इतः परं निरपराधतया सम्यक् स्थितौ तामनादृत्य ईश्वरः सर्वथा क्रोडीकरिष्यतीत्येवयुष्माकमभिमतम् । तदस्माकमप्यविशिष्टम् । अन्यथा—श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदीममद्रोही मद्भक्तोपि नवैष्णव"इत्यादीनां असत्प्रायत्वप्रसङ्गात् । भगवद्भागवताचार्यापराधानामेव यथाशक्तिकर्तव्यतया पशुमृगपक्ष्यादीनप्यतिरिच्य म्लेच्छादिवद्यथेच्छचारादिश्वस्यादिति—उपात्तवचनानि केवलं भगवद्गुणोत्कर्षविवक्षया तदनुभवायैवोपयुज्यन्ते । नानुष्ठानप्रक्रियायै इति भावः । कृतेनापि पापेन न लिप्यत आत्मेत्यलेपका आहुः । एते तु-यथाशक्ति पापमेवात्मनाकार्यमिति वदन्तीत्यतिचित्रमेतत् ।

तर्हि शिशुपालादिवृत्तान्तस्य का गतिरित्यत्राह—शिशुपालादीति । आदिना काकासुरादिग्रहणम् । तथाहि-श्रीकृष्णस्य पितृष्वसा शिशुपालमाता—"चेदिराजकुलेजातः त्र्यक्षएव चतुर्भुजः । रासमारावसदृश

---

க்ருபையைப்பெற ஹேதுவாய் அத்தாலே நாமறியாத ஸுக்ருதங்களின் வரிசை வருகிறது என்னுமவர்களுக்கு பாபமே பகவத் ப்ரீதிஹேதுவாய்ச்செய்யவேண்டுமாம். சிசுபாலாதிகளிடத்திலும் சில காரணங்களால் ஓரளவு அபசாரங்களைப் பெருமான் பொறுத்தார் என்னுமளவே உண்மையாகும். அவர்களுடைய பூர்வஜந்மஸுக்ருதமே உபகாரகமாம். "ஓர் எண்டானுமின்றியே" இதயாதிகளின கருத்தைப்பாராதே தனது பரிபூரண ஸ்வாதந்த்ரியத்

स्वसेवार्थमாகக்கொடுத்த கரணகலேबரங்களைக்கொண்டு-ஆறுகடக்கக் கொடுத்த தெப்பத்தைக் கொண்டு நீர் வாக்கிலே யொழுகியகப்படுவாரைப் போலே अमार्गप्रवृत्तரானவர்கள் लीलारसத

---

रूरोदच ननादचे"ति रीत्याजातं विलक्षणं स्वशिशुं शिशुपालं दृष्ट्वा विचिन्तयन्ती "एष ते नृपते ! पुत्रः श्रीमान् जातो महाबलः ।....येनोत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ । पतिष्यतः क्षितितले सोऽस्यमृत्युर्भविष्यति । तृतीयमेतद्बालस्य ललाटस्थन्तु लोचनम् । निमज्जिष्यतियंदृष्ट्वा सोऽस्यमृत्युर्भविष्यति ॥" इत्याकाशवाणीं श्रुत्वा, तदैव कुमारोदयं प्रष्टुमागतस्य श्रीकृष्णस्याङ्के यदृच्छया पुत्रं निदधती—"न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ । पेततुस्तच्चनयनं निममज्जललाटजम्" इति जातेनाभिज्ञानेन श्रीकृष्णमेव पुत्रस्यमृत्युं निश्चित्य तत्प्रतिविधानेच्छया तं प्रार्थयामास । "शिशुपालापराधांस्त्वं क्षमेथाः पुरुषोत्तमेति भारतकथाऽत्रानुसन्धेया - क्षन्तव्येति । "अपराधशतं क्षाम्यमित्युवाच पितृष्वसुरि"ति भगवद्वचनात् शिशुपालस्य तावन्तोऽपराधा भगवतः क्षन्तव्या एवाभूवन् । ननु पूर्वोक्तरीत्या कृपोत्तम्भका इति भावः । तर्हि—"ततश्चेदिपतेर्देहात् तेजोऽग्निं ददृशुर्नृपाः । ववन्दे तत्तदातेजो विवेश च नराधिपे"ति शिशुपालस्य मुक्तिलाभे किङ्कारणमित्यत्राह— पूर्वसुकृतेति । तथाहि स्तोत्रभाष्ये आचार्यवचनं—"ननुदेहपातावधि निरन्तरापराधशीलस्य शिशुपालस्य केन व्याजेन मुक्तिः प्राप्तेति चेत्, इहतावत् प्रागेव भगवल्लोकविशेषवासिनश्शापाक्रान्तस्य प्रतिकूलजन्मत्रयान्ते मुक्तिर्भविष्यतीति प्रतिविधाननियतिः परन्निदानम् । अत एव ह्युपात्तचक्रे वधोद्यते भगवति शिशुपालस्य प्रद्वेषसंस्कारभूयस्तयापि निरन्तर स्मृतिमतः प्रकाशितपारम्यं भगवद्रूपं पश्यतोऽनुकूलावस्थाप्राप्तिरुच्यते । अपगतद्वेषानुबन्धो भगवन्तमद्राक्षीत् । तावच्च भगवच्चक्रेणाशु व्यापादितस्तत्स्मरणदग्धाखिलाघसञ्चयः भगवन्तमुपनीतस्तस्मिन्नेवलयमुपययाविति श्रीभट्टपराशरपादैरपि—"बलिभुजि शिशुपाले तादृशागस्करेवा गुणलवसहवासात् त्वत्क्षमा सङ्कुचन्ती"ति शिशुपालादीनामपि किञ्चिदुपायसम्बन्धः प्रत्यपादि । ननु सुकृतविशेषमूलकत्वं भगवद्वरणस्योक्तमयुक्तम् । पराङ्कुशादिप्रबन्धप्रामाण्यतः नित्यस्वातन्त्र्यनिर्हेतुकदयादिमूलकतयैव मुक्तिलाभ इति सम्प्रदायादित्यत्राह—ओरेण्डाणुम् इति । इयं वकुलाभरणीयगाथासहस्र्यां प्रथमशतकीयगाथा । हे हृदय !

---

தாலேயும் அகாரண க்ருபையினாலும் இவன் மோக்ஷந்தருகிறான் என்னும் பக்ஷத்தில் எல்லோருக்கும் எப்போதும் மோக்ஷந்தரவேண்டிவரும. அல்லாதபோது பக்ஷ பாதாதி தோஷம் வரும். அவனுடைய பரிபூரண ஸ்வாதந்தரியம்-ஜகத் ஸ்ருஷ்டிமோக்ஷ ப்ரதாநாதிகளைப்பண்ணும்போது தடை நேரிடாமைக்கு உறுப்பாகும். அகாரண கருணை-ஸமயம் பார்த்து இருப்பதற்கும், ஸுலபமாக அடைவதற்கும் மேலே காரியம் தலைகட்டுவதற்கும், ஹேதுவாகும்.

துக் குறுப்பாய் संसारघटीयन्त्रததிலே परिभ्रमिப்பர்கள். अवसरप्रतीक्षனான परमकारुणिकன— "யாவனொருவனே வரிக்கிறான்" என்றும் "यं पश्येत्" என்றும், "வெறிதேயருள செய்வார் செய்வார்கட்கே"என்றும், சொல்லுகிறபடியே ஒரு व्याजविशेषத்தாலே विशेषकटाक्षம் பண்ணப் பெற்றவர்கள் भोगरसयोग्यராம்படி पुनरावृत्तिயில்லாதவழியே போவார்கள். ஓரளவிலே अपराधमूयस्तामात्रமாதல், அதடியாக வந்த दु.खभूयस्तामात्रமாதல भगवत्कृपैकக்கு उत्तम्भकமாய் அதாலே अज्ञातसुकृतादिपरम्परै வருகிறதென்னுமவர்களுக்கு—अपराधமே उपकारமாய உபாதேயமாக प्रसङ्गिக்கும். शिशुपालादिகளுக்கும் சில ஹேதுக்களாலே अपराधம क्षन्तव्यமானவளவே யுள்ளது. पूर्वसुकृतविशेषமே उपकारकம். "ஓரெண்டானும் இன்றியே" इत्यादिகளில் तात्पर्यத்தைப்பாராதே निरङ्कुशनित्यस्वातन्त्र्यनिर्हेतुक कृपादिमात्रத்தாலே मोक्षप्रदानம் பண்ணுகிறான என்னும பக்ஷத்தில सर्व-

---

परिपाककाले त्वत्कृतज्ञानविशेषमप्यनपेक्ष्य स्वयमेवागत्य कर्मणां फलजननप्रकारं पश्य । अत एव सप्तापि लोकान् स्वोदरे कृतवन्तं पदैस्त्रिभिः क्रान्तवन्तञ्च भगवन्तं त्वमपश्य इतितदर्थः। तात्पर्येति। पूर्वापरपरामर्शेन प्रमाणान्तरपरामर्शेनच तात्पर्यमस्यावधारणीयम्। तथा हि—अत्र फलजननशब्देन न चेतनविशेषस्य मोक्षप्रदानं विवक्षितम्। अपि तु सामान्यतः तदधिकारिणा अज्ञातसुकृताद्यभीष्टप्रदानमेव। ततश्च—"ईश्वरस्य च सौहार्दं—जीवे दु.खाकुले-अचिद्विशिष्टान् प्रळये जन्तूनवलोक्य जातनिर्वेदा। करण_कळेबरयोगं वितरसि वृषशैलनाथकरुणे त्वं"नित्यादिप्रमाणानुसारात् अस्वचिन्तितमनपेक्ष्याज्ञातसुकृतादिकं तादात्विकभगवदनुभवदानेन—"अभिलषितदुरापा ये पुरा कामभोगा जलधिमिवजलौघास्ते विशन्ति स्वयं न" इतिवत् फलतीत्युच्यते । अतएवाज्ञातसुकृतसंज्ञा । तदुक्तमाचार्यैरेव—"अज्ञातनिर्गममनागमवेदिनं मां अन्धं नकिञ्चिदवलम्बनमश्नुवानम्। एतावतीं गमयितुः पदवीं दयाळो! शेषाघलेशनयने क इवातिभार इति । तथाचेश्वरो नित्यनिरङ्कुशस्वातन्त्र्यवानपि निर्हेतुककृपानिधिरपि अधिकारिविशेषस्य "स एव साधुकर्म कारयति तं, यमुन्निनीषति इत्यादिरीत्या तच्चिन्तितादिकमनपेक्ष्याज्ञातसुकृतादिपरम्परामुत्पादयन्नपि तस्य मोक्षप्रदाने स्वस्मिन् वैषम्यनैर्घृण्यादिदोषपरिहाराय शास्त्रीय कल्प्यज्ञातसुकृतादिमूलकं उपायसम्बन्धम

---

ஈசுவரனே ப்ரம்மத்தின் ஒரு கூறுக்கி, அவனுக்கு விச்வ, தைஜஸ, ப்ராஜ்ஞா என்றும் வாங்மய, ப்ராணமய, மநோமயாகள் என்றும் சில பிரிவுகள் உண்டென்னுமவர்களுக்கு ஸ்பஷ்டமான ஆதாரங் கிடையாது. ஈசுவரன் சேதனன அசேதனம் இம்மூன்றும்-அடியோடு தோன்றி மறையும் பரம்மாம்சங்கள் என்பார்க்கு ஸர்வ ப்ரமாண விரோதமும் வரும். இங்ஙனல்லாதபோது—"ப்ரம்மம் மூன்றுவகையாகும்" என்கிற வசநத்தை எப்படி நிர்

முக்தி நித்யமுக்தி வைஷம்ய நைர்க்ருண்யாதி ப்ரஸங்கம் வரும். நிரங்குசஸ்வாதந்த்ர்யம்-ஜகத்ஸ்ருஷ்டிமோக்ஷப்ரதாநாதிகளில் இச்சை உள்ளபோது விகாதம் பிறவாமைக்கு உறுப்பாம். நிர்ஹேதுககிருபை வசீகரணஸௌகர்யாவஸரப்ரதீக்ஷண ப்ரவ்ருத்தி(வி) சேஷபூரணாதிகளுக்கு நிதானமாம்.

---

पेक्ष्यैव प्रवर्तते। नतु स्वातन्त्र्यादिना। अधिकारिविशेषस्य स्वयमज्ञातसुकृतादिपरम्परोत्पादने भगवतोवैषम्य,दिकन्तु तस्यानादिकर्मप्रवाहमूलकतयैव परिहार्यमित्येवसिद्धान्तीकार्यम्। अत्रपुनश्चोदयन्ति—ननु भगवता पूर्वं कर्मानुरूपाज्ञातसुकृतादिप्रदानेपि शास्त्रस्य भगवदाज्ञारूपत्वेन चेतनव्यापारेषु केषाञ्चित्पुण्यत्वं केषिञ्चित्पापत्वमित्यादिकल्पनायां स्वस्वातन्त्र्यमेवनिदानमिति उक्तदोषानिस्तारः। शास्त्रस्यानादित्वेपि "इच्छात एव तव विश्वपदार्थसत्ते"ति तस्यानादिभगवदिच्छासिद्धत्वस्याङ्गीकर्तव्यत्वात्। "स्वातन्त्र्यमेव मे हेतुर्नानुयोज्यमतः परमि"ति वचनात्तत्सर्वं नानुयोक्तव्यमिति चेत्, तर्हि निर्हेतुककृपादिना मोक्षप्रदानविषयेपि दीयतां दृष्टिः। न च वैषम्यादिसूत्रविरोधशङ्क्यः। तस्य व्यष्टिसृष्ट्यादौ सर्वस्यकर्ममूलताप्रतिपादनपरत्वेनाविरोधात्। तस्मादहैतुक्येव कृपा वरणहेतुरिति चेत् मैवम्। उपस्थितेषु चेतनविशेषेषु चैत्रविषयेऽनुकूलाचरणं मैत्रविषये प्रतिकूलाचरणमित्यादिरीत्या तरतमभावापन्नव्यापारकरणस्यैव वैषम्यादिरूपतया आदौ व्यक्तिविशेषपर्यालोचनं विना शास्त्रेषु सामान्यतः पुण्यापुण्यविवेचनस्यातद्रूपत्वात्। व्यक्तिविशेषेषु मोक्षदानस्य निर्हेतुकदयामूलकत्वे च तद्दोषस्य दुर्वारत्वात्। एवं-वैषम्यादिसूत्रस्य व्यष्टिसृष्टिमात्रविषयताचायुक्ता। न्यायनिबन्धनात्मकस्यैवमादिसूत्रस्य विषयविशेषे नियन्त्रणायोगात्। सन्दिग्धशब्दार्थनिर्णायकसूत्राणान्तु तत्तन्मात्रविषयतायुक्ता। किञ्च व्यक्तिविशेषवरणस्य निर्हेतुकत्ववादस्तत्कूटस्थवचनशतविरुद्धः। तथाहि वचनभूषणे भगवतापि व्याजविशेषमपेक्ष्यैव मोक्षादिक प्रदीयते, नतु स्वेच्छामात्रेणेति स्पष्टं प्रतिपाद्यते। उपरि—वरवरमुनिकृतावतारिकाचविलोकनीया। इति। नचात्राज्ञातसुकृतादेरेव वरणहेतुत्वमुच्यते। न तु ज्ञातस्वकृतसुकृतभूतभक्तिप्रपत्त्योः। तथासति भगवत्कृपाया अहेतुकत्वापगमप्रसङ्गादितिवाच्यम्। अज्ञातसुकृतादेर्हेतोरपेक्षणेपि भगवत्कृपाया अहेतुकत्वापगमात्। वैषम्यनैर्घृण्यादिप्रसङ्गपरिहारोऽन्यथा नभवतीति तावन्मात्रोहेतुः कृपाया अङ्गीक्रियते एव, न तु ततोधिक इति चेत्, तर्हि तत्परिहारार्थं, भक्तिप्रपत्तिविधायकशास्त्रविरोधपरिहारार्थञ्च तयोरपि हेतुत्वमङ्गीक्रियताम्। अज्ञात-

---

வஹிப்பது என்றால்-உபாஸநம் மூன்று விதம்-என்ற கணக்கில தன்ஸ்வபாவத்தோடும். சேதநாசேதநவிசேஷங்களோடும் கூடியதாக அதை அநுஸந்திக்கவேணும் என்று தாத்பரியம். ஆகையாலே அநுஸந்திக்கவேண்டிய ஆகாரம் மூன்று என்று கொண்டு மூன்று விதம் என்றது என்பது எல்லாச்ருதிகளுக்கும் ஸம்மதம்.

"ஈச்வரனையே மூன்றுவிதமாக்கும் மதங்கள் தவறுனவை"

ईश्वरனை ब्रह्मத்தின் एकदेशமாக்கி அவன தனக்கு विश्वतैजसप्राज्ञர்கள் என்றும் वाङ्मयप्राणमय मनोमयர்கள் என்றும் சில व्यक्तिகள் உண்டெனனுமவர்களுககும் अन्यपरமன்றிக்கே இருப்ப தொரு प्रमाणமரிது. ईश्वरனும் भोक्तृभोग्यங்களும் स्वरूपेणोत्पत्तिलयवस्तुககளான ब्रह्मांशங்கள் என்

---

सुकृतादीनां यथाल्पव्याजमात्रत्वेन न कृपाया अहेतुकत्वं प्रतिविघातकत्वम्, तथैव फलगौरवापेक्षया भक्तेः क्षण-कालसाध्यप्रपत्तेश्चाल्पव्याजत्वेन न तद्विघातकत्वमिति विभावनीयम्। स्पष्टीभविष्यतिचेदमुपरिष्टात्। तथाचाङ्ग भगवद्गुणविद्वांश्चाधिकारिणः-स स्वविषये निर्हेतुकमेव प्रसीदतीति ब्रूयुः। तथापि तटस्था निरूपकाश्शास्त्राणि च—जीवविषये भगवद्वरणस्यास्तिकश्चिद्व्याजविशेषोहेतुः इत्येव निर्णयन्ति। अन्यथा भगव-कृपादिलाभाय न कोपि किमपि शास्त्रीयं कर्मानुतिष्ठेत्। अपथप्रवृत्तञ्च नकोपि भगवद्व्याकोपं प्रदर्श्य निवर्तयितुं शक्नुयादिति महदत्याहित-मेव स्यादितिभावः। तदेतदाह—निरङ्कुशनित्येति। कृपादिमात्रेति व्याजविशेषव्यावृत्तिः। सर्वमुक्तीति। "समोहं सर्वभूतेषु-सुहृदं सर्वभूतानां" इत्यादिना सर्वसाधारण्येन प्रतिपन्नस्येश्वरस्य निमित्तमन्तरेणैव व्यक्ति विशेषे मुक्तिदातृत्वे तदन्यस्मिन् तददानस्य दुर्वचत्वात् स सर्वेषा-पि मुक्तिदस्स्यादितिभावः। ननुभवत्वेवम्। सर्वेपि क्रमेण मुच्येरन्नित्यत्राह—नित्यमुक्तीति। ईश्वरस्वातन्त्र्यस्यान्यैरवार्यत्वरूपनिरङ्कुशत्ववत्तयाऽपेक्षणीय न्त-राभावेन सर्वे युगपदेव मुक्ता भवेयुरित्यर्थः। नन्वीश्वरस्यापर्यनुयोज्यस्वातन्त्र्यविशेषेग कस्यचिन्मुक्तिः अन्यस्य तदभावः, कस्यचिदिदानीं, अन्यस्यान्यदेत्यादिव्यवस्था सिद्ध्यतीत्यत्राह-वैषम्यनैर्घृण्यादीति। अथ परकृतवरणस्य सहेतुकत्वे निरङ्कुशस्वातन्त्र्यनिर्हेतुकदयाभ्या किम्प्रयोजनं भविष्यति। स्वातन्त्र्यस्य भग्नत्वात्। दयायास्सहेतुक-त्वापाताच्चेत्यत्राह—निरङ्कुशेति वाक्यद्वयेन। अङ्कुशोहि गजस्य गतिविघातकः। तद्वत् भगवतः सृष्ट्या-दिविषये विघातकाभावमात्र निरङ्कुशत्वमुपपद्यत इत्यर्थः। ततश्चवरणस्य सहेतुकत्वेप्यविरोध इति तात्पर्यम् वशीकरणसौकर्येति। सर्वस्वतन्त्रोऽपि कर्मानुरूपफलप्रदोपि अवाप्तसमस्तकामतया सर्वोपकारनिरपेक्षोपि परया कृपया भगवान् स्वयम्प्रयोजनतयाऽऽश्रितान् रक्षतीति अल्पोपकारवशीकार्यसुजनसार्वभौमवत् निश्शङ्कं जीवेन स्वापराधवर्गं वीक्ष्यासंत्रस्तेन शरणागत्या वशीक्रियत इत्येवमाश्रयणसौकर्यं बोध्यम्। "गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासि-

---

ச்ருதியில ப்ரம்மத்தை எல்லாமாக அபேதிததுச் சொன்னதுவும்-சரீர ஆத்ம உறவு பற்றியது என்னும் விஷயம், பொருந்தவிடும் கடக ச்ருதிகளுக்கும், "எலலாவத்திலும் ஊடுறுவி நிற்கினருய். அதனல் எல்லாமாணுய் –ஈசன் எங்குமிருப்பதால் யானும் அவனே ஆனேன்."—இத்யாதிகளான காரணங்காட்டிக் கூறும் வாக்கியங்களுக்கும் அநுகூல மானது. அசைக்க ஒண்ணுத நித்தியபேத போதகவாக்கியங்களின் சக்தியாலே சித் அசித்

பார்க்கு सर्वप्रमाणविरोधமும வரும். भोक्तृभोग्यनियन्ताககள் ब्रह्मस्वरूपैकदेशங்கள அல்லாதபோது— "ब्रह्मत्रिविधं" எனகிற वाक्यம் निर्वहिக்கும்படி என் ? என்னில்—"उपासात्रैविध्यात्" என்கிற படியே शरीरभूतங்களான चेतनाचेतनங்களாலும் தன் स्वभावविशेषங்களாலும் विशिष्टனுக अनुसन्धेय னுகையாலே अनुसन्धेयाकारत्रैविध्यததை நினைதது "त्रिविधம" என்கிறதென்னுமிடம் सर्वश्रुत्यनुगुणம்'

नम् । ऋणं प्रवृद्धमिवमे हृदयान्नापसर्पती"तिहिभगवान् शरणागतेषु नित्यंऋणीभवति । **अवसरप्रतीक्षणेति** । ईश्वरम्प्रत्युपसर्पणायास्माभिरवसरे प्रतीक्षणीये, तद्विना सोस्माकं स्वीकरणावसरं प्रतिक्षणं प्रतीक्षते । स्वेनसाकं जीवस्यास्य प्रवृत्तस्त्वंमेऽहमेति विवादःश्वः परश्वोवा कदाशान्तिमेष्यति ? कौस्तुभस्थानीयमेनं संसारपङ्कपतनपांसुलं संपरिशोध्य परिष्कृताभरणवत् कदा प्राप्स्यमीति मनोरथान् करोतीतिभावः । "विभीषणोवा सुग्रीव ! यदि वा रावण-स्स्वयम् । आनयैनं हरिश्रेष्ठ ! दत्तमस्याभयंमये"तिह्युवाच भगवान् । **प्रवृत्तिविशेषपूरणेति** । **शेषपूरणेति**-तु युक्तम् । स्वाधिकारानुगुणोपायप्रवृत्तस्याधिकारिणस्तत्तदशक्येषु स्थानेषु प्रपत्तिवशीकृतस्स्वयं तिष्ठन् उपायपूर्तिं करोतीश्वर इति—"अथैतदप्यशक्तोसि कर्तुं मद्योगमाश्रितः । सर्वकर्मफलत्यागं कुरुष्वच यतात्मवान्" इत्यादौ प्रसिद्धमितिभावः । **पूरणादीत्यादिना** अविलम्बेन प्रदानं आश्रिततारतम्यानालोचनं अल्पव्याजस्य कृते महा-नन्दलक्षणमोक्षप्रदानमित्यादिदयाकार्यवर्गस्य संग्रहः ।

ननु कथमीश्वरस्य जीवमोचयितृत्वंसंभविष्यति ? तस्य ब्रह्मांशत्वेन जीवतुल्यत्वात् । ईश्वरस्य मोक्षप्रदत्व-वचनानिचाचार्यस्येव परम्परापराणि भाव्यानीत्यत्राह—**ईश्वरेति** । इदञ्च द्वैतियादवप्रकाशादिसाधारणम् । तत्र–शुद्धचैतन्यं ब्रह्म । मायोपहिततदंश ईश्वरः । अविद्योपहिततदंशोजीव इत्यादिरीत्याद्वैतिनामभ्युपगमः । शक्तित्रययुक्तं सन्मात्रंब्रह्म । एकया शक्त्या ततोनित्यसिद्धतदंश ईश्वरः अपरशक्तिद्वयेन तदंशौ चिदचिती इति यादवप्रकाशादीनामिति भिदा । एवं साधारणार्थमुक्त्वाथाद्वैतिनोऽसाधारणांशमाह—**अवनूतनव्यक्ति इति** । ईश्वरस्येत्यर्थः । व्यक्तयः=भेदाः । एतदुक्तं भवति—माण्डूक्योपनिषदि—"यत्रसुप्तोन कञ्चनकामं कामयते नकञ्चन स्वप्नंपश्यति, तत्सुषुप्तं, सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयोह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पाद इति प्र ज्ञाख्यतृतीयव्यक्तिम्, तस्याः—"एष सर्वेश्वरः एष सर्वज्ञः" इति ईश्वरत्वञ्चोक्त्वा, **किञ्चिद्**-नन्तरं, "बहिः प्रज्ञो विभुर्विश्वोह्यन्तःप्रज्ञस्तु तैजसः । घनप्रज्ञस्तथाप्राज्ञ एक एवत्रिधा स्मृत" इति व्यक्ति-

---

ஈசுவர பேதமுண்டாயிருக்க-ஒன்று என்றதை விசிஷ்டம் ஒன்று என்ற கருததிலே கொள்ள வேண்டியிருக்க பேதங்கள் பேதமையாலானவை அபேதமே ஸத்தியம் என்ற அத்வைதி பக்ஷமும், பேதமும் அபேதமும் ஒருங்கேகூடும் எனகிற பாஸ்கராதி பக்ஷங்களும் பாழ்ங் கிணற்றுக்குச்சமமாகும்.

"உலகமே ப்ரம்மம் என்றதின் உட்கருத்து"

ச்ருதியில் ப்ரஹ்மத்துக்கு சேதநாசேதநஸாமாநாதிகரண்யமும் சரீராத்மபாவத்தாலே என்னுமிடம் கடக-ச்ருத்யாதிகளாலும்—"सर्वं समाप्नोषि ततोऽसि सर्वः—सर्वगत्वादनन्तस्य स एवाहमवस्थितः" என்று ஹேதுநிர்தேச-பூர்வகோபப்ரும்ஹணங்களாலும் நிர்ணீதம். அநந்யதாஸித்த நித்யபேதச்ருதிபலத்தாலே சிதசிதீச்வரர்களுக்கு

---

त्रयमपि विशदीचक्रे। जागरे बहिःप्रसृतज्ञानो विश्वशब्दवाच्यः प्रथमः, स्वप्नदशायां अन्तः प्रसृतज्ञानस्तैज-साख्योद्वितीयः, सुषुप्तौ बाह्याभ्यन्तरप्रसरणशून्यत्वात् घनीभूतज्ञानः प्राज्ञाख्यस्तृतीय इति एक एवेश्वरस्त्रिधा-ऽवतिष्ठत इत्यर्थ इति। अथ यादवादिसम्मतमीश्वरव्यूहमाह—वाङ्मयेति। अयम्भावः—"पादोऽस्य विश्वाभूतानी"तिचेतनाचेतनरूपनिखिलविकारात्मा प्रथमः पादः, "त्रिपादस्यामृतंदिवी"तिद्युलोकवर्तिनोऽन्ये त्रयः पादाश्चेत्याहत्य चतुर्षु प्रथमस्य चेतनाचेतनात्मकस्येश्वरव्यूहत्वमौपचारिकमिति दिवि विद्यमानपादत्रयमेव साक्षादी-श्वरव्यूहः। तेषां त्रयाणां मनोमयादिसंज्ञा च सप्तान्नब्राह्मणोदिता। "एतन्मयोवा अयमात्मा वाङ्मयोमनोमय प्राणमय इति। तदेतदुक्तं तैरेव—"मनोमयप्राणमयवाङ्मयास्त्रय ईश्वरव्यूहाः, तैस्त्रिप्रकारमवस्थितं ब्रह्मेति" त्रिपादस्यामृतंदिवी "त्यत्रोक्तमिति। इति। तर्ह्येतादृशप्रमाणप्रतिपन्नत्वादेवविघोवादस्त्वयाप्यभ्युपगन्तव्य एव स्यादित्यत्राह—अन्यपरेति। तथाहि—"तमीश्वराणां परमं महेश्वरं" इति ब्रह्मण एवेश्वरत्वं श्रूयत इति तस्य ब्रह्मांशत्वमनुपपन्नम्। एवं मायाविद्याविभागोपि। स्वव्यामोहनहेतुरविद्या, परव्यामोहनहेतुर्मायेत्युक्तलक्षणद्वय-साङ्कर्यात्। असतः परान् सत्त्वेन ईश्वराय प्रदर्शयन्त्यामायाया अप्यविद्यात्वप्रसङ्गात्। [विचित्रत्वेनाश्चर्यमय-सृष्टिकरत्वेनचाविद्यामायादिशब्दैः प्रकृतेरेवाभिधातव्यत्वाच। "बहिः प्रज्ञ" इत्यादिकारिकायाश्च गौडपादीय-त्वेन प्रसिद्धतया नातीवादर्तव्यम्। आदर्तव्यत्वेपि—तत्रैवोपनिषदि पूर्वं प्रणवोपासनस्य प्रस्तुततया तद्घटकाक्ष-रत्रयस्य यथाक्रमं ये वाच्या जाग्रदादिनिर्वाहकतया भगवच्छास्त्रप्रसिद्धा अनिरुद्धप्रद्युम्नसङ्कर्षणास्त एवात्राप्यु-च्यन्त इति, तेषामेवतत्तत्स्थानानुगुणं तत्तदवस्थज्ञानप्रसरहेतुतया विश्वतैजसप्राज्ञशब्दाभिधेयत्वञ्चेति सर्वमुपपद्यते। नापूर्वव्यूहत्रयकल्पनम्। एवमेव सप्तान्नब्राह्मणेति—"यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति सप्तानामन्नानां भगवता सृष्टत्वमभिधाय, तेषु प्रसिद्धस्यान्नस्य, दर्शपूर्णमासयोः, पयसश्च मनुष्यदेवपितृतिर्यक्षु विनियोगमुक्त्वा

---

உண்மையான ஸூக்ஷ்ம சிதசித்துக்களோடே சேர்ந்த ப்ரம்மம் உலகாக மாறுகிறது என்று ப்ரமாணங்கள் கூறுகிறபடியால-மாறி மாறி ப்ரம்மஸ்வரூபமே பரிணமிககிறது என்ற பக்ஷமும், குறிப்பிட்ட ப்ரம்மஸ்வரூப ஏகதேச பரிணாமபக்ஷமும், ஒரு காரண வஸ்து ஸம்பந்தத்தால் நியமமாக ப்ரம்மைகதேசம் பரிணமிக்கும் என்கிற பக்ஷமும், மேகம் போல வர்ஷித்தல், வலைஞன் போல வீசுதல, மயில்போல் ஆலுதல், ஆமைபோல் வெளியிடுதல் எனனும்

स्वरूपभेद முண்டாயிருக்கையாலே सामानाधिकरण्यம் विशिष्टैक्यपरமாக வேண்டியிருக்க सर्वभेदமும் मिथ्याभूतமென்கிற प्रच्छन्नबौद्धपक्षமும், भेदाभेदங்கொள்ளுகிற प्रच्छन्नजैनपक्षமும் तृणच्छन्नकूप-समानங்களாம்.

---

अवशिष्टानां त्रयाणां वाङ्मनःप्राणानां सर्वेष्वात्मसु" विनियोगोऽभिधीयते। तथा च "अयमात्मावाङ्मयः प्राणमय इत्यादौमयडर्थस्सम्बन्ध उपकरणित्वमिति तत्तदुपकरणवज्जीवपरत्वमेवेति नतदभिमतेश्वरव्यूहसिद्धिरिति । विस्तरस्तु ज्योतिरधिकरणश्रुतप्रकाशिकायां अत्रैव भास्करादिमतभङ्गेचानुसन्धेयः ।

एवं पराभिमतेश्वरत्रैविध्यं निराकृत्याथ ब्रह्मत्रैविध्यवादमपि विधूनते—ईश्वरेति । भोक्तृभोग्ये= चिदचिती । तथा च—कात्यायनकारिका—"ईश्वराव्याकृतप्राणविराट्भूतेन्द्रियोर्मिभिः । यत्प्रणत्यदिवा-भाति तस्मै सद्ब्रह्मणे नमः इति । एतदर्थश्च भास्करादिभङ्गे विवृतोद्रष्टव्यः । स्वरूपेणोत्पत्तीति विशिष्टवेषेणा-स्माकं मतइवोत्पत्तिर्व्यावर्त्यते । ब्रह्मणि ईश्वरादिविभागार्हशक्तीनां नित्यत्वात् तेषां स्वरूपत उत्पत्तिमत्त्वेति न तन्नित्यत्वावेदकप्रमाणाविरोधः । सर्वस्यापि ब्रह्मांशत्वात् एकतद्विज्ञानेन सर्वस्य सुज्ञातत्वञ्चभविष्यतीति तदूहृद-यम् । तदेतत् खण्डयति—सर्वप्रमाणविरोधेति । ईश्वरस्यैव ब्रह्मत्वं तस्यनित्यत्वं ब्रह्मणो नित्यं विकार-राहित्यं इत्यादिबोधकसर्वप्रमाणविरोध इत्यर्थः । नन्वेवं सति ब्रह्मणस्स्पष्टतया त्रैविध्यबोधक श्रुतिनिर्वाहः कथमित्याशङ्क्याह—भोक्तृभोग्येति । "एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् । भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति श्वेताश्वतरवाक्यं विवक्षितम् । उपासात्रैविध्या-दिति ।" जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगादिति सूत्रम् । तदर्थश्च—"नच वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिजीवलिङ्गात्—"यावदस्मिन् शरीरे प्राणो वसति तावदायुः" इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धस्यैवात्रप्रकरणे भूमेतिचेत् - न - उपासात्रैविध्याद्धेतोः, उपासात्रैविध्यं वक्तुं तत्तच्छब्देनाभिधानम् । स्वासाधारणगुणविशिष्टतया चिद्विशिष्टतयाऽचिद्विशिष्टतया च त्रैविध्यम् । एतादृशत्रै विध्यस्य प्रकरणान्तरेष्वप्याश्रितत्वादिहापि तस्य योगादिति । स्वभावविशेषाः स्वासाधारणगुणाः । अनुसन्धेया-कारत्रैविध्येति । नतु स्वरूपत्रैविध्यमित्याशयः । सर्वश्रुत्यनुगुणम् इति । ब्रह्मण एकत्वबोधकश्रुतीनां चेतना-चेतननित्यत्वबोधकश्रुतीनां शरीरात्मभावबोधकश्रुतीनाञ्चानुगुणमित्यर्थः । अत्र "त्रिविधं ब्रह्ममेतदिति त्रिविध

---

பக்ஷங்களும், எல்லாம் நித்தியங்கள, அநித்தியங்கள, சூன்னியங்கள், காரணமின்றியே தோன்றி அழியுமவைகள் என்ற பக்ஷங்களும் பரமாண விருத்தங்கள் ஆகையால் தமோ குண மூலங்கள் என்னுமிடத்தை-யாவேதபாஹ்யாஸ்ஸ்ம்ருதய:—" என்று மனு முதலிய வர்கள் கூறினார்கள்.

"அறியாமையால் வந்த அந்நியமதங்கள்"

सत्यங்களான सूक्ष्मचिदचित्துக்களாலே विशिष्டனாய்க் கொண்டு ईश्वरன் जगद्रூपனாய பரிணமிக்கிறான் என்று प्रमाणसिद्धமாகையாலே-अनियतस्वरूपपरिणामपक्षமும், प्रतिनियतांशत्रयपरिणामपक्षமும், स्वरूपैकदेशनित्योपाधि परिणामपक्षமும், सेचकजालिक बर्हिणकूर्मादिसमाधियாலே सर्वविसृष्टिविक्षेपविकासामि

---

ब्रह्मपदयोस्सामानाधिकरण्यस्य यथाश्रुते प्रतीतिमन्वारुह्येदं सर्वमुक्तम् । वस्तुतस्तु तदेवनास्ति । त्रिविधमिति-प्रोक्तं भोक्ता भाग्य प्रेरिताचेत्येतत्सर्वं मत्वा पुरुषः एतत् ब्रह्म भवतीत्येव वाक्यान्वयस्य विवक्षितत्वात् । ब्रह्म-भवति-ब्रह्मतुल्योभवति । प्रेरितेतिवक्तव्ये प्रेरितारमिति विभक्तिव्यत्ययःछान्दसः । ब्रह्ममित्यकारान्तत्वञ्च । "भोक्ताभोग्यं प्रेरितारञ्चमत्वा जुष्टस्ततस्तेनामृतत्वमेतीति श्रुत्यन्तरमिहैतत्समानार्थकं भाव्यम् । ननु ब्रह्मणस्स्व रूपत्रैविध्यमपि श्रुत्यन्तरानुगुणमेव । "सर्वं खल्विदं ब्रह्मेत्या"दिना चिदचिदीश्वरसामानाधिकरण्यव्यपदेशादि त्यत्राह—श्रुतीति । अयमर्थः—यद्यपि लोके सामानाधिकरण्यं बहुविधंभवति । नीलमुत्पलमित्यादौ वैशिष्ट्ये, कोकिलःपिक इत्यादौ संज्ञायां, लोहितस्स्फटिक इत्यादौ आरोपे, चोरस्स्थाणुरित्यादौ बाधायां च । तथापि प्रकृते देवोहमित्यादिवत् शरीरात्मभाव एव सामानाधिकरण्यं वक्तव्यम् । घटकश्रुत्याद्यानुगुण्यात् । तथाच सर्वशरीरकं ब्रह्मेत्यर्थस्यैवात्र पर्यवसानात् न स्वरूपत्रैविध्यवादादिकं युक्तमिति । घटकश्रुतिः-अन्तर्यामिब्राह्मणादिः । भेदाभेदश्रुत्योर्विरोधशमनेन परस्परं घटनात् । "अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोसि सर्वः" इति गीतावचनम् । सर्वमात्मतया व्याप्तवानसि । ततोहेतोः सर्वंखल्वित्यादिश्रुतिषु सर्वस्त्वमित्युच्यसे इत्यर्थः । सर्वगत्वादिति । "मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने" इति विष्णुपुराणे प्रह्लादवचनम् । अनन्तस्य सर्वत्रात्मतयाऽवस्थितत्वात् सएवाहं भवामि । अतोमच्छरीरकादेवब्रह्मणस्सर्वमुत्पद्यते । मच्छरीरकं ब्रह्म सर्वशरीरकं तिष्ठति । मच्छरीरके सनातने ब्रह्मणि सर्वं प्रलीयत इत्यर्थः । अत्रोभयत्र—सर्वं समाप्नोषि ततः—सर्वगत्वात्—इति हेतुनिर्देशोस्तीति हेतुनिर्देशपूर्वकत्वोक्तिः । ननु सामानाधिकरण्यस्य शरीरात्मभावतो विशिष्टैक्यपरत्वोक्तिरयुक्ता । असति बाधकेऽभेदार्थकत्वस्यानपोद्यत्वात् । घटकश्रुतीनां गौणार्थकत्वेनाबाधकत्वात् । तथाच जगन्मिथ्यात्वसिद्धिः । अथ यदि भेदश्रुतिबाधात् तथोक्तिरभिमता, तदापि श्रुतिद्वैविध्ये विनिगमकाभावेन समबलतया तदुभयार्थभेदाभेद-

---

கீழே கூறின உபாதாந காரணத்வாதிகளாலே வருமோ என்று ஸங்தேஹிக்கப்படும் விகார ஜடத்துவ, துக்கபரிணாமாதிதோஷங்கள் ப்ரம்மத்தினிடம் தட்டாமைக்காக சோதக வாக்கியங்களிலே ஸத்தியத்துவ ஜ்ஞாநத்துவாதி தன்மைகள் சொல்லப்படுகின்றன ஆகையால் இவ்வாக்கியங்கள் தன்மையற்ற ப்ரும்மத்தைச் சொல்லுகின்றன என்னும் பக்ஷம்— முன் பின் வாக்கியங்கள், வேறு ச்ருதிகள், வாக்கியம் இவற்றுக்கு முரணாகும்.

व्यक्त्वादि पक्षங்களும், सर्वनित्यत्व सर्वक्षणिकत्व सर्वशून्यत्वाहेतुकोत्पत्ति विनाशादिपक्षங்களு மெல்லாம் प्रमाण विरुद्धங்களா கையாலே तमोमूलங்கள் என்னுமிடத்தை—"या वेदबाह्यास्स्मृतय" इत्यादिகளிலே கண்டுகொள்வது.

---

सिद्धिरस्तु इति शङ्कायामाह—अनन्यथासिद्धेति । तथा च भेदश्रुतीनामेव प्राबल्यं युक्तमिति भावः । भेदस्यनित्यत्वं मोक्षदशायामप्यनुवर्तमानत्वम् । "ज्ञाज्ञौ द्वौ–नित्योनित्यानामितिश्रुतेः । अभेदश्रुतेः—" आदित्योयूप इत्यादा"विव प्रत्यक्षबाधितत्वेन घटकश्रुत्यनुरोधेनच विशिष्टैक्यपरतयानेयत्वोनान्यथासिद्धत्वम् । भेदश्रुतेराविद्यकभेदविषयत्वे तत्त्वोपदेशार्थप्रवृत्तिभङ्गस्स्यादिति स्वार्थपरत्वेनानन्यथासिद्धत्वञ्चेति बोध्यम् । सर्वभेदः=ब्रह्मभिन्नसर्वपदार्थः । तन्मतेधर्मधर्मिणोरभेदात् । प्रच्छन्नबौद्धः–वेदवादप्रच्छन्नबौद्धोऽद्वैती । तन्मते वेदप्रामाण्यस्याप्यन्ततोपरिनिष्ठितत्वात् प्रच्छन्नत्वोक्तिः । तदुक्तं यादवप्रकाशाचार्यैः–"वेदोऽनृतोबुद्धकृतागमोऽनृतः प्रामाण्यमेतस्यच तस्यचानृतम् । बोद्धाऽनृतोबुद्धिफले तथाऽनृते यूयञ्चबौद्धाश्च समानसंसदः ॥" इति । समानसंसदः–समानगोष्ठीनिष्ठाः । प्रच्छन्नजैनेति । यावद्भास्करादीत्यर्थः । सर्वं वस्तुजातं प्रतीतिव्यवस्थाप्यम् । प्रतीतत्वात् वस्तुन ऐकरूप्यञ्चेत्, प्रतीतत्वादेव द्वैरूप्यमप्यङ्गीक्रियताम् । मृद्घटः नीलः पट इत्यादि रीत्यैव प्रतीतेः । कारणात्मनाऽभेदः कार्यात्मनाभेदः । द्रव्यात्मनाऽभेदः गुणात्मनाभेदश्चेति । न च तयोर्विरोधः । छायातपयोरिव वह्निजलयोरिववा सहानवस्थाननाश्यनाशकभावादिलक्षणविरोधाभावात् । नहि वस्तुनो भेदएवाभेद एववा एकएव स्वभावइति राजाज्ञेति तन्मतस्थितिः । ततश्चैतैः जैनवत् अनेकान्तवादतुल्यं विरोधानादरणदर्शनात् वेदप्रामाण्यकञ्चुकितत्वाच्च प्रच्छन्नजैनसमाख्यासिद्धिरिति भावः । तृणच्छन्नकूपेति । अनावृतकूपादपि तृणच्छन्नकूपस्यात्यनर्थकरत्वात्तथोक्तिः । पथि सावधानं गच्छतामपि तृणगणेनावरणात् भूतलवद्भासमानेषु अन्धकूपेषु नियतः पात इतिवत् प्रकृतेपि जैनबौद्धमतादिदोषदर्शनेन ततो निवृत्ता अपि बहवोविद्वांसः वेदानुसारिवेषभाषादिना भ्रान्ता अद्वैतादिषु सज्जन्त इति भावः ।

---

"அநந்தம்"—என்னுமிடத்தில பாதகமில்லாமையாலே மூன்றுவித அளவுகளும் கழிக்கும்போது—விஷ்ணு ஸர்வவ்யாப்தன—என்றபடி ஸர்வதேசவர்த்தியாகையாலே தேசத்தாலே அளவிறந்தமையும்,—"ஸ்ரீவத்ஸாங்கன......சாச்வதன் நித்யன—" என்றபடி திவ்ய விக்ரஹாதிகளோடேகூட காலஅளவில்லாதமையும்,—"உலகு யாவையும் உனக்கு உடலம்" என்றபடி ஸர்வ வஸ்துவோடும் ஒன்றெனககூறக் கூடிய தன்மையாலும், குணம் ஐச்வர்யம் சக்தி முதலியவற்றால தன்னில் மேம்பட்ட வஸ்து இல்லாமையாலும் வஸ்துவால் வந்த அளவு கடந்தமையும் தேரும்.

अथ प्रकारान्तरेणापि भास्करादिमतमुद्दूषयितुं स्वमते तदसंस्पर्शमाह—सत्येति । नित्येत्यर्थः । इदञ्च चिदचितोर्ब्रह्मपरिणामत्वव्यावृत्तय उक्तम् । विशिष्टेति स्वरूपपरिणामव्यावृत्तये । अनियतेति । भेदाभेदवादिनोहि बहवः । तत्र ब्रह्मदत्तस्यायं पक्षः । विभौ ब्रह्मस्वरूपे अनियप्रदेशतया चिदचिदीश्वरांशानां सृष्टिप्रळययोः लयपरिणामौ भवत इति तदङ्गीकारात् । प्रतिनियतेति । ब्रह्मस्वरूप इत्यादिः । अयं यादवप्रकाशपक्षः । पूर्वमत इवानियतब्रह्मप्रदेशेषु चेतनादिपरिणामस्वीकारे तेषान्नित्यताबोधकप्रमाणविरोधः । प्रतिनियतप्रदेशपरिणामस्वीकारेतु प्रवाहनित्यतापरतया तदुपपत्तिरिति तदाशयः । स्वरूपैकदेशेत्यादिः भास्करपक्षः । ब्रह्मस्वरूपैकदेशस्य नित्यमुपाधिकृतः परिणाम इत्यर्थः । नित्यत्वमिहानादित्वमात्रम् । यादवमतं इव ब्रह्मस्वरूपस्यैव निरुपाधिकपरिणामाङ्गीकारे अद्वैतमत इवाविद्याकृतापारमार्थिकविवर्ताङ्गीकारेवा व्यादूषणगण जागरणात् पारमार्थिकान्तःकरणादिकृतएवपरिणामश्शोभत इति तेषाम्मतप्रक्रियेह बोध्या । तदुक्तं वेदार्थसङ्ग्रहव्याख्यायां—"यादवप्रकाशभास्कराभ्यां स्वाभिमतार्थसाधकप्रमाणसिद्ध्यर्थं बन्धमोक्षादिव्यवस्थासिध्यर्थञ्च प्रपञ्चस्य पारमार्थ्यमभ्युपगतम् । तत्र मुक्तावभेदश्रुतेर्भेदस्यौपाधिकत्वमभेदस्य स्वाभाविकत्वञ्च जीवब्रह्मणोरभ्युपगतम् । अचिद्ब्रह्मणोस्तु—सर्वस्य ब्रह्मात्मकत्वश्रुतेनिर्मलत्वादिश्रुतेरुपाध्यन्तराभ्युपमेऽनवस्थानाच्चभेदाभेदौ स्वभाविकावभ्युपगतौ भास्करमते । यादवप्रकाशमतेतु—मुक्तावपिभेद(निर्देश)श्रुतेः जीवब्रह्मणोरपिभेदाभेदौ स्वाभाविकावभिमतौ" इति । अथ परिणामवादं परित्यज्य—"उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः । वियोगान्यत्वधृतयः कारणं नवधास्मृतमितिरीत्याऽन्यथा जगत्सृष्टिं निर्वहतां केषाञ्चित्पक्षानाह—सेचकजालिकेत्यादिना । सेचकादीनांचतुर्णां यथासङ्ख्यं विसृष्ट्यादिभिश्चतुर्भिरन्वयः । समाधिस्साद्दश्यम् । सेचकोमहामेघः भस्त्रादिर्यन्त्रम्वा । मेघाद्युदरवर्तितोयस्य यथा काले विसृष्टिः बहिर्वर्षणंभवति. तथैव ब्रह्मान्तर्गतजगतोपीत्यर्थः । जालिकः—जालेन मत्स्यग्राहिणा जीवतीति धीवर उच्यते । स यथा जालस्य सङ्क्षेपविक्षेपौ करोति, तथा जगतः परमात्मापीत्यर्थः । अत्र-जालिकोनामैन्द्रजालिको विवक्षितः । विक्षेपोपीन्द्रजालरूपाविद्याकृतः प्रतिभास इति केचित् । तन्न । अत्र कीर्त्यमानानां सर्वेषामेव पक्षाणां पूर्वोक्तपरिणामपक्षवत् पारमार्थिक सत्कार्यवादावान्तरभेदत्वावश्यंभावेनाऽत्रमध्येऽद्वैतपक्षप्रस्तावस्याप्रकृतत्वात् । बर्हिणः—"फलबर्हाभ्यामिनजि"ति मत्वर्थीय इनच्प्रत्यये बर्हवान्" मयूरः इत्यर्थः । अत्र तस्य संकोचविकासयोरिव जगतोपित्तयोर्ब्रह्मकारणमित्यर्थः । यद्यपि बर्हिणदृष्टान्तोऽस्माभिरप्युच्यते । तथापि तत्र तात्पर्यान्तरमवसेयम् । अभिव्यक्तिपक्षस्य कूर्मो दृष्टान्तः । यद्यप्येतादृशकूर्माङ्गाभिव्यक्तितुल्यता विसृष्ट्यादिपक्षेप्यस्तीति तेषामिह पृथगुपादानमनुचितमिव भाति, अथापि सेचकमेघादिव्यापारेषु कूर्मव्यापारवैलक्षण्यस्य मात्रयादर्शनात् तथा प्रकृते ईश्वरव्यापारेपि वैलक्षण्यमभिप्रेत्य नानादृष्टान्तोपादानम् । आदिना—गोमयादिभ्योवृश्चिकादिवत् विलक्षणोत्पत्तिपक्षस्य, 'अग्नेरापः'—'अद्भ्योऽग्निः'

रित्यादिरीत्याऽनियततत्त्वोत्पत्तिपक्षस्यच ग्रहणम् । एवं वैदिकानां परिणामतदितरपक्षान् वर्णयित्वाऽथावैदिकाभ्युपगमप्रकारानाह—**सर्वनित्यत्वेति**। अयं पक्षस्साङ्ख्यानां **मीमांसकानाञ्च**। **प्रथमेन** सत एव कार्यस्याभिव्यक्त्यङ्गीकारात्, **द्वितीयेन**—"न कदाचिदनीदृशं जगदि"ति प्रपञ्चप्रळयानभ्युपगमात् प्रवाहनित्यत्व स्वीकाराच्चेति भावः। एषां वेदप्रामाण्यस्वीकर्तृत्ववेदव्याख्यातृत्वादिसद्भावेपि आगमिकप्रधानेश्वरतत्त्वानभ्युपगमात् मात्रयाऽवैदिकत्वमप्यस्तीति बोध्यम्। अत एव मीमांसकमर्धलोकायतिकशब्देन व्यवहरन्ति। अथवाऽत्र पूर्वं वेदान्तिनां परिणामादिपक्षप्रस्तावानन्तरं, तद्भिन्नानां वैदिकानामवैदिकानाञ्च पक्षाः प्रतिक्षिप्यन्त इति तत्र प्रथमं सांख्यादीनां वैदिकानां पक्षः प्रस्तूयत इति च बोध्यम्। **सर्वक्षणिकत्वेति**। इदञ्च माध्यमिकातिरिक्तानां सर्वेषां बौद्धानां सम्मतम्। **सर्वशून्यत्वं माध्यमिकस्य**। एतत्सर्वं तत्तद्भङ्गे विशदी भविष्यति। अहेतुकोत्पत्तिविनाशवादी च **चार्वाकः**। तत्तत्पदार्थनिष्ठविकाराणां तत्तत्स्वभावसिद्धत्वाङ्गीकारात् न हेतुसाध्यं किञ्चित्तन्मत इति भावः। **प्रमाणविरुद्धेति**। अत्र केषाञ्चित्पक्षाणां तत्तच्छ्रुतिशकलसम्मतत्वभानेपि सर्वप्रमाणानुगुण्याभावेन केषाञ्चिदत्यन्तमप्रामाणिकत्वेन च सात्विकानामनुपादेयमेवैतत्सर्वमित्याशयः। **तदुक्तमधिकरणसारावल्यां**—"विश्वारम्भे विवर्तं शकलपरिणतिं शक्तिशेषस्य सूतिं व्यक्त्युल्लासौ विसृष्टिं विकृतिमनियतां तत्त्वपङ्क्तौ च सृष्टिम्। तत्तद्वाक्यैकदेशस्वरस इति मुधा कल्पयन्तस्तु मुग्धास्सर्वश्रुत्यैकरस्यप्रणयि[illegible] तत्त्वविद्भिरि"ति। **तमोमूलानि**॥ तामसपुरुषबुद्धिपूर्वकाणि। "सर्वार्थान् विपरीतांश्च बुद्धिस्सापार्थ! तामसीतिहयुक्तमिति भावः। तमोमूलत्वेन सात्विकानुपादेयत्वं दर्शयद्वाक्यमुपादत्ते—**या वेद बाह्या इति**। .... याश्चकाश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्यस्स्तमोनिष्ठा हिता स्मृता इति **मनुवचनम्**। कुदृष्टय इति वैदिकेष्वेवापार्थं ब्रुवाणानां अद्वैत्यादीनां ग्रन्था उच्यन्ते। प्रेत्य वर्तमाने पुरुषे निष्फलाभवन्तीत्यध्याहृत्यान्वयः। तेन-प्रेत्येत्यस्यल्यंबन्तस्यानन्वयशङ्का परास्ता। पुरुषस्य पारलौकिक फलावाप्तौ नानुकूला इत्यर्थः। **तत्रहेतुः**—"तमोनिष्ठाहितास्स्मृता इति। प्रामाणिकैरिति शेषः। तमो निष्ठत्वञ्चोक्तरूपं तमोमूलत्वमेवेति।

ननु सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण स्थूलतत्तद्विशिष्टस्वात्मना परिणामोनसंभवति। "सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मेत्यादौ एवकारैकाद्वितीयशब्दै ब्रह्मणि सजातीयविजातीयस्वगतधर्माणां व्यावर्तनात् तस्य निर्विशेषचिन्मात्रतावगतेः। न च "सत्यं ज्ञानमनन्तं ब्रह्म-आनन्दो ब्रह्मे" त्यादिभिस्तस्य सत्यत्वादयो बहवोधर्माः प्रतीयन्त इति वाच्यम्। सत्यादिशब्दानामतद्व्यावृत्तिपरत्वेन विकारित्व जडत्व परिच्छिन्नत्वादि व्यावृत्तेरेव बोधनात्, तस्याश्च शौक्ल्यगतकार्ष्ण्यादिव्यावृत्तेरिव ब्रह्मस्वरूपानतिरेकादित्यत्राह—**उक्तेति**। सर्वशब्दोनिमित्तत्वेप्यन्वेति। आदिशब्दार्थश्च सहकारित्वम्। **शक्तेति**। घटोपादानादिभूत मृत्पिण्डादेरिव

"ப்ரம்மம் ஸவிசேஷமே (தன்மைகளுள்ளதே)"

उक्तங்களான ।सर्वोपादानत्वनिमित्तत्वादिகளாலே शङ्कितங்களான विकारित्व जडत्व प्रतिकूलत्व परिच्छिन्नत्वादिகள் கழிகைக்காக शोधकवाक्यங்களிலே सत्यत्वज्ञानत्वादि धर्मங்கள சொல்லப்படு

---

ब्रह्मणोपि जगदुपादानादित्वे विकारित्वादिकं स्यादिति प्रसक्तेत्यर्थः। तथा च ब्रह्मण उपादानत्वादिकं भवताप्यवश्यमङ्गीकार्यम्। तदभावेऽप्रत्यक्षे ब्रह्मणि विकारित्वादिशङ्कायाः प्रत्यक्षादिभिरप्यनुत्थानात् सत्यादिवाक्यानामप्रसक्तप्रतिषेधत्वमेवस्यादिति भाव । **विकारित्वं**—स्वरूपतएवावस्थान्तराश्रयत्वम्। **जडत्वं**—अस्वयम्प्रकाशत्वम्। आश्रयत्वनिरूपकत्वोभयसम्बन्धेन विषयताविशिष्टान्यत्वमिति यावत्। **प्रतिकूलत्वं**—दुःखरूपत्वम्। इदञ्चानन्दत्व प्रतिकोटिः। परिच्छिन्नत्वं—अत्रास्ति तत्र नास्तीति देशकृतः, इदानीमस्ति तदानीं नास्तीति कालकृतः, इदमेतदेवभवति तन्नभवतीति वस्तुकृतः सर्ववस्तुसामानाधिकरण्येन व्यपदेशानर्हत्वरूप इतियावत् इति यस्त्रिविधः परिच्छेदस्तद्वत्त्वम्। विकारित्वजडत्वादिव्यावृत्तिर्हि ब्रह्मणे तवाप्यभिमतैवेति भावः। नन्वभिमतास्तु ममापि सा व्यावृत्तिः अथापि कथं तावता ब्रह्मणस्सविशेषत्वसिद्धिरित्यत्राह—**शोधकवाक्येति**। उपादानकारणात्वादिव्याप्ततया ब्रह्मणि शङ्कितानां विकारित्वादीनां दोषाणां शोधनाय व्यावर्तनाय तत्प्रतिभटं सत्यत्वादिकं धर्मजातं तत्र विदधद्वाक्यं "सत्यंज्ञान" मित्यादिकं शोधकमित्युच्यते। तथा च यथा शुक्तौ शङ्कितरजतत्वादिधर्मव्यावृत्तिः तद्विपरीतशुक्त्यसाधारणशुक्तित्वादिधर्मकलापस्य तत्र परमार्थतस्स्वीकरण विना नोपपद्यते, तथा ब्रह्मण्यपि शङ्कितानां विकारित्वादीनां तद्विपर्ययभूत ब्रह्मासाधारणसत्यत्वादि कल्याणगुणगणस्य तत्र परमार्थतोभ्युपगमं विना निवृत्ति र्नोपपद्यत इति शङ्कानिवृत्तिं कामयमानैस्सत्यत्वादयो गुणा अपि तत्र यथार्थत एवेष्टव्याः। यच्चासत्यादिव्यावृत्तेर्ब्रह्मस्वरूपताबोधनाय शौक्ल्ये कार्ष्ण्यव्यावृत्तेराश्रयाभिन्नत्वमुदाहृतम्, तदपि तत्रापि तद्व्यावृत्तेश्शौक्ल्यगतासाधारणधर्मस्वरूपताया एवाङ्गीकारान्निरस्तमिति भावः। सत्यत्वं=निर्विकारत्वम्। आदिनाऽपरिच्छिन्नत्वानन्दत्वादीनां ग्रहणम्। अनेन कारणेन कारणान्तरैश्च परेषां पक्षं प्रतिक्षिपति—**इमानि वाक्यानीति**। सत्यादिवाक्यानीत्यर्थः। सत्यादिपदानां सत्य-

---

ஸாவ வயாபதி சொனனதில் அந்தா வயாபதியாவது—அவயவமுளள அவயவம் அற்ற வஸதுக்கள என்ற வாசியற—அவையுளள விடத்தில் இவனை இல்லை என்று கூற முடியாதபடி தடையற்று நீங்காதே நிறைநது நிற்கையாகும. இபபடியே இங்கு ஈச்வரனை ஒவவொரு வஸதுவிலும் நிறைநதவனுககக கூறியதும்—ஜ்ஞாநசக்தி முதலியன நிறைநத மையைபபறறியது எனக்கொளளவும் ஈசுவரனுடைய பரநதஸருபமும் அலப அளவுள்ள ஒரு வஸ்துவிலே அடஙகும என்னும் பக்ஷததில வெளியில வயாபதி அவனுககுச சொல்ல

கிறன வாகையாலே இவ வாக்யஙகள நிர்விசேஷபரஙகள் எனறு சொல்லும் பக்ஷம் பூர்வாபரஶ்ருத்யன்தர ப்ரமாணான்தர ஸ்வவசனவிருத்தமாம்.

"பகவான் மூவகையாலும் அளவிறந்தவன்"

अनन्तशब्दத்தில ஸங்கோசகமிலலாமையாலே த்ரிவிதபரிச்சேதமும் கழிக்கு மிடததில்—" यथा सर्व

---

त्वादिरूपस्वार्थप्रहाणेन लक्षणया स्वार्थविरुद्धोपस्थापनद्वारातद्व्यावृत्ति बोधकत्वात्, तदनन्तरं समानाधिकरण वाक्यस्य पदद्वयोपस्थापितविशेष्यस्वरूपमात्रैक्यबोधकत्वाच्च इमानि वाक्यानि निर्विशेषपराणीति तेषाम्प्रक्रिया। **पूर्वापरेति** विरुद्धशब्दस्य प्रत्येकमन्वयः। तैत्तरीयके आनन्दवल्यां—"ब्रह्मविदाप्नोतिपर"मिति प्रथम-वाक्ये निरतिशयबृहत्वाश्रयस्य वस्तुनः तद्वेदनस्य प्राप्तेः प्राप्यस्य चेत्यर्थचतुष्टयस्य प्रतिज्ञां कृत्वा तस्यामेवो परि क्रमेण तस्य विवरणात् तन्मध्यपठितस्य सत्यादिवाक्यस्य निर्विशेषपरत्वे पूर्वापरविरोधो दुर्वारः। एवं छान्दोग्यादिषु समानप्रकरणे "सदेवसोम्येदमग्र" इत्यारभ्य बहुभवनेक्षण सर्वज्ञत्व सर्वशक्तित्वादि समस्त-कल्याणाकरत्वाभिधानाच्छ्रुत्यन्तरविरोधोपि तथा। "निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि इदं प्रमाणमिति नशक्यते वक्तु" मित्युक्तरीत्या प्रत्यक्षादिप्रमाणानां निर्विशेषवस्तु बोधकत्वाभावात् प्रमाणान्तरविरोधोपि। नैयायिकबौद्धादिभिरात्मनां जडत्वबहुत्वक्षणिकत्वादिधर्मस्वीकारात् तत्खण्डनाय आत्मनि स्वयम्प्रकाशत्वैकत्व नित्यत्वादिधर्मान् कीर्तयत एवाद्वैतिनः आत्मनि निर्विशेषत्ववादस्स्वोक्तिव्याघातभग्न इति स्ववचनविरोधश्च-भवतीति भावः।

ननु सत्यत्वज्ञानत्वयोर्ब्रह्मणि निर्विकारत्वस्वयम्प्रकाशत्वाभ्यामुपपादनेपि नानन्तत्वं समधिगन्तुं शक्यम्। देशकालवस्त्वपरिच्छेदरूपस्य तस्य तेषामभावेनैवोपपादनीयतया, ब्रह्मव्यतिरिक्तनानावस्त्वङ्गीकारिणस्तव तदनु-पपत्तेरित्यत्र तथात्वेपि तदुपपत्तिमाह—**अनन्तशब्दे**। अन्तशब्दस्य परिच्छेदपरतया नञा तद्व्यावर्तने देशादिरूपेण त्रिविधस्यापितस्य व्यावर्तनमुत्सर्गतः प्राप्तम्। नञः प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्व-व्युत्पत्तेरिति तत्रापवादाभावेन नान्यतमस्याप्यन्तस्याव्यावर्तनरूपस्सङ्कोचो युक्त इत्यर्थः। शब्दस्य सङ्कोचो नाम—स्वेन शक्त्या प्रतिपादनार्हैकदेशाबोधकत्वम्। तत्प्रयोजकीभूतबाधादिस्सङ्कोचकः। सोत्रनास्तीतिभावः।

---

வொண்ணாது. அணுத்தனமை விபுததன்மைகளை ஈசுவரனுக்கு ஒருக்காலேயாதல் முன பின்னுக வாதல் கொண்டால பேதமும் அபேதமும உணடு எனற பக்ஷததைத்தளள முடியாது. எல்லாவற்றையும் வெளியில் சூழ்ந்துள்ளான என்று ஈசுவரனை உபநிஷத்து ஓதினதும் பொருத்தமுள்ள இடத்திலே யாகவேண்டுகையாலே—வெளிபபுறம் படைத்த விபுவலலாத வஸ்துக்களுக்கெல்லாம் வெளியில் சூழந்துள்ளான என்ற கருத்திலேயாகவேணும்.

गतोविष्णुः" என்கிறபடி सर्वदेशवर्तित्वसम्प्रतिपत्तियாலே देशपरिच्छेदराहित्यமும்,—"श्रीवत्सवक्षा नित्य-श्रीरजय्यश्शाश्वतोध्रुवः" எனகையாலே अप्राकृत विग्रहादि विशिष्टனுடைய कालपरिच्छेदराहित्यமும், "जगत्सर्वंशरीरन्ते" इत्यादिகளாலே सर्ववस्तुसामानाधिकरण्य योग्यतैயாலும, गुणविभूति व्यापारयोग्यतादिகளாலே தனனில अतिशयितवस्त्वन्तर மிலலாதமையாலும் वस्तुपरिच्छेदराहित्यமும सिद्धिக்கிறது.

---

तत्र प्रथमं देशापरिच्छेदमाह—यथेति । तथैवेयं द्विजोत्तमेति विष्णोस्सर्वदेशव्यापित्वस्य लक्ष्म्यास्तत्त्वे दृष्टान्तीकरणात् दृष्टान्ते च सर्वसम्प्रतिपत्तेरवश्यम्भावात्सम्प्रतिपन्नस्स एवांशो देशापरिच्छेदरूपो भवितुमर्हति । न देशात्यन्ताभव इति देशभेदान् स्वीकृत्यैव पूर्वोक्तरीत्या देशविशेषनिष्ठात्यन्ताभावाप्रतियोगित्वमेव स इति वक्तुं युक्तमित्याशयः । अथैवमेव ब्रह्मणः कालापरिच्छेदमप्युपपादयति—श्रीवत्सवक्षा इति । श्रीवत्साख्यो रोमावर्तविशेषोवक्षसि यस्य सः । तथैव पाञ्चरात्राद्यागमेषु प्रसिद्धेः । शाश्वतः=शश्वद्भवः चिरकालस्थायीतियावत् - किन्देवादीनामिवौपचारिकमस्यतत्? नेत्याह—ध्रुवः=नित्यः । अप्राकृत विग्रहादिविशिष्टेति । आदिनेश्वरत्वादि परिग्रहः । स्वरूपतो नित्यत्वस्य जीवादितत्त्वान्तरसाधारण्येन तदुक्तेर्भगवत्युत्कर्षानाधायकत्वात् श्रीवत्सवक्षस्त्वा-दिरूपेण तद्वाच्यम् । तथा च तेषां दिव्यमङ्गळविग्रहगतत्वेन तद्विशिष्टस्यैव तस्य नित्यत्वं फलिष्यतीति भावः । अथ तृतीयं वस्त्वपरिच्छेदमपि द्विधा दर्शयति—जगत्सर्वमिति । सर्ववस्तुसामानाधिकरण्ययोग्यतेति । "ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयोदिशश्च । नद्यस्समुद्राश्च स एव सर्वं यदस्तियन्नास्तिच-विप्रवर्येत्याद्युक्तरीत्या ब्रह्मवाचकशब्दैरपि समं सर्ववस्तुवाचकशब्दानां शरीरात्मभावनिबन्धनतया समानाधिकरण प्रयोगयोग्यत्वमित्यर्थः । अत्र योग्यतेतिकथनात्—कदाचित्—"विष्णोरेता विभूतय" इति निष्कर्षविवक्षया व्यधिकरणप्रयोगोप्यस्तीति सूच्यते । नन्वेवं सति सम्प्रदायविरोधः । वस्त्वन्तराभावेनैव तदपरिच्छेदस्य वक्तव्य-त्वात् । तथाच प्रकृत्यधिकरणेभाष्यं—"ब्रह्मव्यतिरिक्तवस्त्वन्तराभावादित्या"दि—इति चेन्न । तत्पक्षस्या प्यत्रैव पर्यवसानात् । अनुपदमेव न्यायसिद्धाञ्जनश्रीसूक्त्या एतदर्थस्य विशदीकरिष्यमाणत्वात । अस्मिन्नेव न्यायसुदर्शनकारादिसम्मतं पक्षान्तरमपिदर्शयति—गुणविभूतीति । गुणाः = ज्ञानशक्त्यादयः । विभूतिः = ऐश्वर्यम् । जगदीश्वरत्वमित्यर्थः । व्यापारः = सृष्ट्यादिः । एतेषां योग्यता = अयोगव्यवच्छेदः । ईश्वरेण

---

காலததால் அளக்க முடியாதவன என்ற விடத்திலும் வருமாறு கருத்துக்கொள்ள வேணும். அதாவது—ஸ்வரூபம் நித்யமானது என்பது ஸாவத்ரவ்யத்துக்கும் பொதுவாகை யால் ஈசுவரனுக்குத் தனிச்சிறப்பாகாது. ஜ்ஞாநாதிகுணம் நித்யம் எனபது நித்யஸூரி களுக்கு முண்டு ஆகையால ஈசுவரனை வேடத்துடன் நித்தியத்துவம் தான் அதன் கருத்து. நேர் எதிர்மறைகளால் (இது உண்டெனில் அது உண்டு அன்றேல் இல்லை

"ஈச்வரனின் ஸர்வதேச வ்யாப்தி"

सर्वव्यापि சொன்னவிடத்தில் अन्तर्यामियावது — निरवयवங் களோடு सावयवங்களோடு வாசியற அவையுள்ள விடத்தில் இவன் இல்லை என்னுதபடி प्रतिघातமற்று நீங்காதே நிற்கை

---

कदाचिदवतारदशायां स्वैश्वर्यादिगुणगणतिरोधानेपि सर्वथा तदसंबन्धाभावेन तद्योग्यताया अनपायात्, अन्येषां जीवादीनां तद्योग्यताया अप्यभावेन तद्दशायामपीश्वरो निस्समाभ्यधिक एवेति दर्शयितुं "योग्यतादीत्यादि- कमभ्यधायि। योग्यतादीत्यादिना दिव्यमङ्गळविग्रहादिपरिग्रहः। अत्र—स्वस्मात् अतिशयितवस्त्वन्तरमितित्यस्य स्वव्यतिरिक्तं वस्तु इत्येवार्थः। नतु स्वोत्कृष्टवस्त्वन्तरमिति। तथासति स्वोत्कृष्टवस्त्वन्तराभावेपि स्वतुल्यवस्त्वन्त राभ्युपगमेन वस्तुपरिच्छेदराहित्यासिद्धेरिति केचिद्व्याचक्रुः। तन्न। तथासति अस्यापि पक्षस्य पूर्वोक्ते वस्त्व- न्तराभावकृतवस्त्वपरिच्छेदपक्षएव पतितत्वेन पक्षान्तरसमुच्चयसूचकापिशब्दविरोधापत्तेः। अतिशयितान्तरशब्द- योरेकस्य व्यतिरिक्तार्थकत्वेऽपरस्यवैयर्थ्यापत्तेश्च। "·····व्यापारयोग्यतादिभिः स्वस्मात् अतिशयितवस्त्वन्तर" मितितृतीयार्थहेतुताया अतिशयितशब्दार्थव्यतिरेकेऽनन्वयाच्च। नह्येभिराकारैरिदं तस्माद्भिन्नमिति व्युत्पन्नाः प्रयुञ्जते। व्यतिरेकरूपस्य भेदस्याखण्डस्यनित्यस्याहेतुसाध्यत्वादन्यानिरूप्यत्वाच्च। प्रत्युत किञ्चिदवधिकोत्कर्ष- स्यैव हेत्वादिसापेक्षत्वम्। तस्मात्-अतिशयितवस्त्वरं स्वोत्कृष्टं वस्त्वन्तरं नास्तीत्येवार्थोयुक्तः। तर्हि-स्वसदृश- वस्त्वन्तराप्रतिक्षेपात् ब्रह्मणोनेन वस्त्वपरिच्छेदः कथं सेत्स्यतीति चेत् - न - गुणविभूत्यादिभिस्स्वाधिकवस्त्वन्त- राभावस्यैव वस्त्वपरिच्छेदात्मकतया तत्सिद्धैव तत्सिद्धेः। यथा ब्रह्मणः—"यथासर्वगतो विष्णु"रित्यादिना गगनादिवत् सर्वदेशव्यापित्वमात्रसिद्धावपि सर्वान्तर्यामितादेरन्तर्यामिब्राह्मणादितस्सिद्धिः, तथैवानेनाधिकनिषेधमा- त्रसिद्धावपि—"न तत्समश्चाभ्यधिकश्चदृश्यते—नत्वत्समोस्त्यभ्यधिकः कुतोन्यः" इत्यादितस्समान्तरनिषेध- स्यापि लाभात् अनेनैव तत्सिद्धिनिर्बन्धाभावात्। अधिकनिषेधस्यैव वस्त्वपरिच्छेदरूपत्वं न्यायसिद्धाञ्जने स्पष्टं दृश्यते—"वरद नारायणभट्टारकैस्तु एवमुक्तंन्यायसुदर्शने—वस्तुपरिच्छेदोनाम"—इयद्गुणकः इयद्वि- भूतिमान्—"इत्येवं विधो व्यवहारः, तद्रहितं ब्रह्म। वस्त्वन्तरसद्भावो वा वस्तुपरिच्छेदः, तद्रहितञ्च ब्रह्म। ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मशरीरत्वात् तद्व्यतिरिक्तं किञ्चिदपि नास्तीति अयमसौ न भवतीति व्यवहारो नतस्या-

---

என்னலால்) ஒன்றுக்கு ஒன்றைக் காரணமென அறுதியிட வேண்டியிருக்க, நிதய விபுவான ஈசுவரன் விஷயத்தில் எதிர்மறை (இல்லை என்னல்)யும் அதன் ஸந்தேஹமும கூட நடவா திருக்க எபபடி காரணத்துவம் உண்டென்னலாம் எனனில? உலகில் ஒன்றைக் கண்ணல் கண்டு நாம் நிர்ணயிப்பதுபோலன்றிக்கே—அந்நிய நிரபேக்ஷமாக பரமாணமான வேதத் தினல்-ஈசுவரன் ஒருவன் உண்டு எனக்காட்டும் ஆதாரததினல-அவனுககுககாரணததும

இதில் प्रतिवस्तु पूर्णत्वम् ज्ञानशक्त्यादि सङ्कोचाभावத்தாலே கண்டு கொள்வது. ஈச்வரனுடைய सर्वव्याप्तस्वरूपமும் அல்பபரிமாணமான ஏகத்திலேயடங்கும் என்னும் பக்ஷத்தில बहिर्व्याप्ति சொல்ல வொண்ணாது. अणुत्वविभुत्वादिகளை अघटितघटनाशक्तियாலே ஒருக்காலேயாதல் क्रमத்தாலே

मवस्थायां प्रवर्तत इत्यर्थः । तथाच भाष्यकारः ब्रह्मव्यतिरिक्तवस्त्वन्तराभावादिति । अयमेवार्थो नारायणार्यैरप्युक्तः—"गुणैरियत्ताराहित्याद्वस्तुनोऽपरिच्छिन्नत्वञ्चावगम्यत" इति । अत्र–इयद्गुणक इत्यादिपक्ष एव प्रायश्श्लाघ्यः । एतदुक्तं भवति–स्वरूपतो गुणतो विभूतितोवा केनचिदाकारेण कुतश्चिदपकर्षो वस्तु परिच्छेदः । वस्तु परिमाणमिति श्रुतप्रकाशिकापक्षो प्येतदन्तर्गतः । तथावस्त्वन्तराभावपक्षोपि । सहि सर्ववस्तुसामानाधिकरण्यनिबन्धनं सर्वशरीरत्वेन सर्वात्मत्वमिति नियमनादि गुणकाष्ठैवेति । तदेवमत्यन्तभिन्नानन्तवस्तुसत्यत्वेपि ब्रह्मणस्त्रिविधपरिच्छेदराहित्यमुपपन्नमिति ।

अथ भगवतस्सर्वव्याप्तेः—"अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणस्स्थित" इत्यादौ बहिरन्तर्देशभेदेन द्वैविध्यप्रतिपादनात् तदधिकृत्य शङ्का जायमाना उपरि क्रमाद्वाक्यपञ्चकेन परिहरिष्यन् प्रथमं निरवयवेष्वणुपरिमाणेष्वात्मसु–तादृशेषु ज्ञानादिविभुद्रव्येषुच कथमीश्वरस्यान्तर्व्याप्तिस्स्यात्? अन्तः प्रदेशाभावात्तेषाम् । भावेवा-तेषां निरवयकत्वमेव हीयेतेत्याशङ्कायां निरवयवेष्वन्तर्व्याप्तिस्वरूपं निष्कर्षयति—सर्वव्याप्तीति । यद्यप्यात्रान्तर्व्याप्तेरेव निर्वाह्यत्वात् प्रथम—"अन्तर्व्याप्ति" इत्येव वाक्यमुपक्रान्तुमुचितम् । नतु—"सर्वव्याप्ति स्थले अन्तर्व्याप्ति" इति । अथाप्यन्तर्व्याप्तिबहिर्व्याप्त्योस्सर्वव्याप्त्यवान्तरभेदत्वलाभाय तथोक्तिः । अन्यथा तडागादिनिमग्नघटादौ जलस्येव जगत्यपि ब्रह्मणोबहिरन्तर्व्याप्तस्य क्वचिद्व्याप्तावप्यदोषात् अन्तर्व्याप्ति र्यथाश्रुतैवास्तु इति शङ्कासमुत्थानात् । तडागादौ जलादिर्हि घटादिकं बहिरन्तश्च व्याप्नुवानोपि न घटादिसंस्थानादावन्तः प्रविश्य तिष्ठति । घटादिः नैयायिकमते यदवच्छेदेन कपालदेशमधितिष्ठति, सिद्धान्ते पुञ्जघटकानणून्वा तदवच्छेदेन तं तेन सह जलादिर्नाधि तिष्ठतीतियावत् । मूर्तयोस्समानदेशताविरहात् । ततश्चात्र ब्रह्मण स्सर्वव्याप्त्युपपादनायैव बहिरन्तर्व्याप्तिद्वयस्य तदवान्तरभेदतयोपवर्णनात् जलादीनां घटादाविव ब्रह्मणो

என ஓர் முனனிருக்கும் தன்மையும் உண்டெனத் தெரியலாகும். நித்ய விபுவான பொருள்களுக்கும் ஸ்வபாவசங்கோசமில்லை மாறுபாட்டினால் அங்கங்கு குறிப்பிட்ட நாநாவித காரியஹேதுத்துவம் கூடும்.

வஸ்துவால வரும அளவில்லை இவனுக்கு எனபதைச சிலர்-இவனினும் வேறுபட்ட வஸ்து வில்லை எனபதாலும், எல்லாம இவனே எனபதாலும நிர்வஹிப்பார்கள். அப்போது ப்ரத்யக்ஷாதி ஸகல ப்ரமாணங்களும விரோதிக்கும். ஸர்வ சரீரமுடைய இவனை அமலன

யாதல் கொண்டால் भेदाभेदपक्षங்களைக் கழிக்கவிரகில்லை सर्वத்துக்கும் बहिर्व्याप्तन என்னு மிடம் सम्भविக்கு மிடத்திலே யாக வேண்டு கையாலே बाह्यप्रदेशமுள்ள வற்றுக்கெல்லாம் बहिर्व्याप्तன் என்கிறது.

---

जगति क्वचिदव्याप्तिसहतया नेदं द्वयं यथाश्रुतं निर्वाह्यम् । अपितु वक्ष्यमाणयैव दिशेति सिद्ध्यति । सावयवाः । अवयवसङ्घातात्मका घटादयः । अत्र सावयवोपादानं दृष्टान्तार्थम् । यद्यपि सावयवेष्वन्तः प्रदेशसद्भावात् तत्र यथाश्रुतमेवान्तर्व्याप्तिर्निर्वोढुं शक्या । तथापि अनुपदमुक्तरीत्या ब्रह्मण एतावतापि सर्वदेशसम्बन्धरूपसर्वव्याप्तिर्नसेत्स्यतीति तत्रापि परिष्कारोविधेय एवेति तद्रीतेरेवाणुविषयेप्यादरणीयत्वमितिभावः । तथाच सावयवा घटादयः निरवयवा अण्वादयश्च यत्र यदवच्छेदेन वर्तन्ते, तत्र तदवच्छेदेनैव ब्रह्मापि स्वयममूर्ततयाऽप्रतिहतं सदपृथक्सिद्धिसम्बन्धेन तैस्सह वर्तत इति सोयमंशोऽन्तर्व्याप्तिरितिकथ्यते। तदभाववत्यपि देशेवर्तनं बहिर्व्याप्तिरिति । तथा च ब्रह्मणस्सर्वदेशनिष्ठात्यन्ताभावाप्रतियोगित्वरूपा सर्वदेशव्याप्तिरनेनांशद्वयेनैवं विभज्योपपाद्यत इति भावः । अत्रप्राञ्चस्त्वाचार्या आहुः — "बहिरन्तश्च तद्व्याप्तिस्तत्र, यत्रोऽभयं भवेत् । विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयोः ॥ विभोर्नच्छिद्रमणुना नाणूनां विभुना च तत् । यथा प्रमाणं सम्बन्धमात्रमेव तयोर्भवेत् ॥ इति । एषामयमाशयः—बहिर्व्याप्तेर्बहिःप्रदेशवत्स्विवान्तर्व्याप्तेरपि तद्वत्स्वेव नियन्त्रणं न्याय्यम् । तथा च मध्यमपरिमाणवद्घटादिविषय एव व्याप्तिद्वयमपिवक्तव्यमिति । अत्राचार्यचरणानामभिसन्धिस्तु—बहिर्व्याप्तेर्विभुषु बहिः प्रदेशाभावेनासंभवेपि, अन्तःप्रदेशरहितेष्वपि अणुषूक्तरीत्याऽन्तर्व्याप्तिसंभवे तदुपेक्षणं नोचितम् । अन्यथा सिद्धान्ते घटादीनामप्यणुपुञ्जमात्रत्वेन तस्य च प्रत्येकाण्वनतिरेकात् मध्यमपरिमाणघटादिविषयेप्यन्तर्व्याप्तेरत्यन्तोच्छेदापत्तेरिति । नन्वीश्वरस्याण्वन्तर्व्याप्तिः विभुबहिर्व्याप्तिश्चकथञ्चिद्यथाश्रुतएवोपपादनीये । अन्यथा—"अणोरणीयान् महतो महीयान् आत्मास्य-जन्तोर्निहितोगुहाया"मिति श्रुतिविरोधप्रसङ्गात् । अणोरणीयस्त्वं तदन्तर्वर्तित्वात्, महतोपि महीयस्त्वं तद्बहिर्वर्तित्वादित्येव खलुवक्तव्यमितिचेन्न । अणीयस्त्वश्रुतेरतिसूक्ष्मत्वरूपप्रतिघातानर्हत्वविवक्षया प्रवृत्तत्वात् । एवं

---

என்றும் போது-உலகத்தோர் படியில் இவனுக்கு தோஷங்கள் இல்லை. மேலும் தன்னை யடைந்தாரின தோஷங்களையும் போககுவன என்று மற்றவற்றுக்கும் சேரபொருள்கொள்ள வேணும்.

இவவிதம் காரண, லக்ஷண, பேத, அபேத, கடக சோதந விஷய வாககியஙகளாலே தேரின—பரிசுதத பரிபூரணரஸமய பகவத் ஸ்வரூபமாகும் பாற்கடலில பகதி பரபததி மூல மாக இறங்கி எஙகும அனுபவிக்கப்பாரிக்கும் அதிகாரிகளும திவய குண விகரஹாதிகள

महीयस्त्वस्यापि ब्रह्माव्याप्तदेशाभावे तात्पर्यात् । तदुक्तमाचार्यैः—" अणोरणीयान् महतः महीयानितिचागमः । अव्याप्तदेशोनास्तीतिह्यतिसूक्ष्मत्वतत्पर " इति ।

नन्वीश्वरस्यसर्वदेशेषु व्याप्तिः किं संख्यादित् व्यासज्यवर्तनाद्भवति? आहो प्रतिवस्तु परिसमाप्य? । आद्ये एकैकघटपटमेळनजनितद्वित्वादेर्यथा घटे पटेवा—"इमौद्वौ" इति न परस्परनिरपेक्षस्वप्रतीतिजनकत्वं, किन्तु द्वयोस्समुदाय एव, तथैव ब्रह्मणोपि "ज्योतींषि विष्णुर्भुवनानि विष्णु"रिति निरपेक्ष प्रातिस्विकप्रतीति जनकतां विहाय, सामस्त्येन "सर्वं विष्णुरि"ति रीत्यैव निर्देष्टव्यत्वं स्यात् । द्वितीयेपि—बहुचिन्तनीयं भवति । सिद्धान्ते संस्थानातिरिक्तजात्यनङ्गीकारात् । संस्थानस्य च प्रतिव्यक्तिभिन्नत्वेन सर्वगत ब्रह्मणि तद्दृष्टान्तीकरणायोगात् । दृष्टान्तमन्तरा ब्रह्मणि बुद्ध्यवतरणानुपपत्तेः । न च गगनादिकं दृष्टान्तः, तस्य सर्वगतत्वेपि प्रतिवस्तु पूर्णत्वाभावात् । तत्र तत्र तत्प्रदेशविशेषस्यैव सद्भावप्रतीतेः । ब्रह्मणस्तु सर्वगतस्यैव प्रतिवस्तु पूर्णतापि श्रूयते—"रूपं रूपं प्रतिरूपोबभूव' 'पूर्णमदः पूर्णमिदं" इत्यादौ । अपाततस्तु भयमिदं विरुद्धं प्रतिभाति । यतोत्र पूर्णत्वं–अत्रैव विद्यमानत्वेसत्यन्यत्राविद्यमानता । एतेन जात्यङ्गीकारेपि न निस्तार इति सूच्यते । तत्रापि प्रतिवस्तु पूर्णताकथं इति शङ्कोदयात् । तत्कथं–ब्रह्मात्रापि पूर्णमन्यत्रापि पूर्णमित्युच्यत इति । अत्राह–इदिलु इति । सर्वव्याप्तत्व इत्यर्थः । इदञ्च सर्वव्याप्तिप्रतिवस्तुपूर्णतयोर्विरोधाभिमानद्योतनाय । ज्ञानशक्त्यादीति । अत्रापि प्रतिवस्तु इति पदमनुवर्तते । अत्रायमर्थः–भगवतः प्रतिपदार्थं पूर्णता न तत्रैव तत्स्वरूपसमाप्तिः । येनोक्तरीत्या विरोधोभवेत् । किन्तु सर्ववस्त्ववच्छेदेनापि ब्रह्म वर्तमानं समस्तकल्याणगुणादि पूर्णमेवेति तत्तात्पर्यम् । तथाचन वस्तुनि वस्तुनि ब्रह्मस्वरूपपूर्तिः अपितु तदीयगुणपूर्तिरित्युक्तं भवति । यथाश्रुते विरोधादिति । इदञ्च भगवदवतारेषु परिमितविग्रहान्तरवस्थितस्यापि महामहिमत्वश्रवणाद् ज्ञायते । यथा—" जगत्सशैलं परिवर्तयाम्यहम् "—"अङ्गुल्यग्रेण तान् हन्यामित्यादि । अत्रकेचित्–पराभिमतजात्यादिदृष्टान्तेन कार्तवीर्यादिवत् यथाश्रुतमेव प्रतिवस्तु पूर्णत्वं भगवति प्रतिपादयन्ति । अत्रेदं चिन्त्यम्—कार्तवीर्यादेस्सौभर्यादिवदनेकशरीरपरिग्रहेण युगपदनेकदेशस्थितावपि प्रतिवस्तु पूर्णता तस्य भगवत इवास्तीत्यत्र नकिञ्चित्प्रमाणम् । एवं जातिदृष्टान्तोप्यनुपयुक्त एव । सिद्धान्ते तदनङ्गीकारात् । तदङ्गीकर्तृपक्षेपि-जातेर्वाकथं परिसमाप्य प्रतिवस्तु पूर्णतेतिशङ्कानतिवृत्तेः । तस्मादाचार्योक्त रीतिरेववरम् । जात्यङ्गीकर्तृभिरपि तस्याः प्रतिवस्तुपूर्णत्वं–तस्याः प्रतिव्यक्ति निरपेक्षपरिपूर्णस्वव्यवहारहेतुत्वमेवेति ब्रह्मण इववक्तव्यम् । अन्यथा यथाश्रुते विरोधात् । अस्तिहि जातेस्तादृशव्यवहारहेतुत्वम् । "इयंगौः–इयमपि गौरि त्यादिरीत्या प्रतिपदार्थं परस्परनिरपेक्षस्वव्यवहारजननात् । द्वित्वादेस्तु नतादृशता । प्रतिवस्तु पूर्णतया द्वित्वव्यवहारायोगात् । द्वयोर्हि सहितयोर्द्वित्वव्यवहारयोग्यतेति ।

एवं ब्रह्मणः प्रतिवस्तु पूर्णताया यथाश्रुतं स्वीकारपक्षे तस्यास्सर्वव्याप्तिविरोधवत्, तस्याल्पपरिमाणेपि वस्तुनि अन्तस्समाप्तिस्वीकारक्षेपि बहिर्व्याप्त्यविरोधमाह—**ईश्वर इति । सर्वव्याप्तस्वरूपमपि** इत्यपि-कारः— अल्पपरिमाणवस्त्वन्तस्त्वरूपसमाप्तेस्सर्वव्याप्त्यविरोधसूचनार्थः । जातिवत्परिसमाप्यवृत्तित्वस्वीकारादिति भावः । अत्र–अणोरणीयस्त्वश्रुतेः, श्रीवकुळाभरणसूरिगाथायां—" अतिविस्तृतशीतळसलिलनिधौ प्रतिजलबिन्दु अतिविशालाण्डमध्य इवेश्वरः अन्तः परिसमाप्यवर्तत " इति पूर्वाचार्यैर्व्याख्यातत्वात्, सोपपत्तिकतया तस्यार्वाचीनैर्विवृतत्वाच्च सर्वव्याप्तस्य परममहतोपि परमात्मनः अल्पपरिमाणजलबिन्द्वादिष्वपि अन्तस्सविकासं वर्तनं वक्तव्यमिति पूर्वपक्ष्याशयः । तदुक्तं माघकविनापि—" युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुद " इति । तदिमं पक्षं बहिर्व्याप्तिविरोधेन दूषयति—**बहिर्व्याप्तीति** । अल्पपरिमाणवस्त्वन्तरपि महापरिमाणेश्वरस्वरूपस्य सविकासं परिसमाप्त्यङ्गीकारे तस्याल्पादप्यल्पतरत्वप्रसङ्गेन तदाश्रयवस्तुनोबहिरसत्त्वापत्त्या बहिर्व्याप्तिर्नतस्य स्यादित्यर्थः । अणोरणीयस्त्वश्रुतिस्तु पूर्वमेवैतदविरोधेन व्याख्याता । यत्तु जलबिन्द्वादिष्वीश्वरस्यसविकास स्थितिकथनं, न तत्तत्स्वरूपसमाप्तिविषयम् । किन्तु भगवद्विग्रहादीनां सङ्कोचविकासशक्त्यभिप्रायमेव । यथा सागरमुत्तरतोहनूमतस्सुरसासिंहिकाद्यास्यप्रवेशनिष्क्रमादौ । तथा च सर्वार्थसिद्धिः–" विश्वान्तर्वर्तिबालोदरगतमखिलं कस्यविश्वासभूमि"रित्यत्र—" तत्तत्प्रकरणपरामर्शेन मिथ्यात्वपरिहारे सिद्धे विरुद्धवत्प्रतिपन्नं सर्वमविरुद्धावस्थाविशेषादिव्यवस्थया निर्वोढुंशक्यम् । तत्र भगवद्विग्रहविभूतीनां संकोचशक्तिर्विकासशक्तिस्तत्तदभिमानविषयसजातीयोत्पादनशक्तिस्सूक्ष्मस्थूलावस्थाभेदः परिमितविग्रहादिव्यङ्ग्यापरिमितस्वरूपलक्षणमित्यादिकं यथार्हमवधारणीयम् ।....वस्त्वन्तरादृष्टवैचित्र्यमात्रेण विरोधशङ्कायां सर्वत्रातिप्रसङ्गस्स्या"दिति । एवं तत्र तत्र भगवत उदरे सप्तलोकीग्रसनस्थापनादिकथनमपि रसोक्तिरूपत्वान्नार्थस्थितौ प्रमाणं भवितुमर्हति । "अत्ता चराचरग्रहणा"दित्यत्रात्तृशब्दस्येव तेषां संहाराद्युपचरितार्थकत्वात् । तदुक्तं–कस्योदरे हरविरिञ्चिमुखप्रपञ्च इत्यत्र **स्तोत्रभाष्ये**—प्राकृतप्रळयदशायां हरविरिञ्चादिरूपेण लक्ष्यमाणश्चिदचिदात्मकः प्रपञ्चः कस्योदरे=त्वदन्यस्य कस्यान्तस्सूक्ष्मतयाऽवस्थित इत्यर्थः ।...." ग्रसेत्संहारसमये....इत्यत्र ग्रसनशब्दवच्चात्रोदरशब्द औपचारिक " इति । **अत्रकेचित्**—इह पूर्ववाक्यवत् इदमपि वाक्यं भगवतः प्रतिवस्तु पूर्णताया एव पुनः प्रतिष्ठापकम् । नान्यविषयव्यवस्थापकमिति रीत्या व्याख्यान्ति । तन्न । अणुविभुसाधारण्येनोच्यमानप्रतिवस्तु पूर्णतातः अल्पपरिमाणवस्त्वन्तर्वर्तनस्यात्र विचार्यमाणस्यात्यन्तभेदात् । नन्वीश्वरस्य—" परास्य शक्ति र्विविधैव-श्रूयत " इत्यादिनाऽन्यत्राघटमानमपि स्वस्मिन् घटयितुं सामर्थ्यमस्तीत्यवगमात् सोऽण्वन्तरपि सविकासमास्त एवेति अणुत्वविभुत्वोभयमपि तस्मिन्नङ्गीक्रियतामित्यत्राह—**अणुत्वविभुत्वादीति** । तस्यासर्वथाऽसंभवाभिमाने-

"காலத்தால் அளவிடமுடியாமை"

காலபரிச்சேதமில்லை என்கிற விடத்தில் सर्वद्रव्यத்துக்கும் स्वरूपनित्यत्वம் ஸமானமாகையா லும், धर्मभूत ज्ञानादिनित्यत्वம் नित्यसूरिகளுக்கு முண்டாகையாலும், ईश्वरனை வேஷத்திலே नित्यत्व ஞ்சொல்லுகிறது. अन्वयव्यतिरेकங்களாலே कारणत्व மறுதியிட வேண்டியிருக்க व्यतिरेकग्रहण

त्वाह—**क्रमेति** । वामनत्रिविक्रमन्यायादिति भावः । **भेदाभेदपक्षेति** । तत्रापि तदुभयशक्तेर्भगवत्यङ्गीकार-संभवादितिहृदयम् । वामनस्यैव त्रिविक्रमत्वेपि न परमात्मस्वरूपे वृद्धिह्रासौ । अपितु तद्विग्रह एवेत्यपिबोध्यम् । यदीश्वरस्वरूप एव क्रमेणाणुत्वविभुत्वकल्पना, तदा प्रथममणुभूतस्य पश्चाद्विभुत्वं किं पिण्डस्य घटात्मतायामिव स्वरूपशैथिल्यादिना भवति ? किंवा पटवदुत्तरोत्तरावयववेष्टनात् भवति ? तदुभयमपि न युक्तम् । नित्यनि-र्विकारत्वादीश्वरस्य निरवयत्वाच्चेति । एवमियता प्रघट्टकेनान्तर्व्याप्तिं परिशोध्याथबहिर्व्याप्तिमपि विचारयति—**सर्वेति** । "असन्निकृष्टवाचाच द्वयमत्रजिहासितम् । तादृूप्येण परिच्छित्तिस्तद्विपर्ययतोपिवेति श्रुतोरपि प्रत्यक्ष-बाधितेऽर्थे प्रामाण्यायोगात् कालधर्मभूतज्ञानादीनां विभूनां बहिर्देशविरहेण तद्विषये सा व्याप्तिरीश्वरस्य नैववक्त-व्येत्यर्थः । ईश्वरस्य स्वधर्मभूतज्ञानाद्बहिरपिवर्तमानत्वे तदीयप्रदेशविशेषस्य स्वज्ञानासंयुक्तत्वेन तदविष-यत्वात् तस्य स्वस्मिन्नकृत्स्नवेदित्वेन सर्वप्रत्यक्षयितृत्वादिगुणहानिश्चस्यादिति विभावनीयम् । **बाह्यप्रदेश वन्तः**—विभुव्यतिरिक्ता अणुघटादयः ।

एवं देशापरिच्छेदश्चिन्तितः अथकालापरिच्छेदमप्याह—**कालपरिच्छेदेति** । **सर्वद्रव्येति** । प्रकृ-त्यादौ महदादिविकाराणां काले क्षणलवादिपरिणामानाञ्चानित्यत्वेपि स्वरूपनित्यत्वाङ्गीकारान्न तन्मात्रं काला-परिच्छेदः । तेनेश्वरोत्कर्षासिद्धिरित्यर्थः । अस्तु तर्हि नित्यासङ्कुचितज्ञानवत्त्वादिकं कालापरिच्छेद इत्यत्राप्याह **धर्मभूतज्ञानादिनित्यत्वेति** । आदिनाऽपहतपाप्मत्वादिपरिग्रहः । तथा च तथोक्त्या बद्धमु[illegible]या ब्रह्मणः किञ्चिदुत्कर्षसिद्धावपि नित्यसाधारणेन तेन न तस्य सर्वोत्कर्षसिद्धिरित्यर्थः । यद्यपि " सत्यं ज्ञानमनन्तं ब्रह्मे"ति केवलस्यैव ब्रह्मणः कालापरिच्छेदश्श्रूयते । तथापि तस्यैवेश्वरत्वमप्यन्यत्रश्रुतमिति तद्विशिष्ट एतद्विशिष्टय बोध्यम् । अत्र-अप्राकृतविग्रहविशिष्टत्वेनेत्यपि बोध्यम् । पूर्वं मूले तथापि कथनात् । पूर्वं सामान्यतः कथनेऽपि

இறங்கும் துறைகளாகும். அக்குணங்களுக்குள்ளே எந்நிலையிலேயும் தொடரும் ஜ்ஞாநசக்த் யாதிகளான ஆறு குணங்களின நிலையும், அவ்வாறு முதலாக வந்த ஸௌசீல்யம் முதலிய குணங்களாகிற சிறநிலைகளின இருப்பும் பாஞ்சராத்ர சாஸ்த்ரங்களிலே காணலாம். பகவா னுடைய நித்ய விபூதியின நிரூபணததிலே (அப்ப்ரகரணத்திலே) பகவானின் திருமேனி நிதயமாக இருக்கும் படியைச்சொன்னோம். எம்பெருமானின ஸ்வரூபம் போல் அவனது

மும व्यतिरेकसम्भावनैயுமில்லாத नित्यविभुவான वस्तुவுக்கு कारणत्वம் கொள்ளும்படி என ? என்னில் लौकिककारणविशेषங்களுக்குப் போலன்றிக்கே अन्वयव्यतिरेक निरपेक्षமாக धर्मिग्राहकத்தாலே नित्यविभु வுக்கும் नियतपूर्वभावित्वलक्षण कारणत्व மறியலாம. स्वरूपसहकारि वैषम्यத்தாலே नित्यविभुக்களுக்கு कार्यविशेषप्रतिनियमமும் கூடும்.

---

अत्र सहेतुकं विवरणान्नपुनरुक्तिः । नन्वीश्वरस्य देशकालाभ्यामपरिच्छेदे ताभ्यामेवनिरूप्यमाणस्य व्यतिरेकस्य प्यभावेन नित्यविभोस्तस्य कथं कार्यविशेषम्प्रतिकारणत्वग्रह इति शङ्कते—**अन्वयव्यतिरेकेति** यत्सत्त्व एव यत्सत्त्वमिति कारणस्य कार्यसत्ताव्यापकसत्ताकत्वमन्वयः । यदभावे यदभाव इति कार्याभावव्यापकीभूताभाव-प्रतियोगित्वं व्यतिरेकः । न च कार्याभावम्प्रति सामग्र्यभावस्यव व्यापकता । न तु कारणाभावस्य । तेषां भिन्नत्वेन कार्याभावम्प्रति परस्पराभावस्य व्यभिचारादिति वाच्यम् । कार्याभावप्रयोजकीभूताभावेत्यादिरीत्या निष्कर्षात् । कार्याभावव्यापकसामग्र्यभावस्यापि तत्र तत्रकारणविशेषाभावायत्तत्वेन सर्वेषामपि तेषां यथायथं कार्याभावप्रयोजकताया अक्षतत्वात् । अन्वयमात्रस्यकारणत्वनियामकत्वे सर्वत्र सतां प्रमेयत्वादीनामपि कार्य-सामान्यकारणत्वम्प्रसज्येत । तथा व्यतिरेकमात्रस्य तथात्वेपि सर्वत्रासतां शशविषाणादीनामपि तथाभावः प्रसज्येतेति अन्वयव्यतिरेकोभयवत्त्वस्यैव कारणत्वनिश्चायकत्वं वाच्यमित्याशयः । **व्यतिरेकग्रहणं**=तदभाव-निश्चयः । ननु यत्र दण्डादिभिर्घटाद्युत्पत्तिदर्शनम्, तत्र तेषां तत्कार्यत्वनिश्चयाय नव्यतिरेकनिश्चयोऽपेक्ष्यते । प्रत्यक्षतस्तत्सद्भावप्रतीत्या तदभावनिश्चयायोगात् । किन्तु-यद्यत्र दण्डादिर्नस्यात्, तदात्र घटादिरपि न स्यात्, इति तद्व्यतिरेकारोप एव । तथा च तद्वत्प्रकृतेऽपि ब्रह्मणो व्यतिरेकारोपस्संभवत्येवेत्याशङ्कायामाह—**व्यतिरेक-सम्भावनेति** । आरोप इत्यर्थः । तथाचान्यत्र प्रसिद्धदण्डाद्यभावस्य तत्रारोपसंभवेपि प्रकृते नेश्वराभावस्य तथासंभवः । अत्यन्ताप्रसिद्धत्वात् इति हृदयम् । **नित्यविभ्विति** हेतुगर्भं विशेषणम् । नित्यत्वाकालकृतस्य-विभुत्वाद्देशकृतस्य च व्यतिरेकस्यासंभव इति भावः । तदेतत्समाधत्ते—**लौकिकेति** । प्रत्यक्षेत्यर्थः । कारण-विशेषाः=दण्डचक्रादयः । **अन्वयव्यतिरेकनिरपेक्षेति** । अत्रान्वयग्रहणं दृष्टान्तार्थम् । तथा च यथा नित्य-विभौ ब्रह्मणि संभवतोप्यन्वयस्यानपेक्षा, तथैवासंभवेपि न व्यतिरेकस्याप्यपेक्षति भावः । तर्हि कारणताग्राहकं प्रमाणं किमित्यत्राह—**धर्मिग्राहकेति** इति । कारणत्वधर्मिणोब्रह्मणो येन प्रमाणेन ग्राह्यत्वम्, तेनैव "सदेव

---

விக்ரஹமும் எங்கும் பரந்துள்ளது என்கிற பக்ஷமும், வ்யூஹம் விபவம் முதலிய ஸர்வ விக்ரஹங்களும் நித்தியம் என்ற பக்ஷமும், அவை எல்லாம் பரமபதத்திலிருக்கும் விக்ர ஹத்தின் பரிணமங்கள் என்கிற பக்ஷமும் பிணக்கறுதல, எல்லாவற்றையும் நேராகக்காணப் பெறும் பதத்திலே சென்ற பிறகாகும்.

"பொருளாலும் அளவற்றமை"

वस्तुपरिच्छेदराहित्यத்தை वस्त्वन्तराभावத்தாலும் वस्त्वन्तरस्वरूपैक्यத்தாலும்; நிர்வஹிப்பார்க்கு प्रत्यक्षादि सकलप्रमाणविरोधம் வரும் सर्वशरीरியான அவனை அமலன் என்னுமிடத்தில்—चेतनाचेतनங்களுக்குள்ள दोषங்கள் இவனுக்கில்லை என்றும், आश्रितருடைய दोषங்களைக் கழிக்க வல்லன் என்றும் प्रमाणानुगुणமாக तात्पर्यம் கொள்ளுவது.

---

सोम्येद"मित्यादिना वाक्येन कारणत्वस्यापि ग्रह इत्यर्थः। ननु बाधितार्थे श्रुतेरपि प्रामाण्यायोगात् कथं व्यतिरेकग्रहणायोग्यस्येश्वरस्य तया कारणत्वसाधनमित्यत्राह—नित्यविभ्विति। तथा च कारणत्वपदार्थस्य कार्यनियतपूर्वभावस्य नित्यविभौ ब्रह्मण्यक्षततया नबाधितार्थत्वमित्याशयः। एवञ्च ब्रह्मण उभयविधकारणत्वेन-शास्त्रैकसिद्धत्वात् तस्य प्रमाणान्तरेण साधनं बाधनं वा न कार्यमित्युक्तं भवति। तथाचाधिकरणसारावली—नन्वत्राचेतनाना स्वसमुचितविधौ कर्त्रधीनत्वमुक्तं शास्त्रारम्भे विधातुर्व्यनुददनुमितिं किम्प्रसूत्रकारः॥ पृच्छेयं नातितुच्छा श्रुणु तदवहितस्सर्वकृत्त्वानुमातुं नापह्नेयतुञ्चशक्यस्तदुभयनियमादर्शनादित्यमंस्ते"ति। अत्र—पयोम्बुव-च्चेत्तत्रापी"तिसूत्रे। शास्त्रारम्भे=शास्त्रारम्भपेटिकान्तर्गतशास्त्रयोन्यधिकरणे। नन्वीश्वरवत्कालादेरपि नित्य-विभोस्सर्वकार्यं प्रति कारणत्वं स्यात्। नतुक्षणलवादिपरिणाममात्रं प्रति। प्रत्यासत्तेरविशिष्टत्वात् इत्यत्राह—स्वरूपसहकारीति। ईश्वरस्वरूपं सर्वज्ञं सर्वशक्ति। कालादिस्वरूपन्तुन तथेति स्वरूपवैषम्यम्। कार्यैक-निरूपणीयम् तत्तन्मात्रोपयोगि दण्डचक्रादिवैचित्र्यं सहकारिवैषम्यम्। नित्यविभूनां कालादीनां सर्वकार्यप्रत्यासत्ते-रविशिष्टत्वेपि स्वरूपसहकारिवैषम्येणेश्वरस्यसर्वकार्यकारणत्वम्। कालादीनां क्षणलवादिकार्यमात्रकारणत्वमिति व्यवहृत्योपपद्यत इति भावः।

अथ क्रमप्राप्तं वस्त्वपरिच्छेदं वक्तुं पूर्वं पक्षं निरस्यति—वस्तुपरिच्छेदराहित्येति। वस्त्वन्तराभाव-पक्षोऽद्वैतिनाम्। स्वरूपैक्यन्तु-जीवब्रह्माभेदस्य स्वाभाविकत्वात्, ब्रह्मणएव जीवात्मना परिणामाद्वेति क्रमेण भास्करयादवीया वदन्ति। प्रत्यक्षादीति। ब्रह्मभिन्ननानावस्तुसद्भावस्य प्रत्यक्षादिना प्रतिपन्नत्वादिति भावः।

---

இப்படியாக திவ்ய விக்ரஹ விசிஷ்டனாய் கொண்டு சுத்த அசுத்த ஸர்வ ஸ்ருஷ்டிகளைப் பண்ணும் பரமேச்வரன் ஸ்ரீமத் நாராயணனே என்னுமிடம்—ஸர்வ காரண விஷய வாக்யங்களும் அவனிடம் முடிவதாலும், ஸாத்விக விவரணங்களான தாம சாஸ்த்திர இதிஹாஸபுராணாதிகளாலும் ஸித்தமாகையாலே-த்ரி மூர்த்திகளும் ஸமமானவர், ஒருவரே, த்ரிமூர்த்திகளிலும் மேம்பட்டதுப்ரம்மம், த்ரிமூர்த்திகளிலேயே விஷ்ணுவைத்தவிர வேறு ஒன்று, ப்ரம்மம் என்ற வாதங்களுக்கு இடமில்லை. ஸர்வ காரணமும் உபாயமுமான அவனே

"எம்பெருமானின் குணம் திவ்யமங்களவிக்ரஹம்
முதலியவற்றின் வகைதொகைகள்"

இப்படி காரண भेदतादात्म्यघटन शोधन विषयवाक्यங்களாலே सिद्धமாய परिपूर्णरसமான दिव्या-त्मस्वरूपदुग्धाब्धियிலே न्यासोपासनங்களை अवलम्बित्த்து இழிந்து எங்கும் अनुभविक्கப்பார்க்கும்அவனு

ततश्च सर्ववस्तु सामानाधिकरण्यार्हत्वं शरीरात्मभावकृतमेवतदिति वक्तव्यमिपि बोध्यम्। कथन्तर्हि तस्यामल-त्वमुच्यते? शरीरसम्बन्धेन समलत्वादित्यत्राह —**सर्वशरीरीति**। चेतनगतज्ञानसंकोचादीना प्रकृत्याद्यचेतन गतविकाराणाञ्च तस्मिन्नसंभवादमलत्वमित्यर्थः। न चैतावदेव। स्वाश्रितानामपि मलं निराकरोतीत्याह— **आश्रितेति**। "अनश्नन्नन्योऽभिचाकशीति" - 'नास्यजरयैतज्जीर्यति' - 'अहन्त्वा सर्वपापेभ्योमोक्षयि-ष्यामीत्यादीनि प्रमाणानि। यद्यप्यत्रैव पूर्वं—"कर्मवश्ये इत्यादिनाऽमलात्मादि शब्दानां साशङ्कानिवर्तनं समाधानमुदैरि, तथापि-कस्यचित्कञ्चित्प्रति हेयत्वे तदन्यम्प्रति तदभावायोगेन जीवं प्रति हेयभूतस्य जगत्सम्ब-न्धस्यब्रह्मण्यपि तथात्वापत्तिः परिहृतापूर्वत्र। इहतु—स्वतो हेयभूतस्य तस्येति परिहारसाम्येपि पूर्वपक्षोत्थानद्वार-भेदादपुनरुक्तिः। यथा शारीरके—"संभोगप्राप्तिः - मोक्तापत्तेः - नस्थानतोपीति सूत्रेषु परिहारैक्येपि पूर्वपक्षा-णाम्मात्रयाभेदादपौनरुक्त्यम्।

अस्मिन्नधिकारे एतावतोक्तानर्थान् सङ्कलय्य प्रदर्शयन् करिष्यमाणगुणविग्रहविभूत्यादि निरूपणस्य वृत्तेन सङ्गतिमाह—**इप्पडि कारणेति**। कारणविषयवाक्येत्यादीरीत्या प्रत्येकमन्वयोबोध्यः। कारणविषयवाक्यं सदेवेत्यादिकम्। यतोवा इमानीति लक्षणस्य-ज्ञाज्ञौद्वाविति सर्वं खल्विति च भेदाभेदयोः - यस्यपृथिवीत्यादि घटनस्य, सत्यंज्ञानमिति शोधनस्य च बोधकवाक्यानि। **सिद्धेति**। प्रकृतिपुरुषविलक्षणतयोक्तवाक्यैर्निर्णीतेत्यर्थः। **अत एव परिशुद्धः**=परितश्शुद्धः स्वतस्सिद्धस्वशुध्या सह स्वाश्रिताशुद्धिनिराकरणशुद्ध्याच सहितः। **परिपूर्ण-रसः** स्वयं रसघनस्सन् आश्रितानामपि रसप्रदः। **दुग्धाब्धीति** दुग्धशब्देन भगवत्स्वरूपस्य तद्वद्भोग्यत्वं, अब्धिशब्देन तस्यापरिच्छिन्नत्वं तत्र मग्नानां तापत्रयशान्तिश्च विवक्ष्यन्ते। एतादृशं परमात्मस्वरूपं केनाप्त-व्यम्? तत्राह—**न्यासोपासनेति**। **दिव्यगुणेति**। आदिना विभूत्यादिपरिग्रहः। अनेन सङ्गतिकथनम्।

முக்தர்களாலே ப்ராப்யனும் ஆகிறான் என்ற விஷயம்—"பரமதஸ்ஸேதூந்மான" என்கிற அதிகரணத்திலே அறுதியிடப்பட்டுள்ளது. "லிங்கபூயஸ்த்வாத" என்கிற அதிகரணத்திலே நாராயணனே ஸர்வமோக்ஷவித்யைகளிலும் உபாஸ்யன் என்ற விஷயமும் நிர்ணயிக்கப்பட்டது. முக்குணக் கலப்பும் ராஜஸமும் தாமஸமும் ஆன புராணாதிகளைக்கொண்டு அர்த்தம

கு திவ்யगुणविग्रहादिகள் துறைகளாம். குணங்களில் सर्वावस्थानुवृत्तज्ञानशक्त्यादिषाड्गुण्यத்தின் ப்ரகாரமும், இவ்வாறு முதலாக வந்த सौशील्याद्यनन्तगुणங்களிருக்கும் படியும், भगवच्छास्त्रங்களிலே பரக்கக்காணலாம். नित्यविभूति निरूपणத்திலே भगवद्विग्रह नित्यत्वादिகள் घटिக்கும் என்று

---

दिव्यात्मस्वरूपमात्रस्य निरालम्बनयोगविषयत्वेन निष्पन्नयोगिध्येयतया योगयुङ्मनसो दिव्यगुणविग्रहादय एव विषया भवन्तीति भावः। तदुक्तं शरणागतिदीपिकायां–"पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरण माल्यविलेपनं त्वाम्। योगेन नाथ! शुभमाश्रयमात्मवन्तस्सालम्बनेन परिचिन्त्य नयान्ति तृप्तिम्॥" इति एतेन–"अग्नौ तिष्ठति विप्राणां हृदि तिष्ठति योगिनाम्। प्रतिमास्वप्रबुद्धानां सर्वत्र समदर्शिना"मितिवचनमपिनिर्व्यूढम्। दिव्यमङ्गळविग्रहसंस्मारिकासु प्रतिमास्वेवाप्रबुद्धानामधिकारः। स्वरूपस्य तैर्दुर्ग्रहत्वादित्येव तत्तात्पर्यात्। नतु प्रतिमासु अप्रबुद्धानामेवाधिकार इति। पूर्वोक्तसर्वाधिकारत्वविरोधात्! उपरि—"सर्वत्र समदर्शिना"मिति प्रकरणस्य तत्तदधिकारिणः विषयविशेषनिर्धारकतायाा एव प्रतीतेश्च। अत्र विग्रहापेक्षया गुणानां प्रथमं कथने–"स्वरूपापेक्षया गुणविग्रहादीनामपृथक्सिद्धिसाम्येपि विग्रहादिधारणतन्नियमनादौ ज्ञानादिगुणापेक्षत्वप्रदर्शनाय उत्तरोत्तरसुग्रहत्वसिद्ध्येच प्रथमं गुणोक्ति"रिति तात्पर्यचन्द्रिकोक्तयुक्तिर्बोद्धा। अथ गुणविग्रहादीत्यत्र प्रथम पठितगुणगणानां प्रकारं प्रदर्शयति—गुणेति। तेषाम्मध्य इति निर्धारणे षष्ठी। सर्वावस्थानुवृत्तेति। यद्यप्यत्र ज्ञानशक्त्यादीनां कासुचिदेवावस्थास्वनुवृत्तिः प्रथते न सर्वत्र। "षाड्गुण्याद्वासुदेवः पर इति सभवान् मुक्तभोग्यो बलाढ्याद्बोधात्सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात्। प्रद्युम्नस्सर्गधर्मौ नयसिच भगवन् शक्तितेजोऽनिरुद्धोबिभ्राणः पासि तत्त्वङ्गमयसि च तथाव्यूह्यरङ्गाधिराजे"ति कार्यद्वयानुगुणगुणद्वयव्यवस्थाकथनात्। तथापि —ऐश्वर्यवीर्यसम्भेदात् रूपं प्रद्युम्नमुच्यते। पूर्णषड्गुण एवायमच्युतोपि महामुने॥ गुणावैश्वर्यवीर्याख्यौ स्फुटौ तस्य विशेषत इति प्रमाणानुसारेण "गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तवबभौ ततस्तिस्रस्तेषा त्रियुग युगळैर्हित्रिभिर भुः। व्यवस्था याचैषा ननु वरद! साऽऽविष्कृतिवशात् भवान् सर्वत्रैवाग्रगणित महामङ्गळ गुण इति परमपुरुषेणौपनिषद विद्याविशेषेष्विवानु सन्धातॄणामाविष्क्रियमाणोऽनु सन्धेय गुणनियम इति कथनाच्चानुपपत्तिरिति

---

அறுதியிடவொண்ணாது என்ற உண்மையை—ஸத்வம் முதலிய குணங்களின் கார்யங்களை விவரிக்கிற ப்ரமாணங்களாலும், ஸாத்விகம் ராஜஸம் தாமஸம் என்று புராணங்களைப் பிரிக்கிற விதத்தாலும், தள்ளமுடியாத காரண விஷய வேதவாக்கியங்களாலும் தெரிந்துகொள்ளலாம்.

மோக்ஷத்திற்காக எல்லாவித்யைகளிலும் குறிப்பிட்ட ஆகாரங்களோடுகூடி ப்ரதாநமாக உபாஸ்யன் ஸ்ரீமந்நாராயணன் ஆகையாலே ப்ரதாநத்தைத் தவிர்த்து வித்யைகளில ப்ராணன்

மிடம் சொனனேும் स्वरूपतुल्य विग्रहव्याप्तिपक्षமும், व्यूहविभवादिसर्वविग्रह नित्यत्वपक्षமும், அவை எல்லாம் परमपदनिलय नित्यविग्रह परिणति विशेषங்கள என்கிற पक्षமும பிணக்கறும் प्रकारம सर्वदर्शि त्वदर्शயிலே கண்டு கொளவது

बोध्यम् । त्रियुगेति भगवतस्सम्बुद्धिः । त्रिविधगुण द्विकवानित्यर्थः युगळैस्त्रिभिस्तिस्रोमूर्तयः अमुः प्रकाशन्त इत्यर्थः । अत एवहि श्रूयते–स्वाभाविकी ज्ञानबलक्रियाचेति गुणानां स्वरूपानुबन्धित्वम् । क्रिया-शक्तिः ज्ञानशक्तयादीति । "ज्ञानशक्तिबलैश्वर्यवीर्यतेजां स्यशेषतः । भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभिरि"ति पराशरप्रभृतिभिः कथनात् मूलभूत भगवद्गुणानां षाड्विध्यं बोध्यम् । इत्थंहितेषां प्रकारः—"यस्सर्वज्ञस्सर्व-वित् । योवेत्ति युगपत्सर्वं प्रत्यक्षेण सदास्वतः । इत्याद्युक्त सार्वदिक सर्वविषयक साक्षात्कारो ज्ञानम् । "जगत्प्रकृतिभावोमे यदाशक्तिरितीर्यत इति जगदुपादानतादि सामर्थ्यं शक्तिः । "एष सेतु विधरणः—यत्र विश्वं भवत्येकनीडं—परमात्माच सर्वेपामाधारः" इति रीत्यासर्वजगद्धारणे प्यनवसादो बलम् । "एष सर्वे-श्वरः—"ईशते भगवानेकः" इति सर्वनियन्तृत्वं ऐश्वर्यम् । "विकारविरहोवीर्यं प्रकृतित्वेपि मे सदे"ति जगदाकारेण परिणामेपि स्वयमविकारित्वं वीर्यम् । "अथयदतः परोदिवोज्योति दीप्यते-दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भा सदृशी सा स्याद्भासस्तस्य महात्मनः" नतत्रसूर्योभाति इत्याद्युक्तेः पराभिभावक ओजोविशेष स्तेजः । तदुक्तं—"तवानन्त गुणस्यापि षडेव प्रथमे गुणाः । यैस्त्व येव जगत् कुक्षौ अन्येप्यन्तर्निवेशिता इति । सौशील्येति । अत्र कारुण्यवात्सल्यादीना ज्ञानविशेषरूपत्वेन, गाम्भीर्यादीनां शक्तिकार्यत्वेन स्थैर्यधैर्यादीनां वीर्यावान्तरभेदत्वेन सौशील्यादीनां केषाञ्चित् यथा संभवं ज्ञानादि गुणद्वय परिणामत्वेन च तत्त न्मूलकत्वं बोध्यम् । अनन्तशब्देन" नान्तं गुणानां गच्छन्ति तेनानन्तोयमुच्यते । इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्द गुणक्षयात् ॥ चतुर्मुखायुर्यदि कोटि वक्त्रो भवेन्नरः क्वापि विशुद्धचेताः । सते गुणानामयुतैकदेशं वदेन्नवादेववरप्रसीद ॥ सङ्ख्यातुं नैवशक्यन्ते गुणादोषाश्च शार्ङ्गिणि । आनन्त्यात्प्रथमोराशिरभावादेव पश्चिम इत्यादिकं विवक्षितम् । भगवत्स्वरूपस्य पूर्वं दुग्धाब्धित्वेनरूपणात् तदनुगुणं इह तद्गुणानां तरङ्गत्वोक्तिः । हृदयावर्जकत्वसंप्लावकत्वादिभिरेषा तरङ्ग

முதலிய அசேதநப்பொருள் போல வெறும் சட்டையாக நின்ற இந்திரன் முதலியவர்களும் உபாஸ்யரன்று ஸர்வ அந்தர்யாமியான ஈசுவரன ஒருவனே சாஸ்த்ரீய ஸர்வகாமாக்களாலும ஆராதிக்கப்பட்டு கல்பமுடிவிலும் நின்று பயன தருவான். பரம்மருத்ராதிகள சாஸ்த்ர ப்ரவசநாதிகள பண்ணிரேயாகிலும்—"மோக்ஷம் தருவேன்" என்ற நேரான ஸங்கலபம் அவர்களிடமில்லாததால மோக்ஷம் தரமிடுக்கற்றவர்கள். ஸ்ரீபௌஷ்கர ஸம்ஹிதையிலே

"பரம்பொருள் இன்னரென்பது"

இப்படி விग्रहविशेषविशिष्टனையக் கொண்டு शुद्धाशुद्ध सर्वसृष्टिकारणமான सर्वेश्वरன் नारायणன என்னுமிடம் सर्वकारणवाक्य विश्रान्तियாலும், सात्विकोपबृंहमणங்களான धर्मशास्त्रेतिहासपुराणादिகளா

---

तुल्यता बोध्या । भगवच्छास्त्र–अहिर्बुध्न्यलक्ष्मीतन्त्रादिपाञ्चरात्रसंहिताः । गद्यव्याख्यानादिष्वप्येषां प्रपञ्चनंद्रष्टव्यम् ।

नन्वेवं ज्ञानशक्त्यादीनां स्वरूपानुबन्धिगुणत्वेन नित्यतया अनुभवितॄणां शुभावहत्वसम्भवेपि भगवद्विग्रहस्य सावयवस्यातथात्वेन तदुपासनं कथम्पुरुषार्थं इत्यत्राह—नित्यविभूतिनिरूपणेति । अचित्तत्वाधिकार इतिशेषः । नित्यत्वादीत्यादिनाऽप्राकृतत्वपरिग्रहः । ननु परवासुदेवविग्रहस्य नित्यत्वेपि व्यूहविभवादिविग्रहान्तराणां नित्यत्वादि संशयापादकनानावचननिचयदर्शने नास्मादृशामल्पज्ञानां तत्र कथं निर्णयोभविष्यतीत्यत्राह–स्वरूपतुल्येति । भगवत्स्वरूपमिव तदीयविग्रहविशेषोपि सर्वव्याप्त इति कश्चित्पक्षः । तथा च—"सर्वाश्चर्यमयं देवं अनन्तं विश्वतोमुखम् ।" इत्यत्र गीतायामनन्त पदमधिकृत्यभाष्यं—"कालत्रयवर्ति निखिलजगदाश्रयतया देशकालपरिच्छेदानर्हम् ।" इति । तत्रैव तात्पर्यचन्द्रिका च—"विश्वव्यापिनोप्यस्य विग्रहस्यशक्तिविशेषात्सर्वत्राप्रतिघातोयुक्तः ।" अष्टैश्वर्यशालिनां योगिनामपि–"भूमौ उन्मज्जति निमज्जती"ति सिद्धि विशेषोऽभिधीयत इति । व्यूहविभवेति । व्यूह्य-परवासुदेव विग्रहात् पृथक् सन्नद्ध जननात् व्यूह इत्याख्या । वासुदेव सङ्कर्षण प्रद्युम्नानिरुद्धाख्यचतुर्व्यूहपक्षः, एतद्घटकवासुदेवस्य परवासुदेवादवैलक्षण्येन तमविवक्षित्वा त्रिव्यूहपक्षश्चसम्प्रदायविद्भिरुदाहृतौ । तेषामुत्पत्ति प्रकारश्च भाष्ये–परमकारणात्परब्रह्मभूताद्वासुदेवात्सङ्कर्षणो नामजीवो जायते इत्यादि रीत्या दर्शितः । अयञ्चवाक्यमूतः कश्चन पाञ्चरात्रग्रन्थ इति श्रुतप्रकाशिका । अत्र सङ्कर्षणादीनां जीवत्वादिकं तदधिष्ठातृत्वात् नतु तदैक्यादिति–"विज्ञानादिभावेवातदप्रतिषेध" इति सूत्रे निर्धारितम् । तदिदं स्पष्टीचक्रे विष्वक्सेनसंहितायां—"सङ्कर्षणस्तु देवेशोजगत्स्रष्टुमनास्तत । जीवतत्त्वमधिष्ठाय प्रकृतेस्तु विविच्यतदिति । एवमेव प्रद्युम्नस्य मनस्संज्ञत्व, अनिरुद्धस्याहङ्कारसंज्ञत्वञ्च निर्वोढव्यम् । अत्र व्यूहशब्देन व्यूहान्तराणामपि विवक्षा कार्या । तेच केशवादयो द्वादशसंख्याकाः । तेच पुण्ड्राद्यधिष्ठातारः क्रमेणललाटादिषु स्थानेषुस्थित्वा शरीरस्य रक्षकाः चतसृभ्यो व्यूहमूर्तिभ्यः

---

பரவ்யூஹாதிகளை ப்ரஸ்தாவித்து—"தனது ஈச்வர ஸ்வபாவத்தை விடாது நித்யமாக உள்ள வேறு உருவங்கள்" என்று ஜீவர்களின் ப்ரவேசமற்ற முக்கிய ப்ராதுர்பாவத்தைச்சொல்லி பிறகு இரண்டாந்தரமான ப்ராதுர்பாவங்களைச் சொல்லத்தொடங்கி, நான்முகன் ருத்ரன்

ஹும், सिद्धமாகையாலே त्रिमूर्तिसाम्यैकयोत्तीर्ण व्यक्त्यन्तरादिपक्षங்கள் निरवकाशங்கள். सर्वकारणभूतனுய் उपायभूतனுமான नारायणன் தானே मुक्तप्राप्यன என்னுமிடம்—"परमतस्सेतून्मान सम्बन्ध" என்கிற अधिकरणத்திலே समर्थितம். लिङ्गभूयस्त्वाधिकरणத்திலே नारायणனே सर्वपरविद्यावेद्यன் என்று निर्णीतம்

---

प्रत्येकं त्रय इति संख्ययोत्पद्यन्ते। विभवः—"सजातीयस्तेषामितितु विभवाख्यमपिभजन्" इत्युक्तरीत्या स्वविभूत्यन्तर्गतवस्तु सदृशत्वात् विभवशब्दवाच्याः पद्मनाभादयः। तेषु मत्स्यादि दशावताराणां वेदोद्धारादि प्रयोजनविशेषवशेन पृथक्कथनम्। तेच—षट्त्रिंशदितिकचित्, एकोनचत्वारिंशदिति क्वचिच्चकीर्त्यन्ते। अत एव रहस्यत्रयसारे अनिर्धार्य सामान्येन किञ्चिदधिकत्रिंशत्त्वमात्रमूचे। एषाञ्चोत्पत्तिः—"षट्त्रिंशद्भेदभिन्नास्ते पद्मनाभादिकास्सुराः। अनिरुद्धात्समुत्पन्ना दीपाद्दीप इवेश्वरा" इत्यनिरुद्धाद्भवति। विभवानामत्यवान्तर-भेदाः—"कृष्णरूपाण्यनन्तानीत्यादिनोक्ताः वेणुगोपाल पट्टाभिषेकरामादयस्सन्ति सहस्रशः। व्यूह विभवादी-त्यादिनान्तर्याम्यर्चयोर्ग्रहणम्। अन्तर्यामीच—"शास्ताविष्णुरशेषस्य जगतो योहृदिस्थित" इति योग-योग्यसर्वाधिकारिणामपि हृदये सूक्ष्मरूपं परिगृह्य स्थितोऽवतारविशेषः। "यः पृथिव्यां तिष्ठन्नि"त्याद्युक्तचेतनाचेतनान्तर्यामिस्वरूपानुभवाय प्रवृत्तानां योगिनामवगाहनतीर्थत्वेन—"अष्टाङ्गयोगसिद्धानां हृद्यागनिरतात्म-नाम्। योगिनामधिकारस्स्यादेकस्मिन् हृदयेशये" इत्यादिषु कथनादस्याप्यन्तर्यामिसंज्ञाज्ञेया। हृद्यागः= स्वहृदयस्थितान्तर्याम्यवताराराधनम्। तत्र निरतानामेव हृदयेशये=सर्वान्तर्यामिभगवत्स्वरूपे, अधिकारः= तदनुभवार्हता। अर्चाच—सुवर्णरजताद्याश्रिताभिमतद्रव्यं स्वकीयपरव्यूहादिष्वन्यतमं रूपविशेषञ्चाश्रितार्थं स्वय-मभिमत्य—"बिम्बाकृत्यात्मना बिम्बे समागत्याऽवतिष्ठते" इत्यप्राकृतदिव्यविग्रहेण सह तत्रानुप्रविश्य, अयोध्या मधुरादिदेशानां—"दशवर्षसहस्राणि दशवर्षशतानिच। रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति" इत्याद्युक्त कालानां दशरथवसुदेवाद्यधिकारिणाञ्च नियमैर्विना, "भौमनिकेतनेष्वपिकुटीकुञ्जेषु" इत्याद्युक्त सर्वदेशेषु आराधकापेक्षितेषु सर्वेषु कालेषु, रुचिमत्सर्वाधिकारि विषयेपि सन्निधाय "सर्वसहिष्णु"रिति सर्वानप्यपराधान विगणय्य—"अर्चकपराधीनाऽखिलात्मस्थिति"रिति स्वतन्त्रमात्मानं स्वपरतन्त्रेतस्मिन् आयत्तीकृत्य—"तदिच्छया महातेजा भुंक्तेवै भक्तवत्सलः। स्नानं पानं तथा यात्रां कुरुते वै जगत्पति"रिति तदिच्छया यस्मिन्कस्मिंश्चिदप्यु-दके स्नात्वा यत्किमपि पत्रशाकादिकंभुक्त्वा बहिरन्तश्च अटित्वा "स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणिस्थितं"

---

புத்தர் முதலிய ஜீவர்கள் தனது வித்யாதிதேவாதி முக்ய ப்ராதுர்ப்பாவத்தாலே ஆவேசிக்கப் பட்டவர். என்று அறுதியிடப்பட்டது. "நான முகனே! நான உன்னில் பரவேசித்து ஸ்ருஷ்டியை நடததுகிறேன்." இத்யாதிகளிலும் இவ்விஷயம் காணலாம்.

संकीर्णराजसतामस புராணங்களைக்கொண்டு तत्त्वनिर्णयம் பண்ணவொண்ணாது என்னுமிடம் सत्वादि गुणस्वभावप्रतिपादक प्रमाणங்களாலும், सात्विकपुराणादि विभाग प्रकारங்களாலும், अनन्यथासिद्धकारण- वाक्यादिबलத்தாலும் அறுதியிடலாம்.

---

इत्युक्तशेषशेषि भावं विपर्यस्य विस्मृत्यवा "इति व्यवस्थिते चापि ममायं केशवस्त्विति। ममायं राम इति च"—"मद्ग्रामवासी भगवान् ममैवेति चर्वाभिवे"दि त्युक्तरीत्या स्वामिन् स्वत्वं आराधकेस्वामित्वञ्च नूतन तयोत्पाद्य, शक्तोप्यशक्तो रक्षकोपिरक्ष्यश्चभूत्वा वर्तमानो भगवतोऽवतारविशेषः। अस्य च सर्वावतारवैलक्षण्यं- "सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिंबयोः। मन्त्रे वाच्यात्मना नित्यं बिम्बेतु कृपयास्थितम्॥" अर्चाव- तारविषये मयाप्युद्देशतस्तव। उक्तागुणानशक्यन्ते वक्तुंवर्षशतैर"पी त्यादि कथनादवसेयम्। सर्वविग्रहनि- त्यत्वेति। परवासुदेवविग्रहवत्सर्वेऽवतारविग्रहा व्यूहाद्याः परमव्योम्नि नित्यं सन्ति। तत्र तत्र तेषां काले काले आविष्करणमात्रं भवति। स एवोत्पत्तिकथनाभिप्राय इति कश्चित्पक्षः। "देवोवैकुण्ठनाथस्तु अनन्ता- सनसंस्थितः। सेव्यश्श्रीभूमिनीळाभिः प्रादुर्भावैस्तु चाखिलै"रिति बलपौष्करसंहितावचनात्। तथैव- पाद्मोत्तरेपि। अत एवेदानीन्तनानां हनुमदादिविग्रहभजनमपि शास्त्रीयंकेचन मन्यन्ते। तथा चोक्तं सत्क्रियाकल्पमञ्जर्यामुत्तरभागे—"देवोवैकुण्ठनाथस्तु" इति गद्यभाष्योदाहृतवचनेन पाद्मोत्तरादिनाच वैकुण्ठेपि विभवसद्भावसिद्धेस्तत्परिवारा स्सुग्रीवादयोपि नित्यास्सन्तीति सिध्यति। "आसोविष्णोरनासश्चद्विधा परिकरस्स्मृतः। नित्योवन्धो न चानित्यः कर्मवश्योमुमुक्षुभिरिति वचनान्नित्यभूतास्सुग्रीवादय एवध्यातव्याः। पराशरसंहितायां हयग्रीवकल्पे तस्याग्रेवैनतेयहनुमतोर्ध्यानोक्तेर्वद्धाद्धनुमतोऽयोहनुमान् श्वेतद्वीपेऽस्तीतिगम्यते। भागवतपञ्चममस्कन्धागस्त्यसंहितादिषु श्वेतद्द्वीपाद्यवस्थित श्रीरामस्यपरितस्सुग्रीवादीनामुक्तस्तेपि तत्रान्ये निवसन्तीति सिद्धेस्तेषां ध्यानमपि नानुचितमिति। आस्तामेतत्। अथ पररूपव्यतिरिक्तानां सर्वेषां रूपाणां अनित्यत्वपक्षमप्याह—अवैएद्धाम् इति। व्यूहविभवादयस्सर्वे विग्रहा इत्यर्थः। नित्यविग्रहपरिणति विशेषेति। "वासुदेवात्सङ्कर्षणोजायत" इत्यत्र पदद्वयस्यापि तत्तद्विग्रह विशिष्ट परतया "बालो युवाजात" इत्यत्रेव पूर्वविग्रहस्योत्तर विग्रहारम्भकत्वावगमात् परवासुदेवविग्रह एवान्येषां विग्रहाणां कारणमिति तेषां तत्परिणामत्वमिति बोध्यम्। तदाह भगवान् पराशरः—"समस्तशक्ति रूपाणि तत्करोति जनेश्वर। देवति-

---

ப்ரம், வ்யூஹம், விபவம், ஹார்தன், அர்ச்சை என்று ஐந்துவித விக்ரஹமுடைய ஈச்வரனை—"ஸூக்ஷ்ம, வ்யூஹ-விபவ மெனகிற மூன்று வகையினன்" என்ற விடத்தில் ஹார்த்தனுடையவும் அர்ச்சையினுடையவும் பிரிவை அவற்றில அடக்கிக்கூறினபடியாலே

"பரமைகாந்தி பிற தெய்வங்களைத் தொழலாகாது"

सर्वपरविद्यैகளிலும் प्रतिनियताकारविशिष्டனைக கொண்டு प्रधानप्रतिपाद्यன் नारायणन என்று श्रुतिस्मृतिशतसिद्ध மாகையாலே प्रतर्दनादि विद्यैகளில प्राणाद्यचेतनங்கள போலே कञ्चुककल्पரான

---

र्यङ्मनुष्याख्य चेष्टावन्ति, स्वलीलया ॥ इति । समस्तशक्तीति बहुव्रीहिः तदित्यस्य विशेषणम् । ईश्वरः समस्तशक्तियुक्तं परवासुदेवरूपं देवतिर्यङ्मनुष्याख्य चेष्टावन्ति रूपाणि करोति परिणामयतीत्यर्थः । एवं "बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते" इत्यत्रात्मशब्दस्य स्वरूपपरत्वे, तस्य साक्षात् बिम्बाकृतित्वायोगे न बिम्बस्याकृतिरिवाकृतिर्यस्य तथाभूतेनाऽऽत्मनाऽप्राकृत विग्रहेणेत्यर्थस्यैव वक्तव्यतया अर्चायामपि परवासुदेव विग्रहविकारभूताप्रकृत विग्रहेणैकीभावः नीरक्षीरन्यायतः प्रत्यपादि । तथा च—"अर्चापिलौकिकीया स्यात् भगवद्भावितात्मनाम् । मन्त्रमन्त्रेश्वरन्यासात् सापि षाड्गुण्डविग्रहे"त्यत्र तस्या अप्राकृत विग्रहाभेदप्रतिपादनमपिपूर्वोक्ताभिप्रायं मन्तव्यम् । एतच्च महाविश्वाससाध्यं मन्त्रप्रभावनिबन्धनञ्चभवति । अत एव—अर्चावतारोपादानवैष्णवोत्पत्तिचिन्तनम् । मातृयोनिपरीक्षायास्तुल्यमाहुर्मनीषिणः ॥ विष्णोरर्चावतारेषु लोहबुद्धिं करोतियः । यो गुरौमानुषंभावं उभौ नरकपातिनौ ॥" इति तदुपादान द्रव्यचिन्ताया महाविश्वासघातुकत्वेन तत्र तत्र महाप्रत्यवायजनकत्वमुद्घुष्यते । ननु तर्ह्येवं विधविविधपक्षदर्शनोत्थसंशयस्य कथं कदा परिहार इत्यत्राह— पिणक्कुरुम् प्रकारेति । इति । संशयनिरासप्रकार इत्यर्थः । सर्वदर्शित्वदशयिले इति । मार्गविशेषेण देशविशेषं प्राप्य "स स्वराडभवती"ति कर्मवश्यतां विहाय "परमंसाम्यमुपैती"ति सर्वेश्वरेण परमं साम्यमापन्नस्सन् "योवेत्ति युगपत्सर्वं प्रत्यक्षेणसदास्वतः" इति यदा सर्वज्ञोभवति तदेत्यर्थः । मुक्तिकाल इति यावत् । तमः प्रचुरे प्रकृतिमण्डले जीवानां तत्त्वनिर्धारणस्य शास्त्रदीपप्रभाधीनतया प्रकृतेऽर्थेच नानाशास्त्राणां भिन्नाशयत्वात् आप्तप्रणीतेषु तेषु एकेनान्यस्य बाधनायोगेनानिवार्यस्संशयस्स्यादेव । तथापि एतन्निर्धारणस्य प्रकृत्यात्म विवेकादिवदत्यन्तोपयुक्तताविरहतस्स्पष्टं क्रमेण मुक्तिमाप्यकालान्तर इदन्निर्णेतव्यमितिभावः । तदुक्तं— "वीक्ष्यमन्यद्विमुक्तौ" इति ।

अथापरमैकान्तिनाम्मोक्षनिषेधात् परदेवतापारमार्थ्यज्ञानादेरेव पारमैकान्त्यशब्दवाच्यतया देवताविशेषस्य कारणत्वनिश्चयेऽवश्यापेक्षिते सति स दुष्करो भवति । अत्रापि आगमानां बहुविधत्वादित्यत्राह—

---

விரோதமில்லை. அர்ச்சாவதாரத்தில வாணம, புஜம, பூஷணம, அஸ்தரங்கள், அடையாள ங்கள், தேவிகள், பரிவாரங்கள் எல்லாம் முன் முன அவதார நிலைகளையனறோ அநுஸரித் துள்ளன. அடைந்தாரககு சுபமாயும் மனதிற்கு ஆசரமாயும் உள்ள ஏற்றம் இநத ஐந்து நிலைகளிலும் உண்டு.

इन्द्रादिகள் उपास्यரன்று. सर्वान्तर्यामियான ईश्वरனொருவனுமே शास्त्रीयसर्वकर्मसमाराध्यனும் कल्पान्तरத்திலும் நின்று सर्वकर्मफलप्रदனும். ब्रह्मरुद्रेन्द्रादिகள शास्त्र प्रवर्त्तनादिகள பண்ணினார்களே யாகிலும்—मोक्षयिष्यामि" என்கிற अव्यवहित सङ्कल्पத்துக்கு आश्रया அல்லாமையாலே मोक्षप्रदரன்று. श्रीपौष्करத்தில் परव्यूहादि प्रकरणத்திலே—"स्वभावमजहत् शश्वत् आकारान्तरमाकृतेः। यत्तत्त्वमब्जसम्भूत

---

इप्पडि इति। अनुपदमुक्तेनप्रकारेणेत्यर्थः। शुद्धाशुद्धेति। तथाहि-भगवत्कर्तृका सृष्टिर्द्विविधाशुद्धा मिश्राचेति। मिश्रत्वमशुद्धत्वम्। विष्वक्सेनसंहितायां प्रद्युम्नस्य भगवद्व्यूहस्य स्वरूपादिकमुपदिश्यानन्तरमेवमुच्यते—"मनूनां सर्गमकरोत् मुखबाहूरुपादतः। चतुर्णां ब्राह्मणादीना सर्गद्वारं जगत्पतिः॥ द्विजयुग्मं क्षत्रयुग्मं वैश्ययुग्मं तथैव च मिथुनञ्च चतुर्थस्य एतन्मनुचतुष्टयम्॥ .... एकैकं वर्गभेदेन तथा मानवमानवाः। सहसा संबभूवुश्च स्त्रीपुंमिथुनतस्तथा॥ .... एतेहि शुद्धसत्वस्था देहान्ते नान्ययाजिनः। निराशीःकर्मकरणान्मामेव प्राप्नुवन्तिते॥ .... इत्येष शुद्धसर्गोयं गणेश। तवकीर्तित" इति॥ तथा च परमैकान्तिधर्मानुष्ठातॄणां मनूनां सृष्टिश्शुद्ध सृष्टिरिति, साच प्रद्युम्न विग्रहविशिष्टभगवत्कर्तृकेति चावगम्यते। एवं तत्रैवानिरुद्धस्य भगवद्व्यूहस्य स्वरूपोपदेशानन्तरं—"तुरीयोऽयं जगन्नाथः ब्राह्मणमसृजत् पुनः। मुखबाहूरुपाज्जातोब्रह्मणः परमष्ठिनः॥ चतुर्विधोभूतसर्गस्तेन सृष्टस्स्वयम्भुवा। ब्राह्मणाद्यास्तथावर्णारजःप्राचुर्यतोऽभवन्॥ त्रयीवादेषु निष्णाताः फलवादेरमन्तिते। .... स्वर्गादिषु रमन्त्येते अवसाने पतन्तिते। इत्येष मिश्रसर्गस्तु गणेश! तवकीर्तितः॥" इति प्रतिपाद्यते। तेनानिरुद्ध विग्रहविशिष्टभगवता क्रियमाणा मिश्रयाजिनां सृष्टिरशुद्धसृष्टिरिति च विज्ञायते। अथवा शुद्धसृष्टिः भगवदवताराः। अशुद्धसृष्टिश्चदेवादि सर्वजगत्सृष्टिरिति पक्षोऽस्तु। तथैवरहस्यत्रयसारोक्तिः। "अशुद्धसृष्टिविषयं भागं भवद्वदाश्रयम्" इति सङ्कल्पसूर्योदयसूक्तेश्चेति। देवताविशेषं व्यनक्ति—सर्वेश्वरो नारायणः इति। नियन्तृतयासर्वव्यासः नारायण एवेत्यर्थः। "पूर्वपदात्संज्ञायामणः" इति नारायणशब्दस्य योगरूढत्वात् रूढिलभ्ये देवता विशेषे योगार्थ सर्वकारणत्वनित्यत्वनेतृत्वाधारत्वान्तर्यामित्वादिधर्मवैशिष्ट्यलाभात् अस्यैवपरदेवतात्वसिद्धिरिति भावः। अस्मिन्नर्थेप्रथमतः श्रुतिप्रमाणान्याह—सर्वकारणवाक्येति। एतदुक्तं भवति-सर्ववेदान्तप्रत्ययन्यायेन समानप्रकरण पठितानां सर्वेषां कारणवाक्यानामैकार्थ्यस्य वक्तव्यतया वस्तुनि विकल्पायोगात् कचित्तत्तात्पर्यविश्रमोवाच्यः। प्रथमं छान्दोग्ये स्थूलारुन्धतीन्यायेन "सदेव-

மோக்ஷதசையில் உபய விபூதியோடுங்கூடிய ஈசுவரன் ப்ராபயனைகையாலே நித்யரோடு முக்தரோடு பரமமாவோடு புல் முதலியவற்றோடு வாசியற எப்பொருளும் ப்ராப்யத்தில் சேர்ந்து—கணவனின் பொருளெல்லாம மனைவிக்கு போக்யமாகுங்கணக்கிலே முகதருக்கும்

प्रादुर्भावान्तरन्तु तत् ॥" இத்யாதிகளாலே चेतनान्तर स्पर्शरहितமான मुख्यप्रादुर्भावान्तरத்தைச் சொல்லி, गौणप्रादुर्भावान्तरம் சொல்லத் தொடங்கி हिरण्यगर्भरुद्रबुद्धादिक्षेत्रज्ञர்கள் विद्याधिदेवादिप्रादुर्भावங்களாலே अधिष्ठितमात्रர் என்று அறுதியிட்டது. "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इत्यादिகளிலும் இவ் அர்த்தம் கண்டு கொள்வது.

---

सोम्येदमग्रआसीदि"त्यादिना सामान्यतः बृहदबृहदर्थसाधारणतयाऽसतः कारणत्वं व्यवच्छिद्य सतः कारणत्वे प्रतिपादितेसति, अमहतः कस्यचित् कारणत्वं पुनः शङ्कितं व्यवच्छेत्तुं तदुपर्यपि बृहदारण्यके–"ब्रह्मवा इदमग्र आसीदिति श्रूयते। ततश्छागपशुन्यायेन सत्त्वं ब्रह्मणि पर्यवस्यतिस्म। अथ "मम योनिर्महद्ब्रह्म" "तद् ज्ञानंब्रह्म संज्ञितं" इत्यादिषु अर्थान्तरेपि ब्रह्मशब्दप्रयोगात् "किमिदं ब्रह्म-यत्कारणतयोक्त"मि त्याकाङ्क्षायां ऐतरेयके श्रूयते–"आत्मावाइदमेकएवाग्र आसी"दिति। तथाचात्मत्वस्यचैतनैकान्त्यात् उक्तशङ्कानिरासः। एवमपि–"नसन्नचासत् शिवएवकेवलः–हिरण्यगर्भस्समवर्तताग्रे" इति देवतान्तरेषु कारयत्वश्रवणात् तन्निरासाय–न ब्रह्मानेशानः इति देवतान्तराणि व्युदस्य–"एकोहवै नारायणआसीदि"ति नारायणकारणत्वं तैत्तरीयके निश्चीयते। शिवहिरण्यगर्भादि शब्दानां नारायणेपि मङ्गळत्वादि गुणयोगेन नेतुं शकयतयाऽन्यथासिद्धत्वात्, योगरूढनारायणशब्दस्य च तेषु कथञ्चिदपि नेतुमशक्यत्वाच्चैवमेवार्थतत्त्वं निर्धारणीयमिति। तदुक्तमाचार्यैः–"सामान्यबुद्धिजनकाश्चसदादिशब्दाः तत्त्वान्तरभ्रमकृतश्चशिवादिवाचः। नारायणे त्वयि करीश वहन्त्यनन्यमन्वर्थवृत्ति परिकल्पितमैककण्ठ्यम्" इति वरदराजपञ्चाशदि, "निस्साधारण्यनारायणपदविषये निश्चय यान्त्यबाधे सद्ब्रह्माद्यास्समान प्रकरणपठिताश्शङ्कितान्यार्थशब्दा इति तत्त्वमुक्ताकलापनायकसरेच। उक्तश्रुत्युपब्रह्मणान्यप्याह–सात्त्विकोपब्रह्मणेति। "प्रायेण पूर्वभागार्थपूरणं धर्मशास्त्रतः। इतिहास पुराणाभ्यां वेदान्तार्थः प्रकाश्यते" इति सामान्यतो धर्मशास्त्राद्युपब्रह्मण गणेऽङ्गीकर्तव्येपि सात्त्विकराजसतामसरूपेण त्रिधास्थिते तस्मिन् राजसस्यायथावदर्थ प्रकाशकतयातामसस्यापि विपरीतार्थबोधकतयाच तयोस्त्याज्यत्वात्–"सत्वात्संजायते ज्ञानं" इति सामान्यतः, "सत्वंविष्णुप्रकाशक"मिति विशेषतश्चास्तिकैः सात्त्विकोपब्रह्मणानामेवोपादेयत्वमिति भावः। अत्र सात्त्विकराजसादि विभागः तेषु सात्त्विकस्यैवोपादेयत्वमित्यादिकं–"यस्मिन् कल्पेतु यत्प्रोक्तं पुराणं ब्रह्मणा पुरेत्यादिना मात्स्ये दर्शितः। मात्स्यपुराणस्य तामसत्वेन परिगणितस्याविश्वसनीयत्वेपि तत्कृतैतद्विभागादेः परं विश्वसनीयत्वं–"सात्त्विकतया प्रबलैश्चशास्त्रै"रिति स्तोत्ररत्नश्लोकभाष्य आचार्यैरेव

---

போக்யமாகக்குறையில்லை. முன்பு நமக்கு ஏதோ ஒரு காரணத்தால் துன்பமாய்த்தோன்றின வையும், பின்பு அக்காரணம் கழிந்தால் இயற்கையிலேயே இன்பமாய்த் தோற்றக்கூடும். இவ்விதமாகவே மற்றும் ஈசுவரனுடைய ஸ்வரூபம் விக்ரஹம் குணம் ஐச்வர்யம் முதலியன

"அர்ச்சாவிக்ரஹத்தின் அருமை பெருமைகள்"

परव्यूहादिपञ्चप्रकारविशिष्டனான ईश्वरனை सूक्ष्मव्यूह विभवभेदभिन्नன என்னுமிடத்தில—अन्तर्यामि रूपமும், अर्चावतारமும் அவற்றின் परिणामविशेषமென்று विवक्षितமாகையாலே विरोधமில்லை. अर्चा-

प्रत्यपादि यच्चेदं सात्विकपुराणादि विभाग प्रकरणं तत्सात्विकमेव मन्तव्यम्। बाधकाभावात्, गुणस्वभावौचित्यात्, परस्परविरुद्धार्थपुराणादिबलाबलविवेकापेक्षायां तद्व्यवस्थापकतयैव प्रवृत्तत्वाच्चेति। अधिकमस्माभिः पाशुपतबहिष्काराधिकारे विवेचयिष्यते। धर्मशास्त्रेति। धर्मशास्त्रं मानवादिकम्। मनुस्मृतौहि भगवदाराधनरूपकर्माणि प्रधानतया प्रतिपादयितुं प्रवृत्तायां आराध्यस्वरूपनिर्णयं विनाऽऽराधनप्रकारप्रतिपादनस्य दुष्करतयाप्रथमं—"आसीदिदं तमोभूत"मित्यारभ्य—"सोभिध्याय शरीरात्स्वात्" इति सृष्टिं प्रपञ्च्य, तत्कर्ता? इति संशयमपनेतुं—"अपो नारा इति प्रोक्ता" इति नारायणनाम निर्वचनपूर्वकं सर्वं निरकृष्यत। इतिहास पुराणादीति। अत्रगद्यभाष्यसूक्तिरवधेया—प्रबलैश्चशास्त्रैरिति प्राबल्योक्त्या बहुवचनेनचानन्यपर श्रुति स्मृतीनां भारत रामायणादीतिहासानां तदनुगुणानां पाद्मवैष्णव भागवतनारदीयमार्कण्डेयवराहवामनमात्स्य गारुड ब्राह्माण्डनारसिंहमादि पुराणानामन्योन्यसामरस्यमपि व्यज्यते। "अष्टभिः कथ्यते विष्णुः दशभिः कथ्यते शिवः" इति वचनन्त्वनाप्तम्। दृश्यमानविरोधात्। हिरण्यगर्भादि प्रतिपादकवचनैर्बाधाच्चेति। अथ निरसनीयान्पक्षानाह—त्रिमूर्ति साम्येति। मूर्तिशब्दस्साम्यादिशब्दैः प्रत्येकमन्वेति। ब्रह्मविष्णुशिवात्मिकास्तिस्रोमूर्तयः क्रमेणसृष्टिस्थिति संहारान् कुर्वन्त्यः परस्परं समानमहिमभाजोभवन्तीति त्रिमूर्ति साम्यपक्षः। तदुक्तमाचार्यैर्वरदराजपञ्चाशदि—'मध्ये विरिञ्चिशिवयोर्विहितावतारः ख्यातोऽसि तत्समतया तदिदं नचित्रम्। मायावशेन मकरादि शरीरिणंत्वां तानेवपश्यति करीश! यदेषलोक इति॥ "सर्गस्थित्यन्तकरणीं ब्रह्मविष्णु शिवात्मिकाम्। ससंज्ञांयाति भगवानेक एवजनार्दन" इति त्रिविधकार्यार्थं त्रैविध्यमेकैवमूर्तिः प्रतिपद्यत इति त्रिमूर्त्यैक्यपक्षः। आहुश्च "एकैवमूर्तिर्बिभिदेत्रिधासेति।" "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वेसम्प्रसूयन्ते" इति तिसृणामप्युत्पत्तिश्रवणात् त्रिमूर्त्युत्तीर्ण एवकश्चित्परमात्मेति त्रिमूर्त्युत्तीर्णपक्षः। "हिरण्यगर्भस्समवर्तताग्रे—नसन्नचासत् शिवएवकेवलः-एकएवरुद्रोनद्वितीयायतस्थौ।" इत्याद्यापातप्रतीत्या त्रिमूर्तिषु विष्ण्वपेक्षया व्यक्त्यन्तरं ब्रह्मा शिवोवा परमात्मेति त्रिमूर्तिषु व्यक्त्यन्तरपक्षः। एवञ्च त्रिमूर्तीनां साम्यमैक्यं उत्तीर्णं व्यक्त्यन्तरं चेति सम्बन्धसामान्य विवक्षया षष्ठी समासे-त्रिमूर्तीनां साम्यमित्यादिरीत्या साम्यैक्ययोस्त्रिमूर्तिनिष्ठत्वं, त्रिमूर्तिभ्य

வற்றைப்பற்றி பாஹ்யமதத்தவரும், நம்மில குத்ருஷ்டிமதத்தவரும் சொல்லும் வீண் வாதுப் புற்களை முன்சொன்ன ப்ரமாணதர்க்கங்களாலே களைந்தெறிவது.

வதாரத்தில் வர்ணபுஜ பூஷணாஸ்த்ரலாஞ்சனபத்னீ பரிஜனாதி விசேஷங்களும் பூர்வபூர்வரூபாநுரூபங்களாயிறே இருப்பது. சுபாச்ரயத்வம் இப்பஞ்சரூபங்களிலும் ஏகரூபம்.

---

उत्तीर्णमिति उत्तीर्णताया त्रिमूर्त्यैवविकत्वं, त्रिमूर्तिष्वेव व्यक्त्यन्तरमिति व्यक्त्यन्तरत्वे त्रिमूर्तिघटकत्वमितीमे अर्थायथायथं लभ्यन्त इति भावः। एतेनात्र-त्रिमूर्त्युत्तीर्णं व्यक्त्यन्तरं=त्रिमूर्तिव्यतिरिक्तं किञ्चित् ब्रह्मेति यावदिति उत्तीर्णं व्यक्त्यन्तरशब्दयोरेकपक्षत्वाभिप्रायेण केषाञ्चित् व्याख्यानं प्रत्युक्तम्। उत्तीर्णं व्यक्त्यन्तर शब्दयोर्भिन्नार्थकयोरेकेनैव पर्याप्तावन्यतरवैयर्थ्यात्। न चा "न्यत्परिभाषान्तरं" इत्यादिमहाभाष्य वाक्ये सहप्रयुक्तयो स्समानार्थकयोरन्यान्तरशब्दयोरवैयर्थ्याय कैय्यटादिभिः अन्यत् परिभाषान्तरं=अन्यः परिभाषा विशेष इति व्याख्यानवत् इहापि-उत्तीर्णो व्यक्ति विशेष इत्यर्थोऽस्त्विति वाच्यम्। तथा व्याख्याया अगतिक गतित्वात्। त्रिमूर्तिघटक चतुर्मुखादीनां परब्रह्मत्वपक्षप्रतिक्षेपस्यावश्यकस्याकरणेन न्यूनतापत्तेश्च। व्यक्त्यन्त रादीत्यादिपदेन तद्ग्राह्यताकथनमप्यनुचितम्। एतत्पक्षं विहायापि—"आत्मैक्यं देवतैक्य"मित्याद्युक्त-पक्षान्तराणा तद्ग्राह्यतयैवोपपत्तेः। तदेतत्सर्वं स्पष्टीकृतं श्रीमद्रहस्यत्रयसारे। निरवकाशेति निस्समाभ्यधि कस्यश्रीमन्नारायणस्यैव परमकारणत्वोक्तेः ब्रह्मरुद्रादीनामन्येषां तत्सृज्यत्वावगमात् विष्णूत्पत्त्यादिवादस्यावतरण दशाविषयत्वाच्च नते पक्षाः प्रामाणिका इत्यर्थः।

नन्वेवं भगवत एव सर्वकार्यकारणत्वे—"कारणन्तुध्येय" इति तस्योपायत्वोक्तेः उपेयमन्यद्भवेत्। तथा च तस्य भोग्यताहानिरित्यत्राह—सर्वकारणेति। उपायभूतेति। अनेन—फलमत उपपत्तेरिति प्रसिद्धं सकलफलप्रदत्वं विवक्षितम्। ततश्चकारण शब्दापौनरुक्त्यम्। नारायणः एव इति। सर्वकारण वाक्यविश्रान्तिस्थानत्वेनोक्तस्सएवेत्यर्थ। मुक्तप्राप्येति। जीवस्यमुमुक्षादशायामुपायभूत एव सन् स मुक्तिद शायां प्राप्यश्चभवतीत्यर्थः। तथा च यथैकस्यैव जीवस्य मुमुक्षुत्वमुक्तत्वदशाद्वययोगो न विरुध्यते, तथा भगवतोपि उपायत्वोपेयत्वे अप्युपपन्ने इति बोध्यम्। परमतस्सेतून्मानेति। इत्थंहि तदधिकरणंजगत्कारण तयाशास्त्रादौ प्रक्रान्तस्य ब्रह्मणः सेतुत्वोन्मितत्व सम्बन्धभेदव्यपदेशेभ्योहेतुभ्यः, प्रापकभूतात्तस्मात् अन्यदेव-किञ्चित्प्राप्यभूतंवस्त्वस्तीति पूर्वपक्षेप्राप्ते—"सामान्यात्तु" इत्यारभ्य सूत्रषट्केन तस्यैव प्राप्यत्वमपि समर्थित-मिति। ननु पास्यस्यैवोपेयत्वात् उपासनेषुच दहरशाण्डिल्यादिषु अक्षरशम्भुपरब्रह्म परज्योतिरादि पदैरुपास्य-स्याभिधानात् नोपायएवैकः। तथासति कथन्तस्योपेयेनैक्यमित्यत्राह—लिङ्गभूयस्त्वेति। "लिङ्गभूयस्त्वात्तद्धि

---

(பாசுரக்கருத்து) சிறைபோல் நம்மைச்சூழ்ந்த ஸம்ஸாரத்தில் சிறுதேன் கலந்த இன்பமுண்டு உழலும் ஜீவர்களுக்கு வேதாந்த தத்துவம் கண்டறியாமல் பண்ணும் அஜ்ஞாநவிருள்

बलीयस्तदपी"ति सूत्रम्। दहरविद्योत्तरं श्रुतं "सब्रह्मा सशिवस्सेन्द्र" इत्यादिकं वाक्यं सर्वपरविद्योपास्यस्यैव नारायणत्वं विधत्ते, नतु प्रकरणात् दहरविद्यावेद्यमात्रस्य। तथा निर्धारणे भूयसां लिङ्गानां सत्त्वात्। लिङ्गञ्च चिह्नभूतं वाक्यमिह विवक्षितम्। तद्धिवाक्यं प्रकरणाद्बलीयः। तदपि बलीयस्त्वं पूर्वतन्त्र उक्तम्। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इतीति तदर्थः। परविद्या=मोक्षसाधनभूतमुपासनम्। अन्यफलार्थात्ववरा। ननु लैङ्गकौर्माग्नेयादि पुराणेभ्यः शिवादेरेवपरत्वावधारणात् कथं नारायण एव परं ब्रह्मेति निर्णयः? इत्यत्र, पूर्वमेव—"सत्विकोपब्रह्मणे" इत्यनेन वाक्येनव्यञ्जितं लैङ्गादीनां तामसत्वेनार्थनिर्णये अनुपायत्वं स्पष्टयति—सङ्कीर्णेति। मात्स्ये एकादशाध्याये—"सङ्कीर्णास्सात्विकाश्चैव राजसाश्चैव तामसाः। कल्पाश्चतुर्विधाः प्रोक्ताः ब्रह्मणोदिवसाश्चते॥ यस्मिन् कल्पेतु यत्प्रोक्तं पुराणं ब्रह्मणापुरा। तस्य तस्यतु माहात्म्यं तत्स्वरूपेणवर्ण्यते॥" इति पुराणानि प्रविभज्य, तेषु यथाक्रमं—"सङ्कीर्णेषु सरस्वत्याः पितृणाञ्चनिगद्यते। राजसेषुचमाहात्म्यं अधिकं ब्रह्मणोविदुः॥ अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्तित"मिति प्रतिपाद्यविषयांश्चप्रदर्श्य—"सात्विकेषु च कल्पेषु माहात्म्यमधिकंहरेः। तेष्वेवयोगसंसिद्धागमिष्यन्ति परांङ्गति"मिति अवधारणेन सात्विकपुराणानां विषयविशेषः उत्कृष्टगतिप्रापकत्वरूपोत्कर्षश्च प्रत्यपादिषाताम्। ततश्च तत्र सत्वगुणस्यैवोत्कर्षे प्रमाणमाह—सत्वादीति। "प्रवृत्तिञ्चनिवृत्तिञ्चकार्यञ्चाकार्यमेवच। बन्धं मोक्षञ्चयावेत्ति बुद्धिस्सापार्थ! सात्विकी॥ यया धर्ममधर्मञ्च कार्यञ्चाकार्यमेव च। अयथावत् प्रजानाति बुद्धिस्सापार्थ राजसी॥ अधर्मंधर्ममितिया मन्यते तमसावृता। सर्वार्थान् विपरीतांश्चबुद्धिस्सा पार्थ! तामसी"ति गीतायां सत्वादीनां गुणानां स्वभावोवर्णितः। सात्विकपुराणानामेवोत्कर्षे हेतुमाह—सात्विकपुराणादीति। तद्विभागप्रकारश्चानुपदमेववर्णितः। नन्वथापि अथर्वशिखादिषु "सर्वैश्वर्यसम्पन्नश्शम्भुराकाशमध्येध्येयः" इत्यादिना स्पष्टं देवतान्तराणां पारम्यप्रतिपादनात् विरोधाधिकरणन्यायेन तद्विरुद्धानि विष्णुपारम्यप्रतिपादकानि सात्विकपुराणान्यप्यप्रमाणं स्युरित्यत्राह—अनन्यथासिद्धेति। शम्भ्वादिशब्दानां नारायणसाधारण्यं नारायणशब्दस्य शम्भ्वादिसाधारण्याभावश्च पूर्वमेवोक्त इति अनन्यथासिद्धनारायणपदघटितकारणवाक्य बलादप्यमेनिर्णीतमित्यर्थः। "एकोहवैनारायण आसीदि" त्यादिकारणवाक्यानां अनुवादसरूपत्वेपि "यदाग्नेयोऽष्टाकपाल" इत्यादीनामिवाप्राप्तार्थबोधकतया विधायकत्वं निराबाधमिति, सात्विकपुराणनां सर्वश्रुत्यनुगुणतया न विरोधाधिकरणन्यायसञ्चार इहोचित इत्येतदभिप्रेत्य—अनन्यथासिद्धकारणवाक्यबलेत्युक्तम्। बलशब्देनविरोधाधिकरणन्यायाविषयत्वसूचनात्। ननु सर्वत्र मुमुक्षूपास्यो नारायण इत्ययुक्तम्। कचित्कौषीतक्याद्युपनिषत्सु प्रतर्दनादिविद्यायां इन्द्रादेरेवोपास्यत्वप्रतीतेः। न च लिङ्गभूयस्त्वाधिकरणन्याय इह प्रवर्त्स्यत इति वाच्यम्। तत्र तत्र इन्द्रशम्भ्वादिशब्दानां प्रयुक्तानां योगवृत्त्या नारायणपरत्वस्य लिङ्गभूयस्त्वतः

स्वीकारेपि, इह—"प्राणोऽस्मिप्रज्ञात्मा तम्मामायुरमृतमित्युपास्वे" इत्यत्रेन्द्रपरासच्छब्दस्य तथानेतुमशक्यत्वात् इत्यत्राह—सर्वपरविद्येति । तत्प्रकरणेत्यर्थः । अतः प्रतिपाद्यत्वोक्त्यविरोधः । परविद्यासमाख्यैक्येपि, प्रधानवेद्यभूतब्रह्माभेदेपि, सत्यत्वज्ञानत्वादि स्वरूपनिरूपकधर्मपञ्चकानुवृत्तावपिच विशेषणभेदेन परविद्यानां नानात्वं सिद्धान्तिम् । तासुचसर्वासु प्रधानवेद्योनारायण एवेतिच । अतः प्रतर्दनादिविद्यास्वपि तस्यैवोपास्यत्वेसिद्धे, इन्द्रादि लिङ्गानन्यथासिध्या तस्यापि तथात्वेसिद्धे उभयापरित्यागेन तद्विशिष्टोनारायण उपास्य इति स्वीक्रियते । ततश्चनेन्द्रादिमात्रस्योपास्यत्वमित्यर्थः । तदुक्तं—"परविद्यासुजीवोक्तिर्निरुक्तयादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी"ति । "प्राणोस्मि प्रज्ञात्मेत्यत्रप्राणशब्दाभिहितस्याचेतनविशेषस्यमोक्षार्थमुपास्यत्वन्नास्तीति सर्वसम्प्रतिपन्नंहीत्यर्थः । तथा च तत्र तदंशविशिष्टब्रह्मपरत्वाश्रयणवत् चेतनत्वेपीन्द्रस्य तद्विशिष्टब्रह्मपर्यन्तत्वं आश्रयणीयमेव । ममुक्षुभिरनुपास्यतायां अचेतनत्वं चेतनत्वं वा न प्रयोजकम् अननुगतत्वात् । अपितु ब्रह्मव्यतिरिक्तत्वमेवानुगतमिति भावः । कञ्चुककल्पेति । कञ्चुकेन शरीरस्य यथऽऽवरणं तथेन्द्रादिना परमात्मनोप्यावरणमिति तेषां तत्सदृशतोक्तिः । तेन तेषां स्थूलबुद्धिविषयत्वात् आधेयत्वादितश्चभगवच्छरीरत्वमुक्तंभवति । नन्विन्द्रादिदेवतानां कञ्चुककल्पत्वे राजशरीरे चन्दनपङ्कप्रयोक्तुस्तच्छरीरमिवाराधकस्येन्द्रादिः फलप्रदोन स्यात् । तथा च देवान् देवयजोयान्ति इति तेषां फलप्रदत्वोक्तिविरोध इत्यत्राह—सर्वान्तर्यामीति । इदञ्च वक्ष्यमाणसर्वकर्मसमाराध्यत्वे हेतुगर्भं विशेषणम् । "सर्वभूतान्तरात्मानं विष्णुमेवयजन्तिते—तेपिमामेवकौन्तेय ! यजन्त्यविधिपूर्वक"मित्यादिकथनात् सावधारणं ईश्वर एव इत्यभ्यधायि । शास्त्रीयेति अशास्त्रीयकर्मव्यावृत्तिः । समाराध्यत्वं=तज्जन्यप्रीतिभाक्त्वम् । यद्यपि शरीरभूतेन्द्रादीनामपि तत्तत्कर्मजन्यप्रीतिभाक्त्व मस्तीति ईश्वरस्यैव तथात्वकथनं कथमिति भवतिशङ्का, तथापिश्राद्धनिमन्त्रितविप्रादीनामिव देवतान्तराणामपि प्रीतिभाक्त्वमानुषङ्गिकमिति प्राधान्याभिप्रायेण तथोक्तिरिति बोध्यम् । अत्रैव हेत्वन्तरमाह—कल्पान्तरेति । तथाच—"आभूतंसल्पवे प्राप्ते प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा सतुनारायणः प्रभुरि"ति देवतान्तराणां कल्पान्ते नाश श्रवणात् प्रबलकर्मप्रतिबद्धफलानां कर्मणां कल्पान्तरेऽनुष्ठातृभ्यः कःफलंदास्यति विना भगवन्तमिति भावः । तदुक्तं सर्वमूर्तिसाधारण्येनप्रवृत्तेपि शिल्पशास्त्रे—"विष्णोरन्ये, राध्यमाना न साक्षाच्छ्रीकरास्सुराः । सर्वदेवास्पदे विष्णौ धिष्ण्यं सम्पत्सुखावह"मिति । राध्यमानाः=आराध्यमानाः । आस्पदे-अन्तरात्मतया आधारभूते । धिष्ण्यं—आलयः । "धिष्ण्यमोको निवसनं स्थानावसथवास्तु चेति निखण्डुः । सर्वकर्मफलप्रदेति । "लभतेचततःकामान् मयैवविहितान् हितान्—"फलमत उपपत्ते"रित्यादिप्रमाणदिति भावः । ननु ब्रह्मरुद्रेन्द्रादीनामपि जगद्धितार्थाय मोक्षशास्त्रप्रवर्तनाद्यतः धिकृततया मोक्षप्रदत्वं सिद्धमिति सामान्यतः तेषां फलदायित्वेकस्सन्देह इत्यत्राह—ब्रह्मरुद्रेति । चतुर्मुखस्य पुराणादिप्रवर्तकत्वेन रुद्रेन्द्रादेरहिर्बुध्न्यसंहि

"முக்தியில் பகவானோடு சேர்ந்து எல்லாம் போக்யமே"

முக்தப்ராப்யதையில ஸர்வவிசிஷ்டன் ப்ராப்யனாகையாலே நித்யரோடு முக்தரோடு ப்ரஹ்மாதிகளோடு த்ருணாதிகளோடு வாசியற எல்லாம் ப்ராப்யாந்தர்கதமாய பதியினுடைய ஆபரணாதிகள் பத்நிக்கு போக்யமா

---

तादिप्रवर्तकतयाच तेषां शास्त्रप्रदानादिकमिह विवक्षितम् । आदिनोपदेशादिर्ग्राह्यः । अव्यवहितसङ्कल्पाश्रयेति । अव्यवधानेनमोक्षकारणीभूत सङ्कल्पाश्रयेत्यर्थः । मोक्षकारणीभूतसकल्पस्या व्यवहिताश्रयेतिवा । तथा चैतेपि परम्परयैवाचार्यादिवन्मोक्षोपकारका इत्याशयः । ननु विष्णुपुराणादौ–" जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरोहरिः । ब्रह्माभूत्वाऽस्यजगतो विसृष्टौ सम्प्रवर्तते ॥ तमोद्रेकश्च कल्पान्ते रुद्ररूपी जनार्दनः । मैत्रेयाखिल भूतानि भक्षयत्यतिभीषण" इत्यादि वचनैः ब्रह्मरुद्रादीनामपि भगवदवतारत्वेन रामकृष्णादेरिवसाक्षान्मोक्षोपायत्वं भविष्यत्येवेत्यत्राह—श्रीपौष्करेति । सात्वतपौष्करजयाख्यसंहितानां रत्नत्रयसमाख्ययाविश्रुतत्वात् साक्षात् भगवन्मुखोद्गतत्वलक्षण प्राशस्त्यं तेषु अन्यतमस्यास्याप्यनिवार्यमितिहृदयम् । स्वभावमजहदिति । आकृतेः= परवासुदेवविग्रहस्य स्वभावं–सर्वगुणपूर्णत्वादिरूपं स्वभावं, शश्वत् - सर्वकालेष्वपि अजहद्यदाकारान्तररूपं तत्त्वमस्ति, हे अब्जसम्भूत ! तत् प्रादुर्भावान्तरमित्युच्यत इति तदर्थः । शश्वत् स्वभावमजहदित्युक्त्या अस्य मुख्य प्रादुर्भावान्तरनामकत्वं सिध्यति । मुख्यशब्दार्थमाह—चेतनान्तरस्पर्शरहितेति । एतेनरामकृष्णादीनां साक्षाद्भगवदवतारत्वेन ब्रह्मरुद्रादिवैलक्षण्यमुक्तं भवति । ब्रह्मरुद्रादे जीवव्यवहितत्वात् । गौणप्रादुर्भावान्तरेति । तदप्युक्तं–" प्रादुर्भावान्तरोपेतं प्रादुर्भावगणं परम् । श्रुणु मेगदतस्सम्यग्यैर्व्याप्तं अखिलं जगदिति ।" परं - अन्यत् । अत्र मुख्यप्रादुर्भावान्तराधिष्ठितत्वोक्तेः गौणप्रादुर्भावरूपत्वमेषांसिध्यति । केते ? इत्यत्राह— हिरण्यगर्भेति । तथाचवचनं–" ब्रह्मरुद्रार्जुनव्यास सहस्रकरभार्गवाः । ककुस्थात्रेयकपिलबुद्धाद्याये सहस्रशः ॥ शक्त्यावेशावतारास्तु विष्णोस्तत्कालविग्रहा इति । विद्याधिदेवादीति । " विभवाः पद्मनाभाद्याः त्रिंशच्चनव चैवहि । .... विद्याधिदेवः कपिलोविश्वरूपो विहङ्गम इति निरूप्य, एतदधिष्ठितं गणान्तरमुच्यते–" अहङ्कृति युताश्चेमे जीवमिश्राह्यधिष्ठिता इति । अत्र बुद्धस्यब्रह्मरुद्रादिवत् गौणप्रादुर्भावत्वोक्तेः, अन्यत्र " मोहनाख्यस्तथा बुद्ध इति मोहनार्थत्वोक्तेश्च मुख्यप्रादुर्भावत्वानुपपत्त्याऽऽचार्यहृदयग्रन्थे तस्य साक्षाद्भगवन्मुख्यप्रादुर्भावत्वोत्कीर्तनं चिन्त्यं भवति । अत एव–" अस्यकल्पभेदेननिर्वाह इति तत्त्वत्रयव्याख्यापि निरस्ता । कचिदपिप्रमाण तस्तथाऽनवगमादिति । अस्यार्थस्यसंवादमाह—सृष्टिन्तत इति ।" उत्पाद्य पृथिवीं सम्यक्स्थापयित्वा यथापुरम् । इति शौनकस्मृतौपूर्वार्धम् । " ब्रह्माशम्भुस्तथैवार्कश्चन्द्रमाश्चशतक्रतुः । एवमाद्यास्तथैवान्ये युक्तावैष्णव तेजसा । जगत्कार्यावसानेतु वियुज्यन्तेच तेजसा ।" इत्यादि विष्णुधर्मोत्तरवचनमादिशब्दार्थः ।

குங் கணக்கிலே ஸர்வமும் போக்யமாம். முன்பு உபாதியாலே ப்ரதிகூலமானவற்றுக்கும்—மேல் உபாதி நிவ்ருத்தியில் ஸ்வத: ப்ராப்தானுகூல்யத்திற்கு விரோதமில்லை. மற்றும் ஸர்வேச்வரனுடைய ஸ்வரூபரூபகுணவிபூதி

---

ननु भाष्यकृता "तद्धि वासुदेवाख्यं परंब्रह्म सम्पूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वकेणकर्मणाऽभ्यर्चितं सम्यक् प्राप्यत" इत्यत्रार्चान्तर्याम्यवतारद्वयस्य परवासुदेवरूपत्वाकथनात् बुद्धादिवत् तयोर्गौणप्रादुर्भावत्वमेवेति प्रतिभाति। ततश्चपञ्चप्रकारविग्रहविशिष्टस्यापि भगवत उपास्यत्वोक्तरयुक्तेत्यत्राह—परव्यूहेति। आदिना विभवहार्दार्चाग्रहणम्। एषाञ्च पञ्चानां स्वरूपं पूर्वमेव निरूपितम्। सूक्ष्मः—परवासुदेवः। अन्तर्यामिरूपेत्यादि। एतदुक्तंभवति योगिभिरपि स्वयं भगवदनुभवरसिकतया, अन्यैरपि यथाधिकाररुच्यदि, परव्यूहविभवेषु अन्यतमस्य परिगृह्य ध्यातस्य मूर्तिविशेषस्यैव तद्योगिहृदये तत्तदधिकारिप्रतिष्ठापित लोहबिम्बेचान्तर्यामितयाऽर्चारूपेणच परिणामात् अन्तर्याम्यर्चे अपिवस्तुतो न तेभ्योवस्त्वन्तरमिति तयोस्तेष्वन्तर्भाव विवक्षातदभावाभ्यां पञ्चप्रकारत्वत्रिप्रकारत्वोक्तिसङ्गतिरिति। तत्त्वनवनीतस्था त्रिप्रकारत्वोक्तिरपि एव प्रकारेणार्चायाः परव्यूहविभवविशेषत्रयपरिणामत्वार्थकतयैव व्याख्येया। अत एव भाष्यकृतां नित्यार्चनाविधिः=परवासुदेवपरिणामभूतार्चामधिकृत्येति सम्प्रदायोपिशोभते। एवं क्वचित् अर्चापरिणामत्वमपिहार्दस्यस्वीकार्यमिति वदन्ति। यथाऽऽचार्यदिनचर्यामधिकृत्य कुमारवरदाचार्या आहुः—"हृत्पुण्डरीकेवरदं सदारं निवेश्यतत्पादसरोजयुग्मे। अबद्धचित्तं सुसुखं शयानं" इत्यादिना। काञ्चीनगर करिगिरि वरदराजोह्याचार्याणामर्चा मूर्तिः। तदप्युक्तं तत्रैव "माध्याह्निकं कर्म समाप्य पश्चात् वन्दे यजन्तं वरदं सदारमिति, सायन्तनंकर्म समाप्य पश्चात् समेत्यच श्रीवरदाह्वयस्ये"तिच। अतः विभवादि परिणामत्वे हेत्वन्तरमप्याह—अर्चावतारेति। अत्र—"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्। कृत्वात्मनः प्रीतिकरींसुवर्णरजतादिभिः॥ तामर्चयेत्....। ये यथामां प्रपद्यन्ते तान् तथैवभजाम्यहम्।" इत्यादिना आराधकस्य यथाभिमति अर्चाविग्रहकरणाभ्यनुज्ञानात् रामादेरदृष्टचररुक्मिण्यादियोगः, कृष्णादेर्वाकोदण्डमण्डितकरत्वादिकं किन्नकल्प्यत इति शङ्कासूचकमिदमर्चेतिपदम्। वर्णः=कनक वर्णत्वघनश्यामत्वादिकः। भुजः—द्विचतुर्भुजत्वादिः। भूषणं—किरीटपिञ्छादि। अस्त्रं - कोदण्डगदादिकम्। लाञ्छनं - उक्तवक्ष्यमाणव्यतिरिक्त तत्तदवतारासाधारणचिह्नानि। पत्नी - सीतासत्यभामादिः। परिजनः - वैनतेयहनुमदादिः। आदिना-प्रत्यालीढस्थित्याद्यवयवसन्निवेशविशेषो विवक्षितः। पूर्व

---

மாற்றிய ஈச்வர க்ருபையே-நமக்கு இறங்கும் துறை, நிலையானது ப்ராப்யமானது-என்று அலையெறியாத அமுதக்கடலபோன்ற ஈச்வரனின் நிலையை நாமிங்கு உரைத்தோம்-நமது ஆசாரியர்கள் அருளிச்செய்தபடியிலே.

களில் ப்ராஹ்ய குத்ருஷ்டிகள் சொல்லும் வ்ருதாஜல்பங்களை எல்லாம் முன்பு சொன்ன ப்ரமாணதர்க்கங்களாலே உன்மூலனம் பண்ணுவது

पूर्वेति । अयमाशयः सुवर्णरजताद्युपादानद्रव्यानियमेपि रामकृष्णादिष्वन्यतमस्यानुप्रवेशानियमेपि किञ्चित्परिग्रहानन्तरं परिगृहीतस्य तथाविधमेव वर्णभुजादिकं विधातव्यम्, यथाविधं तत् पूर्वविभवादिषु प्रामाणिकं भवेत् । नतुस्वेच्छया । अर्चायाः पूर्वविभवादिपरिणामत्वात् । तस्यापि ततः पूर्वविभवादि सदृशतया तत्परिणामत्वात् । अतोनातिप्रसङ्गःकोपीति । एतेषां सर्वेषामपि शुभाश्रयत्वमाह—शुभाश्रयत्वेति । शुभश्चासावाश्रयश्चेति शुभाश्रयोदिव्यमङ्गळविग्रह उच्यते । शुभत्वं = शुद्धत्वम् । ध्यातॄणां पापनिवर्तकत्वमितियावत् । आश्रयत्वं = चित्तालम्बनत्वम् । विष्णुपुराणे—"प्राणायामेन पवने प्रत्याहारेणचेन्द्रिये । वशीकृते ततः कुर्यात् स्थितं चेतश्शुभाश्रये" इति शुभाश्रयचिन्तनं विधाय, "अन्येतु पुरुषव्याघ्र । चेतसोये व्यपाश्रयाः । अशुद्धास्ते समस्तास्तु देवाद्याःकर्मयोनय" इति आश्रयत्वेपि शुद्धत्वमन्येषांनास्तीत्युक्तम् । भगवत्स्वरूपेपिशुद्धत्वसत्त्वात् तद्व्यावर्तनायाश्रयत्वकीर्तनम् । ततश्चतदुभयं पञ्चप्रकारभगवद्विग्रहमात्रसाधारणमित्यर्थः । एतेन योगसूत्रव्याख्यायां शुभाश्रयशब्दे षष्ठीसमासं स्वीकृत्य कल्याणगुणाकरत्वार्थकत्वप्रतिपादनं वाचस्पतिकृतं निराकृतं भवति । उक्तवचनविरोधात् भगवत्स्वरूपव्यावृत्त्यसिद्धेश्च । "दृष्ट एव हि न श्शोकमपनेष्यतिराघवः—अपीठान्मौळिपर्यन्तं पश्यतः पुरुषोत्तमम् । पातकान्याशुनश्यन्ति किम्पुनस्तूपपातकमित्यादिभिः विभवार्चादीनां विशिष्य शुभत्वं प्रख्याप्यते । एवमियता ग्रन्थेन भगवत उपायत्वं प्रसाध्योपेयत्वमपि विशदीकरोति—मुक्तप्राप्यतेति । मुक्तिकालेत्यर्थः । सर्वविशिष्टस्य प्राप्यत्वं-सोश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चितेत्यादिप्रमाणसिद्धम् । तत्र सर्वशब्दार्थमाह—नित्येति । ब्रह्मादीति बद्धानां सर्वेषां तृणादीत्यचेतनानाञ्चोपलक्षणम् । प्राप्यान्तर्गतेति । प्रधानप्राप्येश्वरविशेषणतयाऽप्रधानत्वेनप्राप्येत्यर्थः । एतावत् कालं बद्धान् प्रतिप्रतिकूलतया-स्वल्पानुकूलतया च भातानां विभूत्यन्तर्गतपदार्थानां, कथमिदानीं मुक्तान् प्रति निरतिशयानुकूलतया भोग्यत्वमित्यत्र दृष्टान्तं दर्शयति—पतीति । स्वानुकूलपतिसम्बन्धिपदार्थानां पूर्वमतथानुभूतानामपि इदानीमनुकूलतया पत्नीं प्रति भानवत्—"यस्त्वयासहसस्वर्गो निरयोयस्त्वयाविना—नहिमेजीवितेनार्थो नैवार्थैर्नचभूषणैः । वसन्त्यराक्षसीमध्ये विनारामं महारथमिति भगवद्विश्लेषदशायामन्यथाप्रतीतानामपि लीलाविभूतिपदार्थानां मुक्तिकालेऽनुकूलतया भानमविरुद्धमित्याशयः । एकस्योक्तोभयाकारयोगेऽविरोधं प्रतिपादयति—मुनृपु इति ।

---

(சலோகத்தின கருத்து.) வேதாந்தங்களுக்குக்கிட்டகாப்பாய், கவிதார்க்கிககேஸரியான வேங்கடநாதனிடமிருந்து தோன்றியதாய், உறுதியும் சாதுர்ய மாதுர்யங்களும்

சிறைநிலையாம் பவத்தில சிறுதேனினபமுண்டுழல்வார்
மறைநிலை கண்டறியா மயல்மாற்றிய மனனருளே
துறைநிலை பாரமெனனததுளஙகா வமுதககடலாம
இறைநிலை யாமஉரைததோம் எமகுருககளியம்பினவே

तथा च सर्वपदार्थाना स्वभावतः प्राप्त निरतिशयानुकूल्यं कर्मणातिरोहितं अत्यन्तप्रतिकूलतया स्वल्पानुकूलतया-वाभातिस्मेति, तन्निवृत्तौ तस्याअपि निवृत्तिरित्यर्थः। एवञ्च पदार्थेषु निरुपाधिकप्रतिकूल्यानुकूल्ययोरेकत्रविरोधेपि औपाधिकप्रतिकूल्यस्य स्वाभाविकानुकूल्येन न विरोध इति हृदयम्। एवं जीवतत्त्वाधिकारप्रभृतिनिरूपितेष्वर्थे-षूक्तेन न्यायेनैव तत्तदवान्तरशङ्कासमुन्मूलनं कृतं भविष्यतीत्याह—मट्रुम इति। बाह्याश्चार्वाकादयस्सर्वेश्वर-स्वरूप एव विप्रतिपद्यन्ते। रूपगुणादिषु प्रच्छन्नबौद्धादयः कुदृष्टयः। यद्यपि प्रमाणतर्कादीन् प्रदर्श्यास्माभिस्तत्त-द्वाद्युक्तेष्वर्थेषु निरस्तेष्वपि पुनस्तत्राभिनिवेशविशेषवशात् किमपि ते प्रलपेयुरेव। तथापि ते प्रलापा निरर्थका एवेति केवल शब्दपुञ्जमात्रतया वृथाजल्पत्वम्। जल्पनं=केवल जिह्वाव्यापारः। बल्बजं=स्तंबारव्यस्तृण-विशेषः। ततश्च तद्वत् तेषामल्पमूलत्वेन सुनिरसत्वं सूच्यते। दूष्यार्थानां बहुत्वेपि दूष्यतावच्छेदकस्य प्रयोज-काकारस्यात्रानुशिक्षणाद्दूषणं सुग्रहमेवेतिभावः।

ननु "यतोवाचोनिवर्तन्ते—इति दुरवबोधत्वेन प्रसिद्धस्येश्वरस्येह कार्त्स्न्येन निरूपणकथनं कथं विश्वसनीयम्? इत्यत्राधिकारिभेदेन सदाचार्यसकाशेऽधीत शास्त्राणा न कश्चिदपि दुर्भणमित्यावेदयन् स्वोक्तस्य सर्वस्य पूर्वाचार्याशयानुवादमात्ररूपतां स्वनैच्यायानुसन्धत्ते गाथया—शिरै इति "काराकल्पं वपुः—कस्मैस्व-देत सुखसञ्चरणोत्सुकाय कारागृहे कनकरटङ्कलयापि बन्धः" इति बन्धनभूत देहस्थितिरूपे संसारे नित्यं निपत्या-त्यल्पमधुमिश्रविषसदृशविषयसुखानुभवितॄणां अत्यन्त परोक्षवेदतात्पर्यावगतिंप्रतिबन्धकीभूतानाद्यविद्याया निवर्तिका प्रधानभूता भगवत्कृपैव। अकिञ्चनजनानां अवगाहनतीर्थं, अथनित्यानुभाव्योविषयः, पश्चादाकल्पमनुभवेप्यपर्याप्तः उत्तरोत्तरमाशास्यः पुरुषार्थश्चेतिवयं गम्भीराम्भोनिधिसदृशभगवत्तत्त्वस्थितिं पूर्वाचार्योपदिष्टं प्रादर्शयामेति पूर्णगाथार्थः।

ननु बाह्यकुदृष्टीनां अत्रोक्तप्रमाणतर्कैस्समुन्मूलनं कथं भविता? तेपि हि स्वस्वमतसाधकान् तान् प्रदर्शयिष्यन्ति। तथा च दुरुत्तरं व्यसनमित्यत्र स्वमतस्य सत्संप्रदायशुद्धिं स्वकृतैतत्प्रबन्धस्यप्राशस्त्यं एतदुप जीवनेनास्मदीयैः परेषां सुनिरसत्वञ्चाह—त्वय्यन्तत्राणमिति। इदं शारीरकस्यकवचवत्त्राणं भवति। तद्धि

ஔதார்ய காம்பீர்யஙகளும் உடையதாய, இருககும இநத கரநத பாகததை பெரியோாகளால் உபதேசிக்கப் பெற்றவா எவரேனும்-ஜஞாநசக்திக குறைவுடையவரேயாயினும்-பெருமை

त्रैय्यन्तत्राणमेतत् कविकथकहरेरुत्थितं वेङ्कटेशात्
दत्तं सद्भिर्दधानस्स्थिरचतुरमृदूदारगम्भीरगुम्भम् ॥

यःकश्चिद्वामनोपि प्रकटितमहिमा विक्रमैरुज्जिहीत
प्रज्ञादौर्जन्यगर्जत्परमतपरिषन्मस्तकन्यस्तपादः ॥

---

शरीरस्यत्राणम् । अत्र वादाहवः प्रवर्तते । अष्टादशसु दिनेषु भारतयुद्धं पूरा प्रवृत्ते । अत्रतु ततोप्यधिकतया एकोनविंशत्यधिकारेषु परैस्सह विवदितव्यमभूत् । एतत्= जीवतत्त्वाद्यधिकारत्रयम् । अतिविस्तृतस्याप्यस्यभागस्याम्भोनिधेरिवाङ्गुल्या, बुद्धिविशेषेण सङ्गृह्यैतदिति निर्देशः । एतेनास्याधिकारत्रयस्यैकपेटिकात्वं फलितम् । अस्मिन् ग्रन्थे एतदधिकारत्रयं सर्वार्थसिद्धिरीति अवशिष्टभागश्शतदूषणीसाम्यञ्च भजतः । "सर्वार्थसिद्धिश्शतदूषणीच द्वे खेटशस्त्रे कथकाग्रगानाम् । आद्येन तत्र क्रियते स्वरक्षा प्रत्यर्थिभङ्गःकलहेन्यतस्स्यात् ॥ इत्युक्तेः । अतोऽस्यग्रन्थस्य सर्वोत्तमत्वसिद्धिः । कविकथकहरेः कवितार्किकसिंहात् । केवलं कोमळकवेः कर्कशस्यतार्किकस्यवानैतादृशप्रबन्ध विरचनेऽधिकारः, वक्ष्यमाणस्थैर्यमाधुर्यादि गुणानुन्मेषादिति तत्कर्तुस्स्वस्य तदुभयरूपत्वकीर्तनम् ।....हरेः वेङ्कटेशादुत्थितमिति निर्देशस्वारस्यात्, कोह्यन्योभुविमैत्रेय महाभारतकृत् भवेदितिरीत्यास्यग्रन्थस्य साक्षात् भगवतएवोत्पन्नत्वं व्यज्यते । दत्तंसद्भिर्दधान इति । पत्रेक्षितादेर्व्यर्थत्वानर्थत्वादिनाऽस्मिन् ग्रन्थे हठेन पठनं माभूत् । आचार्यसन्निधौ अवनतिपूर्वकं अध्येयोयं ग्रन्थ इत्यर्थः । एवं वक्तृवैलक्षण्यादिकमुक्त्वा वि[illegible]माह — स्थिरचतुरेति । स्थैर्यं-असन्दिग्धार्थकशब्दसन्दृब्धत्वम् । चातुर्यं - "अवशादुत्तानदत्तानना: प्रस्तोष्यन्त्यवधिं प्रयोगपदवीसारस्यसारस्यन" इत्युक्तरीत्या प्रत्यर्थिभिरपि प्रार्थनीयत्वम् । मृदुत्वं अनायासेनावगम्यमानत्वम् । औदार्यम्-शब्दार्थयोः यावच्छक्यं अपेक्षितान्यान्ययुक्ति निकरसमर्पकत्वम् । गाम्भीर्यम् तात्पर्येयत्ताराहित्यम् एतेषा गुणानां गुम्भःयस्मिन इति ग्रन्थस्योस्यापादचूडमेतन्मयत्वं तम् । अत्रादौ स्वमतस्य प्रतिष्ठापनात् स्थैर्यं, अनन्तरं सचमत्कृति परमतदूषणात् चातुर्यं, अथ भगवच्छास्त्रयोः पाञ्चरात्रवैखान सयोरविरोधकरणात् मार्दवं, पश्चात् परोक्तोपायोपेययोः खण्डनपूर्वस्वसम्मतयोस्तयोर्यथाधिकारं सर्वेभ्योपिवितरणात् औदार्यं, निगमे सर्वार्थानुक्रमणात् गाम्भीर्यञ्चबोध्यमित्योहुः । अस्मिन् पक्षे - एतदादिभूतभाविकृत्स्न ग्रन्थपरामर्शः, नत्वेतावन्मात्रस्य । तदानीमन्ते पठनीयस्यास्यपद्यस्य प्रसङ्गवशान्मध्यनिपात इति बोध्यम् । एतद्ग्रन्थेऽधिकार्यनियममाह—यःकश्चिद्वामनोपि । परमतभङ्गकामस्सर्वोप्यधिकारीतिद्योत्यते । वामनोपि - मन्द प्रज्ञोपि । भगवदवतारभूतवामनोपीति ध्वन्यते । प्रकटितमहिमा = एतद्ग्रन्थाध्ययनेनेति इन्द्रादिप्रार्थनेनेतिच शेषः । विक्रमैः—बुद्धिबलादिभिः पदन्यासैश्च । उज्जिहीत - वर्धेत । उत्पूर्वकात् होह[illegible] धातो

इति कवितार्किक सिहस्य सबतन्त्र स्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ता-
चार्यस्यकृतिषु श्रीमत्परमतभङ्गे परतत्त्वाधिकारश्चतुर्थस्सम्पूर्णः ॥ 4 ॥

कवितार्किकसिंहायकल्याण गुणशालिने ।
श्रीमतेवेङ्कटेशायवेदान्त गुरवे नमः ।

---

संभावनायांलिङ् । वादिविजयप्रकारं दर्शयति—प्रज्ञादौर्जन्येति । प्रज्ञयादुर्जनस्वभावेनच गर्जन्तीपरमत-परिषदित्यर्थः । पादः - वामपादः । अदक्षिणानां तेषां दक्षिणेन पादेनास्प्रष्टव्यत्वात् । "षदमदक्षिणंलक्ष्यतां-अष्टापदकटकमसौ वामपादे बिभर्तु" इत्यन्यत्रोक्तेः । भग्नदर्पाणां तेषां स्वयमेव शिष्यीभवनाद्वा, बलाद्विनय-नेनवा तेषाम्मस्तके शिरसि न्यस्तवामपादोयमधिकारी महीयत इत्यर्थः ।

अत्र-यः कश्चिद्वामनः—इति, "विक्रमैरुज्जिहीते"ति च वामनत्रिविक्रमकथाप्रस्फूर्तिः । यः कश्चित्= अज्ञातकुलगोत्रः । तदुक्तं—"कस्त्वं ब्रह्मन्, अपूर्वः, क्वचतववसतिः, याखिलाब्रह्मसृष्टिः कस्तेत्राताऽनाथः, क्वचतवजनकः नैवतातं स्मरामि" इति । सद्भिर्दत्तमित्यादिनातद्वैलक्षण्यमप्यनुसंहितम् तत्रासुरस्वभाव एकएव दाता बलिः, अत्रत्वनेके सन्तः । तत्रैकस्यैव मस्तकेन्यस्त पादः, इहतु परिषन्मस्तके । एवं पुरादुर्वासस-श्शापात् भ्रष्टश्रीकः इन्द्रः विश्वरूपान्नारायणकवचं शरीरमात्रत्राणं प्राप्य शत्रून् जिगाय अत्रतु वेङ्कटेशात् शारीरकत्राणं ग्रन्थकवचमाप्येत्यपि बोध्यम् ॥

निस्सन्देहं न्यरूपि, त्रिविधचिदचितोरान्तरश्चान्तरङ्गे
नित्यंनृत्यन् प्रपन्नेष्वखिलभयतमोभानुमान्योनुमान्यः ।
यस्यां च प्रक्रियायामिह बहुविशदं देशिकेन्द्रेण येन
श्रेयः, मेयं प्रमाणं प्रविदिति दिशतात् नित्यमेतत्त्रिरूपम् ॥

परस्यतत्त्वं प्रकटं प्रसाध्य प्रशान्तचित्तांश्चपरान् विधाय ।
विभात्यसौ वेङ्कटनाथसूरिः, विशिष्टविद्यानिधिबृन्दवन्द्यः ॥

इति श्रीवत्सवंशायनस्य देशिकचरणपरायणस्य नारायणस्यकृतिषु परमतभङ्गव्याख्यायां
देशिकाशयप्रकाशाभिख्यायां परतत्त्वाधिकारस्संपूर्णः ॥ 4 ॥

---

பெற்று தமது விகரமங்களால், அகரமம செய்யும் ஹடபுததியை உடைய பிறமத கோஷ்டி யின் தலைமேல் தமது இடதுகாலை ஊனறி வெறறியைபபெறுவா

பரதத்துவாதிகாரம் தமிழ்மொழிபெயர்பபு முற்றிற்று.

श्री

श्रीमते लक्ष्मीनृसिम्हपरब्रह्मणे नम ।।

श्रीमते रामानुजाय नमः ।। ।। श्रीमते वेदान्तगुरवे नम. ।।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।। वेदान्ताचार्यवर्यो मे सन्निधत्तांसदाहृदि ।। ।।

अथ श्रीपरमतभङ्गे स[illegible]दायदाषाधिकारः ।। ५ ।।

வெறியார் துளவுடைவித்தகன் தன்மையின் மெய்யறிவார்
குறியார் நெடியவரென்றொரு குற்றம் பிறர்க்குரையார்.
அறியார் திறத்தில் அருள்புரிந்து ஆரண நன்னெறியால்
சிறியார்வழிகளழிப்பதும் தீங்குகழிப்பதற்கே

---

श्री

श्रीमते लक्ष्मीनृसिंहमपरब्रह्मणे नम ।

अथश्रीमत्परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाभिख्यायां

समुदायदोषाधिकारः पञ्चमः ।। ५ ।।

वेङ्कटेश्वरगुरूत्तमसूक्ते ! भक्तइत्ययि ! दयां मयि धेहि ।
येन नाहमिह साहसवृत्तौ सम्प्रवृत्त उपहासपदं स्याम् ।। १ ।।
परमतसमुदाये दूषणं तुल्यरूपं वदति नवनवं यः पञ्चमोग्रन्थभागः ।
तमपि कमपि देवं देशिकाग्र्यावतारं, प्रणिपतनविशेषैः प्रीणयन् प्रक्रमे द्राक् ।। २ ।।

अथ वृत्तेष्वधिकारेषु विशदंविमृष्टेपि तत्त्वत्रये यावत्परमतनिरसनं नप्रतितिष्ठति प्रज्ञेति— "ससंशयान् हेतुबलान्नाध्यावसति माधवः ।"इत्युक्तदशानिवृत्त्यर्थं, परमतानि निराकरिष्यन्, निराकर्तॄणामभिसन्धिशुद्धिं निराकरणप्रयोजनञ्च सङ्गृह्णाति–वेरियार् तुळवुडै इत्यादि । अतिपरिमळतुन्दिलतुळसीदामभूषितस्याश्चर्यमहिम्नः भगवतःकृपारससारस्यवेदिनः—अयंह्रस्वः अयंतुदीर्घः—इत्यादिवादिव्यक्तिगतपृ कदूषण परिवाद पराङ्मुखाः महान्तः—मन्दमतीन् छात्राननुकम्प्य वैदिकं पन्थानम[illegible]रुध्य परवादिनाकृतं

---

ஸ்ரீ

ஸ்ரீபரமதபங்கத்தில் 5வது ஸமுதாயதோஷாதிகாரத்தின்
தமிழ் மொழிபெயர்ப்பு.

(பாசுரம்) மிக்கபரிமளத்தை உடைய ஸ்ரீ துளஸீமாலாலங்க்ருதனை எம்பெருமானின் தயாதிகுணங்களுடைய உண்மை ஸ்வரூபத்தை உள்ளபடி அறிந்த பெரியோர்க்கு உலகம் முழுவதும் ஒரேமாதிரியனதே இவன்-குள்ளன், இவன்-நீளன் என்று வீணேபிறர்க்கு குற்றங்களுரைக்கமாட்டார்கள். ஆயினும் அவர்கள் மந்தமதிகளான மாந்தர்கள் பால் கருணைசுரந்து, வைதிகஸித்தாந்தப்ரமாணங்களைக் கொண்டு, மற்றகீழ்த்தரமான மதங்களைக்கழிப்பதும் நமது தீங்குகளை அறவே அகற்றுவதற்காக என்று தாம் உணரவேணும்.

''பிறமதங்களின் தவறுகளை அவச்யம்கண்டிக்கவேணும்.''

प्रबलप्रमाणसिद्धस्वपक्षोपक्षेपपूर्वकமாக सङ्ग्रहेण परपक्षங்களைக்கழித்தோம். மேலே मन्दमति களுக்கு— ''अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायंलोकोऽस्तिनपरः नसुखं संशयात्मनः ।।— ससंशयान्हेतुबलान्नाध्यावसतिमाधवः''— इत्यादिகளிற்சொன்ன दशैவாராமைக்காக परपक्षங்களை निश्शेषமாகக்கழிக்கவேண்டுகையாலே இவற்றுக்கு முறபட समुदायदोषம்சொல்லுகிறோம்.

---

क्षुद्रोपद्रवं द्रावयन्तीत्येतत्–आस्तिकानां स्वकीयानां मतिमान्द्यं परिहर्तुमेव । नवादिविजयाद्यन्यप्रयोजनार्था-मितिपूर्णगाधार्थः । अत्राचार्याणां भगवत्कृपासंकल्पप्रकारवेदित्वकथनेन–परवादिभिस्सह वाग्युद्धे सम्प्रवृत्तेपि, तेषांस्वोपर्यास्कन्दनस्य, स्वयं प्रतिवक्तव्यतायाश्च तत्तत्कर्मानुगुणभगवत्सङ्कल्पाधीनत्वबुध्या परेषु निर्विकारचित्तत्वेन वैरानुबन्धाभावस्सूच्यते । अयंह्लखः इत्यादिव्यक्तिदूषणदूरीकरणोक्त्या ग्रन्थकर्तृवि-षयैतिह्यविशेषस्संस्मार्यते । तथाहि–कदचित् विदुषां परेषां समाजे प्रविशतामेतेषामाचार्याणां मूर्तिमालोक्य–आकरोह्लख–इति लौकिकोक्त्या परवादिषूपहसत्सु सत्सु–आकारः कथंह्लखः? सहि दीर्घस्वर इति सचमत्कृति तेनैवावसरेण क्रमशस्सर्वशास्त्रार्थचर्चा प्रवर्त्यान्ते जितमाचार्यैरिति । आचार्याणां परपक्षक्षपणमपि स्वपक्षरक्षणनान्तरीयकतयैव कर्तव्यंभवति । यथा हनुमतोक्तम्–''देहस्य रक्षणार्थाय प्रतियुद्धा मया रणे ।। इति रावणम्प्रति ।

अथ पूर्वमेवाधिकारत्रये तत्तदवसरेषु परमतस्य प्रतिक्षिपत्त्वात्पुनरत्र तत्करणं व्यर्थं भविष्यतीति शङ्कायां तयोर्वैलक्षण्यप्रतिपादनमुखेन पूर्वप्रकरणसङ्गतिमाह–प्रबलेति वाकयद्वयेन । स्वपक्षः–नाथोपज्ञं प्रवृत्तं यामुनेयप्रबन्धैर्बहुभिरुपचितं यतीन्द्रैस्सम्यक्त्रातं आखिलतमःकर्शनमस्माकं विशिष्टाद्वैतदर्शनम् । तस्य प्रबलप्रमाणसिद्धत्वञ्च निगमागममर्मज्ञबोधायनाद्यादृतत्वम् । तदस्मत्पक्षस्यैवेतिभाष्योपक्रमएव स्पष्टम्–भगवद्बोधायनकृतामित्यादिना । विपरीतमिदं परपक्षेषु । तथाचशङ्करभाष्यारम्भे–युष्मदस्म-त्प्रत्ययगोचरयोरित्यादिना–जगन्मिथ्येत्येव भवितुंयुक्तमिति स्वोत्प्रेक्षितार्थं प्रतिपाद्य यथाचायमर्थस्सर्वेषां-वेदान्तानां, तथा वयमस्यांशारीरकमीमांसायां निरूपयिष्याम इति स्पष्टं तस्यैवानुसर्तव्यत्वमुच्यतेस्म । उक्षेपः–प्रारम्भः । सङ्ग्रहेणेति । स्वपक्षोपन्यासावसरे प्रसक्तानामेव परपक्षांशानां पूर्वंखण्डनात्, तदभ्युपगत

---

ப்ரபலமான ப்ரமாணங்களைப்பெற்ற நமது ஸித்தாந்தத்தை முன்னடி வெளியிட்டு, சுருக்கமாக பிறர்மதங்களைப்புரட்டினோம். ஆனாலும்-மந்தபுத்தியுடையசிலர்–அறியாமை யாலும், அசிரத்தையாலும் ஸந்தேஹப்பேர்வழிகளாகி அழிவர். அப்படிபபட்டவர் இந்த உலகத்திம், மேலுலகத்திலும் ஸுகலேசமுமடையார்-ஏதாகிலும் குதர்கத்தினல் ஸம்சயம் பேசிப்பொழுதைக்கழிப்பவனிடம் கடவுளும் குடிகொள்ளமாட்டான் இந்தமாதிரி நிலை சிலருக்கு வாராமைக்காக பிறர்மதங்கள் அனைத்தையும் அலசி ஆராயவேண்டியுள்ளது-அதில் முதலிலே, பிறமதங்கள் அனைத்துக்குமுள்ள திரண்ட தோஷம் சொல்லுகிறோம்.

''பிறரோடுவாதங்கூடாது என்றதின் கருத்து.''

"यथाशक्ति निगृह्णीयात् देवतागुरुनिन्दकान् । विद्याचोरोगुरुद्रोही वेदेश्वरविदूषकः । तएते बहुपाप्मानस्सद्योदण्ड्या इतिश्रुतिः ॥" इत्यादिप्रमाणங்களாலும், "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" என்று अक्षपादोक्तप्रकारத்தாலும் விஜிகீஷு கதையிலே நின்று वेदोपप्लावकबाह्यकुदृष्टिகளை निराकரிக்க प्राप्तமாகையாலே-"नविगृह्य कथां कुर्यात्-अधीयानः पण्डितंमन्यमानः योविद्यया हन्ति यशः परस्य । तस्यान्तवन्तश्च भवन्ति लोकाः नचास्य तत

---

कृत्स्नप्रमाणप्रमेयदूषणं नकृतमितःपरंकर्तव्यंचेतिभावः । तदेव प्रतिज्ञानीते मेलिति । परोक्तप्रयोजनभङ्गाधिकारान्ते एतत्ग्रन्थभाग इत्यर्थः । मन्दमतयः= बुद्धिचलनसम्भावनावन्तः । येतु पूर्वाधिकारत्रयोक्तार्थान्श्रुत्वा स्वयमूह्यन्तः मुह्यतोऽन्यानपिप्रतिबोधयितुं समर्थाः, तेषान्त्वेतावतैवालमितिभावः । अज्ञश्चेति । "श्रद्धावान्भजते ज्ञान" मितिपूर्वोक्तार्थस्येदं व्यतिरेकवचनम् । श्रद्धा=शास्त्रार्थस्यस्पष्टग्रहणत्वरा । संशयात्मा=संशयस्वभावः । विनश्यति=नष्टोभवतीतिभाष्यम् । "नित्यस्यात्मनः पुरुषार्थशून्यतालक्षणस्यविनाशस्य पूर्वापरभावेन सन्तन्यमानस्य प्राचीनस्यैवानुवृत्तिप्रदर्शनार्थं प्रकृतिप्रत्ययार्थभेदविवक्षया नष्टोभवतीत्युक्तमिति तत्र तात्पर्यचन्द्रिका । अयमिति प्रत्यक्षदृष्टत्वसूचतात्, अस्यैवाभावे कुतश्शास्त्रार्थश्रद्धयाऽवाप्यस्य परलोकस्येति कैमुतिकन्यायसिद्धिः । एतच्छ्लोकार्थस्तु विस्तृतस्सङ्क्षेपशारीरके-अज्ञो विनश्यति पुमानतिमूढभावात् अश्रद्धयोपहतबुद्धिरतोपि कष्टः । कष्टाच्चकष्टतरएवतुसंशयात्मा दुःखं सदेति भगवानपि वासुदेवः ॥ इति । अत्राहेतिशेषः । ससंशयानिति । "निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः । इतिपूर्वार्धम् । हेतुबलात्ससंशयानित्यन्वयः । ततश्च बहुविदामपि हैतुकादिसंसर्गेण मतिचलनसंभावनास्तीति द्योत्यते । दृष्टश्चशैवादिसहवासेन गोविन्दभट्टारकादीनां प्रच्युतिपरिहारादिकमैतिहयेषु । अत्रोपसर्गविशेषयोगाद्द्वितीयाप्रयोगः । आदिना-"एक यदिभवेच्छास्त्रं ज्ञानं निस्संशयंभवेत् । बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सदुर्लभमित्यादिकं विवक्ष्यते । दश[illegible]नित्यदुःखादिकारणससंशयत्वावस्था । परपक्षाः=चार्वाकादिपाशुपतान्ताः । निश्शेषेति । यथाऽल्पोपि व्याधिरुपेक्षितो बाधकतया वर्धेत, तथैव-क्षुद्रोपिशत्रोर्वादोऽवशेषितोऽनर्थायैव भवतीतिभावः । मुर्पङ्=प्रत्येकं लोकायत[illegible] तत्तन्मतदूषणात्प्राक् । समुदायदोषेति । परेषा परस्परं परश्शतविप्रतिपत्तिसद्भावेपि ताविस्मृत्य

---

இங்கு சிலப்ரமாணங்கள்-தெய்வம் குருஇவர்களை நிந்தித்தால், அவர்களை நாம் ஆம் தனையும்முயன்று வெளியேற்றவேண்டும் என்று கூறுகின்றன. குருவுக்குத்ரோஹம் செய்து கல்வியைக்களவாடுகிறவன், வேதம் தெய்வம இவைகளைத் தூற்றுகிறவன், முதலானோர் மஹாபாபிகளாவார். அவர்களுக்கு அப்போதே தண்டனைவழங்கவேண்டும் என்று வேதமும் கூறும் என்கிறன சிலவசனங்கள், கௌதமர் என்ற மஹர்ஷி-பயிரைக்காக்கமுள்வேலியிடுவது போல்-தத்துவநிச்சயங்களைக் குலைக்காமலிருக்க சிலரோடு, உண்மைபேசி வெற்றிபெறவேணும் என்ற ஆசைகொண்டும், எப்படியேனும் அவர்வாயை அடைக்கவேண்டும் என்ற ஒரே

ब्रहम फलं ददति ।।-वादेन ब्राह्मणं जित्वा हृष्टो भवति यो नरः । श्मशाने पादपस्सस्यात् कङ्कगृध्रनिषेवितः ।। -गुरुंत्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः । " इत्यादिகள் वीतराग वैदिकविषय नियतங்களாகக் கடவன. वादமொன்றுமே कथैஎன்று जैनादिகள் கட்டினது—प्रमाणतर्काभासங்களைக் கொண்டு प्रवृत्तिக்கையாலே முடிவில் தோற்கிறோம் என்கிற भयத்தாலும், वीतरागत्वप्रसिद्धियैயிட்டு विप्रलंभिக்கைக்காகவுமாமத்தனை. இப்படி शास्त्रप्रामाण्यத்தையும் धर्माधर्मादिகளையுமிசையாதாரும், धर्माधर्मादिகளுண்டென்றிசைந்து वेदप्रामाण्यத்தை இசையாதரும், இரண்டையுமிசைந்திருப் பாரைச்சட்டையாக்கி உள்ளே (உள்ள) वेदबाह्यராயிருப்பாரும் निराकरणीयர்என்னுமிடம் महाभारतादिகளில் பல उपारव्यानங்களிலும் கண்டுகொள்வது.

---

वेदान्त्युपरोधायैकमत्येन संधीभूय श्वावराहकलहक्रमादमी पतन्ति । ततश्च संकुलयुद्धे प्राप्तेएकेन प्रहरणेन सर्वानिव शत्रून् उद्दिश्य एकदूषणोक्त्या सर्वपरमतसंस्पर्शिसमुदायदूषणानि प्रथमं देयानीति भावः । अतएवास्याधिकारस्य समुदायदोषाधिकरसंज्ञेति । " प्रागल्भ्यमात्रशरणाः प्रतिवावदूकास्संभूयवादकरणेपि नमेऽविषहया " इति भवत्याचार्याणां मेधाविलसितम् ।

ननु–" नविगृह्यकथांकुर्यादिति परैस्सह विजयाय न वाग्युद्धकरणं युज्यत इति निषेधात् तादृशस्यास्य ग्रन्थस्य कथमिदानीं प्रणयनाभिसन्धिरित्यत्र साधकबाधकवचनान्युपन्यस्य विषयं व्यवस्थापयति यथाशक्तीति । उत्तमकथारूपवादकरणे सामर्थ्याभावेसति जघन्यभूतजल्पवितण्ऽाभ्यामपिवेत्यर्थः विघाचोरःन्गुरूपसर्त्तिविना पत्रेक्षणादिना विघामधिगतः, "मत्कर्तृतामननुकीर्त्यच कीर्तिनाशान्निस्सन्ततिर्जगतिजन्मशतानि भूयात्"..."कर्णामृतं रक्षत हे! कवीन्द्राः । यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ती " त्याद्युक्तरीत्या परकीयग्रन्थेभ्यस्तन्नामान्यनुत्कीर्त्य तदुक्तविषयस्य स्वकीयत्वेन स्वग्रन्थे विनिवेशयिताच । सद्यो दण्ड्याःन्दृष्टमात्रएवखयं वादादिना तदशक्तौ राजदण्डादिनावा निग्राहयाः । अक्षपादसम्मतिमप्याह तत्त्वाध्यवसायेति । तत्त्वनिश्चयेत्यर्थः । अयमाशयः-"पारुष्यमतिवादश्च पैशुनञ्चैव सर्वशः । अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधमिति सामान्यतो वृथाजल्पवितण्डयोर्निषेधेपि–बाह्यकुदृष्ट्यादिभिस्सह वादकरणेन तत्त्वाध्यवसायादेर्दुस्सम्पादत्वेन, तदा जल्पवितण्डे अपि प्रयोक्तव्ये एव ।

---

நோக்கம் கொண்டும் கூடவாதிடலாம் என்கிறார். ஆகையால் வெற்றிபெறும் வாதமார்க்கத்தில் நின்று வேதங்களை அழிக்க உட்பகையும் வெளிப்பகையும் கொண்டு உழைக்கும் துர்வாதிகளை வென்றிடவேவேணும். ''பிறரோடு வலியவந்து வாதமசெய்யாதே, ''நன்குபடித்துதானே பண்டிதன்-எனறுஎண்ணி, தன்கல்விச்செருக்காலே பிறரின்புகழை எவன் பாழ்படுத்துகிறானோ-அவனுக்கு இவ்வுலகத்துப்பயன்கள் க்ஷீணங்களாகும். வேதம் மேலுலகப்பயனையும் தாராது.'' ''வாதில்ப்ராம்மணனை வென்று எவன் மனம்மகிழ்கிறானோ அவன் சுடுகாட்டில் கழுகுபருந்துமுதலிய பக்ஷிகள் நிறைந்த முள்மரமாகப்பிறப்பான்'' ''தன்குருவை-நீவா நீபோ

"பிறர்மதங்களில் திரண்டதோஷம்."

இப்பரபக்ஷங்களுக்கெல்லாம் —अङ्गरहितங்களான तर्कங்களை परिकरங்களாகக்கொள்ளுகையும், उपजीव्यप्रत्यक्षादिविरुद्धहेतुக்களை प्रयोगिக்கையும், अनादिनिधनाविच्छिन्नसम्प्रदायतैயாலே निर्दोषமான वेदத்திற்கு विरुद्धங்களைச் சொல்லுகையும், भ्रमविप्रलिप्सादिदोषदूषितரான पुरुषர்களுடைய वाक्यங்களை प्रमाणமாகக்கொள்ளுகையும் திரண்ட दोषம் அவர்கள் சொல்லும் तर्कங்களுடைய आभासத்தையும் प्रत्यक्षादिविरोधத்தையும் அவ்வோ अवसरங்களிலேகாட்டக்கடவோம்.

---

बीजाङ्कुरस्य संरक्षणाय कण्टकशारवयाऽऽवरणकल्पनवत् । कशादिना ताडयित्वा गवादिमृगाणां वारणेऽशकेय सति मार्गेषु गछतां पादवेधिकया कण्टकशारवयापि परितोवृत्तिः क्रियते । तद्वत्-महतामनभिमताभ्यां कदाचित्सिद्धान्तस्यैव दूषिकाभ्यामपि जल्पवितण्डाभ्यां व्यवहर्तव्यमेवेतिभावः । अत्रेदंबोध्यम्-वीतरागकथा वादः । उभयोरुक्तिप्रत्युक्तिपरम्परा कथा । तस्याश्च—"शिष्यगुरुसब्रह्मचारिश्रेयोर्थिभिरभ्युपेयादिति रीत्या यथाप्रमाणं अज्ञातज्ञापनार्थं स्थितस्थापनार्थं संशयापनोदनार्थञ्च क्रियमाणतया जयाद्यर्थत्वाभावेन वीतरागाणां कथेतिप्रसिद्धिः । अत्रखपक्षस्थापनं परपक्षप्रतिक्षेपश्चेति द्वे अङ्गे । वीतरागैर्वादमध्ये न बुद्धिपूर्वकं दुष्टहेत्वादि प्रयुज्यते । अबुद्धिपूर्वकन्तु तत्सहयम् । विजिगीषाविरहात् । इयमेताद्दश्येव कथा यदि विजिगीषया परवादिभिस्सह क्रियेत, तदा सैव जल्प इति जल्प्यते । अयमेव जल्पः स्वपक्षस्थापनाभिसन्धिना विना केवलं परमतदुद्दूषयिषयैव यदि प्रवर्तेन, तदा वितण्डारव्यां भजते । अनयोरुभयोः विजिगीषादिना दुष्टहेत्वादिप्रयोगोपि कदाचिद्भवति । तथाच वादएकएववीतरागैः क्रियते । अन्ये द्वेअपि विजिगीषुकथैव । परन्तु कैश्चिंद्वीतरागशिखामणिभिराचार्यैः केवलं तत्त्वाध्यवसायसंरक्षणार्थं परैस्सह वादमार्गेऽसंभाविते सति जल्पदिकमप्यल्पमाश्रीयतइति लोके बहुळमुपलम्भात् कदाचित् जल्पादिकमपि वीतरागकथा भवतीत्यनुमन्तव्यनिति । ततश्चोक्तवचननिचयभावं निर्गळितं दर्शयति-विजिगीषुकथेति । वेदोपप्लावकेत्यनेन तैस्सह वीतरागाणां वादमार्गाश्रयणस्य दुष्करत्वं द्योत्यते । प्राप्तेति । "त्वया मन्निदेशवर्तिना कौशिकनियमितेन राघवेणेव लब्धाधिकारेण यथाविधि वीतरागकथानवसरे वेदेश्वरविदूषकास्सर्वे तत्त्वाध्यवसायसंरक्षणार्थं बलातिबलाभ्यामिव जल्पवितण्डाभ्यामपि जेतव्या इतिसङ्कल्पसूर्योदयोक्तदिशा प्रकृते

---

என்று ஒருமையில் பேசியும், ஹும் என்றவாறு கோபித்துக்கொடும், ப்ராம்மணரை வாதில் வென்றும் இருக்கிறவனுக்கும் முன் சொன்னகதியேகிட்டும்." என்றுபிரமாணவசநங்கள் கூறுகின்றனவே என்னில்-அவை, மிகவும் வைராக்யமனப் பாங்குடையவைதிகோத்தமர் விஷயமாகவந்தவை. பொதுவானவைஅல்ல-பற்றற்றவர்கள் பரஸ்பரம் செய்துகொள்ளும் விவாதமே விசாரமென்னத்தகும் என்று ஜைநர் முதலியோர் சொன்னது-அவர்களுடையமதத்தில் சரியான பிரமாணங்கள் யுக்திகள் இல்லாதிருப்பதால் முடிவில் நாம் தோற்றுவிடுவோமோ என்றபயத்தாலாகும். தங்கள்குருவே பற்றற்றவர் எனறு உலகில் பகட்டிக்கொள்ளுவதற்காக

''வேதம் நித்தியமானது''

वेदம் नित्यनिर्दुष्टமாய்க்கொண்டு प्रमाणமானலன்றோ परमतங்களுக்கு वेदविरोधம் दोषமாவது? वर्णपदवाक्यங்களுக்கு प्रत्यक्षादिகளாலே अनित्यत्वம் தோன்றுநிற்க वेदம் नित्यமாம்படி என்னென்னில்? पदத்துக்கும் वेदத்திற்கும் नित्यत्वமாவது सर्वकालத்திலும் एकरूपक्रमविशेषविशिष्टமாய்க்கொண்டு प्रयोगिக்கப்படுகை. ஆகையாலே, क्रमव्यक्तिகளுக்குப்போலே वर्णத்துக்கும் वेदोक्तமான उत्पत्तिनाशங்களைக்கொண்டாலும், ईश्वरனும் மற்றுள்ள प्रवर्तकருமெல்லாம் एकरूपமாக प्रवर्त्तिப்பிக்கையாலே पदத்தையும் वेदத்தையும் नित्यமென்னலாம். वर्णनित्यत्वமுண்டானாலும் पुरुषबुध्यधीनक्रमविशेषம் கொண்டபோது अनित्यत्वம்வரும். शद्बाधिकरणத்தில் शबरस्वास्यादि

---

खाचार्यनियमनमप्यस्तीति ध्वनितम् । अथ कथानिषेधकवचनानां भावमाह-न विगृहेयति । ...वहिर्माल्यं-नधारयेत् । गवां चयानं पृष्ठेन सर्वथैव विगर्हितमिति मनुः । विगृह्यन्विजिगीषया बलात्कृत्य । निषेधातिलङ्घनेऽनर्थमाह-अधीयानइति । अध्ययनावस्थायामेवात्मानमयं पण्डितम्मन्यत इति अहो मोहस्य विलसितमिति पदद्वसमभिव्याहारेण भावः । परस्य=अधीतविद्यस्य लब्धप्रतिष्ठस्य कस्यचित् । लोकाः=फलभूता इहलोकभोगाः । पराजेतुः पुरुषस्य कीर्तिसुखादिकं सर्ममितियावत् । अन्तवन्तः=नाशवन्तः । नश्यन्तीति यावत् । ब्रह्म=वेदः । फलं=पारलौकिकं सुखम् । नददाति=नदास्यति । वर्तमानसामिप्येलट् । एहिकानर्थमेवविवृण्वद्वाक्यमाह-वादेनेति । कथासामान्यस्योपलक्षणमिदम्, वादेन ब्राह्मणविजयाभिमानेपि-चेद्दोषः, तर्हि काकथा? कथान्तरस्येति तयोः कैमुतिकन्यायसूचनंवा । पादपः=शाल्मल्यादिकण्टकिद्रुमः । तस्मिन्तेव कङ्कगृध्रादीनांवासात् । श्मशानंइतिशवशयनमित्यस्य विकृतिभूतंपदम् । तत्कीर्तनमत्र कङ्कगृध्रादीनांमांसाशिनां तल्लाभसूचनार्थम् । गुरुमिति । त्वङ्कृत्य= "त्वमागच्छ, त्वंगच्छे" तिनीचवाचा भृत्यमिवोद्दिश्य । "धन्यावयं, भवत्पादरजः पूतमिदंगृहमितिहि सोपचारं वाचाऽर्चयितव्यम् । हुंकृत्य=हुङ्कारेण शपित्वा । हुमिति कोपानुभवानुकारः । अस्याप्यु त्तरार्धं-"श्मशाने जायतेवृक्षः कङ्कगृध्रोपसेवित इति पूर्वोक्तेन शब्द तोर्थतश्चसमानम् । अतएवास्यानुदाहरणम् । वीतरागवैदिकविषयेति । तथाचोक्तवचनेषु-"परस्य, ब्राह्मणं, विप्रं-" इत्यादिकथाप्रतिसम्बन्धिवाचकपदानां-वीतरागः अधीतवेदः यः पण्डितोत्तमस्साधुः पुरुषः—तादृशव्यक्तिपरतया तैर्विगृह्य नकथा कार्येत्येव भावो ग्राह्यः । तैर्यात्किञ्चिच्छास्त्रार्थक्षोभस्याप्य-

---

வுமாம். ஆகையாலே ''வேதசாஸ்த்ரம் பிரமாணம்-தர்மம் அதர்மம் என்ற பிரிவினையுண்டு'' என்று ஒப்பாத சார்வாகாதிகளைம், ''முன்சொன்னபிரிவினையுண்டு. ஆனல் வேதங் கிடையாது'' என்ற பௌத்தாதிகளையும், ''இரண்டுமுண்டு'' என்றுவெளியில் பேசித்திரிந்து கொண்டே உள்ளேமாயாவாதம் செய்து வேதத்தைத்தள்ளுமவர்களான அத்வைதிகளையும் நாமிங்கு நிராகரிக்கவேனும். இதை பாரதம் இராமாயணம் முதலியவற்றில் பலப்ரகரணங் களில்காணலாம்.

கள் वर्णनित्यत्वव्याख्यानம் பண்ணின விடம் अनपेक्षितवचनம். बैद्धादिகளைக்குறித்து वैभववाद மாகவுமாம். அவ் अधिकरणத்தில் शद्बार्थமும் तात्पर्यार्थமும் सेश्वरमीमांसैயிலே विशदமாகச் சொன்னோம்

"ஸம்ஸ்க்ருதச்சொற்களுக்குயாரும் ஸங்கேதமிடவில்லை"

संस्कृतपदங்களெல்லாம் अनादियाக अर्थविशेषங்களிலே अबाधितनियतप्रयोगங்களாய்ப் போராநிற்க, लोकத்திலே சில शब्दங்கள் साङ्केतिकங்களாகக்கண்ட அளவைக்கொண்டு மற்று

---

नुत्पादनात् । येत्वतथाविधा विप्रादयो भवन्ति तैस्सहसर्वाः कथाः प्रयोज्याएवेतिहृदयम् । अथवा "न विगृह्य-कथांकुर्यात्-निर्जित्य-जित्वेति पदैर्यस्याधिकारिणः वादकरणनिषेधः प्रतिपाद्यते, तस्यकर्तुरत्यन्तं वीतरागत्वे वैदिकत्वेएवचायंनिषेधोभाव्यः । परैर्जातरयापि शास्त्रार्थक्षोभस्य तदुपेक्षाविषयत्वेन नित्यतृप्तेन तादृशाधिकारिणापरैस्सहकथाया अकरणात् । तयाचायं निषेधः तादृग्विधाधिकारिणा वादाप्रवृत्ते र्लोकसिद्धाया अनुवादरूप इति, तदितरेणाधिकारिणा वर्धिष्णुना परैस्सहकथाप्रवर्तनं युक्तमेवेत्याशय इति । अत्रान्तरे जैनपक्षमनूद्यखण्डयति-वादमोनूमे इति । जल्पवितण्ड्योः परिहर्तव्यताया उभयवादिसिद्धतया अव्यवस्थि-तजयपराजयफलकत्वेन दुःखहेतुतयाऽनर्थपर्यवसितत्वेनच वादएवकथा । नजल्पवितण्डे । तदुक्तं-लब्धि, ख्यात्यर्थिनान्तु स्यात् दुस्स्थितेनामहात्मना । छलजातिप्रधानोयरत्वविवाद इति स्मृतः । इति । ख्याति-लाभकामानां सर्वनियमपरित्यागिना केनचित् क्षुद्रेणसह यश्छलजाति प्रधानः कलह उपजायते, सोऽविवाद एव । विवादः कथा । स कथैव नभवतीत्यर्थइतिभावः । वस्तुतस्तु-"आगमसिद्धाचेवं कथात्रयव्यवस्थेति न्यायपरिशुध्द्युक्तरीत्या ते अपि कथैव । आगमः-महाभारतादिः । तत्रादिपर्वणि कण्वाश्रमवर्णने-"द्रव्यकर्म-गुणज्ञैश्च कार्यकारणवेदिभिः । वादजल्पवितण्डाभि र्व्यासग्रन्थसमाश्रितैः । इत्युक्तेः । अथतेषां तादृशक-ल्पनायाः कारणमुच्यते-प्रमाणतर्केति । तथाचबहुश्रुतैश्शोत्रियैस्सत्तर्काद्यवलम्बनेन स्वपराजयसम्भावनाया अप्यभावेन निर्भीकतया जल्पवितण्डयोरयि कथात्वाङ्गीकारेण यथावसरं परान् प्रति कथात्रयप्रवृत्तावपि-तद्विपरीतानां जैनादीनां प्रमाणतर्कादिस्थितिरसमञ्जसेति तैर्जल्पवितण्डयोरनङ्गीकारः अन्तस्स्वपराजय-शङ्कामेव द्योतयन्ति । वादेतु वीतरागकथारूपे-सभ्यप्राश्निकादिसंवरणनिर्बन्धाभावेन शिष्यादिभिस्सहवादे

---

இந்தமதங்கள் எல்லாவற்றிலும் பொதுவாகவேநான்குவித குறைபாடுகள் காணலாம். ஒன்று-முறைப்படியில்லாத குதுர்க்கங்களை மூலமாகக்கொள்ளுதல். இரண்டு-தனக்கேதே வையான ப்ரத்யக்ஷாதி பிரமாணங்களை எதிர்த்து அநுமானம் செய்தல் மூன்று ஆதியுமந்தமு மின்றி ஸந்ததாரையாக ஒழுகிவருமையாகிற மஹிமையாலே குறைவற்றவேதங்களுக்கு விருத்தமாகச்சொல்லுதல், நான்கு-மதிமயக்கம், பிறரை ஏமாற்றும்எண்ணம் முதலிய தோஷங்கள் திரண்டுள்ள சில மனிதர்களின்பேச்சுக்களையே பரமபிரமாண மாகக்சொள்ளதல் என்ற

முள்ள सर्वपदங்களும் साङ्केतिकங்கள் என்ற அனுமிப்பார்க்கு विपक्षवाधமில்லாமையாலும், संस्कृतसर्वशद्वங்களுக்கும் सङ्केतयिताஎனவொருவனை सम्प्रतिपन्नமாகக்கட்ட வொண்ணுமையாலும், सर्वलोकपरिग्रहமுண்டாம்படி अर्वाचीनலேஒருவனிப்படி सङ्केतिக்கைக்கு सम्भावनैயில்லாமையாலும், शक्तयभावादिमूलापभ्रंशादिप्रतिबन्दि अनुपपन्नமாகையாலும், जगदादियிலே ईश्वरன் இப்படி प्रवर्त्तिப்பித்தான் என்கிறதற்கு ஒரு प्रमाणமில்லாமையாலும், –"सर्वेषान्तु स नामानि कर्माणिच पृथक्पृथक् । वेदशद्वेभ्यएवादौ पृथक् संस्थाश्चनिर्ममे ।।" என்றும், "नामरूपञ्च भूतानां कृत्यानाञ्च

---

प्रायस्तेषामेकाभिप्रायत्वदर्शनात् न तत्र स्वपराजयप्रसक्तिरिति तन्मात्रस्य कथात्वस्वीकार इति तात्पर्यम् । तदप्युक्तं–"दुश्शिक्षितकुतर्कांशालेशवाचालिताननाः । शक्याः किमन्यथा जेतुं वितण्डाटोपमण्डिताः ।। इति । वितण्डापण्डितेषु वितण्डायानिष्प्रयोजनत्वात् वादस्याप्यपर्याप्तत्वेन ते कथमन्यथा जय्या इति तेषूदासितव्ये सर्वथाऽस्माभिरितिभावः । कारणान्तरमप्याह-वीतरागत्वेति । तदुक्तं वींतरागस्तुतौ–"स्वयं विवादग्रहिळं वितण्डापाण्डित्यकण्डलमुखे जनेऽस्मिन् । मायोपदेशात्परमर्म भिन्दन् अहो विरक्तोमुनिरन्यदीयः ।। " इति । वैराग्यकारुण्ययोस्समनैयत्येन, स्वयमेव व्यर्थं वितण्डा व्यवहरत्सुजनेषु विप्रलिप्सया निष्करुणस्सन् उपर्युपरि मायोपदेशेन बितण्ड्या परेषां मर्म भिन्दन् अक्षपादः कथं वीतरागस्स्यादित्यर्थः । "अन्यदीय" इत्यस्य-अविज्ञातत्वदाज्ञासरत्वेनानुपादेयनामानः ते अन्ये । तेषामयंसूत्रकृदित्यन्यदीयः-अक्षपाद इति स्याद्वादमञ्जर्यां व्याख्यातम् । त्वदाज्ञेति वीतरागत्वेन घोषितं जिनं प्रतिकथनम् । अतएवास्य वीतरागस्तुतिसमाख्या । विप्रलंभेति । स्वस्यैव निष्पक्षपातित्वेन तत्वबुभुत्सुतां घोषयित्वा परेषां वञ्चनार्थमेवमुपन्यास इत्यर्थः । तदप्युक्तं–"अन्योन्यपक्षप्रतिपक्षभावात् यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन् न पक्षपाती समयस्तथा नः ।। इति । अथैवं जल्पवितण्डाभ्यामपि प्रतिवादिनां निरसनीयत्वे शिष्टानुष्ठानं प्रमाणयति-इप्पडिइति । शास्त्रं-शासनाच्छास्त्रं वेदः । अग्रे तथैवनिर्देशात् । शास्त्रशास्त्रीयधर्माद्युभयानङ्गीकारिण-श्चार्वाकाः । "स्वर्गानुभूतिर्मृष्टार्ष्टि" रित्यादिना तैस्स्वच्छन्दचारविधानात् । धर्मादिकमङ्गीकृत्य वेदप्रामाण्यप्रतिषेद्धारः बौद्धजैनादयः । यद्यपि बौद्धादिभिः कक्षीकृतो धर्मादिर्नास्मदीयः, अथापि चार्वाक-विलक्षणतयाऽदृष्टंकिञ्चिद्धर्मादिपदवाच्यं मण्डलीकरणचैत्यवन्दनादिकमेभिरङ्गीकृतमित्येवंनिर्देशः । शुभचित्तवासना धर्मः । विपरीतस्त्वधर्म इति बौद्धाः, गतिमतां गतिहेतुभूतो जगव्द्यापी द्रव्यविशेषोधर्मः ।

---

வாறு, இவற்றுள் முதல் இரண்டுதோஷங்களைப்பிறகு அவ்வோப்ரகரணங்களில் காட்டுவோமாக.

வேதம் என்னும் உங்கள் நூல்-எப்போது முள்ளதாயும் குற்றமற்றதாயும் ஆகிலன்றே-பிறர் மதங்களுக்கு வேதவிரோதம் குற்றமாகும். அ-ஆ-முதலிய அக்ஷரங்கள், அவற்றாலான பதங்கள், பதங்களாலானவாக்கியங்கள் தோன்றிமறைவதைக் கண்கூடாகப்பார்க்கிறோம். ஆக இவற்றாலியற்றப்பட்டவேதநூல் எப்போதும் நித்தியமாயிருப்பது எங்ஙனே?

प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनाञ्चकारसः ॥'' என்றும் மனு पराशरादिகள் नित्यமான वेद த்திலுள்ள पदங்களையே जगत्कारणपुरुषன யथापूर्वம் प्रवर्त्तिப்பிக்கிறான் என்றுஞ்சொல்லுகையா லும், இப்படிக்கு श्रुतिதானுமுண்டாகையாலும் संस्कृतपदங்கள் अनादिகளாகக்குறையில்லை.

---

स्यितिहेतुस्त्वधर्म इति जैनाः । पुण्यापुण्यरूपौ तुतौ अन्यावेवतन्मते । एतदुभयमङ्गीकृतवतः परमवैदिकान् कञ्चुकीकृत्यान्तर्वेदबाह्यतया यिष्ठन्तोऽद्वैतिनः । अत्रमूले–''शट्टैयाक्कि युल्ळवेदबाह्यर्'' इत्यत्र...उल्ळवेद-बाह्यर् इत्येवभुद्धः पाठः । स्वान्तरङ्गे सर्वमिथ्यात्वादिकमध्यवस्यन्तः बहिः वैदिकगोष्ठयां सर्वविधवर्णा-श्रमादिधर्मजालमनुतिष्ठन्तश्च –''अन्तश्शाक्ता बहिश्शैवा व्यहारेतु वैष्णवा इत्युपहस्यन्ते तेऽन्यैः । तथाचोक्तं–''अन्यैरास्नायचर्चाकवचधृतिक नद्गीमुखद्वीपिभिश्चेति । भारतेति । तत्रशांतिपर्वणि जनकपञ्च शिखाचार्यसंवादे–रामायणे–जाबालिमतनिराकरणेच प्रतिवादिनोत्यन्तं निराकरणदर्शनादितिभावः । सिद्धान्तलेशसङ्ग्रहे — '' प्राचीनैर्व्यवहारसिद्धविषयेष्वद्वैतसिद्धैपरंसन्नह्यद्भिरनादरात्सरणयोनानाविधा दर्शिता इति कथनात् व्यावहारिकप्रत्यक्षपदार्थेषु स्वपूर्वाचार्याणाम्मिथोव्याहतभाषित्वं घोषितमिति केवलं विजिगीषुकथामयत्वमद्वैतदर्शनस्य व्यञ्जितम् ।

अथाधिकारार्थमनुक्रममाणः प्रथमं परमतसमुदाये दोषचतुष्टयमाचष्टे–इप्परपक्ष इति । अत्र सर्वपरपक्षेतिकीर्तनात्–अस्मिन् प्रकरणे प्रतिपाद्यमानदोषाविषयः कोपि परपक्षोनास्तीसूच्यते । तर्केति । सच–अर्थस्वभावविषयेण सामग्रीस्वभावविषयेणवा निरूपणेन प्रमाणंक्वचिद् विषयविशेषे व्यवस्थापयत् तदितिकर्तव्यतारूपं ऊहापरपर्यायं ज्ञानमिति भाष्यकृतः । तस्य हि पञ्चाङ्गानि–प्रसञ्जकस्य प्रसञ्जनीयेन व्याप्तिः प्रतितर्काप्रतिहतिः, प्रसञ्जनीयस्य विपर्यये पर्यवसानं, तस्यानिष्टत्वं परपक्षासधकत्वञ्चति । यथा-धूमेन वह्निसाधने पर्यालोच्यते-यदि वह्निर्नस्यात्तर्हिधूमोपिनस्यादिति । तत्र द्वयोरभावयोः प्रसञ्जक-प्रसञ्जनीययोर्व्याप्तिः, विपरीतेन केनापि तर्केणाप्रतिहतिः, ''वह्न्यभावे धूमोपिनभवेत्, अपितु सदृश्यते'' इति विपर्यये पर्यवसानं, ततएव धूमाभावस्य प्रसञ्जनीयस्यानिष्टत्वं परपक्षासाधकत्वञ्चोपपाद्यते, परोक्त-तर्केषु च यथायथं तत्र तत्र वक्ष्यमाणदिशा एकद्वित्र्याद्यङ्गहीनता बोध्या । उपजीव्येति । अनुमानस्य हेतुव्याप्तिग्रहणाद्यर्थं शब्दस्य व्युत्पत्तिग्रहणार्थञ्चप्रत्यक्षमुखनिरीक्षकत्वात् नोपजीव्यप्रत्यक्षविरोधोन्याय्य-इत्यर्थः । अनादीति । निधनंन्नाशः । आद्यन्तराहित्यान्नित्यत्वेपि वेदस्याध्येतृसम्प्रदायविच्छेदशङ्का-

---

என்னில்-வேதம் அதிலுள்ளபதங்கள் இவைகளுக்கு நாம்சொல்லும் நித்தியத்துமாவது-எக்காலத்திலும் ஒரேவிதமான அக்ஷரவரிசையுடன் உச்சரிக்கப்படுகைதான் ஆகையாலே, வரிசையான உச்சாரணம் அநித்தியமாயினும், வேதம் நித்தியமானதுபோல், அக்ஷரங்கள் வேதம்சொன்னபடி அநித்தியமாயினும், கல்பம்முதலில் ஈசுவரனே. பிறகுவந்த மஹர்ஷி களோ ஒரேவிதமான உச்சாரணமுறையோடே வெளியிடுவதாலே, பதங்களையும் அவை

இவை साङ्केतिकங்கள் என்கிற वेदावलम्बिवैशेषिकादिகளுக்கு श्रुतिविरोधமும் तदनुसारिपराशर पतञ्जलिप्रभृतिवाक्यविरोधமும்வரும். இத்தாலே वेदवाक्य पौरुषेयत्व प्रतिपादनமும் दत्तोत्तरம்.

---

वारणाय–अविच्छिन्नेति । दृश्यन्ते हि कष्टेपि कलौ कालेऽद्यदरिद्रप्राया अपि केचन विप्रा वेदमधीयानाः । श्वश्वः पापीयदिवसा हि पृथिवी अधुना विलोकयते । प्रायोविद्यामघविषवत् द्विषन्ति । यत्किमपि कर्म येनकेनापि प्रकारेण यत्र कुत्रवादेशे यदा कदावा काले कुर्वन्तः कुक्षिपूरणमेव प्रथमकर्तव्यं प्रतियन्ति जनाः । कः श्रद्धधीत विद्यामध्येतुम् । तत्रापि देवभाषाम् । ततोपि वेदभागान् । ततश्चास्तिकाना-म्पहात्मनाम्मनसि एवंविधापि भीतिः प्रादुर्भवन्ती मन्दमन्दमाक्रामति–किमस्मत्पूर्वपुरुषैः कथितमपि वितथंभविष्यति । वेदोनास्ति, देवोनास्ति, दयानास्ति, धर्मोनास्ति, चन्द्रमसो मण्डलमपिवयमधिरुह्य निधनमपि तृणीकृत्य सर्वं जितवन्तस्स्म इति अमेरिकादिदेशीया एकतः उद्घोषयन्ति भीषयन्तोजगत् । अनेनास्तिकलोकस्य मूर्धनि महान् प्रहारोजनित इवेतिबहु परिदेवयितव्यमस्तिवस्तुतोविजानद्भिः । तथापि–नभेतव्यमित्येव महान्तआदिशन्ति । "अभीतिरिहयज्जुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशोस्थिताः–तेनबहुधा धर्मग्लानौ जायमनेन परमपुरुषेण गोप्त्रा कालेकालेऽभिगुप्ता श्रुतिरिह बंहीयः क्षुद्रैः क्षोभितापि स्वयंकलहमतितरन्ती अक्षता अस्मानपिरक्षिष्याति । अन्ततः अगस्त्यादिभिरलक्ष्यदे-शविशेषेनिवासिभिरत्रागत्य संप्रदायप्रवर्तनं पुराणादिषु प्रतिज्ञायमानं नमिथ्याधोषो भविष्यतिघो चन्द्रमण्डल खर्गादिर्हि परोलोकः बहुशः पूर्वपुरुषैः धार्मिकैर्दशरथादिभिरधार्मिकैः रावणादिभिश्चासकृद्गतपूर्वएव । प्रथमे धर्मदेवताप्रसादादिना, चरमेच हठयोगादिना जग्मुरिति साम्प्रतमप्यमेरिकादेशीया भूतपञ्चकशक्तिह-ठात्कारेण तथाचक्रुरिति किमत्रचित्रम् । विवेकिनस्तु अस्मदीयाः पूर्वपुरुषा आत्मविज्ञानव्यसनिततया भौतिकविज्ञानेऽनादरशालिनोऽभवन् । अन्तेऽतीवेन्द्रियार्थकर्षकत्वेनमहानर्थफलकत्वात् । एभिरघान्यदेव-मण्डलमुपरितनमाक्रान्तमस्ति, चन्द्रमसः, तन्मण्डस्य सूर्यादुपरि लक्षयोजनदूरे स्थित्युक्ते रितिकेचनज्यो-तिर्विदो वदन्ति । सर्वथानेदमपूर्वमाश्चर्यञ्च । सपूर्वत्वात् अनर्थकरत्वाच्चेत्वलमतिविस्तरेण । निर्दोषेति । दोषाश्चभ्रमादयः आदिनाऽज्ञानसंशययोग्रहणम् । पुरुषाः–बुद्धजिनादयः । अथैवमुक्तेषु चतुर्षु दोषेषु अन्तिमद्वयमत्रैव प्रकटीकरिष्यन् प्रथमद्वयस्य पश्चाद्वक्ष्यमाणतामाह–अवर्कळिति । तथाच तत्तन्मतानां विशदमनुवादं विना तत्तद्दोषस्य प्रदर्शयितुमशकयतयां तेसर्वे दोषा अग्रे तत्तदधिकारेषु भविष्यन्तीत्यथः ।

---

களின் தொகுப்பான வேதத்தையும் நித்தியமென்னலாம். அக்ஷரங்கள் நித்தியமானாலும் ஒருவனுடைய உணர்வைக்கொண்டு முறையே உச்சரித்தல்என்பது அநித்தியமாகையாலே வேதத்திற்கு அநித்தியத்துவமேவரும், சப்தாதிகரணத்திலே சபரஸ்வாமி முதலிய பாஷ்யகாரர்கள் அக்ஷரங்கள் நித்தியங்களே என்று ஸ்தாபநம்செய்திருப்பதுவீணே. அல்லது-எல்லாம் அநித்தியம், கணந்தோறும் என்றபௌத்தர் முதலியோரைப்பார்த்து மிகைப்படப்பேசின

"வேதம் யாராலுமியற்றப்படவில்லை."

वाकयत्ववेदत्वाद्यनुमानங்களுக்கு विपक्षेवाधकाभावादिகளையும் वेदनित्यत्वம்சொல்லுகிற श्रुति-स्मृतिवाकयங்களாலே बाधितत्वத்தையும் கண்டுகொள்வது. प्रतिमन्वन्तरञ्चैषाश्रुतिरन्या विर्धायते" என்கிறது तत्तत्कालनियतानादिवेदप्रवर्तनपरம். ऋषिகளுடைய सूक्तकाण्डमन्त्रकृत्ववचनமும், याज्ञवल्क्य

---

अथोक्तंवेदनित्यत्वं विस्तरेण निरूपयितुं पूर्वं पूर्वपक्षमुपक्षिपति–वेदमिति । वेदाः प्रमाणं नित्यनिर्दुष्टशब्दराशित्वात् यन्नैवं तन्नैवं यथा बाह्यागमा इति कृत्वाहि परमतेषु तद्विरोधरूपोदोष उद्भाव्यते, तदेवन, वेदस्यानित्यत्वदर्शनादित्यर्थः । तदेवोपपादयति–वर्णपदेति । वर्णा एवतावन्ननित्याः । उच्चारणात्पूर्वमनन्तरञ्चासत्वात् । अनुपलब्धेः । तदुक्तंशब्दनित्यत्वाधिकरणे–आ(अ)स्थानादितिसूत्रे शबरस्वामिना–"नोखल्वप्युच्चारितं मुहूर्तमप्युपलभामहे । अतोविनष्टइत्यवगच्छाम" इति । एवञ्चसति–कुतस्तरां वर्णसमुरायात्मकस्य पदस्य नित्यत्वम् । कुतस्तमाञ्च तत्संघातात्मकस्य वेदरूप वाक्यस्येतिभावः । प्रत्यक्षादीति श्रुतिपरिग्रहः । शब्दद्रव्यस्याहङ्कारपरिणामत्वश्रवणात् । अथैवं कृतं पूर्वपक्षमभ्युपगम्यैव समाधत्ते–पदत्तुक्कुमिति । अत्रप्रसक्तेषु वर्णपदवाक्येषु वर्णानां प्रत्येकं क्रमासम्भवात् नवक्ष्यमाणं क्रमविशेषघटितंनित्यत्वमितित्वदनुक्तिः । पदमिति जात्येकवचनम् । वेदः–वेदवाकयानि । नित्यत्वेति । अयंभावः–नकेवलंवेदानां ध्वंसप्रागभावाप्रतियोगित्वरूपं नित्यंविवक्षितम् । तस्य कार्यतयाश्रुतेषु सर्वेषु शब्देषु वाधितत्वात् । वेदस्यापि तद्विशेषत्वेन कैमुतिकन्यायात् । किञ्च तथा वेदशब्दे स्वीकृतेपि नित्यत्वे, यदि तस्योच्चारणे पुरुषस्वातन्त्र्यमङ्गीकृत्य नियतएकरूपः क्रमउच्चारणे नस्यात्, तदा पुरुषप्रणीतकाव्याद्यविशिष्टतयावेदस्य सर्वलोकसिद्धः अपोरुषेयत्वरूपो महिमा नसेत्स्यति । अतः वेदेऽङ्गीक्रियमाणं नित्यत्वमेवापौरुषेयत्वरूपं पारिभाषिकंकिञ्चिदितिवक्तव्यम् । "एका क्रियाद्व्यर्थकरीबभूवेति न्यायात् । तच्चसर्वेष्वपिकालेषु सर्वैरपि पुरुषैः नियतैकरूपक्रमविशेषविशिष्टतयोच्चार्यमाणत्वमेव । इदञ्च शब्दानामनित्यत्वेपि निराबाधं वेदे भवतीति, एतदर्थं मीमांसकादीनां शब्दनित्यत्वस्थापनप्रयासो विफल एवेति । तथाचदेवताधिकरणे श्रुतप्रकाशिका "द्विविधावधिवैधुर्यरूपमेव नित्यत्वं वेदे विवक्षितम् । तथापि पूर्वावधिविधूननं प्राधान्येन सिषाधयिषितम् । स्वतन्त्रपुरुषविश्रान्तेर्निरसनीयत्वात् । तन्निरसनेच प्रतिकल्पं तथाभावेनोत्तरावधिवैधुर्यसिद्धेश्च । ततश्च वेदनित्यत्वमपौरुषेयत्वञ्चैकमितिफलितमिति । सर्वकालेति ।

---

பேச்சுமாகலாம் அந்த அதிகரணத்தில், சொற்பொருளும் கருத்துப்பொருளும் இருக்கும்படியை "ஸேச்வரமீமாம்ஸை" என்றும் நூலில் காட்டியிருக்கிறோம்.

ஸம்ஸ்க்ருத பாஷாபதங்கள் எல்லாம் அநாதிகாலமாக அவ்வோபொருள்களில் குறைவற கட்டுப்பாட்டுடன் பேசப்படுகின்றன. ஆகையால் அவைகளை-ஒருவன் முதன்முதலாக இட்டுக்கட்டிவைத்தான் என்று சொல்லக்கூடாது. உலகில் சில சொற்கள்–"தேவதத்தன்–

देदक्लप्तिवचनமும், विश्वामित्रादिसंज्ञकपूर्वपूर्वर्षिदृष्टवेदभागத்தை अध्ययनம் பண்ணுதிருக்கச்செய்தே सुकृतविशेषवशத்தாலே கண்டு प्रवर्त्तिப்பிக்கையைச்சொல்லுகுறது. नित्यமான वेदத்துக்கு अनित्यार्थसंयोगविरोधமும் —व्रीहियवपश्वादिகளைப்போல इन्द्रादिகளும் प्रवाहनित्यராகையாலே

---

रघुवंशादिपौरुषेयग्रन्थाहि नसर्वकालेष्वपि नियतैकरूपक्रमवत्तयोच्चार्यन्ते । अपितु क्वचित्कदाचिदेव । तत्रापि न नियतैकरूपक्रमेण । प्रतिदेशं प्रायः पाठभेदेन नानाक्रमतया तेषां उच्चारणदर्शनात् । एतेसर्वेपि स्वाभिलषितक्रमेण पठ्यमानं शब्दराशिं रघुवंश इत्येव प्रतियन्ति । तन्नबाध्यते । वेदेतुकिञ्चिदन्यथापठनेपि नसवेदः । स्वयंतथाभिमानेपि परेण प्रतिषेधात् । एकरूपक्रमेति । पूर्वपूर्वोच्चारण क्रमसजातीयोत्तरोच्चारण क्रमेत्यर्थः । क्रमश्चाक्षरानुपूर्वी । यथो इषेत्वा" इत्यादौ इकारोत्तरषकारोत्तरौकारोत्तरतकारत्वादिरानु-पूर्वी । अत्रदृष्टान्त प्रदर्शनंयथो—क्रमव्यक्तीति । उच्चारणक्रमव्यक्तीत्यर्थः । अयमाशयः—नकेवलं वर्णाः पदादीनिवावेदः । तदाहि तन्नित्यता वेदनित्यतां प्रयोजयेत् । अपितु—नियतक्रमविशिष्टतयोच्चार्यमाणा-नि तानि वेदः । उच्चारण क्रमश्च पुरुषप्रयत्नसाध्यत्वादनित्यएव सर्वेषाम्मते । तथाच वर्णास्वरूपनित्यत्वेपि अनित्य क्रमव्यक्तिविशेषविशिष्टतया तेषामप्यनित्यत्वात् कथं वेदनित्यत्वंसाधयिष्यसि । ततश्चत्वयाप्यगत्या तत्क्रमव्यक्ते स्सर्वकालेष्वप्यैकरूप्यमेवनित्यत्वं वक्तव्यमित्यागतोसिमदीयं मार्गमिति । किञ्च—वर्णनित्य त्वमात्रेणचेत् वेदोपि नित्यः, तदारघुवंशादिरपि तथास्यात् । तेषामपिवेदवद्वर्णमयत्वात् । अस्मन्मार्गे स्वीकृते रघुवंशादिषु नतथाप्रसङ्ग इतितूक्तमनुपदमेवेत्यपिबोध्यम् । ईश्वरेति । योब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै इति ईश्वरोपि कल्पादौ संस्कारनिरपेक्षमेव यथापूर्वकल्पमस्खलित वर्णपदवा-कयानुपूर्वीकतया वेदराशिं साक्षात्कृत्य स्वप्रथमजाय चतुराननायोपदिशति । सचतमधिगत्याहितसंस्कार-रसन् पश्चादागतेभ्यश्शिष्येभ्यस्स्मृत्वा वेदतदर्थादिकम्, तेपितथा, तेपितथेति सर्वत्रैकरूपमेव प्रवर्तन मितिभावः । तथाचतत्त्वमुक्ताकलापः— "शब्दानित्यत्वतोपि श्रुतिषु न विलयस्स्यात्क्रमव्यक्तिनीत्या तन्नित्यत्वेच काव्यादिकमपि नकथंनित्यमित्यभ्युपैषि । तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावश्श्रुतीना-मीशोप्यध्यापकोनः परम(मि)तिचकितैर्वर्णनित्यत्वमुक्तम् ।" इति । अथस्वोक्तं अपौरुषेयत्वपर्यवसायि नित्यत्वंविना केवलंकालघटितनित्यत्वमात्रस्य वेदेस्वीकारोव्यर्थइत्याह—वर्णेति । नहिपरमाणवो नित्याइति घटादिरपिनित्यः । वेदस्यवर्णसमूहत्ववत् परमाणुपुञ्जरूपत्वस्य घटादिषुकैश्चिदङ्गीकारात् । तन्नित्यत्वे

---

யஞ்ஜதத்தன்-என்பனபோன்றவை இட்டுக்கட்டிவைத்தவைகளே. ஆனாலும், அவற்றை உதாஹரணமாக்கொண்டு, எல்லாசெற்களுமப்படியே என்று சொல்லவொண்ணுது. அப்படி யல்லாமலுமிருக்கலாமல்லவா? ஸம்ஸ்க்ருதபதங்கள் எல்லாவற்றையும் ஆதியில் ஒருவன் உலகில்கட்டிவிட்டான் என்பதுநம்பத்தகாதபேச்சு யார் அவன்? நம்போன்றவனு? அப்போது அகிலஉலகிலும் ஒரேமாதிரி பாஷை பரவாது, வடமொழி இலக்கணமறியும் திறமை இன்மை

एतन्नित्यत्वापातात् । तत्र तेषामणूनामायोजनं यत्नतः क्रियमाणमनित्यमिति पुञ्जोऽनित्यइतिचेत्, अत्रापिवर्णनित्यत्वेपि तत्क्रमस्य पुरुषबुध्धधीनत्वात् वेदोपि वर्णक्रमघटितोऽनित्यस्यादेवेत्यर्थः । तथाच-मीमांसकानां एतदर्थो यत्रो निष्फलएवेत्याह्–शब्दाधिकरणेति । तत्रहि–"कर्मैके तत्रदर्शना" दित्यादिना षडभिस्सूत्रैश्शब्दानित्यत्वमाशङ्कय– "समंतुदर्शन" मित्यादिभिस्तन्नित्यत्वंसिद्धान्त्यते । शबरखामी तद्भाष्यकर्ता । आदिन वार्तिककृत्कुमारिलादयोग्राह्याः । अनपेक्षितेति । वेदनित्यत्वानुपयुक्तेत्यर्थः । ननु प्राचीनप्ताज्ञपरिबृढानामुक्तौ एवमनादरोनयुक्त इतिचेदाह–बौद्धेति । तैस्सर्वंक्षणिकमित्युक्ते स्वबुध्यतिशय-च्चिरव्यापयिषया शब्दादिकं सर्वं नित्यमिति वैभवादुक्तं मीमांसकैरितिभावः । सर्वार्थसिद्धौतु–"...कथन्तर्हि वर्णानित्यत्वे वेदनित्यत्वंसिध्धतीत्यन्तर्भातिस्यास्तिक्यनिमित्तचोद्यं परिहर्तुं वर्णनित्यतोक्ति" रित्यभ्यधायि । तर्हिकथं तत्रत्यानि सूत्राणि योजनीयानीत्यत्राह–अब्वधिकरणेति । शब्दनित्यत्वाधिकरणेत्यर्थः । सेश्वरमीमां-सेत्याचार्यकृतः जैमिनीयपूर्वमीमांसासूत्राणां व्याख्यानरूपोनिबन्धः । तत्रेश्वरसद्भावमङ्गीकृत्यैव व्यारव्यानप्रणयनात् सेश्वरेतिविशेषणम् । शबरस्वाम्यादीनान्तु निरीश्वरं व्यारव्यानम् । एतत्तु तत्रैवद्रष्ट-व्यम् । प्रकृतविषयश्च ।

नन्वथापि वेदस्यानित्यत्वमन्यथा प्राप्तोति । लोकेसर्वेषां संस्कृत शब्दानां साङ्केतिकत्वेन संकेतयितृ-पुरुषसापेक्षत्व, लोकवेदाधिकरणन्यायेन तेषामेवशब्दानां वेदेपिप्रयोगेण, वेदस्यापि पौरुषेयत्वापत्तेः । प्रसिद्धंहि–"यएवलौकिकास्तएववैदिका" इति । न्यायपरिशुद्धिरपि "भाषाप्रयुक्तस्सर्वोपि वेदेक्वापि प्रयोगवान् । वेदैकनियतश्शब्दः नान्यत्रेतिव्यवस्थितिरिति । ततश्चैवंजातामपिशङ्कांनिराकरोति–संस्कृतेति । एवं कथनेनेतरभाषाणां नैवं शीतिरिति वक्ष्यमाणं घोत्यते । शङ्कानिरासक सिद्धान्तांशंप्रथ-मंदर्शयति–अनादियाकविति । वेदघटकसंस्कृतपदानां सांकेतिकत्वस्यैवाभावात् स्वाभाविकार्थबोधकशक्ति-शालिषु तेषु नसंकेतयितृपुरुषापेक्षेति नोक्तरीत्या वेदपौरुषेयत्वानित्यत्वे भविष्यत इति भावः । अबाधितेत्यादिकं बहुव्रीहिः । अनादित्वं नित्यतार्थं, अबाधितत्वं प्रामाण्याय, नियतत्वं अपभ्रंशादिवारणायचकीर्त्यन्ते । अथपूर्वपक्ष प्रदर्शनम्—लोकत्तिलेइत्यादिना । केचनशब्दाःन्देवदत्तादिशब्दाः । सांकेतिकाःन्पित्रादिभिरिदं-प्रथमं केषुच्चिदर्थेषु बोधकतया प्रयुक्ताः । अनुमिप्पार्कु इति । अयमाशयः—पदानामर्थबोधकत्वं संकेता-रव्यसम्वन्धज्ञानंविना नोपपद्यते । यथाप्रत्यक्षादीनामर्थबोधकत्वं इन्द्रियार्थसन्निकर्षसम्पादनं विना । नचबोधकत्वमेव तयोस्सम्वन्धोस्त्वितिवाच्यम् । बोधकत्वनिमित्तभूत सम्बन्धप्रश्ने तस्यैवोत्तरत्वायोगात् । अन्यथाऽऽत्माश्रायापत्तेः । अतएवह् यर्थप्रतिपत्तये प्रथमं शिक्षकाः—"अस्यपदस्यायमर्थ" इति बालान् शिक्षयन्ति । तथाच विप्रतिपन्नास्सर्वेशब्दाः साङ्केतिकाः वाचकत्वात देवदत्तादिशब्दवदित्यनुमातव्यमिति । अथनुमानदूषणमाह—विपक्षेति । साङ्केतिकत्वरूपसाध्याभावपक्षइत्यर्थः । एतदुक्तंभवति—अनुमानस्य हिविपक्षेदण्डभूतस्तर्कआवश्यकः । यथा-यदि वह्निर्नस्यात्तर्हि धूमोपिनस्यादिति । अन्यथानुमानस्या-प्रयोजकतापत्तेः । तस्वश्चानुमानस्य पृथक्पूषणं भवति व्याप्यत्वासिद्धिमध्येऽन्तर्भवतिवेत्यन्यदेतत् ।

तथाचैतदनुमानमपि तथा । अनादिप्रयोगविषयाणां संस्कृतपदानातत्तदर्थबोधकत्वस्य तत्तत्स्वभावसिद्धत्वस्वीकारेण साङ्केतिकत्वाभावात् । यत्तुबोधकत्वनिमित्तप्रश्ने तस्यैवोत्तरत्वानुपपत्तिरिति, तन्न तच्छब्दस्यतदर्थबोधकत्वंतत्स्वभावप्राप्तमितिकथनेऽनौचित्यविरहात् । अग्नेर्दाहकत्वस्यतत्स्वाभाविकत्ववत् । प्रत्युत सङ्केतसिद्धत्वपक्षएव सङ्केतग्रहणार्थशब्दप्रयोगस्यापि सङ्केतग्रहणान्तरसापेक्षतया ऽनवस्थानात् । प्रत्यक्षेतु दृष्टत्वात्सन्निकर्षस्याप्रत्याख्येयत्वम् । ननुतर्हि अग्नेरिवस्पृष्टमात्रस्यदाहकत्वम्, इहापि श्रुतमात्रस्य शब्दस्यार्थप्रत्यायकत्वमस्तु । उभयोरपि स्वाभाविकत्वाविशेषात् । तथाच व्युत्पत्तिशिक्षणवैयर्थ्यमितिचेन्न । सङ्केतसिद्धत्वपक्षेवाकथंनतदिति प्रश्नोदयात् । सङ्केताख्यसम्बन्धग्रहणायभविष्यतीतिचेत् एवमेवात्रापि शब्दविशेषेऽर्थविशेषबोधकत्वस्वभावस्य प्रतिनियतस्यग्रहणायेतिब्रूमः । यतोहितत्रतत्रवस्तूनांस्वभावाभिद्यन्ते । यत्रतु वस्तु सत्तया कार्यकर यथावह्निः दाहकरः । तत्रतत्स्वभावस्य तस्मिन् स्थितस्यापि तथैव कार्यकरत्वामिति नतत्रग्रहणापेक्षा । यत्रतु वस्तु गृह्यमाणतया कार्यकर यथा धूमोऽग्न्यनुमानस्य, तत्र तज्जननस्वभावस्य व्याप्त्याद्यपरपर्यायस्यापि तथैव कार्यकरत्वमिति भवतितत्र तद्ग्रहणापेक्षेति प्रकृतेपिशब्दानां ज्ञायमानानामेवार्थबोधकत्वमितितत्रावश्यं तत्स्वभावग्रहणेनभाव्यमिति नश्रुतमात्रएवार्थबोधइति । एवंविपक्षेबाधकाभावप्रदर्श्य साङ्केतिकत्वपक्षे बाधकसद्भावमप्याह—सस्कृतेति । सर्वशब्देतिभाषाया बहुमुखंवैपुल्यं, एकस्येति—कल्पितैकसङ्केतयित्रा तावद्वेदनस्यदौष्कर्यं, सम्प्रतिपन्नेति—कथञ्चिकल्पनेपि तस्य सर्वैरश्रद्धेयत्वञ्च सूच्यते । अथापिकामं कल्प्यतं कश्चित्संकेतयिता । सकिमर्वाचीनेष्वेव कश्चित् अथवेश्वरएवप्राचीन इतिबिकल्प्य प्रथमनिराह—सर्वलोकेति । यद्यर्वाचीन. कश्चित् कल्पकः, तर्हितत्तदनुबन्धिबन्धुजनमनोमात्रविश्रान्ता सा भाषाभवेत्, यथाद्राविडान्ध्रादय· । संस्कृतन्तु आसेतुहैमाचल सार्वत्रिकंदृश्यते । नतदातदुपपद्येतेतिभाव । यद्यप्याधुनिकपुरुषसङ्केतितानां आङ्ग्लभाषादीनां सार्वत्रिकत्वं, संस्कृते द्राविडादिदेशेषु द्वेषश्च विलोक्यते । तथापितत्—अर्थकामप्रयुक्तमिति, संस्कृताद्विशेषो बोध्यः । अत्रैवहि महाजनपरिग्रहो विहोकयते । तदुक्तं कुसुमाञ्जलौ—कःपुनरयं महाजनपरिग्रहोनाम? हेतुदर्शनशून्यै र्ग्रहणधाणार्थानुष्ठानादिः । नह्यत्रवैदिकमते आलस्यादिर्निमित्तम् । दुःखमयकर्मप्रधानत्वात् । नाप्यन्यत्रबौद्धादिष्वनधिकारेणानन्यगतिकतायऽत्रानुप्रवेशः । परै प्रार्थ्यमानानामप्यत्राननुप्रवेशात् । नापिभक्ष्यपेयाद्यद्वैतरागः । तद्विभागव्यवस्थापनात् । नापिविप्रलभिपाषण्डादिभिस्यह ससर्गात्, पित्रादिक्रमेण प्रवर्तनात् । नहि पित्रादयस्स्वंपुत्रंविप्रलभन्ते । नापिजीविका, प्रागुक्तन्यायेनदृष्टफलाभावात् । सम्भवन्तिचैते हेतवोबौद्धाद्यागमपरिग्रहे इतिवक्ष्यतेइति । तर्ह्यपभ्रंश भाषाणामप्यनादिताऽस्तु, संकेतयितुरभावादेवेति प्रतिबन्दिं निरस्यति—शक्त्यभावेति । संस्कृतव्याकरणादिधारणार्थावगमाद्यसामर्थ्येत्यर्थ· । ततएवहि अपभ्रंशोत्पत्तिः । "शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितिमिस्मृतेः । अत्रप्रतिबन्द्यसम्भश्च सेश्वरमीमांसायान्दर्शितः—" वस्तुतस्तुविशेषं ब्रूम । संस्कृतयोनितयैवतावत्प्राकृतादीन्यभियुक्तैरनुशिष्यन्ते । नचैव संस्कृतस्य काचिद्योनिः । .. अपभ्रंशाइत्येवतेषांव्यवहारः अस्यतु संस्कृतमिति । इति । अथ कल्पादावीश्वरोस्य संकेतयितेति वैशेषिकाद्युक्तं द्वितीयमपिदूरीकरोति—जगदादीति । ईश्वरस्तु प्रयोज्यबालप्रयोजकवृद्धा-

दिनानारूपी भूत्वा कल्पादौ सर्वत्र संस्कृतपदानि सङ्केतयामासेत्यत्र न किञ्चित्प्रमाणमित्यर्थः । प्रत्युत बाधकप्रमाणमेवास्तीत्याह—सर्वेषामित्यादिना । कर्माणिन्वर्णाश्रमादिधर्मान् । संस्थाः-देवमनुष्याद्याकारान् । देवमनुष्यादिसमाख्यासंस्थानादीनां वेदेषु विशदं कीर्तनात् प्रतिकल्पं नित्य ईश्वरः नित्यं वेदं दृष्टवैव तत्तद्युक्ततया प्राणिनस्सृजतीत्यर्थः । पदेति रूपकर्मादीनामप्युपलक्षणम् । अस्मिन्नर्थेश्रुतिमपि प्रमाणयति-इप्पडिक्कु इति । "वेदेन रूपे व्याकरोत्सतासती प्रजापतिः । सभूरिति व्याहरत् । भूमिमसृजतइत्यादि-श्रुतिवाकयान्यभिप्रेतानि । सतासतीन्सदसती । चिदचिद्रूपे इतियावत् । संस्कृतान्तर्नकिञ्चिदपि पदं सांकेतिकं विद्यत इति द्योतयितुम् सर्वपदेति । ननु सीतादिसंस्कृतशब्दानां स्त्र्यादिव्यक्तिविशेषेऽस्माभिरेवसं केतकरणात्, कथंसर्वशब्दासंकेतिकत्वमितिचेत्-न-क्वचिन्मुख्यस्यापि शब्दस्यान्यत्र गौणत्ववत्, "सीतालाङ्गलपद्धतिरि" ति हलस्य मार्गेऽसंकेतिकस्यानादेस्सीतादिसंस्कृतशब्दस्य जनकपुत्र्यां साङ्केति-कत्वेप्यदोषात् । देवदादिसङ्केतनामसु तद्धटकदेवदत्तेति पदद्वयस्याप्यन्यत्रैवं रीत्यैवासांकेतिकत्वंबोध्यम् । नचैवमपि डित्थादिसंकेतनामसु कागतिरितिवाच्यम् । तेषां यदृच्छाशब्दत्वेन संरकृतत्वाभावात् । संस्कारोहि प्रकृतिप्रत्यययोगः । सोत्र नास्ति । इति । अत्र यद्यपिसंस्कृतपदानामनादित्वस्थापनं नवेदनित्यत्व-सिद्ध्यर्थंक्रियते । "लिङ्गदर्शनाच्चे"तिसूत्रे शबरस्वाम्यादिभिराचार्यैश्च युक्तिनिरपेक्षमेव—"वाचा विरूपनित्यये" ति श्रुत्यादिबलादेव तत्सिद्धिवचनात् । अथापि—संस्कृतपदानित्यत्वप्रयुक्तां तद्घटितवेदा-नित्यत्वशङ्कां परिहर्तुमेव । तथाच सेश्वरमीमांसा—"पदनित्यतया वेदनित्यत्वं न प्रशास्महे । तदनित्यतया प्राप्ता निषेद्धव्या त्वनित्यते" ति । एवं साङ्केतिकत्वपक्षे युक्तिविरोधंप्रदर्श्याधुना प्रमाणविरोधमप्याह— इवैइति । वैशेषिकादीनां वैदिकत्वाभावे श्रुतिविरोध स्याकिञ्चित्करत्वात्तदुक्तिः वेदावलम्बीति । अत्रादिना पाशुपतादिविवक्षा । तेनापि वेदस्येश्वरोक्तत्वस्वीकारात् । श्रुतिः—"वाचाविरूपनित्योदिः । पराशरवाक्यं—" नामरूपञ्चेत्यादिकंपूर्वमेवोक्तम् । "तेनप्रोक्त" मितिपाणिनिसूत्रभाष्ये पतञ्जलिराह— "नहिछन्दांसि क्रियन्ते । नित्यानि छन्दांसि" इति । प्रभृतिशब्देन शौनकादिग्रहणं—"दाशत्रय्यो मधुच्छन्दप्रसृतिभि र्दृष्टोतिकथनात् । दृष्टत्वमेव, नतुकृतत्वमितितदाशयात् । एवं वेदपदानां साङ्केति-कत्वनिराकरणेन तत्प्रयुक्तवेदवाकयपौरुषेयत्वशङ्कापि दूरोत्सारितेत्याहइत्ताले इति । असाङ्केति-कत्वेनेत्यर्थः । तृतीयार्थः प्रयोज्यत्वम् । अन्वयश्चास्यपौरुषेयत्वे । एवञ्चोत्तरवाकेयपि पौरुषेयत्वशङ्काया एवनिराकरणात् तेनास्यवाक्यस्य पुनरुक्तिरिति निरस्तम् । तच्छङ्काहेत्वोरुभयत्र भेदादिति । दत्तो-त्तरमिति । उक्तश्रुत्यादिप्रमाणविरोधादेवेतिभावः ।

ननुवेदः पौरुषेयः वाक्यत्वात् इतरवाक्यवत्, इत्यन्वयिना, वेदः सर्वज्ञपुरुषप्रणीतः वेदत्वात् यन्नैवं तन्नैवं यथेतरवाक्यमिति व्यतिरेकिणावाऽनुमानेन तत्सिद्धेरिति पुनश्शङ्कते हेत्वन्तरेण—वाकयत्वेति । वेदत्वाद्यनुमानेति । तद्धेतुकानुमानेत्यर्थः । संस्कृतपदानामसाङ्केतिकत्वेपि नियतानुपूर्वीकपदसमुदायस्यैव-वाक्यत्वात् पुरुषबुध्यधीनसन्दर्भवत्त्वसिद्धेर्वेदः पौरुषेयएव पुनरप्यातति । वेदस्यातिविलक्षणत्वेनेश्वरप्रणीत-

त्वाद्वेतिभावः । तथाचागमप्रामाण्यं—"अत्राह-किमेवंवेदाअपि" पुरुषानुभवाधीनप्रामाण्याः पौरुषेयाएव? कस्संशयः? वाक्यत्वंहि पराधीनरचनत्वस्वभावं उपलभ्यमान कथमपरधाऽवतिष्ठेत ? वेदनाम्नो ग्रन्थस्या यम्महिमा, यत्केनचिदसन्दृब्धोपि बाक्यत्वेनावतिष्ठत इतिचेत् । तर्हि पर्वतवर्तिनोधूमस्यायम्महिमा, यज्जवलनमन्तरेणाप्यनुच्छिन्नसन्तानोगगनतलमधिरोहतीतिकिन्नस्यादिति । विपक्षे-वेदानां पौरुषेयत्वाभावेबाधकञ्च नदृश्यते । प्रत्युत-वेदा अबुध्यधीनसन्दभाः वेदत्वात् । यस्तु तदधीनसन्दर्भऽस्सनवेदः यथाभारतादिरिति साधकानुमानञ्चदृश्यत इति बोध्यम् । श्रुतिः="वाचाविरूप ! नित्ययेत्यादिः पुर्वोक्ता । ननुवेदेऽनित्यत्वसाधकवाकयत्वानुमानस्य श्रुतिस्मृत्यादिविरोधः पुर्वमुक्तोऽसिद्धएव । स्मृत्यैव कयाचित्तदनित्यत्वबोधनादित्यत्राह—प्रतिमन्वन्तरञ्चोति "अनन्तावैवेदा" इत्यसंख्यातेषु वेदेषु कृत्स्नभागस्य मितायुषापुरुषेणाध्येतुमशकयत्वात् किञ्चिदंशलोपे प्राप्ते, तत्तत्कल्पारम्भे लुप्ततदंशानां पुनः प्रवर्तनमेवोच्यते । नत्वपूर्वारम्भइतिभावः । अन्यान्नूतनप्रादुर्भावान्तरवती । अथ पुनः पौरुषेयत्वं प्रकारान्तरेण प्राप्तंखण्डयति-ऋषीति । "अयंसोऽग्निरिति विश्वामित्रस्य सूक्तं भवति—नमऋषिभ्योमन्त्रकृद्भ्यः—मन्त्रकृतोवृणीते—विश्वेभ्यः काण्डऋषिभ्यस्स्वाहा—" इत्यादिषु तत्तन्मन्त्राणां तत्तदृषिकृतत्वं श्रूयतइत्यभिमानः । याज्ञवल्केयति । द्वापरान्ते—"उत्सन्नान् भगवानु वेदानुज्जहार हरिस्स्वयम् । चतुर्धाव्यभजत्तांश्चे" ति वेदविभजनाधिकृतो व्यासरूपी भगवान् वोदान् प्रथमं चतुर्धाकृत्वा—"अथशिष्यान् प्रजग्राह चतुरोवेदपारगानि" तिवैलवैशम्पायनजैमिनिसुमन्तुनाम्नशिश्ष्यांश्चतुरसंपाद्य चतुरोवेदानध्यापयामास । तेषाम्मध्ये यजुर्वेदाध्यायिनि वैशम्पायनेपि स्वयं—"यजुर्वेदतरोश्शाखा स्सप्तविंशान्महामुनिः । वैशम्पायननामासौ व्यासशिष्यश्चकारवै । इति याज्ञवल्कयादीन् शिष्यान् परिगृह्य सप्तविंशतिधा यजुर्विभज्य प्रवर्तयति सति, याज्ञवल्कयः कदाचिदाचार्येण सह कलहायमाणः तत्सकाशे स्वाधीतान् वेदान्वमतिस्म । तांश्च भागान् तित्तिरिनामानः पक्षिणोऽभक्षयन् । ततएवतेषां तैत्तरीयसंज्ञोत्पत्तिः । अथचयाज्ञवल्कयो वेदार्थी सूर्यस्य स्वस्तोत्रेण प्रीतस्य वाजिरूपेणागतस्य सकाशाद्वाजसनेयकसंज्ञकं शुक्लयजुर्वेदमधिजगामेतिकथा——"याज्ञवल्कयस्तदा प्राह प्रणिपत्य दिवाकरम् । यजूंषि तानि मेदेहि यानि सन्ति नमे गुरौ । एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः । अयातयामसंज्ञानि यानि वेत्ति नतद्गुरुः । इतिरीत्या विष्णुपुराणे श्रूयते । तथाचानया कथया वेदविशेषस्येदम्प्रथमं याज्ञवल्केयन क्लप्तिरभूदिति पौरुषेयत्वंज्ञायते । यद्यपि तस्मइदम्प्रथमं सूर्यएवोपादिशदितितत्रकथनात् न याज्ञवल्कयेन वेदक्कृप्तिः तथापि वेदस्य पौरुषेयत्वं संसारिमनुष्यविशेषकृतत्वरूपमेव विवक्षितमिति, स्थितस्यापि देवविशेषकृतमानसोपदेशस्यानादरणम् । देवताप्रसादाद्यधीनवेदोपदेशस्यापौरुषेयत्वपक्षसाधारण्याच्चेति बोध्यम् । विश्वामित्रेत्यादिस्समाधानपरः । अत्रश्रीभाष्यं—"अतएवचनित्यत्व" मितिसूत्रे—एभिरेवच—मन्त्रकृतोवृणीते—इत्यादिभिः वेदशब्दैस्तत्तत्काण्डसूक्तकृतामृषींणां आकृत्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिकरणे नियुङक्ते । तेपि प्रजापतिनाहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववसिष्ठादिदृष्टान् तानेव मन्त्रामनधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति । अतश्च वेदानां नित्यत्वं एषां मन्त्रकृत्त्व-

परिहृतம். காठकादिसमाख्याविशेषங்களும் இப்படி प्रवाहनित्यप्रवर्तकविशेषसम्बन्धनिबन्धनங்களா-கையாலே पौरुषेयत्वहेतुக்களன்று. जगत्कारणपुरुषன் பக்கலிலே वेदங்கள் जनिத்தன என்றதும் धात्वर्थமான प्रादुर्भावத்திலே तत्परம். இது "ब्रह्मावுக்கு वेदங்களைக்கொடுத்தான்" என்கிற वाक्यத்திலே सुव्यक्तம். இவ் अर्थம் —"अनादिनिधनाह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ।" इत्यादिमहर्षिवाक्यनिर्णीतம்.

---

ञ्चोपपद्यतइति । ततश्चविश्वामित्रादीनामपि प्रवाहानादितया पूर्वपूर्वविश्वामित्राददृष्टमेववेदभागमिदानी न्तनोपि विश्वामित्रः पश्यति । प्रवर्तयतिच । तत्रचेदानीन्तनाध्यापकव्यक्तिवदस्यापि प्रवर्तकत्वमात्रे स्वीकृते सति-अविशेषादध्यापकान्तरस्य नाम्नापि सूक्तविशेषादिर्निर्दिश्येतेत्यतः विश्वामित्रादेः कल्पादै-प्रथमप्रवर्तकत्वमेव स्वीकर्तव्यमिति-तदिदमुच्यते-पूर्वपूर्वेत्यादि । तथाचा—"यमग्नि" रित्यादेर्नूतनवेद-भागस्यस्वसमाननामकपूर्वर्षिविशेषप्रवर्तितस्यानधीत्यैव कल्पादौ सुकृतगौरवात्प्रथमं प्रवर्तनमभूदिति, नैवमध्यापकान्तरेण क्रियतइति विश्वामित्रस्य सूक्तंभवतीत्यादेराशयइतिभावः । यद्यपि—"गुरुमुखमनधीत्य प्राह वेदानशेषानि"ति श्रीविष्णुचित्तदिव्यसूरिरपि एवमेव स्तूयते, तथापि-अनधीत्य प्रवर्तनांशतौल्येपि प्रवर्तितवेदभागानां नूतनत्वतदभावाभ्यां विशेषोबोध्यः । तावतापि-अध्ययनतदभावाभ्यामेव श्रीविष्णु-चित्ते लौकिकाध्यापकान्तरवैलक्षण्यसिद्धेः । सुकृतेति । तदुक्तं—"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञातास्स्वयंभुवेति ॥

नन्वथापि—"इन्द्रागच्छ—हरिवआगच्छे" त्यादिषु श्रुतानामिन्द्रादिशब्दानांनित्यनिष्कृष्टात्मस्वरुपवा-चित्वाभावादनित्याकृतिविशेषविशिष्टव्यक्तिवाचितया तादृशशब्दघटितवेदानामनित्यार्थसंयोगापत्तिरित्य-त्राह—नित्येति । अर्थसंयोगः=अर्थेनसम्बन्धः । सचवाच्यवाचकभावादिरेव । तद्रूपोविरोधइत्यर्थः । यद्यपि सामान्यतश्शब्दानां भूतभविष्यद्वर्तमानार्थकतया प्रत्यक्षादेरिवार्थसमानकालतानिर्बन्धो नास्त्येव । तथाच कथमनित्यार्थसंयोगोदोषः इति पौरुषेयघटादिशब्देषुतदभावात् इति तथापि-इन्द्राद्युत्पत्तिपूर्वं तद्ध्वंसोत्त-रकालञ्चेन्द्रादिदेवताभावात् तदाह्वानार्थस्य वेदवाकयस्य पूर्वोक्तस्य तदानीमपिभावात् अर्थशून्यत्वं स्यात् । तदानीं तस्याभावेऽनित्यत्वंवाभवेदित्यभिसन्धिः । उक्तदिशैव समाधानमुच्यते-व्रीहियवेति । तथाच यथा-नलोकः कदाचिदपि व्रीहियवादिशून्योभवति , तेषांप्रवाहानादित्वात् , तथैवैकेन्द्रादिनाशेपि तज्जातीयव्यक्त-

---

யாலேவந்த பிராக்ருதாதி, பாஷைகளைப்போல என்றுங்கூறமுடியாது. ஸ்ருஷ்டியின் ஆரம்பத்தில் ஸம்ஸ்கிருதத்தைஈசுவரன் இயற்றினன் என்பதற்கும் ஆதாரமில்லை. முற்றிலும் மாறுக-அநாதியான வேதசப்தங்களைக்கொண்டே ஈசுவரன் எல்லோருக்கும்-பெயர், வருணாசிரமதர்மங்கள், உருவஅமைப்புகள், இவைகளைத்தனிதனியே செய்தான் என்று மநுபராசராதிரிஷிகள் கூறியுள்ளார்கள். சுருதிகளும்கூறும், ஸம்ஸ்கிருதச்சொற்கள் ஈசுவரனல் ஸங்கேதம் செய்யப்பட்டவையே என்றுவைசேஷிகர்முதலியோர் சொல்லுவதும்

द्वापरान्तங்களில் व्यासप्रवाहमुखத்தாலே शाखाभेदकरणமும், कालक्रमसङ्कुचितप्रज्ञரான் अधिकारिகளுக்கு ग्रहणसौकर्यार्थமான विभजनादिविषयம் என்னுமிடம் "तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्" इत्यादिகளிலே प्रसिद्धம். ஓரளவுகளிலே सारस्वतपाठसंहितैकदेशबन्धसन्धानादि களாலே வரும் स्वल्पक्रमवैषम्यमात्रம் प्रामाण्यविरोधिயன்று. अविच्छिन्नसम्प्रदायமாய்கொண்டு सर्वलोकத்திலும்நடக்கிற वेदத்தில்—"अन्यथाकरणेचास्यबहुभ्यस्स्यान्निवारणम् ।" என்கிறபடியே

---

यन्तरोत्पत्त्या नकदाचिदपि लोकइन्द्रादिशून्यः । ततश्च नवेदस्यानित्यार्थसंयोगविरोधइतिहृदयम् । तथाचब्रह्मसूत्रं—"शब्दइतिचेन्नातः प्रभवात् प्रत्यक्षा नुमानाभ्या" मिति । इयांस्तुविशेषः—शारीरके प्रथममनेनसूत्रेणानित्यार्थसंयोगविरोधं प्रशमय्य, तदनन्तरं—"अतएवचनित्यत्व" मितिसूत्रेण मन्त्रकाण्डकृत्त्वादीनां निर्वाहोऽभ्यधायि । अत्रतु—प्रथममाचार्यैः "प्रतिमन्वन्तरञ्चे" त्यादौ प्रवचनपदार्थनिष्कर्षणप्रसङ्गात् मन्त्रकृत्त्वादीनामपि प्रवचनविशेषत्वेन तदनन्तरमेवनिर्वाहोऽकारि । ततःपश्चादनित्यार्थसंयोगस्येतिक्रमोबोध्यइति । ननु "तेनप्रोक्त" मित्यादिना विहिततद्धितप्रत्ययान्तकाठकादिसमाख्यासद्भावेन वेदस्य कठादिप्रोक्तत्वावगत्या पौरुषेयत्वं पुनः प्राप्तमित्यत्राप्युक्तच्छायया समाधत्ते—काठकादीति । तथाचात्रापिकठरव्यव्यक्तिप्रवाहाङ्गीकारात् कल्पादौ कठादीनां प्रथमप्रवचनमेव—तेनप्रोक्तत्वं, नान्यदितिभावः । इदमुपलक्षणां—"विश्वामित्रस्य सूक्तं—काठक"—मित्यादिनिर्देशबलात् पूर्वपक्षिभिरपि वेदस्येश्वरप्रणीतत्ववादिभिर्यथाश्रुतं वेदभागविशेषाणां ईश्वरभिन्नविश्वामित्रादिकर्तृकत्वं नकक्षीकार्यमिति इहप्रदर्शितैव दिक् सर्वेषां शरणमिति । नन्वस्तुतथैव सईश्वरप्रणीतइति । "तस्मात्तेपानात्त्रयोवेदा अजायन्त—छन्दांसि जज्ञिरे- तस्मादित्यादिश्रुतिभ्यः । तेपानात्—तपस्तप्यतः । आलोचयतइतियावत् । "तपआलोचन" इतिधातुपाठात् । "यस्यज्ञानमयंतपइतिश्रुतेश्चेत्यत्राह—जगत्कारणेति । "जनी प्रादुर्भावइतिहि धातुपाठइतिभावः । "तस्यहवा एतस्य महतोभूतस्य निश्वसितमेतद्यदृग्वेद" इत्यादौ निश्वसितशब्देन वेदानामनायासतः प्रादुर्भूतत्वं विवक्षितमित्यपि बोध्यम् । ननु—"पुत्रोजात" इत्यादाविवोत्पत्त्यर्थकत्वमेवास्तु, ! अतआह—इद्विति । धातोः प्रादुर्भावार्थकत्वमित्यर्थः । "योब्रह्माणं विदधाति पूर्वं यौवै वेदांश्चप्रहिणोतितस्मा" इतिश्रुतौ—प्रहिणोति- प्राहिणोत्—ददौइतिह्यर्थोबाच्यः । ततश्च पूर्वमेववेदानां स्थित्यवगमः प्राप्तइतिभावः । अत्रपि—स्वयमपूर्वतया विरचय्य वितरणं विवक्षितं स्यादित्यत्रेतोपि स्पष्टार्थकस्मृतिवाक्यमुपादत्ते—इव्वर्थमिति । स्वयम्भुवा-

---

ஏற்புடையது அன்று-பலபலபிரமாணங்கள் முரண்படும். இவ்வளவு சொன்னவற்றால்-வேதங்கள்ஒருவனால் இயற்றப்பட்டவையே என்றவாதமும் அடிபட்டும்போகும்

வாக்கியமாயிருக்கையாலே, வேதமாயிருக்கையாலேவேதம் ஒருவனாலியற்றப்பட்டதே என்று ஊஹிப்பவர்களுக்கு-அப்படி இல்லாவிட்டால் என்ன? என்றகேள்வியும், வேதம் நித்தியம்என்ற சுருதிஸ்ம்ருதிகளுக்கு என்னபதில்? என்றகேள்வியும்எழும். "ஒவ்வொரு மந்வந்தரத்திலும் வேறுவேதம்நிர்மிக்கப்படுகிறது" என்றதற்கும், அவ்வப்போதுமறைந்த

उपप्लवशङ்கையில்லை. कलियुगத்தில் पामरदेशங்களிலே சில मूर्खராலே वर्णपदादिகளிலே अल्पान्यथा-करणம் प्रसक्तமானாலும் இது சில निपुणராலே கடுக निरस्तமாம். अनुवृत्तமானவையும் कालक्रमத்திலே கழியும். अधिकारियுடைய शक्तिवैकल्यத்தாலே சிலவிடங்களிலே शाखोच्छेदங்கள் பிறந்தாலும் मलयमहेन्द्रविन्ध्यहिमवत्प्रसृतिदेशविशेषवर्तिகளான अगस्त्यपरशुरामापस्तम्बव्यासादिमहर्षिகள் अनुसन्धिத்துக்கொண்டிருந்து कृतयुगம்பிறந்தவாறே எங்கும் यथापूर्वं. प्रवृत्तिப்பிப்பார்கள். ஆகையால்

---

परमात्मना । आदौकल्पादौ । वेदमयीस्वार्थेमयट्–वेदादित्येवार्थः । दिव्यान्दिव्युत्पन्नपदार्थवत् आश्चर्यरसावहा । यतोवेदात्–वेदशब्दात्–सर्वाःपृथिव्यादिप्रसूतयो भवन्ति । एषावेदमयीवागिति पूर्वेणाभिसम्बन्धः । "सभूरितिव्याहरत्भुवमसृजते" श्रुतेः ।

अथव्यासेन वेदशाखाकरणश्रवणात्पौरुषेयत्वभ्रमप्राप्ति कारणान्तरकथनेन वारयति द्वापरान्तेति । यद्यपि "एकोवेदश्चतुर्धातु तैःकृतोद्वापरादिषु" । (तैः=अष्टाविंशतिसंख्याकैर्व्यासैः) इति द्वापरादावेव वेदविभजनं प्रतीयते । तथापि–"द्वापरेतु पुरा वृत्ते मनोस्स्वायंभुवोन्तरे ॥" इतिवायुपुराणोक्तोः, शन्तनुसमकालं द्वैपायनोत्पत्तिप्रसिद्धेश्च–द्वापरं आदिर्येषान्तानि द्वापरादीनि–तेषुद्वापरान्तेष्विति यावदिति विष्णुचित्तव्याख्यात्रभाव्या । व्यासप्रवहेति । "द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं सुबहुधा कुरुते जगतोहितम् ॥–द्वापरे प्रथमे व्यस्तास्स्वयं वेदास्स्वयम्भुवद्वितीये द्वापरेचैव वेदव्यासः प्रजापतिः ॥–अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ॥" इत्यादिना विष्णुपुराणे प्रपञ्चितमिदम् । शाखाभेदकरणञ्च स्कान्दे विलोकयते–"चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधाचैकधाचैवं तथैवच सहस्रधा ॥ कृष्णो द्वादशधाचैवेति । कालक्रमसङ्कुचितप्रज्ञेति । तदप्युक्तंस्कान्दे–"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगेस्थितम् । किञ्चित्तदन्यथाभूतं त्रेतायां द्वापरे खिलम् ॥ गौतमस्य ऋषेश्शापात् ज्ञानेत्वज्ञानतांगते । सङ्कीर्णबुद्धयोदेवा ब्रह्मरुद्रपुरस्सराः ॥ शरण्यंशरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥ अवतीर्णोमहायोगी सत्यवत्यां पराशरात् ॥ इत्यादिना । न्यायकुसुमाञ्जलौतु बहुधैतदुपवर्णितं-"जन्मसंस्कारविद्यादेश्शक्तेस्स्वाध्यायकर्मणोः । ह्रासदर्शनतोह्रासस्सम्प्रदायस्यमीयत" मिति। तदर्थश्चतत्रैव–"पूर्वंहि मानस्स्यः प्रजास्समभवन् । ततोपत्यैकप्रयोजनमैथुनसम्भवाः । ततः कामावर्जनीय-सन्निधिजन्मानः । इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः । पूर्वं चरुप्रभृतिषु संस्कारास्समाधा-यिषत । ततः क्षेत्रप्रभृतिषु । ततोगर्भादितः । इदानीन्तु जातेषु केवललौकिकव्यवहारमाश्रित्य । पूर्वं

---

அநாதிவேதங்களைப்புதிதாகதிட்டமிட்டபடி வெளியிடுகிருன் என்றேகருத்து. சிற்சில ரிஷிகள், சிலவேதஸூக்தங்களையும் காண்டங்களையும், மந்திரங்களையும் இயற்றினர் என்றும், யாஞ்ஞவல்கியர் ஶுக்லயஜுர்வேதத்தைப்பண்ணினுர் என்றும், கூறியுள்ளதற்கும், விச்வாமித்திரர் யாஞ்ஜவல்கியர் என்பதுபோன்று பெயரைஉடையமுன்பிருந்த அந்தந்த ரிஷிகள்கண்டவேத பாகங்களை, பின்னுடிவந்தஅதேபெயருடைய ரிஷிகள்யாரிடமும் கற்காமலேயே தங்கள் தவ

वेदத்துக்கு ஒருபடியாலும் उत्पत्तिविनाशங்கள்சொல்லவொண்ணுது. मागधाद्यपभ्रंशभाषैகளாலே பிறந்த बाह्यागमங்களுக்கு वेदங்களுக்குப்போலே नित्यत्वம் சொல்லவிரகில்லை. அவ்வோ सिद्धान्तिகள்தங்களுக்கும் इष्टமன்று.

"வேதம் சுயமேப்ரமாணமாகும்"

இப்படி नित्यமாய் अतीन्द्रियार्थबुद्धिजनकமான वेदத்துக்கு स्वतःप्राप्तமான प्रामाण्यம் भ्रमविप्र-

---

सहस्रशाखोवेदोऽध्यगायि । ततोव्यस्तः । ततष्षडङ्गएकः । इदानीन्तुक्वचिदेका शाखेति । पूर्वंऋतवृत्त-योब्राह्मणाः प्राद्योतिषत । ततोऽमृतवृत्तयः । ततोमृतवृत्तयः । सम्प्रति प्रमृतसत्यानृतकुसीदपाशुपाल्यश्व-वृत्तिवृत्तयोभूयांसः । (ऋतमुञ्छसिलंप्रोक्तं अमृतंस्यादयाचितम् । मृतञ्चयाचितंभैक्ष्यं प्रमृतंकर्षणंस्मृतम् ।। सत्यानृतन्तुवाणिज्यं कुसीदञ्चकुलान्तरम् (वृद्धिजीवनम्) । गोरक्षादिः पाशुपाल्यं श्ववृत्तिर्नीचसेवनम् ।) पूर्वंदुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त । ततःक्षत्रियातिथयोपि संवृत्ताः । ततःवैश्यावेशिनोपि । सम्प्रतिशूद्रान्न-भोजिनोपि । पूर्वममृतभुजः । ततोविघसभुजः । ततोन्नभुजः । सम्प्रत्यघभुजएव । (अमृतंयज्ञशेषस्स्यात् विघसोऽतिथिभक्षितम् । अन्नञ्चभृत्यशेषस्स्यात् अघंस्वार्थायकल्पितम्) (तेत्वघं भुञ्जते पापा ये पचन्त्यात्म-कारणात् ।) पूर्वंचतुष्पाद्धर्मआसीत् । ततस्तनूयमाने तपसि त्रिपात् । ततोम्लायतिज्ञाने द्विपात् । सम्प्रतिजीर्य-तियज्ञेदानैकपात् । सोपिपादः दुरागतादिविपादिकाशतदुस्स्थः अश्रद्धामलकळङ्कितः कामक्रोधादिकण्टकशत-जर्ज्झरितः प्रत्यह्मयपचीयमानवीर्यतया इतस्ततस्खलन्निवोपलभ्यते" इति । तपसेति । "शिष्यानध्यापयामास भगवान् बादरायण" इतिपश्चार्धम् । ननुसर्वदानियतानुपूर्वीकतयोच्चार्यमाणत्वरूपं पारिभाषिकंनित्यत्वमपि-वेदस्य नसेत्स्यनि । सारस्वतादिपाठान्तरेषु आनुपूर्व्याअपिअन्यथाकरणादित्यत्राह—ओरळवुकळिलेइति । "सारस्वतश्चनवमेस्त्रियामादशमस्स्मृतः" इतिसारस्वताख्यनवमव्यासेन वेदविभजनकालइत्यर्थः । सारस्वतपाठे क्वचिदानुपूर्वीभेदोपिवर्ततइतिभट्टभास्करकृतकाण्डानुक्रमणिकादिषुदृश्यते।संहितैकदेशबन्धनञ्च। संहितायाएकदेशे ब्राह्मणभागेमन्त्राणं निबन्धनमित्यत एवकृष्णयजुराख्या । कृष्णत्वं परस्परसंकरकृतं शबळत्वम् । थेः । अन्यत्र मन्त्रबाह्मणभागौ पृथक्पठयेते । ततश्चैतेनाप्यानुपूर्वीभेदोऽवर्जनीय इति तदभि-मानः । स्वल्पक्रमवैषम्येति । ततश्च पाठान्तरेण परस्परसम्मिश्रणेनवामहावाकयेषु सामान्यतोवैपरीत्येजातेपि तदवान्तरवाक्यानुपूर्व्या भेदाभावात् तदेवेदमितिप्रत्यभिज्ञाया अक्षतत्वेन तदैक्यकृतंवेदनित्यत्वं जीवत्येवेति नतावताप्रामाण्येहानिरितिभावः । ननुबहुषुस्थलेषु बहुभिर्जनैरुच्चर्यमाणत्वाद्वेदस्ये तत्रानुपूर्वीभेदोपिस्यादिति-

---

வலிமையினுல்கண்டு வெளியிட்டனர் என்றேகருத்து. நித்தியமாக இந்திராதிகளைச் சொல்லும் வேதவாக்கியங்களும் அநித்தியமான இந்திரன் முதலியயோருள்களோடு தொடர்பு கூடாதேஎன்னில்? நெல்முதலிய தான்யங்களைப்போலே இந்திராதிகளும் ஒருவர்மாறி யொருவர் தொடர்ந்துவருகையாலே ஏதும் சங்கடமில்லை. சிலவேதபாகங்களுக்கு—காடகம்— என்னுமாப்போல் பெயர்வைத்தும் கடர் இயற்றினுர் என்பதற்கல்ல. எப்போதும் மறைந்த

लम्भादिवक्तृदोषाभावनिश्चयத்தாலே निरस्तापवादமாய்க்கொண்டு सुप्रतिष्ठितமாம். कारण दोषம் கண்டிலோமாகிலும் बाधक प्रत्ययத்தாலே अप्रामाण्यம் வாராதோ என்னில்? अतीन्द्रिय विषयத்தில் प्रत्यक्षबाध प्रसङ्गமில்லை ऐन्द्रियक विषयத்திலே विरोधமுண்டாய் தோன்றினவிடங்களும்

भवति शङ्कायास्स्थानम् । तैस्तैरन्यथाकरणाद्युपप्लवस्यापिसम्भाबितत्वादित्राह—अविच्छिन्नेति । व्याकरणशिक्षानिरुक्तप्रातिशाख्यादिभिर्बहुभिरङ्गैरङ्गिनोवेदस्य सर्वतोपिरक्षा प्रवर्ततेति नकथञ्चिदप्यन्यथाकरणादिकं सुशकं कर्तुम् । यदि क्रियते-बहवःप्रामाणिकावेदविदः श्रुत्वा तत् शीघ्रमेवशिक्षयिष्यन्तीत्यर्थः । एवमेवात्मतत्त्वविवेकेप्युक्तं—"सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिस्स्वीकृतश्चैषामर्थः । प्रतिपदं तदीयशान्तिकपौष्टिकप्रायश्चित्ततपोजप्यदानहोमाद्युपदेशात् । नचैषभागस्तत्राप्रमाणमेव । तुल्ययोगक्षेमत्वात् । एतदेवासिद्धं प्रक्षेपस्यापिसम्भवादितिचेन्न—अध्येत्रध्यायित्रादिसम्प्रदायाविच्छेदात् । "अन्यथाकरणेचास्य बहुभ्यस्स्यान्निवारणमिति । अत्र—"बहुभिस्स्यान्निवारण" मिति निवारणकर्तरि तृतीयाप्राप्तावपि तस्यतदपादानत्वविवक्षया पञ्चमीप्रयोगइतितुभाति । नन्वथापिसर्वदोषाणांनिधौ कलौ वेदान्यथाकरणपरीहारः कथमित्यत्राह—कलीति । पारमदेशःप्रामरभूयिष्ठोत्तरदेशादिः । युगान्तरेहि सदेशआर्यावर्तनाम्नामहर्षिभूयिष्ठः प्रशस्तश्च वेदतदर्थयज्ञादिकर्मणि । मूर्खाःतत्त्वंज्ञात्वापिदृदपूर्वंश्रुताः । निपुणेत्यादि । "नियुक्तोवाऽनियुक्तोवा धर्मवक्तुमिहार्हसी"ति शास्त्रवश्यतया स्वयमप्रार्थिताअपि छन्दश्शिक्षावेदिनः केचिदागत्य शीघ्रं तत्स्खालित्यं शमयिष्यन्तीत्यर्थः । ननुमूर्खाणांह्येषस्वभावः । यत्शिक्षितमप्यनादरेण नगृहीष्यन्ति । ततश्चाग्रेप्यन्यथाकरणानुवृत्तौकाचिकित्सेत्यत्राह—अनुवृत्तेति । तथाचअनुपदं वक्ष्यमाणरीत्या कृतादौ भूयश्शुद्धपाठप्रवृत्तिर्भविष्यतीव्यर्थः । अथ "जन्मसंस्कारेति पूर्वोपात्तोदयनोक्त्यनुरोधेन क्वचित्कस्याश्चिच्छाखाया अत्यन्तमुच्छेदसम्भवात्तथैवेदानीं दर्शनाच्च कथंवेदानुवृत्तिरितिचेदाह—अधिकारीति । अध्यापकादीत्यर्थः शक्तीत्यन्येषामप्युपलक्षणम्। जीविकामात्रश्रद्धालुपापिष्ठजनभूयिष्ठेदेशे युगस्वभावेनात्यन्तं शाखोच्छेदएव भवति । आर्यावर्तादिष्विव दक्षिणादिदेशेष्वपि शनैर्धर्मलोपदर्शनात् । अत्रेदं वक्तव्यम् । अस्तिहिप्रकृते पक्षद्वयम्—एकोमीमांसकानाम् । तेहि—"इदानीमिवसर्वत्रदृष्टान्नाधिकमिष्यते ।" इतिरीत्याऽधुना यावन्तोवेदभागाः श्रूयन्ते, तावन्तएव पुराप्यासन् । नतुपूर्वमधिकतया स्थितानामिदानीमुच्छेदोजातइति । तत्रप्रमाणाभावादनाश्वासप्रसङ्गाच्च । अप्रत्यक्षश्रुतिमूलकानां स्मृतीनान्तु प्रामाण्यान्यथानुपपत्या नित्यानुमेयश्रुति मूलकत्वमेव, नतूच्छिन्नशाखामूलकत्वमिति । अपरस्तु 'अस्माकं नैयायिकादीनाञ्च । पूर्वं सहस्रशाखतया' प्रसृतस्यं वेदवृक्षस्येदानीं क्वचिच्छाखोच्छेद एववक्तव्यः । दर्शनानुसारिण्यामेवं विधकल्पनायां अनाश्वासादेरप्रसक्तेः सेखरमीमांसापक्षे 'अस्मदीये' पुनरीश्वरेण यथापुरं वेदप्रवर्तनाङ्गीकाराच्च । इयांस्तु विशेषः—नैयामिकादिमते वेदस्य कर्ता ईश्वरः । अस्माकन्तुप्रवक्ता । अप्रत्यक्षश्रुतिमूलक स्मृतीनामच्छिन्नशाखामूलकत्वमेवेति । कलेरन्ते पुनर्वेदसम्प्रदायप्रवर्तकपुण्यपुरुषाणां

அந்த பாகத்தை கடரே வெளியிடுகிருர் என்றுதான் கருத்து. ஜகத்காரண புருஷனிடம் இருந்து வேதங்கள் பிறந்தன என்பதற்கும், வெளி வந்தன என்றுதான் பொருள். அதனுலே தான் நான்முகனுக்கு நாரணன் வேதங்களைக் கொடுந்தான் என்பதும் பொருந்துகிறது.

आप्तवाक्यங்களிற்போலே उपचारத்தாலே निर्वहिக்கும். सम्भवद्दोष देहात्मभ्रमादिप्रत्यक्षप्रत्ययத்திற் காட்டில் निर्दोषशास्त्र जन्यपरोक्षज्ञानம் தானே प्रबलமாம். अन्यथासिद्धिसम्भावनै உடய अपरोक्षप्रत्ययத்திற் காட்டில் अनन्यथासिद्धपरोक्षज्ञानம் प्रबलம் என்னுமிடம் ज्वालाभेदानुमानादि-

---

'नामानि' स्थानानिचाह—मलयेति । मलयमहेन्द्रपर्वनयोरमस्त्यपरशुरामवासः 'पुराणादिप्रसिद्धः । एवमेम' विन्ध्य हिमाचलयोरपि' अन्ययोर्वासः स्यात् । अत्र चतुर्दिशं चत्वारः प्रवर्तकाः इत्यपिगम्यते । क्रमेण मलयमहेन्द्रगिर्यो दक्षिणपश्चिमत्वात् । आचार्याणां दक्षिणर्दिग्भवत्वात् तदादितयानिर्देशे भिमानात् अगस्त्यादीनामाधिकारिकपुरुषत्वाच्चिरंजीवित्वाच्च' स्वयंकृत्स्नवेदनदर्थवेदितयां तैः परमपुरुषप्रेरणयां पुनः कृतयुगाङ्कुरे वेदसंप्रदायः प्रवर्तयिष्यत इति भावः । एवं विस्तरेणोक्तं वेदनित्यत्वं निगमयति—आकैयालिति । कथमपि—वर्णपदाद्यनित्यवानित्यार्थसंयोगसाङ्केतिकत्वपौरुषेयत्वादिभिः । तर्हि 'वेदवदेवबाह्या' अपि सन्तुनित्याः - तत्राह - मागधादीति । आदिना 'गौडशौरसेनादि प्राकृतभाषासप्तकग्रहणम् । अपभ्रंशत्वोक्तया' तासामसंस्कृतत्वं 'केनचित्स्वसङ्केत पूर्वमुत्पादितत्वं च' प्रतिपाद्यते । बाह्यत्वं वेदविरुद्धत्वात् । तथा च तेषां 'नित्यत्वं' दुर्वचमितिभावः । नन्वथापि विश्वामित्रतत्सूक्तादीनामिव' बुद्धतदागमानामपि' प्रतिकल्पं प्रवाहानादितास्वीकारात्तेषां नित्यत्वे 'वेदस्येव' न विरोध इत्यत्राह—अन्वो इति । तत्तत्तीर्थकरोत्पादितत्वमेव 'वेदद्वेषेण' तद्वैलक्षण्याय, स्वागमेषु' इष्यते परमतस्थैः, न तु नित्यत्वम् । वेदनिर्विशेषता पत्तेरिति तेषामभिमानः इति भावः ।

एवं पूर्व - अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषवेति वाक्योक्तयोरर्थयोरविच्छिन्नसम्प्रदायत्वं प्रसाध्यार्थनिर्दोषत्वं प्रपञ्चयति—इप्पडि इति । नित्येत्यादिविशेषणद्वयमिहानन्तरवाक्यार्थे च हेतुगर्भम् । नित्यत्वेन वक्त्रभावात्तद्गतदोषः, अतीन्द्रियार्थबोधकत्वेन प्रमाणान्तरबाधश्चनास्तीत्यर्थः । बुद्धिजनकेति प्रामाण्यस्यस्वतस्त्वे हेतुः । अयं भावः यत्किञ्चिदर्थबोधक शब्दसामान्यस्य तत एव प्राप्तं प्रामाण्यम् । इदमेव च प्रामाण्यस्य स्वतस्त्वम्—यत् शब्दनिष्ठार्थबोधकत्वादिसामान्यधर्मेतरविशेषधर्माप्रयुक्तत्वम् । तर्हि तत्र तत्र शब्दे वक्तृपुरुषगुणदोषादिविमर्शोऽस्तुवृथेतिचेन्न । वक्तरिगुणज्ञानेन - तदुक्तशब्दे शब्दसामान्यन्यायतः प्राप्तप्रामाण्यस्य अन्वयतोद्रढीकारात् । दोषाभावनिश्चयेनचोत्सर्गप्राप्तप्रामाण्यप्रतीतेरपवादतया मध्येप्राप्तदोषाधीनाप्रामाण्यशङ्काविधूननेन व्यतिरेकतो द्रढीकारात् । तथा च शब्दानामप्रामाण्यं परं परत इत्युक्तं भवनि । परतः—वक्तृगतभ्रमादिदोषमूलकत्वनिश्चयेन । अत्रनैषधोक्तिः—" स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थतेति । परार्थता— परोपकारिता । ग्रहणानां—ज्ञानानां । यथार्थता—प्रामाण्यं । अत एव - उत्स्वप्नायित वाक्यघुणक्षतलिप्यादीनां अर्थविशेषबोधकत्वरूपसामान्यधर्मतः प्रथमं प्राप्तमपि प्रामाण्यं, पश्चाद्वक्तृतात्पर्याभावादिरूपदोषमूलकत्वनिश्चयेनापोद्यते इति । नैवं वेदे प्रथमं

---

மஹரிஷிகளும், சுயம்புவான பகவானுல் ஆதி அந்தமற்ற வேதம் வெளியிடப்பட்டது. ஆதி காலத்தில் அதனின்றுதான் உலகம் தோன்றி பெயரிடப்பெற்று விளங்குகிறது என்று கூறினுர்கள்.

களிலும் आप्तवाक्यங்களிலும் காணலாம். कारीर्यादिகளில் कादाचित्कविसंवादம் कर्मकर्तृसाधन-वैगुण्यத்தாலே வருகிறது. अविकलानुष्ठितकाम्यज्योतिष्टोमादिகளில் फलविलम्बம் प्रतिबन्धकायत्तம்.

अनुमानமும் वेदத்தோடே विरोधिத்தால் धर्मिसाध्यनिषेध्यग्राहकागमवाधितமாம். आगमान्तरங்கள் कारणदोषशङ्काकळङ्कितங்களாகையால் वेदத்துக்கு बाधादिகளைப் பண்ணமாட்டாது.

---

स्वतः प्राप्तस्य प्रामाण्यस्यायवाद इत्याह - भ्रमेति । विप्रलम्भ इति । विप्रलिप्सेति तु युक्तम् । सर्वथातु—स्वयमभ्रान्तत्वेपि परप्रतारणं तदिच्छावेत्यर्थः । तदानीमपि विपरीतशब्दप्रयोगसम्भवात् । आदिनातद्धेतुभूतप्रमादाशक्तयादिग्रहणम् । तादृशदोषाभावश्चवेदे—तस्य नित्यत्वेनापौरुषेयत्वात् बोध्यः। सुप्रतिष्ठितेति । अत्रेदंबोध्यम् - शब्दस्य प्रामाण्यमप्रामाण्यञ्चेत्युभयमपि परत एव । तत्र वक्तृगतगुणज्ञानात् प्रामाण्यगृत्यते । तद्दोषतोप्रामाण्यमिति मैयायिकादयोऽभिप्रयन्ति । तथासति—वेदे वक्त्रभावाद्गुणदोषोभयाभावेन वेदाख्यशब्दस्योभयतोभ्रबृत्वात् तृतीयराशितापत्तिः। वेदस्येश्वरोक्तत्वमस्मदिष्टमिति-चेन्न । तथा सतीश्वरेसिद्धे तदुक्तत्वाद्वेदप्रामाण्यसिद्धिः । तत् सिद्धौ तत्प्रतिपाद्यतयेश्वरसिद्धिः इत्यन्योन्याश्रयणात् । तस्यानुमानगम्यत्वन्तु शास्त्रयोनित्वाधिकरणविरुद्धमिति । अथ वेदस्य निर्दोषत्वमिव निर्बाधत्वमपि वक्तुम्, किमतीन्द्रियार्थे वेदबोधितेबाधः? अथैन्द्रियकार्थे तथा वितेति तथेति विकल्पं हृदिकृत्वा प्रथम आह—कारणेति । अतीन्द्रियेति । तथा च—यथा प्रभवस्त्वाज्ञाभङ्गभयभीताः क्षुद्रान् किमपि नादिशन्ति, अपि तु स्ववशं वदात् भृत्यानेव, तथैव वेदोपि प्रभुसम्मितः लौकिकेऽर्थे तुल्य प्रत्यक्षादि-प्रमाणापातात्कदाचित्स्वातन्तयावलम्बने प्रत्यक्षादिनाबाधप्रतिरोधादिकमपि प्रसजेदिति तदसहमानः प्रत्यक्षाद्यविषयमेवार्थं स्वप्रतिपाद्यमिच्छति । तत्र कदाचिदपि स्वस्वातन्तयस्याकुण्ठनादिति सोयम्—"न हि भवति मशकः कण्ठीरवस्य परिपन्थी" इति न्याय एवेतिभावः । तदुक्तम्—"असन्निकृष्टवाचा च द्वयमत्रजिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोपिवेति" "प्रत्यक्षेणानुमित्या वा यस्तूपायो नबुध्यते । एतं विदन्तिवेदेन तस्माद्वेदस्यवेदतेति च ।" अथ द्वितीय अहऐन्द्रियकेति । अयं भावः—यद्यप्युक्तरीत्याऽप्रत्यक्षार्थं पक्षपातित्वमेव श्रुत्यक्षराणां युक्तम् । तदानीमेवाप्राप्तार्थप्रापकत्वान्मुख्यं प्रामाण्यञ्च । अथापि यदिकदाचित् विधिशेषतया प्रत्यक्षयोग्यमप्यर्थं स्पृशति श्रुतिः । अनुपदं तत्र कश्चन् प्रत्यक्षादिप्रमाणान्तरविरोधश्चाऽऽपिपतिषति । यथाऽऽदित्योयूप इत्यादौ । यूपादित्ययोः प्रत्यक्षतोभेदादिति । तदानीं वयमपि एवं निर्वहामः—तत्र हि तद्वाक्यं केवलं पूर्वतनयूपाञ्जन विधिशेषभूतं सदर्थवादो भवति । तस्मादुपचारवृत्त्या—अग्निर्माणवक इत्याद्याप्तवाक्य इव—आदित्यः—आतित्यसदृश इत्यार्थान्तरमवलम्बते । ततश्च न बाधः प्रत्यक्षेण । अर्थवादानां हि विध्येकवाक्यतापन्नानां न मुख्यवत् परीक्षणार्हत्वमिमि । नन्वेवं प्रत्यक्षविरुद्ध श्रुत्यर्थस्योपचारतो निर्वाह्यत्वे—"नायन्देव" इत्याद्यागमगम्यस्य देहात्मभेदस्यापि—"स्थूलोह"मित्यादि प्रत्यक्षविप्रतीपतया तत्रापि शस्त्रमुपचर्यतामिति प्रहृतमेव

---

த்வாபர யுகத்தின் கோடியில் தொடர்ந்துவரும் வியாஸர்களின் வரிசையைக்கொண்டு நாநாவேத சாகைகளைப் பண்ணியதும் காலக்கிரமத்தில் அறிவு குறைந்துவரும் மாந்தர்களின் ஸௌகர்யத்தை எண்ணி பிரித்ததுவே என்று சொல்லவேணும். வ்யாஸர் (பிரித்தவர்)

कर्तव्यத்திலேயாதல் सिद्धार्थத்திலேயாதல் वेदवाक्यங்கள் अन्योन्यम् विरोधித்துந் தோன்றுமளவில் सर्वलौकिक परीक्षकसम्मतवाक्यतर्कसिद्ध विकल्प विषयव्यवस्थादिகளாலே यथासम्भवம் विरोध प्रशमनமுண்டாம். अपच्छेदத்தில் ஒரு प्रयोगத்திலே बाधமுண்டானலும் प्रयोगान्तरप्रामाण्य-

---

शास्त्रस्यमूर्धनीत्यत्राह—सम्भवद्दोषेति । अयः पिण्डौष्ण्यबुद्धिवत् निरन्तरसम्बन्धात् जायमानं स्थूलोह-मित्याहिदेहात्माभेदप्रत्यक्षं भ्रमः । ततश्चान्यथासिद्धं दुर्बलञ्च । शस्त्रजन्यं तयोर्भेदज्ञानन्तु निर्दुष्ट-मनन्यथासिद्धं तत एवं स्वयं परोक्षत्वेपि प्रत्यक्षात् प्रबलञ्चभवति । परोक्षज्ञानमेव—दुर्बलत्वेन प्रतिवादि प्रतिपन्नमेव । "आनर्थक्य प्रतिहतानां विपरीतं बलाबल"मितिन्यायादिति भावः । ननुशास्त्रस्य शब्दार्थव्युत्पत्तिग्रहणादौ प्रत्यक्षापेक्षितया तद्बाधेस्वमूलधात एवस्यात् कृत इत्यत्राह—अन्यथेति । प्रत्यक्षत्वेन परोक्षत्वेन नानयोर्बाध्यबाधकभावः । प्रत्यक्षं वा परोक्षं वाऽन्यथासिद्धं यत् तत् बाध्यम् । अनन्यथासिद्धमितरत् बाधकमित्येव तन्निर्णयः । यतः "सेयं दीपज्वाले" इति पूर्वापरज्वालयोरभेद-प्रत्यक्षं प्रत्यक्षजातीयमपि—"इयं दीपज्वाला पूर्वतोभिन्ना तत्प्रसावकसामग्रीभिन्न सामग्रीप्रसूतत्वादि" इत्यनुमानेन परोक्षेणापि बाध्यते तत्र च कारणम्—अनुमानस्यानन्यथासिद्धिः प्रत्यक्षस्यान्यथासिद्धिश्च । तथा हि—तैलवर्त्यवयवाग्निसंयोगादीनां दीपज्वालाजनकत्वम्, तन्नाशस्य तन्नाशजनकत्वञ्च प्रथमचरमयो-र्ज्वालयोर्दृष्टमिति मध्यगतज्वालास्वपि प्रतिक्षणभाविनोस्तयोस्तथात्वावश्यम्भावात् ज्वालापि प्रतिक्षण-मुत्पत्तिविनाशवतीतिकलयत इति अस्यानुमान प्रमेयस्य कथञ्चिदप्यन्यथानेनुमशक्यत्वेन—पूर्वोक्तप्रत्यभिज्ञा-प्रमेयस्य ज्वालैक्यस्य सादृश्य शीघ्रसमनन्तरभावित्वादिनाप्यन्यथासिद्धत्वेन च तयोर्बाध्यबाधकभाव इति परोक्षज्ञानजनकं प्रत्ययिततरपुरुषवाक्यम् । ननु—"प्रत्ययार्थञ्चमोक्षस्य सिद्ध्रयः संप्रर्कीतिता" इति रीत्या वेदप्रमाण्यविश्वासार्थप्रत्यक्षफलकारीरीष्टयादिषु कदाचित् 'सद्योवृष्टयादिफलव्यभिचारेण, तद्बोधक वेदभागा प्रामाण्यं दुर्वारतिति चेदाह—कारीरीति । "कारीर्यावृष्टिकामोयजेते" इति विधिः । करीरः—वेण्वङ्कुरः । तद्द्रव्यकत्वादिष्टेरपि कारीरीनामकत्वम् । विसंवादः—फलादर्शनं । कर्मवैगुण्यम्—अङ्गाङ्गिनोर्नयथावदनुष्ठानम् । कर्तुंस्तु—यथोक्ताधिकारशून्यत्वम् । साधनस्य च—द्रव्योपकरणादरेशुदिः । तथा च यत्रेष्टयादेरुक्तफलादर्शनम्, तत्रैतेषु—एकस्य द्वयोस्त्रयाणां वा वैकल्यमदश्येभावीति 'तत एव हेतोः' फलानुदय इति, नैतावता 'साकल्येनानुष्ठितेष्टयादीनां सफलताबोधकवेदस्या प्रामाण्यमिति भावः । अथ यत्र सकलतयाऽनुष्ठानेपि फलविळम्बो दृष्टः । तत्र तद्बोधकवेदप्रामाण्यं परिपाति—अविकलेति । फलविळम्बः—समनन्तरमेव शरीरनाश पूर्वकं स्वार्गाद्यप्राप्तिः । नह्यत्र ज्योतिष्टोमादौ कारीर्यादाविव फलाभावनिश्चयः । ज्योतिष्टोमादीनां स्वर्गार्थं चोदितत्वेन स्वर्गस्य च देहादूर्ध्वमनुभाव्य तयातीन्द्रियत्वात् योग्यानुपलब्यभावतो व्यतिरेकनिश्चयायोगात्—अतः फलविकम्बोक्तिरत्र । प्रतिबन्ध-केति । अयमपिसन्धिः—स्वर्गस्यानेनमानुषशरीरेणाननुभाव्यतया यागादूर्ध्वं मध्ये तन्नाशस्याप्यावश्यकत्वेन

---

என்பதினால் இது அறியலாம். ஒரு ஸமயத்தில் ஸாரஸ்வத பாடபேதம் வந்ததும், ஸம்ஹிதையின் நடுநடுவே மந்திரங்கள் கலந்ததும் உண்டு. அதனால் வேதவாக்யங்களின் வரிசை கொஞ்சம் மாறினலும் வேதத்தின் பிரமாணத் தன்மைக்கு இழுக்கு ஏதுமில்லை.

विरोधமில்லை, वेदवाक्यविशेषங்களுக்கு आप्ततम स्मृत्येकदेशविरोधம் தோற்றினால் आप्ततम बहुस्मृतिகளையும் मूलदर्शनसम्भवासम्भवங்களையும் பார்த்து यथासम्भवம் विकल्पस्मृतिबाधान्यपर्यादिகளாலே निर्वाह्यம். उपमानार्थापत्त्यभावसम्भवैतिह्यங்களென்று சில प्रमाणங்களைப் பிரியக்

---

ज्योतिष्टोमादेश्च केवलं स्वर्गादिकप्रति साधनमात्रत्वात् शरीरनाशकत्वायोगतः स्वफलस्वर्गदानाय तद्विनाशककर्मापेक्षायाम्, तस्य च प्रबलकर्मान्तरेण प्रतिबन्धेसति ज्योतिष्टोमसाध्यस्वर्गफलमपि किञ्चिद्विळम्बत इति ।

एवं विरोधे सति वेदस्यानुमानादपि प्राबल्यं साधयति—अनुमानेति । तत्रानुमानस्य धर्मिग्राहकागमबाधो यथा—ईश्वरः केवलं जगन्निमित्तमेवं कर्तृत्वात् कुलालवदित्युक्ते धर्मिणः पक्षभूतेश्वरस्य वेदैकवेद्यतया वेदोपजीवनेसति तत्रेश्वरस्योपादानतापि जगतप्रतिगीयत इति अनुमानस्यतेनबाधः । साध्यग्राहकतद्बाधो यथातत्रैव—क्षित्यङ्कुरादिकं उपादानव्यतिरिक्तकर्तृकं कार्यत्वात् घटवदिप्रयोगे साध्यकोटिप्रविष्टः कर्ता ईश्वर इति वेदादेवावगन्तव्यमिति तब्दाधः । निषेध्यविषये यथा—आकाशोनोत्पद्यते निखयवत्वादात्मवदित्यनुमाने—निषेधप्रतियोगिन्या आकाशोत्पत्तेर्लोकतो प्रतिपत्त्या तदर्थं श्रुतौ शरणीकरणीयायां—तत्रात्मन आकाशः सम्भूत इति श्रवणात् तथाबाधः: । अथेदानीं शब्देष्टेव प्राबल्यदौर्बल्ये वक्तुं आगमान्तराद्वेदस्य वीर्यमाह—आगमेति । बौद्धाद्यागमेत्यर्थः । तेषां पौरुषेयत्वस्य तैरेवाङ्गीकारात् अनीश्वराणां तत्कर्तृणां भ्रमादिदोषशङ्कासम्भवादितिभावः । वेदस्य—नित्यनिर्दोषतया स्थापितस्य वेदस्य । अथ वेदशब्देष्वेव परस्परविरोधपरिहारेण प्रामाण्यप्रतिष्ठापयतिकर्तव्येति । साध्यक्रियेत्यर्थः । सिद्धेतिवदयमाणानुरोधात् । वेदार्थोह सिद्धसाध्यरूपेणद्विविध। । तथा च—उदितेजुहोति—अनुदितेजुहोति इति होमादिक्रियाविषये—सदेवसोम्येदमग्र आसीत्—असद्वा इदमग्र आसीदिति सिद्धब्रह्ममिषये चेत्यर्थः । लौकिकाः—लोकन्यायकुशलाः । परीक्षकाः—वेदन्यायनिपुणामीमांसकाः । वाक्यतर्कः—वाक्यतदर्थ विषयक ऊहः । सामान्यतस्तर्काणां सर्वप्रमाणानुग्राहकत्वेपि प्रकृते शब्दप्रमाणविचारात् तदनुगुणतया वाक्यतर्केत्युक्तम् । पदार्थस्य व्याकरणादिनैवनिर्णयात् न तत्र तर्कापेक्षेति शब्दतर्केत्यनुक्तिः । अत एव पदवाक्येति व्याकरणमीमांसयोरन्यत्र व्यवहारोपपत्तिः । तद्विषयकत्वञ्चार्थस्वभाव प्रमाणगत्यादिविमर्शाद्भवति । विकल्पेन विरोधप्रशमनं साध्याक्रियाविषये । न तु सिद्धे । वस्तुनि विकल्पायोगात् । विषयव्यवस्थया तु तत्प्रशमनं सर्वत्र स्यात् । यथा उदितानुदितहोमयोः फुरुषभेदेन विकल्पः । सदसत्कारणवाक्ययोश्च विषयव्यवस्था । सत्त्वं च प्रमाणिकत्वम् । तद्वत्वात् अग्रेसृष्टेः प्राक् ब्रह्म सदपि भवति । सत्त्वञ्च नामरूप भाक्त्वम् । तदभावात् मृस्टेः प्रागसच्च ब्रह्मगीयत इति सत्वासत्वयोर्विषय व्यवस्थयाऽर्थभेदेनैकस्मिन्त्तेव- ब्रह्मण्युपपादना द्विरोधशान्तिः । आदिना—सामान्यविशेषन्यायतस्तत् प्रशमं विवक्ष्यते । यथा आत्मावा

---

இடைவீடின்றி எல்லா இடங்களிலும் ஓதுப்படுகிற வேதத்தில் யாரேனும் ஏதேனும் மாறுதல் செய்தாலும், வேதமறிந்த பெரியோர்கள் உடனே அதைத் திருத்துவார்கள். கலியுகத்தில் பாமர தேசத்தில் சில மூர்க்கர்கள் வேதத்தை மாற்றினாலும் அதுவும் உடனேயோ காலக்ர

கொள்ளுவார்க்கும் அவற்றாலே वेदத்துக்கு बाधம் प्रसङ्गिக்க வழியில்லை. बालिशकुतर्कங்களாலும் वाङ्मात्रத்தாலும் பண்ணும் क्षुद्रोपद्रवங்கள் आगमान्तरங்களிலும் பண்ணலாம்.

"வேதம் விளங்கா நிற்க மதாந்தரங்கள் வந்தவகை"

இப்படி नित्यनिर्दोषनिर्बाधமான वेदத்தை परमकारुणिकனான सर्वेश्वरன், ब्रह्मा முதலான देवர்களையும் महर्षिகளையுங்கொண்டு प्रवर्त्तिப்பித்துப்போரா நிற்க, लोकத்திலே अनर्थहेतुக்களான

---

इदमग्र आसीत्—ब्रह्म वा इदमग्र आसीदित्यत्रात्मशब्दस्य बृहदबृहत् साधारणस्य ब्रह्मणि विशेषेपर्यसानम्। अन्यथा तत्रापिद्वयोरेकत्रस्थाने कीर्तनविरोधस्स्यात्। यथासम्भवमिति। प्रामाण्योपपादप्रकारभेदेपि प्रामाण्यं सामान्यतः सर्वत्रवेदेनिराबाधमितिभावः। ननु मीमांसकैरपच्छेदाधिकरणे पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदित्यत्र पूर्वाबाधेननोत्पत्तिरुत्तरस्य हि सिध्यतीति पूर्वशास्त्रस्योत्तरशास्त्रेण बाधाङ्गीकारातत्प्रयुक्तं वेदाप्रमाण्यं दुर्वारमित्यत्राह—अपच्छेदेति। पञ्चत्विजः समन्वारब्धाः प्रसर्पन्ति, अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा, ब्रह्माणं यजमान इति यागविशेषे बहिष्पवमानं प्रसर्पतां योयमन्वारम्भः, एकस्य पृष्ठेऽन्येन कच्छस्पर्शरूप उक्तः तस्य विच्छेदेत्यर्थः। तत्रेत्थं तदधिकरणप्रमेयम्—बहिष्पवमानं प्रसर्पतां मध्ये यद्युद्गाताऽपच्छिद्येत अदक्षिणः स यज्ञः समाप्यः, तेन पुनर्यजेत तत्र तद्द्यात् यत् पूर्वस्मिन् दास्यान्त्यात्। अथ प्रतिहर्ताऽपच्छिद्येत, सर्ववेदसं सर्वस्वदक्षिणं दद्यात् इति प्रायश्चित्तमपच्छेदे श्रूयते। तत्रोद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे तत्तत् प्रायश्चित्तमात्रं क्रियत इति न तत्र किञ्चिदस्माभिश्चिन्तनीयम्। एकस्मिन्नेव प्रयोगे युगपत्तयोरपच्छेदे चोद्गातुर्वर्गप्रधानत्वात् तदपच्छेदप्रयुक्तप्रायश्चित्तमेव कर्तव्यं विकल्पेनान्यतरापच्छेद प्रयुक्तप्रायश्चित्तं वेतिचाधिकरणान्तरे सिद्धान्तितम् अतस्तत्रापि न विचारणीयं किञ्चित्। यत्र तु तयोः पौर्वापर्येणापच्छेदोऽभूत्, तत्र कर्तव्यं परमिहविचार्यते। न चापच्छोदोत्पत्तिक्रमेण तत्प्रयश्चित्तद्वयमपि क्रमात् क्रियतामिति न तत्रापि किञ्चिद्विचार्यनिर्धार्यमिति वाच्यम्। उद्गात्रपच्छेदनिमित्तक प्रायश्चित्तभूतादक्षिणयज्ञ संस्थापन पुनरनुष्ठानं तत्रत्यदक्षिणदाणादीनां प्रतिहत्रपच्छ्रेद प्रायश्चित्तेन सर्ववेदसदानेन विरोधात् क्रमेणोभयानुष्ठानानुपपत्तेः। तस्मादेवास्मिन्नाधिकरणे—पूर्वापच्छेदनिमित्त प्रायश्चित्तशास्त्रेणोत्पन्नापि तत् कर्तव्यताबुद्धिः—उत्तरापच्छेदनिमित्त प्रायश्चित्तशास्त्रेणोत्पन्नया तया बाध्यत इति परशास्त्रमेव पूर्वस्माद्बलवत् कर्तव्यञ्चेतिनिर्णीयते इति तदिदमाह—ओरुप्रयोगत्तिले इति। उक्तसम्युपपगम्यैव वेदाप्रामाण्यं परिहरति—प्रयोगान्तरेति। अयमाशयः यत्रोभयोरपच्छेदयोः क्रमेणोत्पत्तिः तत्रैवं रीत्यापरेण पूर्वबाधेपि सर्वत्र प्रयोगेष्वियमेव रीतिरिति न निर्बन्तः। यत्रैकैकापच्छेदः यत्रवोभयापच्छेदोयुगपत् तत्र यथासंख्य प्रकारान्तराभावेन तन्त्रतोनुष्ठानेनान्यतरानुस्ठ नेन च न कस्यापिबाधः शास्त्रस्य प्रसज्यते। तस्मात्तादृश

---

மத்திலேயோ கழியும். ஓதுபவர்களின் திறமையின்மையினால் சில இடங்களிலே சில வேத சாகைகள் மறைந்தொழிந்தாலும், மலயம், மஹேந்திரம், விந்தியம், ஹிமாசலம், முதலிய தேசங்களில் ஜீவித்திருக்கிற அகஸ்தியர், பரசுராமன், ஆபஸ்தம்பர், வியாஸர் முதலிய

शास्त्रान्तरங்கள் उदिக்கைக்கடி என்னன்னில்? सर्वेश्वरன் अनादिकर्म प्रवाह विषमितராய்ப் போருகிற் क्षेत्रज्ञர்திறத்தில் सर्वसमனாய் कर्मानुरूप बलप्रदனாகையாலே सात्त्विक विषयத்தில் प्रतिकूलரான आसुरप्रकृतिகளை அவர்களுடைய दुष्कर्म फलமாக मोहिப்பிக்கும்போது उपकरणமான वेदवाक्य विषयங்களிலே உண்டாயிருப்பன சில क्षुद्रोपायங்களை बलिशाभिषन्यायத்தாலே

---

प्रयोगान्तरेषु शास्त्रस्य सर्वस्य प्रामाण्यं निरपवादमिति : तदुक्तम्–पौर्वापर्यं विरोधश्च पूर्वाप्रमाण्यमेव च । नियमान्नास्ति तत्रासावपच्छेदनयोभवेदिति । नियतपौर्वापर्यविषयविरोधेतु विरोधेत्वनपेक्षं स्यादसतिह्यनुमानपिति विरोधाधिकरणन्यायेन परस्य सर्वथाबाध एव । अथश्चन्यायः श्रुतिस्मृत्योर्विरोध एव वक्तव्यः । न श्रुत्योरुभयोः । परस्परनिरपेक्षयोस्तयोः पौर्वापर्यायोगात् । श्रुतिस्मृतित्योश्च परया पूर्बोपर्जीवनेन तद्योगात् । एतेन–सगुण निर्गुण वाक्ययोरपच्छेदन्याय मषतारयन्तोऽद्वैतिनः प्रत्युक्ता इति । अतो न क्वचिदपि वेदवाक्यस्या प्रामाण्यमिति । ननु केषाञ्चिद्वेद वाक्यानां तदर्थविशदीकरणाय प्रवृत्ताप्ततम प्रर्णीतस्मृति विरोथदर्शनेना प्रामाण्यं प्राप्तमेवेत्यत्राप्याह–वेदवाक्यविशेषेति । सर्वं पाप्पानं तरति, तरति ब्रह्महत्यां योश्वमेधेन यजते । त्रिराचामेत् शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभेत । औदुम्बरीं स्मृष्टवोद्गायेत् । वौरहादा एव देवानां योग्निमुद्वासयते–इत्यादिवेदवाक्यविशेपेत्यर्थः । अःप्ततमाः–मनुपर शरादयः । स्मृत्येकदेशेति । न हि बौद्धाद्यागमानामिव कृत्स्नशः स्मृतिविरोधोभवति वेदवाक्यविशेषाणाम् । अपित्वेकदेशमात्रे प्रथमं प्रतिभायाय् । पश्चात्तु वक्ष्यमाणरीत्या परिहर्तव्यमितिभावः । विरोधेति । तथाचोक्ताश्वमेध श्रुतिविप्रतीपतया स्मृतिषु द्वादशवार्षिकव्रतविशेषस्य ब्रह्महत्या प्रायश्चित्तत्वविधानात् श्रुत्युक्त श्रौताचमनविलक्षणतया समन्त्रकजलप्राशन पूर्वकदक्षिणकपोलादिद्वादशाङ्गस्पर्शरूपाचमनान्तरस्य स्मृतिषु कथनात्, श्रुत्युक्तौदुम्बरीसाक्षात् स्पर्शविरोधिनः वाससातदीय सर्वाङ्गवेष्टनस्य–औदुरी सर्वाविष्टयितव्येति स्भृत्यापरिचोदनात् । वेदविनिन्दिताग्निविच्छेदपूर्वकं सन्यासाश्रमस्वीकारस्य स्मृतिषु प्रतिपादनाच्च श्रुतिस्मृत्योर्विरोधः प्राप्त इत्याशयः । एवमाशङ्कायां वर्तमानायां–विकल्पेन, तदसम्भवे स्मृतिबाधान्यपर्याभ्यां चतां परिहरिष्यत् तदुपोद्घाततगा ततः सर्वं पर्यालोचनीयांशमाह–आप्ततमब्रहुस्मृनीति । कस्याश्चित् स्मृतेः श्रुतिविरोधे प्राप्ते अन्या अपि बह्व्यः स्मृतयोमिरीक्षणीयाः । यदिता अप्येतत् स्मृत्युक्तमेव द्रढयेयुः, तदा अस्याः स्मृतेः सहसा श्रुत्याबाधे तत्पक्षपातिनीनामपि बह्वानां स्मृतीनां मुधाबाधनं भवेदिति श्रुतिः स्मृत्योर्विकल्पाद्याश्रयणमेवन्याय्यमिति । ननु बहूनां स्मत्तृणां हठात्कारेण क्वचिद्वेदार्थान्यथा करणेपि प्रवृत्तिसम्भवात्–तत्र स्मृतीनां भूयस्त्वमकिञ्चित्करम् ।

---

மஹர்ஷிகள் மறவாமல் ஓதிக்கொண்டிருந்து க்ருதயுகம் பிறந்தவாறே எங்கும் முன்போல் வெளியிடுவார்கள். ஆகையால் வேதத்திற்கு ஒருபடியாலும் ஆதி அந்தங்களில்லை. மாகதீ முதலிய அபப்ரம்ச பாஷையாலே பிறந்தபௌத்தாதி ஆகமங்களுக்கு வேதங்களுக்கும் போல நித்தியத்வம் சொல்ல வழியில்லை. பௌத்தாதிகளுக்கும் அது இஷ்டமன்று.

அப்போ ஆகமங்களிலே निवेशिப்பித்து அவர்களை मोहिப்பிக்கிறு ஆஜ்ஞையாலே அவ்வோ காலங்களிலே அவை प्रवृत्तங்களாகலாம். இவற்றை शुद्धोदनसुतोभूत्वा मोहयिष्यामिमानवाम । என்றும், त्वं हि रुद्र ! महाबाहो ! मोहशास्त्राणिकारय । दर्शयित्वाऽल्पमायासं फलं शीघ्रं प्रदर्शय ॥

---

न हि शतमप्यन्धाः पश्यन्तीति न्यायादित्यत्राह—मूलदर्शनेति । बहूनां प्रमाणिकानां तथा क्वचिद्वेदविरुद्धार्थं सहसा हठात्काराद्ययोगात् तेषां तथोक्तेः किं किञ्चिदस्तिमूलमिति विमृष्टव्यम् । तत्र यदि तेषामुक्तिः— ऊपबृह्मणनिरपेक्षमेव सुनिर्णयार्थकप्रत्यक्ष श्रुतिविरुद्धाभवति, तदा तत्र स्मर्तॄणां स्वातन्त्र्यमेव तथा कथनेमूलमिति निश्चीयते । न तु काचिदप्रत्यक्षा श्रुतिर्मूलमिनि । तदुक्तं असतिह्यनुमानमिति असति हि प्रत्यक्ष श्रुतिविरोधे स्मृत्यामूलभूत श्रुत्यनुमानमिति तदर्थः । तथाचोक्तरीत्या तत्र भूयस्त्वस्याकिञ्चित्कर-तया स्मृतेर्बाध एव । यदि च सास्मृतिः प्रत्यक्ष श्रुत्यविरुद्धाऽपरिदृश्यमानमूला च भवति, तदा—असति-ह्यनुमानमितिरीत्या मूलभूतां श्रुतिं कल्पयित्वा तदा श्रुतिस्मृतित्योर्विकल्पादिनानिर्वाह इति । तथाचाप-स्तम्बगृह्यसूत्रम्—अथ कर्माण्याचाराद्यानिगृह्यन्ते इति । तद्व्याख्यानञ्चेत्थं दृश्यते—यत् सर्वेषु कालेषु देशेषु च सर्वैस्त्रैविद्यवृद्धैः शिष्टैर्लौकिकप्रयोजनाभावेपि अविच्छिन्नमविगानेनाद्रियमाणम्, अत एव मूलान्तरासम्भवेन स्वमूलभूतवेदानुमाने लिङ्गभूतं कर्मसु प्रवर्तनम्, स आचारः । तस्मादाचारदनुमितैर्वे-दैर्यान्यौपासनहोमादीनिपाकयज्ञशब्दवाच्यानि पाणिग्रहणादीनि च यज्ञेष्वधिक्रियमाण देहसंस्कारार्थानि यानिकर्माणि गृह्यन्ते—ज्ञायन्ते, तानिव्याख्यास्याम इति । एवं पर्यालोचनयाफलितं निर्वाहप्रकारमाह—यथासम्भवमिति । स्पष्ट श्रुतिविरोधाभावेविकल्पः॥ न हि श्रुत्यनुक्तिमात्रं विरोधहेतुः । तथा च श्रुतिस्मृत्युदितयोरुभयोर्ब्रह्महत्याप्रायश्चित्तयोरधिकारिभेदेन विकल्पः समाश्रीयते । अत एव मनुरपि—ब्रह्महा द्वादशसमाः कुटीं कृत्वावनेवसेत् । इत्युपक्रम्य तद्व्रतं प्रपञ्च्य—यजेतवाऽश्वमेधेनेति विकल्पमेव कल्पयामास । एवं श्रौतस्मार्तयोराचमनयोरपि यथाक्रमं ब्रह्मयज्ञादौ श्रौतकर्मणि औपासनादौ स्मार्तकर्नणि च विनियोगेनेविकल्पः । औदुम्बरी सर्ववेष्टनस्मृतिस्तु प्रत्यक्षश्रुति विरोधाद्बाध्यत एव । आन्यपर्येण निर्वाहस्तु—वीरहावेत्यादौ क्रियते । तथा हि—श्रुतौ सन्न्यासाश्रमानिषेधात् प्रत्युत—त्रयोधर्मस्कन्धाः—येचेमेऽरण्ये श्रद्धां तप इत्युपासते—प्रव्राजिनोलोकमिच्छन्तः प्रव्रजन्ति—इत्यादिता तद्विधानाच्च वीरहावा—यावज्जीवमग्निहोत्रं जुहोति—प्रजातन्तुं माव्यवच्छेत्सीः इत्यादिकमविरक्ताधिकारिविषयकतयाऽन्यपरमिति : एवं प्रत्यक्षानुमानशब्दैः स्वाभ्युपगतैस्त्रिभिः प्रमाणैर्वेदस्य अविरोधेन निर्वाहं दर्शयित्वाथं पराभ्युपगतै-रूपमानादिभिरपि प्रमाणैरबाधमाह—उपमानेत्यादि । अयमसौगवयपदवाच्य इति संज्ञासंज्ञिसम्बन्ध-ज्ञानात्मकोपमितिकरणीभूतम्—गोसदृशोगवय इत्यतिदेशवाक्यार्थज्ञानमुपमानम्, अन्यथाऽनुपपद्यमानं

---

இப்படி நித்தியமாயும், நமக்கு எட்டா விஷயங்களைக் கூறுவதாயுமுள்ள வேதத்திற்கு இயற்கையாகவே இந்த பிரமாணத் தன்மைக்கு விலக்கேதுமில்லை: வேதமியற்றினவன் என்று ஒருவருமில்லாமையால் அவனுடைய மூளைக் கோளமறு ஏதுமிதற்கு மூலமன்று.

कुहकानीन्द्रजालानि विरुद्धाचरणानि च । दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर ! ।। என்றும் अहम्मोहं करिष्यामि यो जनं मोहयिष्यति என்றும் நின்மாட்டாய மலர் புரையும் திருவுருவம் மனம் வைக்க மாட்டாத பல சமயமதி தந்தாய் என்றும், ''கள்ள வேடத்தைக் கொண்டு போய் புறம்புக்காறும்

---

दिवाऽभुञ्जानस्य देवदत्तस्यपीतनत्वं दृष्ट्वा तदुपपादकं यद्रात्रिभोजनं कल्प्यते साऽर्थापत्तिः । प्रातश्चत्वरमात्रं दृष्टवतः सायं गजसहिततद्दर्शने सति—प्रातश्चत्वरे गजोनसीदिति यत् ज्ञानं जायते तत्करणमभावाख्यं प्रमाणम् । अनुपलब्धिरित्यप्यस्ति प्रसिद्धिः । शतरूप्यकसद्भावज्ञानात् तत्रपञ्चाशतां संभवात् प्रमाणान्निश्चयः : अज्ञातमूलकर्तृकः इहवटे यक्षस्तिष्ठतीति हस्मोचुः इति—प्रवादपरम्परैतिह्यम् : अत्र—एतदभ्युपगन्तृणामित्यनादरोक्त्या स्वमतेतदनङ्गीकारः सूच्यते । तदङ्गीकर्तारःवैशेषिका मीमांसकाः व्यवहारेभट्टनय इति तदनुसारिणोऽद्वैतिनश्चेति बहवः । तेषां प्रत्यक्षादित्रिकेन्तभवि इति त्वस्मन्मतम् । प्रत्यक्षमनुमानञ्च शास्त्रञ्चविविधागमम् । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सुनेति मनुवचनात् । प्रत्यक्षादिविषये वेदस्य तात्पर्याभावात्, वेदतात्पर्यविषये च प्रत्यक्षादेरिवोपमानार्थापत्त्यादीनामप्यप्रवृत्तेः नतैर्वेदबाध इत्याशयः । अथचार्वाकप्रभृतिभिः कृतस्य वेददूषणस्यात्यन्त फल्गुतां प्रतिबन्द्या प्रदर्शयति—बालिशेति । परोक्तार्थग्रहणाद्यक्षमा अथापि आत्मानं पण्डितम्मन्यामूर्खाः । तेषां कुतर्काः । कपिलोयदि सर्वज्ञः सुगतोनेतिकाप्रथा । यद्युभावपि सर्वज्ञौ मतभेदः कथं तयोरितिरीत्या प्रवर्त्यमानोविपरीतवादः । बालिचाश्चते कुतर्काश्चेति वा । तदातु—तर्कस्य कुत्सितत्वं विपरीतसाधनत्वम्, बालिशत्वम्—विपरीतसाधनेप्यसामर्थ्यमिति तदर्थोबोध्यः । वाङ्मात्रेति । युक्ति कामप्यप्रदर्श्य त्रयौवेदस्यकर्तारः भण्डधूर्तनिशाचरा इति रीत्याघोषणमात्रेत्यर्थः । भण्डः निर्लज्जः । आगमान्तरेष्वपि कर्तुमन्यैः शक्या इति एतावन्मात्र कथनात् न वयं तथा शक्यत्वेपि युष्मान् उपद्रवामः, यथायूयमस्मानुपद्रवथेति स्वसात्विकता प्रकटनं परस्य परमदुर्जनताकथनञ्च पर्यवस्यतः । तथा च पौरुषेयागमान्तरेभ्यो अपौरुषेयास्मदागमस्य प्राबल्यमनुक्तिसिद्धम् स्वयमेव व्यक्तीभविष्यतीति भावः ।

अथैवं जनताहिततमप्रमाणसार्वभौमवेदे विद्योतमानेपि कथं कन्थासदृक्षक्षुद्रमतान्तराणामुत्थितिः? कथं कथञ्चिदुत्थितौ वा "स्रोतोवहां पथि निकामजलामतीत्य जातः सखे प्रणयवान् मृगतृष्णिकायामितिवत् जनानां तत्रव्यामोहः? इत्यत्र प्रथममतान्तराणां प्रादुर्भावहस्य रहस्य मुद्घाटयति—इष्षडि इति । वेदनित्यत्वनिर्दोषत्व निर्बाधत्वपरपूर्वप्रकरणत्रयपरामर्शः । मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना—मानं प्रदीपमिव कारुणिकोददातीत्याद्यनुसृत्योच्यते परमकारुणिकेति । एतेन करुणापूर्व-

---

மூலமான ஒரு குற்றத்தையும் காணவிடினும், மற்ற பிரமாணங்களோடு முரணுகையால் வேதம் அப்பிரமாணமாகாதோவெனில் ஆகாது. எப்படி எனில்? பிரத்தியக்ஷத்தோடு முரண்படாது. வேதம் நமக்கெட்டாததையே கூறுகிறது. நாம் காணும் விஷயத்திலேயும் வேதம் முரண்படக்கூறிய சில இடங்கள் உண்டாகிலும் குற்றமில்லை. இரண்டாந்தரமான பொருளைக்கொண்டு எப்படி

கலந்த சுரரை உள்ளம் பேதஞ் செய்திட்டு உயிருண்ட உபாயங்களும்'' என்றும் ''வெள்ளியார், பிண்டியார், போதியார் என்றிவரோதுகின்ற கள்ள நூல்'' என்றும் மற்றும் பல இதிஹாஸ புராண ப்ரகரணங்களிலும் கண்டுகொள்வது.

---

कास्मन्मतस्य मुमोहयिषापूर्वकमतान्तराव्द्यावृत्तिः। योब्रह्माणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोतितस्मा इति श्रुतेश्चतुर्मुखपूर्वक प्रवचनोक्तिः। प्रवर्तयति सतीत्यन्तं शङ्काहेतुकथनम्। अथशङ्कामेवाह—लीकेति। तादृशवेदवैदिकसम्प्रदायसञ्चारशालिलोकेत्यर्थः। चार्वाकादयः अनर्थहेतुशास्त्राणि। मुक्तावपर्यवसानात् विपरीतप्रवर्तनाच्च। तथा च शास्त्रान्तराणां कथमुदय इतीमामाशङ्कां—सात्विकजनबाधकासुरप्रकृतीन् विमोहयितुं सर्वेश्वर एव स्वयमन्यैश्चासच्छास्त्रबृन्दं प्रवर्तयामासेति प्रतिबन्द्यपरिहरिष्यन्—मध्येतावता-भगवतोवैषम्याद्यपत्तिशङ्कावारणमवश्यकर्तव्यमितिमत्वा तदेवाह—सर्वेश्वरेति। सर्वेश्वरत्वेन सर्वनिर्वाह-कत्वात् साधूनामनुभाव्यतया सच्छास्त्रप्रवर्तनवत् तत्परिपन्थिनां निबर्हणाय बाह्यागमा अपितेनैव प्रवर्तनीया आसन्निति भावः। सर्वसमेनापि सर्वेश्वरेण विषमफल विशेषप्रदानेकारणम्—अनादिकर्मेत्यादि। तत्तत्कर्मानुरूपं विषमफलप्रदानादेवेश्वरस्य सर्वसमत्वंसिद्धम्। अन्यथा तत्प्रवृत्तेस्स्वस्वातन्त्र्यमात्रनिदानत्वे-बैषम्यनैर्घृण्याद्यापत्तेरिति भावः। सात्विकेति। द्वौभूतसर्गौ लोकेऽस्मिन् दैवं आसुर एव चेत्युक्ते-द्विविधेलोके—सात्विकः सतुविज्ञेयः सर्वमोक्षार्थचिन्तकः। इति दैवप्रकृतयोमोक्षार्थचिन्तका भवन्ति। आसुरप्रकृतयस्तुतामसाः—अधोगच्छन्तितामसा इत्युत्तरोत्तराधोगतिसाधनकर्मानुष्ठानतत्परा वर्तन्ते। एषांञ्चपरस्परं तेजस्तिमिरयोरिव शाश्वतिको विरोधोपि विश्वप्रसिद्धः। ततश्च—क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु—इति प्रतिकूलविषये स्वकृतप्रतिज्ञापवर्जनाय भगवता तेषाम्मोहनीयत्वे प्राप्ते—पापं प्रज्ञांनाशयति—बुद्धिनाशात् प्रणश्यतीतिच विपरीतज्ञान साधनागमान्तराणि तेन प्रणीयन्त इत्याशयः। अथ तेषां जनमनोमोहनद्वारमाह—उपकरणेति। प्रत्ययार्थञ्चमोक्षस्य सिद्धयः संप्रकीर्तिताः। इति प्रधानपुरुषार्थभूतमोक्षप्रतिपादकवेदभागे श्रद्धासंवर्धनायाऽप्रध नतया प्रवृत्तेत्यर्थः। वेदवाक्यविशेषाः= आथर्वणिकाः शान्तिकपौष्टिकाभिचारिकादिमन्त्रभेदाः। तथाचासच्छास्त्राणि अनार्थार्थकर्मबोधकानि-विधाय तत्रमन्दमतीनां झटिति प्रवृत्तिं प्ररोचयितुं वेदोक्तान् शीघ्रं दृष्टफलप्रदान् क्षुद्रमन्त्रानपिमध्ये मध्येविनिवेश्य एवमेव सर्वं सर्वथा फलिष्यतीत्यतिविश्वासाधानेनतान् विमोहयतीत्यर्थः। विमोहन विमोचनं इत्यादिकं सर्वं साध्वसाधु वा वेदमन्त्रमात्राधीनमिति—अहो! वेदस्यमहिमेतिभावः। बळिशं= मत्स्यबन्धनम्। आमिषं=ग्राह्यस्यमत्स्यस्य मनोग्रहणाय तत्राग्रेनिधीयमानोमांसखण्डः। तथा च—भक्ष्योत्तमप्रतिच्छन्नंमत्स्यो बळिशमायसम्। अन्नाभिलाषी ग्रसते नानुबन्धमवेक्षते इति न्यायेन प्रतिकूलानां

---

யாவது பெரியோர் பேச்சில் செய்வதுபோல் பொருந்தச் செய்யலாம். உடலே ஆத்மா என்று காணும் ப்ரத்தியக்ஷத்தைவிட உடல் வேறு ஆத்மா வேறு என்று வேதம் காட்டும் காணுத அறிவே வலம் பெறும். ஏனெனில் நம் காட்சியில் ஏதாகிலும் குற்றமிருந்தால் அது வலமுள்ளதன்று.

"வைதிக மதம் நிலைத்திருக்கக் காரணம்."

இப்படியானால் களையை வளர்க்கப் பயிர் அழியுமாப்போலவும் श्येन मध्यकपोतन्यायத்தாலும் वैदिक दर्शनம் முழுக்க அழிந்துபோகாதோ என்னில் ?—" काणाद शाक्यपाषण्डै स्त्रयी धर्मोविलोपितः । त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ।।—धर्मस्य परिरक्षिता ।—त्वमव्ययः शाश्वतधर्मगोप्ता ।

---

भाव्यनर्थजातमनवेक्ष्य प्रवर्तनाय तथेश्वरेणक्रियत इत्यर्थः । कालः=कल्यादिः । अस्मिन्नर्थेप्रमाण-सम्प्रदायावाह–इव्वर्थेति । शुद्धोदनसुतः=बुद्धः । इदञ्चभगवत एववचनं महाभारताश्वमेधिकपर्वस्थम् । एवं स्वयम्मोहनमुक्त्वाऽन्यद्वराप्याह–त्वंहिरुदेति । मोहशास्त्राणि–पाशुपताद्यागमान् । कुहकानि–वञ्चकानि इन्द्रजालानि–अघटितघटनयाऽऽश्चर्यावहाणि । अहंमोहमिति । वराहपुराणे तु–अहं मोहं करिष्यामि (सृजाम्याशु) .... । त्वं हि रुद्र .... इत्यानुपूर्व्या श्लोका दृश्यन्ते । अत्र कृष्णताताचार्याआहुः–अत्र मोहोनाम मायामोहाख्यः कश्चनभगवदवतारः । इममेव च बौद्धावतारमाचक्षते सम्प्रदायविदः । तथा च विष्णुपुराणम्—इत्युक्तो भगवान् तेम्यः मायामोहं शरीरतः । समुत्पाद्य ददौ विष्णुः प्राहचेदं सुरोत्तमान् । मयामोहोयमखिलान् दैत्यांस्तान् मोहयिष्यति । ततोबध्याभविष्यन्ति वेदमार्गविदूषकाः" इतीति । तथासति–भगवतः शरीराद्बुद्धावतारस्येहावगमतः–पूर्वं–शुद्धोदनसुतोभूत्वेत्यदिकमुक्तं कल्पभेदेन निर्वाह्यं भवति । माद्दु--कुलधनभूतम् । इतिहासेति । कथा च पाद्मे पार्वतीं प्रतिरुद्रवचनम्–"प्रथमं हिम्यैवोक्तं शैवपाशुपतादिकम् । ... बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छस्त्रं प्रच्छन्नं बौद्ध-मुच्छते । कर्मस्वरूपत्याज्यत्वमत्रच प्रतिपाद्यते । ब्रह्मणोस्य परं रूपं निर्गुणं दर्शितम्ययेत्यादिभाव्यम् ।

ननु तर्हि वैदिकः सिद्धान्तः सर्वथाविलुप्येत । रक्षक एव चेदीश्वरोभक्षकोभवतीत्याशङ्क्याह–इप्पडियानाल् इति । विरुद्धसंप्रदायप्रवर्तन इत्यर्थः । कळै–कृषिक्षेत्रेषु उत्पद्य सस्यवदेवभासित्वा सद्योसमुद्धरणे कलमादिसस्यनाशकः यवसाख्यस्तृणविशेषः । श्येनेति । "श्येनाः कपोतान् खादन्ति स्थितिरेषा सनातनीति" प्रसिद्धेः । पाषण्डोपहतकलिकाले तत्प्रचुरदेशे तदागमानामेव भूयान् प्रचारोभवेदिति वेदमार्गोऽर्गळित एवसर्वयास्यादितिभावः । नैवंशङ्कनीयमित्याह-काणादेति । वैशेषिकेत्यर्थः । शाकयावौद्धाः । येतुसामान्यभावेन मन्यन्ते पुरुषोत्तमम् । तेवै पाप्पण्डिनोज्ञेयास्सर्वधर्म वहिष्कृता इत्युक्तलक्षणाः पाषण्डिनः । विष्णुना-तदवतारभूतेन । त्रिदण्डधारिणा-सन्न्यासरूपिणा दत्तात्रेयेन । एतेनातिपुरातनकाले त्रिदण्डादिकीर्तनात् एकदण्डसन्न्यासः नवीनैः कल्पित इति भाति ।

---

காணாததாகிலும் குற்றமில்லையேல் அந்த பரோக்ஷ அறிவே சிறந்ததாகும், தீபத்தில் எரியும் கொழுந்து முன் பின் காலங்களில் ஒன்றேயர்கக் கண்ணால் கண்டாலும் திரியும் எண்ணெய்யும் முறையே கருகியும், குறைந்தும் போவதலால் தீபக்கொழுந்துகள் முன்னும் பின்னும் வேறானவை களே என்ற காணாத ஊஹ உணர்வுதான் முன் சொன்ன பிரத்தியக்ஷத்தைவிட பிரபலமானது.

नारायणः सात्वत धर्मगोप्ता ।—धर्मसंस्थापनार्थाय सम्भवामि युगे युगे । धर्मत्राणाय केवलम् । इत्यादि-களிற் சொல்லுகிறபடியே सर्वेश्वरன்தானே वैदिक समयத்துக்கு வேண்டும் रक्षै பண்ணிக்கொண்டு போருகையாலே सत्वोत्तरர் பக்கலிலே இது प्रवृत्तமாய் போராநிற்கும்.

---

किञ्च-तस्याकल्पितत्वेपि त्रिदण्डसंन्यासश्रैष्यं विलोकयते । तथाचपरमतस्थः मल्लिनाथ एवमाह- "सकिलाश्रममन्त्यमाश्रित" इति रघुवंश श्लोके—"मुखजानामयं धर्मः यद्विष्णोर्लिङ्गधारणमिति यद्यपि क्षत्रियस्य संन्यासनिषेधोऽस्ति, तथापि-बाहु पादोरुजातानां त्रिदण्डं नाविधीयते ।। इति निषेधस्यत्रिदण्ड विषयत्वदर्शनात् रघुणा क्षत्रियेण एक दण्ड संन्यासस्स्वीकृत इति । परिरक्षिता-प्रतिपक्षनिरसनपूर्वकं रक्षकः । शाश्वतधर्म—वैदिकधर्मः । सात्वतधर्मः-पाञ्चरात्रोक्त परमैकान्ति धर्मः । धर्मस्य संस्थापनं-आराध्यमात्मानं प्रकाश्य सम्यक् स्थापनम् । सम्भवामि-देवमनुष्यादिरूपेणावतरामि । युगे युगे-त्रेतादियुगविशेषनियमो नास्ति मदवतारस्येति भावः । सर्वेश्वरन् ताने इति । स एवेत्यर्थः । तथाच य एव विरुद्ध धर्मस्यप्रवर्तकः, स एव सनातन धर्मस्यापि, अधिकारिभेदादिति भावः । अथवा-ताने-स्वयम् । एवञ्च यथापाशुपतादीनां रुद्रादिद्वारा प्रवर्तकः, नतथा वैदिकस्य अपितु स्वयमेव । नहि महिषी स्वेदार्थं भृत्योनियुज्यत इति न्यायादितितात्पर्यम् । रक्षेति । परमतानां भगवता प्रवतन मात्रं क्रियते नतु वैदिकस्येवरक्षणमपीनिभावः । तर्हि भगवता रक्षितस्स|समयः कुतस्सर्वत्रनोपलभ्यत इत्यत आह सत्वोत्तरोति । विष्णो स्सात्विक जनप्रियत्वादिति भावः । एवं मतान्तराणां प्रादुर्भाव प्रकारं, अथापि वैदिकसम्प्रदायस्य क्वचित्परिरक्षितत्वञ्च प्रतिपाद्याथ मतान्तराणां वहुजन प्ररिग्रहोत्पत्ति प्रकारं प्रश्न पूर्वकं विशदयाति—इप्पाडि इति । असंख्यातजनपरिग्रहः-वेदपरिगृहीतृ जन संख्याधिक संख्याकजन परिग्रहः । एवमेवाहि संप्रति लोके विलोकयामः । एकस्यतु वौदिकस्य 'स्थाने' चतुरधिकाश्चार्वाक-प्रायजना गण्यन्ते गणतन्त्रयुगे राष्ट्रकृत्याय । अनादेः कालादनुवर्तमाने वेदसम्प्रदायेहि न तथाभाव्यमिति भावः । अत्रासंख्यातजनपरिग्रहशब्देन तत्सत्वेपि वेदस्येव महाजन परिग्रहो मतान्तराणां नास्तीति द्योत्यते । तयोर्भेदात् । भेदश्चपूर्वमुपवर्णितोत्रैव । एवमेव—"प्रेक्षावन्तो महान्तः परिजगृहुरिम" मितिश्लोक सर्वार्थसिद्धौचद्रष्टव्यः—"बहुजनपरिगृहीतत्वं न महाजनपरिग्रहः । . . . द्विविधोहि परिग्रहः । आस्तिक्यनिबन्धनः कश्चित् । अल्पाल्प प्रयोजनाभिलाषादपरः । तत्र वेदपरिग्रहः पूर्वकोटौ निविशते । बाह्यागमपरिग्रहस्सोपाधिक इति । अत्र बहुमुखं समाधते—वैदिकेति । "आविद्यः प्राकृतः प्रोक्तः 'वैद्यो वैष्णव उच्यते । आविद्येन नकेनापिवैद्यः' किञ्चित्समाचरेदिति वैदिकैः परित्यक्ता आपि भ्रष्टा अपि संख्याभूयस्त्वाय अन्यैस्स्वमतेऽनुप्रवेश्यन्ते । परैः पूजिता अपि' नात्स्मन्मतेऽनुमन्यते । अस्मत्-सम्प्रदास्य कुलक्रमागतत्वात् । तस्मादेवकारणात् मातान्तरे जन संख्याबाहुळ्यं अस्मन्मते तदभावश्चेति

---

குறிப்பிட்ட யாகம் செய்தால் மழை பொழியும். என்றும் வேதவாக்கியங்கூட சில இடங்களிலே பொய்த்துப்போகலாம். ஆனாலும் அது வேதத்தின் குற்றமன்று. பின்னை—செய்பவன் செய்யும் முறை உபகரணங்கள் இவைகளின் குற்றமேயாகும். இவைகளின் குறையின்றி யாகம் செய்தும்

"பிற மதங்களில் ஆள் திரளக் காரணம்"

இப்படி नित्य निर्दोष वेदம் நடவாநிற்க அவ்வோ मतान्तरங்களுக்கு असंख्यात जनपरिग्रहம் लोकத்தில் வந்தபடி என் என்னில் वैदिकपरित्यक्तராய்க்கொண்டு போக்கற்றவர்களை ஆள்திரளு கைககாகக் கூட்டிக்கொள்ளுகையாலும், औषधिमणिमन्त्र यन्त्रभावन भाषित दृष्टिमुष्टिचेष्टादि-

---

भावः। भ्रष्टानां प्रवेशस्थानाकाङ्क्षा, मतान्तरस्थानां स्वजन संख्यावृद्ध्यर्थं नूतनव्यक्त्याकाङ्क्षेति सोयं नष्टाश्वदग्धरथन्याय इति बोध्यम्। इदं वक्ष्यमाणञ्च सर्वं कुसुमाञ्जलयुदाहरणेन प्रसङ्ग वशादनुपदमेवन्यरूपि। मतान्तरेषु नानाविधदन्धनादिदर्शनादपि क्षुद्रकौतुकिनाम्प्रवृत्तिरित्याह- ओषधीति। मृतसञ्जीविन्यदीत्यर्थः। मणिः-अयरकान्तादिः। मन्त्रः-सौदर्शननारसिंहमादिवत् उच्छिष्टगणपतिचिन्तामण्यादिमन्त्रः। यन्त्रं-त्रिकोणषट्कोणाद्याकारं तत्र तत्र विलिखितबीजाक्षरं पूजितं ताम्र राजतादिपट्टम्। भावनं-निरन्तरचिन्तनम्। कृशोदरीनीडनिहित कृम्यादीनामिवात्मनोपिनिरन्तरगरुडाद्यभेदभावनया विषादिनिर्हरणाय तद्रूपतापत्तिः। भाषितं-श्रोतृहृदयग्राहि भाषणचातुर्यम्। "अनया चित्रया वाचा त्रिस्थानव्यंजनस्थया। कस्य नाराध्यते चित्तमुद्यतासेररेर"पीति॥ हनूमादादीनामिवभवति। अत एव चार्वाकादि संज्ञा प्रसिद्धिः—"चारुर्वाकोयस्येति। दृष्टिः-मण्डूकवसाक्त दृष्टया निध्यादि गुप्तपदार्थदर्शनम्। मुष्टिः—मुखस्यपुरतः रहस्यमन्त्रोच्चारणपूर्वकं हस्तमुष्टि प्रदर्शनम्। चेष्टा—अन्यविधाः परव्यामोहजनकव्यापाराः। प्रतिमाजल्पनं—मन्त्रशक्त्या 'प्रतिमान्तः प्रविश्य' तन्मुखेन स्वमतोपन्यासः। पाषाणस्फोटनं—गुरुतरशिलादेः मन्त्रोषधादिना विभिद्य प्रदर्शनम्। आदित्यस्तम्भनं—नळायन्यादीनामिव दूरमुदितस्याप्यादित्यस्य तत्रैवाकाशदेशेऽवस्थापनम्। मायेन्द्रजाले पूर्वोक्ते। वश्यं—स्त्रीबालादेस्स्ववशे करणम्। आकर्षणं—दक्षिणदेशस्थकूपविशेषे 'गङ्गाकर्षणवत्' एकत्रस्थितस्यापरत्राकर्षणम्। मोहनं—मूर्च्छोत्पादनम्। क्षुद्रासिद्धीति। अणिमाद्यष्टसिद्धिवत् परम्परयाप्यात्मदर्शनेऽपर्यवसानात् केवलपरप्रतारणमात्रत्वात् क्षुद्रत्वं बोध्यम्। मन्दबुद्धीति। बुद्धिमान्द्यात् अर्थलोभेनच प्रचोदिता अत्रमतान्तरे पतन्ति पामराइत्यर्थः। अन्तः करणेति। स्वरसतोनागतानपि तद्बुद्धिभेदनेन बलादाकर्षन्तीतिभावः। कारणान्तरं सप्तघटिकाभोजनादि। पूर्वाह्णभोजनेत्यर्थः। वैदिकानान्तु प्रायः अष्टकाः 'पितृदैवत्यं' अमा इत्यादिना 'व्रतेन' मध्याह्नात्पर मेवभोजनलाभोभवति पुराहि वराकाः केचन 'राजानः' बौद्धपक्षपक्षपातिनः मठालयादीन् निर्माय तत्रबहून् बौद्धभिक्षूनानीय पूर्वाह्ण एव भोजयन्तिस्मेति श्रूयते। तदुक्तं—"कृत्तिः कमण्डलुर्मौण्डयं स्नानं पूर्वाह्णभोजनम्। संघोरक्ताम्बरत्वञ्च शिश्रिये बौद्धभिक्षुभिरिति। भगवद्गुणदर्पणेच वाजसनि नामव्याख्याने"—क्षपणकव्रतं

---

சில இடங்களில் பயன் உடனே கிடைக்கவில்லையே என்றால் அதுவும் செய்பவனுக்குள்ள பிரபல பாபபலம் என்றறியவேணும்.

சிலர் வேதத்திற்கு விருத்தமாய் அநுமாநம் செய்வர். அப்போதும்—அவர்கள் சொல்லும் அநுமாநங்களில்—ஸாதிக்கும் இடம், ஸாதிக்கப்படும் பொருள், தவிர்க்கப்படும் பொருள் இவைகளை

**विशेषसामर्थ्य**ங்களைக்கொண்டு **प्रतिमाजल्पन**ம் **पाषाणस्फोटन**ம் **आदित्यस्तम्भन**ம் மற்றும் **मायेन्द्रजाल-वश्याकर्षण मोहनादि**களான **क्षुद्रसिद्धि**களையிட்டு **मन्दबुद्धि**களாய் **क्षुद्रकौतुकि**களாய் இருப்பவர்க்கு அவற்றிலே **आशै**யை விளைவிப்பிக்கையாலும், **अन्तःकरण संक्षोभ**த்தைப்பண்ணி **अनुप्रवेशि**ப்பித்துக்

---

ह्यीदम्–यत्–प्रातः प्रातर्दध्योदनकबळान् गृह्णन्त इतीति । जीविका–जीवनोपायः । आदिना परदारपरिग्रहादिकमपि विवक्षितम् । तदुक्तं प्रबोधचन्द्रोदये–संस्क्रियन्ते क्षणिकास्सर्वेसंस्काराः । नास्त्यात्मास्थाथो । तस्माद्भिक्षुदारानाक्रमत्सु नेर्षितव्यम् । चित्तमलंहितत् यदीर्ष्यानामेति । वशीकारकारणान्तरं कर्मलाघवमाह–वारक्रमेति । तिथिनक्षत्रयोस्सूर्यचन्द्रगत्यादिकं यथा नियामकं नतथा वारक्रमेकिञ्चिन्नियामकं पश्यामः । तथा सति–"उदयादुदयं वारमि" इति वारस्य कृत्स्नदिनाभिध्यापित्वानुपपत्तिः । एवं भानुवारानन्तरं सोमवार एवेत्यत्रापि क्रमे न नियायकं दृश्यते तथैव नकस्यचित् संकेतोंपिमूलम् । सार्वत्रिकत्वानुपपते । तथा चैषां क्रमेयथोऽबाधितानादि परिग्रहपरम्परैवमूलम्, तथैव व्राह्मणत्वादिजाति तद्धर्माणामपि यथा सन्तति अनादिप्रसिद्धिरेवासंकेतिता मूलमिति अन्ये सर्वेजातितद्धर्मानङ्गीचक्रुः । बौद्धादयस्तु प्रत्यक्षदृष्ट स्त्रीपुंजाजिद्वयव्यतिरेकेण न जात्यन्तराणि स्वीचक्रुः । तथा च वर्णाश्रमजातिकुलाद्यभावेन–"न स्वर्गोनापवर्गोवा न च वर्णाश्रमादयः इति रीत्यामहत्तत्रकर्मलाघवमिति" भक्ष्याभक्ष्य पेयापेयस्वपरदाराद्यद्वैतरागिणान्तत्र प्रवृत्तिरितिभावः । तत्र प्रविष्टानां पुनरशक्यनिष्क्रमणत्वमाह–इन्द्रजालेति । अतिप्रज्ञावन्तस्तु यदिवीतरागास्तदा–वादे एषामनधिकारित्वं बुद्वादूरमपसरेयुः । यदि विजिगीषवः तदाजल्पवितण्डाभ्यामप्येनान् वशेकुर्युः । मन्दप्रज्ञा अपि कर्मश्रद्धया खकुलोचित माचारं नमुञ्चेयुः । येतुपुनरनतिप्रज्ञाः पण्डितम्मन्याः शुष्कतार्किकास्त एव तु कुतु कादेषां वादेषु प्रसक्तास्तत्रैवसक्ताश्च भवन्तीतिभावः । ततश्चोक्तमर्थमुपसंहरति–इप्प्रकारेति । अस्तु आदौ यथा तथा वा ? इदानी मपि तथैवस्थितौ किङ्कारणमित्यात्राह–आनपिन्पु इति । आदौ मतान्तराणां वहुजनपरिग्रहेजाते इत्यर्थः । तथाचादौ कैश्चित् तेषां परिग्रहेजाते ततः पश्चात्तना अपि मूढपरम्परया साध्वसाधु विवेचनं विनातेष्वेवानुप्रतिव्टा अभूवन्निति भावः । गतानुगतिक इति । गतस्य पूर्वं प्रस्थितस्य विनाविवेचनं अनुगतिर्येन क्रियते स गतानुगतिकः । सेतौ सैकर्तालिङ्गेन नष्टं मे ताम्रभाजनम् । इति, पश्यलोकस्य मुर्खत्वं नाशितं ताम्रभाजनमिचोत्तरार्धेपाठभेदो भाष्करभाष्य दृष्टः । सेतौस्नातुकामः कश्चित् स्वकीयं ताम्रभाजनं तीरे प्रकष्टं निधानेअन्यैरपहृतं स्यादितिभीत्या–सेतुवद्धीर्धाकार सैकेतचिह्नं कृत्वा तदन्तस्तत् भाजनं प्रच्छाद्य जगाम । एतदृष्टवन्तः केचनाविवेकिनः एव एवरणं सेतुस्नानाङ्गमिति धिया स्वयमपि तत्र तत्र स्नानात् पूर्वं सैकतचिह्नं कृत्वा जग्मुः । प्रथमं गतस्तु स्ननादनगन्तरमागत्य एषु लिङ्गेषु कतमं स्वकीयमिति ज्ञातुमक्षमः–नष्टं मे ताम्रभाजनमिति चुक्रोशेति कथा स्त्रियः कामितकामिन्योमूर्खाःपूजितपूजकां इति , यथा कयाचित् कामितमेव पुरुषं स्त्रियः कामयन्ते, मूर्खा अपि तथा

---

யறியவேண்டி வேதத்தையே அணுக நேரும். அது நன்றி கெட்டச் செயலாகும். (உப ஜீவ்ய விருத்தமாகும்.) வேறு மதங்களின் ஆகம நூற்களாலேயும் வேதத்திற்கு விரோதம் செய்யவியலாது. அவை துர்பலங்களாகையாலே, வேதங்களிடையே சில வாக்கியங்கள் முரணித் தோன்றலாம்.

கொள்ளுகையாலும், सप्तघटिका भोजनादि जीविका सौकर्यத்தாலும், वारक्रमादिகள்போலே अबाधितानादिपरम्परा प्रसिद्धियாலே असङ्केत सम्भावनங்களான जाति विशेषங்களை அழித்துக்கொள்ளுகிற नियमलाघवத்தாலே दृष्टादृष्ट सौकर्यத்தைக்காட்டி वशीकरिக்கையாலும், इन्द्रजाल कल्पங்களாய் ஏழைகளுக்கு दोषம் தெரியாத साधन दूषणाभासங்களையிட்டு अनतिप्रज्ञரான तार्किकரை आकर्षिத்துக்

---

अन्यैः पूजितमेव पूजयन्ति । न तु स्वयं विचिन्त्य किञ्चिदपूर्वं करिष्यन्तीति तदर्थः । एवम्यतान्तरपरिग्रहस्यौपाधिकत्वं प्रदर्श्य वेदमार्गाश्रयणे तदभावमाह वेदेति । अत्र बहुविधनियमक्लेशोत्तरत्वात् पित्रादिक्रमेणैव प्रवृत्तेः परैः पूज्यमानानामप्यत्रेदम्प्रथमतया प्रवेशानङ्गीकाराच्चेत्येतत्परिग्रहे न कोपि पूर्वोक्त उपाधिरितिभावः । नन्वथापि यदिकस्यचित् वैदिकस्य परमतेषु कदाचित् कटाक्षोभवति तदाततः किं भविष्यतीत्यत्र—सर्वथा तदसंभवमेवाह—आकैयालिति तथा च यद्यादित्यः कदाचिदन्धकारवृक्षिकुहरं प्रविशेत् । तर्हि किं भविष्यतीति विचारतुल्योऽसावपि विचार इति भावः ।

ननु तत्तत्समयनिष्ठानां तत्तत्प्रतिपालनं महर्षिभिरेवादिष्टमिति कथमद्यभवद्भिर्वेदमात्रावलम्बने नेतरेषामाक्षेपः क्रियत इत्याशङ्क्य समाधत्ते—इप्पडिइति । उक्तप्रकारेणेत्यर्थः । तथाच स्मृतिचन्द्रिकायां नारदवचनं—पाषण्डनैगमश्रेणिपूगव्रातगणादिषु । संरक्षेत्समयंराजा दुर्गेजनपथेतथेति । मनुरपि दण्डमाह-निगृह्य दापयेच्चैनं समयव्यभिचारिणम् । चतुस्सुवर्णान् षण्णिष्कान् शतमानञ्चराजतमिति ॥ एतत्समाधत्ते—महर्षीति । उक्तवचनेषु सर्वैःपरिपालनीयत्वेनोक्तोंशः न पाषण्डादिषुविद्यमानः पाषण्डादि समयः । अपितु तेष्वपिविद्यमानस्सर्वसम्मतोऽन्योधर्म पिशेषएव । कस्सः इत्यत्राह-प्रभूतेति । सामान्येत्यर्थः । सत्यवचनादि सामान्यधर्मोहि विशेषधर्मापेक्षयाऽधिकः । तथाचायमभिप्रायः—सर्वेष्वपिसमयिषु वौदिका धर्मविशेषास्सहस्रशस्सन्ति—यथा—सत्यमस्तेयमहिंसेत्यादि । घटिकाव्यवस्था-वारक्रमादिवत् । नचते सर्वेपिधर्मा अन्यैः कृताः । अपितुवैदिकैर्महर्षिभिरेव । नचेतरसमयिनो नताननुसरन्ति । न च तेषामन्या घण्डादिव्यवस्था । तथाचावैदिकैरपीयमेव प्रक्रियाऽऽदर्तव्येति कदाचित् केनचित्पाषण्डयादिनैतद्व्यतिक्रमेकृते राजा तदवगत्य तं दण्डयेदितिहि स्मृतितात्पर्यम् । नतु बौद्धादिभि बौद्धादि धर्मा अनुपालनीयाः अन्यथा राजा दण्डयेदिति । ननु तर्हि बौद्धादिभिस्स्वधर्मातिक्रमे बौदिको राजातद्देशाधिपतिः किं कुर्यात् इतिचेत्-सर्वथोदासीत । तत्तत्सम्प्रदाय गुरूणां ह्ययं भरइति । प्रसिद्धमिति । तथा चोक्तप्रकरणेस्मृतिचन्द्रिका—"पाषण्डाः वेदोक्तलिङ्गधारिव्यतिरिक्तास्सर्वेलिङ्गिनः । तेषु मठादिहिताचरणाद्या वहवस्सन्तिधर्माः । रक्षणशास्त्रं तन्मात्रविषयमिति । एवमुक्तनिर्णयानङ्गीकारेऽनर्थमाह-इप्पडीति । पाषण्डिनः—येतु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् तेवै पाषण्डिनो जेयास्सर्वकर्मबाहिष्कृताः ॥ इत्युक्तलक्षणाः । विकर्मस्थाः—अपार्थं श्रुतिवाक्यानां दर्शयन् लोकर्गाहितम् ।

---

அப்போது—உலக வழக்கு, சாஸ்திர வல்லுநர்களின் முடிவு, ஊஹித்தல் முதலியவற்றாலே—இப்படியும் அல்லது அப்படியுமாகலாம் என்றும், இப்படிச் சிலவிடங்கள்—அப்படிச் சில இடங்கள் என்றும், விளக்கிக் கூறி விரோதம் வராமற் காக்கலாம். ஒரு யாகத்தில் ஓரிடத்தில் ருத்துவிக்குகள் ஒருவர் கொருவர் உடுத்த வேஷ்டியின் பின் கச்சத்தை பிடித்துவிடாமற் செல்ல வேண்டும், விட்டால்

கொள்ளுகையாலும் இப்**प्रकार**ங்களாலே **बहुजन परिग्रह**முண்டாம். ஆனபின்பு இதுதானே வழியர்க **गतानुगन्तिकोलोक: न लोंकस्तत्त्वचिन्तक: ।** என்றும்—"**मूर्खा: पूजित पूजका:**" என்றுஞ் சொல்லுகிற படியே **परिग्रह परम्परै** நடவா நிற்கும். **वेद**ங்களுடைய **परिग्रह**த்தில் இந்த **उपाधि**கள் ஒன்றுஞ் சொல்லவொண்ணுது என்னுமிடம் **सर्व**க்கும் அறியலாம். ஆகையால் **नेदादित्य सन्निधि**யில் **विपरीत समय**ங்கள் **अन्धकार कल्प**ங்களாம்.

सर्वकर्मपरिभ्रष्टो विकर्मस्थस्स उच्यते ।। इत्युक्ताः । बैडालव्रत्तिकाः–धर्मध्वजी सदालुब्धः छाद्मिको लोकडाम्भिकः । बैडालव्रतिको ज्ञेयोर्हिंसकस्सर्वनिन्दकः ।। इति वर्णीताः । शठाः–गूढविप्रियकृच्छठः– इति–प्रियंवक्तिपुरोन्यत्र विप्रियं कुरुते भृशम् । त्यक्तापराधचेपृश्च शठोयं कथितोबुधैः इतिच निरूपिताः । हैतुकाः—"देवगृहयेषुचान्येषु हेतुर्देवि निरर्थकः । बाधिरान्धवदेवात्र वर्तितव्यं हितैषिणे"त्युक्तिवैपरीत्येन– "सन्देहकृद्धेतुभिर्यः सत्कर्मसु सहैतुकः ।" इत्युक्तरीतिकाः । बकवृत्तयः–"अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः । शठोमिथ्याविनीतश्चबकवृत्तिरुदाहृतः इतिवर्णिताः । संभाषणादपीति ।" पुंसां जटाभरणमौञ्जिभृतांवृथैव मोघाशिनामखिलकर्मबहिष्कृतानाम् । तोयप्रदानपितृपिण्डविवर्जितानां इति पूर्वभागो विष्णुपुराणे । वेरुप्पोडु इत्याहि । |अन्तर्यामिणंद्विषन्तो जैनाः–मुण्डितशिरसश्शैवाः–विधिभ्रष्टाः शक्याः (भाग्यहीनाइतिवा) इत्यादयस्त्वां यदि श्रवणकटु निन्दन्ति, तदा सात्विकास्सहसा म्रियेरन् तदसहमाना इत्यवशिष्टगाधाभागार्थैतात्पर्यमवधेयम् । तथाचराजभिः पाषण्डादि समयस्यापि रक्षणीयत्वे तत्सम्भाषणादिकमपि कर्तव्य मेवस्या दित्युक्तवचननिचयविरोध इतिभावः ।

नन्वथापि श्रीपराङ्कुशसूरि सूक्तिविरोधस्तदवस्थ एव । तत्र सर्वसमयसमादर्तव्यताया एव कीर्तनादित्यत्राह—आनालुमिति । उक्तवचनानामुक्तरीत्यानिर्वाहेपीत्यर्थः । एतेनात्रगाधासु-सर्वमतानामपि भगवतैव प्रवर्तितत्वस्य तत्तदुपास्यदेवतारूपेण भगवत एवस्थितत्वस्य, तेषु कस्मिंश्चिदप्यर्थे मिथ्यात्वाभावस्य च कथनात् न कस्यापि मतस्यत्याज्यतेति पूर्वपक्षिणो निगर्वः । खण्डयति– अब्दिडत्तिलुमिति । तासुगाधास्वित्यर्थः । इवै–लैङ्गशाक्यादयः पक्षाः । परस्परविरुद्धेतिः । अयमंशः तत्तन्मत निरूपणावसरे प्रकाशयिष्यते । ननु परस्परविरोधः आपस्तम्बाश्वलायनादिगृह्यसूत्रेष्व-पिदृश्यत इति नैतावतैवत्याज्यतेत्यत्राह--वेदविरुद्धेति । तथाच कथमेतादृशानि सर्वाणिमतानि युगपदेव प्रमाणाणि घोषयेत्सूक्तिः पूर्वोक्तेति भावः । अत्र सर्वमतानामपि भगवतैव प्रवर्तनं– यथाकर्मफलदायित्वात् तस्य प्राणिनां दुष्कर्मानुसारेण भवति । तेनैव च स्वाश्रितानाम्मतान्तरैर्त्या-मोहाद्यभावाय वेदसम्प्रदायोपि प्रकाश्यते । मनान्तररीत्यादेवतान्तरोपासनेषु कृतेष्वपि न तत्रकिञ्चि-न्मिथ्याभविष्यति । भगवतैव तत्र तत्रान्तर्यामितयास्थितत्वा फलवितरणात् । "लभते च ततः कामान् मयैव विहितान् हितानिति । अथोपात्तवचनानामेतत्तात्पर्यकत्वे प्रमाणान्तराण्याह-इत्तै इति ।

பிராயச் சித்தம் உண்டு என்றபோது—அவ்வோ இடங்களில் அவரவர் விட்டபோது அந்தந்த பிராயச்சித்தம் தனித்தனி நடைபெறுமாகையால் ஒரு வாக்கியமும் வீணுகாது. சில வேத வாக்கியங் களுக்கு ஆப்தர்கள் பண்ணிய சில சம்ருதி வாக்கியங்களோடு முரண்பாடு வருமேயாகில்— ஆப்போதும்—ஆப்தர்கள் பண்ணிய பல பல ஸ்ம்ருதிகளைப் பார்த்து—எதற்கு ஆதாரம் உண்டு—

"எல்லோரும் தந்தம்மத பரிபாலநம் செய்யச் சொன்னதின் கருத்து.

இப்படி **वैदिक समय**ம் ஒன்றையும் **अवलम्बि**த்து மற்றுமுள்ள **समय**ங்களை எல்லாம் தள்ளப் போமோ? **वैदिक**ரான **महर्षि**கள் தாங்களே **समय धर्म**ங்களை **अनुपालि**க்கவும் சொல்லி அவற்றை **अतिक्रमि**த்தவரை **राजा दण्डि**க்கும்படியுஞ் சொல்லிற்றிலர்களோ. ஆகையாலே **सर्व समय**ங்களும் **प्रमाण सिद्ध**ங்களாகவேண்டாவோ என்னில்? **महर्षि**கள் **समयानुपालनादि**களைச் சொன்னது

---

तथाचैषु वचनेषु षड्भिरप्यन्यैर्दर्शनै भंगवद्रूपपस्य दुर्विज्ञानत्वमुक्तमनुपपन्नं स्यात्, यदि सर्वमतसाम्यं पूर्वाचार्यसम्मतं स्यादिति भावः। एवमाचार्यसूक्तिभावमुक्त्वा भारतेपि मतान्तर प्रशंसांनिर्वहति-महाभारतेति। शान्तिपर्वणि नारायणीये—"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतन्तथा। ज्ञानान्येतानि राजर्षे विद्धि नानामतानिवै॥ इत्यादिनेत्यर्थः। "आत्मप्रमाणान्येतानी" इत्यपिपाठोऽस्ति। हननम्—निराकरणम्। प्रशंसाच—"नास्ति सांख्यसमं शास्त्रं नास्ति योगसमं बलम्।... उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः॥ इत्यादाववगन्तव्या। तत्र हेत्वहन्तव्यतोक्तेर्भावमाह—इवररेइति। अत्यन्तान्तीन्द्रियार्थबोधकानामेषां तन्त्राणां हेतुना-केवलं कुतर्कं हेतुवादेन साधनवत् बाधनमपि नकार्यमिति तदुक्तितात्पर्यमितिभावः। किन्तर्हितेषां न केनापिबाधः? तथासतिवेदवत् तेषामपि प्रामाण्यापत्तेरित्यत्राह—दोषेति। तथा च पुरुशाशयदोषमूलकानामेषामागमानां वेदविरोधेप्राप्ते तदंशे वेदेनैवबाधो वर्णनीय इति हृदयम्। तथा च पूर्वोक्तसांख्यादि प्रशंसापि वेदानुकूलभागमात्रविषयेत्यप्युक्तं भवति। ननुकथं वेदबाध्यत्वमागमानां सांख्यादीनां भवति। तेषामपि वेदवेद्यपरमपुरुष एवं तात्पर्यमिति भारतादिषु कथनादिति प्रश्नपूर्वकमुत्तरमाह—इप्पडियानाल् इति। सांख्यादीनां वेदविरोधेसतीत्यर्थः "वेदारण्यकमेवचेत्यपि" पाठान्तरम्। भाष्यानुसारात्—"वेदाः पाशुपतन्तथेत्यत्र पठितम्। "पाशुपतन्तथेति—किमेतान्येकनिष्ठानी" इत्यनयोर्मध्ये—"ज्ञानान्येतानिराजर्षे" इत्यादिश्लोकशेषसद्भावात् तद्ज्ञापनायारभ्येत्युक्तम्। एतेन पाञ्चरात्राधिकरणभाष्ये—अनयोरविरळक्रमेणोदाहरणं अर्थवशात् कृतम्। नत्वानुपूर्व्यैवतथेत्यभिप्रायादिति मन्तव्यम्। एकत्र निष्ठा तात्पर्यपर्यवसानं येषान्तानि—एकनिष्ठानि। एवमेव पृथङ्निष्ठानीत्यत्रापि। प्रब्रूहिवैमया पृष्ट इति मूलेदर्शनात् अत्रापि—पृष्टवेत्युक्तम्। ज्ञानेषु—ज्ञानसाधनेषु एषुदर्शनेषु। यथागमं यथान्यायं श्रुतीः, मीमांसाद्वयन्यायांश्चानतिक्रम्य। [सम्यङ्न्यायानुगृहीत श्रुतितात्पर्यानतिक्रमेणेतियावत्। अत्र यथाशब्दस्येवार्थकत्वं मत्वा आगमेष्विव न्यायेष्विवेति यत् केषाञ्चिद्व्याख्यनम्, तच्चिन्त्यम्। तयागममित्याद्यव्ययीभावाद्यसम्भवापातात्। यथागमे

---

எதற்கு இல்லை—என்று ஆராய்ந்து அதற்குத் தக்கவாறு—இப்படி (அல்லது) அப்படி என்றே—தவறுதான் என்றே—கருத்து வேறு என்றே—ஏதோ ஒரு விதமாக நிர்வாஹம் செய்து விடலாம். உவமித்தல், இன்றியமையாமை, தெரியாமை, உள்ளடக்கல், ஐதிஹியம் முதலிய சில பிரமாணங்களைச் சிலர் கொண்டாலும், அவற்றால் வேதத்திற்கு இடையூறில்லை. சிறுபிள்ளைத்தனமான ஆக்ஷேபங்கள், பேச்சளவே செய்யும் சில் விஷங்கள் முதலியவை, பிறர் மத நூற்களின் மேலும் செய்ய முடியும்.

पाषण्डि समयविषयமன்று. प्रभूत धर्मरक्षणार्थ घटिकाव्यवस्थादिகள்போலே धर्मानुग्रुणமாக वैदिகர் தாங்கள் नियमित्त समय विशेष विषयம் என்னுமிடம் அவ்வோ धर्मशास्त्रங்களிலே प्रसिद्धம். இப்படி இல்லாதபோது "पाषण्डिनो विकर्मस्थान् वैडालव्रतिकन् शठान् हैतुकान् बलवृत्तींश्च वाङ्मात्रेणापिनार्चयेत्"—डम्भिहैतुक पाषण्डिबकवृंश्च वर्जयेत्। सम्भाषनादपि नरानरकं प्रयान्ति வெறுப்போடு சமணர்முண்டா விதியில் சர்க்கியர்.'' इत्यादिகளோடே विरोधिக்கும்.

---

यथान्याये—इत्येव प्रयेक्तव्यं भवेत्। निष्ठा नारायणः—तात्पर्यपर्यवसानभूमिर्नारायणः। महाकव्युक्तिमप्याह सम्वादाय बहुधेति। रघुवम्शे क्षीराब्धिशायिनम्प्रतिदेवानां स्तुतिर्दशमस्था। त्वय्येव निपपन्ति—त्वय्येव पर्यवस्यन्ति, त्वन्मुखोल्लासकरा एव सर्वे इति यावत्। ओघाः प्रवाहाः। निपतन्ति—प्रविशन्ति। महाकवय इति बहुवचनात्—"महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि। न वस्तुभेद प्रतिपत्तिरस्तिमे इत्यादिवादिनां भर्तृहरिप्रभृतीनां ग्रहणम्। सुप्रसिद्धेति। तथा च तत्त्वेदम्परपण्डित मण्डल एवेति नियमं विना लोकप्रसिद्धार्थकाव्यरचनाकुशलेषु कविष्वपि सर्वमतसामरस्यदृष्टिसद्भावाव-गमेनेदमापामरपण्डितं प्रसिद्धं खल्वितिभावः। अस्मिन्नाक्षेपे अग्रे आकैयाल् यथागमं इत्यादिना साक्षात् समाधानं वक्ष्यन्, इदानीं महाभारते तत्रैव मर्हषिणा कथञ्चित्परिहारोपि सूचित इत्याह—अव्विडत्तिले इति। अत्रैवशान्ति पर्वप्रकरण इत्यर्थः। तथाचात्रैवप्रकरणे—सांख्यंयोगः पाञ्चरात्रं वेदाः पाशुपतमिति पौरुषेयसहपाठसन्दंशन्यायादिकृतवेदतुल्यत्वभ्रमं मतान्तरेषु प्राप्तं व्यपोहितुमेव कपिलादीनां सांख्यादिमतकर्तृत्वम्, अवान्तरतपसः प्राचीनगर्भादिसंज्ञकस्य भगवतो वेदाचार्यत्वमात्रकथनेन तत्प्रवर्त-कत्वञ्च प्रदर्शितमिति पौरुषेयत्वा पौरुषेयत्वाभ्यामुभयेषां वैषम्यसूचनात् स्मृत्यधिकरणन्यायेन वेदविरुद्ध-भागेषु मतान्तराणामप्रामाण्यमेव सिध्यतीतिभावः। तथा च यथागमं इत्यादिकमविरुद्धभागविशेषपर-मित्युक्तं भवति।

ननु यथा वेदभागेष्वेव मियोविरुध्यत्सु कथञ्चिन्निर्वाहेण सामरस्यं सम्पाद्यते, तथैवैतेषु मतेष्वपि किन्नक्रियते प्रामाण्यसिद्धय इत्यत्रोभयोरपिवैषम्यमाह—तर्कइति।"... नैकोमुनिर्यस्य मतं प्रमाणम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येनगत स्सपन्थाः॥ इतिभारतस्थं वचनम्। श्रुतिर्विभिन्ना स्मृतयोपिभिन्नाः नचानृषेर्दर्शनमस्ति किञ्चित्। इत्यादिरादिशब्दार्थः। एतेन वेदभागा एवपरस्परविरुद्धार्थास्सन्तीतिसिद्धमिति तद्दृष्टान्तीकरणम्। यथा उदिते जुहोति-अनुदिते जुहोति। सदेवसोम्येदमग्र आसीत्—असद्वाइदमग्रआसीत्। इत्यादौ। विषयव्यवस्था—वक्ष्यमाणा

---

இப்படி-நித்யமாயும், குறைவற்றதாயும், நிராக்ஷேபமுமான வேதங்களை, பரம கருணையுடன் ஸர்வேச்வரன்-நான்முகன் முதலிய தேவர்களைக் கொண்டும், மஹர்ஷி முதலிய மனிதர்களைக் கொண்டும் நிகிலலோகங்களிலும் ப்ரசுரமாம்படி செய்துகொண்டு இருக்கும்போது, விபரீத வாதங்களைக் கூறும் பிறர் மதநூற்கள் எவ்வாறு தோன்றின என்னில்—கேளுங்கள். கூறுகிறோம். அநாதி காலமாகத் தாம்செய்த கர்மமடியாகத் தாமே பலனை அநுபவிக்க வேண்டியுள்ள ஸம்ஸாரிகள்

''ஒன்றும் பொய்யில்லை போற்றுமினே என்ற ஆழ்வர் பர்சுரக் கருத்து.

ஆனாலும் '' பிணக்கற அறுவகைச் சமயமும் நன்னெறியுள்ளி உரைத்த கணக்கறு நலத்தனன் '' என்றும், '' இலிங்கத்திட்ட புராணத்தீரும் சமணரும் சாக்கியரும் மலிந்து வாது செய்வீர்களும் மற்றும் நும் தெய்வமுமாகி நின்றான் '' என்றும் தொட்ங்கி '' ஒன்றும் பொய்யில்லை போற்றுமினோ '' என்றும் ஆழ்வார் அருளிச்செய்திலரோ? என்னில் அவ்விடத்திலும் இவை ப்ரமாணமென்றபடி

---

विकल्प तात्पर्यभेदादयः । उदितानुदितवाक्ययोर्विकल्पेन सदसद्वाक्ययोस्तात्पर्यभेदेनच प्रामाण्यनिर्वाहः अत्र-किम्मतान्तरणां सिद्धार्थे निर्वाहोऽभिमतः अथकार्यार्थे? सिद्धार्थेपि किंविकल्पेन निर्वाहः तात्पर्यगत्यावेति विकल्प्य प्रथमस्याद्यकल्पे आह-सिद्धेति । तत्तन्मतोक्त सिद्धतत्वविषय इत्यर्थः । वस्तुनो द्वैरूप्यासम्भवादितिभावः । ननुकथं व्रीहियवयोस्सिद्धवस्तुरूपयोर्विकल्प इतिचेन्न । तत्रपि व्रीहि यवानुष्ठानयोरेव विकल्पात् । अथप्रथमस्यद्वितीयकल्पं निराकरोति—वेदेति । तर्काः—केवलं लौकिक्योयुक्तयः । तथाचैकैकस्मिन्नपि विषये परस्परविरुद्धयुक्तिवादानां तैःपुरस्करणात् परस्परं तत्त्वविषये तेषामैककण्ठ्यं दुस्साधं भवति । यथा—'' बद्धमुक्तयोरभावान्नेश्वरसिद्धिरि''ति सांख्यसूत्रे—भाष्यावतारिका—ननुश्रुतिस्मृतिभ्यां कथमीश्वरोनसिध्यतीत्याशङ्कायां तर्कविरोधं लौकिकमेववाधक माहेति । तद्विपरीततयातु योगे युक्तिवादेन—'' क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इत्युच्यते । एतदुक्तप्रतिफलनतुल्यैश्वर्यविरुद्धतया शैवैरन्यथा प्रतिपाद्यते—पशुपतिः परादेवता । स च जगन्निमित्तम् । सर्वज्ञस्सर्वशक्तिरित्यादि । अथद्वितीयंशिरोनिराह—अनुष्ठानेति । अयमर्थः—वेदे नानाशाखोक्तानां परस्परमनुष्ठानेविरोधेप्राप्तेसति, सर्वत्रशाखासु अदोषमूलकत्वनिश्चयाधीनप्रामाण्यप्रत्ययमहाजनपरिग्रहादिदर्शनेन कस्याश्चिदपि प्रत्याख्यानायोगात् कथञ्चिद्विकल्पादिनाऽविरोधस्सम्पाद्यते । न तथेहनानामतेषु सम्भविष्यति । तेषामद्ययावत् पूर्वोक्तरीत्या प्रामाण्य निश्चायाद्यधीनमहाजनपरिग्रहाद्यभावादिति । अथमतान्तराणां सर्वेषां शाखाभेदतुल्यत्वेबाधकान्तरमाह एल्लामिति । सर्वेषां सर्वांशप्रामाण्यइत्यर्थः । वैदिकानां तैस्सह—प्रामाण्याप्रामाण्यविवादः, अन्तेतद्बहिष्कारः, प्रमाणेनखण्डितत्वात्तन्मतस्थानां पाषण्डित्वप्रसिद्धिरित्यादिकं तदा नस्यादित्यर्थः । नहि, शाखाभेदादिषु इदं सर्वं दृश्यत इति भावः । यदि वेदविशेधेपि प्रामाण्यं जीवतीत्युक्त्वा सर्वं सङ्ग्राह्यमिति वैदिकान्प्रत्यन्ये वदन्ति, तदाप्याह-त्रेदेति । अयम्भावः—यदि वेदविरुद्धमपि सांख्यादिकं वैदिकैर्ग्राह्यं, तर्हितथैव चार्वाकेण साख्यं, साख्येन चार्वाकमित्याद्यपिपरिगृह्येत । न च तथातैरपिक्रियते । स्वस्वमत प्रक्रियाविरोधो मतान्तरापरिग्रहेहेतुरितिचेत्, अहो! अव्यवस्थितपुरुषबुध्यधीनस्वस्वमततत्वविरोधापेक्षया व्यवस्थितापौरुषेय वेदविरोधस्यैवत्यागप्रयोजकतौचित्येन तयैवैकहेलया सर्वमतान्तराणामप्रामाण्येना परिग्रह एवेति । ननुमासन्तु वेदविरुद्धानि सर्वाणि मतान्तराणि प्रमाणानि । किन्तु-तेष्वेक

---

விஷயத்திலும் நடுநிலை நின்று பலப்ரதானம் செய்ய ஈச்வரன் கடமைப்பட்டுள்ளான். அதனுல் ஸாது ஜனங்களை அஸத் பிரகிருதிகளானவர்கள் நலியத் துவங்கும்போது அவர்கள் முன் கர்ம வினைப்படி அவர்களை புத்தி பேதம் செய்து ஒதுக்கித் தள்ளவேண்டியுள்ளது. அதற்காக பரமாத்மா—வேதங்களிலேயே கூறப்பட்ட—மறுமையில் நம்பிக்கை வருவதற்காக இம்மையிலும் சீக்கிரம் பலம்

அன்று. परस्पर विरुद्धங்களுமாய் वेदविरुद्धங்களுமான இஸ்समयங்களை எல்லாம் प्राणिகளுடைய दुष्कर्मங்களுக்கீடாக प्रवर्तिப்பித்து आश्रितர்க்கு அவற்றால் கலக்கம் வாராதபடி वेदங்களைக்கொண்டு நல்வழிகாட்டி நடத்திப்போருகிறான் सर्वेश्वरன் ஒருவனுமே. அவனை यथाशास्त्रம் यथाधिकारம் வல்லதொரு விரகாலே वशीकरिத்து उज्जीविயுங்கோள் என்று तात्पर्यம். இத்தை " மாட்டாதே

तथास्यादित्यत्राप्यनियममेवाह--अतीन्द्रियेति । एवं निर्देशात् क्षणभङ्गाद्यौन्द्रियकविषये तेषां प्रामाण्यमाप्तत्वञ्च दूरापास्तमिति द्योत्यते । अर्हत्सुगतादिष्वेक इति तदभिमानानुवादात् परेषां परस्परं परश्शतवैमत्यसद्भावेपि वेदबाधने परमैकमत्यं श्वावराहकलहक्रमादस्तीति व्यज्यते । "यथा दृष्टार्थवादी च देवोऽर्हन्परमेश्वर इत्यादितदुक्तौ विशिष्य विश्वासहेतुर्नास्ति । बौद्धादिभिरपि बुद्धादिषुतथैव व्यवहारादितिभावः । ननुयस्यमतं बुद्धिमन्तो जनाः बहवः परिगृह्य प्रचरन्ति, तन्मतवक्ताऽऽप्त इति सुसुखं कर्तुंशक्यमनुमानम् । नहि द्वित्राजना अर्थकामाद्युपाधिभिः परिगृह्णन्तीति बहवोपितथाकुर्युः । बहुजनवादस्य यथार्थत्वावश्यम्भावादित्याशंक्याह बुद्धिमदिति । देशकालादीनां भेदेन बुद्धिमन्तोपि जनाः परम्परया गृहीतं मतं मुञ्चन्ति, मुक्तं परिगृह्णन्ति । एकस्यात्युच्छ्रितस्य मतस्य विनिपातो निपतितस्योच्छ्रायश्चापि भवत इति नेदमव्यवस्थितं व्यवस्थापकं भवतीत्यर्थः । तर्हि मतान्तरवत् वैदिकमार्गस्यापि कदाचित्त्यागे आपतदनिष्टमाह-दुर्वासनेति । जन्मान्तरोपार्जिताशास्त्रीयकर्मज्ञानसंस्कार इत्यर्थः । दुरभिमानः इदानीमेवहैतुकसंसर्गादिना जातो दुरभिनिवेशः । एव रीत्या केचिन्मतान्तरमनुप्रविशन्ति । अन्ये तूक्तरीत्यभावेपि कर्मलाघवाकाङ्क्षायं जातायं वैदिककर्मणां कालदैर्घ्यार्थव्ययायासादिसाध्यत्वेन तत्रोत्पन्नप्रभूतद्वेषास्सन्तः--विनावेदमस्तु यत्किञ्चिन्मतमितिस्वी कुर्वन्तीति बहुविधोहि वेदवैदिकद्रोहः । तेषामेतादृशानं चञ्चलचित्ततयोत्तरोत्तरलाघव लोभेनचान्ते चार्वाक एव पर्यवसानं यथेष्टसञ्चरणकुतूहलित्वानुगुणं भविष्यतीति भावः । चार्वाकशेष इति । चार्वाकमतमेवास्मिन् शिष्यते अवशिष्यते । ततोपिगन्तव्यनीच मार्गाभावादित्यर्थः । यद्वा--शेषः--शेषत्वं । चार्वाकपदभक्तत्वमेवस्यादित्यर्थः । ननु--"मन्त्रायुर्वेद प्रामाण्यवच्चतत्प्रामाण्य"मितिवेदे प्रमाण्यसाधनवत मतान्तरेपि केषाञ्चित्काम्यकर्मणं सफलतादर्शनेन तन्निदर्शनतः कृत्स्नमपि तच्छास्त्रं प्रमाणं, तच्छास्त्रत्वादित्यनुमास्यामस्तत्प्रमाण्यमितिशङ्कापूर्वकं तत्रानिष्टप्रसङ्गमाह-शिलकाम्येति । केनचिन्मुखेन--तत्तद्रीत्या । तथाच तत्तदुक्त प्रकारेण कर्मकर्तृसाधनवैगुण्यादिकंविना काम्याना मनुष्ठानं सर्वत्रैव मतान्तरेषु वेदेषुचतुल्यं फलतीति एवमनुमाने वेदप्रामाण्यमपि दुस्त्यजमित्यर्थः । अथैवमनुमाने वेदस्यैव प्रामाण्यं दुस्त्यजतयाभवतीत्याह--पाषण्डेति । तथाच मतान्तरस्थैर्वेदादेव कानिचन काम्यकर्माणि क्षुद्रमन्त्रांश्च बडिशामिषन्यायेन स्वमतेषु निवेश्य प्रलोभनं बहुधाकृतमित्यत्रैवोक्त पूर्वमित्यर्थः । तथाच तेषां सफलता वेदप्रामाण्यस्यैव प्रतिष्ठापिकेतिभावः ।

தரவல்ல சில சில்லறை உபாயங்களைக் கையாண்டு அவ்வோ மத நூற்களிற் கலந்து அவர்களை, தூண்டில் முள்ளாலே மீன்களை கவருவதுபோல், அந்நூற்களால் கவர்ந்திழுக்கிறான். இதுதான் மற்ற மதங்கள் தோன்றிய வரலாறு. இவ்வுண்மையை இதிஹாஸ புராணங்களிலே காணலாம். " நான், சுத்தோதனனுக்கு புத்தன் என்ற பிள்ளையாகப் பிறந்து ஜனங்களை மோஹங் கொள்ளச்

ஆகிலும்'' என்கிறபாட்டிலும், ''அறுவகைச் சமயமும் அறிவருவகை நிலை'' इत्यादिகளிலும் கண்டுகொள்வது.

''மஹாபாரதத்தில் ஸாங்கியம் முதலியவற்றின் நிலை''

महाभारतத்திலே सांख्ययोग पाञ्चरात्र वेदपाशुपतங்கள் என்னும் पञ्चसिद्धान्तங்களைச்சொல்லி ''एतान्यपि प्रमाणानि नहन्तव्यानि हेतुभिः'' என் கைக்கும், सांख्यादिகளை प्रशंसिக்கைக்கும் तात्पर्यமென்? என்னில்—இவற்றை हेतुக்களால் फाधिக்கவொண்ணுதென்கிறவிடம். अतीन्द्रिय शास्त्रार्थ

---

ननु महाविद्यानुमानेन मतान्तराणामपि विषयसद्भावसाधनात्, तेषामपि प्रमाण्यं दुर्वारमित्यत्राह—मार्जारेति। मकारोपक्रमत्वादिना मार्जारोपि मतङ्गज एवेति साधनेपि—''काकः कृष्णः पिकः कृष्णः कोभेदः पिककाकयोः वसन्तकाले सम्प्राप्तेकाकःकाकःपिकः पिक'' इतिवत् तयोर्नीचोच्चस्वरूपभेदस्तथैवाविचाल्यः प्रत्यक्षादिना स्थास्यतीति एतद्भीत्यैव वक्ष्यमाणानुमानमपि सर्वथाऽप्रयोजकम्। वर्णनाशब्दप्रयोगेण—साध्यमानविषयस्यापरिनिष्ठितत्वं ज्ञाप्यते। निरङ्कुशाः खलुकवयोवर्णने। मकारोपक्रमत्वादेव मतङ्गजो मार्जारएवेत्यपि साधयितुं शकयम्। एवमेव मह्याविद्यानुमानमपि। इयञ्चानुमा बौद्धैर्मायिभिश्चादरेण तत्र तत्र स्वाभितभावरूपाज्ञानादिसाधनाय कक्षीकृताविलोकयते। विद्यावत् स्वाभिलषितसर्वसाधकत्वादियमप्यनुमितिस्तन्नाम्नी, महतीचसा विद्येति। दर्शयन्तो महाविद्यंविद्याधरमहर्षयः। सहितास्तस्थुराकाशे इत्यादाविव। अथवा अविद्येतिपदच्छेदः। व्यावहारिकार्थप्रपञ्चोपादानभूताहि अविद्या। तद्वदियमपीति। तथाहिअज्ञानं भावत्वातिरिक्ताज्ञानधर्मातिरिक्तधर्मवत् प्रमेयत्वात् घटवत्। सिषाधयिषितभावत्वातिरिक्तोयोऽज्ञान धर्म अज्ञानत्वादिः तदतिरिक्तधर्मः सिषाधयितं भावत्वम्। तद्वत्त्वमादायपक्षे साध्यपर्यवसानम्। तादृशोधर्मो घटत्वादिः, तमादायघटादे र्दृष्टान्ततोपपत्तिः। अत्र अज्ञानं भवत्ववदिति न साक्षात्प्रयोज्यम्। घटादिनिदर्शनेनाज्ञाने तत्साधकसाधारण हेत्वभावात्। नापि भावत्वातिरिक्तधर्मातिरिक्त धर्म वदिति। तदानीमपि तादृशव्यतिरेकोक्तया भावत्वस्यैव साध्यार्थत्वेन ग्राह्यतया पूर्वोक्तदोषादेव। तस्मादेव भावत्वातिरिक्त धर्मेऽज्ञानीयत्वविशेषणं—भावत्वातिरिक्ताज्ञानधर्मेति। तथाचसतिपक्षे—भावत्वातिरिक्तात् अज्ञानवृत्तिधर्मात् अज्ञानत्वादेर्भिन्नो धर्मः भावत्वं दृष्टान्ते घटत्वादिश्चेति, घटादेः सर्वस्योदाहर्तुंशंकयतया भावत्वसाधनायप्रमेयत्वादिकं केवलान्वयिधर्मजातमेवात्र साधारण हेतुर्भविष्यति। एवं अज्ञानधर्मभिन्न धर्मवत्त्वसाधनेपि अज्ञाने तदसंभवः अभिमतभावरूपत्वासिद्धिश्चेत्यत उक्तं सिषाधयिषतभावत्वभिन्नेति अज्ञानधर्मविशेषणम्। एवञ्चभावत्वभिन्नस्यकस्यापि अज्ञानवृत्तिधर्मस्य भावत्वतिरिक्ताज्ञानधर्मातिरिक्त-

---

செய்வேன்.'' என்றும், ''ஓ! மஹாதேவ! நீயும் சைவ சாஸ்திரங்களைச் செய். அவற்றில்—குறைந்த உழைப்புக்கு அதிக பலன் தருவதாகக் கூறு. வஞ்சனை, இந்திரஜாலம், உலகுக்கு முரண்பட்ட வேஷாசாரங்கள் இவைகளைக் காட்டி மோஹமடையச் செய்வாய்.'' என்றும், ''நான் மஹாமோஹனை ஸ்ருஷ்டி செய்கிறேன். அவன் எல்லோரையும் மோஹமடையச் செய்வான்.''

**विषय**த்தில் **हेतु**வுக்கு **विधिनिषेधसामर्थ्य**மில்லாமையாலே யாமத்தனை. **दोषसम्भावनै**யுடைய **पौरुषेयागम**ங்களுக்கு **श्रुतिविरोध**முள்ளவிடத்திலே **श्रुति**யாலே **बाध**முண்டாகக் குறையில்லை. இப்படியானல்—"**सांख्यं योग: पाञ्चरात्रं वेदा: पाशुपतन्तथा ।**" என்று தொடங்கி—"**किमेतान्येक निष्ठानि पृथङ् निष्ठानि वामुने ?**" என்று **प्रश्न**ம் பண்ண—"**सर्वेषु च नृपश्रेष्ठ ! ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायण: पर:**" என்று **पञ्चसिद्धान्त**ங்களுக்கும் **नारायण**னே **प्रतिपाद्य**னென்றது

---

धर्मत्वायोगात् भावत्वमेवादायोक्तदूषणद्वयरिहार: । एवम् अयं घट: एतद्घटाज्ञानान्यान्यभावभिन्न: प्रमेयत्वात् पटवत् इत्यपि भावरूपाज्ञानसाधनायप्रयोक्तव्यं भवति । तथाहि—एतद्घटाज्ञानाभ्यामन्यस्मात् पटादेस्सर्वस्मात् अन्ये एतद्घटाज्ञानेद्वे एव । तयोर्मध्ये यद्यज्ञानं नभावरूपं स्यात् तदा तादृशान्यभाव: घटएवेति तद्भिन्नत्वं घटेबाधितंस्यात् । पटादिषु एतत्साध्यव्यातया दृष्टप्रमेयत्वादिमत्तयातु घटेपि एतत्साध्यसत्त्वमावश्यकमिति तदन्यथानुपपत्त्या तादृशान्यभाव: अज्ञानमपीति वक्तव्यम्, तद्भिन्नत्वस्य तदानीं घटेसम्भवादिति । एवञ्चानया प्रक्रियया—घटादि: क्षणिकत्वातिरिक्तघटादिधर्मातिरिक्तधर्मवान् प्रमेयत्वात् पटवत् । जलधरपटल:—जलधरपटल घटान्यान्यक्षणिकभिन्न: प्रमेयत्वात् पटवदित्यादिना बौद्धाभिमतक्षणिकत्वादेरपि सर्वत्रसाधनात् तत्रापि विषय सद्भावेन प्रामाण्यं भविष्यतीत्याशङ्कार्थ: । अप्रतिष्ठितानुमानेति अव्यवस्थितानुमानेत्यर्थ: । तथाहि—इदमेवं विधमनुमानं परपक्षसाधकतयाप्युदाहर्तुंशक्यम् । घटादि:स्थिरत्वातिरिक्तघटादिधर्मभिन्नधर्मवान् प्रमेयत्वात् पटादिवदिति । तथाच नानुमानेनानेन स्वाभीष्टसिद्धिरिति सन्तोष्टव्यम् । पराभीष्टस्यापि साधनेनोद्वेजकत्वात् इतिभाव: । महाविद्यानुमानस्यापरिनिष्ठितत्वे हेतुमाह—अङ्गपञ्चकेति । अङ्गपञ्चकस्वरूपमत्रैवपूर्वमुक्तं नविस्मर्तव्यम् । महाविद्यानुमानेच प्रतितर्कपराहति परपक्षासाधकत्वाद्यङ्गवैकल्येन न स्वसाध्यसाधकत्वमितिभाव: । तदुक्तं न्यायपरिशुद्धौ अनुमानाध्याये तस्माद्व्याहत साध्यविपर्ययं केवालान्वयि प्रमाणम् इति सङ्क्षेप: । अतएव महाविद्यादिरूपकेवलान्वयिनामप्यनवकाश: । अव्याहत साध्यविपर्यत्वादिति । व्याहतसाध्यविपर्ययमिति बहुव्रीहि: । तथाच विपक्षेबाधक प्रमाणवदित्यर्थ: । तादृशन्तु केवलान्वयि प्रमाणमेव । यथा ब्रह्म शब्दवाच्यं वस्तुत्बात् घटवदिति । अनुभूतिरनुभाव्या वस्तुत्वात्पूर्ववदितिच । नह्यशब्दवाच्यमननुभाव्यं वा किञ्चिद्वस्त्वस्ति लोके । अन्यथा तस्य सत्ताविरोधात् इति भवति विपक्षेदण्ड: । स एवहि साध्यहेत्वो:प्रतिबन्धरहस्यम् । उक्तमहाविद्यासु—अस्तु घटे प्रमेयत्वं, मास्तु क्षणिकत्वातिरिक्तघटादिधर्मातिरिक्तधर्मवत्त्वमित्यत्रनैवास्तिविपक्षे बाधकमिति । ननु चार्वाकादिभिस्स्वमतेनीतिस्तेयकामशास्त्रद्यानुगुण्यकृतोत्कर्षस्य, जैनादिभि:—

---

என்றும் அவை கூறுகின்றன. "நின் மாட்டாய" மலர் புரையும் திருவுருவம் மனம் வைக்க மாட்டாத பல சமய மதி தந்தாய் என்றும், "கள்ள வேடத்தைக் கொண்டு போய் புறம்புக்கவாறும் கலந்த சுரரை உள்ளம் பேதம் செய்திட்டு உயிருண்ட உபாயங்களும்." என்றும், "வெள்ளியார் பிண்டியார் போதியார் என்றிவர் ஓதுகின்ற கள்ள நூல்" என்றும் ஆழ்வார்களுமிதையே அருளிச் செய்தார்கள்.

கூடுமோ? "बहुधाह्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः। त्वय्येवनिपतन्त्योघा जाह्नवीया इवार्णवे" என்று महाकविகளும் சொல்லும்படி இவை எல்லாவற்றிற்கும் प्रामाण्यம் सुप्रसिद्धமாயன்றோ இருப்பது என்னில்? இவ்விடத்திலே "साङ्ख्यस्य वक्ता कपिलः" என்று தொடங்கி மற்றுள்ளவை पौरुषेयங்கள் என்கையாலும், "अवान्तरतपा नामवेदाचार्यः स उच्यते" என்று बेदத்துக்கு पौरुषेयत्व प्रसक्तिயுமில்லை என்கையாலும், वेदविरोधமுண்டான भागத்திலே आगमान्तरங்களுக்கு प्रामाण्यம் கூடாதென்னுமிடம் सूचितம்।

---

"अन्योन्यपक्षप्रतिपक्षभावात् परस्परं मत्सरिणः प्रवादाः।" इत्यन्यमत निन्दायाश्चकथनात्, तदनुस्सृत्य तेषामेव प्राशस्त्यमन्येषां तदभावश्च स्यातामित्यत्राह–स्वमतेति। इदमपि वेदप्रभृति सर्वमतेष्वपि स्तुत्यर्थवाद निन्दादिवाकयविशेषैस्साधारणतया दृष्टमिति नैतावतापिकिञ्चिन्निर्णेतव्यं भवतीत्यर्थः। अथ ग्रन्थतत्कर्तृभूयस्त्वादिना चतुर्विधबौद्धमतादेरेव श्रैष्ठयमस्त्वित्यत्राह ग्रन्थेति। इदमपिवेदस्यात्यन्त चमत्कृतिजनकत्वएव पर्यवस्यति। अनन्ता वैवेदाः—अविज्ञातान्त्रीन् गिरिरूपान् प्रदर्शयाञ्चकार। ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदानां वेदं पित्र्यं दैवं राशिं वाकोवाक्यमितिहास-पुराणं पञ्चमं इत्यादिनात्रैवाङ्गाङ्गिनोरसंख्यातत्वश्रवणादितिभावः।

किम्बहुना? न युक्त्यात्र किञ्चिन्निर्णयमस्ति। सांख्ययोगादि प्रशंसापर एव महाभारते तेषां निकर्षस्य कण्ठोक्तेरित्याह–महाभारतेति। "महत्वात् भारवत्त्वाच्च महाभारतमुच्यतु" इति शब्द-विस्तरकृतमहत्वार्थविस्तारकृतसारवत्त्वाभ्यामन्वर्थ तत्संज्ञकेत्यर्थः। महर्षिः–"महर्षेः कीर्तनात्तस्यभीष्मः प्राञ्जलिरब्रवीत्।" इति ज्ञानाधिकैर्भीष्मादिभिरपि अनुभावतः स्वनामकीर्तन समकालमञ्जलिकरण-योग्योभगवदवतारभूतोवादरायणः। साङ्ख्यादीनां प्रशंसाचशान्तिपर्वणिश्रूमते यथा—"प्रत्यक्षहेतवोयोगाः साङ्ख्याः शास्त्रविनिश्चयाः। उभेचैतेमतेतत्त्वे ममताततयुधिष्ठिर! उभेचैते मतेज्ञानेनृपते! शिष्टसम्मते। अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिमिति। बहवः पुरुषा इति। अत्रेयं श्लोकानुपूर्वी–"बहवः पुरुषः... एकं कुरुकुलोद्वह! बहूनां पुरुषाणां हि यथैकायोनिरुच्यते। तथातं पुरुषं विश्वं व्याख्यास्यामि गुणातिगम्। नमस्कृत्वा च गुरवेव्यासायविदितात्मने। तपोयुक्ताय दान्ताय वन्द्याय परमर्षये। इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव! ऋतं सत्यं च विख्यातं ऋषिसिंह्येन चिन्तितम्" उत्सर्गेणापवादेन ऋषिभिः कपि-लादिभिः। अध्यात्मचिन्तामाश्रित्य सास्त्राण्युक्तानि भारत॥ समासतस्तु यव्द्यास इत्यादि। अत्र श्रुतप्रकाशिका–नैत इच्छन्तीति साङ्ख्यानां योगानाञ्च परमात्मन उपादानत्वानभ्युपगममुक्त्वा—"बहूनां पुरुषार्णां हि यथैकायोनिरुच्यते। तथातं पुरुषं विश्वमाख्यास्यमि गुणातिगमित्यारभ्य–समासतस्तु यव्द्यासः पुरुषैकात्म्यमुक्तवान्। इति स्वमतेन सिद्धान्त उक्तः, नतु कपिलहिरण्यगर्भादिमतेन। पुरुषाणामै-कात्म्ययम्–एकात्मनायुक्तत्वम्। अनेन जगच्छरीरकः परमात्मा हि सर्वोपादानमित्युक्तं भवति।

---

இவ்விதமாயின்—களையை வளர்க்கப் பயிர் அழியுமாப் போலேயும், கழுகுக் கூட்டத்திடைப் பட்ட மணிப்புருக்கள் போலேயும் வைதிக ஸம்பிரதாயம் முழுவதும் ஒழிந்து போயிருக்க வேண்டாவோ? என்னில்—ஒழியாதபடி ஈஸ்வரன் வைதிக தர்சனத்துக்கு வேலியிட்டு வைக்கிறுன். "வைஸேஷிக பௌத்த பாஷண்டிகளாலே வைதிக தர்மம் அழியப்புக, அப்போது ஸ்ரீவிஷ்ணு, த்ரிதண்டமேந்திய கையராய் ஸ்ரீதத்தாத்ரேயராய் வந்து முன்னுளில் வேதத்தை ரக்ஷித்தார்"

"तर्कोप्रतिष्ठः श्रुतयोविभिन्नाः" इत्यादिகளிற்படியே परस्परविरुद्ध वेदங்கள்போலே எல்லா समयங்களும் ஒரு विषयव्यवस्थैயாலே प्रमाणங்களாகாதோ என்னில்? सिद्धार्थविषयத்தில் विकल्पம் கூடாது. वेदத்தில்போலே तात्पर्यभेदத்தாலே निर्वहिக்கவொண்ணுதபடி तर्कங்களையிட்டு विपरीतार्थமாக அவ்வோ वक्ताக்கள் தாங்களே उपपादिத்து வைத்தார்கள். अनुष्ठान विषयத்தில் विकल्पம் சொல்லும்போது कारणदोषाद्यभावनिश्चयத்தாலே प्रामाण्यம் सिद्धिத்து निरुपाधिक महाजनपरिग्रह

---

तवान्तरात्मामम च ये चान्येदेहिसंज्ञिताः। सर्वेषां साक्षिभूतोसौ नग्राह्यः केनचित् क्वाचित्। इति पुरुषैकात्म्यशब्दविवक्षितस्य स्वेनैवव्याख्यातत्वात्। बहुनां पुरुषाणाञ्चयथैका योनिरुच्यते इति पूर्वमुक्तत्वाच्चेति। विशिष्य पाशुपतविषयेप्याह–पाशुपतेति। बहुपुराणानि–वाराहलैङ्गादीनि। अत्रैवं श्रुतप्रकाशिका–तथागौतमशापोपहतत्रयीबाह्यजनाधिकारत्वञ्चपाशुपतस्य तन्त्रान्तराणामप्यविशेषेण श्रूयते। यथा बाराहे–त्रिसप्ततितमे–मोहनार्थन्तुलोकानां त्वयाशास्त्रं पृथक्कृतम्। तत्कदा हेतुना केन कृत देव! श्वदस्व नः। इति पृष्टेन दुर्भिक्षाद्गौतमेन रक्षितैरननुमतैर्जिगमिषुभिर्गां तमातिसन्धानमुक्त्वाऽभिहितं एवमुक्तस्तदातैस्तु गौतमःकिमिदन्त्विति। गोवध्याकरणं मुह्यन् तावत्पश्यति योगवित्। ऋषीणाम्मा यथा सर्वमिदं जातं विचिन्त्यवै। शशापतान् तथाभस्यमिथ्याभूतपरान् तया। भवित्यथत्रयीबाह्या वेदकर्मबहिक्रृताः। तच्छ्रुत्वाक्रूरवचनं गौतमस्य महामुनेः। ऊचुः सप्तर्षयोमैनं सर्वकालं द्विजोत्तम। भवन्तु किन्तु तेवाक्यममोघानात्र संशयः। त्वद्वाक्यबह्लिनिर्दग्धाः सदाकलियुगेद्विजाः। भविष्यन्ति क्रियाहीनाः सर्ववेदबहिष्कृताः। इति गौतमशापं तल्लघूकरणाय कलौजन्म तदनुग्रहाय तद्गोत्रप्रवर्तकैः सप्तर्षिभिमहेश्वरस्यार्चन ञ्चोक्त्वा एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तमाः। वेदक्रिया समायुक्तकृता कृतवानस्मिसंहिताम्। निश्वासाङ्ख्यां ततस्तस्मिन् लीना बाभ्रव्यशण्डिलाः। अल्पापराधा इत्येवं शेषावैलालिकाभवन्। मयैवमोहितास्तेतु भविष्यज्जानता द्विजाः। निश्वाससंहिता याहि लक्षमात्रप्रमाणतः। सैवपाशुपतीदीक्षा योगः पाशुपतश्चयः। एतस्माद्वेदमार्गाद्धियदन्यदित्यदि, तेषां गौतमशापाद्धि इत्यादिचोक्तम्। अपराधतारतम्येपि शापोपहतत्रयीबाह्याधिकारत्वं पाशुपतस्यतन्त्रान्तराणाञ्चाविशिष्टम्। इति।

अथ पाशुपतादेर्मोहनार्थत्वे तत्सहपठित पाञ्चरात्रस्यापितत्वं दुर्वारमित्यत्राह–श्रीपञ्चरात्रेति। वेदविरोधः–जीवोत्पत्तिप्रतिपादनादि प्रयुक्तवेदविरोधप्रतीतिः। नास्ति इति शारीरके तस्यस्क् निर्वाहादिति भावः। ततश्च मतान्तरात्सिद्धं वैलक्षण्यमाह–भविष्यतीति। इदम्महोपनिषदं चतुर्वेदसमन्वितम्। सांख्ययोगकृतान्तेन पाञ्चरात्रानुशद्वितम्॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्।

---

என்றும், "தர்மத்தை நன்கு நாற்புரமும் காப்பவன் நாராயணன்." என்றும், "பாஞ்சராத்திரத்தைப் பாதுகாத்தான்." என்றும், தர்மப்பயிர் வாடிக்காட்டினுலேயே—உடனே ஓடி வருவேன் நான் (கண்ணன்) அதை நன்கு ஸ்தாபநம் செய்ய யுகங்கள் தோறும்" என்றும் பழய நூற்களில் பேசப்பட்டபடி சில ஸாத்விக புருஷர்கள் வாழுமிடத்திலே வேதங்களும் வாழ்ந்து வருகின்றன.

இப்படியாகில், நித்திய நிர்தோஷ வேத ஸம்பிரதாயம் உலகில் ஒருபுறத்தே நடக்கும் போது—மறுபுறத்தில் பிறமதங்களுக்கு ஆதரவாளர்கள் ஆயிரமாயிரமாகப் பெருகுவதேன்?

முண்டாகவேணும். எல்லாம் प्रमाणமானல் शाखासूत्रभेदங்களிற்போலே वैदिकविवादतद्बहिष्कारங்களும் पाषण्डत्वप्रसिद्धियுமின்றிக்கேயொழியும். वेदविरुद्धங்கள் எல்லாம் प्रमाणமென்கை वेदबाह्यர் தங்களுக்கும் इष्टமன்று.

"பிற மதங்களில் ஒன்றை ஒப்புவோம் என்பது சரியன்று."

अतीन्द्रियविषयத்தில் अर्हत्सुगतादिகளில் ஒருவனை आप्तन் என்று विश्वसिக்கைக்கு विशेषहेतु வில்லை. बुद्धिमद्बहुजनपरिग्रहமே हेतुவென்றல்—देशकालभेदத்தாலே प्रज्ञातिशयवान்களுடைய

ऋग्यजुस्सामाभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।...भविष्यति प्रमाणं...वै इत्यादिनेत्यर्थः । अनेकत्रेति । तथाहि—उत्तरश्रीमद्रामायणे पुराणैश्चैव वेदैश्च पञ्चरात्रैस्तथैवच । ध्यायन्ति योगिनोनित्यं क्रतुभिश्च यजन्तितमिति । भागवतेपि प्रथमस्कन्धे—तृतीयमृषिसर्गं वै देवार्षित्वमुपेत्यसः । तन्त्रं सात्वतमाचष्ट नैष्कर्म्यंकर्मणांयतः ।। इति । ब्रह्माण्डे च—"ऋगाद्याभारतञ्चैव पाञ्चरात्रमथाऽखिलम् । मूलरामायणञ्चैव पुराणञ्चैतदात्मकम् ।। येचानुयायिनस्तेषां सर्वेचैव सदागमाः । दुरागमास्तदन्येये न तैर्ध्येयोजनार्दन इति । यज्ञवल्क्योपि—पञ्चरात्रे तथाह्येष भगवद्वाचकस्स्मृतः । बलंवीर्यं तथातेजः त्रिमात्रेतिच संज्ञितः ।। ज्ञानैश्वर्येतथाशक्तिः त्रिस्वभाव इतिस्मृतम् । संकर्षणोऽथ प्रद्युम्ने । ह्यनिरुद्धस्तथैवच । त्रिव्यूहइति निर्दिष्टः ओंकारोविष्णुरव्यय इति । शारीरकेपि पाञ्चरात्रप्रामाण्य प्रस्तावमाह—शारीरकेति । शारीरः परमात्मा । सर्वजगच्छरीरकत्वात् । स कायते अभिधीयतेऽत्रेति वेदान्तशास्त्रं शारीरकम् । कैगैशब्द इति हिधातुः । तत्रद्वितीयद्वितीये रचनानुपपत्त्यधिकरणमारभ्य सप्तभिस्सांख्यादिपाशुपतान्तानाम्मतानां वेदविरोधादिना निराकरणमभूत् । प्रसङ्गात् स पाञ्चरात्रेनास्तीत्यपिनिर्णीतमुत्पत्त्यसंभवाधिकरणे । प्रतिरोधेति । सत्प्रतिपक्षतेत्यर्थः प्राबलयेसति तेन दुर्बलस्यबाधः । उभयोस्समबलतायान्तु प्रतिरोध इति व्यवस्थापनात् । तथाच वेदपाञ्चरात्रयोस्तुल्यं प्रामाण्यमिति तयोर्मिथोविरोधाभावात् न वेदेन तस्य प्रतिरोधइत्यर्थः । यद्यपि वैदिकमेव तत्त्वजातं पाञ्चरात्रेपि प्रतीयते । आचारभेदस्तु वर्तते । अथापि तत्त्वानुसारात् सिद्धेप्रामाण्ये मनागाचारभेदोपिगृह्यसूत्रादिष्विवाविरोधेननेय इति भावः । तथाचाधिकरणसारावली—"साङ्ख्यावैशेषिकाश्चश्रुतिपरिपठितं धर्मिमैच्छन्नतत्त्वम्, तत्त्वाचारौतु बुद्धक्षपणक पशुपत्युक्तिषु श्रुत्यपेतौ । वेदोपस्कारिविष्णुस्मृतिवदवितथे पाञ्चरात्राख्यतन्त्रे तत्त्वं त्वय्यन्तसिद्धं चरणमपि समं गृह्यभेदादिनीत्ये"ति ।। ननु परमतनिराकरण परेऽस्मिन् पादे स्वमतस्य

என்னில்—கவனித்துக் கேளுங்கள். வைதிக மதத்தில் தவறு செய்தவன் என்று தள்ளப்பட்ட அனைவரையும், தங்களுக்கு ஆள்திரளுகைக்காக பிறமதத்தில் கூட்டிக்கொள்ளுகிறார்கள். (பிற மதத்தவரிடையே மதிக்கப்பட்டவன் ஒருவன் வந்து மன்றாடினாலும் நமது வைதிக ஸமயம் அவனை ஏற்றுக்கொள்ளாது.) மேலும்—மூலிகைகள், அயக்காந்தம் முதலிய மணிகள், பலவித க்ஷுத்திர மந்திரங்கள், யந்திரத் தகடுகள், தியானங்கள், நயவஞ்சகப் பேச்சுக்கள், மயக்கும் பார்வைகள் முகத்திற்கெதிரில் முஷ்டி பிடித்துக் காட்டுதல், மற்றும் பலவித அபிநயங்கள் இவற்றின் மூலமாக தம் திறமையைக் காட்டி, பொம்மைகளைப் பேசுவித்தல், கற்றூண்களைப் பிளந்திடுதல், ஸூரியனை ஆகாயத்தில் மேலே செல்லவொட்டாமல் ஒரேயிடத்தில் கட்டுவித்தல், பல பல மாயைகள் இந்திர ஜாலங்கள், வசீகரித்தல், ஒன்றை வேறிடத்திற்கு இழுத்தல், மோஹிப்பித்தல் முதலிய செய்து தங்களின் சித்தி விளையாட்டுகளைக் காட்டி, அறியாத சபல ஸ்வபாவர்களை தங்கள் பக்கம் இழுத்துக்

काठिन्यादिகள்போலவும், कालपाकादिகளாலே गन्धरसरूपस्पर्शादिपरिणामविशेषங்கள்போலவும், चित्ररूपம்போலவும், कण्टकतैक्ष्ण्यवक्रतादिகள் போலவும், स्वभावविशेषवैभवத்தாலே चैतन्यसुखादि

ननु तत्र रागः वदनोष्मपाकादिनाऽवयवक्रमेणैव समुदायेऽवयविनि वोत्पद्यते अवयवेष्वपि रागदर्शनात् इति नैतदवयवेऽविद्यमानचैतन्योत्पत्तौ निदर्शनमित्यतोन्यदुदाहरति - करकाकाठिन्येति। करककाठिन्येति ह्रस्वान्तपाठमादाय विवरणन्तु चिन्त्यम्। करकाया विभिद्यदर्शनेष्वनवयवेषु विलीनेषु काठिन्याद्यनुपलब्धेरिति भावः। अथ पूर्वमविद्यमानचैतन्यगुणोत्पत्तौ, प्रतिपुरुषं तत्तारतम्ये च समुचितमुदाहरति- कालपाकादीति। कालेन पाकेन चेत्यर्थः। पाकस्तेजस्संयोगः। आम्रपनसादि फलेषु कालपाकादिना पूर्वमविद्यमानं गन्धरसादि तत्तारतम्यं च दृश्यत इत्यर्थः। "चैतन्यसुखादि परिणामங்களும், அவற்றின் तारतम्यங்களுமிति वक्ष्यमाणतया तदनुगुणमिदं व्याख्यातम्।

केचित्तु एकस्मिन् पूर्वमविद्यमानानेकगुणोत्पत्ताविदं निदर्शनम्। कालपाकः- कालमात्र कृतः पाकः। आदिना आमपाकादीनां ग्रहणमित्याहुः। अत्र "गन्धरसरूपस्पर्शेति निर्देशेन नैयायिकानां "रूपरसगन्धस्पर्शेति लेखनक्रमो निर्मूल इति दर्शितम्। "पृथिव्यप्तेजोवायवितिहि द्रव्य क्रमः। तत्तद्गुणाधारद्रव्यभूयस्त्वाल्पीयस्त्वाभ्यां तथा निर्देश इति चेत्तदापि "स्पर्शरूपरसगन्धेति निर्देष्टव्यम्। नापि ग्राहकेन्द्रियक्रमात्क्रमः। चक्षुःप्राथम्ये मानाभावादिति भाव्यम्। अथोक्तेषु सर्वेष्वपि स्थलेष्ववयवक्रमेणैव नूतनगुणोत्पत्तिरिति यदि हठाद्गृह्यते, तत्रापि तथावक्तुमशक्यं स्थलमुदाहरति - चित्ररूपंபோலவுமிति। अतिरिक्तावयविस्वीकारपक्षे तस्य चाक्षुषत्वाय सितासितादितन्त्वारब्धपटेपि कस्यचिद्रूपस्यावश्यकतया बलसर्गाभिनिगमनाविरहेऽबलसमन्यत्साध्यतीति न्यायेन चित्ररूपस्यापूर्वस्य सिद्धिः। अवयवसङ्घातस्यैवावयवित्वे तु नानातन्तुरूपाणामेव चित्ररूपतया, प्रतीतिः। नातिरिक्तं चित्ररूपम्। अतएव "चित्र"मिति संज्ञोपपत्तिः। एकस्य चित्रतानुपपत्तेः। तदुक्तं- "एकं चेच्चित्रता न स्याच्चित्रं चेदेकता कथम्। एकं च तच्च चित्रं च तन्तु चित्रान्तरं भवे"दिति। अत उदाहरणान्तरमाह- कण्टकतैक्ष्ण्येति। कण्टकानां तैक्ष्ण्यं क्वचिद्वक्रतादि

முதலியவைகளில் முன்பில்லாத மணம் குணம் முதலியன உண்டாகின்றன. தனித்தனியே வெவ்வேறு வர்ண நூல்களை வைத்து நெய்து விசித்திரவர்ணச்சேலை செய்கிறார்கள். ஒன்றும் யாரும் கேட்கமுடியாத இயற்கையின் நியதியின்படி, முட்களில் கூர்மை கோணல்போல் ஆங்காங்கு அதனதன் ஸ்வபாவத்தினால் எல்லாம் கண்டபடியே நடப்பதால் சரீரத்திலே சைதந்யம் ஸுகம், துக்கம், முயற்சி முதலியன உண்டாகலாம். அல்லது ஜ்ஞாநம் என்னும் குணமே வேண்டாம் என்றும் கூறலாம். அப்போது ஜ்ஞாந கார்யங்கள் என்று நாம் நினைக்கும் வ்யாபாரங்களெல்லாம் ஜ்ஞானகாரணங்களாக எல்லோரும் ஒப்புக்கொண்ட இந்த்ரிய விஷய ஸம்பந்தங்களாலேயே வரும் என்னலாம். சரியபடி இயக்கப்பட்ட பொம்மை பேசு

परिणामங்களும் அவற்றின் तारतम्यங்களும் इष्टानिष्टप्राप्तिपरिहारार्थप्रवृत्तिनिवृत्तिகளும் உண்டாகின்றன.

चैतन्यம் என்ற ஒரு गुणந்தன்னையும் தவிர்ந்து चैतन्योत्पत्तिसामग्रीதன்னாலே सहकारिविशेषमूलप्रतिमाजल्पनादिन्यायத்தாலும், "पद्मसम्मीलनविकासवत्तद्विकारः" என்கிறபடியாலும், उच्छ्वासनिश्वासोन्मीलननिमीलनादिகள்போலே மற்றுமுள்ள व्यापारங்களும் உண்டாகிறனவாகவு

च भवति । न हि कस्यापि मते तदवयवेषु अणुषु तक्ष्ण्यादि दृष्टमिष्टं वेति भावः । प्रत्येकं भूतेष्वविद्यमानचैतन्यस्य शरीरे उत्पत्तौ किं कारणमिति ततः स्वभावविशेषेत्युक्तम् । यत्र यत्कार्यं दृष्टं तत् तत्करणशक्तमिति दृष्टस्वभावादेव भूतानामतत्स्वभावत्वं शरीरस्य तत्स्वभावत्वं च कल्प्यत इति किमनुपपन्नमिति भावः । शरीरेष्वेव चैतन्यतत्परिणामसुखादितारतम्ये किन्निबन्धनमित्यत उक्तं विशेषेति । स्वभावविशेष एव चैतन्यादितारतम्यविशेषेष्वपि कारणमित्यर्थः । इष्टानिष्टेति । इष्टप्राप्त्यर्थप्रवृत्तीत्येवं विभज्यान्वयो बोध्यः ।

इत्थं चैतन्याख्यं गुणमङ्गीकृत्य शरीरे तदुत्पत्तिप्रकाराः प्रदर्शिताः । इदानीं तमनङ्गीकृत्यैव व्याहारव्यवहारादिकं निर्वहति - चैतन्यமென்று इति । तर्हि प्रवृत्त्यादेः किं कारणमिति चेदाह - चैतन्योत्पत्तीति । यैव सामग्री आन्तरी अवधानेन्द्रियसंबन्धादिरूपा तव ज्ञानसाधनतया अभिमता, सैव साक्षात् प्रवृत्यादिकमुपजनयतु । किमन्तर्गडुना चैतन्येनाप्रत्यक्षेण । तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेनेति न्यायादिति भावः । एतेन चैतन्यानङ्गीकारे लाघवं दर्शितं भवति । चैतन्यं विनैव भाषणादिव्यापारनिष्पत्तौ दृष्टान्तं दर्शयति - सहकारिविशेषेति । मन्त्रकुशलप्रतिमाप्रेरयितृपुरुषसान्निध्यादिदृष्टकारणकलापः सहकारी । मन्त्रस्यापि दृष्टकारणरूपत्वं पूर्वमुक्तं न विस्मर्तव्यम् । ननु "तेभ्यश्चैतन्य"मिति बृहस्पतिसूक्तिविरुद्धं कथमिदं शोभेतेत्यत्रेदमपि तदुक्तमेवेत्याह - पद्मसम्मीलनेति । तद्विकारः- देहस्य प्रवृत्त्यादिरूपविकारः । तथा च प्रवृत्त्यादीनां चैतन्योत्पादकत्वाभिमतसामग्रीमूलत्वमपि परित्यज्य स्वाभाविकत्वमेव स्वीकुर्म इति पक्षान्तरमपि तदुक्तमित्यर्थः । देहे स्वाभाविकत्वेनोभयवादिसंप्रतिपन्नान् कांश्चन विकारान् दर्शयति- उच्छ्वासनिश्वासेति । एते हि न चैतन्यप्रयोज्या व्यापाराः । यावत्प्राणा धरन्ति, तावत् विपरीतप्रयत्नेपि निर्बन्धतो जायन्ते । अतस्स्वाभाविका एवेति भावः । உண்டாகிறனவாகவுமாமிதி । अनेनास्मिन्पक्षेऽस्वरसः सूचितः । जानामीत्यनुभवस्य प्रत्यक्षत्वात् ज्ञानसामग्र्या न तदपलापश्शक्यः । नापि तदनु

வதுபோலவும், தாமரை தானே மலர்ந்து குவிவது போலவும், நமது உடலிலேயே இமைத்தல் உயிர்த்தல் முதலிய நிகழ்ச்சிகள்போலவும் இயற்கையே எல்லாகார்யங்களையும் நடத்துகிறது என்றும் நிர்வஹிக்கலாம்.

மாம். வெட்டி நாட்டின கொம்புகள் சில உய்யக்காண்கையாலும் வேறொரு चेतनाधिष्ठानம் கூடாது. पुण्यपापங்களடியாக शरीरपरिग्रहம் என்பார்க்கு मनुष्यतिर्यक्स्थावरங்களில் उत्तरोत्तरा

मानम् । अतीन्द्रिये त्वया तस्यानङ्गीकारादिति । ननूक्तस्थले सर्वत्र तत्तद्देवतानां परमपुरुषस्य वा सन्निधानेन तत्तद्व्यापारोपपत्ते र्न चैतन्यस्य चेतनस्वानपेक्षत्वे तानि निदर्शनानीति ततोन्यदुदाहरति- வெட்டி நாட்டினவிதி महतो वृक्षाच्छित्वाऽन्यत्र समारोपितानां शाखानां कासांचित्प्ररोहणदर्शनादित्यर्थः । வேறொருचेतनाधिष्ठानम् - तत्तच्छाखातिरिक्तजीवाधिष्ठानमित्यर्थः । கூடாது इति । एतदुक्तं भवति - विछिन्नशाखाधिष्ठाता जीवः किम्महावृक्षाधिष्ठातैव आहो तद्भिन्नः? आद्ये एकदैकस्य जीवस्य भिन्नदेशस्थविभिन्नवस्तुद्वयाधिष्ठानानुपपत्तिः । स्थावरावस्थायां संकुचितज्ञानस्य तस्य सौभर्यादिवत् धर्मभूतज्ञानद्वाराऽपि नानाधिष्ठानासंभवात् । द्वितीये, महावृक्षस्य छिन्नप्ररूढशाखायाश्च सर्वथा सारूप्यानुभवेन विभिन्नचेतनाधिष्ठाने तदयोगः । युज्यतां वा तत्, अथापि सोयमन्यो जीवः कुत्र पूर्वमासीत्? कुत एतदागात्? कथं वाऽत्रानुप्राविशत्? इत्यादीनां दुर्निरूपत्वम् । सर्वत्राणुभूतजीववर्गो व्याप्त इति चेत् न- कासांचिच्छाखानां शोषणानुपपत्तेः । अत एव मूले "சில" உய்யக்காண்கையாலே इत्युक्तम् । ततोपि शाखा, ततश्शाखान्तरमिति क्रमेण विच्छिन्नसंरोहणे पूर्वविकल्पानतिवृत्तिश्च । भिन्नभिन्नजीवागमनकल्पनेऽतिगौरवम् । तथा च तत्र तत्र शाखोज्जीवनानुज्जीवनयोस्तत्तच्छाखास्वभावायत्तत्वस्य वाच्यतयाऽतिरिक्तो जीवो नास्तीति तद्वत्प्रकृतेपि न देहातिरिक्त आत्मास्तीत्यभिप्रायः । यद्वा "வேறொரு चेतनाधिष्ठानம் கூடாது" इति ग्रन्थ एव प्रकृत विषयोस्तु । तदा "வேறொரு चेतनः- देहातिरिक्तो जीव इत्यर्थो भाव्यः । केचित्तु कण्ठच्छेदे देहे जीवसन्निधाने देहस्य प्ररोहणापत्त्या तदभावे महावृक्षादिषु शाखादिच्छेदेपि प्ररोहणानुपपत्त्याचोज्जीवनानुज्जीवनयोस्तत्तत्स्वभावप्रयुक्तत्वं वाच्यमिति व्याकुर्वन्ति । तन्नसाधु । कण्ठच्छेदस्य वृक्ष मूलच्छेदतुल्यतया तद्वत् प्ररोहणानापत्तेः । शाखाच्छेदेपि कासांचित् शोषणेनाप्ररोहणात् प्ररोहणानुपपत्तेरयोगाच्च । तस्माच्छाखास्वेवोज्जीवनतदभावप्रदर्शनपरोयं ग्रन्थ इति अप्रकृतकण्ठच्छेदप्रदर्शनं ग्रन्थकण्ठच्छेद एव । एवं शरीरस्यातिरिक्तजीवाधिष्ठितत्वं नास्तीत्युक्त्वा तत्परिग्रहस्य पुण्यपाप मूलत्वमपि नास्तीत्याह - पुण्यपापेति । मनुष्येभ्यस्तिर्यंचोऽधिकाः । ततोपि स्थावराणीति उत्तरोत्तराधिक्यं दुर्वचमित्यर्थः । तथा हि प्रथमं स्थावराणां शरीरपरिग्रहविषये - तत्र तत्र शाखाः प्रतिक्षणमवभज्यन्त आरोप्यन्ते च । तत्र सर्वत्र झटित्यनुप्रवेशाय जीवैस्सन्नद्धैर्भाव्यम् । पूर्वं मुक्ता

உடலே உயிர் என்றிருந்தால்தான் ஒரு மரத்திலிருந்து வெட்டி நட்ட கொம்புகள் துளிர்த்து மேன்மேலென தாவரவர்க்கம் பெருக வழியுண்டு. கர்மம் அடியாகவேறு ஒரு ஜீவன் பிறக்கிறான் என்பார்க்கு, மனிதர்களைவிட மிருகங்களும் அவைகளைவிட மரங்களும்

घिक्यத்துக்கு विशेषहेतु சொல்லவொண்ணுது. இப்படி துःखமும் पापफलமல்லாமையாலே दुःख कारणங்களுடைய अत्यन्तनिवृत्ति मोक्षமென்பார்க்கு शरीरनिवृत्तिயே मोक्षமாம். महानन्दलक्षणமே मोक्षமென்பார்க்கு सहस्रादिवाक्योक्तமே मोक्षமாம். विकल्पप्रामाण्यबाधादिகளாலே गुणगुणिभेद

---

नां नित्यानां च नात्रानुप्रवेशः। अपित्वन्यत्र बद्धस्यैव। अन्यत्र च तस्माच्छरीराज्जीवस्याचिरादुत्क्रान्तिनियमो न सुवचः कदाचित्तच्छरीरपरिग्रहहेतुपुण्यपापानां भुक्तशिष्टानामपि संभवात्। अनियतदेशकालफलभोगत्वात्कर्मणाम्। एवं मनुष्यतिरश्चामपि शरीरपरिग्रहेऽनुपपत्तिर्भाव्या। अस्माकन्तु शरीरोत्पत्तेस्तत्तद्द्रव्यस्वभावायत्तत्वे भवत्युत्तरोत्तराधिक्यम्। वत्सरादिव्यवधानेनैकैकशः प्रसूतेभ्यो मनुजेभ्यः मासदिनादिव्यवधानेन संघशः प्रसूतास्तिर्यञ्चोऽधिकसंख्याका भवन्तीति युक्तमेव। तथा तेभ्योपि विच्छिन्नप्ररूढानन्ततरशाखानां विविधबीजानां चाचिरप्रसूत्या स्थावरजन्मानोऽधिकतरसंख्याका इति च। इति।

ननु देहपरिग्रहस्य पुण्यपापफलत्वाभावेऽपि देहे दृश्यमानसुखदुःखयोस्तत्फलत्वात् पुण्यपापादिकर्तृतयातिरिक्तचेतनसिद्धिरनिवार्या। अत एव हि दुःखकारणात्यन्तनिवृत्तिर्मोक्ष इत्युक्तमिति चेत्तत्राह - இப்படி துःखமுமிதி। अपिना सुखस्यापि पुण्यफलत्वं नास्तीत्युच्यते। இப்படிशरीरपरिग्रहस्य पुण्यपापमूलत्वप्रत्याख्यानेन स्वाभाविकत्वस्थापननीत्या। दुःखकारणेति। शरीरस्यैव दुःखकारणत्वात्तन्निवृत्तिरेव मोक्ष इति भावः। नन्वेवं कस्य मोक्ष उक्तो भवति। शरीरस्यैव आत्मत्वेन तन्निवृत्तेस्स्वरूपोच्छित्तिरूपतयाऽनुभवितुरभावात्। तस्या अपुरुषार्थरूपत्वाच्चेत्यनुशयेन आह - महानन्दलक्षणेति। तथा च प्रथमं ''देहविच्छेदो मोक्ष'' इत्युक्त्वा तदनन्तरं ''सहस्रयुवतिसंभोगो वे''ति कल्पान्तरारंभात् बृहस्पतेरत्रैव निर्भर इति देहावस्थानकाल एवास्य मोक्षस्य लाभान्न पूर्वोक्तानुपपत्तिरिति हृदयम्। तदुक्तं संकल्पसूर्योदयेपि ''शरीरप्रलयो मुक्तिर्भोगस्तु रतिरुत्तमा। देवतास्तत्प्रदायिन्यः स्त्रियस्तारुण्यभूषिता'' इति। ब्रह्मानन्दानुभवो मोक्ष इत्यत्रापि ब्रह्म स्त्रिय एवेत्युक्तं तत्रैव। ''परमानन्ददायिन्यः प्रजानां सृष्टिहेतवः। ब्रह्मलक्षणशालिन्यो न कथं ब्रह्म योषित'' इति। ''सहस्रस्थूणे विमिते दृढ उग्र'' इति वेदान्तिनामिवास्माकमपि सहस्रादिवाक्यमेकमस्तीति चार्वाकस्स्पर्धमान इवैतदाह- सहस्रादिवाक्योक्तமேइति। यद्यपि बौद्धसांख्यादिमते शरीरातिरिक्तात्माङ्गीकृत इव भाति। तथापि ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविशिष्टनित्यात्मा तेषामपि न सम्मत इति तदंशे स्वेन तेषां साम्यमेवेत्याह- विकल्पप्रामाण्येति। विकल्पः- सविकल्पकं, गुण

அதிக எண்ணிக்கைபெற்றிருப்பது என் என்று கேட்டால் பதில் சொல்ல வழியில்லை. ஆகையால் இம்மதத்தில் பாபத்தினுல் துக்கம் உண்டாகிறது என்றில்லை. உடல் அழிந்தால் துக்கம் தொலையும். அதுவே மோக்ஷம். அல்லது கட்டிளம்வயதினராய் இருக்கும், அத்தகைய ஆயிரம்

भङ्गமாதல், अहेतुकविनाशத்தாலே क्षणभङ्गமாதல், निर्वचनायोग्यतादिகளாலே कार्यकारणस्वरूपभङ्गமாதல், ग्राह्यलक्षणायोगादिகளாலே बाह्यार्थभङ्गமாதல், सर्वानुपपत्तिகளாலும் सर्वशून्यत्वமாதல் கொள்ளும் पक्षங்களுக்கு ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविशिष्टனை नित्यात्माவையிசையவேண்டாம்.

---

गुणिनोर्भेदावगाहिविशिष्टज्ञानम् । तत्प्रामाण्यबाधे गुणगुणिनोर्भेदस्य भङ्गो भवति । इदं च द्वितीयादिबौद्धानां शांकरादीनां च मतम् । विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लव इत्युक्तेः । एतेन "विकल्पप्रामाण्यबाधादीत्यत्र" विकल्पः-वृत्तिविकल्पः, एतद्वान्यद्वेति विकल्पश्च । प्रामाण्यं प्रमा, बाधः-प्रबलेन बाध इत्यादिरीत्या द्वंद्वसमासेन केषांचिद्व्याख्यानं शब्दशक्तिसंप्रदायादिविरोधाप्रकृतत्वादिभिर्निरस्तम् । अहेतुकविनाशेति । इयमपि माध्यमिकातिरिक्तबौद्धानां कक्ष्या । मुद्गराद्यभिघातमन्तरा प्रतिक्षणभावी विनाशोऽहेतुकः । निर्वचनायोग्यतेति । "न चेदुत्पत्तिरुत्पत्तेर्नित्यत्वमनवस्थितिः । उत्पत्तावित्यतः कार्यं कारणं चानिरूपित"मित्यादिना निर्वक्तुमयोग्यत्वं कार्यकारणभावस्य वक्ष्यते सांख्यभंगे । इदं च सांख्यचार्वाकयोस्संमतम् । इयांस्तु विशेषः- सांख्यस्सत्कार्यवादप्रतिष्ठापनश्रद्धया कार्यकारणभावं बभञ्ज । चार्वाकस्तु कण्टकतैक्ष्ण्यपरिवेपादि दृष्टान्तदर्शनमात्रेणेति । ग्राह्यलक्षणेति - ग्राह्यं-नानाज्ञानसन्ततिग्रहणयोग्यं बाह्यं वस्तु । लक्षणं-तस्य स्वरूपम् । तदयोगश्च "अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति योगाचारोक्तः । सर्वानुपपत्तीति - "इदमहं जानामी"ति प्रतिपन्नज्ञातृज्ञेयज्ञानरूपसर्वार्थानामपि "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः" इति माध्यमिकेनोक्तं शून्यत्वमित्यर्थः । एतेषां च विशदमुपपादनं तत्तत्प्रकरणेषु भविष्यति । ज्ञातृत्वकर्तृत्वेति - गुणगुणिभेदभङ्गे ज्ञातृत्वादिवैशिष्ट्यासिद्ध्या, क्षणभङ्गे नित्यत्वासिद्ध्या कार्यकारणभावाभावे कर्तृत्वस्य हानेः बाह्यार्थाभावे तद्भोक्तृत्वस्य चानुपपत्तेस्सर्वशून्यत्वे धर्मिण एवाभावात्, तन्मते असन्मते च ज्ञातृत्वकर्तृत्वभोक्तृत्वादिविशिष्टनित्यात्मासिद्धिरित्यर्थः । ननु नित्यस्यात्मनोऽभावे देहानन्तरं किं भविष्यति । देहस्थितिकाले च किं कर्तव्यम् । कामचारे च

யுவதிகளை அணைதல் மோக்ஷானந்தம் என்பாரும் உண்டு அறியும் திறமையும், க்ரியாசக்தியும் அநுபவிக்கும் ஆற்றலும், உடைய நித்யமான ஆத்மவஸ்து கிடையாதென்று நாங்கள் மட்டும் கூறவில்லை. பின்னே "ஸர்வமும் சூந்யம் எனறும், ஜ்ஞாநம் மட்டில் உண்டு என்றும, வெளிப் பொருளும் உண்டு, ஆனால் அது ஜ்ஞாநத்தினால் ஊஹிக்க வேண்டியதாய் உள்ளது; என்றும்" எப்பொருளும் க்ஷணந்தோறும அழியும் தன்மையது என்றும் இப்படிப் பலவாருகச் சொல்லும் பௌத்தர் நால்வரும் இப்படியே ஒப்புகின்றாகள். ஆகையால் புண்யம், பாபம் என்று பாராமல் தற்செயலாகவோ, தன் முயற்சியினாலோ எந்த போகம் கிடைத்தாலும் அதை அநுபவித்து உடல் உள்ளவரை வாழ்ந்து, இறந்து மறைந்து போகவே உள்ளது என்பார்கள். இம் மதம் முன் சொன்னது போல் மேதைக்குப் பேர் போன ப்ருஹஸ்பதி வெளியிட்டது என்பதுடன், உபநிஷத்து, (சாந்தோக்யம்) இதை அடியில் ப்ரஜாபதி விரோசனனென்னும் அஸுரர் தலைவனுக்குச் சொன்னானெனவும், அவன் தன் பந்துக்களுக்கெல்லாம் உபதேசித்தானெனவும்,

ஆகையால் धर्माधर्मभयங்களை விட்டு स्थावरतिर्यक्குகள் போலே अयत्नसिद्धமாயும் स्वयत्नसिद्धமாயும் வருகிற दृष्टभोगங்களை भुजित्து नष्टனைப் போகவேயுள்ளதென்பார்கள்.

### இம்மதத்திற்கு ப்ரவர்த்தகர்கள்

இப்பக்ஷத்தை प्रजापति विरोचनனுக்கு उपदेशिக்க, அவனும் தன் बन्धुக்களுக்கெல்லாம் சொல்ல, இத்தை असुरர்களுடைய उपनिषत्தென்று वेदம் தானே சொல்லிற்று. இது बुद्धिमान्

---

प्रत्यवायश्रवणादित्याशङ्कायामाह - ஆகையாலிதி । धर्माधर्मेति । तदुक्तं- "न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः" इति । तथा च परलोकाद्यभावेन न धर्माधर्मभयम् । तथापि दृष्टभोगाय प्रयतनीयम् । तत्र च प्रबलविरोधे भेतव्यमेव । वंचनादिना वा परिहर्तव्यमित्युक्तं भवति । तथाचोक्तं वात्स्यायनभाष्ये- "तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषाम् । दोषास्तु परिहर्तव्या इत्याचार्यैस्स्थिरीकृत"मिति । धर्माधर्मभयं विना भोक्तरि दृष्टान्तः स्थावरतिर्यञ्चौ । स्थावराणामपि ग्लान्यादिदर्शनादस्ति भोगः । स्थावराणामयत्नसिद्धो भोगः । तिरश्चां तूभयथापि । दृष्टभोगங்களை इति । अत एव वात्स्यायनसूत्रं- "न धर्मान् चरेदेष्यत्फलत्वात् । सांशयिकत्वाच्च । को ह्यबालिशो हस्तगतं परगतं कुर्यात् । वरमद्य कपोतश्श्वो मयूरात् । वरं सांशयिकान्निष्कादसांशयिकः कार्षापण इति लोकायतिका इति । कार्षापणः-ताम्रिकः पणः । निष्कः-स्वर्णमुद्रा । नष्टனைப் போகவே इति । देहस्यैवात्मत्वेन तस्यानित्यत्वात् स्वरूपोच्छित्तावपि नास्माकमनिष्टमिति भावः ।

अथ स्वमतस्य बौद्धादिव्यावृत्तये वेदान्तपरिग्रहं दर्शयति- இப்பக்ஷத்தையிதி । देहात्मवादिपक्षमित्यर्थः । छान्दोग्याष्टमाध्यायसप्तमखण्डे "इन्द्रो ह वै देवानामभि प्रवव्राज, विरोचनोऽसुराणां, तौ हासंविदानावेव प्रजापतिसकाशमाजग्मतुरित्यादि द्रष्टव्यम् । उपदेशिக்கவிதி । "य आत्मापहतपाप्मेति निष्कृष्टात्मस्वरूपविषयकं प्रजापतिवचनं सामान्यतश्श्रुत्वा तदर्थजिज्ञासयोपगताभ्यामिन्द्रविरोचनाभ्यामुदशराव आत्मावलोकनस्य प्रजापतिना विधाने, तत्र शरीरं प्रतिफलितं दृष्ट्वा तस्यैवात्मत्वनिश्चयेन विरोचनश्शान्ताकांक्षो जगाम । "स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम । तेभ्यो हैतामुपनिषदं प्रोवाचेति" श्रुतेः । इन्द्रस्तु तत्राप्यपरितुष्यन् पुनः प्रजापतिमागत्य देहातिरिक्तमात्मानमधिगम्य प्रतिनिवृत्त इति च भाव्यम् । இத்தை असुरர்களுடையவிதி । "तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरसुरो बतेत्यसुराणां ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्ति एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्त इति श्रुतेः । तर्हि देवानामन्योपनिषदिति देवप्रकृतीनामिदं मतं त्याज्यमेव भवेदित्यत्राह- இது बुद्धिமான்களுக்கு इति ।

களுக்கு निदर्शनமான देवगुरुவினுடைய மதமென்று இரண்டுபடியாலும் இதுக்குண்டான अन्वयத்தை वैदिकர் தாங்களுமிசைந்தார்கள். जाबालியும் உள்கிடந்த लोकायतமதத்தை ஓரளவிலே உமிழ்ந்தான். महाभारतத்தில் कण्वाद्याश्रमवर्णनத்திலே "लोकायतिकमुख्यैश्च" என்று மற்றுள்ள

"बृहस्पतिसमो बुद्ध्येति वचनादिति भावः। देवगुरुவினுடைய इति। तथा च स्वशिष्येभ्यो देवेभ्योऽपि स इदमेवोवाचेति देवानामपीयमेवोपनिषदिति तात्पर्यम्। एवमेतन्मतस्योत्कर्षो वैदिकैरभ्युपगत इत्याह- இரண்டுபடியாலுமிதி। प्रजापतिबृहस्पतिभ्यामित्यर्थः। सुरासुरगुरुभ्यामिति वा। असुरगुरुर्विरोचनः। अन्वयस्सम्बन्धः। वैदिகர் தாங்களுமிதி। चार्वाकमतस्यासुरोपनिषत्त्वेनोपनिषदि कीर्तनात्, उपनिषत्प्रामाण्यसमर्थनेन तत्प्रामाण्यमपि समर्थितप्रायमिति भावः। तथा च संकल्पसूर्योदये- "तदिह त्रय्यन्तवादिभिरुपनिषत्प्रामाण्यसमर्थनमप्यस्माकमरातिकरलिखितविजयपत्रायत" इति।

नन्वथापि वेदान्तेषु पूर्वपक्षतयोपन्यासस्स्यात्। असत्कार्यवादादिप्रस्ताववत्। "त्वं हि रुद्रमहाबाहो मोहशास्त्राणि कारयेति,,रीत्या बृहस्पतिनोपदेशसम्भवात्। प्रजापतिपक्षत्वेऽपि योग–सिद्धान्ततुल्यतोपपत्तेश्चेति शङ्कायामाह- जाबालियுமிதி। "वसिष्ठो वामदेवश्च जाबालिरथ काश्यप" इत्युक्तप्रभाव इत्यर्थः। अत एव चार्वाकसमयमुपन्यस्यन्नपि "जाबालि र्ब्राह्मणोत्तम" इति प्रशंसित इति भाव्यम्। உள் கிடந்த- स्वान्तस्थम्। एतेनैतदीयस्य वैदिकधर्मानुष्ठानस्याहृदयत्वं चार्वाकसमयप्रकाशनायावसरप्रतीक्षत्वं च द्योतितम्। "भवेय काले पुनरेव नास्तिक" इतिहि उक्तम्। ஓரளவிலே- श्रीचित्रकूटे रामभरतसमागमसमये। உமிழ்ந்தான்-उद्गिरतिस्म। उवाचेत्यर्थः। तदुक्तं साधु राघव माभूत्ते बुद्धिरेवं निरर्थिका। प्राकृतस्य नरस्येव ह्यार्यबुद्धेर्मनस्विनः॥ ...स नास्ति परमित्येव कुरु बुद्धिं महामते। प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु॥ इत्यादि। वीरराघवाचार्य-कृते सदस्यमुखवासनाकाव्ये - जय्यो नायुधिभिर्मृधे न च वचश्चातुर्यहार्यक्रमो नोत्कोचप्रवणश्च कोपि बलवान् आकर्षति प्राणिनम्। प्रस्थाने कलितेपि गम्यविषयं न स्वस्य जानात्ययं नाथाति प्रहिणोति नैव च पुनर्मित्रं च पत्रं च वा॥ इत्यादि च परलोकप्रतिक्षेपकं वचनमन्यत्र भाव्यम्। एवमितिहासयोः श्रीमद्रामायणं प्रदर्श्य पंचमवेदं महाभारतमपि प्रमाणयति- மஹாபாரதத்தில் इति। आदिपर्वणि शकुन्तलोपाख्याने "नानाशास्त्रार्थमुख्यैश्च शुश्राव स्वनमीरितम्। लोकायतिकमुख्यैश्च समन्तादभिनादितम्। इत्युक्तम्। மற்றுமுள்ள सिद्धान्तिகளோடொக்கவிதி। "न्यायतत्त्वार्थ

ஆக அஸுரர்கள் விரும்பி வரவேற்கும் உபநிஷத்து இந்த மதம் எனவும் கூறுகிறது. ஜாபாலி என்னும் ப்ராம்மணோத்தமன் ஸ்ரீ சக்ரவர்த்தித்திருமகனுக்கு ஹிதம்கூறும் கணக்கில், தம்முள் அடக்கி வைத்திருந்த இந்த மதஸாரத்தை தன் போக்கில் வெளியிட்டான். மஹாபாரதத்தில்

सिद्धान्तिकளோடொக்க இவர்களையும் எடுத்தது. धर्मविरुद्धार्थकामங்களில் अनुतापமற निरन्तर-प्रवृत्तராய் जनानुरागमात्रप्रधानரானவர்களெல்லாம் இஸ்सिद्धान्तத்துக்கு समयिகள். लोकव्यवहार-सिद्धனான ईश्वरன் यथालोकம் आराध्यன். வேறேகு वेषाचारादि लक्षणம் வேண்டா. ஆகையால் இஸ்सिद्धान्तம் प्रमाण, तर्क, परपक्षाभ्युपगमங்களாலே प्रबलतमமென்பர்கள்.

---

विज्ञानसम्पन्नैर्वेदपारगैः । ऋचो बह्वृच मुख्यैश्च प्रेर्यमाणाः पदक्रमैः''रित्युक्तमित्यर्थः । तथाचाय-मप्यपरो मुख्यसिद्धान्त इति व्यासाभिप्राय इति भावः । ननु वैदिकानामपि त्वन्सिद्धान्ताभिमानित्वे तेऽपि लोकायतिकास्स्युरित्यत्रेष्टापत्तिं दर्शयति- धर्मविरुद्धेति । परद्रव्यदाराद्यपहरणादीत्यर्थः । ''धर्म विरुद्धो भूतेषु कामोसि भरतर्षभ'' इत्युक्तव्यावृत्तये धर्मविरुद्धेति । कदाचिद्धर्मविरुद्धेषु प्रसक्ता अपि येऽनुतप्तहृदयाः क्षणं भवन्ति ''अनुतापादुपरमात्प्रायश्चित्तोन्मुखत्वतः । तत्पूरणाच्चापराधास्सर्वे नश्यन्ति पादश'' इति स्मृतेः न तेऽस्य समयिन इत्याह- अनुतापமற इति । परद्रव्याद्यपहारेऽहमे-तद्देहानन्तरं कथं भविष्यामीति स्वविषयः, परः कथं वा क्लिश्येतेति परविषयश्चानुतापो बोध्यः । ''जनेनावमतो योगी योगसिद्धिं च विन्दति'' ''सम्मानना परां हानिं योगर्द्धेः कुरुतेतराम्'' ''न शब्दशास्त्राभिरतस्य मोक्षो न भोजनाच्छादनतत्परस्य । न चैव रम्यावसथप्रियस्य न लोकचित्त-ग्रहणे रतस्येत्यादिसिद्धविरक्ताधिकारिव्यावृत्तय उक्तं जनानुरागमात्रप्रधानेति । ''जनानुराग-प्रभवा हि सम्पद'' इति जनानुरागस्य सम्पद्धेतुत्वादिति हृदयम् । இஸ்सिद्धान्तத்துக்கு समयिகள் इति । पाकं पचतीतिवन्निर्देशः । ''समयाश्शपथाचारकालसिद्धान्तसंविद इति सिद्धान्तसमययोरविशे-षात् । तथाचान्यसिद्धान्तनिष्ठानामपि हार्दोऽयमेव भाव इति सर्वेपि तेऽस्य समयिन एवेत्याशयः । अत्रेश्वरानभ्युपगमदोषं परिजिहीर्षति - लोकव्यवहारेति । तदुक्तं- लोकसिद्धो भवेद्राजा परेशो नापरस्स्मृत इति । यथालोकमिति । ईश्वरस्य लोकसिद्धत्वात्तदाराधनमपि तदिच्छानुसारेण यथा-दर्शनमेवेत्यर्थः । तथा च ''वर्णाश्रमाचारवता पुरुषेण परःपुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोष कारक''इत्याद्युक्तनियमव्यावृत्तिमाह- வேறேகு वेषाचारेति । एवं ''सर्वसंप्रतिपन्नेत्यारभ्य स्वमतस्य प्रपंचितं प्रबलतमत्वं निगमयति- ஆகையாலிதி । प्रमाणं प्रत्यक्षं तदनुसार्यनुमानं च । तर्कः வெட்டிநாட்டினகொம்புகள் इत्याद्युक्ता युक्तयः । परपक्षाभ्युपगमः- वेदवैदिकादिपरिग्रहः ।

---

*கண்வருடைய பர்ணசாலையில் பிற மதஸ்தரோடு இந்த மதஸ்தரும் இருந்ததாக வர்ணிக்கப்-பட்டது. பொருளும், இன்பமும் பெரும்பயன் எனக் கருதி, ஜநங்களைக் கவர்ந்திழுக்க விழை-பவர் எல்லோரும் இந்த ஸித்தாந்தத்தை விரும்பி ஏற்பர். இவர்கள் கடவுள் என்பது, கண்ணால் காணக் கூடிய அரசனையே. அவனை பூஜிக்கும் வகை நாமெல்லோரும் அறிந்ததே. ஆக காணுக் கடவுளுக்கு என்று வேறு பாஷை வேஷம் என்று ஒன்றும் வேண்டாம். அதனால் எந்த விதத்தில் நோக்கினாலும் இந்த மதமே ச்ரேஷ்டமானது என்பார்கள்.*

**அநுமாநசப்தங்களும் ப்ரமாணங்களே**

இம்மதத்தை निरसिக்கும்படி சொல்லுகிறோம். இவர்கள் प्रत्यक्षமொன்றுமே प्रमाण-மென்றது अनुपपन्नம். अनुमानागमங்களாலும் ज्ञानம் பிறக்கக்காண்கையாலும், இந்த ज्ञानம் संशय-रूपமாயிராமையாலும், இதற்கு ஒரு बाधकம் காணாமையாலும், "विशेषेऽनुगमाभावादि"त्यादि-

---

एवं तन्मतमुपन्यस्य विस्तरेण तत्खण्डयिष्यन् श्रोतॄणामवधानाय तत्प्रतिजानीते- இம் मतத்தையிதி । சொல்லுகிறோமிதி । "स्वशिष्यान् प्रतीति शेषः । चार्वाकस्य मते कार्यकारणभावाभावाज्जयपराजयाद्यर्थवादप्रवृत्त्याद्यसंभवेन कथानर्हत्वा"दिति केचिद्व्याचक्रुः । तत्तु न मन्यामहे । दर्शनानुसारेण निरुत्तरत्वोत्तरोत्तरवक्तृत्वादीनामेव जयपराजयादिरूपतया तत्तत्कथास्वभाव सिद्धत्वस्य कण्टकतैक्ष्ण्यादिवत् तेनापि स्वीकारोपपत्तेश्शून्यवादिनामिव कथानधिकाराभावात् । अस्तु वा तेषामपि कथानधिकारः । तथापि तत्र कारणमनुमानादीनामप्रमाणत्वकथनेनासदुपायत्वमेव । न तु कार्यकारणभावानंगीकार इति । मेयसिद्धेर्मानाधीनतया प्रथमं तदीयप्रमाणव्यवस्थां खण्डयति- प्रत्यक्षமொன்றுமேइति । प्रत्यक्षமே प्रमाण"मित्येतावति पर्याप्तेपि, "प्रत्यक्षமொன்றுமே,, इत्यधिकोक्त्येदमप्यनुसंहितम् । तेषाम्मते "प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकं चेति । तत्र प्रथममनवधारणात्मकतयाऽप्रमाणं । द्वितीयन्तु प्रमाणमिति । तथाचोक्तरीत्या प्रत्यक्षेपीदमेकमेव प्रमाणमिति तत्पक्षोपि न संभवतीति । तथाहि- किमिदं निर्विकल्पकस्यानवधारणात्मकत्वं - संशयरूपत्वमितिचेत्, सविकल्पकस्यापि कदाचित्संशयरूपत्वं भवति । वैशिष्ट्यानवगाहित्वमित्यपि न । असिद्धेः । यतो निर्विकल्पकमपि विशिष्टविषयकमेव । संशयोत्पादकत्वमित्यपि सविकल्पकसाधारणमिति न निर्विकल्पकस्यानवधारणतयाऽप्रामाण्यमिति । अनुमानादीनामप्रामाण्यं किं तेषां प्रतीत्यजनकत्वात् किं वा संशयजनकत्वात्, उत बाधितबुद्धिजनकत्वात्, अथ तज्जनकव्याप्तिज्ञानाद्यसंभवात्, इति विकल्प्य प्रथमं परिहरति- अनुमानागमेति । द्वितीयं निरस्यति- இந்த ज्ञानमिति । प्रत्युत पक्षे साध्यसंशयनिवर्तकमेवेति च बोध्यम् । तृतीयं दूषयति- இதற்கொரு इति । शुक्तिरजत ज्ञानस्येवेत्यर्थः । चतुर्थमपि निराकरोति- विशेषेऽनुगमेति । एतत्कारिकार्थश्च पूर्वमेव विवृतः । स्ववचनविरोधेति । अयं भावः- विशेषेऽनुगमाभावादिनाऽनुमानप्रामाण्यनिराकरणवाक्यमिदं त्वदीयं किन्निर्मूलम्, उत समूलम् । तत्राप्यनुमानमूलमथवा तर्कमूलम् । निर्मूलत्वे प्रलाप एवायम् । प्रलापो

---

இனி இம்மதத்தைக் கண்டிக்கிறோம். ப்ரத்யக்ஷத்தால் அறிவது ஒன்றே உண்மை என்பது முதலில் தவறு. சிலவற்றை அநுமாநம் செய்கிறோம். சொல்லக் கேட்டறிகிறோம். அவைகூட உண்மையாகவே இருக்கின்றன. நிச்சயமான. அந்த அறிவு எதனாலும் பாதிக்கப்படுவதில்லை. ஆக அநுமானம் சப்தம் இவைகளும் ப்ரமாணமே. அநுமாநம் கூடாது என்பதற்கு நீங்கள் சொன்ன ஹேதுக்களே அநுமானத்தின் உருவில் இருப்பதால் உங்கள் பேச்சு

கள, स्ववचनविरोधादिदूषितங்களாகையாலும், प्रत्यक्षத்துக்குப்போலே இவற்றுக்கும் प्रामाण्य-மிசையவேணும். இசையாதொழியில் प्रत्यक्षம் தானும் प्रमाणமன்றிக்கேயொழியும். अनुमाना-गमங்களிலே சில बाधितங்களாகக் காண்கையாலே, மற்றுமுள்ளவற்றுக்கும் यादृच्छिकसंवा-दமேயுள்ளதென்னில், இது प्रत्यक्षம் தன்னிலும் சொல்லலாம். प्रमाणान्तरங்கள் இல்லை என்கிறவர்கள் தாங்களே, உண்டால் பசி கெடுமென்று போலே अनुमित्तது भोजनादिகளிலே प्रवृत्ति-

ऽनर्थकं वच इति । उत्तरत्रोभयमूलत्वेपि व्याप्त्यपेक्षा दुर्वारा । व्याप्तिरेव हि तर्कानुमानयोर्जीवा-तुः । तथा च व्याप्तिसद्भावासद्भावाभ्यामनुमानप्रामाण्यनिराकरणायोग इति । स्ववचनविरोधादीत्य-त्रादिना लोकोपलंभविरोधोपि क्रोडीकार्यः । तथा च फलितमाह– प्रत्यक्षத்துக்குப்போலே इति । ननु सर्वत्रानुमानेऽतीन्द्रियोपाधिशङ्कायां हेतुनिष्ठनिरुपाधिकसाध्यसंबन्धरूपव्याप्तेर्दुर्ग्रहत्वादनुमान मप्रमाणमेवेत्यत्राह- இசையாதொழியில் । अयमर्थः- प्रत्यक्षं कथं प्रमाणमिति प्रश्ने हेतूपन्यासे, तदप्रामाण्यात्प्रत्यक्षप्रामाण्यमपि तत्साध्यं न सिद्ध्यति । अनुपन्यासे च सुतराम् । निर्बीजशङ्का-याश्च सर्वत्र सुलभत्वादतीन्द्रियोपाधिशंकायां हेतुः कश्चन वाच्यः ! तथाचायातमनुमानेन । कार-णाभावे च शंकाभावात्तदाप्यनुमानं जीवत्येव । तदुक्तं "शंकाचेदनुमास्त्येव, न चेच्छङ्का तत-राम् । व्याघातावधिराशंका तर्कश्शंकावधिर्मतः" इति । तदेव ह्याशंक्यते, यस्मिन्नाशंक्यमाने स्वक्रिया व्याघातादयो न भवन्ति । तर्कश्चानन्यथासिद्धश्शंकां वारयतीति । ननु प्रत्यक्षस्य प्रामाण्यप्रतिष्ठाप-नायानुमानादीनां प्रामाण्यमङ्गीकरणीयमिति न संभवति । ह्रदो वह्निमानित्यादीनां तेषां प्रत्यक्ष बाधितत्वात् । पर्वतो वह्निमानित्यादीनां च यादृच्छिकप्रत्यक्षसंवादमात्रेण प्रामाण्यभ्रमादित्यत्र प्रति-बन्दिमाह– अनुमानागमेति । இது प्रत्यक्षेति । तथा च शुक्ताविदं रजतमित्यादिप्रत्यक्षस्य नेदं रजतमित्यादिप्रबलप्रत्यक्षेण बाधितत्वात्, अन्येषु च प्रत्यक्षेषु यादृच्छिकफलसंवादेन प्रामाण्याभि मानात्, न प्रत्यक्षं प्रमाणमिति प्रसंगस्य तुल्यत्वादित्यर्थः । अतः प्रत्यक्षमनुमानादिकं च न सर्वं प्रमाणम्, अप्रमाणं वा भवति । विषयानुगुण्येन प्रमाण्याप्रामाण्ययोर्व्यवस्थापनादिति हृदयम् ।

विश्च वैतण्डिकान् प्रति प्रतिबन्देरनुत्तरत्वादिष्टापत्तिसम्भवादाह- प्रमाणान्तरங்கள் इति । என்கிறவர்கள் தாங்களே इति । तथा च स्वोक्तिविरोध इत्यर्थः । अनुमித்து इति । मदीया क्षुद्यथा

---

முனனுக்குப் பின் முரணபட்டுள்ளது உள்ளதை நீங்கள் அறிககப்பாரத்தால், நாஙகளும ப்ரதயக்ஷஙகூட சரியன்று எனறு அதையும அறிபபோம. அநுமாந சப்தஙகளில சிலவை ஆபாஸஙகளாயுள்ளன என்ற வாதம ப்ரதயக்ஷததிலும வரும. அநுமாநம தவறு என்றால நீஙகள எபபடி உணண உடகாருகிறீர்கள். உண்டால் பசி போம என்பதும ஓர் அநுமாநமே யலலவா? பசிபோவதைக கண்ணால் கண்டீர்களா? உமது உடலில் ஓர வயாதி இருப்பதை நீர காணவும அநுமானிககவும முடியாத நிலைமையில் ஓர் படிதத வைதயமேதாவி அது இருபப-தாகச் சொல்ல, அதை நம்பி நீர் ஏராளமாகப் பணச்செலவு செய்கிறீரே? ஆப்தன் வாக்யம

யாநின்றார்கள். தங்களுக்கு प्रत्यक्षानुमानविषयமல்லாத நிலங்களிலே आप्तवाक्यத்தை विश्वसित्து निश्शंकமாக धनव्ययादिகளைப் பண்ணாநின்றார்கள். ஓர் आप्तன் தங்களுடைய सिद्धान्तத்தைச் சொன்னானென்று கேட்டு இத்தை विश्वसिத்திராநின்றார்கள். दृष्टार्थमन्त्रौषध शिल्पज्योतिष निमित्तादिशास्त्रங்கள் अन्वयव्यतिरेकங்களால் அறியவொண்ணாத विषयங்களிலே निपुणனுக்கு संवदिக்கக் காணாநின்றோம். இப்ப்ரகாரத்திலே पारलौकिकशास्त्रங்களிலும் अतिशंकै பண்ண

---

पूर्वं भोजनेन शान्ता तथैवाद्यापीति व्याप्तिं भूयोदर्शनेन गृहीत्वा मदीयेयं क्षुत् भोजनेन शमयितव्या क्षुत्त्वात् प्राक्तनवदित्यनुमिन्वन्तीत्यर्थः। न चेदं प्रत्यक्षेण चरितार्थम्, एतद्भोजनक्षुन्निवृत्त्योः कार्यकारणभावस्य भोजनात्पूर्वमदृष्टेः, दृष्टसंबन्धयोः प्राक्तनयोश्चाद्याविद्यमानत्वाद्व्यक्त्यन्तरत्वाच्च। என்றாற்போலே भोजनादीत्यादिना च पिपासानिवर्तकजलपानग्रहणम्। एवमनुमानप्रामाण्यमवश्याभ्युपगमनीयमित्युक्त्वा शब्दप्रामाण्यस्यापि तथात्वमाह- தங்களுக்கு इति। நிலங்களிலே- वस्तुषु। देशान्तरे निधिरस्तीत्याप्तमुखेन श्रुत्वा तदधिगमाय निश्शंकं धनं व्ययीकुर्वन्ति। तदिदं तद्वाक्यप्रामाण्यनिश्चयं विना न घटत इत्यभिसन्धिः। ननु आप्तवाक्यं विश्वस्येत्येतदसिद्धम्। तत्र प्रामाण्यानिश्चयेपि तत्संभावनामात्रेणैव प्रवृत्तिसिद्धेरित्याशंक्याह- ஓர் आप्तன் इति। प्रत्यक्षमेकमेव प्रमाणमिति बृहस्पतिवाक्यप्रामाण्यादेव हि प्रमाणान्तराणां प्रामाण्यनिराकरणप्रयास इति भावः। नन्वेवमपि शब्दस्यातीन्द्रियार्थेषु प्रामाण्यं नास्ति। न च मन्त्रायुर्वेदादीनां कथं प्रामाण्यमिति वाच्यम्। तेषामपि दृष्टार्थत्वस्यैव पूर्वमुक्तत्वादित्यत्राह- दृष्टार्थेति। एतत् सर्वत्रान्वेति। शास्त्रशब्दस्यापि प्रत्येकमभिसम्बन्धः। औषधशास्त्रमायुर्वेदः। निमित्तशास्त्रं- शकुनज्ञानम्। आदिना यन्त्रशास्त्रादीनां ग्रहणम्। यद्यप्येतानि अयस्सूर्यचन्द्रकान्तादिन्यायेन क्वचिद्व्याधिविषहरणादिदृष्टार्थानि भवन्ति, तथापि निपुणैः प्रयुक्तानीमानि तत्रतत्रान्वयव्यतिरेकाभ्यां दुरधिगमात्यन्तातीन्द्रियभूतावेशादिपरिहारेणापि फलेन संवदन्त इति तन्नीत्या पारलौकिकशास्त्रप्रामाण्यमपि सेत्स्यति। अन्यथार्धजरतीयापत्तेरिति भावः। तदिदमाह- இப்ப்ரகாரத்திலே इति। பண்ண

---

*ப்ரமாணமென்பதுதானே அதன் அர்த்தம்? உங்கள் ஸித்தாந்தத்தை அந்த நாளில் ப்ருஹஸ்பதி சொன்னார் என்பது உங்களுக்கு ஆப்தவாக்யமூலமாகத்தானே கிடைத்திருக்கிறது. மந்த்ரசாஸ்த்ரம், ஆயுர்வேதம், சில்பம், ஜ்யோதிஷம் இவைகள் ஒவ்வொரு ஸமயம் கண்ணுக்குப் புலப்படாத அம்சங்களை வலியுறுத்துவதையும், அவைகள் உலகாநுபவத்துக்கு ஒத்திருப்பதையும் பார்க்கிறோம். அந்த சாஸ்த்ரங்களில்போல் பரலோகத்தைப்பற்றி பேசும் சாஸ்த்ரங்களிலும் நாம் நம்பிக்கைகொள்ளவேணும். பரலோகம் உண்டு என்பதில் ஸந்தேகம் உதித்தாலும் அது இருப்பதாகவே நினைத்து முன்ஜாக்ரதையாக நாம் நடந்துகொள்ளவேணும் முடிவில் பரலோகம் இல்லாதுபோயினும் ஜாக்ரதையுடன் இருந்தவனுக்கு ஒரு கெடுதியுமில்லை. அஜாக்ரதையாக நடந்தவன் பாதிக்கப்படுவான். ''ப்ரத்யக்ஷா ச்ருதி:'' என்ற ஸ்ரீ பராசரபட்டர் ச்லோகம் இங்கே குறிப்பிடத்தக்கது. (இதன் கருத்து ஒருவாறு இந்த அதிகாரத்தின் முதற்பாட்டில் காணலாம்)*

வொண்ணாது. शंकमानனுக்கும் "अस्तिचेन्नास्तिकोहतः" என்கிற न्यायத்தாலே शास्त्रातिलङ्घनம் उचितமன்று. "प्रत्यक्षाश्रुतिरर्थधीश्च" என்கிற श्लोकத்தை இங்கே पठिப்பது.

---

வொண்ணாது इति । "प्रत्ययार्थं च मोक्षस्य सिद्धयस्सम्प्रकीर्तिता इति वचनादिति भावः । अतिशङ्कायां बाधकमुपन्यस्यति- शङ्कमानனுக்கும் इति । "नास्ति चेन्नास्ति नोहानि" रिति पूर्वः पादः । अत्रेदमुक्तं भवति- परलोकादीनामत्यन्तातीन्द्रियत्वेन तत्र योग्यानुपलब्धेरभावात्तद्व्यतिरेकस्तावन्ननिश्चेतुमर्हः । शङ्का परंभवेत्तन्निर्णायकाभावात् । सा तु न युक्ता । यथा झाटाद्यन्तरिते गजादौ सन्दिग्धेप्यसावस्तीत्येव कृत्वा जागरूकैर्भूयते, तथा सर्वैरपि परलोकादौ अस्तित्वं कृत्वैव यत्नैस्तदनुगुणमनुष्ठेयम् । नोन्मत्तकेलिर्युक्ता । अन्ततः परलोकाभावेपि "यत्ने कृते यदि न सिद्धयति कोत्र दोष" इति न्यायेन नास्माकं किञ्चिदनिष्टम् । यथेच्छसञ्चरणकुतूहलिनो नास्तिकास्तु परलोकसत्त्वे हता एव; नरकाद्यनुभवादिति । ननु शंकमानस्यापि शास्त्रातिलंघनमयुक्तमित्यनेन न शास्त्रप्रामाण्यं प्रतिष्ठापितं भविष्यति - शङ्कायामपि तदनुष्ठानमात्रस्यैव साधनादिति मत्वा शास्त्रप्रामाण्यं प्रत्यक्षप्रामाण्येनैव सिद्धयतीति प्रतिपादयन्तीं भट्टपराशरपादीयां सूक्तिमुदाहरति– प्रत्यक्षाश्रुतिरिति । ... न तथा दोषस्तदर्थः पुनर्धर्माधर्मपरावरे खरमुखः प्रत्यक्षबाध्यो न च । तच्चार्वाकमतेपि रङ्गरमण प्रत्यक्षवत्सा प्रमा, योगोन्मीलितधीस्तदर्थमथवा प्रत्यक्षमीक्षेत स इति श्लोकशेषः श्रीरङ्गराजस्तवोत्तरशतके द्रष्टव्यः । तदर्थश्च– वेदाख्यशब्दराशेश्श्रावणप्रत्यक्षगोचरत्वात्प्रत्यक्षमात्रप्रामाण्यवादिनापि चार्वाकेण न तत्प्रामाण्यमपलपनीयमित्याह- प्रत्यक्षाश्रुतिरिति । ननु वेदस्वरूपस्याध्यक्षसिद्धत्वेपि तस्य यत्किंचिदर्थबोधकत्वाड्ढ्यादिशब्दवन्न प्रामाण्यं भविष्यतीत्यत्राह- अर्थधीश्चेति । प्रत्यक्षेत्यनुवर्तते । तथा च व्युत्पन्नपदार्थस्य साङ्गाध्यायिनस्स्वात्मनि वेदश्रवणानन्तरं तदर्थबुद्धयुत्पत्तेर्मानसेन स्वयंप्रकाशेन वा प्रत्यक्षेण सिद्धत्वान्न तदपि तिरस्करणीयमित्यर्थः । ननु वेदार्थधियः प्रत्यक्षत्वेपि तस्याः भ्रमप्रमादादिवक्तृदोषमूलकत्वेन न प्रामाण्यसिद्धिरित्याशंक्याह- न तथा दोष इति । तथा- प्रत्यक्षः । वेदस्यापौरुषेयत्वादिति शेषः । तथा च यन्नोपलब्धं तन्नास्तीति तव सिद्धान्तात् वेदे दोषाणां चानुपलब्धेस्ते न सन्त्येवेत्यर्थः । नन्वथापि वेदा न प्रमाणं बाधितार्थकत्वादित्यत्राह- तदर्थः पुनरिति । तदर्थः- वेदार्थः । परः- प्रकृतितः परो जीवः । अवरः- प्रकृतिप्राकृतादिः । मुखशब्देन नित्यविभूत्यादिग्रहणम् । एषु केषांचित्प्रत्यक्षप्रमितत्वेन, अन्येषां धर्मादीनामत्यन्तातीन्द्रियत्वेन च सर्वथा कस्यापि वेदार्थस्य प्रत्यक्षेण बाधाभावादबाधितार्थकत्वेन प्रामाण्यं वेदस्याप्रकम्प्यमेवेत्यर्थः । तत्-तस्मात् । सा-श्रुतिः । यदि परेषामनुभवे चार्वाको विप्रतिपद्यते, तर्हि स स्वयमेव योगमभ्यस्य पक्वकषायो विकसितज्ञानश्च भूत्वा वेदार्थं धर्मादिकं साक्षात्पश्यत्वित्याह- योगोन्मीलितेति । पूर्वमदृष्टमपि हि तत्त्वजातं योगमहिम्ना साक्षात्कर्तुं शक्यते । तदुक्तं-

अनुमानागमங்களை प्रत्यक्षத்திலே अन्तर्भविப்பிக்கலாம் என்றதுவும், बाह्येन्द्रियமில்லாத-दशैயிலே स्मृतங்களான लिङ्गादिகளாலே प्रमिति பிறக்கக் காண்கையாலும், सर्वसाधारणमनो-व्यापारம் सहकारिमात्रமாகையாலும், परम्परया प्रत्यक्षमूलतै யைக் கொண்டு இவை प्रत्यक्षान्तर्गतங்-களென்பார்க்குமிவைகாட்டின अर्थங்கள் இசையவேண்டுகையாலும், अनुपपन्नம். विषहरण-मन्त्रादिகளில் अन्वयव्यतिरेकानर्हविषयமுண்டு என்னுமிடம் சொன்னோம்.

---

मोक्षधर्मे- यथा च कश्चित्परशुं गृहीत्वा धूमं न पश्येज्ज्वलनं च काष्ठे । तद्वच्छरीरोदरपाणिपादं छित्वा न पश्यन्ति ततो यदन्यत् ॥ तान्येव काष्ठानि यथा विमथ्य धूमं च पश्येज्ज्वलनं च योगात् । तद्वत्सुबुद्धिस्समिन्द्रियार्थैर्बुद्धः परं पश्यति तत्स्वभावम् ॥ अग्निर्दारुगतो यद्वद्भिन्नो दारौ न दृश्यते । तथैवात्मा शरीरस्थो ऋते योगान्नदृश्यते ॥ इति ॥

यदुक्तं "प्रत्यक्षमूलत्वादनुमानागमयोः प्रत्यक्षान्तर्भाव इति, तदनूद्य खण्डयति- अनु-मानेति । तत्र किं साक्षात्प्रत्यक्षमूलतया तदन्तर्भावः, उत परम्परया । प्रथमेपि, किं वहिरिन्द्रिय-जन्यप्रत्यक्षमूलतया, अथवा मनइन्द्रियजन्यप्रत्यक्षमूलतयेति विकल्प्य प्रथमे न प्रथमः पक्ष इत्याह- बाह्येन्द्रियम् इति चक्षुर्धूमादिसन्निकर्षविरहकालइत्यर्थः । प्रथमे न द्वितीयइत्याह- सर्व-साधारणेति । तदा वह्निज्ञानकाले मनसो मनस्त्वेन व्यापृतेस्तादृशमनोव्यापारस्य च स्मृत्यादिसर्व-ज्ञानसाधारण्यात् तन्मूलतामात्रेण न वह्निज्ञानस्य प्रत्यक्षत्वमापादयितुं शक्यत इत्यर्थः । न च वह्न्यादिज्ञानकाले मनस इन्द्रियत्वेनैव व्यापारापेक्षणात् तादृशमनोव्यापारस्य च प्रत्यक्षासाधारण-तया तन्मूलकतया भवत्येव तस्य प्रत्यक्षतेति वाच्यम् । आत्मसुखाद्यन्तर्विषयप्रत्यक्षएव मनस इन्द्रि-यत्वेन कारणत्वात् । वह्न्यादिबाह्यविषयप्रत्यक्षे मनस्त्वेनैव कारणत्वात् । अन्यथा सर्वज्ञानानामपि मानसप्रत्यक्षत्वापातात् । चरमोपि पक्षो न क्षोदक्षम इत्याह- परम्परयेति । இவை- अनुमाना-गमौ । तथा चानधिगताबाधितार्थविषयकत्वलक्षणप्रामाण्यस्य प्रत्यक्षवदनुमानागमयोरपि तुल्यतया, तयोर्न प्रत्यक्षान्तर्भाव इति भावः । एवमनुमानस्येव शास्त्रस्यापि पृथक्प्रामाण्यमावश्यकमिति पृथक् प्रदर्शयितुं पूर्वोक्तं स्मारयति - विषहरणेति । यद्यप्ययमंशः पूर्वं तन्मतानुवादक्रमेणेदानीमेव दूष्य-तया प्राप्तः, तथापि सिद्धान्ते तैरप्यगत्या पारलौकिकशास्त्रप्रामाण्यमङ्गीकार्यमिति प्रदर्शनावसरे "दृष्टार्थमन्त्रे"त्यादिनाऽयं विषयः पूर्वमेवोक्त इति नेह पुनः प्रपञ्च्यत इति भावः ।

---

*அநுமாநமும் கடைசியில் ப்ரத்யக்ஷத்தில்தான் சேரும் என்று நீங்கள் என்ன கருத்தில் சொன்னீர்கள். கண் காது முதலிய வெளிப்புறத்து இந்த்ரியங்கள் ஏதும் வேலை செய்யாத போதும் பழைய நினைவில் தோன்றிய ஒரு அடையாளத்தினால் ஒன்றை ஊகிக்கிறோமே. அங்-கும் மனம் என்னும் உட்புறத்து இந்தரியம் வேலை செய்கிறதே என்னில, மனது எப்போது எந்த ஜ்ஞானம் உண்டாகவேண்டுமானாலும் வேலை செய்யவேண்டிய ஒரு பொதுக்கருவி. ஆக*

நீதிஸ்தேயகாமசாஸ்த்ரங்களுடைய தர்மத்தை ஒட்டினவையே

अर्थकामங்களை प्रयोजनமாகக்கொண்டு प्रवृत्तமான नीतिशास्त्रமும் अनापத்தில் धर्मविरुद्ध-

अथ "लोकायत"मित्यादिना कृतस्य तदीयस्य तत्त्वसंग्रहस्य पश्चाद्विस्तरेण दूषयिष्यमाणतयेदानीं "அவற்றை प्रयोजनமாகப்பற்றின" इत्यादिना तैः पूर्वोक्तं नीतिस्तेयकामशास्त्राणां स्वमतानुगुण्यं प्रथमतः खण्डयति - तत्रापि पूर्वं नीतिशास्त्रस्य धर्मविरुद्धार्थकामपरत्वं नास्तीत्याह- अर्थकामங்களை इति । तत्र वात्स्यायनीये- "नार्थांश्चरे"दिति पूर्वपक्षयित्वा "अवश्यंभाविनोप्यर्थस्याप्युपायपूर्वकत्वादेव । न निष्कर्मणो भद्रमस्तीति वात्स्यायन इति सिद्धान्तितम् । अवश्यापेक्षितस्यार्थस्योपेक्षणीयत्वासंभवात्केनाप्युपायेन सम्पादनं कार्यम् । अन्यथा निर्व्यापारस्य क्षेमप्राप्तिरेव न स्यादिति सामान्यतस्स्थापितम् । तथैव कामविषयेपि "न कामांश्चरे"दिति पूर्वपक्षे "शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः । फलभूताश्च धर्मार्थयोः । बोद्धव्यं तु दोषेष्विव, नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्त इति वात्स्यायन इति सिद्धान्तो दृश्यते । आहारसधर्माण इति । यथाहारोऽजीर्णादिदोषं जनयन्नपि प्रतिदिनं शरीरस्थितये सेव्यते, तथा कामोपि । अन्यथा रागोद्रेकादुन्मादादिदोषेण न शरीरस्थितिरिति । बोद्धव्यन्तु दोषेष्विति । प्रतिविधानमिति शेषः । एवं सामान्यतोर्थकामयोस्सम्पाद्यत्वे स्थिते नीतिशास्त्रे परहिंसयापि परहिंसयैव वार्थस्सम्पाद्य इत्युक्तम् । तथाहि- "नान्यानपीडयित्वेह कोशश्शक्यः कुतो बलम् । तदर्थंपीडयित्वा च न दोषं प्राप्तुमर्हति॥ उपमामत्र वक्ष्यामि धर्मतत्त्वप्रदर्शिनीम् । यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ॥ द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि । ते चापि निपतन्तोन्यान्निघ्नन्त्यपि वनस्पतीन् ॥ एवं कोशस्य महतो ये नराः परिपन्थिनः । तानहत्वा न पश्यामि सिद्धिं तत्र परन्तपे"ति । एतत्सर्वं सिद्धान्तिभिरपि कक्षीकृतमिति द्योत्यते "अर्थकामங்களை प्रयोजनமாகக்கொண்டு प्रवृत्तமான नीतिशास्त्रம் इत्यनेन । तथापि तत्र विषयव्यवस्था द्रष्टव्येत्याह. अनापத்தில் । अर्थकामयो रागप्राप्तत्वादविधेयत्वेन "अभ्यनुज्ञेत्युक्तम् । "अर्थार्थी राजकुलं गच्छेत्" ऋतावुपेयादित्यादिकन्तु रागप्राप्तस्वनियमं विधत्ते । "परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ"विति सामान्यतो धर्मविरुद्धार्थकामयोर्निषेधेपि "यस्माद्धर्मस्योपचितिरेकान्तेन न विद्यते । तस्मादापद्यधर्मोपि श्रूयते धर्मलक्षण" इति,

*அதன் வேலை என்று கொண்டு, வந்த ஜ்ஞானத்தைப் பாதயக்ஷமென்னவொண்ணாது. எல்லா ஜ்ஞானங்களும் முதலில் பரதயக்ஷத்தில் அவங்குகின்றனவாகையால் ப்ரதயக்ஷத்தில் சேரும் என்ற வாதத்தில் பசையில்லை. அப்போதும் அவை காட்டின பொருள்கள் இசையவேண்டியனவாகவே இருக்கின்றனவல்லவா?*

*நீதிசாஸ்த்ரம் உங்களுக்கு அநுகூலம் என்பதும் வெறும் ப்ரமம். நெருக்கடியல்லாத ஸாதாரணஸந்தர்பங்களில் பணத்திற்காக பாபம் செய்ய அதிலும் அநுமதிகிடையாது சோர*

विषयத்தை अभ्यनुज्ञै பண்ணுது. स्तेयशास्त्रமும், “यो साधुभ्योऽर्थमादाय साधुभ्यस्संप्रयच्छति” “प्रसह्यवित्ताहरणं न कल्कः” என்கிறபடியே क्षत्रियादिகளுக்கு परकालादिन्यायத்தாலே धर्मोपयुक्त-

---

तथा “क्षत्रिये वृत्तिसंरोधे कस्य नादातुमर्हति?” इति पृष्टे “अन्यत्र तापसस्वाच्च श्रोत्रियस्वाच्च भारत। यथा वै ब्राह्मणस्सीदन्नयाज्यमपि याजयेत् । अभोज्यमपि चाश्नीयात्तथेदं नात्र संशय इति प्रतिवचनात्, एवं “आपद्गतो न धर्माणामन्यायेनोपजीवनम् । अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षय इति च कथनादापद्येव धर्मविरुद्धार्थकामयोरभ्यनुज्ञेति भावः । “धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभेति च गीयते । श्रीपराशरब्रह्मर्षिरपि सत्यवत्यामापद्येव कामप्रवृत्त इति पौराणिकी कथा श्रोतव्या । उषस्तिः किल चाक्रायण इभ्यग्रामे वसन् अश्मवृष्टिहतेषु कुरुषु अनशनकृशः प्राणसंशयमापन्न इभ्यहस्तात्तदुच्छिष्टान्कुल्माषान् जग्राह जग्रासचेति औपनिषदो वृत्तान्तः । नीतिशास्त्रस्य धर्माविरुद्धत्वेपि स्तेयशास्त्रस्य तथात्वं कथं? “धर्माधर्मौ फले जातु न ददर्शेह कश्चन । बुभूषेत् बलमेवैतत् सर्वं बलवतो वशे ॥” इति कामन्दवचनादित्याशंकायां स्तेयशास्त्रमपि धर्माविरुद्धं निर्वहति- स्तेयशास्त्रமும் इति । “स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ” इति मनुवचने उत्तरार्धम् । तत्र पूर्वार्धे तु “योऽसाधुभ्य इत्युपक्रमे यच्छब्दश्श्रूयते, उत्तरत्र तच्छब्दानुरोधेन । य एवं संप्रयच्छति, स आत्मानं प्लवं कृत्वाऽसाधोः पापं साधोर्दारिद्र्यं चापनुद्य तावुभौ निस्तारयति इत्यर्थः। गूढपापिनां गूढं दण्डनीयत्वेनासाधोर्धनहरणं तच्छिक्षार्थमिति स्तेयशास्त्रस्यापि धर्मार्थत्वं बोध्यम् । ततश्च मूलेपि “यो साधुभ्योर्थमादाये”ति पाठो बोध्यः। प्रसह्येति । तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको ज्ञानविधिर्न कल्कः । प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्क इति पूर्णश्लोकः भारतादिपर्वस्थः । कथं परद्रव्यापहरणं न दोषायेत्यत्रेदमुच्यते । सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचनेति भीष्मवचनानुसारेण स्वार्थं किंचिदप्यनादायाऽसाधुभ्योपहृतस्य सर्वस्य धनस्य साधुभ्यो निवेदनीयतयास्य चौर्यस्य केवलसाधूपचिकीर्षामूलकत्वेन भावशुद्धिमत्तया धर्माविरुद्धत्वमिति भावः । तपोध्ययनादीनामत्र ग्रहणं दृष्टान्ततया प्रतिबन्दीप्रदर्शनाय । यथा तप आदीनां न कल्कता न निस्सारता अदुष्टता तथा प्रसह्यवित्ताहरणस्यापि । यदि तपआदयः “परस्योत्सादनार्थं यत् तत्तामसमुदाहृतमिति रीत्या भावोपहतास्सन्तो धर्म्या अपि दुष्टा भवन्ति ।

---

சாஸ்த்ரத்தின் கருத்தும் நன்கு பராமர்சிக்கத்தக்கது. அயோக்யர்கள் பதுக்கிவைத்திருக்கும் பொருள்களை கொள்ளைகொண்டாவது கைப்பற்றி நல்லவர்க்குக் கொடுத்து உதவு என்று க்ஷத்ரியாதிகளுக்கு உபதேசிக்கவந்தது அது. ஏனெனில் அவ்விதம் கொள்ளையடித்தாலும் அதன் நோக்கம் நல்லதாக இருப்பதால் அதுவும் ஒரு புண்யமேயல்லவா? திருமங்கைமன்னன் சரித்ரம் இங்கு தக்க சான்று. காமசாஸ்த்ரம் முழுக்க முழுக்க வைதிகமார்க்கத்தைத் தழுவினது என்று நாமிங்கு சொல்லவேண்டாதபடி முன்னோர்களே நிர்ணயித்து வைத்தார்கள். முதலில்

மாக प्रवृत्तस्तत्रम् । कामशा௦ स्वदारसन्तोषार्थமாய் "धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभ" ௭௯௬

तदा वित्ताहरणमपि भावदुष्टमेव कल्को भवति । पूर्वोक्तरीत्या साधूपचिकीर्षया चेत्क्रियेत, तदा तदपि न कल्क एवेति । क्षत्रियादिकஞக்கு इति । आदिना चत्रवृत्तीनां जात्यन्तराणां ग्रहणम् । असाधुभ्योर्थानादाय साधुभ्यो दानस्य राजधर्मप्रकरण एव महाभारते शान्तिपर्वणि श्रवणात् । तत्र हीदमेव "योसाधुभ्योर्थमादायेति पूर्वार्धमुपादाय "आत्मानं संक्रमं कृत्वा कृच्छ्रधर्मकृदेव स" इति पठ्यते । संक्रमः- द्रव्यागमनमार्गः । ततः पूर्वं युधिष्ठिरेण "हीने परमके धर्मे सर्वलोकातिलङ्घने । सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ॥ केन स्वित् ब्राह्मणो जीवेत्" इति, कथं वा ब्राह्मणाः क्षत्रियेण रक्षितव्या इति तात्पर्येण पृष्टे "योसाधुभ्य इत्यादिना समाधीयते । एवं शास्त्रं प्रदर्श्य शिष्टाचारमपि कथयति- परकालादिन्यायக்காடு इति । पराशर इतिवदिदं नाम प्रतिपक्षनिरसनशक्तिमत्तां द्योतयति । आन्तरबाह्यविरोधिनिरसनपाटवमस्य प्रबन्धेषु चरितेषु च वेदितव्यम् । षट्सहस्रग्रन्थपुराणरत्नप्रणेतृपराशरवदयमपि षट्प्रबन्धप्रबन्धा । सामन्तराजश्च भवति । अभिनवदशावतारेष्वयमन्त्यः । कल्कीव शत्रून् संकाल्य कार्तयुगं धर्मं कलाववर्धयत् । अयं कदाचित् क्वचिद्दृढतया यन्त्रयन्त्रिता जिनादिमणिप्रतिमाः केनाप्युपायेनापहृत्य श्रीरङ्गे भगवतो मण्डपादीन् निर्मम इति वृद्धसंप्रदायः । तदुक्तं श्रीरङ्गराजस्तवे - "जितबाह्यजिनादिमणिप्रतिमा अपि वैदिकयन्निव रङ्गपुरे । मणिमण्डपवप्रगणान् विदधे परकालमुनिः प्रणमेम हि तानिति । तान्- मणिमण्डपवप्रगणान् इत्यर्थः । प्रकरणस्य तद्वन्दनपरत्वात् । परकालादीत्यत्रादिना कापव्यादिग्रहणम् । महाभारते शान्तिपर्वणि श्रीभीष्मेण युधिष्ठिराय- "यथादस्युस्समर्यादो दस्युत्वात्सिद्धिमाप्तवान् इति तत्प्रभावमुक्त्वा "ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः । अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयु"रिति तदुपदेशं गृहीत्वाऽऽचरितवतां तद्गोष्ठीनिष्ठानां "ते सर्वमेवानुचक्रुः कापव्यस्यानुशासनम् । वृद्धिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् । कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान्" इति फलप्राप्तिं चाभिधायोपसंहृतम् । दस्युधर्माश्च केचन तत्रैव कीर्तिताः- "अयुध्यमानस्यादानं दारामर्शः कृतघ्नता । ब्रह्मवित्तस्य चादानं निश्शेषकरणं तथा । स्त्रिया मोषः पथि स्थानं साधुष्वेव विमर्दनम् । स दोष एव भवति दस्युरेतानि वर्जयेत् । तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः । न बलस्थोहमस्मीति नृशंसानि समाचरेत् । इति ।

अथ कामशास्त्रस्यापि धर्माविरुद्धमेव प्रमेयमित्याह- कामशास्त्र௦ इति । इदं च शास्त्रं वात्स्यायनमुनिप्रवर्तितम् । ततोपि पूर्वं नन्दिश्वेतकेतुप्रभृतयः प्रवर्तकाः । तन्त्रमावाप इति द्विप्रकारकं षट्त्रिंशदध्यायात्मकं च । तन्यते जन्यते रतिर्येन तत्तन्त्रमालिङ्गनादि । तदधिकृत्य, कृतं

पापरहितकामोपयुक्तமாகையாலும் अदृष्टपञ्चपुरुषपरस्त्रीविषयनिषेधादिகள் சொல்லுகையாலும்

शास्त्रमपि तन्त्रम् । समन्तादुप्यन्ते अवाप्यन्ते वा स्त्रियः पुरुषाश्च येन स आवापः समागमोपायः । तत्प्रतिपादकमपि शास्त्रमावापः । स्वदारसन्तोदेति । "आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्या" इति परिगृहीतायां पत्न्यां क्रीडारतिरसज्ञानायैवात्र सर्वं विवृतं, न तु पतिपत्नीभावमतिलंघ्य कामचारायेत्यर्थः । ननु कर्मब्रह्मनिष्ठानां जितेन्द्रियाणां कामपुरुषार्थस्य निषिद्धत्वात् पत्न्यामप्यनुरागो नोचित इति शङ्कायामाह- धर्माविरुद्धेति । "भूतेषु देवमनुष्यादिषु धर्माविरुद्धः कामः स्वदारप्रीत्यादीत्यर्थ इति तात्पर्यचन्द्रिकायां विवरणात् स्वदाररतिरभ्यनुज्ञातेति निषेधस्तद्व्यतिरिक्तविषय इत्यर्थः । अत एव हि श्रूयते "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" "प्रजया हि मनुष्यः पूर्णः" "प्रजातन्तुं मा व्यवच्छेत्सी"रित्यादि । एतेन प्रपन्नனுக்கு विहितविषयनिवृत्ति தன்னேற்றம் इति वचनभूषणवाक्यस्य यद्वरवरमुनिव्याख्यानं "प्रपन्नस्य धर्मबुद्ध्या स्वदारेषु प्रवृत्तिरपि स्वाधिकारभंजिकेति, विहितविषये निवृत्तिरस्यातिशय, इति, तदपि निरस्तम् । आकिञ्चन्यानन्यगतित्वादिव्यतिरेकेण स्वदारत्यागरूपाधिकारस्याप्रामाणिकत्वात्, प्रपन्नसन्तानसन्तानतरुभिर्नाथमुन्यादिभिस्तथाऽकरणात् तेषां सन्ततिदर्शनेन तथाकल्पनायोगाच्चेति । वस्तुतस्तु स्वदाररत्यादेर्विधिविहितत्वाभावस्य पूर्वमुक्तत्वेन केवलाभ्यनुज्ञाविषयत्वात् अन्यैरत्यन्तरागतः क्रियमाणस्य कामपुरुषार्थस्य प्रपन्नैर्विरक्तैर्दूरतो वर्जनं तेषां यशसे वैलक्षण्याय च भवतीत्येतदेव वक्तव्यम् । ये तु नितरां स्वदारापत्यादिनिरताः प्रपन्नास्तेषां वैराग्यस्य मात्रया निकर्ष एवेति भाव्यम् । ननु "एक एव तु सार्वलौकिको नायक" इति वात्स्यायनादिभिः कथनात् "सर्वलोकान्- सर्वास्स्त्रियो गच्छती"ति तदर्थात् कामेषु धर्माविरुद्धत्वं कथमिति शंकामपाकरोति- अदृष्टेति । अयं भावः- "दृष्टपंचपुरुषा नागम्याकाचिदस्तीति बाभ्रवीया" इति वात्स्यायनेनैव कथनात् परदारप्रवृत्तस्य विटस्य सार्वलौकिकशब्दः दृष्टपंचपुरुषपरस्त्रीगमनमात्रविषय इति "सर्वत्वमाधिकारिक"मिति न्यायेन सर्वत्वस्य तादृशस्त्रीमात्रपर्यवसितत्वेनादृष्टपंचपुरुषपरस्त्रीगमननिषेधसिद्धिरिति । अत्रेदं व्याख्यानं भवति- स्वपतिव्यतिरेकेण दृष्टाः पंचपुरुषाः पतित्वेन यया, सा स्वैरिणी कारणवशात्सर्वैरेव गम्या । तथा च "पंचातीता बन्धकी"ति पराशरः । एकद्व्यादिदर्शने तु सत्स्वपि कारणेषु नैवेत्यर्थः । द्रौपदी तु युधिष्ठिरादीनां स्वपतित्वादन्येषामगम्येति । इदन्तु बोध्यम् । "परदारान्न गच्छेत मन-

---

காமசாஸ்த்ரம் களவொழுக்கத்திற்காக ஏற்பட்டதல்ல என்பதை கவனிக்கவேணும் கணவனும் மனைவியும் கூடி களிக்கவேண்டுமென்றே இயற்றப்பட்டது. கண்ணன் கீதையில் 'தர்மவிரோதமின்றி தன் தர்மபத்நியிடம் கணவன் நுகரும் இன்பமும் யானே" என்றானல்லவா? இன்னமும் ஓர் சாக்ஷி காமசாஸ்த்ரங்களில், பல புருஷர்களுடன் ஸம்பந்தம்கொண்ட பரத்-

पारदारिकமும் स्वदाररक्षणाद्युपयुक्तமாகையாலும் धर्माविरुद्धம் என்று निर्णयித்தார்கள். लोकसिद्धம்-

---

सापि कदाचन । किमुवाचास्ति बन्धोपि नास्ति तेषु व्यवायिनाम् । मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः। परदाररतिः पुंसामिहामुत्र च भीतिदा। इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् ॥ यथोक्तदोषहीनेषु सकामेष्वनृतावपि" इति परस्त्रीगमनमात्रस्य निषिद्धत्वेपि अदृष्टपंचपुरुषपरदारपरिग्रहेणाधिकं प्रत्यवेयात् । दृष्टपंचपुरुषपरस्त्रीगमनेन तु न तावान् प्रत्यवायः, स्वल्पेन तेन यातनापि स्वल्पीयसी भवतीति। "परस्त्रीविषयनिषेधादी"त्यत्रादिना "सम्बन्धिसखिश्रोत्रियराजदारवर्जमिति गोणिकापुत्र" इत्युक्तनिषेधग्रहणम् । दृष्टपंचपुरुषत्वेपि श्रोत्रियराजदारादिगमने प्रत्यवायाधिक्यं बोध्यम् । नन्वथापि वात्स्यायनीये "यदा तु स्थानात् स्थानान्तरं कामं प्रतिपद्यमानः पश्येत्तदा शरीरोपघातत्राणार्थंपरपरिग्रहानभ्युदगच्छेत्" इति "यं कंचदुज्ज्वलं पुरुषं दृष्ट्वा स्त्री नित्य कामयते, तथा पुरुषोऽपि योषितमिति च सविस्तरं स्वैरचारस्य प्रतिपादनात्पारदारिक्यसामान्यं तदिष्टमिति शंकायां समाधत्ते- पारदारिकமும் इति । परदारान् गच्छतीति पारदारिकः । भावप्रधानो निर्देशः । एतदुक्तं भवति- अत्रैवाधिकरणान्ते "एवं परस्त्रियः प्रकुर्वीते"ति परदारगमनोपायान् विस्तरेणोपदिश्य "एभ्य एव च कारणेभ्यस्स्वदारान् रक्षेदित्युपसंहृतम् । तथा च परस्त्रियं कामयमानः, तदर्थं बहु प्रयतमानः स्वयं विदितसकलजारवृत्तान्ततया स्वपत्न्यां तथा अन्यस्य कामुकस्य प्रवृत्तिं नित्यं शङ्कमानः जागरूक एव तां सर्वतो रक्षेदिति लोकस्वभावोऽत्र बोध्य इति । एतावदोक्तं निगमयति- धर्माविरुद्धमिति । अतएवोक्तमत्रैवोपसंहारे- "सन्दृश्य शास्त्रतो योगान् पारदारिकलक्षितान् । न याति चलनां कश्चित् स्वदारान्प्रति शास्त्रवित् । पाक्षिकत्वात्प्रयोगाणां अपायानां च दर्शनात् । धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् । तदेत द्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् । प्रजानां दूषणायैव न विज्ञेयोस्य संविधिः" इति । तथा च धर्माधर्मविभागमनभ्युपगच्छतश्चार्वाकस्य धर्माविरुद्धकामशास्त्रं नानुकूलम्, अपि तु प्रतिकूलमेवेति हृदयम् ॥

पूर्वोक्तमन्यदप्यनूद्य दूषयति- लोकसिद्धங்களில் इति । "पृथिवी न कठिना" "आपो न द्रवाः" "अग्निश्शीत" इत्येवं प्रत्यक्षविरुद्धप्रक्रियानङ्गीकाराल्लोकसिद्धस्यैवानुसरणात्सर्वमतेष्वपि

---

தைகளைத்தவிர, குடும்பப்பெண்களை கண்ணெடுத்தும் பாராதே என்று இளைஞர்களுக்கு எச்சரிக்கை விடுக்கப்பட்டுள்ளது. இங்கொரு ரஹஸ்யம் அதாவது பரஸ்த்ரீயைச் சுற்றி அலைபவன் தன் மனைவியை யாரும் நெருங்கவிடான் காமசாஸ்த்ரத்தினால் இதொரு நன்மை ஏற்படுகிறது. ஆகையால் காமசாஸ்த்ரமும் தர்மத்தைத் தழுவியே இயற்றப்பட்டது. உலகாநுபவத்தை ஒட்டி அமைக்கப்பட்டது எங்கள் மதம் என்னும் சிறப்பு எல்லாமதங்களிலும் அவ-

களில் பிணங்கவேண்டாவென்றது. पक्षान्तरங்களுக்கும் तुल्यम्। लोकोत्तीर्णங்களைக் கொள்ளாமையாலே அவையடியாக बाधமில்லை என்கிற செட்டு சொல்லில் सर्वपरित्यागियான माध्यमिकனுக்கே विजयமாம். सर्वहृदयसंगतार्थकथनம் என்றது, निपुणबुद्धिसंगति இல்லாமையாலே असिद्धम्। लोकायतिकன் தானும், अदृष्टம உண்டாகில் செய்வதேன் என்று உள்ளஞ்சியிருக்கும.

---

तुल्यमिदमिति भावः। अथ लोकोत्तीर्णपदार्थानामपि मतान्तरस्थैस्स्वीकारात्, अस्माभिश्च तदनभ्युपगमात् महत्तेभ्योऽस्माकं लाघवमित्यत्राह- लोकोत्तीर्णेति। जीवधर्माधर्मादीत्यर्थः। செட்டு- लाघवम्। सर्वपरित्यागीति। त्वया प्रमाणप्रतिपन्नानां लोकोत्तीर्णपदार्थानां कूटयुक्तिभिरपलपने त्वत्तोपि कुतर्ककुशलैर्बौद्धैः प्रात्यक्षिकपदार्थानामप्यपहरणाल्लोकोत्तीर्णपदार्थपरित्यागिनस्त्वत्तस्सर्वपरित्यागिनो माध्यमिकस्यैव लाघवमिति स एव विजयेतेति भावः। एतेनात्मतत्त्वविवेके "न ग्राह्यभेदमवधूय धियोस्ति वृत्तिस्तद्बाधके बलिनि वेदनये जयश्रीः। नोचेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः इत्युदयनोक्तिरप्यपास्ता। यतः- "सर्वं हि सत्यमिति सम्प्रतिपन्नबुद्धेर्बाधा तु नैव, यदि सा सुगते जयश्रीः। एकं परं सदितरच्च मृषेति योर्धवृद्धानयाद्वदति तस्य तु कोवकाश इति। अधिकमत्रास्मदीयाद्वैतरत्नतत्त्वपरीक्षायामधिगन्तव्यम्। अपरमपि पूर्वोक्तमनूद्य परिहरति- सर्वहृदयेति। अनिपुणहृदयसङ्गतार्थकथनं नोत्कर्षहेतुः। कतिपयनिपुणहृदयसङ्गतिश्च सर्वमतसाधारणी। सर्वनिपुणहृदयसंवादश्चात्रासिद्ध इति भावः। किम्बहुना? त्वदुक्तिं त्वद्धृदयमपि न श्रद्धत्त इत्याह- लोकायतिकன் தானும் इति। अदृष्टமுண்டாகில் इति। "नास्तिचेन्नास्ति नो हानिः अस्ति चेन्नास्तिको हतः।" इत्युक्तन्यायादिति भावः। உள் அஞ்சி इति। तथा च त्वया सह त्वच्छिष्या अपि बहवः अन्तश्शंकाकलङ्किता बहिस्स्फुटामतृप्तिं त्वद्भयादाविष्कर्तुमपारयन्तः कालं कष्टं क्षिपन्तीत्यर्थः।

एवमेतावताऽनुमानागमयोः पृथक्प्रामाण्यं, नीतिस्तेयादिशास्त्राणां धर्मविरुद्धत्वेन तन्मतप्रातिकूल्यं, अविसंवादादिकृततन्मतोत्कर्षाभाव इत्यादि प्रतिपादनेन चार्वाकाभिमतप्रमाणव्यवस्था निराकारि। अथ परस्तात् "शरीरமே आत्मा" इत्यारभ्य तदभिमतप्रमेयप्रक्रियामपि

---

ரவர் எண்ணப்படியுண்டு. காணாத பொருள்களை நாங்கள் கொள்ளவில்லை என்று செட்டு சொன்னால் "எப்பொருள்களையும் நாங்கள் கொள்ளவில்லை. ஸர்வம் சூன்யம்' என்று உன்னை விட மிகச்செட்டு சொல்லும் மாத்யமிகன் என்னும் பௌத்தனே கடைசியில் வெற்றிபெறுவான். எல்லோருடைய நெஞ்சையும் தொட்டுப்பார்த்தால் ஒத்திருப்பது நீங்கள் படிப்பனவன்றது, மஹான்களான தீர்க்கதர்சிகளின் மனதில் ஒப்புதல் இல்லாமையால் புறப்பட்டுப்போச்சு. பரலோகம் உண்டாமாகில பாபிகளான நாம் செய்வது என்" என்று, நீங்கள் உள்ளஞ்சியிருப்பதும் எமக்குத் தெரியும்.

**ப்ராஹ்மண்யாதிஜாதிகளின் ஸம்பவமும், வ்யவஸ்தையும்.**

**ब्राह्मणक्षत्रियादिजातिविशेषம் गोमहिषादिजाति**கள் போலே காணவொண்ணாதிருக்க, இவற்றைத் துவக்கிவருகிற **विधि**கள் **प्रमाण**மாம்படி என் என்றதுவும் **अनुपपन्नம்**. **अबाधितानादिपरिग्रहपरम्परै**யாலே **आगोपालம் प्रसिद्ध**மான **जातिविभाग**த்தை **अपह्नविக்க**வொண்ணாமையாலும்

---

दूषयिष्यन् प्रथमं ब्राह्मण्यादिजातिविषये तदुक्तं निराकृत्य जातिं व्यवस्थापयति- ब्राह्मणेति। जातिகள் போலே इति। अवयवसंस्थानवत्सु संस्थानस्यैव जातित्वे, तद्व्यंजकत्वे वाभ्युपगम्यमानेपि, गोमहिषादिषु यथा विलक्षणावयवसन्निवेशेन गोत्वमहिषत्वादिजातिभेदसिद्धिः, न तथा ब्राह्मणक्षत्रियादिषु ब्राह्मणत्वादिजातिविशेषसिद्धिः। तत्र मनुष्यत्वानुगुणसंस्थानातिरिक्तस्य कस्याप्यदर्शनेन मनुष्यत्वमात्रस्यैव सिद्धिरित्याशयः। இவற்றைத் துவக்கி ब्राह्मणत्वादिजातीर्निमित्तीकृत्य। விதிகள்- विधिनिषेधौ। निषेधस्याप्यत्यन्तमप्राप्तार्थकत्वेन विधित्वम्। "अष्टवर्षं ब्राह्मणमुपनयीत"। "नवमे राजन्यं" "तस्माच्छूद्रस्य समीपे नाध्येतव्य"मित्याद्याः। तत्तज्जात्यभावे तत्तन्नियतवर्णाश्रमधर्मानुष्ठानासिद्धेर्विधीनामननुष्ठापकत्वलक्षणमप्रामाण्यं स्यादित्याह- प्रमाणமாம்படி என் इति। तथा च प्रामाण्यं दुर्वचमित्यर्थः। तदुक्तेरनुपपन्नत्वे हेतुमाह- अबाधितेति। ब्राह्मणत्वादिकं नोपलभ्यत इति, किं तेषामभावादुच्यते। किं वा तेषां पूर्वस्थितानामपि सम्प्रत्युपप्लुतत्वात्। उपप्लवे च किं तेषां क्वचिदुपप्लवः, अथ सर्वत्रेति विकल्पाः। तत्र प्रथमं निराकरोति- अबाधितेति। अयं भावः- ब्राह्मणत्वादिजातिरदृष्टसम्बन्धविशेषरूपेति देवताधिकरणे श्रुतप्रकाशिकाचार्याः। सेश्वरमीमांसायां "शास्त्रदृष्टविरोधाच्चे"तिसूत्रे, तत्त्वटीकायांचोद्रिक्तसत्वादिरूपेति श्रीमदाचार्या आहुः। एतयो र्भवतु कामं या कापि वा ब्राह्मण्यादिजातिः। ब्राह्मण्यादीनामवयवसंस्थानरूपता तु नाभ्युपगम्यते। ततश्चानुपलंभोपपत्तिः। आगमप्रामाण्ये तु "सन्ततिविशेषप्रभवत्वमेव ब्राह्मण्यम्। तच्चान्वयव्यतिरेकाभ्यां यथालोकं कार्यान्तरवदुपगन्तव्यमि"त्यन्वग्राहि। तथाचागोपालमबाधितगोत्रादिस्मरणेनाध्ययनशिखायज्ञोपवीतपालाशदण्डमौञ्ज्यजिनधारिणो दृष्ट्वा "यं ब्राह्मण" इत्यादि प्रतीत्या ब्राह्मण्यादिकं दुरपह्नवम्। अन्यथा कस्यचिद्देवदत्तपुत्रत्वादिकमपि नसिद्ध्येदप्रत्यक्षत्वादिति। अनादिपरिग्रहपरम्परा- अनादेःकालाच्छिष्टाना"मयं ब्राह्मण" इत्यादिपरिग्रहपरम्परा। द्वितीयं ध्वंसयति- अनादौ खल्विति। "अनादौ खलु संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जाति परिकल्पने"ति पूर्णश्लोकः। "स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकर"

---

*ப்ராம்மண க்ஷத்ரியாதிஜாதிகள், ஆடு மாடு என்னும் ஜாதிகள்போல கண்ணுக்கு இலக்காகாதிருக்க இவற்றை வைத்து விதிநிஷேதசாஸ்த்ரங்கள் சொல்வதெல்லாம் நிர்மூலமேயன்றோ என்று நீங்கள் கேட்பீர்கள். இதற்குப் பலவிதமாக விடை தரலாம். முதலில் நிரா-*

"अनादौ खलु संसारे" इत्यादिகளிற்படியே சில விஷயங்களில் विप्लवமுண்டானாலும் अनुपप्लुत-वर्गம் अनन्तமாகையாலும், संसारத்தில் सर्वोपप्लवशान्तिபிறந்து' மேலும் चातुर्वर्ण्यादि व्यवस्थितसृष्टिயுண்டாகையாலும், वर्णादिव्यवस्थैக்குக் குறையில்லை. "कस्य दोषः कुले नास्ति व्याधिना को न

---

इति गीतायामर्जुनवचनं च । "சிலவிஷயங்களில் विप्लवம் உண்டானாலும்" इति । अन्वारुह्य वादोयम् । वस्तुतस्तु क्वचिदपि विप्लवो नास्त्येवेति भावः । अतएव च सेश्वरमीमांसायां "या च कामिनीमूलत्वादिरुपप्लवशङ्का, सा सर्वप्रवृत्तिविघातिनी । अतिशङ्कायास्सर्वत्र सुलभत्वात् । न च स्त्र्यपराधमात्रेण पुरुषस्यान्यप्रसूतत्वमनुमातुं शक्यते । अपराधिनीनामपि भर्तृनिमित्तप्रसवस्यापि दर्शनेनानैकान्त्यात् । सवर्णेनान्येन संयोगे च संकराभावात् । संकरजातानामपि उत्कर्षादिना सप्तमे, पंचमे वा वर्णान्तरापत्तिस्मरणा"च्चेति । अस्यान्वारुह्यवादस्योत्तरमाह- अनुपप्लुतेति । "चातुर्वर्ण्यं च लोकेस्मिन् स्वे स्वे धर्मे नियोक्ष्यतीत्युक्तरीत्या धार्मिकैराजभिः "नारीणां व्यभिचाराच्चापन्यायाच्च महीक्षिताम् । विप्राणां कर्मदोषाच्च प्रजानां जायते भय"मित्युक्तभयस्थानान्यभिलक्ष्य "तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः । नियम्यास्संविभज्याश्च प्रजानुग्रहकारणात् ॥ इति रीत्या नियन्त्रणाद्विप्लुतांशस्स्वल्पोनुपप्लुतांशस्त्वधिक इति न जात्यव्यवस्थेति भावः । ननु सर्वकालेष्वपि सर्वत्र दुष्टानां राज्ञां सम्भवात्प्रजासु सार्वत्रिको जातिसंकरस्स्यादेवेति तृतीयं पक्षं प्रतिक्षिपति- संसारத்திலே इति । तथा हि श्रीविष्णुपुराणे- (गद्यं) "श्रौतस्मार्ते तु धर्मे विप्लवमुपागते क्षीण-प्राये च कलौ" इत्यारभ्य सर्वेश्वरः कल्किरूपेणावतीर्य दुष्टराजशिक्षया "स्वधर्मेषु चाखिलमेव स्थापयिष्यती"त्युपसंहृतम् । सेश्वरमीमांसायामप्ययमेवार्थः- "किंचेदमुपप्लवचोद्यमधर्मलोकायतिक-मतमिव सेश्वरमत्यन्ताय नास्कन्दति । तथा हि- परमपुरुषस्स्थावरजंगमात्मकं सर्वं जगदुपसंहृत्ये"-त्यादिना प्रत्यपादि । तथा च निगमयति- वर्णादिव्यमस्थेति । तर्हि कस्य दोषः कुले नास्तीत्या-दिना सर्वत्र संकरादिकुलदोषसद्भाववचनस्य का गतिरित्यत्र तत्तात्पर्यमाह- कस्य दोष इति ।

---

க்ஷேபமாக இதுவரை தொன்றுதொட்டுவந்த ஜாதிவிபாகத்தை ஒரே வார்த்தையில் இல்லை என்னப்போகாது என்று சொல்லுவோம். இங்கு சிலர் சொல்வதுபோல் "ஜாதியாவது, வ்யவஸ்தையாவது, அநாதியான ஸம்ஸாரத்தில் இனவ்ருத்திபெண்களாலேயாய். ஆண்கள் பெண்களுக்கு அடிமையாய் இருக்கும்போது யார் யாருக்குப்பிறந்தவன்? எவன் எந்த ஜாதி? எல்லாம் ஒரே குழப்பம்" என்ற நிலையிருந்தாலும், பல பதிவ்ரதாஸ்த்ரீகள்மூலமாய் கலப்பற்ற ஜாதிவர்க்கம் அநந்தமாக உலகில் இன்றளவும் இருக்கிறது. மேலும் இப்படி ஜாதிவ்யவஸ்தை குலைந்துபோனாலும் மறுபடி தர்மஸ்தாபனார்த்தமாக ஸர்வேச்வரன் இங்கு வந்து பிறந்து நான்கு வர்ணங்களையும் நிலைநாட்டிச்செல்வானாகையாலும் ப்ராஹ்மணக்ஷத்ரியாதி ஜாதிமர்யாதைக்குக் குறைவில்லை. யாருடைய குலம் குற்றமற்றிருக்கிறது? வ்யாதியுறாதவன் எவன்? அநாதியான ஸம்ஸாரத்தில் துக்கப்படாதவர் எவர்? ஸுகம் எங்குதான் நிலைத்துநிற்கிறது,

पीड्यते । केन दुःखं न संप्राप्तं सुखं कस्य निरन्तर''मित्यादिகளுக்கு परपरिवादादिनिवृत्तिमात्रத்திலே तात्पर्यம். गन्धविशेषपयः प्रतरणादिलिङ्गसहकृतप्रत्यक्षத்தாலே घृतरत्नविशेषादिजातिகளைக் காணு

सर्वेषामेव वर्णानां स्वधर्माच्च्यवते नर इत्यादिवचनमादिशब्दार्थः । परपरिवादादीति । ''पररन्ध्रेषु जात्यन्धाः परदारेष्वपुंसकाः । परीवादेषु ये मूकास्तेतीवदयिता ममे''ति भगवता कथनात् नान्यान् परिवदेत् । अन्यथाऽस्मत्कुलेष्वपि तत्तुल्यदोषसंभवात् तेऽस्मान् परिवदेयुरिति, परस्परपरिवादपरम्पराया अविश्रमापत्तेरिति पूर्वोक्तश्लोकतात्पर्यं बोध्यम् । परिवादादीत्यादिनोपहासप्रहारादयो विवक्षिताः । एवं स्वमते अदृष्टविशेषादिरूपायाः ब्राह्मण्यादिजातेरतीन्द्रियत्वेपि तत्सिद्धिप्रकारमुक्त्वाऽतिरिक्तजातिवादिनैयायिकादिमतेन तस्याः प्रत्यक्षत्वमपि सदृष्टान्तं साधयति- गन्धविशेषेति । गोघृतादेर्द्रवत्वादिना माहिषादितुल्यत्वेपि, गन्धरूपविशेषादिज्ञानसहितेन चक्षुषा वैजात्यप्रत्यक्षं भवति । पयःप्रतरणेति । उदशरावादावाप्लवनमित्यर्थः । तदुक्तं बृहत्संहितायां ''सर्वद्रव्याभेद्यं लघ्वंभसि तरति रश्मिवत् स्निग्धम् । तटिदनलशक्रचापोपमं च वज्रं हितायोक्तम् । इति । तथा च पयः प्रतरणादिना लिङ्गेन रत्नविशेषवज्रत्वजातिप्रत्यक्षं भवति । प्रतरणादीत्यादिनाऽभ्यासपाटवादिकं गृह्यते । तथैव प्रकृतेपि ''तथा च सन्ततिस्मृत्याऽनुगृहीतेन चक्षुषा । विज्ञायमानं ब्राह्मण्यं प्रत्यक्षत्वं न मुंचती''त्यागमप्रामाण्योक्तदिशा ब्राह्मण्यादीनां प्रत्यक्षत्वमेवेति भावः । न चात्रग्रहणमनुमितिरेव, लिंगज्ञानजन्यत्वादिति वाच्यम् । लिङ्गज्ञानस्येन्द्रियसहकारिमात्रत्वेनेन्द्रियाणामेव प्राधान्यात् । अन्यथा संस्कारसचिवेन्द्रियजन्यायाः प्रत्यभिज्ञाया अपि प्रत्यक्षत्वं न स्यात् । तत्र तत्र करणस्वभावानुरोधेन विचित्रसहकारिवर्गापेक्षणात् । सहकारिणं विना कार्योत्पत्त्ययोगाच्च । तदुक्तं वार्तिके ''न हि तत्करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थितेति । ननु ब्राह्मण्यादीनां संस्थानरूपत्वे संस्थानव्यंग्यत्वे वा प्रत्यक्षत्वमुपपद्यते । तत्तु न संभवति, मनुष्येषु सर्वत्र संस्थानसाधारण्यात् । नापि ब्राह्मणादिमातापितृजन्यत्वं ब्राह्मणत्वादि, कुम्भोद्भवादिषु अयोनिजेषु व्यभिचारात् । किन्तु ''तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम् । इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः ॥ इत्याश्वमेधिकपर्वोक्तक्रमेण ''रजस्तमोभिभवेनोद्रिक्तसत्त्ववत्वं ब्राह्मणत्वं, तमस्सत्त्वाभिभवेनोद्रिक्तरजोगुणवत्वं क्षत्रियत्वं, रजस्सत्त्वाभिभवेनोद्रिक्ततमस्कत्वं वैश्यत्वं, रजस्सत्त्वाभिभवेनाधिकोद्रिक्ततमस्कत्वं शूद्रत्वमितीत्थमेव वाच्यतया तेषु न प्रत्यक्षं प्रमाणं भवितुमर्हतीत्यत्र, पूर्वं ''अबाधितानादिपरिग्रहेत्यादिनोक्तमपि समाधानं सदृ-

என்று பெரியோர்கள் பேசியிருப்பது உண்டாகிலும், அதற்கு ''நாம் பிறரிடம் குற்றம் காண்பது தவறு, நம்மிடம் எவ்வளவு குறைகளிருக்கின்றனவோ? குற்றமற்றவர் யார்?'' என்று உபதேசிப்பதில் நோக்கு. ''பசுவின் நெய் இது'' ''இது இன்னஜாதிரத்நம்'' என்று அந்தந்த ஜாதி

மாப்போலே ब्राह्मणत्वादिजातिகளையும் காணலாமென்று निर्वहिப்பார்கள். "तमश्शूद्रे रजःक्षत्र" इत्यादिகளிற்படியே शारीरगुणत्रयतारतम्यलक्षणजातिपक्षத்தில் वारक्रमादिகளிற்போலே अबाधित-परिग्रहादिகளே प्रमाणமாம். मनुष्यत्वजातिயொழிய अवान्तरजातिயுண்டாமாகில் अनुलोमप्रतिलोम-

---

ष्टान्तमत्र विशदयति- तमश्शूद्र इति। शारीरगुणत्रयेति। "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः" इत्युक्त्या एकैकस्य मनसि चैवंविधत्रिगुण-परिणामकृतब्राह्मण्यादिकं वर्तते। तथापि तदागमापायि सर्वं सर्वत्र भवेच्च। तस्य वर्णाश्रमाद्यनि-यामकत्वेन प्रकृतेऽविवक्षणात् शारीरेति। शरीरगतमामरणस्थायि तदधिकृत्य हि विधिनिषेधादि-प्रवृत्तिः। तत्रैव च परेषां विवादः। वारक्रमादीति। सूर्यगत्या प्रथमादितिथीनां, मेषादिराशीनां चन्द्रसंचारेण कृत्तिकादिनक्षत्राणां च क्रमस्वीकारेपि, भान्वादिवारक्रमे नानन्यथासिद्धं लिङ्गमस्ति। अथाप्यनादिशिष्टपरम्परापरिग्रहेणैव तत्क्रमसिद्धिरिति यथा, तथा "यं ब्राह्मण" इत्यादि पूर्व-पूर्वपरिग्रहपरम्परयैव ब्राह्मण्यादिसिद्धिरिति भाव्यम्। ब्राह्मण्यादीनामदृष्टविशेषशक्तिविशेषादिरूप-त्वेपि पूर्वपूर्वपरिग्रहपरम्परैव प्रमाणमिति पुरस्तादुक्तम्। नन्वथापि चातुर्वर्ण्यं मयासृष्टमित्युक्त-ब्राह्मण्यादिमनुष्यत्वावान्तरजातिसद्भावेपि ततोप्यधिकसूतमागधादिजातिसत्त्वे किं प्रमाणम्?। तथा च सर्वा अपि जातयस्सांकेतिक्य एवेति न जातिव्यवस्था सिद्ध्यतीत्यत्राह- मनुष्यत्वादीति। अनुलोमेति। पूर्वपूर्वजातीयपुंसोत्तरोत्तरजातीयस्त्रियामुत्पादिता अनुलोमास्सवर्णाम्बष्ठादयः। एतद्वि-परीतक्रमेणोत्पादिताः प्रतिलोमास्सूतमागधादयः। अनुलोमप्रतिलोमपरस्परसम्बन्धेन जातास्संकी-र्णाः। तथा च श्रीपाद्मसंहितावचनं- चर्यापादे प्रथमाध्याये "सत्वं रजस्तमश्चेति त्रैगुण्यं कमला-सन। तन्मयीं तनुमास्थाय ससर्जाहं पुरा प्रजा" इत्यारभ्य त्रिगुणात्मकशरीरसंबन्धपूर्वकं सत्वादि-गुणोन्मेषकाले भगवता स्वमुखबाहूरुपादतो व्यवस्थितवर्णसृष्टिमभिधाय तत्तद्गुणकर्तव्यविशेषांश्चो-पदिश्यानन्तरं "शूद्राशूद्रस्य भार्यैका, सा च स्वा च विशस्स्मृता। ते च स्वा च क्षितीशस्य ताश्च स्वाचाग्रजन्मन" इति वर्णानांविवाहयोग्यस्त्रीनियमं प्रदर्श्य, "स्वासु प्रजास्सजातीयाश्चातुर्वर्ण्य-

---

களை யணம், நீர்மேல் மிதந்துவருவது முதலிய அடையாளங்களால் காண்பதுபோல், ப்ராஹ்மணாதி ஜாதிகளையும் அதன் அதன் வினைவான சில கார்யங்களைக்கொண்டு காணலாம் என்றும் சிலவாசாரியர்கள் சொல்லுவர். இவ்விதம் ப்ராஹ்மண்யாதிஜாதிகள் அவயவங்களின் அமைப்பு முறைதான் என்பதை ஒத்துக்கொள்ளாது, ஸத்வம் ரஜஸ் முதலிய குணங்களின் தூக்கல் தாழ்தலால் ஜாதிவ்யத்யாஸம் ஏற்படுகிறது என்போர்க்கும் நாம் சொல்லும் ஸமாதாநம் இதுதான், இன்று ஞாயிறு நாளை திங்கள் என்ற வாரமுறைகளை எப்படி தொன்றுதொட்டு வருவதால் ஆக்ஷேபியாமல் ஒத்துக்கொள்ளுகிறோமோ? அவ்விதம் இதிலும் ஆக்ஷேபம் இருக்கலாகாது என்றுதான். மனிதன் எல்லாம் ஓர் இனம் என்பது தவிர மனிதனுக்குள் ப்ராஹ்மண்யாதி ஜாதிபேதம் இருக்குமாகில் "அநுலோமம், ப்ரதிலோமம்" முதலிய ஸங்கர

संकीर्णोत्पत्ति घटिक्कुम्पडि என் என்னில் अश्वत्वगर्दभत्वगोमायुत्वसारमेयत्वादिजातिभेदங்கள் உண்டாயிருக்க विजातीयसंसर्गத்தாலே वेसराद्युत्पत्तियுண்டாமாப்போலே संकीर्णोत्पत्तिக்கு विरोधமில்லை.

**வைதிகமார்க்கம் வெறும் ஜீவனோபாயம் மட்டுமன்று.**

वैदिकमार्गம் बहुविधनियमक्लेशोत्तरமாய் पित्रादिक्रमेण प्रवृत्तமாய் போருகையாலே बुद्धि-

मितीरितम् । अपरेतरजाती च गुण्डगोळकसंज्ञिते । जारैरुत्पादिता वर्णास्सवर्णास्वेव भीरुषु । सभर्तृकासु गुण्डोसौ गोळको विधवासुतः ।" इत्यादिना, "प्रतिलोमानुलोमाभ्यां प्रतिलोमानुलोमतः । बहवस्संकरा जाता यथाभीरादिजातयः" इत्यन्तेन संकरजात्युत्पत्तिप्रकारा बहवो दर्शिताः । पराशरमाधवीयेचाचारकाण्डे द्वितीयाध्यायेऽस्य विस्तरो बोध्यः । घटिक्कुम्पडि என் इति । किमनुलोमादिषु ब्राह्मणत्वक्षत्रियत्वाद्योरेकैकमस्ति? उतोभयम्? अथवोभयातिरिक्तम् । आद्ये एतद्वा तद्वेति नियामकाभावः । द्वितीये विरुद्धजातिद्वयसमावेशप्रसङ्गः । तृतीये तथा क्वचिदप्यदर्शनेन प्रमाणाभाव इति कथमनुलोमादिजात्युत्पत्तिर्घटेतेति भावः । क्वचित्पितृगतजातिद्वयातिरेकेण जात्यन्तरोत्पत्तिं निदर्श्यैतत्समाधत्ते- अश्वत्वगर्दभत्वेति । इमा जातयः ब्राह्मण्यादिस्थानापन्नाः । विजातीयसंसर्गेति । अश्वगर्दभीसंयोगेनेत्यर्थः । अत्र वेसरेत्येव पाठः । कल्पद्रुकोशे– "अथ वेसरः । सकृद्गर्भोऽश्वावरजस्सन्तुष्टो मिश्रजः क्षमी"ति पाठात् । वेसरः- கோவேறுக்கழுதை इति भाषायां प्रसिद्धः । तथा चात्र यथाऽश्वत्वगर्दभत्वादिव्यतिरेकेण वेसरत्वादिरन्या जातिरङ्गीक्रियते, तथा प्रकृतेप्यनुलोमादौ ब्राह्मणत्वक्षत्रियत्वादिव्यतिरेकेण सूतमागधत्वादिजातिस्वीकार इति तृतीय एव पक्षः प्रमाणवानित्याशयः । उत्पत्ति உண்டாமாப்போல- उत्पत्तेस्संभववत् । सम्भवश्चात्राविरोधः । यदपि पूर्वमुक्तं "वैदिकमार्गस्य बुद्धिपौरुषहीनपुरुषजीविकार्थत्वमिति, तदपि निराकरोति- वैदिकमार्गம் इति । क्लेशोत्तरेति । स्नानोपवासतपःक्लेशबहुळत्वादित्यर्थः । पित्रादिक्रमेणेति । प्रियहितपरमातृपितृगुरुप्रभृतिभिः प्रवर्तनादित्यर्थः । एतदुक्तं भवति- "ब्राह्मणस्य च देहोयं नोपभोगाय कल्पते । इह क्लेशाय महते प्रेत्यानन्तसुखाय चेति" रीत्या सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया यावज्जीवं गुरुकुल आत्मानमवसादयेदित्यादि-

---

(கலப்பு) ஜாதிகள் உண்டாகின்றன என்பது எப்படி பொருந்தும். மேல்ஜாதிக்காரனுக்குக் கீழ்ஜாதிக்காரியிடம் பிறந்தவன் அநுலோமன். இதற்கு மாறிப்பிறந்தவன் ப்ரதிலோமன். ஜாதியாயுள்ளது கலவாது, கலந்தால் ஜாதியன்று என்று ஸித்தாந்தமல்லவா என்று இங்கு சிலர் கேட்பர். குதிரை கழுதை முதலிய ஜாதிகள் உண்டாகியிருக்க, குதிரைக்கும் கழுதைக்கும உண்டாகும் கோவேறுக்கழுதை என்றும் ஒரு கலப்பு ஜாதியிருப்பதுபோல் கண்ணால் காண்பனவற்றில் குற்றம் ஒன்றும் சொல்லமுடியாதாகையால் இங்கும் ஒருவித தோஷம் இருப்பதாய் தெரியவில்லை.

पौरुषहीनजीविकै என்றும் गतानुगतिकलोकवंचनार्थமென்றும் शङ्किக்கவொண்ணாது. अनादिवेद-मूलமாக अविच्छिन्नसम्प्रदायமான நடப்பை ஒருவன் கட்டின இடங்கை வலங்கை போலே யாக்கி, உற்றதுபற்று என்னவும் ஒண்ணாது,

**சரீரத்தை ஆத்மா என்றது தவறு**

शरीरமே आत्मा என்றதுவும் अनुपपन्नம். "अवयवितयेदंकुर्वाणैः" என்கிற श्लोकத்தின்-

---

प्रसिद्धबहुविधनियमक्लेशोत्तरत्वात् बुद्धिपौरुषहीनजीविकार्थत्वं न संभवति । नह्येवंविधविविध-दुःखसन्ततिभागिनी काचिज्जीविका भवितुमर्हति । पित्रादिक्रमेण प्रवृत्तत्वाद्गतानुगतिकलोक-वंचनार्थत्वमपि न संभवति । न हि पितरस्स्वं पुत्रं विप्रलभन्ते । ते पि स्वपितृभिर्विप्रलब्धाः, तेपि च तथेति चेत् । न तर्हि विप्रलिप्सुः कश्चिदत्र भवति । यस्मात्प्रतारणशंका स्यात् । इदम्प्रथमत एव कश्चिदनुष्ठायापि धूर्तबकः परानुष्ठापयतीति चेत् । किमसौ सर्वलोकविलक्षण एव । यस्स्वयं सुख-लवविधुर आत्मानं यावज्जीवमवसादयति । नह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः । कथं चैनमन्ये प्रेक्षापूर्वकारिणोऽनुविदध्युः । केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीत इति । अधिकमुदयनग्रन्थादौ द्रष्टव्यम् । पूर्वोक्तं वैदिकमार्गस्य राजादिसंकेतसिद्धसमय-तुल्यत्वमपि प्रतिक्षिपति- अनादिवेदमूलेति । நடப்பு- मार्गः । கட்டின इत्येव पाटः । केनचित् कल्पितेत्यर्थः । இடங்கை வலங்கை- सव्यदक्षिणहस्तविभागः । तत्र हि पूर्वपुरुषसंकेतं विना नान्यन्मूलम् । न तथा वैदिकाचार इत्यर्थः । உற்றதுபற்று- अवर्जनीयतयाऽऽपतितं किंचि दातिष्ठ ।

पूर्वं "शरीरप्राणवैश्वानरे"त्यादिनोक्तेषु शरीरात्मवादं निराकर्तुं प्रतिजानीते शरीरமே आत्मेति । स्थूलोहमित्यादीनाम् अयो दहतीति प्रतीतिवत्पृथक्प्रतिपत्त्यनर्हसंसर्गमूलकत्वेन भ्रान्तित्वस्यानन्तरमेव वक्ष्यमाणतया शरीरात्मवादस्य निष्प्रमाणकत्वादित्यर्थः । उक्तामेवानुपपत्तिं विवरीतुं देहात्मनोर्वैधर्म्यं, वैधर्म्येपि स्थूलोहमित्यैक्याध्यासोपपत्तिं च सदृष्टान्तमाह- अवयवि-तयेत्यादि महावाक्येन । ...बहिष्करणैर्वपुर्निरवयवकोहंकारार्हः पुमान् करणातिगः । स्फुरति हि जनाः प्रत्यासत्तेरिमौ न विविंचते तदधिकुरुतां शास्त्रं रङ्गेश ते परलोकिनि । इति श्रीरङ्गराजस्तवे

---

*வைதிகஸம்ப்ரதாயம் பலவிதகாயக்லேசங்கள், கடும் நியமங்கள், நிறைந்ததாய் இருக்-கையால், சில சோம்பேறிகள் தாங்கள் வயிறு வளர்க்க இவ்விதம் கட்டிவிட்டனர் என்று சொல்லமுடியாது. பாட்டனார் தகப்பனார் முதலாக வந்த பரம்பரைஸம்ப்ரதாயமாக இருக்கிற படியால், இதில் வஞ்சனைக்கு ஏதும இடமில்லை. அநாதிகாலமாக வேதமூலமாய் இடையறாது ஒழுகிவரும் இந்த ஸம்ப்ரதாயத்தை இன்று நேற்று ஒருவன் கட்டின இடதுகை, வலதுகை, நடைமுறைபோல் அலக்ஷ்யமாக ஒதுக்கித்தள்ளவும் முடியாது.*

படியே शरीरம் पांचभौतिकपाणिपादादिसंघातமாய் "இது என்னுடைய शरीरம்" என்று தன்னில் வேறுபட்டுத் தோற்றுவதாய் चक्षुरादिकरणங்களுக்கு विषयமாய், चक्षुरादिकरणसंयोगம் இல்லாத-போது தோற்றுகிருக்கையாலும், ज्ञाताவான आत्मा एकरूपனாய் सर्वावयवप्रदेशத்தில் सुखादि-

---

भट्टपराशरपादाः । एतदर्थश्च मूल एव स्फुटीभविष्यति । पाणिपादादिसंघातेति । अवयवितयेत्यस्येदं विवरणम् । सिद्धान्ते संघातातिरिक्तावयव्यभावात् । एतदुक्तं भवति । आत्मानोऽवयवसंघातात्मकत्वे, आत्मप्रणिधानेऽवयवप्रणिधानस्यापि प्रसङ्गः । तथाचात्मसिद्धिः – "नियमितबहिरिन्द्रियवृत्तेरवहितमनसोऽहमिति स्वात्मानमवयतः करचरणाद्यवयवा न भासन्ते । स्थवीयसि चावयविनि शरीरेऽहमिति गोचरेऽभ्युपगम्यमानेऽवश्यमवयवप्रतिभासेनाप्यन्वयिना भाव्यम् । नह्यस्ति संभवः, अवयवी स्थवीयान् प्रचकास्ति. अवयवास्तु न केचन प्रथन्त इति । न चावयविनि बहिरिन्द्रियग्राह्य एवायन्नियम इत्युत्प्रेक्ष्यम् । प्रमाणाभावात् । अन्तःकरणस्य केवलस्यावयविनि वृत्त्यसंभवाच्च । वायोस्तु रूपाद्यभावात् केवलस्पर्शाधारतयोपलम्भः । तत्रापि तादृशानेकावयवप्रतिभासोऽस्त्येव । स्पृश्यमान इव घटादाविति न तेन व्यभिचार" इति । इति । पांचभौतिकेति । एतेन कार्यद्रव्य-गतानां आगन्तुकविशेषगुणानां कारणगुणपूर्वकत्वनियमेन कथमतत्पूर्वकश्शरीरे चैतन्यगुणस्संभवेदिति सूचितम् । "पंचभूतसंघाते"त्यनुक्त्वा "पांचभौतिकपाणिपादसंघाते"त्युक्त्याऽधिकया, शरीरे चैतन्याङ्गीकारे, शरीरस्य पाणिपादादिसंघातरूपत्वेन पाणिपादादिषु प्रत्येकं तदंगीकार-प्रसङ्गेन शरीरस्यानेकचेतनाधिष्ठितत्वप्रसङ्ग इति दोषोपि दर्शितो भवति। "संघातपरार्थत्वा"दित्युक्तरीत्या शयनासनादेरिव शरीरस्यापि संघातात्मकस्य परार्थत्वेनात्मनश्चापरार्थत्वेन कथमुभयोरैक्यमिति कथनाय संघातशब्दप्रयोगः । एवं युक्तिमात्रेण तयोर्भेदं निरूप्य प्रत्यक्षतोपि निरूपयति- இதென்னுடைய शरीरம் इति । "इदंकुर्वाणे"रित्यस्य विवरणमिदम् । अहमिति प्रत्यगर्थ-तया भासमानस्यात्मन इदमिति परागर्थतया भासमानदेहाभेदो नोपपद्यत इत्याशयः । "बहिष्करणै"रित्यस्यार्थं विवृणोति- चक्षुरादिकरणेति । "स्फुरती"त्युत्तरार्धादाकृष्यते । शरीरं नात्मा बहिरिन्द्रियग्राह्यत्वात् घटवदित्यनुमानमिहाभिप्रेतम् । "बहिष्करणै रेवे"त्यवधारणगर्भत्वमभिप्रेत्याह- चक्षुरादिकरणसंयोगம் இல்லாதபோது इति । अत्र தோற்றுகிருக்கையாலும் इत्यस्य पश्चात्तनेन

---

*இனி சரீரமே ஆத்மா என்ற விஷயம் எடுத்துக் கழிக்கப்படுகிறது. சரீரம் இருக்கும்-படியைப் பார்ப்போம். ஆத்மாவின் தன்மைகளையும் ஆராய்வோம். இது இரண்டும் ஒரே வஸ்து என்னலாமா கூடாதா என்பது அப்போது விளங்குமல்லவா? சரீரம் பஞ்சபூதங்களா-லான கை கால் முதலிய பற்பல அங்கங்களின் கூட்டு. "இந்த உடல் என்னுடையது" என்று நான் என்ற ஆத்மாவைவிட வேறுபட்டுத் தோன்றுகிறது. கண் முதலிய ஜ்ஞானக்கருவிகளால் தோன்றி, அக்கருவிகள் வேலைசெய்யாதபோது தோன்றுவதில்லை. ஆத்மாவோ, ஒருமித்த*

களுக்கு प्रतिसन्धाताவாய் अहंबुद्धिविषयமாய் बाह्येन्द्रियங்களால் தோற்றுதே, समाहितனுக்கு करणங்களுடைய प्रत्याहरणदशैயிலும் காணலாயிருக்கையாலும் देहத்திற்காட்டில் இவனுக்கு

காணலாயிருக்கையாலும் इत्यनेन अन्वयः। तथा चानेन वाक्यद्वयेन देहात्मनोरस्वभावद्वयस्य समुच्चयः उक्तो भवति। बाह्येन्द्रियप्रत्याहरणदशायामप्यात्मभानस्याग्रेऽत्रैव वक्ष्यमाणतया तद्विरुद्धस्वभावो देहो नात्मेत्यर्थः। एतावता देहधर्मानुक्त्वा अथात्मस्वरूपमाह- ज्ञाताவான இति आत्मनो ज्ञातृत्वमेव देहव्यावृत्तौ पर्याप्तं लिङ्गमित्याशयेन ज्ञातेत्युक्तिः। तदुक्तमात्मसिद्धौ- दृढ एव शरीरे विरोधिगुणापातमन्तरेण कुसुमविलेपनगन्ध इव निवर्तमानश्चैतन्यसुखादिर्न तद्गुणो भवितुमर्हति। न खलु तद्विशेषगुणा रूपादयस्तथा निवर्तन्ते" इति। "निरवयवक" इत्येतत् विशदयति एकरूपனாய் इति। अनेन फलितमाह- सर्वावयवेति। अवयवसंघातस्य जीवत्वे समुदायस्य प्रत्येकानतिरेकादात्मनोऽनेकरूपत्वप्रसंगः। एकस्यैवावयवविशेषस्य तत्त्वे तु सर्वशरीरव्यापि सुखादिप्रतिसन्धानं न स्यात्। अतिरिक्तजीवाङ्गीकारे च हृदयादिप्रदेशविशेषस्थितस्य तस्य धर्मभूतज्ञानव्याप्त्या सर्वावयवप्रत्यासत्तेरविशिष्टत्वात्सर्वशरीरव्यापि तदनुसन्धानं युज्यत इति भावः। अहंकाराहं इत्यस्यार्थं दर्शयति- अहंबुद्धिविषयமாய் इति। "करणातिग" इत्युक्तं विवृणोति- बाह्येन्द्रियங்களாலே इति। करणातिगस्यैव स्फुरणोक्त्या फलितमाह- समाहितனுக்கு इति। अवहितस्येत्यर्थः। प्रत्याहरणदशेति। अत्र "स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहार" इति पातंजलसूत्रम्। "यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनुनिर्विशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहार" इति व्यासभाष्यम्। वाचस्पतिरपि- चित्तमपि मोहनीयरंजनीयकोपनीयैश्शब्दादिभिर्विषयै र्न संप्रयुज्यते। तदसंप्रयोगात् चक्षुरादीन्यपि न संयुज्यन्त इति सोयमिन्द्रियाणां चित्तस्वरूपानुकार" इत्याह! श्री विष्णुपुराणेपि- शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योजयेत्। कुर्याच्चित्तानुकारीणि प्रत्याहारपरायण इति प्रोक्तम्। प्रत्याहरणदशैயிலும் इत्यपिना धारणध्यानादिदशाग्रहणम्। उत्तरोत्तरदशासु वैशद्यं भाव्यम्। तथा च न्यायपरिशुद्धिः- अपि च समाहितधियामस्मदादीनामपि निरुद्धबाह्यकरणवृत्तीनां मात्रया मनःप्रणिधानेपि, गृहालोकयोरिव देहदेहिनोर्भेदोपि स्फुरत्येव। निष्पन्नसमाधीनान्तु विशदतम इति विशेष इति। "एवमात्मा स्वतस्सिद्ध्यन् आगमेनानुमानतः। योगाभ्याससमुत्थस्पष्टं प्रत्यक्षेण प्रकाशत इति च यामुनाचार्याः। स्फुरतीत्यस्यार्थान्तरमभिप्रयन्नाह- देहத்திற்காட்டில் इति। अनयोर्यद्यपि भेदस्स्फुरति, अथापीत्युत्तरत्रान्वयः வேறுபாடு- वैधर्म्यं। तदुक्तं यामुनाचार्यैः- "उत्पत्तिमत्त्वात्

வஸ்துவாய் தோன்றுகிறது. சரீரத்தின் எல்லாஇடங்களுக்கும் பொதுவாய் ஸுகதுக்காதிகளை உணருகிறது. சரீரத்தைப்போல் இது என்று தோன்றாமல் நான் என்று தோன்றுகிறது.

வேறுபாடு தோற்றுமிற்க, காய்ந்த இரும்பில் तेजस्सैக் காண்கிறவன், இரும்பு சிவந்தது உஷ்ணமாயிருந்தது என்கிறப்போலே संसर्गविशेषத்தாலே "स्थूलोह"मित्यादिप्रत्ययव्यवहारங்களுமுண்டா-

पारार्थ्यात्सन्निवेशविशेषतः । रूपादिमत्त्वाद्भूतत्वाद्देहो नात्मा घटादिवत् । सच्छिद्रत्वाद्देहित्वाद्देहत्वान्मतदेहवत् । इत्यादि साधनैर्न्यायैर्निषेध्य वर्ष्मणश्चिति''रिति । अथ "जनाः प्रत्यासत्तेरिमौ न विविंचत" इत्यस्य समुचितदृष्टान्तप्रदर्शनपूर्वकं वाक्यार्थमाह- காய்ந்த இரும்பில் इति । "तप्तरक्तमयो दहती''त्यादौ कृष्णेऽनुष्णे चायःपिण्डे वह्निधर्माणां रक्तत्वदाहकत्वादीनां पृथक् प्रतिपत्त्यनर्हसंसर्गविशेषवशाद्यथाऽऽरोपः, व्यवहारश्च भवति, तथैव शरीरस्यात्मापृथक्सिद्धत्वेन तद्धर्माणां स्थूलत्वादीनामात्मन्यारोपपूर्वकं "स्थूलोहं कृशोह''मित्यादयो व्यवहारा भवन्तीत्यर्थः । "तदेवं चैतन्यस्वभावः परिस्फुरन्नपि अयमात्मा गम्भीरजलाशयचरमीनवत् जलसंसृष्टक्षीरवच्च न विविच्य स्फुटं चकास्ती''ति यामुनसूक्तिरिह भाव्या । इयांस्तु विशेषः- पूर्वत्राधेयाग्निधर्माणामाधारेऽयस्यध्यारोपः । इह त्वाधारदेहधर्माणामाधेये आत्मनीति । एतच्च, तत्र तत्र प्रवृत्तेनेन्द्रियेण तत्तद्धर्माणामेव ग्राह्यत्वेन, देहविशेष्यकचाक्षुषज्ञानेन देहधर्माणामेवावगाहनसंभवादुक्तम् । आत्मनश्च चक्षुराद्ययोग्यत्वात् । न चैवमपि दृष्टान्ते अग्नेरयसश्च चक्षुरादिग्रहणयोग्यत्वात्कदाचिदयोधर्मा अपि वह्नावारोप्यन्तामिति वाच्यम् । आरोपे सति निमित्तानुसरणात् । न हि निमित्तमस्तीत्यारोपोवश्यंभावी । बुद्धेरपुरुषतन्त्रत्वात् । वस्तुतस्तु प्रकृतेपि आधेयधर्माणामेवाधारेआरोपः । शरीरस्य आत्मानं प्रत्याधेयत्वाद्विधेयत्वाच्चेति । प्रत्ययो ज्ञानम् । व्यवहारश्शब्दप्रयोगः । "तदधिकुरुतां शास्त्र''मित्यादेस्त्वयमर्थः । हे रङ्गेश! ते शास्त्रं त्वदाज्ञारूपं शास्त्रं, परलोकास्तित्ववादिनि आस्तिके अधिकारिणि, अधिकुरुतां प्रवर्ततां चरितार्थमस्त्विति ।

यदप्युक्तं "இந்த பாதிக்கப்பார்த்தால்" इत्यादिना स्थूलादिप्रत्यक्षस्या"ग्निरुष्ण" इत्यादि प्रत्यक्षतुल्यत्वं, तदपि दूषयति- दीपैक्येति । अयं भावः- "सेयं दीपज्वालेति प्रत्यभिज्ञाप्रत्यक्षस्य नैक्यं पूर्वापरज्वालयोर्विषयः । वर्तितैलाद्यवयवसंयोगरूपकारणभेदेन प्रतिक्षण ज्वाला-

கண் முதலிய இந்த்ரியங்களால் காணமுடியாமல், மனம் குவித்து த்யானிப்பவனுக்கு ஸமாதிநிலையில் காணப்படுகிறது. ஆக இந்த வேற்றுமைகளால் இரண்டும் வேறு என்று அறியலாம். காய்ந்த இரும்பைக் காணும்போது "இரும்பு சிவந்தது, இரும்பு சுடுகிறது" என்று வ்யவஹரிக்கிறோம் இரும்பு வேறு நெருப்பு வேறு. இரும்பு சிவப்பன்று, கறுப்பு. அது சுடாது ஆனாலும் மேற்கூறியபடி பேச்சு வழங்குகிறது. அதுபோலவே நான் கருப்பன் இளைத்தவன் என்றுப்போலுள்ள வழக்கெல்லாம். இரண்டு பொருள்கள் பிரிவின்றி ஒன்றிநின்றால்- ஒன்றினுடைய தன்மைகளை மற்றொன்றில் ஏறிட்டு பரஸ்பரம் மாறுடிச் சொல்லுகிறோம். அதுதான் இரண்டிடத்திலும் மேற்கூறிய வ்யவஹாரத்துக்குக் காரணம். மேலும் "நேற்றி-

கின்றன. दीपैक्यप्रत्यभिज्ञादिகள்போலே अन्यथासिद्धिसंभावனை உள்ள प्रत्यक्षங்களை "अग्निरुष्ण" इत्यादि प्रत्यक्षங்களோடொக்கச் சொல்லவொண்ணாமையாலே अनन्यथासिद्धव्यतिरेकप्रत्ययक्-

भेदावश्यंभावात्। ऐक्यप्रतीतिस्तु साजात्यालम्बनाप्युपपद्यते, अचिरनिर्वापितारोपितदीपज्वालावत्। ततश्च तत्प्रत्यक्षं सम्भाव्यमानान्यथासिद्धि। एवं "स्थूलोऽह"मित्यादिप्रत्यक्षमपि "रक्तस्स्फटिक" इतिवत् संसर्गविशेषमूलभ्रमरूपत्वादन्यथासिद्धमिति। एतेन "प्रत्यक्षं कथमन्येन बाधार्हं भवति? सर्वेभ्यस्तस्य बलीयस्त्वात्" इति चोद्यं परिहृतं भवति। असंभाव्यमानान्यथासिद्धेरेव तस्य प्राबल्यव्यवस्थापनात्। इदं चाग्रे भविष्यति। अग्निरुष्ण इति। नह्यस्य पूर्वस्येव कथञ्चिदपि अन्यथासिद्धिस्सुवचा। यद्यपि कस्यचिद्धातुवैषम्यादिना "अग्निरनुष्ण" इति विपरीतप्रत्ययो भवति, तथापि तस्य दोषमूलतायास्सर्वसम्प्रतिपन्नत्वेन, न तेन, उष्णत्वप्रत्यक्षस्य बाधादिकमिति बोध्यम्। ननु दीपैक्यप्रत्यभिज्ञाया ज्वालाभेदानुमानेनास्तु बाधः। इयं दीपज्वाला पूर्वतो भिन्ना, तत्सामग्रीभिन्नसामग्रीप्रभूतत्वादिति। स्थूलोहमित्यादीनान्तु न तथा बाधो दृष्ट इत्यत्राह- अनन्यथासिद्धव्यतिरेकेति। मम शरीरमिति व्यतिरेकप्रत्ययात्, अहं शरीरमिति कदाप्यप्रत्ययात्, तेन तदन्यथासिद्धेर्दुर्वचत्वात्, तस्य भेदसाधकत्वेन, देहात्मनोर्भेदस्सिद्ध इति स्थूलोहमित्यभेदबुद्धिर्बाधितेत्यर्थः। ननु विवेकिनां "मम शरीर"मिति शरीरात्मनोर्भेदे प्रतिपन्ने कथं स्थूलोहमित्यभेदारोपोदयः। "इमौ जपास्फटिकौ" इति भेदे प्रतिपन्ने कथं वा "रक्तस्स्फटिक इत्यभेदभ्रमः। जपात्वस्फटिकत्वाभ्यां भेदग्रहेपि, रक्तत्वस्फटिकत्वाभ्यां भेदाग्रहाद्भवति तादृशोऽभेदभ्रम इति चेत्, इहापि अहन्त्वशरीरत्वाभ्यां भेदेऽवगतेपि, अहन्त्वस्थूलत्वाभ्यां भेदानवगमात्, स्थूलोहमिति अभेदबुद्धिर्जायत एव। अहन्त्वस्य स्थूलत्वाविरोधित्वात् इति गृहाण। तदुक्तं चण्डमारुते- "स्थौल्यं नाहमर्थभेदः। न चाहन्त्वं स्थूलत्वावच्छिन्नप्रतियोगिताकभेदः। शरीरे च शरीरत्वमेवाहमर्थभेदः। अतस्तद्ग्रहेपि भ्रमोपपत्ति"रिति। इयांस्तु विशेषः- स्फटिके जपाधर्मलौहित्यमात्रारोपः, न तु जपायाः, प्रकृते तु स्थौल्यस्य तद्धर्मिणश्चोभयस्याहमर्थ आरोप इति।

ननूक्तमेव "मम शरीर"मित्यादेश्शिलापुत्रकशरीरव्यपदेशतुल्यत्वमित्यत्राह- मम शरीरमिति। शिलापुत्रकातिरिक्तशरीरसद्भावस्य सर्वप्रमाणबाधितत्वेन शिलापुत्रकस्य शरीरमित्यादौ

விருந்து தூங்காவிளக்கு ஒரேகொழுந்தாய் எரிகிறது" என்கிறோம். ஜ்வாலைகள் ஒன்றென்றாலும் அது ஒன்றன்று. அவ்வப்போது எண்ணெயைக் குடித்து, திரியைத் தின்று வெவ்வேறு ஜ்வாலைகள் அங்கு கிளம்புகின்றன. அவை ஒன்றுபோலிருப்பதால் ஒன்றென்கிறோம். ஆகையால் 'நான் இளைத்தவன்" இத்யாதி வ்யவஹாரங்கள், "நெருப்புச் சுடுகிறது" என்பது போல் உண்மையான பேச்சல்ல. "என்னுடைய இளைத்த உடல்" என்பதுதான் சரியான

தாலே देहात्मभ्रमம் बाधितமாம். "मम शरीरम्" என்கிற प्रत्ययத்துக்கு बाधितान्यार्थமான शिला-
पुत्रकशरीरादिदृष्टान्तம் अनुपपन्नம். "ममात्मा" என்றவிடத்தில் आत्मशब्दம் स्वरूपपर्यायமாகை-
யாலே, "मम गृहम्" என்னுமாப்போலே अर्थान्तरத்தைக் காட்டுகிற शरीरशब्दத்துக்கு दृष्टान्त-
மாகாது. प्रत्यक्षविरुद्धங்களில் अनुमानागमप्रवृत्तिகூடாதென்னுமது दोषशंकानर्हप्रत्यक्षविषयம்.

---

षष्ट्या औपचारिकत्वेनारोपितभेदविषयकत्वस्वीकारान्न तत्तुल्यत्वमिति भावः । यत्तु "मम शरीर-
मिति निर्देशो "ममात्मे"तिवद्गौणो भविष्यति" इत्युक्तं, तत्राप्याह- ममात्मेति । "आत्मा जीवे
धृतौ देहे स्वभावे परमात्मनी" त्यादिकोशानुसारेणात्मशब्दस्य स्वरूपवाचितया, "मम स्वरूप"
मित्यादाविव तादृशव्यवहारस्य भेदसाधकत्वं न युज्यते । अस्मच्छब्दस्यात्र देहादिविशिष्टपरतया
आत्मस्वरूपशब्दयोश्च स्वरूपमात्रनिष्कर्षकत्वात् षष्ठ्युपपत्तिः । शरीरशब्दस्तु न क्वापि स्वरूपपरः
प्रयुक्तः, प्रत्युत "मम गृह" मित्यादौ गृहादिशब्दवत् अर्थान्तरवाची दृष्ट इति न स आत्मशब्द-
स्थानीय इत्याशयः । ननु शरीरस्यैवात्मत्वं प्रत्यक्षाधिगतम् । न च प्रत्यक्षप्रतीपतया पराक्रमितुं
अनुमानागमौ प्रभवतः । व्याप्तिव्युत्पत्त्यादिग्रहणे ताभ्यां तदपेक्षणात्, अन्यथा प्रपञ्चसत्यत्वप्रत्यक्षं
तन्मिथ्यात्वानुमानानि बाधन्तां, विजयन्तां च ग्रावप्लवनवाक्यादीनि प्रत्यक्षविरुद्धानि । तथा च
"अवयवितयेदंकुर्वाणै" रित्युक्तानुमानानि आगमाश्च कथं प्रत्यक्षविरुद्धं देहातिरिक्तात्मानं साध-
यिष्यन्तीति शंकायामाह- प्रत्यक्षविरुद्धங்களில் इति । अत्रेदं बोध्यं- सत्यं दोषशङ्कानर्हप्रत्यक्षे
अनुमानागमौ न प्रतिप्रवर्तेते । तदर्हे तु कामं प्रतिबन्धं कुर्वत एव । दोषाश्च क्वचिद्विषयगताश्चाक-
चक्यादयः क्वचिच्च करणगता अङ्गुल्यवष्टम्भतिमिरादयः । तेषु उत्तरेषामपसरणमेव तत्र तन्मूलक-
प्रत्यक्षस्य बाधकमिति यद्यपि न तेषु अनुमानागमादीनां बाधार्थमपेक्षा विद्यते, तथापि यत्र विषय-
गता दोषा विपरीतदर्शनं विदधति, तत्र विपसीतवासनावशादुत्तरोत्तरतादृक्प्रत्ययप्रवाहनिरोधायानु-
मानागमादीनामवश्यमपेक्षितत्वं सर्वसम्प्रतिपन्नम् । यथा ज्वालैक्यप्रत्यक्षबाधाय तद्भेदानुमानं,

---

சொல். பொம்மை என்பது உயிரற்ற வெறும் உடல்மாத்திரம் என்பது எல்லோரும் ஒப்பின
தாகையால் "பொம்மையின் உடல்" என்பது நேர்மையான பேச்சாகாது. ஆகையால் அது
இங்கு உதாஹரணமாகாது. ஆனால் "என்னுடைய ஆத்மா" என்றும் உலகில் பேச்சு வழங்கு-
வதால், "நான் வேறு ஆத்மா வேறு" என்று ப்ராப்தமாகாதா என்று சிலர் கேட்கலாம். அது
அவ்வாறு அன்று. அங்கு ஆத்மா என்பதற்கு ஸ்வரூபம் என்று அர்த்தமாகையால், யாரு-
டைய ஸ்வரூபம் என்று கேட்பவருக்கு என்னுடைய ஸ்வரூபம் என்று விடைதருவதுபோல
"என்னுடைய ஆத்மா" என்றும் பதிலளிக்கிறோம். என்னுடைய வீடு என்பதுபோல் என்-
னுடைய சரீரம் என்ற சொல். ஆகையால் அது இங்கு த்ருஷ்டாந்தமாகாது. ப்ரத்யக்ஷத்-
துக்கு எதிராக ஊஹித்தல் சொல்லல் முதலியன செல்லுபடியாகாதே. இங்கு "நான் இளைத்-
தவன்" என்பது ப்ரத்யக்ஷமாயிற்றே என்றவாதமும் சரியல்ல. உண்மையான ப்ரத்யக்ஷத்திற்-
கல்லவோ அத்தகைய மதிப்பு. மேலெடுத்த ப்ரத்யக்ஷம் ப்ரமமாயிற்றே.

"காணுதது அடியோடு இல்லை" என்னவொண்ணுது.

पृथिव्यादिகளொழிய வேறொரு तत्त्वமில்லை என்றதுவும் यथासंभवம் प्रमाणங்களாலே तत्त्वान्तरங்களும் सिद्धिக்கையாலும், अतीन्द्रियविषयங்களில் योग्यानुपलम्भबाधமில்லாமையாலே शास्त्रप्रवृत्तिகூடுகையாலும். அவற்றை இசையாதொழியில், இசைந்தவைதன்னையும் தள்ள-

आत्मधर्मभूतज्ञानादीनामुत्पत्तिविनाशप्रत्यक्षोपमर्दनाय तन्नित्यतावेदकागमश्चापेक्ष्येते। प्रपञ्चसत्यत्व, ग्रावनिमज्जनादिप्रत्यक्षस्य तु मात्रयापि दोषशङ्काकलङ्कितत्वाभावात्, न तद्विप्रतीपतया अनुमानागमोदयः। एवं च प्रकृते देहात्मप्रत्यक्षस्य प्रत्यासत्यादिदोषमूलकत्वात् पूर्वोक्तानुमानागमयोस्तद्बाधकत्वं युज्यत एवेति। एतत्तत्त्वं चास्मदीयाद्वैतरत्नतत्त्वपरीक्षायां चरमप्रकरणे द्रष्टव्यम्।

ननु पृथिव्यादिद्रव्यचतुष्टयातिरेकेणास्माभिस्तत्त्वान्तरानङ्गीकारादर्थतस्तत्सङ्घातभूतशरीरस्यैवात्मत्वमापतितमिति यदुक्तं पूर्वं तदपि दण्डयति- पृथिव्यादिகள் इति। "என்றதுவும்" इत्यस्योपरिष्टात्, "अनुपपन्न" मित्यनेनान्वयः। यथासम्भवमिति। "अत्र पक्षी पततीत्यादिप्रत्यक्षेण, "आत्मन आकाशस्संभूत" इत्याद्यागमेन चाकाशस्य, आगमेनैव आत्मनः, एवं कालादीनां च तथातथा सिद्धिरिति भावः। "प्रमाणங்களாலே" इति बहुवचनं, प्रत्यक्षवदनुमानागमयोरपि स्वमते प्रामाण्यसमर्थनादुपपद्यते। ननु आत्मादीनामनुपलम्भबाधितत्वात् "असन्निकृष्टवाचा च द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपिवे"ति वचनेन, बाधिते शास्त्रप्रवृत्त्ययोगावगमात् कथमात्मादीनामागमात्सिद्धिरित्यत्राह- अतींन्द्रियविषयेति। न केवलमनुपलब्धिरभावसाधिका, अपि तु योग्यस्य सत अनुपलब्धिः। योग्यावाऽनुपलब्धिः। योग्यस्य- इन्द्रियसन्निकर्षादिप्रत्यक्षसामग्रीं प्राप्तस्य। योग्याप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यतावती। यदि स्यादुपलभ्येतेत्येवं प्रसञ्जनार्हेत्यर्थः। अन्यथा अनुपलब्धिमात्रेणाभावसाधने तया पिशाचादीनामप्यभावनिश्चयापातः। तथा चातीन्द्रियात्मादिविषये योग्यानुपलब्धिकृतबाधाभावेन शास्त्रप्रवृत्तिर्निरर्गळेति भावः। उक्तानङ्गीकारे उपनिपतदनिष्टं उपदिशति- அவற்றை इति। प्रमाणसिद्धाकाशात्मादीनामनङ्गीकारे तथात्वेन भवदभिमतपृथिव्यादिपदार्थवर्गोऽपि निगीर्येत माध्यमिकादिभिः, घटादिव्यवहारा अर्थशून्या व्यवहारत्वात्स्वाप्नव्यवहारवदिति। अतश्शून्यवाद एव शरणं तव भवेदिति भावः। ननु "यन्नोपलभ्यते, तन्नास्त्येव, विपरीतन्त्वस्ति" इत्येष एव निर्णयः। किमनुपलब्धौ योग्यताविशेषाग्रहेणेति वदतश्चार्वाकान्प्रति उदयनोपालंभं उदाहरति-

ப்ருதிவீ முதலிய நான்கு பொருள்கள் தவிர வேறெதுவும் இல்லையென்கிறீர்கள். ஆனால் ஆகாசம் முதலியனவும் வேறு ப்ரமாணங்களால் கிடைக்கின்றனவே. புலன்களுக்குப் புலப்படமுடியாத தர்மாதிகளை புலப்படவில்லை என்றமாத்ரத்தினுல் தள்ளக்கூடாது.

லாம்படி நிற்கைபாலும், अनुपपन्नம் योग्यायोग्यविभागமற अनुपलम्भमात्रத்தாலே वस्तुவை இல்லை என்பார்களை "गृहाद्बहिर्गतश्चार्वाकस्सोरस्ताडं शोकविकलो विक्रोशेत्" என்று उपालम्भित्தார்கள். भूतचतुष्टयसंयोगविशेषத்தாலே किण्वादिसंयोगத்தில் मदशक्त्यादिகள்போலே चैतन्यगुणம் பிறக்கிறதென்றதும் प्रत्येकसमुदायादिविकल्पத்தாலே दूषितம். शरीरावयवங்களெல்லாம் தனித்தனியே चेतनங்களென்றால் ग्रामसमाधिயாய் परस्परगृहीतप्रतिसन्धानமும் கூடாதே परस्परोपकारनियमமுமல்லையாம். இவற்றாலே अवयवि என்றொரு द्रव्यान्तरம் பிறக்குமென்று वैशेषि-

योग्यायोग्येति । तदुक्तं कुसुमाञ्जलौ तृतीयस्तबके- गृहाद्बहिर्निर्गतश्चार्वाको वगको न निवर्तेत । प्रत्युत पुत्रदारधनाद्यभावावधारणेन सोरस्ताडं शोकविकलो विक्रोशेत्" इति । अत आचार्यैरत्र तदेकदेशोऽनूदित इति भाव्यम् । लेखकानां वा इदमर्धजरतीयमाचरितम् । अयं तदर्थः- चार्वाके गृहाद्बहिर्निर्गते सति गृहे स्थितानां तदनुपलब्ध्या तदभावावधारणे न स पुनर्निवर्तेत । बहिर्गतस्य च तस्य पुत्रदाराद्यनुपलब्ध्या तदभावावगतौ सोरस्ताडं शोकविलापादिप्रसङ्ग इति ।

"तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवदिति पूर्वोक्तमपि दूषयति - भूतचतुष्टयेति । प्रत्येकसमुदायेति । प्रत्येकं चेच्चैतन्यं, शरीरे नानाचेतनोपलब्धिप्रसङ्गः । समुदाये यदि, सङ्घातानात्मकात्मोपलब्धिविरोधप्रसङ्ग इति दूषितप्रायमेवेत्यर्थः । प्रत्यवयवं पृथक्चैतन्याङ्गीकारे दुरुद्धरं दूषणान्तरमाह- शरीरावयवेति । ग्रामसमाधीति । अनेकग्रामण्यधिष्ठितग्रामवदित्यर्थः । ततश्च फलितमाह- परस्परगृहीतेति । नानापुरुषेष्विवैकदेहस्थचेतनेष्वपि स्मृत्यनुभवयोस्सामानाधिकरण्यविरहेण "दृष्टमेव स्पृशामीत्यादिपरस्परगृहीतार्थप्रतिसन्धानं न स्यादित्यर्थः । उपकारनियमेति- न केवलं उपकारानियम एव, अपि तु ऐकमत्यानियमेनोपकारानियमवत् कदाचित्पाणिपादादिकं परस्परं कलहायेतेत्यपि भावः । ननु न पृथिव्यादिभूतचतुष्टयसमुदायस्य देहत्वं, किन्तु ततो जातस्यातिरिक्तावयविन एवेति नोक्तदोष इत्यत्राह- இவற்றாலே इति । पृथिव्यादिनेत्यर्थः ।

அவை உண்டென்று சாஸ்த்ரம் சொல்லும். உண்மையை மறைக்க முயன்று உள்ளதும் போகும். காணக்கூடியவை கூடாதவை என்ற வரம்பின்றி, காணாதமட்டிலேயே இல்லை என்று துணிந்து கூறுவோரை முன்னோர்கள் பழித்துள்ளார்கள். "வீட்டைவிட்டு வெளியில் செல்ல புறப்பட்ட சார்வாகன், நடுவழியில் மனைவி மக்களைக் காணாது 'இல்லையவர்கள்" என்று தீர்மானித்து மார்பிலடித்துக்கொண்டு துயரம் தாங்காது அழட்டுமே என்று. மண் ஜலம் முதலிய பொருள்களின் கூட்டுறவில் தேஹத்தில் புத்தி என்ற குணம் பிறக்கிறது பாளையைக்கினைபோது வடியும் மதுவின் மயக்கும் சக்திபோல என்பர், இங்கு நாம் கேட்கிறோம். உடலின் ஒவ்வொரு உறுப்பையும் தனித்தனியே புத்தியுள்ளது என்கிறாயா? அப்போது என்னவாகும் தெரியுமா? ஓரூருக்குப் பலவதிகாரிகள் இருந்தால் ஆவதுபோல ஒன்று சொன்னதை மற்றொன்று கேளாது ஒன்றுக்கொன்று உதவமறுத்து கலஹம் பிறக்கும். பல உறுப்புகள்

कादि்கள் சொல்லும் अर्थம் सम्प्रतिपन्नोपादानावस्थाविशेषம் ஒழிய अपूर्वமாக வருவதொரு द्रव्य-विशेषம் प्रत्यक्षादि्களாலே सिद्धियாமையாலும், अनन्यथासिद्धप्रत्यभिज्ञाबलத்தாலும் निरस्तம். अवयविகொள்ளுவார்க்கும் अवयवगतविशेषगुणங்கள் இல்லாதபோது अवयविயில் विशेषगुणம் பிறக்க प्राप्तिயில்லை. मदशक्तिविषरक्तयादि்களும் चूर्णहरिद्रादियोगजरागமும் करकाकाठिन्यமும் रूपरसादिविचित्रपरिणामமும் पाकादिनिमित्तविशेषங்களாலே प्रत्यवयवம் பிறந்தனவென்னுமிடம்

---

वैशेषिकादि्கள் इत्युक्त्या चार्वाकस्याप्यतिरिक्तावयविसद्भावेऽनिच्छा द्योत्यते। तदुक्तं न्यायसिद्धाञ्जन जीवपरिच्छेदे अवयविनश्च दूषितत्वादिति पंक्तिव्याख्यानरत्नपेटिकायां- त्वयापीत्यादिः। चार्वाकमतेपि अवयवी नास्त्येव। त्रसरेणुपुञ्जस्यैव तन्मते घटादिरूपत्वाभ्युपगमात् इति। तथा चेयं मध्यस्थशङ्केति बोध्यम्। சொல்லும் अर्थம் इति- अस्याग्रे, निरस्तमित्यनेनान्वयः। संप्रतिपन्नेति। उपादानस्य योऽवस्थाविशेषः, असमवायिकारणतया तदभ्युपगततन्तुसंयोगात्मकः तस्यैव पटशब्द-वाच्यत्वादित्यर्थः। प्रत्यक्षादीत्यादिनाऽनुमानपरिग्रहः, पटस्तन्तुभिन्नः तदविषयकप्रतीतिविषय-त्वात्, घटवदिति। सिद्धियாமையாலும் इति। नहि सुसूक्ष्ममपि निरीक्षमाणैरवयवातिरिक्ता-वयव्युपलभ्यते। अनुमानं च, व्यतिषङ्गविशेषभाजां तन्तूनामेव पटात्मकत्वस्वीकारात् पटविषयक प्रतीतेस्तन्त्वविषयकत्वाभावेनासिद्धहेतुकं भवतीति भावः। न केवलमतिरिक्तावयविनि साधकं नास्तीत्येतावदेव, बाधकमप्यस्तीत्याह- अनन्यथासिद्धेति। मृदयं घट इत्यादिप्रत्यभिज्ञया प्रत्युत तयोरैक्यमेव सिद्ध्यतीति भावः। अस्यास्साजात्याद्यालंबनत्वासंभवः अनन्यथासिद्धपदेन ज्ञाप्यते। अतिरिक्तावयव्यङ्गीकारमन्वारुह्याप्याह- अवयवीति। अवयवगुणपूर्वकत्वादवयविगुणा-नामित्याकूतम्। तथा च प्रत्यवयवं चैतन्याश्रयत्वे उक्त एव दोष इति बोध्यम्।

प्रत्येकमवयवेष्वविद्यमानगुणोत्पत्तौ पूर्वं, यान्युदाहृतानि न तान्यपि तवानुकूलानी-त्याह- मदशक्तीत्यादि। प्रत्यवयवமும் इति। अवयविगुणानामवयवगुणपूर्वकत्वनियमासिद्धावपि अतिरिक्तावयव्यस्वीकारेपि यथोपलंभं प्रत्येकमपि ते गुणा अङ्गीकार्याः। नहि करका कठिना, तदवयवास्त्वकठिनाः, पाकेन घटो रक्तस्तदवयवाः पुनश्शुक्ला इति भवति प्रतीतिः। युक्तिश्च-किण्वादिपरिणामसुराद्रव्ये प्रत्यवयवमपूर्वरसोपलब्धिवत् मदशक्तिरप्यावश्यकी। मदशक्तिर्व्यति-

---

சேர்ந்து ஓர் உருவத்தை உண்டாக்குகின்றன. அதுதான் அவயவி. அதில்தான் புத்தி பிறக்கிறது என்று வைசேஷிகர் சொல்லுவதுபோல் நீங்கள் சொல்லுவதானால், அவர்கள் மதமே நிலைக்காதே. அவயவங்களின் கூட்டுறவு தவிர அவயவி என்று தனித்தபொருள் ஒன்று காணாமையாலும், முன்னிருந்ததுவேயிது என்று பார்த்தவர் நினைப்பதாலும் அது சரியன்றே. அப்படி நீ கொண்டாலும் அவயவத்திலில்லாதகுணம் அவயவியில்மட்டும் தோன்றக்கூடுமா? மயக்கும சக்தி, விஷசத்து, வெற்றிலைச்சிவப்பு, பனிக்கட்டியின் கடினத்துவம், வர்ணம் சுவை

उपलम्भयुक्त्यादिसिद्धம். व्यवस्थितरूपங்களான अवयवங்களிலில்லாத चित्ररूपம் अवयविயில் வந்தபடி என் என்னில், यथादर्शनம் अवयवगतरूपविशेषங்களாலே अवयविயிலே रूपविशेषம் பிறக்கிறதென்றிவ்வளவும் கொள்ளவேணும். अवयवसङ्घातமொழிய अवयविயில்லை என்கிற पक्षத்தில் अवयवगतसितरक्तादिसमुदायமொழிய வேறு चित्ररूपமென்பதொன்றில்லை. இத்தாலே पाणि-

---

रिक्तशक्तिश्च नोपलभ्यत इत्यादिका बोध्या । ननु नायं नियमः, चित्रपटे व्यभिचारात् । न हि तन्तुषु प्रत्येकं चित्रमस्तीत्याशंक्य अतिरिक्तावयव्यनङ्गीकारपक्षे व्यभिचारं साक्षात् परिहरिष्यन् इदानीं अवयविस्वीकारमते यथादर्शनं तस्य नियमस्यात्रापवादेनाप्रवृत्त्या व्यभिचारः कथंचित्परिहरणीय इत्याशयवानाह- व्यवस्थितरूपங்களான इति । अयं बहुव्रीहिः । हेतुगर्भमिदं विशेषणम् । तत्र तत्र व्यवस्थितसितासितादिरूपवत्त्वात् तन्तूनां, तेषु चित्रं न वर्तत इत्यर्थः । என் என்னில் इत्येतत्पर्यन्तं शङ्काग्रन्थः । இவ்வளவும் கொள்ளவேணும் इति । यथान्यत्र नीलपटादौ अवयवगुणादेवावयविनि तादृशगुणोत्पत्तिरिति कार्यकारणनियमो दर्शनबलादास्थीयते, तथा चित्रपटस्थले तेनैव दर्शनबलेनावयवेषु, विद्यमानैर्नानारूपैरवयविनि पटेऽतिरिक्तं चित्ररूपमारभ्यत इत्यमेका नाप्यङ्गीकार्यमिति पूर्वोक्तनियमस्यैतद्व्यतिरिक्तविषयकतया नात्रव्यभिचार इति भावः । नचैष न्यायश्शरीरावयवेषु चैतन्याभावेपि शरीरे चैतन्योत्पत्तौ प्रवर्ततामिति वाच्यम् । तन्तुषु चित्रत्वरूपजातिविशेषावच्छिन्नरूपाभावेपि रूपत्वसामान्यावच्छिन्नरूपसत्त्वादुपपत्तेस्संभवेपि, देहावयवेषु ज्ञानत्वसामान्यावच्छिन्नस्य कस्याप्यभावेनापादनायोगात् । अथ सिद्धान्तरीत्यावयवसंघातातिरिक्तावयव्यनङ्गीकारे न पूर्वोक्तनियमव्यभिचार इत्याह- अवयवसङ्घातेति । यथा पटोनाम तन्तुसमुदाय एव नान्यः कश्चित्, तथा चित्रमपि तन्तुगतनानारूपसमुदाय एव, न तन्नामकं रूपान्तरं, "एकं चेच्चित्रता न स्याच्चित्रं चेदेकता कथमि"त्युक्तेः । तथा च चित्ररूपमपि प्रत्येकवृत्त्येवेति न समुदाये चैतन्योत्पत्तौ इदं निदर्शनमित्याशयः ।

अथातिरिक्तचेतनानङ्गीकारे, पूर्वं "भूतचतुष्टयसंसर्गविशेषे"त्यादिना भूतचतुष्टयसंघातस्य चेतनत्वपक्षे प्रोक्तं दोषं, पाणिपादादिसंघातश्शरीरमिति पक्षेपि प्रसञ्जयति- இத்தாலே इत्यादिना । भूतचतुष्टयसंघातस्य चेतनत्वपक्षप्रोक्तदोषप्रक्रिययेत्यर्थः । अस्य "सिद्धम्" इत्युपरितनेना-

---

முதலியன மாறுபடும்போது, ஒவ்வொரு அவயவத்திலும் பிறப்பதாகவே காண்கிறோம். தனித்தனியே இல்லாத சித்ரவர்ணம் அவயவியில் வந்தபடி என்றால், கண்டவற்றுக்கு வ்யாக்யானம் கூறவேண்டாமாகையால், அங்கு அப்படியே எல்லோரும் பார்ப்பதால், அதுவே அவ்விடத்திற்கு ந்யாயம் என்று ஒத்துக்கொள்ளவேண்டியதுதான். அவயவங்களுடைய கூட்டமே அவயவி என்பதுபோல், அவைகளிலுள்ள வெண்மை கருமை முதலிய வர்ணங்களின் சேர்க்கையே சித்ரவர்ணம் என்பதுதான் உண்மையில் ஸித்தாந்தம். கை கால் முதலி-

पादादिसङ्घातமே शरीरமென்னும் पक्षத்திலும் प्रत्येकसमुदायादिविकल्पदोषம் तुल्यம் என்னுமிடம் सिद्धம். இத்तर्कம் "पिण्डः पृथग्यतः पुंसश्शिरःपाण्यादिलक्षणः" इत्यादिमहर्षिवाक्यங்களிலும் अभिप्रेतம். देहात्मवादத்துக்கு "नान्यदृष्टं स्मरत्यन्यः नैकं भूतमपक्रमात्। वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे" इत्यादि न्यायाचार्योक्तदूषणங்களும் கண்டுகொள்வது.

---

न्वयः । दोषம் तुल्यம் इति । पादपाण्यादिषु प्रत्येकं चैतन्यपक्षे अनेकचेतनाधिष्ठानप्रसङ्गः । तत्समुदाये तत्पक्षे आत्मनोऽसंघातात्मकत्वेन प्रतीतिविरोधः, तदानीमपि प्रत्येकं तदपेक्षया उक्तप्रसङ्गस्य दुर्वारता चेत्यादिकमूहनीयम् । एवं "अवयवितयेदंकुर्वाणै"रित्युक्तरीत्या, तर्केणातिरिक्तात्मसिद्धिं प्रपञ्चय, तत्रोक्तस्य तर्कस्य महर्षिपरिगृहीतत्वमाह- இத்तर्कம் इति । "ततोहमिति कुत्रैतां संज्ञां राजन् करोम्यह"मित्युत्तरार्धम् । श्रीविष्णुपुराणे द्वितीयांशे जडभरतवचनम् । यतः पिण्डः- शरीरं शिरःपाण्यादिलक्षणोऽनेकात्मकः (आत्माचैक इति तस्मात्) पृथक्, ततः हे राजन्! अहमिति संज्ञां (शिरःपाण्यादिषु मध्ये) कुत्र करोमीत्यर्थः । प्रत्येकसमुदायचैतन्यपक्षयोरुभयोरपि दुष्टत्वादिति तदाशयः । अत्र "इत्यादी"त्यादिना "शिबिकादारुसंघातः रचनास्थितिसंस्थितिः । अन्विष्यतां नृपश्रेष्ठ! तदेव शिबिका त्वया ॥ एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् । क्व जातं छत्रमित्येष न्यायस्त्वयि तथा मयीत्यादि तत्रत्यवचनपरिग्रहः । अत्रैव तार्किकैरुक्तानि दूषणान्तराण्यप्याह- देहात्मवादेति । कुसुमाञ्जलौ प्रथमस्तबके अयं श्लोको दृश्यते । तदर्थश्च- यद्यवयवसमुदायपर्यवसितं चैतन्यं, तदा तथाभूतस्य देहस्य प्रतिक्षणमुपचयापचयाभ्यामन्यान्यत्वेन पूर्वानुभूतस्मरणं न जाघटीति । नह्यन्यदृष्टमन्यस्स्मरति । नाप्येकावयवपर्यवसितं तत् । अपक्रमात् । करचरणाद्यपगमे चेतननाशेन पूर्वोक्तस्मरणानुपपत्तिरेव । नापि मृगमदवासनावासितवसन इव संसर्गवशादन्यवासनाऽन्यत्र संक्रामति । मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात् । तयोरपि संसर्गसद्भावात् । नचोपादानोपादेयभावो गतिः- नियामकः तयोस्तदभावात् नातिप्रसंग इति वक्तुं युक्तम् । स्थिरे वस्तुस्थिरत्ववादिनां पक्षे तदसंभवात् । तथाहि- किं परमाणुपुञ्ज एव शरीरम्, उतान्यः कश्चिदवयवी । नाद्यः, क्षणभङ्गपक्षे पूर्वोत्तरयोः परमाणुपुञ्जयोरुपादानोपादेयभावसंभवेपि, स्थिरपक्षे तदसम्भवात् ! नान्त्यः, विच्छिन्नकरचरणादीनां प्राक्तनशरीरं प्रत्येवोपादानतया इदानींतनखण्डशरीरं प्रति अतथात्वेन पूर्वानुभूतस्येदानीं स्मरणानुपपत्तेरिति ।

---

யன சேர்ந்து சரீரம், அதுதான் சேதநம என்பதும் கீழ் கூறிய பக்ஷம்போல் பிழைபட்டதேயாகும். ஜடபரதரும "இவ்வுடலே ஆத்மாவானால் நானென்பது கையையா? காலையா? அவைகளின் கூட்டுறவேயல்லவோ சரீரம். ஆகையால் நான் என்பது உடலைவிட வேறுபட்டது என்றார். "அவயவஸமுதாயம் சேதநமென்றால் நேற்று கண்டதை இன்று நினைக்கமுடியாது. க்ஷணந்தோறும் உடல் மாறுவதால். குறிப்பிட்ட ஒரு அவயவம் ஆத்மாவென்றால், அது

காரணம் இல்லை கார்யமும் இல்லை என்பது தவறு.

हेतुफलभावமில்லை என்னுமவனுக்கு "तेभ्यश्चैतन्य"மென்றதுவும் अनुपपन्नம். कण्टक-तैक्ष्ण्यवक्रतादिदृष्टान्तமும் सन्निवेशवैचित्रीमात्रத்துக்கு उदाहरणமாமல்லது अहेतुकोत्पत्त्यादिகளுக்கு निदर्शनமாகமாட்டாது. அங்கும் कार्यविशेषानुगुणकारणविशेषங்களுண்டு. भावाभावरूपसर्व-

ननु शरीरे चैतन्यस्य तदवयवेषु चैतन्यापेक्षा तदा स्यात्, यदि क्वचित्कार्यकारणभावः पारमार्थिकस्स्यात्। स एव तु न संभवति। विकल्पासहत्वात्। यदा कार्यं कारणव्यापारात्पूर्वमेव स्यात्, तदा तद्वैयर्थ्यम्। यदि च कार्यं तदा न स्यात्, तर्हि पश्चादपि न स्यादेव। असतस्सत्त्वापादनायोगात्, नहि नीलं शिल्पसहस्रेणापि सितीकर्तुं शक्यमित्यत्राह- हेतुफलेति। स्वमतप्रवर्तकेन "तेभ्य" इति, पञ्चम्या, भूतचतुष्टस्य, हेतुवन्निगद्यमानत्वात्स्वोक्तिव्याघात इति भावः। वस्तुतस्तु प्रागसत्त्वविशेषितसत्त्वस्यैव कार्यत्वरूपत्वेन, पूर्वकालासत्त्वस्य विशिष्टसत्त्वात्मककार्यस्वभावविरोधित्वाभावेन प्रत्युत तत्परिपोषकतया न किञ्चिदपहीयत इति च द्रष्टव्यम्। ननु "नित्यसत्त्वाभवन्त्येके नित्यासत्त्वाश्च केचन। विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः॥ वह्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः। केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थिति"रित्याद्युक्तदिशा कण्टकतैक्ष्ण्यादिवत् सर्वमहेतुकमेवोत्पद्यत इति वदन्तं प्रत्याह- कण्टकेति। "केनेदं चित्रितम्" इत्याद्यनुरोधेन, "स्वभावात्तद्व्यवस्थिति"रित्यस्यापि वैचित्र्यमात्रे स्वाभाविकत्वस्थापनपरत्वमेव युज्यते। न तु कार्यमात्रस्याहेतुकत्वपरत्वम्। सर्वस्य सामग्र्यधीनोत्पत्तिमत्त्वेपि, सा सामग्री न सर्वत्रैकरूपा, अपि तु तत्तत्कार्यस्वभावभेदेन विचित्रा यथा कण्टकतैक्ष्ण्यादाविति हि तद्दृष्टान्ततात्पर्यमिति भावः। तर्हि तत्र कण्टकतैक्ष्ण्यादौ किं कारणमित्यत्राह- அங்கும் इति। यथा सूच्यादिनिर्माणे प्रवृत्तः पुरुषः तत्तैक्ष्ण्यादिकं निघर्षणादिहेतुना सम्पादयति, तथैव कण्टकतैक्ष्ण्यवक्रिमाद्यपि कुतश्चित्कारणादेवोत्पद्यते। यदि दृष्टं कारणं नोपलभ्यते, तर्हि अदृष्टा सामग्र्येवास्तु निर्वाहिका। अदृष्टं च तत्कण्टकवेधभाविवेदनानुभवितृपुरुषीयं, आमूलात् कण्टकनिचितस्थावरभावप्राप्तिहेतु-

வெட்டுண்டுபோனால் என்செய்வாய்? அதனுடைய சக்தி, அதன்ஸ்தானத்தில்வரும் மற்றொன்றுக்குத் தொத்தும் என்றால் தாயின் ஜ்ஞாபகசக்தி பிள்ளைக்கு ஒட்டுவதில்லையோ? பரிணமிக்கிற கார்யகாரணங்களுக்கிடையேதான் இந்நியமம் என்னில், வஸ்துக்கள் ஸ்திரங்கள் என்னும் உன் பக்ஷத்தில் முன்பின் வஸ்துக்களிடையே அத்தகைய உறவுமுறை இல்லையோ? என்று ந்யாயாசார்யர் சொன்ன தூஷணங்களும் இங்கு நினைக்கத்தக்கன.

காரணம் கார்யம் என்ற முறையே கிடையாது என்னும் நீ ப்ருதிவ்யாதிகளுடைய கூட்டுறவினால் ஜ்ஞானம் பிறக்கிறது என்று சொல்லலாமா? முள்ளின் கோணல் முதலியன காரணகார்யமுறையே கிடையாதென்பதற்கு உதாஹரணமாகமாட்டாது. வஸ்துக்களின் அமைப்பு பலவிதப்பட்டதென்பதற்கு உதாஹரணமாம். அங்கும் அதற்குத் தக்க காரணம்

कार्यங்களுக்கும் कादाचित्कस्वभावமாத்ரத்தை अवलम्बித்து, ஒரு वस्तुவுக்கு कारणत्वं परमार्थமாகில் नीलादिகளைப்போலே सर्वं प्रत्यपि स्यात् என்றும், இது स्वाभाविकமாகில் सर्वदा सर्वकार्यं कुर्यात् என்றும், औपाधिकமாகில் उपाधिதன்னிலும் स्वाभाविकत्वौपाधिकत्वविकल्पத்தாலே अतिप्रसङ्गा-नवस्थैகள் வரும் என்றும், कार्यकारणभावத்தையழிக்கச்சொல்லும் तर्कங்கள் मूलशैथिल्यादिदूषित-

भूतातिघोराघौघरूपमेतज्जीवानुबन्धि च । सर्वस्रष्टाचेश्वर एवंविधं तैक्ष्ण्यवक्रतादिरूपं वैचित्र्यं तत्तत्कर्मानुसृत्य तत्र विधत्त इति किमनुपपन्नमिति हृदयम् । ननु कार्यकारणभाव एव न विद्यते । कारणत्वस्य सर्वथा दुर्निरूपत्वादिति पुनरपि कुतर्कवर्गालम्बनेन चार्वाके प्रत्यवतिष्ठमाने समाधत्ते- भावाभावेति । भावो घटादिः । अभावः ध्वंसादिः । कादाचित्केति । कार्यवर्गस्य पूर्वापरदशासु अनुपलम्भादिति भावः । अत्र "अवलंबित्तु" इत्यस्य "कार्यकारणभावத்தை அழியச்சொல்லும்" इत्युपरितनेनान्वयः । कारणत्वं कस्यचित्परमार्थोऽपरमार्थो वा, स्वाभाविकमौपाधिकं वेति विकल्प्य दूषयति- ஒருவஸ்துவுக்கு इति । यदि दण्डादेः कारणत्वं पारमार्थिकं स्यात् तर्हि तस्य कारणत्वं पटादिकं प्रत्यपि स्यात् । न हि नीलं कंचित्प्रत्यनीलं भविष्यति । कारणत्वस्य भ्रान्तिसिद्धत्वेना-परमार्थत्वे तु, शुक्तिकारजतादिकं यदीयभ्रान्तिसिद्धं तस्यैव तत् विषयीभवतीति यथा व्यवस्था-प्यते, तथैव प्रकृतेपि क्रियेत । ततश्च तदेव साकमिष्टमिति अत्र हार्दो भावः । स्वाभाविकत्वे दोष-माह- இது स्वाभाविकेति । இது- कारणत्वं । कारणस्य तत्त्वं स्वाभाविकं चेत्, स्वोत्पत्तेरारभ्य कार्यं कुर्यात् । स्वभावस्यौत्पत्तिकत्वात् इत्यर्थः । नन्वौपाधिकं तदस्तु । तथा च तादृशोपाधिप्रती-क्षणान्न सर्वदा कार्यकरणप्रसङ्ग इत्यत्राह औपाधिकेति । कारणत्वोपाधेस्स्वाभाविकत्वे कारणत्वस्य स्वाभाविकत्व एव पर्यवसानमिति पूर्वोक्तदोषातिप्रसङ्गापातः । उपाधेरौपाधिकत्वे तस्यापि तथात्वं, तस्यापि तथात्वमित्यनवस्था स्यादिति भावः । मूलशैथिल्येति । नीलादीनां पारमार्थिकत्वमभ्युपगम्य तद्वैधर्म्येण कारणत्वस्य काल्पनिकत्वं ब्रुवता त्वया मूलमेव शिथिलीकृतं भवति । नीलादीनां किञ्चित्कारणकार्यतयैव सिद्धत्वात्तेषां पारमार्थिकत्वे कारणत्वमपि पारमार्थिकं भविष्यति, तस्या-परमार्थत्वे तेपि तथैवेति भावः । मूलशैथिल्यादीत्यादिनेदमप्यत्र विवक्षितं- कस्यचित्कारणत्वं परमार्थ एव । तथापि तस्य नियतप्रतियोगिकत्वाङ्गीकारात्पितृत्वपुत्रत्वादिवन्न सर्वान्प्रति प्रसङ्ग उचितः । एवं तत्तत्सहकारिसाचिव्ये सति तत्तत्कार्यकरणशक्तत्वमेव कारणत्वं, तच्च कारणस्य

உண்டு. இங்கு சிலர் "எல்லாவஸ்துக்களும் ஒருஸமயமிருப்பன என்று கொள்ளுகிறோமாயி-னும் அவைகட்குக் காரணம் கிடையாது. ஒன்று ஒன்றுக்குக் காரணமாவது உண்மையானால் ஒன்றுக்கென்படுதேன்? எல்லாவற்றுக்கும் காரணமாகட்டும்; உண்மையான நீலவஸ்து, எல்-லோர்பொருட்டும் நீலமேயல்லவா? காரணமாவது இயற்கை என்னில். இயற்கை குணம் ஒரு நாளும் மாறுபடாதாகையால் எப்போதும் கார்யஸ்ருஷ்டி நடந்தபடியே இருக்கவேணும். ஏதோ

ங்களாகையாலே **तर्काभास**ங்கள். **उभयान्तव**த்துக்களாய் தோற்றுகிற **पदार्थ**ங்களுக்கு **अवधि-नियामक**மில்லாதபோது, அவை **नित्य**ங்களாதல் **तुच्छ**ங்களாதலாகவேண்டுகையாலும், **व्यक्ति-मात्र**த்திலே **कार्यकारणभावनियम**ம் சொன்னால் **अतिप्रसङ्गादिदोष**ம் வருகையாலும், **विशिष्टव्याप्ति-**

---

स्वाभाविकमेव । न च सहकारिप्रतीक्षणेन तस्य स्वाभाविकत्वहानिरुपजायते । प्रत्युत तत्प्रतीक्षणस्य कारणत्वस्वभावं प्रत्यनुकूलत्वमेव । आलोकादिसन्निधापनेऽपि नह्यन्धः पदार्थान् पश्यतीति । तर्काभासेति । तर्काङ्गपञ्चके प्रतितर्कापराहतत्वप्रसञ्जनीयानिष्टत्वादेरिहाभावेनायं तर्काभास इति भावः । तर्कतदाभासादिविवेचनं न्यायपरिशुद्धौ चतुर्थाध्यायादधिगन्तव्यम् । एवं कार्यकारणभावे चार्वाकोक्तप्रसङ्गान् परिहृत्य, तदभावे स्वयमनिष्टं प्रसञ्जयति- उभयान्तेति । ध्वंसप्रागभावेत्यर्थः । प्रागभावस्य ध्वंसस्य च क्रमेण पूर्वापरावधित्वात् । तद्वत्त्वं च तत्प्रतियोगित्वं । अवधिनियामकेति । नियामकत्वेति पाठस्त्वनन्वितः । पूर्वावधिनियामकं कारणम् । उत्तरतन्नियामकन्तु नाशकम् । अत्र नाशकग्रहणं दृष्टान्तार्थम् । यथा घटो विनाशकसामग्रीमासाद्य विध्वंसत इति दर्शनानुगुण्यादङ्गीकार्यं, तथैवोत्पादकसामग्रीसमवधाने उत्पद्यत इत्यपीति भावः । नित्यங்களாதல் इति । उत्पादकविनाशकयोरुभयोरप्यभावे घटादिकं वस्तु गगनादिवत् एकतो नित्यं वा स्यात्, अपरतश्शशविषाणादिवत् तुच्छं वा स्यात् । न तु कदाचिद्भूत्वा न भवतीति । कदा भावः कदाऽभाव इत्यत्र नियामकाभावादित्यर्थः । ननु भवतु व्यक्तिमात्रे कार्यकारणभावः, नत्वेतज्जातीयं तज्जातीयं प्रति कारणमिति जातिविशिष्टव्यक्तिद्वये । तथा च यद्व्यक्तिसमनन्तरं यद्व्यक्तिसंभवोऽध्यक्ष्यते, तयोर्व्यक्त्योः परस्परं कार्यकारणभाव इत्यङ्गीकृत्य, भिक्षुपादप्रसरणन्यायेनान्ततस्तत्रापि कार्यकारणभावो नास्ति, यथादर्शनं तत्तद्व्यक्तिस्वभावादेव सर्वमुपपद्यते यत इति कार्यकारणभावापलापस्य सुलभत्वादिति गूढाभिसन्धिकतयाऽऽशंकायामाह- व्यक्तिमात्रेति । कार्यकारणभावस्यान्वयव्यतिरेकाभ्यां निश्चेतव्यत्वेन, तस्यचानेकत्र दर्शनावृत्तिसंपाद्यत्वात् व्यक्तिमात्रे च दर्शनावृत्त्यसंभवात्, क्वचित् गर्दभव्यक्त्यनन्तरं घटोत्पत्तिदर्शने, सापि घटकारणं स्यात्, एवमन्योऽप्यन्यस्येत्यव्यवस्था स्यादिति हृदयम् । ननु तत्तज्जातीययोः कार्यकारणभावे यद्व्यक्तेर्यद्व्यक्तिसम्भवः प्रामाणिकः, तदन्यव्यक्तेरपि तद्व्यक्तिकारणत्वं स्यात् । तस्या अपि कारणतावच्छेदकजात्याक्रान्तत्वादित्यतिप्रसङ्ग एवेत्यत्राह- विशिष्टव्याप्तीति । विशिष्टस्य- जात्युपाधिक्रोडीकृतस्य । व्याप्तिः-

---

ஒன்றின் செயற்கை என்னிலும், அந்த ஒன்று இதற்கு இயற்கையானதா செயற்கையானதா என்று கேட்போம். அப்போது முன் சொன்னதோஷமெல்லாம் இதிலும் வரும். ஆகையால் கார்யகாரணமுறை உலகில் கிடையாதென்பர். இவர்களுடைய இந்த யுக்திகள் எல்லாம் அடிப்படையிலேயே தவறானவைகள் ஆகையால் குயுக்திகள் என்னத்தக்கவையாம். முன்னும் பின்னும் இல்லாமல் நடுப்பட்டதாகத் தோன்றும் வஸ்துக்களுக்கு, முன்பின்னை வரையறுக்-

யில் व्यक्तिविशेषनियमம் यथादर्शनं व्यवस्थितமாகையாலும், இங்ஙனிசையாதபோது "तेभ्यश्चैतन्य-मित्यादिस्वसिद्धान्त, स्वाभ्युपगम, स्ववचन, स्वप्रवृत्तिविरोधங்கள் வருகையாலும், சில उपपत्ति-களாலே परपक्षத்தைக் கழித்துத் தங்கள் सिद्धान्तத்தை साधिக்கையாலும், निरस्तம். यथालोक-सिद्धानिष्टप्राप्तिपरिहारार्थप्रवृत्तिகளாயிசைந்து लोकविरुद्धமாக कार्यकारणभावமில்லை என்றால் वाद-प्रवृत्तयादिகளும் घटियाதிறே.

---

कार्यकारणभावनियमः । सर्वासां व्यक्तीनां कारणतावच्छेदकधर्मविशिष्टत्वेपि व्यक्तिविशेषनियमः प्रत्यक्षमनुसृत्य प्रवर्तिष्यते । प्रत्यक्षस्यैव सर्वातिप्रसङ्गघस्मरत्वादिति बोध्यम् । उक्तानङ्गीकारे बाधकमावेदयति- இங்ஙன் इति । अन्ते श्रुतस्य विरोधशब्दस्य प्रत्येकं सम्बन्धः । तेभ्यश्चैतन्य-मित्युक्त्यैव कार्यकारणभावाङ्गीकारसूचनात् स्वसिद्धान्तविरोधः । अनेन बृहस्पत्यादीनां पूर्वेषा-मभ्युपगमविरोधो दर्शितः । अथ च स्वाभ्युपगमविरोधः । एवं स्ववचनस्यापि । मनोवाक्कायप्रवृ-त्तिषु पूर्वं स्वाभ्युपगमशब्देन स्वमनःप्रवृत्तिरुक्ता । इदानीं वाक्प्रवृत्तिः । अनन्तरं स्वप्रवृत्तिः । अत्र प्रवृत्तिः कायिकी ग्राह्या । क्षुन्निवृत्तेर्भोजनस्य च कार्यकारणभावं बुद्ध्वा भोजने प्रवर्तते हि । नन्वियं सर्वापि प्रवृत्तिर्गतानुगतिकन्यायेन समुत्पन्ना न निरूपणमर्हति । अतो न तद्विरोधोस्माक-मनिष्ट इत्यत्राह- சில उपपत्तीति । तथा च निरूपकाणां शास्त्रप्रवर्तकानामपि ईदृश्येव प्रवृत्तिरिति तद्विरोधो नोपेक्ष्य इत्याशयः । निरस्तमिति । पूर्वं "अवधिनियामकமில்லாதபோது" इत्युपक्रमात्, ततो यथोचितं विपरिणतस्य "अवधिनियामकமின்மை" इत्यस्य "निरस्त"मित्यनेनान्वयः । तथा चावधिनियामकமில்லாதபோது இவ்விதம் பல दोषங்கள் सम्भविப்பதால் अवधिनियामकமில்லை என்பது निरस्तमित्यखण्डवाक्यार्थः पर्यवसन्नः । किं बहुनोक्तेन, कार्यकारणभावानङ्गीकारे, येय-मिदानीं आवयोर्वादप्रवृत्तिः, सापि तव न घटते । तत्त्वनिर्धारणाद्यहेतुत्वादित्याह- यथालोकमिति । प्रवृत्तिகளை இசைந்து इति । अनेन "प्रीयसे दूयसे चत्वं बिभेषि च ततस्ततः । इष्टं प्राप्तुमनिष्टं च निवर्तयितुमुद्यत" इत्यादिरीत्या स्वक्रियाव्याघातादिकं ज्ञापितम् ।

---

கும் காரணத்தையும், பின்நிலையை வகுத்திடும் நாசகத்தையும் கொள்ளாமற்போனால், அவை எக்காலத்துமுள்ளவைகளாகவோ, அல்லது எக்காலத்தும் இல்லாதவைகளாகவோ அமையும். இனம் இனமாகவன்றி, தனித்தனியாக கார்யகாரணக்ரமம் சொன்னால் பொருளில் மாறுபட்டம் நேரிடும். இனம் இனமாகச் சொல்லும்போது பொருளில் மாறுபட்டத்தை ப்ரத்யக்ஷநிலைமையைக்கொண்டு தடுக்கலாம். ஆகையால் கார்யகாரண உறவுமுறையை நீங்கள் கைவிடுவது, உமது முன்னோர்களுடையவும் உமதுடையவும் கருத்துக்கும், உமது பேச்சுக்கும் உமது செயலுக்கும் முரண்பட்டதாகும். நீங்களே சில ஹேதுக்களையிட்டு பரபக்ஷகண்டனத்துடன் ஸ்வபக்ஷஸ்தாபநம் என்ற கார்யத்தை நடத்துகிறீர்களே? அதெப்படி? நீரிப்போது என்னோடு பேசுவதும் ஒரு பயனுக்கும் ஹேதுவல்லவாகையால் வீணேயன்றோ?.

அறிவு தரும் சூழ்நிலையை ஒத்துக்கொண்டு, அறிவை ஒதுக்குவது உசிதமல்ல

चैतन्यसामग्रीमात्रத்தைக்கொண்டு चैतन्यம் தன்னையும் கழிக்கும் पक्षம் उपलम्भविरुद्धம். चैतन्यसामग्रियில் प्रकाशமன்றிக்கே இருக்க, चैतन्यप्रकाशமுண்டு என்னுமிடம், स्वप्नजागरங்-களில் आदिमप्रत्ययங்களிலும், अनिरूपितहेतुकस्मृत्यादिகளிலும் காணலாம். प्रतिमाजल्पनமும்

---

एवमियता प्रबन्धेन परेषां शरीरे चैतन्यस्वीकारपक्षं, प्रसङ्गात् कार्यकारणभावनिराकरणं च निरस्य, इदानीं चैतन्यसामग्र्या चैतन्यान्यथासिद्धिवादमपि पूर्वोक्तं प्रतिक्षिपति- चैतन्यसामग्रीति। उपलम्भेति। इदमहं वेद्मीति कर्मकर्तृघटितक्रियावभासस्य सर्वसम्प्रतिपन्नत्वात्, तत्र कर्मणो घटादेरिव कर्तृविशेषणवेदनक्रियाया अपि प्रत्यक्षत्वमवर्जनीयमिति, न तत्त्याग उचितः। न च तद्धेतोरेवेति लाघवन्यायावतारस्संभवति। अनुमितिविषय एव लाघवस्यानुसर्तव्यत्वात्। न चायं प्रत्ययः प्रवृत्त्यादिलिङ्गकानुमितिरेवेति वाच्यम्। अत्यन्तातीन्द्रिये वस्तुनि त्वया तस्या अनङ्गीकारात् इति भाव्यम्। ननु इदमहं वेद्मीत्यादौ बुद्धिसामग्र्येव बोद्धृविशेषणतया भासत इति न चैतन्यसद्भावापेक्षा तावतापि सिध्यतीति चेदाह- चैतन्यसामग्रियில் इति। वेद्मीति चापरोक्षावभासः। तत्र यदि ज्ञानसामग्री विद्धात्वर्थः, तर्हि तस्याः प्रत्यक्षाप्रत्यक्षसमुदायरूपत्वेन न प्रत्यक्षता संभवति। वेदनं च प्रकाशत इति, तदभ्युपगतज्ञानसामग्र्या अप्रकाशमानत्वात्, प्रकाशमानज्ञानस्य च तेनानभ्युपगमात्तन्मतमसमञ्जसमेवेति हृदयम्। एतच्च क्वचिदुदाहरति- स्वप्नजागरेति। स्वप्नदशायां तत उत्थानदशायां च या घटादीनां ज्ञानधारा, तत्राद्यस्य "अयं घट" इति ज्ञानांशस्यैव प्रकाशमानत्वं, न तद्धेतुभूतसामग्र्याः। तथासति धाराघटकस्य तस्याद्यत्वं न स्यात्। ततः पूर्वमपि घटविषयप्रकाशसत्त्वात्। एवमनिरूपितहेतुकस्मृत्यादिस्थलेपि। अत्र एवमेव पाठो भाव्यः। न तु निरूपितस्मृतीति। "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इत्युक्तरीत्या, यत्रोद्बोधकेन ज्ञातेन उद्बुद्धसंस्कारात् स्मृतिरुदयते, सा निरूपितहेतुका। यत्रादृष्टमेवोपकुरुते संस्कारोद्बोधाय, न हेत्वन्तरमध्यक्षसिद्धं, सा स्मृतिरनिरूपितहेतुका। एवं च चरमोक्तायां तस्यां तत्सामग्र्या अनिरूपितत्वेनाप्रत्यक्षत्वात् स्मृतिरेव प्रकाशत इति वक्तव्यम्। अतो न ज्ञानसामग्र्या ज्ञानस्य चरितार्थतासम्भव इति भावः। ननु सर्वथा चैतन्यमनपेक्ष्यैव प्रवृत्त्यादिकमुपपद्यत इत्यत्र दृष्टान्तो दर्शित एवेति चेत्तत्रापि कस्यचित् चैतन्यमपेक्षणीयमित्याह- प्रतिमेति। देवासुरादीत्यादिना मनुष्येष्वेव परकायप्रवेशानुगुणसिद्धि-

---

ஜ்ஞானத்தை உண்டாக்கவல்ல காரணக் குவியலை மட்டும் ஒப்புக்கொண்டு அவைகளா-லேயே ஜ்ஞானகார்யங்களை எல்லாம் நடத்துகிறோம். நடுவில் ஜ்ஞானமேதுக்கு என்பர். ஜ்ஞானமென்பது ப்ரத்யக்ஷமாகத் தெரிவது, ஜ்ஞானகாரணக்குவியலில் சில அப்ரத்யக்ஷமான-வையும் உண்டு இவ்விஷயம் ஸ்வப்நத்திலோ விழிப்பிலோ முதன்முறையாக ஜ்ஞானம் உண்டாகித் தோன்றும்போதும் காரணமின்னதென்று தெரியாது திடீரென நினைவு தோன்றும்

தேவாஸுர[illegible]லேயாதல், ஸர்வகர்மாராத்யஸர்வேச்வரஸங்கல்பவிசேஷத்தாலேயாதல், வருகிற-
தாகையாலே, எங்கும் [illegible]. இத்தாலே [illegible]மும் நிர-
ஸ்தம். வெட்டி நாட்டின கொம்பு உய்யுமிடத்தில் [illegible]த்தாலே கர்மானுரூபமாக வேறொரு
சேதநாதிஷ்டானம் கடிக்கும். ஸ்தாவராதிகளுடைய ஆதிக்யம் பாபகர்மாக்களுடைய ஆதிக்யத்தாலே

---

मन्तो विवक्षिताः । जीवावेशेति । जीवस्य हि द्विधा आवेशस्संभवति स्वरूपावेशश्शक्त्यावेशश्चेति । [illegible] जीवस्य परत्रावेशे प्रथमशरीरं तदा निर्जीवं तिष्ठति । तत एव तस्य तदा कथंचित् [illegible] । शक्त्यावेशो धर्मभूतज्ञानव्याप्तिः । तदा प्रथमशरीरमपि सजीवमेव । ज्ञानस्य तु वि[illegible]पपत्तिः । सर्वत्र देवताद्यावेशकल्पनस्यानुचितत्वात्सर्वान्तर्यामिण एव वा [illegible]- सर्वकर्माराध्येति । अन्तर्याम्यावेशस्य सार्वत्रिकत्व[illegible] प्रति-मानां जल्पनमिति कथं नियमः [illegible] उक्तं सर्वकर्माराध्येति । ततश्च तत्तत्फलविशेषार्थमनु-ष्ठितैस्तत्तत्कर्मभिराराधित[illegible] संकल्पविशेषात्क्वचित्कार्यं, क्वचिन्नेति नियमस्सिध्यतीति भावः। तदुक्तं कुसुमाञ्जलौ [illegible]- देवतासन्निधानेन प्रत्यभिज्ञानतोपि वेति । देवतासान्निध्यानं [illegible] सर्वेश्वरस्य "ममेद"[illegible] । प्रत्यभिज्ञानं-[illegible] "सोहं सपापः निष्पापो"वेति [illegible]ः । अत्र चिह्नं चैतन्यमूलत्वं तदुक्तदृष्टा-न्तान्तरेष्वतिदिशति- இத்தாலே इति । सर्वेश्वरसङ्कल्पमूलत्वस्थापनेनेत्यर्थः । [illegible] सादीनां, देहे [illegible]नां च [illegible] भावः । "सर्वं तन्माद्गिर्वेष्टिरा"मिति ह्युच्यते । याः [illegible] काश्चन युक्तयः पूर्वं प्रदर्शिताः, तासामन्यथासिद्ध्या तद-साधकत्वं दर्शयति வெட்டி நாட்டின इति । जीवानामानन्त्यात्सर्वत्र तत्सन्नि[illegible] [illegible] । अदृष्टवैकल्येन कश्चित्तदननुप्रवेशात् शुष्यन्ति च तेनैव तदानन्त्येन, विच्छिद्य विच्छिद्य संरोपणेपि [illegible]शाखोज्जीवनं चोपपद्यते । विभिन्नचेतनाधिष्ठानेपि मातापुत्रयोरिव सौसादृश्यं च निर्वहतीति नैतद्देहात्मभावोदाहरणमित्याशयः । यत्तु देहपरिग्रहस्य [illegible] पूर्वं [illegible]क्तं, तदप्युद्धरति- स्थावरादीति वाक्यद्वयेन । एतदुक्तं भवति- "मनुष्येभ्यस्तु तिर्यञ्च-स्सख्यया शतशो[illegible]ः । तिर्यग्भ्योपि स्थावरास्तु कोटिशोऽधिका मताः" इत्यायुक्त्या मनुष्य-

---

போதும் அறியலாம். உணர்வின்றி பொம்மை பேசுகிறது என்று நினைத்திருக்குமிடத்திலும் தேவாஸுராதிகள் ஆவேசித்து நிற்பதாலும், ஸர்வேச்வரஸங்கல்பம் இருப்பதாலும் உணர்ச்சி பூர்வகமாகவே பேச்சு நடைபெறுகிறது. இதுபோலவே தான் தாமரை மலர்வதும் குவிவதும், மனிதனின் உயிர்ப்பும் கொள்ளப்படும். வெட்டி நாட்டின கொம்புகள் உயவ-தும், கோடிக்கணக்கான ஜீவராசிகளில் ஒருவன் கர்மானுகுணமாக வந்து புகுவதால் ஏற்படும். மனிதன், ப்ராணிகள், தாவரங்கள் இவைகளில் மேன்மேலென ஒன்றை ஒன்று எண்ணிக்கை-

மென்றொன்று கொள்ளப்பார்த்தால் दृष्टसामग्रियுண்டாயிருக்கச்செய்தே कार्यம் பிறவாதே-யொழியவேண்டாவோவென்னில். இது शास्त्रसिद्धप्रह्लादहनुमदादिवृत्तान्तங்களிலும், शपथविशे-षादிகளிலும், கண்டபடியாலே दृष्टप्रसङ्गம். प्रत्यक्षानुमानलौकिकाप्तागमங்களுக்கு ஒரு प्रकारத்-

---

विषयसाधकत्वात् "स एवैनं प्रीतः प्रीणातीत्यादिश्रुतिप्रतिपन्नेश्वरप्रीतिकोपात्मकधर्माधर्मसिद्धिरिति भावः। अदृष्टाङ्गीकारे दोषमाशंक्येष्टापत्त्या परिहरति- अदृष्टமென்று इति। कार्यம் பிறவாதே इति। अदृष्टस्य कारणत्वे क्वचिद् दृष्टसामग्र्यां सत्यामपि अदृष्टविलम्बात् कार्यविलम्बापातः। स्वेतरसामग्री-समवधानकालीनकार्यानुत्पत्तिप्रयोजकाभावप्रतियोगित्वस्यैव कारणताग्राहकत्वात्। तदुक्तं- कुला-लेन दृढदण्डनुन्नमपि चक्रमदृष्टाभावान्न भ्राम्येत्। तृषितजनसमावर्जितादपि कुम्भादम्भ आस्ये न परिस्रंसेतेति। प्रह्लादेति- हिरण्यासुरेण विषजलाग्न्यादिभिरुपद्रुतस्तत्तनयो महाभागवतः प्रह्लादः भगवत्सङ्कल्पादृष्टैकल्येनापद्वर्गान्मुक्तोऽभूदिति कथा श्रीविष्णुपुराणादितोवगन्तव्या। तदुक्तं- "दैत्येन्द्रसूदोपहृतं यश्च हालाहलं विषम्। जरयामास मतिमानविकारममत्सरी"ति। "नदी हाला-हला नाम तज्जं हालाहलं विष"मित्यायुर्वेदविद इति श्रीविष्णुचित्तव्याख्या। हनुमदिति- लङ्कायां हनुमद्वालधौ अतिसृष्टस्य ज्वालामालाकुलस्याप्यग्नेर्न हनूमति दाहकत्वं, पूर्ववदेवेति कथा श्रीमद्रामा-यणेऽनुसन्धेया। तदुक्तं- "दृश्यते च महाज्वालः करोति न च मे रुजम्। शिशिरस्येव सम्पातो लांगूलाग्रे प्रतिष्ठित" इति। शपथविशेषो महर्षीणां बोध्यः। तत्र दृष्टकारणे सत्यपि शापादृष्ट-प्रतिबन्धेन कार्यानुत्पत्तिदर्शनादिति भावः। इदन्तु बोध्यम् क्वचिच्चादृष्टस्य दृष्टकारणोपद्वारेणैव कार्यकरत्वम्। तस्यैतावन्मात्रार्थत्वात्। तथा च न चक्रभ्रमणकुम्भस्रावादावदृष्टविलम्बेन कार्य-विलम्ब इति।

ननु नित्यस्यागमस्य सति प्रामाण्य एवं वक्तुं शक्येत। तदेव तु न संभवति। नित्यस्य वेदस्य "अर्थं बुद्ध्वा शब्दरचने"त्यादिरीत्या विरचितत्वाभावेन, वक्तृतात्पर्यमूलकत्वाभावादर्थ-सम्बन्धस्यैव सामान्यतोऽसिद्धेः। तथा सति का कथा यथार्थार्थसम्बन्धरूपप्रामाण्यस्येत्याशङ्क्य समाधत्ते- प्रत्यक्षेत्यादिना குறையில்லை इत्यन्तेन प्रकरणेन। अत्रानुमानागमग्रहणं तदनभ्युप-गन्तृत्वेपि चार्वाकस्यान्वारुह्यवादः। वैदिकानामागमयोर्वारणाय "लौकिकाप्तागमे"त्युक्तिः।

---

மறைகள் சொன்னவற்றில் எதையும் பாதிக்கமுடியாதது போல்கல்பனை என்று பழிசுமத்தவும்-முடியாது. அப்ரத்யக்ஷதர்மாதர்மங்களைக்கொண்டால், ப்ரத்யக்ஷகாரணங்கள் இருந்தாலும் ஒரு ஸமயம் அத்ருஷ்டக்குறைவினால் கார்யம் பிறவாதொழியவேண்டாவோ என்னில், இது எமக்கு இஷ்டமானகேள்வியே. ப்ரஹ்லாதனுக்கும் ஹநுமாருக்கும் தீயிட்டபோதும் சூடு உறைக்கவில்லையல்லவா? ரிஷிசாபங்களினாலும் கண்ட பொருள்கள் பயனற்றுப்போகின்றன. ப்ரத்யக்ஷம், அநுமாநம், உலகத்தாருரைத்தசொற்களிவைகளுக்குப்பொருளும் கருத்துமுண்டு.

தாலே அர்த்தஸம்பந்தமுண்டாயிருக்கும். நித்யாகமத்துக்கு உத்ஸ்வப்நாயிதவாக்யத்துக்குப்போலே புருஷா-ஶயதோஷமில்லையேயாகிலும் அர்த்தஸம்பந்தம் கூடும்படி என் என்னில், பதங்களுக்கு ஸ்வபாவஶக்தி-யாலே வ்யுத்பத்திஸித்தபதார்த்தஸம்பந்தம் ப்ரதிஷ்டிதம். இப்பதங்கள் ஆகாங்க்ஷாஸத்த்யோக்யதைகளுள்ளபோது

ஒரு ப்ரகாரத்தாலே- तत्तत्प्रकारेण । प्रत्यक्षस्येन्द्रियार्थसन्निकर्षवशात्, अनुमानस्य साध्यहेतु-सम्बन्धरूपव्याप्तिपक्षधर्मत्वादिज्ञानमूलकतया, लौकिकाप्तागमस्य शब्दरचनाहेतुभूतपुरुषतात्पर्य-बुद्धिद्वारा चार्थसम्बन्धोस्तीति भावः । ननु नित्यागमे पुरुषबुद्धिपूर्वकत्वाभावेपि न किञ्चिदपहीयते प्रत्युत पुरुषाशयदूषितत्वरूपदोषाभावेन वेदगिरां प्रामाण्यमेव प्रतितिष्ठतीतिचेत्तत्राह- नित्या-गமத்துக்கு इति । अयं भावः- शब्दप्रामाण्ये न केवलं पुरुषाशयदूषितत्वाभावमात्रं कारणम् । तथा सति उत्स्वप्नायितवाक्यस्यापि प्रामाण्यप्रसङ्गः । तत्रार्थविशेषविवक्षया शब्दप्रयोगाभावेन केवलजिह्वाजल्पनमात्ररूपत्वात् न पुरुषतात्पर्यमूलकत्वमिति तस्यापि प्रामाण्यकारणत्वेन न तत्र प्रामाण्यप्रसङ्ग इति चेत्, नित्यागमेप्येवमेवेति निध्यायतु भवानिति । समाधानवाक्यं பதங்களுக்கு स्वभावशक्तीति - अयमाशयः- "औत्पत्तिकस्तु शब्दस्यार्थेनाभिसम्बन्ध" इति सूत्रोक्तन्यायेन जलाग्न्यादेश्शैत्यौष्ण्यादिशक्तियोगस्येव शब्दानां व्युत्पत्तिसिद्धपदार्थबोधकत्वस्यापि स्वभावसिद्ध-त्वात् तस्य चात्रापवादाभावेन वैदिकगिरामपि बोधकत्वमस्त्येवेति । ननूत्स्वप्नायितवाक्येपि प्रत्येकंपदानामर्थबोधकत्वमस्त्येव ततश्च को विशेषो वेदवाक्यानामितिचेदाह- இப்பதங்கள் इति । यत्पदस्य यत्पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं दृश्यते तस्य तेनाकाङ्क्षेत्युच्यते । पदानामवि-लम्बेनोच्चारणमासत्तिः । अर्थाबाधो योग्यता । तथा च एतत्त्रितयसत्त्वेन नित्यागमवाक्यानां विशिष्टैकवाक्यार्थबोधकत्वसम्भवात् उत्स्वप्नायितवाक्येषु पदार्थावगमेपि योग्यताद्यभावेन वाक्या-र्थावगत्यभावात् अस्त्येव मिथोविशेष इति भावः । ननु वैदिकगिरामाकाङ्क्षादियुक्तत्वेपि नित्यत्वेन वक्तृतात्पर्याभावात् कथं तदनवगमेपि वाक्यार्थप्रत्यायकत्वमिति चेत् । शृणु अबाधितार्थबोध-कत्वस्यैव नित्यागमे तात्पर्यपर्यवसितत्वेन तद्ग्रहणादेव शाब्दबोधोपपत्तेः । वस्तुतस्तु नित्यागमपक्षेपि "श्रुतिस्मृतिर्ममैवाज्ञे"त्याद्यनुसारेण वेदस्येश्वराज्ञारूपत्वाङ्गीकारात्तदीयतात्पर्यस्य ग्रहणादेव बोधो-दयः । तदुक्तं न्यायपरिशुद्धौ- "अपौरुषेयत्वे घुणक्षताक्षरवत् बोधकत्वेपि अभिप्रायविरहादर्थ-परत्वं न स्यादिति चेत् । न । प्रतिपन्ने निर्बाधे चार्थे प्रधाने बोधकत्वस्यैव तात्पर्यरूपत्वात् ।

யாரும் உரைத்ததல்லாத நித்யவேதம் என்னும் உங்கள் முதனூலுக்கு அவைகள் எங்ஙனம் கூடும். கனவில் பிதற்றின சொற்கள்போல அது கருத்தற்ற தற்செயலான சொற்களே-யல்லவா? அதற்கு மனிதனின் அறிவுத்தவறுகளோடு ஸம்பந்தமில்லை என்பது வாஸ்தவமே-யாகிலும் அதுமட்டும் போதுமா அதையாதரித்துநிற்க என்று சிலர் சங்கிக்கின்றனர். அதற்-குச் சமாதானம்:— ஒவ்வொருபதமும் ஒவ்வொரு பொருளை ஸ்வபாவமாகவே போதிக்கும்-

विशिष्टबोधकங்களுமாம். இப்படி सम्बन्धமிசையாதபோது இவையடியாக विशिष्टज्ञानம் பிறவாதொழியவேணும். இப்படி பிறந்த ज्ञानத்துக்குக் कारणदोषबाधकप्रत्ययங்கள் கூடாமையாலே, प्रत्यक्षज्ञानத்துக்குப்போலே प्रामाण्यம் கொள்ளக்குறையில்லை. एकदेशवर्तिपुष्पफलादिகளாலே

---

अस्मदीये सेश्वरमीमांसापक्षे नित्येश्वराभिप्रायसंभवा''दिति । न च वक्तृनिष्ठेच्छाया एव तात्पर्यत्वस्य स्वीकरणीयतया ईश्वरस्य च वेदवक्तृत्वाभावात्कथं तदभिप्रायो वेदतात्पर्यं स्यादिति वाच्यम् । स्वाम्यभिप्रायस्य दूतवाक्ये तात्पर्यत्वदर्शनवदत्राप्युपपत्तेः । न हि तत्र दूतस्य स्वामिसन्निधस्तात्पर्यम् । तथासति विगर्हितदूतवध्यादिप्रसङ्गात् । एतेन वैदिकलिङादीनां ''आप्तस्य हितकामस्य नियोगं केचिदूचिरे । भाष्यकारोपि भगवानेतमेवान्वमन्यत'' इति रीत्या ईश्वराभिप्रायवाचित्वं कथं? तथा सति वेदस्य तत्कृतत्वापत्त्याऽनित्यत्वं स्यादिति शङ्कापि परास्ता । दूतवाक्ये विधिप्रत्ययवदुपपत्तेः । एवं वैदिकशब्देभ्यो विशिष्टज्ञानानिष्टौ बाधकं प्रदर्शयति- இப்படி इति । आकाङ्क्षादिमत्त्वेत्यर्थः । सम्बन्धः- वाचकत्वलक्षणः स्वार्थसम्बन्धः । இவையடியாக- वैदिकवाक्यमूलकतया । பிறவாதொழியவேணும் इति । वस्तुतस्तु स जायते । ततः तद्विरोध इति भावः । अथ वेदोत्थज्ञानस्य कथं नाम प्रामाण्यं भविष्यति । प्रमायास्तत्त्वं हि गुणापेक्षम् । शब्दप्रमायां चाप्तोक्तत्वादिकं गुणः । प्रकृते च तदभाव इति शङ्कायामाह- இப்படி பிறந்த इति । सिद्धान्ते प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् वेदोत्थज्ञानेऽप्रामाण्यहेतुभूतकारणदोषबाधकप्रत्ययाद्यपवादाभावेनौत्सर्गिकं स्वतः प्रामाण्यं तिष्ठत्येवेति भावः । नचैवं सति क्वापि प्रामाण्याय गुणापेक्षैव न स्यात्, तस्य स्वतस्त्वेन तस्या निष्प्रयोजनत्वादिति वाच्यम् । क्वचिदप्रामाण्यशङ्कायां तन्निराकरणार्थत्वेन गुणापेक्षणात् । सर्वमिदमधस्तात् समुदायदोषाधिकार एव प्रपञ्चितं द्रष्टव्यम् । प्रत्यक्षज्ञानத்துக்குப்போலே इति : ईश्वरीयप्रत्यक्षस्येवेत्यर्थः । नित्यतत्प्रामाण्यस्य वेदपौरुषेयत्ववादिनाप्यङ्गीकारात्तत्र गुणापेक्षाया वक्तुमशक्यत्वाद्दोषाभावमात्रादेव स्वतः प्राप्तं प्रामाण्यं जीवतीत्यङ्गीकार्यम् । तद्वदेव वेदप्रामाण्यमपि भविष्यतीति भाव्यमित्याशयः । अथवाऽयं ग्रन्थः प्रत्यक्षसामान्यविषय एव । तदा त्वे च प्रत्यक्षप्रमात्वं प्रति न गुणो हेतुः । तत्र तत्रेन्द्रियार्थसंनिकर्षादिरूपस्य तस्याननुगतत्वेन कारणत्वे गौरवात् । अपि तु कारणदोषबाधकप्रत्ययाद्यभाव एवानुगतः । तथा च वेदार्थज्ञानेपि स एव न्याय्य इति भावः ।

---

திறமையுடையது. அவை ஒன்றுசேர ப்ரயோகிக்கப்பட்டபோது ஒன்றுக்கொன்று சரியான உறவு, சேர்த்தி பொருத்தம் உடையனவாய்க்கொண்டு திரண்ட பொருளைத்தரவல்லவை. வேதபதங்களும் இதற்கு விலக்கல்ல. இல்லாவிடில் வேதத்தை உச்சரித்த உடன் விதவாணுகிய தனக்கு அறிவு பிறவாதொழியவேணும். பிறந்த அறிவில் எதும் குற்றம கண்டிலோம். ஆகையால் ப்ரத்யக்ஷம்போல் வேதமும் ப்ரமாணமே. மரம் ஒருபுறம் பூத்தாலும் ''மரம் பூத்தது''

वृक्षादिகளிலே पुष्पितत्वादिव्यपदेशம் போலே, शरीरैकदेशवर्तिज्ञानத்தாலே शरीरத்திலே ज्ञातृत्व-व्यपदेशமென்று चार्वाकர் சொல்லுமதுக்கும் இப்படிக்கொரு प्रत्यक्षமில்லை. दृष्टान्तमात्रத்தாலே अभिमतसाधनம் பண்ணப்பார்த்தால் प्रमाणनिरपेक्षமாக सर्वர்க்கும் स्वपक्षसिद्धियுண்டாம். स्थूल-पिण्डத்தைவிட்டு सूक्ष्मैकदेशத்திலே चैतन्यமென்னப்புக்கால், அது शरीरैकदेशத்திலேயோ, शरी-

---

एवं प्रासङ्गिकं परिसमापितम्। शरीरचैतन्यनिराकरणं परमप्रकृतम्। तत्र बहवः पूर्व-पक्षप्रकाराः। तेषु पृथिव्यादिभूतचतुष्टयसमुदाये पाण्यादिसमुदाये वा चैतन्यम्, अथवातिरिक्ता-वयविनि, प्रत्यवयवं वेति चत्वारः कल्पा निरस्ताः। अथेदानीम् एकस्मिन्नेव शरीरावयवे नियतं चैतन्यमिति वादोविधूयते- एकदेशेति। चार्वाकர் சொல்லுமதுக்கும் इति। अत्र चार्वाकनामग्रहणेन "चार्वाकस्येयमुक्तिर्नोचिते"ति विरोधोपि व्यज्यते। सूत्रे मदशक्तिवदिति दृष्टान्तप्रदर्शनेन कार्यस्य सर्वावयवव्याप्तत्वद्योतनादेकावयववर्तित्ववादस्य तद्विरुद्धत्वात्। இப்படிக்கு- ज्ञानस्य शरीरैकदेश-वर्तितायाः। साधकमिति शेषः। प्रत्यक्षமில்லை इति। प्रत्यक्षमात्रं प्रमाणमिति ब्रुवन् कथं तद्विना कंचिदर्थं साधयितुं शक्नुयादिति भावः। न हि जानामीति प्रत्यक्षं ज्ञानगुणं शरीरैकदेशे नियच्छति। नापि तद्विनाऽन्यत् प्रत्यक्षं स्वमतसाधकमनुभूयत इति च बोध्यम्। ननूक्तमेवोदाहरणं एकदेशवर्तिपुष्पफलादीत्यादिना। ततश्च तद्दृष्टान्तबलादर्थस्सिध्यतु इत्याशङ्कायामाह- दृष्टान्त-मात्रेति। प्रतिज्ञाहेतूदाहरणादीनामनुमानाङ्गतयाऽङ्गिभूतानुमानादिकं प्रमाणमनुपन्यस्य दृष्टान्त-प्रदर्शनमात्रान्नसाध्यसिद्धिर्भविष्यति। तथा सति स्वप्नदृष्टान्तमात्रात्सर्वमिथ्यात्वं माध्यमिकस्य, कार्पासरक्ततामात्रनिदर्शनेनैकस्मिन् क्षणिकज्ञानसन्ताने कर्मज्ञानवासनादिकं योगाचारस्य च निरा-बाधं सिध्येदिति भावः। हन्त! यद्येवं स्थूले शरीरे चैतन्यमिति पक्षं परित्यज्य, सूक्ष्मे कस्मिंश्चि-च्छरीरैकदेशे तदभ्युपगममवरूढोसि, तदा प्रायः आगतोसि मदीयं पन्थानमिति प्रहृष्यन्नाह- स्थूलेति। प्रथमं स्थूलपिण्डे चैतन्यं नास्तीति त्वदुक्तिं संप्रतिपन्नत्वात्सर्वथाऽङ्गीकुर्मः। अथ च सूक्ष्मैकदेशे चैतन्यमिति त्वदुक्तिस्तु सावधानं विमष्टव्या। तत्र चान्ततः यथागममतिरिक्तात्मन्येव चैतन्यं सेत्स्यतीति भावः। विमर्शप्रकारमेवाह- அது शरीरेति। प्रत्यक्षமாதல் इति। अहं वेद्मी-त्येव हि प्रत्यक्षम्। तच्च न ज्ञानाश्रयदेशविशेषावगमकं सामान्यरूपत्वादिति भावः। अनुमानेति।

*என்பதுபோல் சரீரத்தின் ஒரு மூலையில் அறிவு பிறந்து, சரீரத்தைச் சேதநனென்று வ்யஹரிக்கிறது என்பதும் வெறும் வாதமே, ப்ரமாணமில்லை. உதாஹரணம் காட்டினமாத்ரத்திலேயே தன்பக்ஷம் ஸித்தித்துவிடாது. அப்போது எல்லாவாதிகளும் வெற்றிபெற்றவரே ஆவர். ஸ்தூல தேஹத்தில் என்பதைவிட்டு ஸூக்ஷ்மசரீரத்தின் மூலையில் அறிவு என்ன வந்தால் அது அங்கே தானோ, அல்லது சரீரத்தைவிட வேறுபட்ட ஆத்மாவில்தானோ என்பதற்கு திட்டமான ப்ரத்யக்ஷாநுமாநங்கள் இல்லாமையாலே, அவைகளாலே ஸாதிக்கவோ, பாதிக்கவோ முடியாதவிஷயத்தில் ஸ்வதந்த்ரமான சாஸ்த்ரமே சரணம்.*

रातिरिक्तद्रव्यத்திலேயோவென்று निश्चितமாகக்காட்டவல்லதொரு प्रत्यक्षமாதல் अनुमानமாத-லில்லாமையாலே साधकबाधकप्रमाणान्तररहितविषयத்தில் स्वतन्त्रமான शास्त्रமே शरणம்।

**இதுபோலவே ப்ராணன் இந்த்ரியம் முதலியன ஆத்மா என்பதும் பிசகு**

இப்படி प्रत्यक्षोपपत्तिशास्त्रबलத்தாலே अनेकसमुदायात्मकமான शरीरம் आत्माவாகமாட்டாது என்ற न्यायத்தாலே प्राणवैश्वानराद्यात्मवादமும் दत्तोत्तरம். சில क्षुद्रयोगिகளும் प्राणाधीन-

---

तथाविधप्रत्यक्षाभावे तन्मूलव्याप्तिग्रहाद्यसंभवेनानुमानकथापि कथमिति भावः। तर्हि शरीराति-रिक्तात्मसिद्धिः परं केन प्रमाणेनेत्यत्राह- साधकबाधकेति। तथा च"असन्निकृष्टवाचा च द्वयमत्र-जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वे"त्युक्तरीत्याऽत्यन्ताप्रतिपन्नाबाधितार्थे शास्त्र-स्यैवानुसर्तव्यतया "नित्यो वारेयमात्माऽनुच्छित्तिधर्मे"त्यादिप्रमाणवशादतिरिक्तनित्यात्मसिद्धि-रिति हृदयम्।

एवं शरीरात्मवादं शातयित्वा प्राणाद्यात्मवादमपि प्रणुदति- இப்படி इति। उक्तप्रका-रेणेत्यर्थः। अत्रोपपत्तिरनुमानम्। अनेकसमुदायात्मकेति। इदं हेतुगर्भविशेषणम्। देहस्य संघात-रूपत्वादात्मनश्चातथाभूतत्वाच्च देह आत्मेति अनुमानं सूचितम्। न्यायத்தாலே इति। ...शास्त्र-बलத்தாலே...आत्माவாகமாட்டாது इति यो न्यायः तेनेत्यन्वयः। अनेन तृतीयाद्वयस्यानन्वय-शंका परास्ता। दत्तोत्तरमिति। प्राणस्य प्राणापानादिसमुदायरूपत्वेन वैश्वानरस्य जाठराग्नेरपि सावयवत्वेन शरीरतुल्यत्वात्तन्न्यायेनैवात्मत्वं न संभवतीति भावः। यद्यप्यात्मसिद्ध्यादौ शरीरात्म-वादनिराकरणानन्तरमिन्द्रियात्मवादनिराकरणमेवानुक्रान्तम्, अथापि शरीरप्राणादीनां संघातरूपत्वेन दूषणतौल्यात् अतिदेशस्य सुलभत्वं मत्वा प्रतिपत्तृसौकर्यायात्रैवं क्रम आदृत इति भाव्यम्। इन्द्रियात्मवादश्चोपरि भविष्यति। तदुक्तमाचार्यैरेवान्यत्र निरस्ते देहचैतन्यप्रतिषेधप्रकारतः। प्राणात्मवादे न पृथक्प्रयोजयति दूषण"मिति। एवं सामान्यतः प्राणात्मत्वे निरस्तेऽपि अधिका-शंकया पुनः प्राणात्मवादे प्राप्ते तं प्रतिक्षिपति- சில क्षुद्रेत्यादिना प्रसङ्गமுமில்லை इत्यन्तेन वाक्य-कलापेन। "स योगी परमो मत" इत्युक्तोपासकव्यावृत्तये "क्षुद्रयोगी"ति। विचित्रकार्येति। केचित्प्राणायामपरायणाः प्राणजयेन विचित्राणि जलाग्निस्तंभनादीनि कार्याणि कुर्वन्ति। तदुक्तं-तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः। उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रा-न्तिश्च। समानजयाज्ज्वलनमित्यादीति। ततश्चैतादृशकार्यकर्तुः प्राणस्यैवात्मत्वमूचितम्।

---

இப்படி கீழ்ச்சொன்ன கணக்கிலே ப்ராணன், வயிற்றினுள் இருக்கும ஜாடராக்நி, முதலியன ஆத்மாவன்று என்பதும் தீர்ந்தமாகிறியேதான், சிலர் அல்பயோகசக்திபெற்று ப்ராணஜயத்தால் நிகழும் விசித்ரகார்யங்களைக்கண்டு, ப்ராணனேயாத்மாவென்று ப்ரமிப்பர். ஆதமாவை ப்ராணன் என்று உபநிஷத்து கூறியது ப்ராணனைப்பெற்றிருத்தல்பற்றி. என்

மான विचित्रकार्यத்தைக்கண்டு प्राणवायुவே आत्मा என்று ப்ரமிப்பர்கள். आत्मविषयத்தில் प्राण-शब्दம் प्राणभृत्त्वादिनिबन्धनம். என்னுடைய प्राणன் என்கிறப்போலே, நான் प्राणன் इत्यादि-प्रतीतिप्रसङ्गமுமில்லை. இக்கட்டளையிலே इन्द्रियात्मवादமும் निरस्तम्. इन्द्रियங்கள் नियतविष-यங்களாயிருக்க இவற்றாலே தனித்தனியே अनुभूतसर्वविषयங்களையும் ஒருவன் प्रतिसन्धानம் பண்ணுகையாலும், பலவாய் करणங்களாய் தோற்றுகிறவிவற்றை யென்னுடைய करणங்க ளென்று ஒரு करणि बुद्धिபண்ணுகையாலும், इन्द्रियங்களொன்றும் अनुभविताக்களாகமாட்டாது.

---

"वायुर्भूत्वा ततो गच्छेत्प्राणायामपरायण" इति श्रुतं च। तस्मात्प्राणवायुरेवात्मेति भावः। ப்ரமிப்பர்கள் इति। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे"ति प्राणस्योत्पत्तिश्रवणादात्मनश्च नित्यत्वेन वायुविशेषस्य तस्य प्रत्यक्त्वासंभवाच्च न प्राणात्मत्वं युक्तमिति तेषां सिद्धान्तो भ्रम एवेति बोध्यम्। ननु "प्राणोस्मि प्रज्ञात्मा, प्राणोह पिता प्राणो माता" इत्यादौ जीवे प्राणशब्दश्रवणात् प्राणस्यात्मत्वं सिद्धमेवेत्यत्राह- आत्मविஷயத்தில் इति। प्राणभृत्त्वादिति। आदिना तत्सहचरि-तत्वापर्यवसानवृत्त्यादिग्रहणम्। किंचायं पक्षश्शरीरात्मत्वपक्षादप्यत्यन्तस्थूल इत्याह- என்னுடைய इति। प्रसङ्गமுமில்லை इति। तथा चास्मिन्पक्षे "अहं प्राण" इति शङ्कितप्रतीतिरपि साधिका न क्वचिद्दृश्यते। प्रत्युत "मम प्राण" इति प्राणव्यतिरेकप्रतीतिरेव सर्वत्र भवति। शरीरात्मत्व-विषये तु स्थूलोहमिति प्रतीतिश्शक्योदाहरणेति तदपेक्षयाऽस्वरसोयं पक्ष इति भावः।

अथेन्द्रियाण्येवात्मा। तेषां ज्ञानकारणत्वेन, तद्व्यापारजन्यफलस्य च तद्गामिताया उचितत्वेन ज्ञानाश्रयत्वसिद्धेः। सूक्ष्मतया शरीरस्येव स्थूलताविरहेणेदङ्कारागोचरतया प्रत्यक्त्वस्यापि सिद्धेश्चेति शङ्कायामाह- இக்கட்டளையிலே इति। उक्तेन वक्ष्यमाणेन च प्रकारेणेत्यर्थः। अत्र इन्द्रियशब्दः कर्मेन्द्रियमनोव्यतिरिक्तपरः, तेषां शङ्किष्यमाणत्वात्। निरस्तमिति। प्राणात्मवाद इवा"हं चक्षु"रि-त्याद्यनुभवविरहादिति भावः। एतन्निरासाय युक्त्यन्तराण्यप्याह- इन्द्रियங்கள் इति। अयमत्रसारार्थः- चक्षुरादीनां व्यवस्थितविषयत्वेन 'दृष्टमेवस्पृशामी'ति चक्षुषा त्वचा चानुभूतार्थस्यैकेन प्रत्यभिज्ञानात् चक्षुरादिष्वन्यतमस्यात्मत्वे अनुभवितृभेदेन तादृशप्रतिसन्धानासिद्धिः। "इमानि मम करणानि" इति प्रत्ययान्नानात्वेन करणत्वेन च भातानामिन्द्रियाणां करणित्वेनैकत्वेन च भासमानासच्छ-ब्दार्थाभेदायोगश्चेति। अत्र ஒரு करणि बुद्धिபண்ணுகையாலும் इत्येव युक्तः पाठः। न तु "ஒரு करणबुद्धी"ति पाठमाश्रित्य भावप्रधानतया करणत्वबुद्धीति व्याख्यानं युज्यते। "करणங்க-ளாய்" इत्यस्य प्रतिनिर्देशरूपत्वात्। यथा "பலவாய்" इत्यस्य "ஒரு" इति प्रतिनिर्देशः।

---

*னுடைய ப்ராணன் என்று வேறுபடுத்திக்கூறுகிறோமேயல்லது நான் ப்ராணன் என்று கூறு-வாரும் இல்லையே. இப்படியே இந்த்ரியங்கள் ஆத்மா என்பதும் பிசகு. இந்த்ரியங்களுக்கு புலப்படும் பொருள்கள் வரையறுக்கப்பட்டுள்ளன. ஆத்மாவோ பொதுவாக கண்கண்டதை*

அவற்றை ஆத்மாவென்றால் அனுபவித்த சக்ஷுராதீந்த்ரியங்கள் நஷ்டமானபோது அவ் இந்த்ரியத்தால் அனுபூதத்தை ஸரிக்கைதவிர ப்ரஸங்கிக்கும். அன்யகுணம் அன்யத்தில் போகாமையாலே வாஸனா-ஸங்க்ரமம் கூடாது. ம்ருகமதபுஷ்பாதிவாஸனைபோலே அவயவஸங்க்ராந்தியாலே வாஸனை என்னில் அதி-ப்ரஸங்கம் வரும். மாதாபிதாக்களுடைய அவயவஸங்க்ராந்தியால் புத்ரனுக்கு ஸ்ம்ருதிபிறக்கிறதில்லையிறே. ஆகையால் பலவாய் கரணங்களாய் தோற்றுகிற சக்ஷுராதிகளிற்காட்டில் வ்யதிரிக்தனான ஆத்மா

---

"नान्यदृष्टं स्मरत्यन्य" इति शरीरात्मवादोक्तन्यायमभिप्रत्येन्द्रियात्मवादोऽधस्ताद्दिक्कृतः। अथेदानीं "नैकंभूतमपक्रमा"दित्युक्तच्छायया तं दूषयति- அவற்றை इति। இந்த்ரியங்கள் நஷ்டமானபோது इत्युक्तिः तेषामधिष्ठानेन्द्रियत्ववादमनुरुध्य। अन्यथाऽऽहंकारिकाणां तेषामिदानीं नाशायोगात्। यथा नान्यदृष्टमन्यस्स्मरति, तथा न नष्टदृष्टमप्यन्यस्स्मरति अतिप्रसङ्गादिति भावः। एवं "वासनासंक्रमो नास्ती"त्युक्तिमनुविधायाह- அன்யகுணம் इति। गुणमात्रस्य स्वाधारपरित्यागा-योगाद्वासनायाश्च गुणत्वादनुपपन्नमिदमिति बोध्यम्। ननु नायं नियमः। गुणानामपि सतां केषांचिदन्यत्र संक्रान्तिदर्शनात्। तदुक्तमात्मसिद्धौ- शब्दगन्धसूर्यालोकरत्नप्रभादयो धर्म्यतिवर्तिनो गतिमन्तश्चेति। अत्र यद्यप्यालोकप्रभादयो द्रव्यत्वेन परिगणिताः, तथापि गन्धादीनां सिद्धान्तेपि गुणत्वमेवेति प्रकृतसिद्धिर्बोध्या। न च तत्रत्यगन्धशब्दः "गन्धमोषक" इत्यादाविव गन्ध-वद्द्रव्यावयवपर इति वाच्यम्। तर्हि प्रकृतेपि वासनावदिन्द्रियावयवसंक्रान्तिरेवास्तु इति शङ्कायां "न च गत्यन्तरं स्थिरे" इत्याद्यभिप्रेत्याह- मृगमदेति। कस्तूरिकेत्यर्थः। वासनाशब्दस्य प्रत्येक-मन्वयः। अतिप्रसङ्गம் வரும் इत्युक्तमेव व्यतिरेकमुखेन विशदयति इष्टप्रसङ्गपरिहाराय- माता-पिताக்களுடைய इति। अवयवेत्यादि। "अङ्गादङ्गात्संभवसि हृदयादधिजायसे" इत्यादिना मातृ-शरीराद्यवयवसंक्रान्तेः पुत्रेपि श्रवणादिति भावः। ततः फलितमंशमाह- ஆகையால் इति। प्रत्य-क्षன் इति। चक्षुरादिना प्रत्यक्षयामीति व्यतिरेकप्रतीतेरित्यर्थः। ननु "चक्षुः पश्यति, 'श्रोत्रं शृणोति" इत्यादिप्रत्ययोपि प्रसिद्धः। अत्र चक्षुरादीनामीक्षितृत्वादिकं गौणमिति चेत्, मुख्यत्वे

---

தோலினால் தொட்டுப்பார்த்து அதுவே இது என்று நினைவுபடுத்திக்கொள்ளுகிறது. இந்த்ரி-யங்களை "இவைகள் என்னுடைய உபகரணங்க"ளென்று எண்ணும் ஆத்மா ஒரு ப்ரதானமான உபகரணி என்று ஏற்படுகிறது. உதாஹரணமாக கண்ணையோ, காதையோ ஆத்மா வென்றால், அதுபோயின், அதனால் அறிந்ததை நினைவுபடுத்திக்கொள்ள வழியில்லை. ஒன்-றின் அறிவுப் பதிவு மற்றொன்றில் ஏற்படாது. கஸ்தூரி, மலர், முதலியவைகளின் நுண்-ணியபொடிகளோடு கலந்த வாஸனை மற்றொன்றில் ஏறிடப்பெறுவதுபோல் இங்கு சொல்லில், மாதாபிதாக்களின் ஸூக்ஷ்மாவயவங்களுடைய ஒட்டுதலால் மகனுக்கும் அவர்கள் அநுபவித்த வரலாறுகளைப்பற்றிய நினைவு வரவேண்டியிருக்கும். ஆகையால் பலவாய் உபகரணங்களாய் தோற்றுகிற இந்த்ரியங்களைவிடத் தான் வேறுபட்டவன் என்பது ஸ்வாநுபவப்ரத்யக்ஷத்தால்

प्रत्यक्षன். "கண்காணுகின்றது" "செவிகேளாநின்றது" என்றுப்போலே சொல்லும் व्यपदेशங்கள் उपचारத்தாலே என்னுமிடம் "என் கண் காணுகின்றது" என்கையாலே सिद्धम். सत्य-

---

किं वाधकमित्याद्याशङ्कायामाह- கண்காணுநின்றது इत्यादि । காணுநின்றது- पश्यति । एतदुक्तं भवति- एवंविधः प्रत्ययः "आत्मा पश्यती"तिवन्मुख्यो वा स्यात्, अथा"ऽयो दहतीतिवत्सम्पर्ककृतो गौणो वा भवेत्" इति विचारे "मम चक्षुः पश्यती"त्याद्यनन्यथासिद्धव्यतिरेकप्रत्ययबलात् बाधितत्वेन "चक्षुः पश्यती"त्यादिकं गौणमेवेति ।

ननु श्रीमति वाराहे पुराणे स्वपरीक्षणाय वराहरूपिणं विष्णुं अनुद्रुत्यागताय व्याधवेषाय वज्रिणे सत्यतपसा "द्रष्टुं चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयो तद्विसृष्टम् । द्रष्टुश्चक्षुषो नास्ति जिह्वेह वक्तुं जिह्वायास्यास्तत्त्वतो नास्ति चक्षु"रित्युक्तेः, चक्षुरादीनामेव चेतनत्वं तदभिमतं प्रतीयते । तत्र हि- हे मृगयो! जङ्गमेषु द्रष्टुं चक्षुर्निहितम् । तद्विसृष्टं- तेन चक्षुषा गृहीतं विषयं वक्तुं जिह्वा निहितेति लिङ्गविपरिणामेनान्वयः । इति यद्यपि लोकस्थितिरेवं भवति, तथापि, इह मयि द्रष्टुश्चक्षुषो वक्तुं जिह्वा नास्ति, अस्या जिह्वायास्तत्त्वतो द्रष्टुं चक्षुरपि नास्ति । अतोत्र "मृगः किं दृष्ट" इति त्वदीयं प्रश्नं कथं समाधास्ये इत्युक्त्वा स स्वाश्रमे शरणागतमृगरिरक्षिषया तूष्णीं बभूवेति कथांशो बोध्यः । अत्र "जिह्वायास्या" इति सन्धिरार्षः । द्रष्टुरिति चक्षुःकीर्तनात् तस्य दर्शनाश्रयताप्रतीतेः इन्द्रियाणामेवात्मत्वं सिद्ध्यतीति पूर्वपक्षिण आशयः । "तद्विसृष्ट"मित्यत्र "त्वद्विपृष्ट"मिति पाठश्चेत् त्वया विशेषेण पृष्टं मृगं वक्तुमित्यन्वयश्शोभनो भवेत् । अत्र मातृकासु नानाविधपाठोपलब्धावपि आत्मसिद्धिमनुरुध्य "द्रष्टुश्चक्षुष" इतिपाठ एव युक्त इति प्रकृतानुगुणं भाव्यम् । इत्येवं शङ्कायामाह- सत्यतपाவின் इति । "स हि सत्यतपाः पूर्वं भृगुवंशोद्भवो द्विजः । बभौ दुर्वाससा सम्यग्बोधितश्च विशेषत" इत्युक्तः हिमाद्रेरुत्तरपार्श्वे पुष्पभद्रातटे चित्रशिलायां भद्रवटाख्याश्वत्थमूलस्थः कश्चनर्षिः । अन्यपरमिति । नेन्द्रियात्मत्वस्थापनमिह महर्षिकृत्यम् । तत्कालोपस्थितं यत्किञ्चिदुक्त्वा कालं व्याक्षिप्य, शरणागतमृगत्राणतत्परत्वादिति हृदयम् । तदुक्तमात्मसिद्धौ- अन्यथा च प्रष्टुर्मृत्युपपत्तिं शरणागतपरित्यागस्य नृशंसतां च पर्यालोच्य सत्यतपसस्तथावचनमिति । "इह मृगो नास्ती"त्युक्तौ निराशो व्याधो मृगालाभेन

---

அறியலாம், "கண் காண்கிறது" "காது கேட்கிறது" என்பன போன்ற வ்யவஹாரங்கள் முக்யப் பொருள் கொண்டனவல்ல. "என் கண்ணால் காண்கிறேன்" இத்யாதி வ்யவஹாரங்கள்தான் சரியானவை. "காணும் கண்ணிற்கு நாவு இல்லை. பேசும் நாவிற்குக் கண் இல்லை." ஆகையால் "இங்கு மான் வந்ததா" என்ற கேள்விக்கு விடை தருவது யார்" என்று இந்த்ரன் வேடுவன் வேடத்தில் கேட்டதற்கு, ஸத்யதபஸ் என்னும் ரிஷி பதில் அளித்ததாகக் கூறும் வராஹபுராணவாக்யமும் சரணமடைந்த மானைக் காக்கும் கருத்தில் கூறப்பட்டதாகை-

तपाவின் வாக்யம் शरणागतरक्षणाभिसन्धियாலே अन्यपरம். सर्वशरीरव्यापियாயிருப்பதொரு இन्द्रियமே प्रदेशभेदங்களாலே शब्दादिகளை ग्रहिக்கிறதென்னும்पक्षத்தில் ஒரு शरीरத்தில் अनु-भविதா ஒருவனுனமையும் அவனுக்கு प्रदेशभेदங்கள் उपकरणங்களானமையும் கொள்ள வேண்டிஞல் இக் कल्पனையிற்காட்டில் கண்ட प्रमाणानुसरणம் उचितம். प्रतिनियतव्यापारங்களான वागादिகளை எல்லாம் ஒருவன் व्यापरिப்பிக்கையாலே आत्मा कर्मेन्द्रियங்களிலும் வேறு பட்டவன். सर्वविषयसाधारणமான मनஸ்ஸுே सर्वेन्द्रियार्थप्रतिसन्धानம் பண்ணுகிறதென்றம்

---

सकुटुम्बः चिराद्बुभुक्षितो म्रियेत। अस्तीति प्रतिवचने च शरणागतमृगपरित्यागेन महत्पापमिति धर्मसंशयमापन्नस्स एवमवादीदिति तद्ग्रन्थार्थः। ततश्च तत्र "प्रष्टु"रिति कर्तरिषष्ठी। पंचमीति केषांचिद्व्याख्यानं चिन्त्यम्। तत्रेदं पुराणवचनं "यदि तं दर्शयाम्यस्मै वराहो हन्यते तदा। नोचेत् कुटुम्बः क्षुधया सीदत्यस्य न संशयः॥" इति।

इन्द्रियाणि प्रतिपुरुषं नानेति कश्चित्पक्षः। तदनुसारेण तेषामात्मत्वमाशंक्य परिहृतम्। अथ सर्वशरीरव्यापि त्वगाद्येकमेवेन्द्रियम्। तदेव प्रदेशभेदेन चक्षुरादिशब्दवाच्यं सत् रूपादिकं व्यवस्थया गृह्णाति। दृष्टं हि तस्य करतलप्रकोष्ठास्यनेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यम्। तद्वत्। सोयं पक्षो बौद्धानां प्रसिद्धः। चार्वाकेण तु श्ववराहकलहक्रमाद्वेदान्त्युपरोधायान्वारूढः। तदुक्तं बौद्धविलासे- एकैकदेहेषु एकमेवेन्द्रियम्। प्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः। षडायतनागमोपि तथैव व्यवस्थाप्यः। स्वरूपभेदे प्रयोजनाभावादिति। षडायतनसंज्ञापि तत्रैव विवृता- चक्षुः श्रोत्रं तथा घ्राणं रसनं स्पर्शनं मनः। रूपादिबोधहेतुत्वादेतान्यायतनि षडिति। अतस्तदेवेन्द्रियमात्मास्यादित्याशंक्य निराकरोति- सर्वशरीरेति। इममपि पक्षं कल्पनागौरवेण दूषयितुं कल्पनीयांशमाह- ஒரு शरीरத்தில் इति। शरीरातिरिक्तस्यैकस्यात्मत्वं तदुपकरणानां नानात्वं च कल्पनीयम्। ततोपि वरं क्लृप्ताच्छास्त्रादतिरिक्तात्मेन्द्रियादिस्वीकरणमिति भावः। अथ कर्मेन्द्रियेभ्योप्यात्मा भिन्न इत्याह- प्रतिनियतेति। उच्चारणकरणं वाक्, शिल्पकरणं हस्त इत्यादिरीत्या प्रतिनियतेत्यर्थः। ஒருவன் व्यापरिப்பிக்கையாலே इति। अनेनात्रापि पक्षे "योहं वाचाऽब्रुवं, सोहं हस्तेन करोमी"त्यादिप्रतिसन्धानानुपपत्तिर्विवक्षिता। अथ मन एवास्त्वात्मा। तस्य सर्वविषय-

---

யால் மேலே பொதுவாகத்தோன்றும் பொருளில் நோக்கமுடையதன்று, சரீரம் முழுவதும் ஒரு இந்த்ரியமே படர்ந்துள்ளது அதன் ஒவ்வொரு இடமும் சிற்சில விஷயங்களை க்ரஹிக்கும் கண் முதலியனவாக வழங்கப்பெறும். ஆக அந்த அகண்டவ்யாபியான இந்த்ரியமே ஆத்மாவென்று சிலர் வெகுவாக யோசித்தபிறகு சொல்லத்துவங்குவர். இவர்களும் "ஆத்மாவொன்று. அவனுக்கு கண் முதலிய பலவிடங்கள் உபகரணங்களாகி விஷயங்களைப் புலப்படுத்துகின்றன" என்று கொள்ளவேண்டியிருப்பதால், இவ்விதம் ஊஹித்து கல்பனை செய்வதைவிட சாஸ்த்ரம் சொன்ன கட்டளையிலே ஆத்மாவை அங்கீகரிப்பது நன்மையாம். இவ்விதமே கை கால் முதலிய தொழில் புரியும் இந்த்ரியங்களும் ஆத்மாவாகமாட்டா. ஆத்மா எல்லாத் தொழிலுக்கும்

पक्षமும் निर्मूलம். प्रतिसन्धाताவான आत्मा सिद्धित்தால் இவனுக்கு सङ्कल्पादिकरणமாக शास्त्र-सिद्धமாதல், कल्पितமாதலாய் வருகிற मनஸ்ஸை இதுக்குக் करणियாய் தோற்றுகிற आत्मा-வென்கை கூடாதிறே:

ஞானம் ஆத்மா என்பதும் கூடாது

मनஸ்ஸு என்றொரு करणமும் இதுக்குக் करणियாயிருப்பதொரு आत्माவும் உண்டோ. बुद्धिविशेषமேயன்றோ मनஸ்ஸாவது. இப் बुद्धिविशेषம் நானென்று தோற்றுகையாலே இது தானே आत्माவாமத்தனையென்று ज्ञानात्मवादिகளான चार्वाकादिகள் சொல்லுவர்கள்- இப் पक्षத்தில்

---

साधारण्येन न प्रतिसन्धानानुपपत्तिः । नापि तदपक्रमप्रयुक्तशंका तस्य नित्यत्वात् । नापि प्रत्येकसमुदायविकल्पः, एकत्वादित्याशंकां निराकरोति- सर्वविषयेति । सर्वविषयेत्यादिकं पूर्वोक्ताभिप्रायं विशेषणम् । निर्मूलत्वमेवाह- प्रतिसन्धातेति । सिद्धित்தால் इति । आत्मनः करणतयैव मनस्सिद्धेस्तत्सिद्ध्यधीनसिद्धिकतया मनसा नात्मनोऽन्यथासिद्धिर्युक्तेति भावः । 'करणे'ति 'करणी'ति पदाभ्यां न तयोरभेद उचित इत्यभिप्रेतम् । करणत्वस्य पराधिष्ठानाधीनव्यापाराश्रयत्वरूपतया पारतन्त्र्यपर्यवसितत्वेन कर्तृत्वरूपकरणित्वस्य स्वातन्त्र्यलक्षणत्वात् । तच्च स्वच्छन्दानुरोधेन साध्यसिद्ध्यनुगुणोपकरणसम्पादनसामर्थ्यम् । किंच मनसा आत्मनोन्यथासिद्धिं ब्रुवाणः किं मनश्शास्त्रसिद्धमिति मन्यते, अथानुमानसिद्धमिति आद्ये आह- இவனுக்கு सङ्कल्पादीति । "मनोस्य दैवं चक्षुः, मनसैतान्कामान्पश्यन्रमते" इत्यादिकं शास्त्रम् । ततश्च तेनात्मोपकरणतयैव तत्सिद्ध्या तस्यैवात्मत्वं धर्मिग्राहकप्रमाणविरुद्धमिति भावः । अत एव द्वितीयमपि नेत्याह- कल्पितமாதல் इति । सुखादिसंवेदनान्यपि करणवन्ति क्रियात्वात् संवेदनत्वाद्वा रूपादिसंवेदनवदिति ह्यनुमानं तत्कल्पकम् ।

अथ जानामीत्यनुभवसिद्धबुद्धिमात्राङ्गीकारेण तदतिरिक्तमनआत्माद्यपलभ्य तस्या एवात्मत्वं मनस्त्वं च मन्यमानाश्चार्वाकादयः एवम् आहुः । प्रसङ्गात्तदप्यनुवदति- मनஸ்ஸு என்று इति । இதுதானே आत्मेति । जानामीत्यादौ सर्वसंप्रतिपन्नत्वात् ज्ञानस्य, तदभानकाले आत्मनो-

---

பொதுவான கர்த்தாவாகையால். ஆனால் எல்லாப்பொருளறிவுக்கும் தொழிலுக்கும் பொதுக்-காரணமான மனது ஆத்மாவாகத் தகுதியுடையதன்றோ வென்னில் அன்று. மனது உனக்கு உண்டென்று எவ்விதம் கிடைத்தது. ஆத்மாவுக்கு நினைவுதரும் ஓர் உபகரணமென்று முறையி-லல்லவா அது பெறப்படுகிறது, ஆக அதைக்கொண்டு ஆத்மாவைத் தள்ளலாகாது. மனது உண்டென்று சாஸ்த்ரங்கள் முறையிடுகின்றனவென்னில், அவைகளே வேறு ஆத்மாவும் உண்டென்கின்றன.

ஆனாலும், மனஸ் ஆத்மா என்பதெல்லாம் வேறு வேறு அன்று. ஜ்ஞாநமேதான் அவை எல்லாம். அதுவே நானென்று தோன்றுகிறது என்று சில சார்வாகர் சொல்லுவர். அதுவும் சரியன்று. கணந்தோறும் வேறுவேறாகியோ, அல்லது எக்காலத்தும் ஒன்றாகியோ

क्षणिकமாகவாதல் अनुवृत्तமாகவாதல் கொள்ளுகிற ज्ञानमात्रத்துக்கு ज्ञातृत्वமில்லாமையாலே पूर्वज्ञानத்தாலே अनुभूतமான विषयத்தில் प्रत्यभिज्ञैயும் स्मृतिயுமின்றிக்கேயொழிய प्रसङ्गिக்கும். सन्तानैक्यादिகளுக்கு दूषणம் बौद्धभङ्गத்திலே சொல்லக்கடவோம். बौद्धविशेषपक्षத்தில்போல் இவர்கள் पक्षத்திலும் सुषुप्तिदशैயில் ज्ञानமில்லாமையாலே सन्तानैक्यம் கொள்ள प्रसङ्गமில்லை.

---

प्यननुभवेन ज्ञानमेवात्मेत्यर्थः। चार्वाकादिகள் इति अत्र चार्वाकशब्दस्तदेकदेशिपरः। तेह्येवं वदन्ति- न देहेन्द्रियादिकं भोक्तृ। न च नित्यः कश्चिदन्यः। सुषुप्त्यादौ तेषां भोक्तृत्वादृष्टेः। सति ज्ञाने भोक्तृत्वमिति चेत्, तर्हि तस्यैव तदस्तु किमन्तर्गडुभिरन्यैः। तस्य च भोक्तृत्वमनुकूलप्रतिकूलविषयावगाहित्वम्। तच्च यदृच्छावैचित्र्यादिति नादृष्टाद्यपेक्षेति। आदिना बौद्धानां मायिनां च ग्रहणम्। पक्षमिमं प्रतिक्षिपति- இப்பக்ஷத்தில் इति। क्षणिकமாகவாதல் इति योगाचारादिमतम्। अनुवृत्तेति- सामान्यतश्चार्वाकमायिनोः। प्रबोधकाले ज्ञानानुवृत्तिः सुषुप्तौ तद्विलयश्चेति यथादर्शनं चार्वाको मनुते। मायावादिनस्तु श्रुतितः ज्ञाननित्यत्वं वदन्ति। प्रकृते तुल्यतया एतत्पक्षद्वयस्यानुवादात् तत्तत्पक्षदूषण इदानीं स्वस्योपेक्षा द्योत्यते। तर्हि ज्ञानात्मवादे किमिदानीं दूषणमभिमतमिति चेदाह- ज्ञानमात्रத்துக்கு ज्ञातृत्वமில்லாமையாலே इति। जानामीत्यादिसिद्धविषयावगाहिज्ञानाश्रयत्वस्य तस्मिन्नेव ज्ञानेऽसंभवात् पूर्वानुभूतविषये "स एवाय"मित्यादिप्रत्यभिज्ञानुपपत्तिरिति भावः। ननु स्मृतिं प्रत्यक्षं च विना न प्रत्यभिज्ञातिरिच्यत इति न तदनुपपत्तिर्दोषाय। तदुक्तं- "स्मृतिः पूर्वानुभूतेर्थे दर्शनं वार्तमानिके। तयोरत्यन्तभेदे च केनाभेदः प्रसाध्यत" इति। तत आह- स्मृतिயும் इति। तथा च तादृशस्मृतिमात्रमपि नोपपद्यते। ज्ञानस्य पूर्वानुभवजनितवासनानाधारतया स्मृत्याश्रयत्वायोगादिति भावः। अथेदानीं पूर्वमुपेक्षितं ज्ञानक्षणिकत्वपक्षदूषणं वक्ष्यमाणतया प्रतिजानाति- सन्तानैक्येति। आदिना क्षणिकस्वलक्षणयोः कार्यकारणभावादिकं विवक्षितम्। बौद्धभङ्गेति। योगाचारादिमतभङ्ग इत्यर्थः। சொல்லக்கடவோம் इति- अतिप्रसङ्गादिनेति शेषः। ततश्च ज्ञानात्मत्वपक्षे चैत्रादिशरीरे ज्ञानस्य क्षणिकत्वेन ज्ञानसन्तानभेदादात्मभेदप्रसङ्ग इत्याशयः। ननु चार्वाकस्य ज्ञानात्मवादे तुल्येपि क्षणिकत्वं विहाय स्थिरत्वाभ्युपगमात्, न चैत्रादिशरीरे बौद्धमत इव ज्ञानभेदेनात्मभेदः प्रसज्यत इत्यत्राह- बौद्धविशेषेति। योगाचारादीत्यर्थः। இவர்கள்- चार्वाकाः। सुषुप्तीति। तथा च चार्वाकमते क्षणभङ्गानङ्गीकारेपि सुषुप्तौ ज्ञानसन्तानविच्छेदस्य प्रत्यक्षसिद्धतया तदैक्यं दुर्भणमेवेति भावः। अत्रे-

---

வரும் ஜ்ஞாநத்தை ஆத்மா என்றால் அறிவுக்கு அறிவுடைமை என்பது ஏலாதாகையால் "ஆத்மாவை அறிபவன்" என்று சொல்லமுடியாமற்போகும். முன்னடி அநுபவித்ததையும் நினைக்கவொண்ணாது. க்ஷணம் க்ஷணம் மாறிவரும் ஜ்ஞாநபரம்பரையை ஒன்று என்று ஸ்தாபிக்கவியலாது என்று மேலே பௌத்தகண்டனத்தில் சொல்லப்போகிறோம். அவர்கள்

पूर्वजागरத்தில் संस्कारத்தாலே उत्तरजागरारम्भத்தில் ज्ञानம் பிறக்கையாலே सन्तानैक्यादिகள் निर्वहिக்கலாம் என்னவுமொண்ணாது. संस्कारத்துக்கு आश्रयமாயிருப்பானொரு स्थिरனான आत्माவுண்டாகில்லிறே இப்படிச் சொல்லலாவது. स्थिरமான हृदयादिप्रदेशविशेषம் संस्कारங்-களுக்கெல்லாம் आधारமாய் संस्कारकोशமென்று பேர்பெற்றிருக்கிறதென்னில், அதுதானே ज्ञाताவாய் आत्माவாக प्राप्तம். அப்படிக் கொள்ளுகை ज्ञानात्मवादத்துக்குச்சேராது, हृदयाद्यव-

---

त्वं महान्त उपहसन्ति- शरीरातिरिक्तात्मतत्त्वस्थापनं हि कालान्तरभाविपुरुषार्थान्वययोग्यतायै । नो चेत् नश्वरं शरीरमेव काममस्त्वात्मा । तथा च तदिदमुद्देश्यं विपरीतमेव ज्ञानात्मवादिनो बौद्ध-चार्वाकयोः । तन्मते शरीरे स्थितेपि ज्ञानसन्तानभेदेनात्मास्थिरत्वाङ्गीकारादिति । तदुक्तं सर्वार्थ-सिद्धौ- आत्मानित्यत्ववादिनश्चतुर्विधाः । तेषु ज्ञानात्मवादिनश्शरीरस्थितावपि आत्मनोभिदुरत्व-माहुरिति । नन्वेकज्ञानसन्ततिर्नात्र, प्रयोज्यप्रयोजकभावापन्नपूर्वापरीभूतज्ञानप्रवाहविशेषः । तत्र पूर्वजागरस्वापोत्तरकालीनज्ञानधारयोः पौर्वापर्येपि न प्रयोज्यप्रयोजकभावः, मध्ये सुषुप्तौ धारा-विच्छेदात् सम्बन्धानुपपत्तेरिति यद्यपि भवति दोषः । तथापि पूर्वज्ञानजनितसंस्कारसम्बन्धेनोत्तर-ज्ञानारम्भाङ्गीकारान्न दोष इति शङ्कान्निराकरोति- पूर्वजागरेति । आदिना प्रत्यभिज्ञादिपरिग्रहः । अनिर्वाहमेव दर्शयति- संस्कारத்துக்கு इति । ज्ञानात्मवादिना त्वया स्थिरात्मनः कस्यचिदनङ्गी-कारेण, आत्मत्वाभिमतज्ञानस्य चेदानीं नष्टत्वेन कुत्र स्थित्वा संस्कार उभयोर्ज्ञानधारयोस्संबन्धं सम्पादयेदिति क्षणं विचारयेत्यर्थः । ननु "सर्वबोधैश्च हृत्कोशे संस्काराधान"मित्युक्त्या स्थिरस्य हृत्प्रदेशस्यैव संस्कारकोशाख्यस्य तदाधारत्वात्सन्तानैक्यं स्वयं निर्वहत्येवेति चेदाह- स्थिरेति । इदमपि पराभ्युपगममात्रं, "स च संस्कारकोशस्ते संघातात्मा प्रतिक्षणम् । प्रचयापचयाभ्यां स्यात् भिन्न" इत्यादिदूषणसद्भावादिति बोध्यम् । அதுதானே ज्ञाताவாய் इति । ज्ञानसंस्कारयोस्सामानाधि-करण्यनियमादिति भावः । आत्माவாக इति - ज्ञातुरेवाहमर्थत्वेनात्मत्वादिति हृदयम् । ननु चार्वाकस्य मम, शरीरमेवात्मेति सिद्धान्तात् हृत्प्रदेशस्य च शरीरावयवत्वेन नेदमनिष्टं भविष्यतीति चेदाह- அப்படி கொள்ளுகை इति । हृदयस्यात्मत्वाभ्युपगम इत्यर्थः । ज्ञानात्मवादेति । शरीरा-

---

*மதத்திற்போலே இவர்களுக்கும் நல்லவுறக்கத்தில் ஜ்ஞானம் தடைபடுகையால் அதன் பரம்-பரைக்கு ஐக்யம் கொள்ளமுடியாது. முன் விழிப்பின் கோடியிற்பிறந்த ஜ்ஞானவாஸனை, பின் கண்விழிக்கும்போது முதற்ஜ்ஞானத்தை விளைவிக்கையாலே பரம்பரை ஒன்றே என்பதும் தவறு. அவ்வாஸனைக்கு ஆதாரமான ஸ்திராத்மாவை நீங்கள் அங்கீகரிக்காதவரையில் இப்-படிச்சொல்லமுடியாதல்லவா? வாஸனை நிராதாரமாகவிராதே? வாஸனாதிஸம்ஸ்காரங்களெல்லா-வற்றிற்கும் ஆதாரமாக ஸ்திரமான ஹ்ருதயப்ரதேசத்தை ஒப்புக்கொள்கிறோம். அதனாற்-றான் அதற்கு ஸம்ஸ்காரகோசம் என்றும் பெயர் வழங்கலாயிற்று என்றால், அப்போது அதுவே ஆத்மாவாக நேரிடும். அப்படியே ஆயிடுக என்கை அடியிற்துவங்கிய ஜ்ஞானாத்ம-*

यवविशेषத்துக்கு ज्ञातृत्वமும் संस्कारादियोगமும் கொள்ளப்பார்த்தால், இப்படி காணுததொரு विचित्रार्थத்தைக்கட்டுமேதில், कारणदोषादिகளில்லாத शास्त्रம் சொன்ன கட்டளையேகொள்ள प्राप्तம். आत्मा ज्ञाताவாய்த் தோற்றுகையாலும், என்னுடைய ज्ञानமென்று தன்னிற்காட்டில் ज्ञानம் பிரியத்தோற்றுகையாலும், அதுக்கொரு बाधம் காணுமையாலும் ज्ञानमात्रமே आत्मा-வென்கை தாங்களிசைந்த प्रत्यक्षप्रमाणविरुद्धம். मरणकालத்தில் ज्ञानविच्छेदமே आत्मविनाश

---

त्मवादे दोषसन्दोहं दृष्ट्वा हि ज्ञानात्मवादेऽवतीर्णोसि । अत्र दृ त्ते तु दोषे तं परिहर्तुमक्षमः पुन-स्तत्रैव जिगमिषसि । अहो महानयं तव गतागतखेद इति तात्पर्यम् । ननु हृत्प्रदेशात्मत्ववादस्य ज्ञानात्मत्वबाधसंमतत्वेपि शरीरात्मवादानुगुण्यात्तैरिष्टापत्तौ क्रियमाणायां किं करिष्यसीत्यत्राह- हृदयाद्यवयवेति । கட்டுமதில்- कल्पनापेक्षया । कारणदोषादीत्यादिना बाधकप्रत्ययग्रहणम् । கட்டளையே கொள்ள प्राप्तम्- प्रकार एव परिग्रहीतुं योग्यः । तथा च जडस्य हृत्प्रदेशस्य ज्ञातृ-त्वादिकल्पनमपेक्ष्याबाधितार्थबोधकवेदोक्तरीत्या "देहेन्द्रियमनःप्राणधीभ्योन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी ॥" इतिवदात्मतत्त्वस्वीकरणमेव समुचितमिति चार्वाकान्प्रति वक्तव्यमिति भावः । अनन्यसाधनत्वं- स्वयंप्रकाशत्वं । व्यापित्वमपि, अणुस्वरूप-स्यापि सर्वदेहप्रवेशयोग्यत्वरूपम् । ज्ञानव्याप्तिर्वा विवक्षिता । एवमियता ग्रन्थेन ज्ञानात्मवादे प्रस्तुते, तत्प्रसङ्गात्प्राप्तपक्षान् क्षपयित्वा, संप्रति ज्ञानात्मत्वे प्रत्यक्षविरोधं प्रथयति- आत्मेति । पूर्वं शास्त्रोपपत्तिविरोधौ वृत्तौ । अहं जानामीति ज्ञानाश्रयतया आत्मनि ज्ञानभेदप्रतीतेरित्यर्थः । ननु जानामीत्यस्य विषयीकरणार्थकत्वात् अहं शब्दार्थज्ञानस्य तदाश्रयत्वोपपत्तेः न तावता ज्ञाना-त्मत्वनिराकरणसिद्धिरित्यत्राह- என்னுடைய इति । मम ज्ञानमिति षष्ठ्या भेदप्रतीतेरित्यर्थः । न चात्रापि ज्ञानशब्दस्यार्थावगाहनार्थकत्वाश्रयणात् षष्ठ्युपपत्तिरिति वाच्यम् । अर्थविषयीकरणस्य ज्ञाननिष्ठस्य ज्ञानस्वरूपादनतिरिक्ततया तदनुपपत्तेः । एतदेवाभिप्रेत्योक्तं "ज्ञानம் பிரியத்தோற்-றுகையாலும் इति । नन्वथापि "राहोश्शिर" इतिवद्भवतु गौणी सेत्यत्राह- அதுக்கு इति । षष्ठ्यर्थभेदस्येत्यर्थः । तत्र हि राहोश्शिरोमात्रत्वं प्रमाणप्रतिपन्नमिति तेन बाधः । न तथेह ज्ञानाभेद आत्मनि प्रमाणान्तरप्रतिपन्नः येन बाधो भवेत् इति । ततश्च फलितमाह- ज्ञानमात्रेति । தாங்க-ளிசைந்த इति । अबाधितार्थप्रत्यक्षप्रामाण्यं स्वस्यापीष्टं हीत्यर्थः । एवं ज्ञानात्मवादिनस्स्वाभ्युप-गमविरोधमुक्त्वा स्वप्रवृत्तिविरोधमप्याह- मरणकालेति वाक्यद्वयेन । सुषुप्तितश्चार्वाकस्य भयमापाद-

---

வாதத்திற்குச் சேராது ஹ்ருதயமென்னும் உறுப்பை ஆத்மாவென்று அபூர்வமாக நீங்கள் கல்பனை செய்வதைவிட, குற்றமற்ற சாஸ்த்ரம் சொன்ன வழியிற் செல்வது அறிவுடைமை யாகும் ஆத்மா அறிவுடையவனுய், என்னுடைய அறிவு என்று தன்னில் பிரியத்தோன்றும் ஜ்ஞாநகுணத்தை ஆத்மாவென்கை ஸ்வாநுபவப்ரத்யக்ஷத்துக்கும் விருத்தம். ப்ரத்யக்ஷம்-

மென்கிறவிவன், मरणकालத்தில் आत्मनाशத்துக்கு அஞ்சுமாப்போலே सुषुप्तिவருகிறதேன்று भयப்பட प्राप्तம். இங்ஙனன்றிக்கே सुषुप्तिயாலே தனக்கு विश्रमादिகள் பிறந்து, பின்பு தான் प्रबुद्धனாய் सुखமேயிருப்பானாக நினைத்திறே लोकायतिकனும் सुषुप्तिயையாசைப்படுகிறது.

**ஆத்மாவின் நிலை தேஹத்தளவே என்பதும் சரியன்று**

இப்படியால் आत्माவுக்கு स्थिरत्वம் प्रत्यक्षத்தாலும், शरीरान्तरानुवृत्तिயுண்டேன்னு-

यितुम् आपादकप्रसिद्धिः ''आत्मविनाशம் என்கிறவிவன्'' इत्यन्तेन प्रदर्शिता। அஞ்சுமாப்போலே इत्यन्तं दृष्टान्तः। भयப்பட प्राप्तம் इति। तत्रापि ज्ञानधाराविच्छेदात् इत्याशयः। இங்ங னன்றிக்கே इति। उक्तरीत्या स्वप्रतिकूलत्वबुद्धिकृतभयानुभवं विनेत्यर्थः। अस्य ''सुखமே இருப்பானாக நினைத்து'' इत्यग्रिमेणान्वयः। प्रत्युत स्वानुकूलत्वबुद्धिरेव तेषां तत्रेत्यर्थः। ''स्वापे सुखत्वविज्ञानात्तद्विच्छेदे च रोषतः। तदर्थमन्यत्यागाच्चे''त्यादिकमिह भाव्यम्। जाग्रदवस्थायां आयस्तकरणग्रामास्सन्तः ''सुषुप्तौ सुखं विश्रम्य समनन्तरं प्रबुध्ये'' इति मत्वैव हि सुस्वापाय लोकायतिकमुख्या अपि प्रवर्तन्त इति तद्विरुद्धोयं ज्ञानात्मवाद इत्याकूतम्। एवमात्मनि निराकर्त-व्यांशानुक्त्वा ज्ञातव्यांशान् सप्रमाणमाह இப்படியால் इति। उक्तेनोपपादनेनेत्यर्थः। प्रत्यक्षं-''य एवायं सुप्तस्स एव प्रबुद्ध'' इत्यनुसन्धानम्। ननु तादृशप्रत्यभिज्ञाया आत्मनो देहान्तत्वे-प्युपपत्तिरिति न तावतेष्टसिद्धिरित्यत्राह- शरीरान्तरानुवृत्तीति। ''वीतरागजन्मादर्शना''दिति न्याय-सूत्रम्। सरागस्यैव जन्मदर्शनादिति तदर्थः। व्यतिरेकोक्तिर्द्रढिम्ने भवति। जातमात्रस्य स्तन-पानादौ प्रथमप्रवृत्ती रागादेव भवति। स च तत्रेष्टसाधनताबोधेन। स चैतच्छरीरावच्छेदेनन सं-भवतीति भवान्तरीयतत्स्मृतिरेव हेतुराश्रयणीयेति, सिद्धा आत्मनो देहान्तरानुवृत्तिरिति तात्पर्यम्। तथा च ''आत्मा शरीरान्तरादनुवर्तते, तच्छरीरावच्छेदेनानुभूतार्थस्मर्तृत्वात्, एकस्मिन्नेव काले कायव्यूहे प्रतिसन्धातृपुरुषवत्' इत्यनुमानमिहाभिप्रेतम्। यद्यप्येवंशरीरात् शरीरान्तरमनुवर्ततामात्मा, तथाप्याकल्पस्थायी, आमोक्षस्थायी वा भवतु। तदुत्तरमपि तस्यानुवृत्तौ प्रमाणदुर्भिक्षादित्यत्राह-

*தான் ப்ரமாணம் என்று நீங்கள் ஒப்பினீர்கள். இதற்கு ஒரு தோஷமும் காணமுடியாது. மரணம் நேர்ந்தபோது ஜ்ஞாநம் முடிவடைதலே ஆத்மநாசமென்னுமிவன், மரணத்தில் ஆத்ம-நாசத்திற்கு அஞ்சுவதேபோல நல்ல உறக்கம் வரும்போதும் ஜ்ஞாநநாசம் பிறப்பதால் அதற்கும் அஞ்சவேண்டிவரும். உண்மையவ்விதமில்லையே? நன்கு உறங்கிக் களை நீங்கிக் கண்-விழித்து ஸுகமேயிருப்பதாகவன்றோ நினைத்துச் சார்வாகனும் நல்ல நித்ரையை ஆசைப்படுகிறான்.*

*ஆக இவ்விதம் ஆத்மா நிலைத்திருப்பவன் என்பது, நடந்ததை காலாந்தரத்தில் நினைப்-பதால் ப்ரத்யக்ஷத்தாலும், வேறு சரீரத்திலும் தொடர்ந்து வருபவன் என்பது. முன்பிறப்பில் முலையுண்ட பழக்கத்தினால் இப்பிறப்பில் முலையுண்ணத் துவங்குவதால் ஊஹத்தாலும், நித்-*

மிடம் वीतरागजन्मादर्शनத்தாலும், नित्यன் என்னுமிடம் शास्त्रத்தாலும் அறியலாம். இவ்वात्मा देहादिविलक्षणன் என்னுமிடம் युक्तिनिरपेक्षமாக दुस्त्यजप्रामाण्यश्रुति तदर्थापत्तिகளாலும் सिद्धिக்கும். व्यतिरेकप्रत्ययादिबलத்தையிசைந்து आत्माவை देहावधि, प्रळयावधि, मोक्षावधि என்று

---

नित्यன் इति । कालविशेषानवच्छिन्नवृत्तिक इत्यर्थः । "न जायते म्रियते वा विपश्चित्"! "नित्यो-नित्यानाम्" "अविनाशी वारेयमात्मे"त्यादिशास्त्रमिह विवक्षितम् । सिद्धान्ते "प्रत्यक्षमनुमानं च शास्त्रं च विविधागम"मित्यादिना प्रमाणत्रयाङ्गीकारादेवमुक्तम् । यद्यपि वीतरागजन्मादर्शन-न्यायेनैव प्रतिजन्म निरूप्यमाणेन तत्र तत्र ततोपि पूर्वजन्मसम्बन्धप्रतीत्या अर्थसमाजाधीनं सार्व-कालिकत्वरूपं नित्यत्वमात्मनो निर्वहति; तथापि अशरीरत्वरूपायामुक्तेरपि प्रमाणसिद्धत्वेन तत्रात्मसद्भावनिरूपणाय नैष न्यायः पर्याप्त इति तत्राप्यात्मसद्भावः शास्त्रैकवेद्य इत्येवमुक्तमिति ।

ननु श्रुत्या जीवनित्यत्वसाधने, श्रुतेस्तर्कापेक्षितया, तस्य चापरिनिष्ठितत्वात् सर्वं व्याकुलमिवेति शङ्कायां पुनश्च सिंहावलोकितकेन युक्तिनिरपेक्षं स्पष्टश्रुत्या जीवनित्यत्वसिद्धिं दर्शयति- இவ்वात्मेति । युक्तिनिरपेक्षமாக इति । अनेन पूर्वपक्षबीजमूह्यं भवति । अस्य "सिद्ध" मित्यत्रान्वयः । अत्र युक्तिशब्देन "मम शरीर"मित्यादिसिद्धलौकिकव्यतिरेकप्रतीतिर्विवक्षिता । तेन श्रुत्यर्थापत्तेः प्रमाणताया वक्ष्यमाणत्वेपि न विरोधः । तस्या वैदिकत्वात् । युक्तिशब्दस्योक्तार्थ-परत्वमुत्तरवाक्यारम्भेपि स्पष्टीभविष्यति । दुस्त्यजप्रामाण्येति बहुव्रीहिः । इदं च विशेषणं युक्ति-निरपेक्षं स्वार्थसाधनसामर्थ्यं द्योतयति । युक्तिनिरपेक्षत्वं च स्पष्टार्थत्वात् । अस्पष्टार्थकश्रुतेर्हि तर्कापेक्षा । श्रुतिः- "अशरीरं वाव सन्तं" "न हन्यते हन्यमाने शरीरे" इत्यादिका । "पिण्डः पृथग्यतः पुंसः, वासांसि जीर्णानि यथा विहाये"त्यादि स्मृतयोप्यत्र विवक्षिताः । तदर्थापत्तिः-श्रुत्यर्थापत्तिः । श्रुतार्थापत्तिरिति यावत् । देहान्तरानुभाव्यस्य स्वर्गस्वाराज्यादेर्यागादिफलत्वेन श्रवणादर्थादापद्यते, "अस्ति देहान्तराप्तिक्षमः फलभोक्ता कश्चिद्यागादे"रितीति भावः । ननु "युक्तिनिरपेक्षமாக" इति सम्भवन्तीमपि व्यतिरेकप्रतीतिमुपेक्ष्य, किमर्थं श्रुतिरेव प्रमाणतया-श्रितेत्यत्र स्वयं समाधत्ते- व्यतिरेकेति । बलத்தை இசைந்து- बलमात्रमाश्रित्य । अस्य "சொல்-லும்,, इत्यत्रान्वयः । मात्रपदेन श्रुतिस्वीकरणव्यवच्छेदः । देहावधीति । एकदेहावधीत्यर्थः । "अयं पक्षः प्राणेन्द्रियाद्यात्मवादिनां चार्वाकविशेषाणां" "प्राणेन्द्रियमनांस्येव चेतयन्ते पृथक्

---

யன் என்பது சாஸ்த்ரத்தாலும் உணரப்படுகிறது. அவன் தேஹத்தைவிட வேறுபட்டவன் என்பதும் மற்றொன்றின் உதவி வேண்டாத மறுக்கவொண்ணாத வேதமூலப்ரமாணத்தாலும், அதடியாகப்பிறந்த யுக்தியாலும் ஸித்திக்கும். ஆனாலும் இதை மட்டில் ஒத்துக்கொண்டு ஆத்மா இந்த தேஹத்தோடு அழிந்துபோவான், ப்ரளயத்தோடு அழிந்துபோவான், மோக்ஷத்தோடு அழிந்துபோவான் என்று பலவாறாக சிற்சிலர் சொல்லுவர். அவையும்

சொல்லும் पक्षங்களும் श्रुत्यादिबाधितங்களாம். एकदेहावधियென்கிற पक्षம் शङ्किக்கப்பற்றுமோ-வென்னில் ''स एव तु कर्मानुस्मृतिशब्दविधिभ्यः'' என்கிற अधिकरणத்திலே सुप्तोत्थितனையகப்பட आत्मान्तरமென்று शङ्कित्துப் परिहरिக்கக்கடவதானால் देहावसानத்தில் आत्मनाशம்சொல்லுவார் पक्षத்தை शङ्कित्துப் परिहरिக்கத்தட்டில்லை. श्रुतियிலே परलोकத்திலேயொன்றுள்ளமை-

---

पृथक् । आशरीरमवस्थानान्नातिरिक्तात्मकल्पने''ति तदुक्तेरित्यानन्ददायिन्याम् । प्रलयावधीति । पौराणिकैकदेशिनामयं पक्षः । ''प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी''त्यादिविष्णुपुराणादिवचनार्थापातबुद्ध्या प्रवृत्तत्वात् । तृतीयो मोक्षावधित्वपक्षश्चाद्वैतिनाम् । उपाधिपरिकल्पितजीवभावस्य मोक्षे उपाध्यपगमेनापगमस्वीकारात् । श्रुत्यादिबाधितங்கள் इति । ''नित्यो नित्यानाम्'' ''अविनाशीवारेयमात्मे''त्यादिश्रुतिबाधितमित्यर्थः । तथा च ''मम शरीर''मित्यादिव्यतिरेकप्रतीतिमात्रमाश्रित्य देहाद्विलक्षणात्मस्थापनसंरम्भे देहावधित्वप्रलयावधित्वादिपक्षान्तराणामपि तदनुपरोधेनोत्थानात् तत्पक्षशिक्षणायान्ततश्श्रुतेरेवाश्रयणीयतया, देहविलक्षणत्वसाधनायापि सैवाद्रियतां किमन्यैरसमर्थैरपूर्णैर्वा प्रमाणैरित्याकूतम् । नन्वाद्यश्शरीरावधित्वपक्षश्शङ्कामपि नार्हति अतिमन्दत्वात् । प्रायस्सर्वेजना जन्मान्तरं विश्वस्यैवहि तत्तत्कर्मणि प्रवर्तन्ते, द्वितीयादिपक्ष इव श्रुत्याद्याभासमूलकत्वमपि हि इह नास्तीत्याशङ्कायां कैमुतिकन्यायेन प्रत्युत्तरयति- एकदेहावधीति । एकस्थूलदेहावधीत्यर्थः । एतेन कल्पादावुत्पन्नस्सूक्ष्मो देह आत्मन आकल्पमनुवर्तत इति सांख्यपक्षव्यावृत्तिसिद्धिः । शङ्किக்கப்பற்றுமோ- शंकायाः पर्याप्तं किं । शङ्कितुमर्हो वेति यावत् । स एव तु कर्मेति । इत्थं हि तदधिकरणम्- सुप्तोत्थितः पुरुषः प्राक्तनः अथवान्य इति विशये, सुषुप्तेस्सत्संपत्तिरूपताश्रवणान्मुक्तितुल्यतयाऽन्य एव तच्छरीरं परिगृह्योत्तिष्ठतीति पूर्वपक्षे, सिद्धान्तयत्सूत्रमिदं स एवतिवति । तु शब्दो राद्धान्तप्रवृत्तिं द्योतयति । स एवोत्तिष्ठति, तेनैवानुभाव्यबहुकर्मसद्भावात् ''स एवाह''मिति प्रत्यभिज्ञानात् ''त इह व्याघ्रो वे''त्यारभ्य ''यद्यद्भवन्ति तथा भवन्ती''ति वेदशब्दात् गुरुतरमोक्षोपायविधीनां वैयर्थ्याच्चेति सूत्रार्थः इति । तथा चात्मनस्सुषुप्त्यन्तत्वशंकाया अत्यतिमन्दाया अपि सूत्रकृता निराकरणदर्शने किमु वक्तव्यमेकदेहावधित्वशङ्कापाकरणं प्रतीति भावः । सुप्तोत्थितனையகப்பட- सुप्तोत्थितमप्यन्तर्भाव्य । தட்டில்லை- आक्षेपो न भवति ।

---

வேதவிருத்தங்களே. ஆனாலும் இத்தேஹத்தோடு ஆத்மா முடிவடையும் என்ற பக்ஷம் மிகவும் மேலெழுந்தவாரியாய் ஆதாரமற்றதாய் இருக்க, இத்தையும் பொருட்படுத்தி நீர் கண்டிக்கவேணுமோ என்று இடையே சிலர் கேட்பர். வேதாந்தஸூத்ரகாரர் ஒரு இடத்தில் ''தூங்கிஎழுந்தவனை வேறுமனிதனெனக்கூறவேண்டும்'' என்ற மந்தசங்கையை மேற்கொண்டு ''தூங்கினவனேதான் எழுகிறான்'' பல காரணங்களால் அப்படித்தான் சொல்லவேண்டுமென்று ஸித்தாந்தம் செய்திருக்கிறார். அவ்வளவு அல்பவிஷயத்திற்கே ஸமாதானம் கூறி-

யும் இல்லாதமையும் அறிவார் ஆர் என்றும், प्रेतனால் अर्थसंज्ञै இல்லை என்றும், विज्ञानमय-ன இவ்ஆத்மாவை இப்பூதங்களோடொக்கவெழுந்து இவை நசிக்கும்போது தானுமொக்க நசிக்கிறன் என்றும் சொல்லுகையாலும், பிறந்தானிறந்தானென்கிற लोकव्यवहारस्वारस्यத்-

---

नन्वात्मन एकदेहावधित्वं श्रुतिबाधितमिति यत्प्रपूर्ववाक्य उक्तं, यच्च "शंकिக்கப் பற்றுமோ" इति पूर्ववाक्य उपहसितं, तत्सर्वं न युक्तम् । श्रुतौ बहुशः प्रतिशरीरमात्मनाशश्रवणादित्याशंकते- श्रुतியிலே इति । परलोकத்திலே इत्यादि । तैत्तिरीयके षष्ठकाण्डप्रथमप्रश्ने "को हि तद्वेद यद्यमुष्मिन्लोकेऽस्ति वा, नवेति श्रूयते । ततश्च परलोके जीवसद्भावे संशयोद्भावनात्तस्य देहावधित्वमवगम्यत इति भावः । नन्वस्य वाक्यस्य "दिक्ष्वतीकाशान्करोतीति विहितदिग्द्वारकल्पनाशेषभूतार्थवादरूपत्वेन न स्वार्थे तात्पर्यम् । तत्र हि स्वर्गस्य काशैराच्छादनीयत्वमुक्त्वा तदर्थं तल्लोकस्य दुरधिगमत्वाय "को हि तद्वेदेत्याद्युच्यते इति चेत्तत्राप्याह- प्रेतனால் इति । "न प्रेत्य संज्ञास्ति" इतीदं वाक्यं विवक्षितम् । प्रेत्य देहादूर्ध्वं इत्यर्थ इति तदभिमानः । अर्थसंज्ञा-घटादिज्ञानम् । अथात्रापि शरीरनाशानन्तरमात्मनो न निस्संबोधत्वमुच्यते, येन देहावधित्वं स्यात्। किन्तु प्रेत्य चरमदेहानन्तरं मुक्तौ जीवस्य देहादिभिरेकीकृत्य या बुद्धिस्सा निवर्त्यते । समित्यस्यैकीकारार्थकत्वात् । अथवा संज्ञायाः- देहसम्बन्धनिबन्धनायाः चैत्रमैत्राद्याख्याया निवृत्तिरभिप्रेता। अत आह- विज्ञानमयனை इति । "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यतीति श्रुतिः । विज्ञानघनो जीवः । भूतங்களோடு ஒக்க எழுந்து- भूतैस्सह समुत्थाय । ततश्च भूतेभ्य इति तृतीयास्थाने सहार्थे पञ्चमीति दर्शितं भवति । केचित्तु भूतेभ्यश्शरीररूपेण स्वयमुत्थायेति हेतुपञ्चमीमेवाहुः । ஒக்க நசிக்கிறன்- अनुविनश्यति । अत्र शरीरनाशसमकालमात्मनाशस्स्पष्टं ह्यभिधीयत इति भावः । ननु नश्यतिधातोरदर्शनार्थकतयाप्युपपत्त्या स्वरूपपरिशेषे निवारकाभाव इति शङ्कायामनन्यथासिद्धं लोकव्यवहारं प्रमाणयति- பிறந்தான் इत्यादि । अस्य देहोत्पत्त्यादिविषयकत्वे "பிறந்தது" इत्येव वक्तव्यतया "பிறந்தான்" इति पुंस्त्वसूचकभाषापदप्रयोगो न स्यादित्यभिप्रायः । इमामाशङ्कां परिहरिष्यन् किमियं श्रुतिप्रामाण्याभ्युपगममूला,

---

யுள்ளபோது நாமிதற்குப் பதில்கூறத்தட்டேன், அதைவிட கொஞ்சம் பொருளுள்ள கேள்வியாயிற்றே இது. தைத்திரீயம் 6-வது காண்டத்தில் 'பரலோகத்தில் ஒன்றிருப்பதும் இல்லாததும் யாருக்குத் தெரியும்" என்று கூறியிருப்பதாலும், இறந்த பிறகு ஜ்ஞானமில்லை என்றும், ஜ்ஞானமயனை இவ்வாத்மா இந்த ப்ருதிவ்யாதிபூதஉடலோடு தோன்றி அதோடு அழிகிறன் என்றும், சாந்தோக்யஉபநிஷத்து காட்டியிருப்பதாலும், "பிறந்தான், இறந்தான்" என்கிற உலக வார்த்தையாலும், ஆத்மா உடலுள்ளளவே இருந்து அழிகிறன் என்னவேண்டாமோ என்று சிலர் கேட்பர். இதற்கு நாம் கூறுவதாவது. சரீரம் அழியும்போது அழிகிறன் என்றது, ஆத்மாவுக்கு அப்போது ஒரு பெரிய மாறுதல் உண்டாவதைக் காட்டு-

தாலும், आत्मावுக்கு प्रतिशरीरம் उत्पत्तिविनाशங்களைக் கொள்ளவேண்டாவோ என்பர், श्रुति-मूलமாக இப்பக்ஷம் கொள்ளப்பார்த்தால் श्रुतिதானே नित्यனை आत्मावுக்கு शरीरपरम्परायोगத்-தைச் சொல்லுகையாலும், "वासांसि जीर्णानीत्यादिகளான उपबृंहणங்களாலும், இப்प्रमाणங்-களுக்கு अनुगुणமாக प्रेक्षावान्கள் பண்ணுகிற निर्बाधनिरुपाधिकपारलौकिकप्रवृत्तिகளுக்கு निष्प्रयोजनत्वदृष्टप्रयोजनत्वங்கள் கூடாமையாலும், शरीरावसानத்தில் आत्मनाशம் சொல்லித்தா-

---

उत केवलव्यवहारमूलेति विकल्प्य प्रथमं शिरो दूषयति- श्रुतिमूलेति । "एतेभ्यो भूतेभ्यस्समुत्थाये-त्यादिश्रुतिमूलेत्यर्थः । श्रुतिதானே इति । तदभ्युपगतप्रामाण्यकश्रुतिसजातीया श्रुतिरेवेत्यर्थः । "नित्यो नित्याना"मित्यादौ नित्यत्वं, "रमणीयचरणा रमणीयां योनिमापद्येरन्" कपूयचरणाः कपूयां योनिमापद्येरन्नित्यादौ नित्यस्यैवैकस्यात्मनोनेकशरीरपरम्परायोगश्च दृष्टव्ये । "इतिहास-पुराणाभ्यां वेदं समुपबृंहये"दित्याद्यनुसृत्याह- वासांसि जीर्णानीति । "...यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णानि अन्यानि संयाति नवानि देही"ति गीता-वचनम् । अत्रादिना "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यती"त्यदिकं विवक्षितम् । उपबृंहणं- श्रुतवेदार्थानां महतां सन्दिग्धवेदार्थव्यक्तीकारकं वचनम्। न चैतत् आतिथ्ये गवालम्भादिवत् शिष्टापरिगृहीतमित्याह- இப்प्रमाणங்களுக்கு इति । प्रेक्षा-वन्तः- निपुणा निरूपकाः । निर्बाधत्वं- समान्यतो विशेषतश्चानिषिद्धत्वम् । इदं निष्प्रयोजनत्वा-संभवे हेतुः । निष्प्रयोजनत्वं विपरीतप्रयोजनत्वमपि संगृह्णाति । "न कुर्यान्निष्फलं कर्मे"त्यादिना सामान्यतो निषिद्धं हि जलताडनादिकं विफलम् । परदारगमनादि च "न परदारान् गच्छे"दिति विशेषतो निषिद्धं विपरीतफलम् । निरुपाधिकत्वं- अर्थकामाद्यर्थत्वाभावः । तर्हि किमर्थं कर्म-करोतीति चेत् आह- पारलौकिकेति । परलोकः परलोकसुखं प्रयोजनमस्य इत्यर्थः । इदमुभयं च कर्मणो यागादेः दृष्टप्रयोजनत्वासंभवे हेतुः । इदमुपलक्षणम्- परम्परया प्रवृत्तेर्वञ्चनार्थत्वाभावश्च बोध्यः । तदुक्तमुदयनाचार्यैः- विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा । दृष्टलाभफला नापि विप्रलम्भोपि नेदृश इति । तथाचेदृशप्रवृत्तीनां देहोत्तीर्णमेव फलं वाच्यमिति न देहावधित्वशंको-दय इति भावः । तर्हि उपात्तश्रुतीनां को निर्वाह इत्यत्राह- शरीरावसानेति । अवस्थाविशेषेति । अदर्शनरूपावस्थेत्यर्थः । "अदर्शनादिहायातः पुनश्चादर्शनं गतः" इति ह्युक्तमिति भावः । मोक्ष-धर्मेचेदं सदृष्टान्तमभिहितं- "यथा हिमवतः पार्श्वं, पृष्ठं चन्द्रमसो यथा । न दृष्टपूर्वं मनुजै र्न च तन्नास्ति तावता ॥ तद्वद्भूतेषु भूतात्मा सूक्ष्मोज्ञानात्मवानसौ । अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति

---

கிறது. இவர்கள் ச்ருதியைக்கொண்டே கேட்பதால் நாமும் ச்ருதியைக்கொண்டே பதி-லுரைப்போம். ஆத்மா பல சரீரம் பெறுகிறான் என்கிறது வேதம். கிழிந்த உடையை உதறித் தள்ளுவதுபோல் ஜீவன் இக்கிழ உடலை விடுகிறான் என்கிறது கீதை. பெரியோர்களும்

கத் தோற்றுகிற ச்ருதிகளுக்கு அவஸ்தாவிசேஷத்திலே தாத்பர்யம் கொள்ள ப்ராப்தம். இங்ஙன் கொள்ளாதபோது ஆத்மநித்யத்வம் சொல்லுகிற ச்ருதிகள் போலே இச் ச்ருதிகள் தானும் ப்ரமாணமன்றிக்கேயொழிகையால் இது மூலமாக இவர்களுக்கு ஸ்வபக்ஷம் உதியாது. லோகவேதங்களில் ஆத்மாவினுடைய உத்பத்திநாசவ்யவஹாரம் சரீரோத்பத்திவிநாசாதிகளையிட்டு விசிஷ்டவேஷத்திலே ப்ரவ்ருத்திக்கிறது.

**ஆத்மா ப்ரளயபர்யந்தமே நிலை நிற்பன் என்பதும் பிசகு**

ஆனாலும் "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी"त्यादिகளாலே ஆத்மாவும் ஆப்ரளயஸ்தாயியாமத்தனையன்றோவென்பார்கள். அப்போது

---

तावते''ति ॥ अथ द्वितीयं शिरो दूषयति- இங்ஙன் கொள்ளாதபோது इति वाक्यद्वयेन । आत्मनः शरीरनाशोत्पत्तिसमकालनाशोत्पत्तिमत्वस्य श्रुतिप्रामाण्यमूलकत्वानङ्गीकारे, लोकव्यवहारमूलत्वे इत्यर्थः । ச்ருதிகள்போலஇति । ''अविनाशीवारे'' ''नित्योनित्याना''मित्यादेर्यथा प्रत्यक्षविरोधादप्रामाण्यं, तथा ''भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती''त्यादि श्रुतेरपि देहात्माभेदप्रत्यक्षविरोधात् अप्रामाण्यापत्त्या देहातिरिक्तज्ञानाद्यात्मवादस्तत्सम्मतो न सिद्ध्येत् । अविशेषात् । प्रत्यक्षविरोधेप्युत्तरस्याः प्रामाण्येतु पूर्वस्या अपि तथेति, आत्मनो देहातिरेकवन्नित्यत्वमपि निष्प्रकम्प्यं सिद्ध्येदिति हृदयम् । पूर्वं शरीरोत्पत्तिविनाशसमकालमात्मनोपि तथात्वपरतया शंकितानां श्रुतीनां निर्वाहमुक्त्वाथ ''பிறந்தான்'' ''இறந்தான்'' इत्यादिना यदाशंकितं व्यवहारमूलत्वं तस्याप्यन्यथासिद्धिमाह- लोकवेदेति । अत्र वेदग्रहणं दृष्टान्तार्थम् । पूर्वं लोकप्रयोगस्यैव शंकितत्वात् । விசிஷ்டவேஷத்திலே इति । शरीरविशिष्टवेषेणेत्यर्थः । ''यतो वा इमानि भूतानि जायन्ते'' ''चैत्रो जात'' इत्यादौ उत्पत्तिश्शरीरसंबन्धः, विनाशश्शरीरवियोग इति तात्पर्यम् । एवमियता प्रकरणेन, पूर्वं प्रस्तुतेषु त्रिषु देहप्रळयमोक्षावधित्वपक्षेषु सामान्यतः प्रतिक्षिप्तेषु, अथ च विस्तरेण देहावधित्वपक्षे आशंक्य परिहृते, इदानीं क्रमप्राप्त प्रळयावधित्वपक्षं प्रतिक्षेप्तुं विस्तरेणाशङ्कते- ஆனாலும் इति । प्रकृतिरित्यादि । श्रीविष्णुपुराणे प्रळयवर्णनं षष्ठांशे क्रियते । महदहङ्कारादिरूपेणाव्यक्तस्वरूपिणी वाय्वादिरूपेण व्यक्तस्वरूपिणी च या, मयाऽऽख्याता प्रकृतिः, पुरुषो जीवश्च तावुभौ परमात्मनि स्वोपादानकारणे लीयेते इति, कल्पादौ जीवः परमात्मसकाशादुत्पद्य कल्पान्ते तत्र लीयत इति कथनात्तस्याप्रळयस्थायित्वमिति भावः । आदिना ''परमात्मा च सर्वेषामाधारः परमेश्वर इत्यादिकं विवक्षितम् । आधारः लयस्थानम् । तमिमं पक्षं प्रतिक्षिपति- அப்போது इति । आत्मन आप्रळयस्थायित्वे ।

---

*இவற்றுக்குச்சேர பரலோக ஸம்ஸ்காரத்துக்காக நிஷ்காரணமாக நிர்தோஷமாக முயற்சி செய்கிறார்கள். அவர்கள் ப்ரயத்நம வீண் என்றோ, இவ்வுலகில் கண்ட பயன்களுக்காக என்றோ சொல்லமுடியாது. ஆகமா நித்யன் என்றும் கூறுகிறது வேதம். இதைப் பொய் என்றால் உங்கள் கேள்விக்கு மூலமான வேத மட்டும் மெய்யாமா? பிறந்தான் இறந்தான் என்பதெல்லாம், உடலுடன் கூடினன், உடலைப்பிரிந்தன்என்ற கருத்துடையன.*

"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि । इत्यादिप्रमाणங்கள் விரோதிக்கையாலும், இங்கு प्रवाहाना-दित्वம் विवक्षितம் என்னவேண்டும்படிக்கு ஒரு प्रबलबाधकமில்லாமையாலும், क्षेत्रज्ञர்க்கு उत्पत्ति-विनाशங்கள் கொண்டால் ईश्वरனுக்கு वैषम्यनैर्घृण्यप्रसङ्गம் परिहरिக்கவொண்ணுமையாலும், कर्मभिर्भाविताः पूर्वैः" "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिகளாலே आत्माவுக்கு कल्पा-

प्रमाणங்கள் விரோதிக்கையாலும் इति । अनादिभावस्य नाशायोगात् जीवस्य प्रळयावधित्व-वादिना तस्य सादित्वमप्यास्थेयमिति अनादिताबोधकनिर्दिष्टगीतावचनविरोधस्स्यादिति हृदयम् । आदिना "न जायते म्रियते वा विपश्चित् नायं भूत्वा भविता वा न भूय" इत्यादिकं विवक्षितम् । ननु "अव्युच्छिन्नास्ततश्चैते सर्गस्थित्यन्तसंयमा" इत्याद्यनुसृत्य "विद्ध्यनादी उभावपि" इत्यत्रो-क्तं पुरुषानादित्वमपि जीवप्रवाहनित्यतापरं स्यात्, न तु तत्स्वरूपनित्यतापरम् । प्रवाहनित्यता च कालत्र्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वे सति, तादृशात्यन्ताभावप्रतियोगितानवच्छेदकजाति-मत्वमित्यत्राह- இங்கு प्रवाहेति । तत्र घटादेः प्रतिसर्गादिकं भिन्नत्वस्याध्यक्षसिद्धत्वेन तद्बाधात् घटादौ श्रुतस्यानादित्वस्य प्रवाहपरतया गौणत्वाश्रयणेपि आत्मविषये तस्य मुख्यत्वाङ्गीकारे नकिमपि प्रबलं बाधकं दृश्यत इत्यभिप्रायः । जातमृतादिव्यवहारोत्रापि बाधक इति चेत् न । तस्य विशिष्ट-विषयतयाऽन्यथासिद्धेरनुपदमेव प्रदर्शितत्वात् । तथा च बाधकस्य प्राबल्यमनन्यथासिद्धत्वरूपं बोध्यम् । जीवोत्पत्त्याद्यङ्गीकारे बाधकमप्याह- क्षेत्रज्ञர்க்கு इति । "इदं शरीरं कौन्तेय क्षेत्रमित्य-भिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद" इत्युक्तस्य जीवस्येत्यर्थः । ईश्वरனுக்கு इति । वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयतीत्यत्र देवतिर्यङ्मनुष्यस्थावराद्यात्मनोत्कृष्टमध्यमनिकृष्ट-सृष्टिकरणात्, अतिघोरदुःखयोगकरणाच्चेश्वरस्य वैषम्यं पक्षपातो जीवेषु- नैर्घृण्यं निर्दयत्वं च स्यादिति पूर्वपक्षयित्वा, नैतद्युक्तम् जीवकर्मसापेक्षत्वादुक्तस्य सर्वस्येति सिद्धान्तितम् । भूयोपि "न कर्म विद्यते सृष्टिकाले, जीवस्य ब्रह्मण्यविभागेन प्रलया"दिति शङ्कायां जीवस्य तत्कर्मणां चानादि-त्वादिति समाधानं "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे"त्यत्र कृतं दृश्यते । ततश्च जीवस्योत्पत्त्याद्यङ्गीकारे तत्रोक्तरीत्येश्वरस्य वैषम्यादिप्रसङ्गो दुर्वार एवेति तात्पर्यम् । नन्वी-श्वरस्यास्तु वैषम्यादिकं, ईश्वर एव वा मास्तु जगत्कर्तेत्याद्याशङ्कायामाह- कर्माभिरिति । ...

ஆனாலும் மீண்டுமொரு கேள்வி. ஸ்தூலமாயும் ஸூக்ஷ்மமாயுமுள்ள ப்ரக்ருதி ஜீவன் இருவரும் பரமாத்மாவினிடத்தில் மறைகின்றனர் என்று வசநமிருப்பதால் ஆத்மாவும் ப்ரளயகாலபர்யந்தமேயுள்ளவன் என்ன வேண்டாமா என்று. அப்போது ப்ரக்ருதியும் ஜீவ-னும் அநாதி என்று சொல்லும் வசநம் விரோதிக்கும், இங்கு அநாதி என்றது ஜீவபரம்பரை-யின் அநாதித்வத்தைப் பற்றியது என்று குறைத்துச் சொல்லும்படிக்கு என்ன ப்ரதிபந்தகம்-நேர்ந்துள்ளது. மேலும் ஜீவனுக்கு ஆதியும் அந்தமும் கொண்டால் ஈச்வரனுக்கு ஒரு ஸமயம் பக்ஷபாதமும் இரக்கமின்மையும் பரிஹரிக்கப்போகாது. "பூர்வகர்மவாஸனையால் மறுபிறவி"

न्तरस्थिति कण्ठोक्तैயாகையாலும், अकृताभ्यागमकृतविप्रणाशங்கள் கூடாமையாலும், "लीयेते परमात्मनि" என்றவிடம் இரும்புண்ட நீர்போலே வருகிற पृथग्व्यपदेशानर्हावस्थाविशेषापत्तिயாலே

कुशलाः कुशलैस्तुताः । ख्यात्यातयाऽविनिर्मुक्तास्संहारेष्युपसंहृता इति श्री विष्णुपुराणवचनम् । अत्र "प्रजा" इति प्रकृतम् । कुशलाः प्रजा जीवाः कर्मकरणसमर्थाः पूर्वैः कुशलैः अनेकजन्मानुवर्तनसमर्थैः कर्मभिर्भाविताः जनितवासनास्सत्यः, संहारे प्रलये उपसंहृता उपसंहृतकरणकलेबरा अपि तया ख्यात्या कर्मानुसारिण्या बुद्ध्या अविनिर्मुक्ता एव जज्ञिर इत्युत्तरश्लोकस्थक्रियया सम्बन्धः । नाभुक्तमिति । "अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभ"मिति पूर्वार्धम् । एवमादिवचनसिद्धमाह- ஆத்மாவுக்கு इति । नन्वेवमादिवचनं "अवश्यं कृतं कर्म स्वेनानुभोक्तव्य"मित्यादावेव तत्परं, न तु जीवस्य कल्पान्तरस्थितावित्यत्राह- अकृताभ्यागमेति । स्वेनाकृतस्य कर्मणस्तत्फलभोगाय स्वीकरणमित्यर्थः । कृतविप्रणाशश्च स्वकृतस्य कर्मणस्स्वेन फलानुभवं विनैव नाशः । कल्पादौ जीवोत्पत्त्यङ्गीकारे शरीरसम्बन्धसुखदुःखाद्यनुभवार्थं कर्मविशेषस्यावश्यापेक्षायां स्वकृतपूर्वकर्माभावेनाकृताभ्यागमप्रसङ्गः । तथैव कल्पावसाने जीवनाशस्वीकारे "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदित्युक्तरीत्या तदानीमपि केषांचित्कर्मणामार्जितत्वेन, तत्फलानुभवं विनैव तेषां नाशापत्त्या कृतविप्रणाशप्रसङ्गश्चेति भावः । ननु प्रसज्यतामिदमुभयं, का नोहानिरिति चेत् शृणु । स्वाकृतमपि कर्म यद्येनमनुगच्छेत्, तर्हि कथं तेन निरातङ्केन भूयेत । परेषां पापानि हि भूयांसि भवन्ति । तानि कदा कं प्रतिगच्छेयुरिति न नियन्तुं शक्यत इति । एवं स्वकृतस्यापि कर्मणः फलोपभोगं विनैव विनाशे, बहुवित्तव्ययायासनिष्पाद्यपारलौकिककर्मणि सश्रद्धं पुरुषो न प्रवर्तेत । तत्फलानुभवोऽस्य नियतं भावीत्यस्यानिश्चयात् इति बोध्यम् । न च सिद्धान्तेपीमौ प्रसङ्गौ भविष्यत एव । उपासकस्योत्क्रान्तस्य पुण्यपापप्रहाणात् । अयं च कृतविप्रणाश एव हि, स्वकृतकर्मणस्स्वेनाननुभूतत्वात् । एवं सुहृदि दुर्हृदि चोपायनं तयोः श्रूयते । अयं चाकृताभ्यागम एव । ताभ्यामकृतस्य कर्मणस्तदुपगमात् इति वाच्यम् । प्रायश्चित्तादिनाऽदत्तफलस्य कर्मणो नाश इव विद्यामाहात्म्यादुपासकस्योत्क्रान्तिकाले विरोधिकर्मप्रहाणेपि कृतविप्रणाशाभावात् । तत्रच यागादाविव पूर्वोक्ताश्रद्धामलकळङ्कितत्वप्रसक्त्यभावात् । एवं शत्रुमित्रयोरुपासकविषये पूर्वमनुष्ठितापकारोपकाराभ्यामेव तत्फलतया पापपुण्योपायनवचनात् ते अपि स्वकृतप्राये एवेति नाकृताभ्यागम इति वक्तुं शक्यत्वात् । तत्र च अहेतुकोपनिपातकृतशंकातंकाभावात् । तर्हि लयवचसां कागतिरित्यत्राह- लीयेत इति । இரும்புண்ட நீர்போல इति । तप्तायःपतितजल-

என்று விஷ்ணுபுராணமும், கல்பகோடிகாலம் கழிந்தாலும் கர்மாக்கள் அநுபவியாமல் அழியா என்று மஹர்ஷிவசநங்களும் ஆத்மாவுக்கு மறுகல்பவாழ்வு உண்டு என்கின்றன.

निर्वाह्यम्. ஆகையால் सृष्टिप्रलयங்களில் आत्मादिகளுக்கு स्वरूपोत्पत्तिविनाशங்களை अव्यवस्थित-भागமாகவாதல் व्यवस्थितभागமாகவாதல் சொல்லுகிற ब्रह्मदत्तादिमतங்கள் बाह्यमततुल्यங்களாம்.

மோக்ஷம் வரையில்தானாத்மாவுண்டு என்ற மதமும் தவறு,

नित्यनैमित्तिकप्राकृतप्रळयங்களில் नशियाதாகிலும், आत्यन्तिकप्रळयத்தில் ब्रह्मத்திலே

---

बिन्दोरिवेत्यर्थः । तत्र हि जलस्य तप्तायसि स्थितस्य भेदेन व्यपदेशो दुर्घटः । तद्वत्प्रकृते देवादि-स्थूलावस्थाप्रहाणेण ब्रह्मणि सूक्ष्मदशापत्त्या जीवस्य पृथग्व्यपदेशो दुर्घट इति भावः ।

ननु "सर्वं खल्विदं ब्रह्म, 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेत" दित्यादिना सर्वस्य भोक्तृ-भोग्यनियन्तृवर्गस्य ब्रह्माभेदश्रवणेन ब्रह्मण्येव स्वरूपत उत्पत्तिप्रळयावभ्युपगन्तव्याविति नैतन्निरा-करणं युक्तमित्यत्राह- ஆகையால் इति । स्वरूपोत्पत्तीति । स्वरूपेणोत्पत्तीत्यर्थः । शरीरविशिष्ट-वेषेणोत्पत्तिविनाशयोरिष्टत्वात्स्वरूपेति । सृष्टिप्रळययोः स्वरूपोत्पत्तिनाशमात्रदूषणेनात्मदीनां ब्रह्मणि स्वरूपेण स्थितिरभ्यनुज्ञायत इति सूचितम् । अत्र "व्यवस्थितभागமாகவாதல், व्यवस्थितभाग-மாகவாதல் इत्येव युक्तः पाठः विकल्पनात् । अपि तु सर्वकोशेष्वपि "अव्यवस्थितभागமாகவாதல் इति मात्रं पठ्यते । एतदुक्तं भवति- आदौ निस्तरङ्गसमुद्रस्थानीयं ब्रह्म फेनतरङ्गबुद्बुदवत् सृष्टि-दशायां चिदचिदीश्वरविकारवद्भवतीति सामान्यतस्सिद्धे,प्रळये ब्रह्मणि लीना इमे विकाराः पुनस्सृष्टौ व्यवस्थितभागतयोत्पद्यन्ते । यस्मिन् ब्रह्मांशे यो विकारः पूर्वं लीनः, तस्मिन्नेव ब्रह्मभागे स पुनः उत्पद्यत इति यावत् । इति भास्करपक्षः । अव्यवस्थितभागतयेति ब्रह्मदत्तपक्षः । अयं चात्म-सिद्धौ- "आचार्यटङ्कभर्तृप्रपंच, भर्तृमित्र, भर्तृहरि, ब्रह्मदत्त शङ्करे" त्यादिना, ब्रह्मसूत्रभाष्य-कृत्त्वेन परिगणितः । तथापि तस्य कृतिः क्वापि नाद्ययावदुपलभ्यते श्रूयतेपि वा । भास्करादि-सन्निकृष्टस्तत्प्राचीनो वेति वदन्ति । सर्वार्थसिद्धावपि जीवसरे षोडशश्लोकव्याख्यायामस्मिन्नेव विषयेऽयं नाम्ना कीर्तितः । बाह्यमततुल्येति । "अजामेकां" "गौरनाद्यन्तवती" "नित्यो-नित्याना" मित्यादिना तत्त्वत्रयस्यापि स्वरूपेण नित्यतावगमात्, अकृताभ्यागमकृतविप्रणाशादि-दोषप्रसङ्गाच्च चार्वाकादिसमानकक्ष्यत्वमेवेति भावः ।

---

*தான் செய்யாத கர்மம் தன்னநுபவத்துக்கு வராது தான் செய்தது தனக்கு உறைக்-காமற்போகாது. ஆனால் பரமாத்மாவில் ஜீவன் லயிப்பான் என்றதற்கு என்ன கருத்தென்-றால், இரும்பில் சுவரிப்போகும் நீர்போல பிரிவின்றி அவனில் இவன் கலந்திருப்பான் என்-பதுதான். ஆகையால் ஸ்ருஷ்டியிலும் ப்ரளயத்திலும் ஆத்மாதிகளுக்கு அடியோடு உத்பத்தி-விநாசங்களை ப்ரம்மப்ரதேசத்தில் குறிப்பிட்ட இடத்தில் என்று கொள்ளாமலும் கொண்டும் நடக்கிற ப்ரம்மதத்தாதிகளுடைய மதங்கள் பிறமதங்கள்போலே தவறானவைகளே.*

*இதற்குமேல் சிலர் "ஆத்மா நித்ய, நைமித்திக, ப்ராக்ருத ப்ரளயங்களில் நசியாதே-போனாலும், ஆத்யந்திகப்ரளயம் என்னப்பட்ட மோக்ஷத்தில் ப்ரம்மத்தில் மறைவான்" என்ற-*

லீனனுமென்று சொல்லப்படுகிற आत्मा பின்பு நிற்கக்கூடுமோ? ஆகையால் आत्मा आमोक्ष-स्थायि யாமத்தனையன்றோ என்பார்கள். இப்பக்ஷத்துக்கு मोक्षदशै தன்னிலே जीवपरர்க்கு भेदம் சொல்லுகிற श्रुतिस्मृति கள் विरोधि க்கையாலும், साम्यसाधर्म्यतादक्त्वादिनिर्देशம் சேராமையாலும், मुक्तனுக்கு स्वच्छन्दभोगविशेषங்களையும், व्यापारविशेषங்களையும் சொல்லுகையாலும்

---

एवं जीवस्य प्रलयावधित्वपक्षे प्रतिक्षिप्ते; अनन्तरं मोक्षावधित्वं सप्रमाणं शङ्कते- नित्यनैमित्तिकेति । प्रळयश्चतुर्विधो भवति । तथा हि- श्रीविष्णुपुराणे- "चतुर्युगसहस्रान्तं यदहर्ब्रह्मणो विदुः । रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः । रात्र्यागमे प्रलीयन्ते प्रभवन्त्यहरागम इत्युक्तरीत्या ब्रह्मणश्चतुर्मुखस्याहरवसाने नित्यः प्रळयः । "ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसंचर" इति कल्पान्ते नैमित्तिकः । "प्राकृतो द्विपरार्धक" इति द्विपरार्धरूपचतुर्मुखायुस्समाप्तौ प्राकृतः । "आत्यन्तिकस्तु मोक्षाख्य" इत्यत्यन्तमन्ते प्रारब्धावसने आत्यन्तिकलयः मोक्षरूप इति । एवं चैषु नित्यनैमित्तिकप्राकृतलयेष्वनश्यन्नपि जीवः "आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयमिति वचनात्परमात्मनि मोक्षे प्रलीन इति\ततः परं तस्य स्थित्यसंभवेन तदवधित्वमेव तस्येति पूर्वपक्ष्याशयः । तदिमां शङ्कां शातयति- இப்பக்ஷத்துக்கு इति । आत्मनो मोक्षावधित्वपक्षस्येत्यर्थः । अन्वयश्चास्य "श्रुतिस्मृतिகள் विरोधिக்கையாலும்" "निर्देशங்கள் சேராமையாலும்" इत्यादिना बोध्यः । मोक्षदशायां जीवभेदश्रुतिः सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेत्यादिका । साहित्यस्य भेदघटितत्वात् । स्मृतिश्च "वैकुण्ठे तु परे लोके......भक्तैर्भागवतैस्सहेत्यादिका । एवं श्रुत्यादिकमुक्त्वा तदर्थापत्तिं चाह- साम्यसाधर्म्येति । "परमं साम्यमुपैति" "मम साधर्म्यमागताः" "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" इत्यादिप्रमाणै स्साम्यादीनां प्रतिपन्नत्वेन तेषां च भेदघटितत्वेन मुक्तावपि ब्रह्मणः पृथक् जीवस्य स्थितिरास्थेयेत्यर्थः । गीतायास्साक्षात् भगवन्मुखोदितत्वेनोपनिषत्त्वप्रसिद्ध्या तदुक्तसाधर्म्यस्य श्रुतिसिद्धसाम्यतादृक्त्वयोर्मध्ये ग्रहणम् । परमं साम्यमिति पारम्यविशेषणात् तदैक्ये पर्यवस्यतीति मायिनां मतम् । तन्न । साम्यस्य कतिपयधर्मविषयकत्वेन, तद्वारणाय भूयोधर्मविषयकतां वक्तुं परमेति पदप्रयोगात् । नहि "परममूर्ख" इति मौर्ख्ये पारम्यविशेषणात्तस्य पण्डितत्वं सेत्स्यति । नन्वेतावता मुक्तौ जीवस्वरूपसिद्धावपि, निर्विशेषं तदस्त्विति शंकायां तस्य व्यापारादिविशेषमाह- मुक्तனுக்கு इति । स्वच्छन्देति ईश्वरेच्छानुगुणस्वेच्छाधीनेत्यर्थः । "सोऽश्नुते सर्वान् कामान्" "स यदि पितृलोककामो भवति संकल्पादेवास्य

---

தால் மோக்ஷத்திற்குப் பிறகு அவன் இருப்பனு? என்பர்கள். அப்படியாகில் ஜீவனுக்கும் பரனுக்கும் மோக்ஷத்தில் பேதம் சொல்லும் ச்ருதிகள் விரோதிக்கும். இருவரும் ஸமர் ஸத்ருசர் என்றுப்போல் சொல்லும் வசநங்களும் விரோதிக்கும். முக்தன் அப்போது பல-

மோக்ஷத்தில் आत्यन्तिकलयशब्दம் अविद्याकर्मादिகளுடைய अत्यन्तनिवृत्तியையும், पुनरावृत्तியில்லாதபடி प्रतिष्ठितपरिपूर्णब्रह्मानुभवदशैயையும் பற்ற प्रयुक्तமாகிறது. मुक्तனுக்கு संज्ञैஇல்லை என்றுப்போலே சொல்லும் शब्दங்கள் प्रतिकूलसंज्ञादिनिवृत्तியிலே तत्परங்களாம். ஆகையால்

पितरस्समुत्तिष्ठन्ति, इत्यादिभिर्भोगविशेषस्य "जक्षत्क्रीडन्रममाणः" "कामरूप्यनुसंचरन्" इत्यादिना व्यापारविशेषस्य चावगमादिति। तर्हि मुक्तौ "आत्यन्तिकस्तु मोक्षाख्य" इत्यात्यन्तिकलयपदप्रयोगः कथमिति चेदाह- மோக்ஷத்தில் इति । अत्राऽयमभिसन्धिः- लयस्य आत्यन्तिकत्वं नाम लीयमानवस्त्वाधिक्यकृतमिति एकः पक्षः। प्रतियोग्याधिक्यकृतमिति यावत् । अत्राद्वैतिनो वदन्ति-नित्यादिप्रलयेषु शरीरादीनां केषाञ्चिदेव लयः। मुक्तौ त्वात्मनोऽपीति इतरप्रलयात् अस्मिन् लीयमानप्रतियोग्याधिक्यमिति । वयन्तु ब्रूमः, आत्मनाशस्य अप्रामाणिकत्वात् पूर्वं शरीरादीनां नाशः, आत्यन्तिकप्रलयेत्वविद्याकर्मादीनामपीत्यन्यस्मात् प्रलयादस्मिन् तदाधिक्यं, जीवस्तु तदानीमपि तिष्ठत्येवेति । इदं सर्वं "अविद्याकर्मादिகளுடைய अत्यन्तनिवृत्तியையும்" इत्यन्तेनानुसंहितम् । "निवृत्तியையும்" इत्यस्याग्रे "பற்ற" इत्यनेनान्वयः। एवं प्रलयस्यात्यन्तिकत्वं पुनरावृत्तिरहितत्वरूपमित्यपरः पक्षः । तच्च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्। प्रतियोगिनिवृत्तिरूपत्वात् प्रलयस्यानुयोग्याधिक्यकृतं तदिति यावत् । तथा चैतादृशस्यात्यन्तिकत्वस्य पुनरावृत्तिरहितायां मुक्तावेव संभव इति तत्रात्यन्तिकलयशब्दप्रयोग उपपन्न इति तात्पर्येणोक्तं "पुनरावृत्ति இல்லாதபடி प्रतिष्ठितपरिपूर्णब्रह्मानुभवदशैயையும் பற்ற" इति । अत्र ब्रह्मानुभवदशाशब्देन पुनरावृत्तिरहितदुःखनिवृत्तेर्भावान्तराभावन्यायतः पाषाणकल्पत्वादिपक्षव्यावृत्तये स्वाभाविकानन्दाविर्भावरूपताऽप्यनुसंहिता भवति । ननु मुक्तावपि यदि जीवः ज्ञातृत्वकर्तृत्वादिशक्तियुक्तस्तिष्ठति तर्हि "न प्रेत्य संज्ञाऽस्ती"ति श्रुतिः कथमुपपद्यतामित्यत्राह- "मुक्तனுக்கு" इति । यद्यपि जीवस्य देहावधित्वपक्षसाधकतयैतद्वाक्यं पूर्वं पूर्वपक्षिणोदाहृतमिति तत्रैवेमौ शङ्कापरिहारौ समुचितौ । तथाऽपि प्रेत्येत्यस्य देहादूर्ध्वमित्यर्थकतायास्तदभिमतत्वेन पूर्वमुदाहरणेऽपि, वस्तुतः बृहदारण्यके मुक्तिदशापरतयैवैतद्वाक्यश्रवणात्, तदनुरोधेन प्रेत्येत्यस्य चरमदेहनिवृत्त्यर्थकत्वं मन्यमानैराचार्यैः तच्छङ्कापरिहारावत्रैव कृताविति विभावनीयम् । "प्रतिकूलसंज्ञे"ति । संज्ञेत्यत्र समित्येकीकारार्थकम् । ज्ञाधातुश्च ज्ञानार्थकः । तथा च भूतपरिणामशरीरेन्द्रियादिभिस्सहैकीकृत्यात्मनो या प्रतीतिर्भवति स्थूलोऽहमित्यादिः तादृशदेहात्मभ्रमादिर्मुक्तौ न विद्यत इत्युक्तवाक्यवास्तवार्थ इति । संज्ञायाः प्रतिकूलत्वं वास्तवाकारविपरीतत्वं भ्रमत्वमिति यावत् । अथायमात्मनो मोक्षावधित्वपक्षः प्रच्छन्नबौद्धाद्दत इति तद्भङ्गाधिकार एवायमपि पक्षो निक्षेपमर्हतीतीदानीं

வற்றை அநுபவிப்பான் பல செய்வான் என்பதும் சேராது. ஆகையால் மோக்ஷத்தில் அத்யந்தம் ஜீவனுக்கு லயம் சொன்னது, சரீராதிகள்மட்டுமின்றி மூலகாரணமான அவித்யா-

आत्मनाशம் மோக்ஷம் என்கிற पक्षம் चार्वाकादिपक्षतुल्यம். गुणगुणिभेदभङ्गक्षणभङ्गादिகளைக்கொண்டு विशिष्टनित्यात्मापह्नवம் பண்ணப்பார்க்குமதற்குப் परिहारம் सौगतादिसमयभङ्गदशैயிலே கண்டு-கொள்வது.

**சார்வாகமதம் சிறிதும் வேதவைதிக ஸம்மதியற்றது.**

ஆகையால் प्रत्यक्षोपपत्तिशास्त्रप्रसिद्धமான नित्यात्मतत्वத்தை இசைந்து, पारलौकिक-सुखदुःखप्राप्तिपरिहारानुगुणமாக वर्तिக்கப் प्राप्तம். प्रजापतियும் देवगुरुவும் देहात्मवादத்தைச்-

तद्दूषणमनवसरग्रस्तमित्यत्राह "ஆகையால்" इति। "चार्वाकपक्षतुल्यமாம்" इति तथा च तन्मत इवास्मिन् मतेऽपि अन्तत आत्मनाशाङ्गीकाराद्यथेच्छचारादिप्रसङ्ग इति तत्तुल्यत्वात्तत्प्रसङ्ग-नात्रैव एतत्पक्षदूषणमपि सङ्गतमेवेति भावः। यत्तु पूर्वं चार्वाकैर्मिलित्वा बौद्धादय ऊचुः "विकल्पप्रामाण्यबाधादिகளாலே गुणगुणिभेदभङ्गமாதல் इत्यादि, तदपि तत्तन्मतभङ्गाधिकारे स्वावसरे निराकरिष्त इत्याह– गुणगुणिभेदेति। आदिना कार्यकारणभावभंगादिपरिग्रहः। विशिष्टेति। ज्ञातृत्वकर्तृत्वादिविशिष्टेत्यर्थः। यदपि चावादीत् पूर्वं "देहातिरिक्तன் आत्मा, அவன் देहान्तरपरिग्रहம் பண்ணும் என்னும் अर्थம் மெய்யாகிலன்றோ" इत्यादि, तदपि एता-वता परिहृतमेवेत्याह- ஆகையால் इत्यादिना। शरीरादीनामात्मत्वस्य युक्त्यसहत्वप्रतिपादनेने-त्यर्थः। प्रत्यक्षं- सोहमित्यादिप्रत्यभिज्ञा। उपपत्तिः– वीतरागजन्मादर्शनादिः। शास्त्रं- "न जायते म्रियते वे"त्यादि। पारलौकिकेति। ऐहलौकिकसुखस्य हेयत्वात्परलोकसुखप्रतिबन्धकत्वा-च्चेति भावः। "सुखदुःखे"ति, "प्राप्तिपरिहारेति" च यथासंख्यमन्वयः। वर्तिக்கप्राप्तं- शास्त्रोक्त रीत्येति शेषः। तथा च "அன்றிடு உற்றது பற்றி நிற்க प्राप्तம்" इति पूर्वं त्वदुक्तं न युक्त-मित्याशयः। पूर्वं "இப்பக்ஷத்தை प्रजापति" "இது बुद्धिमान्களுக்கு निदर्शनமான देवगुरु" इति वाक्यद्वयेन यच्चार्वाकमतस्य प्राशस्त्यमभ्यधायि, तदपि निराह– प्रजापतियும் इति। दुष्कृत-कारिणामसुराणां "क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्युक्तभगवत्संकल्पविषयाणां व्यामोहनाय "त्वं हि रुद्रमहाबाहो मोहशास्त्राणिकारये"तिवत्तन्मतप्रवतनं ताभ्यामक्रियतेति

*ஸர்மாதிகளும் கழிதல்பற்றியும், புநராவ்ருத்தியில்லாதபடி பரிபூர்ணப்ரம்மாநுபவம் பிறந்த-படியைப்பற்றியும் ஆகும். முக்தனுக்குப் பிறகு ஜ்ஞானமில்லை என்றதற்கும் தேஹாத்ம-ப்ரமாதிகள் இல்லை என்றதில் தாத்பர்யம். ஆகையால் மோக்ஷத்தில் ஆத்மா நசிப்பான் என்-பது சார்வாகபக்ஷம்போலாகும். குணம் குணமுடையது என்ற பிரிவு கிடையாது. க்ஷணந்-தோறும் வஸ்து நசிக்கும் இத்யாதி குயுக்திகளைக்கொண்டு குணமுள்ள நித்யாத்மாவை மறைக்கப்பார்ப்பதை பௌத்தபங்காதிகளில் கண்டிக்கக் கடவோம்*

*ஆகையால் கீழ்சொன்னபடி சாஸ்த்ரம் ப்ரத்யக்ஷம் இவைகளால் ஆத்மதத்வத்தை அங்கீகரித்து பரலோகஸுகதுக்காதிகளை அடையவும் தவிர்க்கவும் ப்ரயத்நிக்கவும், ப்ரஜாபதி-*

சொன்னதுவும் आसुरव्यामोहनार्थம். रामभक्तिमूलமான जाबालिवाक्यம் रामवाक्यம் தன்னிலேயே दत्तोत्तरம். आश्रमवर्णनத்திலே लोकायतिकमुख्यர் என்றது, लोकायतिकसिद्धान्तத்தை दूषिक्क-லாம்படி தெளியக் கற்றவர்களைச் சொன்னதாமத்தனை. ஆகையாலதற்கு वेदवैदिकपरिग्रहलेश-प्रसङ्गமுமில்லை. पशुप्रायगूढाशयपापिष्ठजनपरिग्रहம் प्रेक्षावदुपादित्सामूलமாகாது.

---

भाव्यम् । श्रीमद्रामायणे जाबालिवाक्यनिर्वाहमाह- रामभक्तिमूलமான इति । "निवर्तनार्थं तव राम कारणात् प्रसादनार्थं च मयैतदीरित"मिति तद्वचनात् तद्वाक्यजातमन्यपरमित्याशयः । रामवाक्यம் தன்னிலேயே इति । तथा च यस्मै तन्मतं जाबालिरुपदिदेश, स एव तन्मतं निराचकारेति, नास्माकं तत्र किंचिद्वक्तव्यमवशिष्यत इत्याकूतम् । तथा च श्रीरामः- "भवान्मेप्रिय-कामार्थं वचनं यदिहोक्तवान् । अकार्यं कार्यसंकाशमपथ्यं पथ्यसंमितमित्यादि वदति । वस्तुतस्तु "अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिण"मिति न्यायेन बीजप्ररोहणार्थं कण्टकशाखावरणकरण-वद्रामप्रत्यानयनार्थं नास्तिकवागुदीरिता तेन, यद्यप्येवं, तथापि सः आस्तिकानामग्रणीरेवेति तस्मिन्नेव प्रकरणे स्पष्टम् । तथा च वसिष्ठः "जाबालिरपि जानीते लोकस्यास्य गतागतिमिति । स्वयं चाह- न नास्तिकानां वचनं ब्रवीम्यहं, न नास्तिकोहं, न च नास्ति किंचन । समीक्ष्य कालं पुनरास्तिकोऽभवं, भवेय काले पुनरेव नास्तिक इति । महाभारते कण्वाश्रमे लोकायतिकमुख्यानां निर्देशकृतां प्राशस्त्यशङ्कामप्यपाकरोति- आश्रमवर्णनத்திலே इति । आ-समन्तात्- तपआदिना श्राम्यन्त्यत्र मुनय इति तत्स्थानमाश्रमः । दूषिक्कலாம்படி தெளியக்கற்றவர் इति । यक्षानुरूप-बलिन्यायात्तन्मतेनैव तन्मतमुन्मूलयितुं ये तन्मतविदस्तेऽत्र लोकायतिकशब्दनिर्दिष्टा इति तेषु मुख्या न तन्मतानुसारिणो भवन्तीति भावः । ततश्चैभिः कारणैरस्योत्कर्षाभिमानं भञ्जयति- ஆகையால் इति । उक्तरीत्या प्रजापति बृहस्पतिपरिग्रहप्रभृतिकारणकलापस्यान्यथासिद्धत्वोपपाद-नेनेत्यर्थः । उपनिषदि छान्दोग्ये कीर्तनाद्वेदपरिग्रहशंका । सा च तत्रैवैतन्मतस्य निन्दितत्वात् दूरापेता । "तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतोर्यतर एतदुपनिषदो भविष्यन्ति, देवावा असुरावा ते पराभविष्यन्ती"ति हि श्रूयते । मदुपदेशं श्रवणमननादिभिरनिर्धार्य येषामापातबुद्ध्योपदेशसम्प्रदायो भविष्यति, ते नित्यसंसाराख्यं पराजयं प्राप्स्यन्तीति कथनात्, तत्रैव "स ह शान्तहृदय एव विरोचनोऽसुरान् जगामे"ति, विरोचनस्यैवापातबुद्ध्युत्पत्तिवर्णनाच्च तन्मतं निश्रेयसार्थिभिरनुपादेयमिति तत्रैव सिद्धमिति । न हि "नकलञ्जं भक्षयेदि"ति श्रुतौ निषेधप्रतियोगितया प्रस्तावमात्रेण कलञ्जभक्षणस्य वेदपरिग्रहशंकांऽकुरतीति भावः । प्रजापत्यादि-सम्बन्धाद्वैदिकपरिग्रहशंका, साप्युक्तेन न्यायेन निरस्तेत्यर्थः । यदपि चोक्तं पूर्वं "यावज्जीवं सुखं जीवेत्" என்றுப்போலே சொல்லும் गुरूपदेशம் इत्यादिना, तदपि प्रतिवक्ति- पशुप्रायेति । आहारनिद्राभयमैथुनादिमात्रयालेत्यर्थः । गूढाशयः- वञ्चकः । पापिष्ठः- ज्ञानहीनः । "नष्टप्रज्ञः

மறை காட்டின வழியில் இறையவனை மறக்காதே.

लोकव्यवहारसिद्धेश्वरனை ஒரு प्रकारத்தாலே आराधिக்க फलம் வரும் என்று निश्चयித்து

पापमेव पुनरारभते'' इत्युक्तेः । तथा च सर्वेषु सामयिकेषु पशुप्रायवृत्तीनां बहुलमुपलम्भात् तेभ्य एवेदं मतं स्वदेतेति' महाजनपरिग्रहाभावान्न बुद्धिमन्तोऽत्र सज्जन्त इति भावः । प्रेक्षावन्तः- प्रकृष्टज्ञानाः । तदुक्तं कुसुमाञ्जलौ- ''कः पुनरयं महाजनपरिग्रहो नाम । हेतुदर्शनशून्यैर्ग्रहण-धारणतदर्थानुष्ठानादिः । हेतुः- प्रयोजनमिति ।

पूर्वं ''लोकव्यवहारसिद्धेश्वरன்'' इत्याद्युक्तमपि निराकरोति- लोकव्यवहारेति । तत्सि-द्धेश्वरः- तत्तद्देशाधिपती राजादिः । ஒரு प्रकारத்தாலே- रत्नफलादिरूपतदभिमतार्पणेन । साक्षा-दन्यद्वारा वेति वा । लोकवेदव्यवहारेति । लोक्यते अस्पष्टो वेदार्थस्स्पष्टतयानेति लोकः स्मृतिः । श्रुतिस्मृतिभ्यामित्यर्थः । यद्वा लोकः- लोकसिद्धानुमानादिः । घटादिकर्तृवज्जगत्कर्तृतयापि-हीश्वरस्सिद्ध्यति । यद्यपि प्रमाणान्तरसिद्धस्यार्थस्य वेदो न बोधक इति नानुमानिक ईश्वरः, तथापि जगत्कर्तुरनुमानेनासिद्धावपि, तेन न तद्बाध इति तात्पर्येण तस्य लोकसिद्धत्वोक्तिः । तथा च अनुमानेनानपह्नोतव्यः वेदेन सिद्धश्चेति तदर्थ इति सिद्धम् । तदुक्तमाचार्यैः- सर्वज्ञनानुमातुं नापह्नोतुं च शक्यस्तदुभयनियमादर्शनादित्यमंस्तेति । आराधिக்கவிதி । ''स्वकर्मणा तमभ्यर्च्य'' ''विष्णुराराध्यते'' इत्याद्युक्तवर्णाश्रमधर्ममुखेनेति शेषः । पूर्वं प्रमाणतया ''प्रत्यक्षाश्रुतिरर्थधी'' श्चेति भट्टपराशरपादोक्त्युपादानेऽपि तदर्थस्य स्वयं तत्राप्रदर्शितत्वात् प्राप्ते प्रसङ्गे तमाह- प्रत्यक्ष-मात्रेति वाक्यद्वयेन । ''लोकवेदव्यवहारसिद्धेश्वरे''ति त्वदुक्तमयुक्तम् । वेदस्यास्माभिः प्रत्यक्ष-

தேவகுரு இவர்கள் தேஹாத்மவாதத்தைச் சொன்னது அஸுரரை மயக்குகைக்காக. ராம-பக்தியால் சொன்ன ஜாபாலி வாக்யத்திற்கு ராமனே பதில் சொல்லியாயிற்று. கண்வாச்ரம-வர்ணனத்தில் ''லோகாயதிகமுக்யர்'' என்றது அம்மதத்தை கண்டிக்குமளவு கசடறக்கற்ற வைதிகரைத்தான். ஆகையால் துளியும் வேதாங்கீகாரம் அம்மதத்திற்குக் கிடையாது. மாடு போல் மந்தபுத்தியுள்ள வஞ்சகஜனங்கள் அங்கீகரித்தது மஹாஜனங்களின் அங்கீகாரமாகாது.

லோகரீதிப்படி ப்ரஸித்த ஈச்வரனாகிய அரசனை நீங்கள் பயன் பெறலாமென்று நம்பி உபசரிக்கிறீர்கள் அல்லவா? அதுபோலவே லோகரீதியிலும் வைதிகமுறைப்படியும் மேலான-ஈச்வரன் ஒருவன் உண்டு என்றேற்படுகிறபடியால் அவனையும் நம்பி ஆராதிக்கவேண்டியதே, ப்ரத்யக்ஷமாய் கண்டது ஒன்றே நிஜம் என்கிற உங்கள் மதப்படியே வேதம் என்னும் வில-க்ஷண சப்த ஸமூஹம் கேட்கப்படுவதினாலும் அதனால் உண்டான அர்த்தஜ்ஞாநம் உணரப்-படுவதினாலும் இல்லை என்னவொண்ணாது. அந்த ஜ்ஞானத்தில் காரணத்தின் குற்றமோ, வேறு ப்ரபலமான பாதகமோ காணாதபடியாலே அது அப்ராமாணம் என்னவுமொண்ணாது. ஆகையால் மையின் துணைகொண்டு, கண், மறைந்திருக்கும் புதையலையும் அறியவற்றாயாப்-போல் வேதமென்னும் ஸநாதநநேத்ரம், யோகஸஹாயத்தினால் தர்மாதர்ம ஸ்வர்க்க நரக-ஈச்வராதிகளையும் அறியவற்றாம்.

இங்ஙனம் ஸ்ரீ பரமதபங்கத்தில் 6-வது ஆகிய லோகாயதமதபங்காதிகாரத்தின்
தமிழ் பொழிப்புரை முற்றும்.

प्रवृत्तिக்கீருப்போலே लोकवेदव्यवहारसिद्धனை ईश्वरனையும் आराधिக்க फलம் வருமென்று निश्चयिக்கக் குறையில்லே. प्रत्यक्षमात्रभक्தருக்கும் वेदस्वरूपமும் वेदजन्यज्ञानமும் கண்டபடி- யாலே अग्रहविக்க ஒண்ணாது. இதற்குக் कारणदोषமும் बाधकप्रत्ययமும் காணாமையாலே (अप्रामाण्यம்) இசைய ஒண்ணாது. இப்படியால் प्रत्यक्षத்தைப்போலே वेदமான सनातनचक्षुஸ்- ஸையும் கொண்டு அஂஜनविशेषादिகளாலே निधिகாணுமாப்போலே अतीन्द्रियங்களையெல்லாம் கண்டுகொள்ளலாம்.

---

मात्रभक्तैः प्रामाण्यानङ्गीकारादित्याक्षेपात्प्रसङ्गो बोध्यः । वेदस्वरूपं- विलक्षणशब्दराशिः । वेद-जन्यज्ञानं- तदर्थकर्मब्रह्मादिविषयकम् । கண்டபடியாலே- यथासंख्यं श्रावणप्रत्यक्षेण, मानस-प्रत्यक्षेण स्वयं प्रकाशतया वेति शेषः । एतावता "प्रत्यक्षाश्रुतिरर्थधीश्चेति भागो विवृतः । இதற்கு- वेदार्थज्ञानस्य । कारणदोषம்- शक्तियोग्यताभ्रमादिः । காணாமையாலே इत्यन्वयः । ततश्च "न तथा दोष" इति श्लोकांशो विवृतः । बाधकप्रत्ययः- तदर्थस्य धर्मादेः प्रत्यक्षेण बाध-प्रतीतिः । अनेन "तदर्थः पुनर्धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षबाध्यो न चेत्येतावद्व्याख्यातम् । एतच्छ्लोकतात्पर्यं च पूर्वमेवास्माभिर्निरूपितमिति तत्रैव भाष्यम् । अत्र "காணாமையாலே இசையவொண்ணாது" इत्येव सर्वकोशेषु पाठो दृश्यते । तथापि "இசையவொண்ணாது" इत्यस्य विशेष्यसाकाङ्क्षत्वात् "अप्रामाण्य"मिति पदं पूरणीयम् । अथ "योगोन्मीलितधीस्तदर्थमथवा प्रत्यक्षमीक्षेत स" इति चरमपादमभिप्रयन् प्रत्यक्षमात्रशरणानामपि वेदचक्षुषा धर्माद्यतीन्द्रिय-पदार्थसिद्धिरनिवार्येत्याह— இப்படியால் इति । वेदतदुत्थज्ञानयोः प्रत्यक्षतुल्यत्वस्थापनेनेत्यर्थः । प्रत्यक्षத்தைப்போலே- चक्षुरादीन्द्रियवत् । वेदமான इत्यादि । "पितृदेवमनुष्याणां वेदश्चक्षु-स्सनातनमित्युक्तेर्वेदस्यापि चक्षुष्ट्वं प्राप्तमित्यर्थः । तस्याकृत्रिमत्वात्सनातनत्वम् । चक्षुषा विप्र-कृष्टार्थग्रहणं वेदचक्षुषाऽतीन्द्रियार्थग्रहणसिद्धये निदर्शयति- अञ्जनविशेषेति । अन्तर्निहितनिध्यादे-श्चक्षुरसन्निकृष्टत्वेपि यथा सिद्धाञ्जनादिसहकारेण चक्षुषा ग्रहणं दृष्टं, तथैव वेदाख्येन सनातन-चक्षुषा धर्मादेरतीन्द्रियवर्गस्य ग्रहणमुपपद्यत इति भावः । अत्राञ्जनस्थानीयो योगाभ्यासविधिः । "योगोन्मीलितधीरिति" ह्युक्तम् । निधिश्चात्र सर्वान्तर्यामी भगवान् । "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसञ्चरन्तो न विन्देयुः एवमेवेमाः प्रजास्सत आगत्य न विदुस्सत आगच्छामह इति...अनृतेन हि प्रत्यूढा" इति श्रुतेः । तदुक्तमाचार्यैः- "नित्यं करीश, तिमिरा-विलदृष्टयोपि सिद्धाञ्जनेन भवतैव विभूषिताक्षाः । पश्यन्त्युपर्युपरि सञ्चरतामदृश्यं मायानिगूढ-मनपायमहानिधिं त्वा"मिति । एवं क्वचित् भगवद्दर्शने भगवत एव सिद्धाञ्जनत्वमुक्तं "अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टे"रित्यादिवदिति विशेषः ।

एवमधिकारोऽवसितः । तत्रान्ते प्रतिपादितस्यातीन्द्रियार्थाभ्युपगन्तव्यत्वस्य शब्दानु-मानप्रामाण्यावर्जनीयतायाश्च चार्वाकपक्षेपि सद्भावं गाथया दर्शयति கண்டதனில் इत्यादि ।

கண்டதனுல் காணுத தனுமிக்கின்ருர் பண்டொருத்தனுரைத்ததனைக் கவருகின்ருர்
உண்டுபசிகெடுமென்றேயுணர்ந்துண்கின்ருர் ஒன்ருலே ஒன்றைத்தான் சாதிக்கின்ருர்
பண்டுமுலையுண்டதனுல் முலையுண்கின்ருர் பார்க்கின்ருர் பலரல்லாத தம்மை மற்றும்
கண்டுமதிகெட்டநிலை காணகில்லார் காணுதொன்றிலதென்று கலங்குவாரே.

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमत्परमतभङ्गे लोकायतिकभङ्गाधिकारष्षष्ठस्सम्पूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

एतदधिकारारम्भगाथायाश्चार्वाकमते वेदप्रामाण्यदुस्त्यजताप्रतिपादनमात्रैदम्पर्यात् न पुनरुक्तिप्रसक्तिः । तत्र "உண்டது கேட்கும் உலோகாயதர்" इति भागेन संगृहीतस्यार्थस्यात्र विवरणं कृतमिति वा बोध्यम् । கண்டதனுல் इति । अदृष्टं वस्तु किमपि नास्तीति वदन्त एवैते दृष्टेन धूमादिनाऽदृष्टं वह्न्याद्यनुमिमते । பண்டொருத்தன் इति। पूर्वं केनचिदुपदिष्टं स्वमततत्त्वं तद्वाक्यप्रामाण्याद्विश्वसन्ति । एतेन शब्दानुमानयोरपि प्रामाण्यं तदिष्टमिति तन्नास्तीति कथा वृथा विहता चेतिकथितं भवति । ननु धूमदर्शनेन पर्वते वह्निसद्भावसंशये जाते पर्वतपार्श्वं गतस्तत्र वह्निमवलोक्य तत्सद्भावं प्रत्यक्षतो निश्चिनुते । एवमेव पूर्वपुरुषवाक्येनोत्पन्नतत्तदज्ञानस्स्वयमालोच्य शास्त्राणि निर्धारयति । ततश्च धूमदर्शनादीनां साध्यादिसंशयोत्पत्तौ क्षीणशक्तिकत्वान्न साध्यादिसाधकत्वमित्यत्राह- உண்டுபசி கெடும் इति । भोजनानन्तरं क्षुन्निवृत्तौ पूर्वं हेत्वन्तरादर्शनसहकृतैतद्दर्शनबलाद्भोजनजन्यत्वमनुमायैव हि भोजनादौ प्रवर्तते, न संशयान्नापि प्रत्यक्षादिति भावः । एवं संशयादिकमन्तरा शब्दस्य प्रामाण्यमपि दर्शयति- ஒன்ருலே इति । यत्किंचिदुक्त्वा स्वसिद्धान्तं साधयन्ति । एवमेतावताऽनुमानादिप्रामाण्यं तन्मतेनापि प्रतिष्ठाप्य देहातिरिक्तनित्यात्मसद्भावमपि तेषांमत्यैवाह- - பண்டுமுலை इत्यादिवाक्यद्वयेन । भवान्तरीयं स्तन्यपानं स्मृत्वैव ह्येतेपि इह जन्मनि तत्पिबन्ति । ततश्च नात्मा देहावधिरित्याशयः । பார்க்கின்ருர் इति । மற்றும்- किंच । "अहमेक" इति पाणिपादादिसंघातातिरिक्ततया एकत्वेन स्वात्मानमवयन्ति । अतोप्यात्मा स्थिर इत्यर्थः । क एवं विपरीतमाचरन्तीत्यत्रोच्यते- கண்டுமதிகெட்ட इति । एवं ज्ञात्वापि सर्वात्मना अन्धाः स्वमान्ध्यमपश्यन्त एते इत्यर्थः । इदमेव विशेष्यं सर्वत्र क्रोडीकार्यमिति शम् ॥

नित्यस्य देहिनोन्ये श्रेयोहेतुं वदन्ति विज्ञानम् । चार्वाके विपरीतन्त्विदमिति विहसन्ति वेदचूडार्याः

गहनविपिनकल्पं तं सुगाचार्यपक्षं पशुमतिभिरुपात्तं पामरैर्वञ्चितैर्द्राक् ।
अहमिह हि यथार्थैर्वाग्वितानैर्निरास्थं निगमनिकरचूडाचार्यवीक्षावशेन ॥

इति श्री वत्सवंशायनस्य, देशिकचरणपरायणस्य, नारायणस्य कृतिषु श्री परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाख्यायां षष्ठो लोकायतिकभङ्गाधिकारस्संपूर्णः ॥

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः ॥ श्रीमते वेदान्तगुरवे नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

# परमतभङ्गे माध्यमिकभङ्गाधिकारः - 7

காணாதிலதெனும் கல்வியிலாரைக் கடிந்ததற்பின்
கோணார்குதர்க்கங்கள் கொண்டே குழப்பும் பவுத்தர்களில்
நாணாதனைத்துமிலதென்று நால்வகையிதன்றென்றும்
வாணாளறுக்கின்ற மத்திமத்தான் வழி மாற்றுவமே.

---

श्रीः

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

## ॥ * ॥ देशिकाशयप्रकाशः परमतभङ्गव्याख्या ॥ * ॥

दिश्यासुर्देशिकेन्द्रस्य दयागुणतरङ्गिताः ।
अपाङ्गा बुद्धिसम्पत्तिम् आद्यबौद्धप्रभंजने ॥

सदसद्द्वयमद्वयं च नेति प्रथितं सर्वमपास्य वस्तुजातम् ।
अपलापविलापिनं विलज्जं प्रणुदन्माध्यमिकं गुरुस्समिन्धे ॥

काष्ठायां तिष्ठन्तं माध्यमिकं हेयबौद्धतन्त्रस्य ।
काष्ठान्ते कलयन् द्राक् वादे वेदान्तदेशिको जयतु ॥

अधस्तात्प्रत्यक्षमात्रप्रामाण्यवादी चार्वाको निर्वापितः । अथ तदपि न प्रमाणम्, शून्यमेव प्रमेयम् इति अध्यवस्यन्तं माध्यमिकं निरोद्धुं गाथयैकया कर्तव्यं कीर्तयति காணாது इति । तदिदमेकेन सर्वनिरसनं, धर्मपुत्र एकमवधीत्, भीमोपरं, अर्जुनस्त्वन्यमिति भारतसमरसरणिं विहाय "स्वयन्तु हन्तुमिच्छामि सर्वानेव च राक्षसानि"ति श्रीरामचन्द्रस्य खरवधविधामनुसरति । अदृष्टं वस्तु नास्तीति वादिनो विद्यावतश्चार्वाकान् निरस्य, तदनन्तरम् इति प्रथमपादार्थः । असदृष्टमपि वस्तु विद्यत इत्यभ्यूहनाय हि विद्या प्रदीयते । तत्प्रतीपानां चार्वाकाणां हीयं का नाम विद्येति विहसन्त्याचार्याः । आमूलाग्रं दुस्तर्करेव जडाशयान् क्षोभयतां बौद्धानां मध्य इति द्वितीयपादार्थः । सर्वं नास्तीति, सर्वं वक्ष्यमाणचतुष्कोटिविनिर्मुक्तमिति च लज्जां विहाय विलप्य

மாத்யமிகன் மதம் இருக்கும்படி கூறல்

परोक्षமோன்றுமில்லை என்கிற லோகாயதிகரை நிராகரித்தோம். இவர்களுக்குத் தோள்தீண்டி-களான பௌத்தர்களில் प्रत्यक्षप्रतिबन्दि சொல்லவொண்ணாதபடி प्रत्यक्षपरोक्षங்கள் இரண்டுமில்லை-

जीवनकालं कृत्स्नं कदर्थीकुर्वतां माध्यमिकानां मार्गमर्गळयाम इति अवशिष्टभागस्यार्थः । "याव-ज्जीवं सुखं जीवेदि"ति चार्वाकोपदेशादपि सर्वशून्यवादिनां निष्प्रयोजनवादः अतिविरस इति ऐहिकामुष्मिकोभयसुखभ्रष्टानामेषामत्यन्तनिराकार्यत्वं द्योत्यते ।

ननु चार्वाकनिराकरणानन्तरं ब्रह्मसूत्रक्रमेण प्रथमं सांख्यो व्युदस्यताम् । बौद्धमतमेव सङ्गतिविशेषेण बुद्धिस्थमिति चेत्, अस्तु, तथापि तत्र यथासूत्रं वैभाषिकसौत्रान्तिकद्वययोगाचार-माध्यमिकनिरासः क्रमात्क्रियताम्, माध्यमिकस्य प्राथम्ये किन्निदानमित्यत्र वृत्तकीर्तनपुरस्सरं बौद्धेषु माध्यमिकस्यैवेह सङ्गतिमाह- परोक्षमिति वाक्यद्वयेन । தோள்தீண்டிகள்- समानस्कन्धाः सदृशा इति यावत् । अनयोस्सादृश्यञ्च वेदबाह्यत्वानुमानादिप्रामाण्यानङ्गीकारातिरिक्तात्मनिषेधा-दिना बोध्यम् । பௌத்தர்களில் इति सामान्यनिर्देशात् एतदाद्यधिकारचतुष्टयस्यैकपेटिकात्वमभि-संहितम् । अतएव पूर्वाधिकारे "सन्तानैक्यादिகளுக்கு दूषणம் बौद्धभङ्गத்திலே சொல்லக்-கடவோம்." इति समुदायतः प्रतिजज्ञे । एवं चार्वाकानन्तरं बौद्धस्यैव सांख्यादीनां सङ्गति-र्नास्तीति सूचयित्वा, तत्रापि माध्यमिकस्यैव तामाह– प्रत्यक्षप्रतिबन्दीति । चार्वाकेण प्रत्यक्ष-प्रामाण्याङ्गीकारात् "यदि अनुमानप्रामाण्यं नाङ्गीकरोषि, तर्हि त्वदभिमतप्रत्यक्षप्रामाण्यमपि न सिध्ये"दिति प्रत्यक्षप्रतिबन्द्या तं प्रति अनुमानादिप्रामाण्यापादनप्रयत्नो विधीयेत । उक्तं च

ஸ்ரீ:

ஸ்ரீமதே லக்ஷ்மீந்ருஸிம்ஹபரப்ரஹ்மணே நம:

ஸ்ரீமதே ராமாநுஜாய நம: | ஸ்ரீமதே வேதாந்தகுரவே நம:

## ஸ்ரீபரமதபங்கத்தில் மாத்யமிகபங்காதிகாரம்–7

(பாசுரத்தின் கருத்து.) காணாத பொருள் கிடையாது என்ற சார்வாகனைக் கடிந்த-பிறகு கோணலே நிறைந்த குதர்க்கம் கொண்டு குழப்புகிற நால்வகை பௌத்தர்களில், சிறி-தும் காரணமின்றி உலகம் இல்லை என்றும், அது ஸத்தும் அஸத்தும் இரண்டும் இரண்டுமல்-லாததும் என்கிற நால்வகையிலும் சேராதது என்றும் கூறி வாணாட்களை வீணாட்களாக்கு கின்ற மத்திமதத்தா (மாத்யமிக)னுடைய வழியை விலக்குவோம் நாம்

காணாத பொருட்கள் கிடையா என்ற உலகாயதமதம் விலக்கப்பட்டது. இனி இவர்-களோடு பலவகையில் ஒத்தவர்களாகிய பௌத்தர்களில் ஒருவனும் "நீ எப்படி ப்ரத்யக்ஷத்தை மட்டும் ஒப்பினாய்" என்று சார்வாகனிடத்திற்போல தன்னிடத்தில் ஓர் எதிர்க்கேள்வியும் போடமுடியாதபடி, ப்ரத்யக்ஷம், அது அல்லாத பரோக்ஷம், இரண்டுமே கிடையாது ,ஸர்வம்

என்கிற माध्यमिकனை निरसिக்கிறோம். அவன் சொல்லும்படி என் என்னில்– सर्वज्ञனென்று பேராம்படி परिगृहीतனை बुद्धன் சொன்னதே प्रामाणिकம். இவன் क्षणभङ्ग, प्रत्यक्षार्थभङ्ग, बाह्यार्थ-

---

पूर्वाधिकारे- "अनुमानप्रामाण्यம் இசையாதொழியில் प्रत्यक्षம் தானும் प्रमाणமன்றிக்கே- யொழியும்" इति । प्रत्यक्षपरोक्षங்கள் இரண்டுமில்லை என்கிற इति। तथा च माध्यमिकेन सर्वपरित्यागात् तस्य प्रत्यक्षाप्रामाण्यमपीष्टमिति "इष्टापत्तिं ब्रुवाणस्य न लोके किञ्चिदुत्तर"मिति न्यायेन न कापि तं प्रति प्रतिबन्दिः प्रभवतीति भावः । तदुक्तं खण्डनखण्डखाद्ये- एवं च सति सौगत-ब्रह्मवादिनोरयं विशेषः । यदादिमस्सर्वमेवानिर्वचनीयं वर्णयति । विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनस्सङ्गिरन्ते" इति । माध्यमिकனை इति । तथा च चार्वाकानन्तर-मेतादृशाक्षेपसङ्गत्या माध्यमिकमतमेव निराकरणीयतया प्राप्तमिति तदेव प्रथमं निराकुर्म इति हृदयम् । माध्यमिकनामनिर्वचनञ्चानन्तरमेव भविष्यति । निरसिக்கிறோம் इति । स्वशिष्याणां शिक्षायै इति शेषः । सर्वपरित्यागिनस्तस्य कथानधिकारस्यात्रैव वक्ष्यमाणत्वादिति भावः । तदुक्तं श्लोकवार्तिके- "सर्वथा सदुपायानां वादमार्गः प्रवर्तते । अधिकारोऽनुपायत्वान्न वादे शून्य-वादिनः ॥" इति ।

अथ तन्मतानुवादाय मध्यस्थाकाङ्क्षामुत्थापयति- அவன் சொல்லும்படி என் इति । अथ वक्तृवैलक्षण्यमाह- सर्वज्ञன் इति। "सर्वज्ञस्सुगतो बुद्धः" इति हि नैघण्टुकाः । சொன்னதே प्रामाणिकம்- नत्वन्यो वेदादिप्रतिपादितः पदार्थः । ननु बुद्धेन बहुभ्यः बहुधोपदिष्टम् । "सर्वं क्षणिकं क्षणिकं दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्य,मिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्य" मिति संप्रदायात् । तथा च सर्वस्याप्यस्य बुद्धोक्तत्वात् तत्र किं प्रमाणम्? तदुक्तत्वाविशेषात् सर्वं प्रमाणमिति चेत्, तर्हि अपरोयमनेकान्तवादस्स्यात् इत्याद्याशङ्कायामाह- இவன் इति। क्षणभङ्गेति । क्षणिकत्वेत्यर्थः । इदं माध्यमिकव्यतिरिक्तानां सर्वेषां सम्मतम् । तैरहेतुकविनाशाङ्गीकारात् । प्रत्यक्षार्थभङ्गेति । इदं सौत्रान्तिकमतम् । तस्य मते बाह्यार्थानामनुमेयत्वात् । पूर्वोक्तबुद्धोपदेश-स्येतरोपलक्षणत्वमिति तदभिप्रायः । ग्राह्यलक्षणायोगेन बाह्यार्थभङ्गः योगाचारस्य । विकल्प-प्रामाण्यनिराकरणेन धर्मधर्मिभावभङ्गः वैभाषिकसौत्रान्तिकयोस्समानः । अयञ्च भङ्गः पूर्वोक्तो-पदेशे स्वलक्षणशब्दविवक्षितः । स्वलक्षणं स्वरूपमात्रं, निर्धर्मकमिति यावत् । तदुक्तं- "निराधार

---

சூந்யம் என்கிறவனுமான மாத்யமிகமதத்தை முறியடிப்போம். அவன் சொல்லும்படி என்னவென்றால்– ஸர்வஜ்ஞனென்றே உலகோர் அழைக்கநின்ற புத்தர் சொன்னது எமக்கு ப்ரமாணம். அவர் வஸ்துக்களைப்பலவாறாக வர்ணித்துள்ளார். எல்லாம் நிமிடந்தோறும் மாறுபவை. ப்ரத்யக்ஷமன்றி அநுமானிக்கவேண்டியவைகள். புறப்பொருள் ஏதும் கிடையாது, பொரு–

भङ्ग, धर्मधर्मिभावभङ्गादिகள் சொன்னதுவும் भिक्षुपादप्रसरणம் பண்ணினபடி. सर्वशून्यत्वமே

निर्धर्मकाश्च पृथिव्यादयश्चत्वारः पदार्थाः'' इति । ''भङ्गादिகள்'' इति आदिशब्दार्थश्च निर्वचनायोग्यतया सांख्यादिवत् माध्यमिकोक्तः कार्यकारणभावभङ्गः । भिक्षुपादप्रसरणेति । विरक्तभूमिकया गृहं प्रविष्टाय कस्मैचिद्भिक्षवे, पूर्वं पादमात्रप्रसरणाय परिमिते देशे दत्ते, शनैश्शनैश्शयनाहारविहाराद्यर्थं कृत्स्नमपि तद्गृहं तेन भिक्षुणा अन्ते जगदिव वामनेन व्याप्तमिति लौकिकी कथा बोध्या। तद्वदत्रापि शिष्यबुद्ध्यवतरणक्रमेणोत्तरोत्तरं शून्यतां वर्धयन् बुद्धः प्रथमं पदार्थानां नित्यत्वं निहत्य क्षणिकतामकथयत् । ततः बाह्यार्थानां प्रत्यक्षत्वं प्रमुष्णन् अनुमेयतामनुमेने । पश्चाद्बाह्यार्थानेवापललाप । अन्ते सर्वमेव शून्यमिति सिद्धान्तयामासेति भावः । तथा च तदुक्तिषु न सर्वं सिद्धान्त इति न पूर्वोक्तो दोष इति बोध्यम् । तर्हि कस्सिद्धान्त इत्यत्राह- सर्वशून्यत्वமே इति । तदुक्तं आर्यलङ्कावतारे- ''अनुत्पत्तिं च धर्माणां क्षणिकार्थं वदाम्यहम् । उत्पत्त्यनन्तरं भङ्गं नवै देशेमि बालिशान्'' इति । धर्माणां पदार्थानां अनुत्पत्तिं उत्पत्त्यसंभवेन शून्यत्वमेव क्षणिकार्थं क्षणिकशब्दार्थम् अहं वदामि । उत्पत्त्यनन्तरं कश्चित्कालं स्थितानां भङ्गं नाशं अनित्यत्वं क्षणिकार्थं बालिशान् प्रति न वै देशेमि नोपदिशामीति तदर्थः । वसुबन्धुना च- ''रूपाद्यायतनास्तित्वं तत्विनेयजनान् प्रती''ति । आयतनं- विषयः । तत् रूपादिविषयास्तित्वं व्युत्पित्सुजनान् प्रति, उक्तमिति शेषः । तथाहि- व्युत्पत्तितारतम्येन चतुर्विधा बुद्धशिष्याः । यद्यपि बुद्ध एक एवोपदेष्टा, तथापि श्रोतृभिश्शिष्यैर्वासनावशाच्चतुर्धा तदुपदेशो गृहीतः । यथा अस्तंगतस्सवितेत्युक्ते जारचोरानूचानानाम् अभिसरणस्तेयसन्ध्योपासनादिबुद्धिस्तत्तद्वासनावशेन भवति । तत्र बुद्धोक्तेषु सर्वशून्यत्वमेव माध्यमिको जग्राह । तस्योत्तमाधमकक्ष्याप्रविष्टत्वान्माध्यमिकसंज्ञालाभः । तन्मते हि योग आचारश्चेत्युभयं शिष्येण कार्यम् । अज्ञातस्यार्थस्य, ज्ञप्तये पर्यनुयोगो योगः । गुरूक्तस्याङ्गीकरणमाचारः । तत्र माध्यमिकेन गुरूक्तस्याङ्गीकरणात्, वक्ष्यमाणरीत्या कस्याप्यनुयोगस्याकरणाच्च उत्तमाधमत्वयोगान्माध्यमिकत्वम् । अनन्तरस्तूभयकरणाद्योगाचारो बभूव । ततोप्यपरः ''भवतस्सूत्रस्य कियानन्त'' इति बुद्धं पृष्ट्वा सौत्रान्तिकोऽभूत् । अन्तिमस्तु ''केयं भवतो विरुद्धा भाषे''ति तम् अनुयुज्य वैभाषिकसंज्ञां लेभे इति तेषां सम्प्रदायः ।

ளென்றும் அதன் தன்மை என்றும் பிரித்துக்கூற இயலாதவை. இப்படி பல பல. ஆனால் இவையல்ல அவர் கருத்து. இடம் கொடுத்தால் மடம் பிடுங்கும் ஆண்டிபோல கொஞ்சம் கொஞ்சமாக ஸர்வம் சூந்யம் என்று தீர்மானிக்க அவர் செய்யும யத்நங்களே இவை. ஆகையால் அறிஞன், அறிவு, பொருட்கள் என்ற முப்பிரிவில் அடங்கும் இந்த உலகம், ஸத் என்ற வகையிலோ- அஸத்- அல்லது இரண்டும்- அல்லது இரண்டுமன்று என்ற வகைகளிலோ சேரப்பபலமான தடைகள் இருக்கின்றனவாகையால் நான்கு வகையிலும் சொல்லத் தகாதது.

सुगतमतकाष्ठै. ஆனபின்பு अहमिदं जानामि என்று ज्ञातृज्ञेयज्ञानस्वरूपமாய் தோற்றுகிற अर्थ-जातத்தை सदसदुभयानुभयकोटिகளிலே நடத்தப் பார்த்தால் प्रबलयुक्तिகளாலே ஒன்றிலும் கூடாதபடியாயிருந்தது. இவ்अर्थம்- न सन्नासन्नसदसन्नचाप्यनुभयात्मकम । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ बुद्धया विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्या(लापा)स्ते निस्स्वभावाश्च दर्शिताः ॥ इत्यादिகளிலே सङ्गृहीतம். இப்படியால் स्वप्नकल्पजागरप्रतीतिविषयங்களும், गगनकुसुमादिகள் போலே तुच्छங்கள் என்றறிந்தால் स्वर्गमोक्षादिपारलौकिकफलार्थप्रवृत्तिகள்

अथ सर्वशून्यत्वमुपपादयति- ஆனபின்பு इति। सर्वशून्यत्वस्यैव सिद्धान्तयितव्यत्वे सतीत्यर्थः। अहमिति ज्ञातुः इदमिति ज्ञेयस्य, जानामीति ज्ञानस्य च तत्र प्रतीत्या सर्वं पदार्थजातं एतत्त्रितयान्यतममेवेति तत्र सर्वत्र वक्ष्यमाणकोटिचतुष्टयमपि न सम्भवतीति सर्वं शून्यं सेत्स्यतीति भावः। நடத்தப்பார்த்தால்- अन्तर्भावयितुं यत्ने कृते। ஒன்றிலும்கூடாதபடியாயிருந்தது इति। न कुत्राप्यन्तर्भावस्संभवतीत्यर्थः। तथा हि- घटादेः पदार्थजातस्य यदि सत्त्वमेव स्वभावः, तर्हि कारकव्यापारवैयर्थ्यम्! असत्त्वस्वभावत्वेपि स एव दोषः। तदुक्तं "न सतः कारणापेक्षा व्योमादेरिव युज्यते। कार्यस्यासंभवी हेतुः खपुष्पादेरिवासतः" इति। असंभवी- असंभावितः। एवमुभयरूपत्वमनुभयरूपत्वं वा न संभवति। व्याघातात्। उक्तं च "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः॥" इति। तस्मादेषु पक्षेषु क्वचिदपि निक्षेप्तुमशक्यत्वात् सर्वस्य शून्यत्वमकामेनाप्यङ्गीकार्यमिति। अथात्र सङ्ग्रहेण संवादं दर्शयति- இவ்अर्थம் इति। न सदित्यादिकारिकार्थस्स्पष्टः। यादवप्रकाशाचार्यैस्तत्त्वविचारणायामियङ्कारिकाऽन्यथापि व्याख्याता तत एवाधिगन्तव्या च। बुद्धयेति। इदमार्यलङ्कावतारस्थमित्याहुः। स्वभावः— सत्त्वासत्त्वादिः। निरभिलप्याः- अनिर्वचनीयाः। निरभिलापा इत्यपि पाठः। अन्यत्राप्युक्तं- "इदं वस्तुबलायातं यद्वदन्ति मनीषिणः। यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथेति। एतावता फलितमाह- இப்படியால் इति। स्वप्नकल्पेति। जागरितप्रत्ययोऽर्थशून्यः प्रत्ययत्वात्स्वाप्नप्रत्ययवदित्यनुमानमिहाभिप्रेतम्। गगनकुसुमादिकं विषयस्य तुच्छताया-मुदाहरणम्। அறிந்தால் इति। अनेन पाक्षिकनिर्देशेन अनादिभवप्रवाहवासनानिरोधादियं तुच्छत्वभावना महाभयकृतत्वात् द्वित्राणामेव पुंसां भवतीति तस्या दौर्लभ्यं द्योत्यते। स्वर्गमोक्षादीति। वेदप्रामाण्यानङ्गीकारात् स्वर्गस्य स्वरूपतएव तुच्छत्वात् तदर्थप्रवृत्तिर्न भविष्यति। मोक्षस्तु परमार्थोऽपि नित्यसिद्धत्वान्न प्रयत्नसाध्य इति न तदर्थप्रवृत्तिरपीति भावः। अतएवानुपदं मोक्षस्वरूपं "नित्य-

நன்கு யோசித்துப் பார்த்தால் குறிப்பிட்ட தன்மை ஏதும காணுமையாலே திட்டமாக குறிக்கவும் முடியாதவை, எந்த தன்மையுமற்றவை என்று பெரியோர்கள் சொன்னபடியே-யாகவேணும். இப்படியால் கனவுபோலிருக்கும் விழிப்பும் உண்மைப் பொருளற்றதாகை-

–பண்ணவேண்டுவதில்லை. दृष्टार्थव्यापारங்களுமெல்லாம் स्वप्नव्यापारங்கள்போலே अविचारित-रमणीयங்களாய் நடக்கிறனவத்தனை. मोक्षமாவது सर्वத்திலும் நடக்கிற सत्यताभ्रमம் கழிய नित्यसिद्धनिरुपाधिकशून्यतापत्तिயேயுள்ளது என்பர்கள்.

இம்மதத்திற்குத் தக்க ஆதாரமில்லை.

இவர்கள் स्वमतத்துக்கு मूलமாகச் சொன்ன सर्वज्ञனையும் वन्ध्यासुततुल्यனாக விசைகையாலும், सर्वज्ञसमाख्यामात्रம் महावृक्षादिशब्दங்கள்போலே अन्वर्थமாக மாட்டாமையாலும், மற்–

सिद्धनिरुपाधिकशून्यतापत्तिயேயுள்ளது'' इति वर्णयिष्यति । ननु तर्हि ऐहलौकिकप्रवृत्तयः कथमुपपद्यन्ताम्? न कथंचिदपीत्युक्तौ, प्रत्यक्षविरोधो दुष्परिहर इत्यत्राह- दृष्टार्थव्यापारेति। अविद्यापरपर्यायसंवृतिसत्यत्वात्सर्वमिदमातत्त्वावबोधात् उपपद्यत इति भावः। अविचारितरमणीयेति। "यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथेत्युक्तरीत्या विचारणायां सर्वमरमणीयमेवेत्याशयः। ननु प्रपञ्चस्याविचारितरमणीयत्वं नाम दुःखस्वरूपत्वमेव। एतादृशं दुःखं कदा वा निवर्तिष्यते? मुक्तिकाल इति चेत्, न, त्वयाऽनुपदमेव तदर्थप्रवृत्तेर्निवारितत्वादित्यत्राह- मोक्षமாவது इति। अस्य- शून्यतापत्तिயேயுள்ளது इत्यनेनान्वयः। मोक्षः शून्यतापत्तिरूप एव भवतीत्यर्थः। सत्यताभ्रमம் கழிய इति। "सर्वं क्षणिकं क्षणिकं, दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्यमिति भावनाचतुष्टयबलात् निखिलवासनानिवृत्तौ परिनिर्वाणं शून्यरूपं सेत्स्यतीति तत्संप्रदायादिति भावः। तथा च मोक्षस्य नित्यसिद्धत्वेन तदर्थप्रवृत्त्यनपेक्षणेपि प्रतिबन्धकनिवृत्तये सा अपेक्षितैवेति, न मुक्तचलाभः न वा मोक्षविधिवैयर्थ्यादिकमिति हृदयम्। என்பர்கள் इति। अत्र तदनुसारिण इति निपात्यम्। अतः, पूर्वं "அவன் சொல்லும்படி என் என்னில்'' इत्यादौ उपक्रमे एकवचनदर्शनेपि न विरोधः। स एवं वदतीति तदीया आहुरित्यन्वयसंभवात्।

एवं तन्मतमनूद्याथ विस्तरेण दूषयिष्यन् प्रथमं तत्र मूलशैथिल्यं दर्शयति– இவர்கள் इति महावाक्येन। वन्ध्यासुततुल्येति। सर्वस्यापि तद्वत्तुच्छत्वे बुद्धस्यापि तदन्तर्गतस्य तथात्वादित्यर्थः। இசைகையாலும்- अकामेनाप्येष्टव्यत्वात्। अथ वक्तृवैलक्षण्यं निराह। सर्वज्ञसमाख्येति। समाख्यामात्रेण न प्राशस्त्यसिद्धिरित्याशयः। महावृक्षादीति। अतिह्रस्वस्य भाषायां "கள்ளி'' इति प्रसिद्धस्य वृक्षविशेषस्य "शाखापत्रो महावृक्षस्सेहुण्डो वज्रकण्टक'' इति कल्पद्रुकोशे तन्नामपाठादिति भावः। महावृक्षादीत्यादिना "अमङ्गलस्य वारस्य यथा मङ्गळवारतेत्युक्तभौमवारग्रहणम्। तथा च माघकविः– "तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते। भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मंगळं जनाः'' इति। अन्वर्थமாக மாட்டாமையாலுமிति। तथा च "रूढ्या तु कामं पुरुषोत्तमोस्तु'' इत्युक्तन्यायेन डित्थादिशब्दवत्तस्य सर्वज्ञसमाख्या

மன்னார்க்குமிப்பேசிட ஶக்யமாகையாலும், ஒருவன் பரஸ்பரவிருத்தமாக நானாமதங்களை ப்ரலபித்தவிதில் ஒன்றிலே தாத்பர்யமென்கைக்கு நியாமகமில்லாமையாலும் இவற்றுக்கெல்லாம் ப்ரமாதிகளே மூலமாயிருத்தலை.

---

केवलं रूढेति न यौगिकार्थस्य सर्वावगाहिज्ञानस्य प्रतीतिरिति भावः। उक्तसंज्ञाया अन्वर्थत्वाभावे हेत्वन्तरमाह- மற்றுள்ளார்க்கும் इति। शिवार्हदादेरित्यर्थः। तदुक्तं जैनेन हेमचन्द्रसूरिणा आप्तनिश्चयालङ्कारे- "सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः। यथास्थितार्थवादी च देवोऽर्हन्परमेश्वरः" इति। तथाचास्यास्संज्ञाया अन्वर्थत्वे एषां सर्वेषामपि तत्संज्ञत्वात्, सर्वे सर्वज्ञास्स्युः। न चेष्टापत्तिः, मिथो व्याहतभाषिष्वेषु कस्यापि भ्रान्तत्वावश्यंभावात्। कस्य, तदित्यत्र नियामकादर्शनादित्याशयः। तथा च सर्वज्ञनिराकरणे मीमांसकाः- "सर्वज्ञो दृश्यते, तावन्नेदानीमस्मदादिभिः। दृष्टो न चैकदेशोस्ति लिङ्गं वा,यो नुमापयेत्॥ अथ तद्वचनेनैव सर्वज्ञोन्यैः प्रतीयते। प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः॥ सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता। कथं तदुभयं सिद्ध्येत्सिद्धमूलान्तरं विना (राद्धते)॥ सर्वज्ञसदृशं कंचिद्यदि पश्येम सम्प्रति। उपमानेन सर्वज्ञं जानीयाम ततो वयम्। एवमर्थापत्तिरपि प्रमाणं नात्र युज्यते। उपदेशस्य सत्यत्वं यतो नाध्यक्षमीक्ष्यते॥इति॥ अथ बुद्धस्यैव सर्वज्ञत्वसिद्धावपि दोषमाह- ஒருவன் परस्परेति। तथा च चतुर्भ्यः चतुर्धा परस्परविरुद्धोपदेशः, तेषां स्वस्वगृहीतार्थाभिमानेनेतरनिरसनमित्यादिकं नोपपद्येतेति केवलं प्रलापएवेति भावः। ननूक्तं शून्यत्वमेव सुगतमतकं छेति चेत्तत्राप्याह- ஒன்றிலே तात्पर्यம் इति। तैस्तैस्स्वमत एव बुद्धस्य तात्पर्यमिति वर्णनादित्याशयः। तर्हि एकेन विरुद्धनानाप्रस्थानप्रवर्तनस्य किम्मूलमित्याकाङ्क्षायामाह- இவற்றுக்கெல்லாம் इति- ननु भगवदवतारत्वेन सम्प्रतिपन्नो बुद्धो नैव मुह्येत्। ततश्च कथं तदुक्तं भ्रममूलं स्यादित्यत्राह- भ्रमादिகளே इति। आदिना भगवन्मोहनेच्छा परिग्रहः। तथा च शान्तिपर्वणि मोक्षधर्मे नारायणीये दशावतारप्रस्तावे नारदं प्रति भगवद्वचनं- "ततः कलियुगस्यादौ द्विजराजतरुं श्रितः। काषायवस्त्रसंवीतो मुण्डितश्मश्रुकदन्तवान्। शुद्धोदनसुतो भूत्वा मोहयिष्यामि मानवान्॥" इति॥

---

*யால் எல்லாம் சூன்யம் என்றறிந்தவனுக்கு ஸ்வர்க்கம் மோக்ஷம் என்றிவைற்றுக்காக முயலவேண்டாம். உலகநடைமுறையும் கனவுக்கதைகள்போல அவிசாரிதரமணீயமாய் ஓடிக்கொண்டிருக்கிறது. மோக்ஷமாவது— எல்லாம் உண்டு என்கிற விபரீதநினைப்பு ஒழிந்திடவே ஸஹஜஸித்தமாக சூந்யநிலை வந்து வாய்ப்பதுதான் என்று*

*இது சரியன்று. இவர்கள் ஆதாரமாக நம்புகிற ஸர்வஜ்ஞபுத்தரும் மலடி மகனைப்போல சூன்யமென்றே சொல்லவேணும் ஸர்வஜ்ஞன் என்று பெயர்பெற்ற மாத்திரத்தினால் ஒருவன் அறிவாளியாகிவிடமாட்டான். சிறிய கள்ளிச்செடிக்கு வடமொழியில் மஹாவ்ருக்ஷம் என்று பெயர் ஏற்பட்டதுபோல இடுகுறிப்பெயராகலாமல்லவா? காரணப்பெயர் என்றே*

ஸத், அஸத் முதலிய நான்கு பிரிவிலும் நடக்கமுடியும்.

இவர்கள் चतुष्कोटिविनिर्मुक्तம் तत्त्वம் என்றதுவும் अनुपपन्नம். ஒரு देशादिகளிலே सत्ताயும், देशान्तरादिகளிலே असत्ताயும், இப்படி उभयाकारयोगத்தாலே सदसत्ताயும், स्वव्यतिरिक्तसदसत्तु.க்களிற்காட்டில் வேறுபட்டிருக்கையாலே सदसद्विलक्षणமாயும் प्रत्यक्षादिसिद्धமான वस्तुவுக்கு இப்ப्रकारத்தாலே कोटिचतुष्टयமும் கூடும். सर्वप्रकारसत्त्वமாதல், असत्वமாதல், देशादिभेदनिरपेक्षसदसदात्मकत्वமாதல். सत्वासत्त्वात्यन्ताभावமாதல் கொள்ளும் पक्षங்களுக்-

इत्थं तन्मतस्य प्रमाणशून्यतां प्रदर्श्याथ प्रमेयदौस्थ्यमपि दर्शयितुं प्रतिजानाति- இவர்கள் इति । अथात्र पदार्थानां चतुष्कोटिविनिर्मुक्तत्वं किं सत्वासत्त्वादीनां परस्परविरोधादङ्गीक्रियते, उत, पदार्थानां स्वाभावग्रासेन सत्त्वस्य दुस्साधत्वात्, यद्वा तेषां निस्स्वभावत्वादिति विकल्पान् हृदि कृत्वा प्रथम निरस्यति- ஒரு देशादिகளிலே इति । आदिना कल्पपरिग्रहः । तथा च देशतः कालतश्च परिच्छिन्नघटादेः क्वचिद्देशे काले च सत्त्वं, अन्यत्रान्यदाऽसत्त्वं च प्रत्येकमप्यस्ति । मिळित्वोभयमपि । एवं उभयात्मकपटादिविलक्षणत्वमपीति सर्वस्य घटादेश्चतुष्कोट्यात्मकत्वमेवेति भावः । प्रत्यक्षादिसिद्धமான इति । एवं सत्त्वादिमत्तया परिच्छिन्नत्वेन प्रत्यक्षादिसिद्धेत्यर्थः । एतेन सर्वथा प्रमाणासिद्धस्य शशशृङ्गादेरपरिच्छिन्नत्वेन प्रमाणसिद्धबुद्धेश्वरादेश्च कोटिचतुष्टयासंभवो दर्शितः । प्रथमस्य सर्वथाऽसत्वेन सत्ताकोट्यसंभवात् । द्वितीयस्य च सर्वप्रकारसत्त्ववत्त्वेनासत्वकोटयसंभवाच्च । ननु सत्त्वासत्त्वयोर्भावाभावरूपयोः कथमविरोधेनैकत्रावस्थानमित्यत्राह- सर्वप्रकारसत्वமாதல் इति । देशकालादिनिरपेक्षसत्त्वमित्यर्थः । देशादिभेदनिरपेक्षसदसदात्मकत्वेत्युत्तरानुसारात् । अत्र एतदनन्तरं "असत्त्वமாதல்" इति पाठ आवश्यकः क्रमानुसारात् । परन्तु सर्वकोशेष्वपि तद्रहितएव पाठो दृश्यते । असत्त्वं च सत्त्वात्यन्ताभावः । सत्वासत्त्वात्यन्ताभावेत्यादिवक्ष्यमाणानुसारात् । अयंभावः- सांख्यादिवत् यत्सत्, तत्सर्वथासत्, यदसत्, तत्सर्वथाऽसत्- सत्त्वात्यन्ताभाववत् इति योङ्गीकुर्यात् तस्य हि मते अनयोरसत्त्वासत्त्वयोः परस्पराभावरूपतया विरोधो भवेत् । एवं सदसदात्मकत्व, तदनात्मकत्वयोर्विषयेपि भाव्यम् । अस्माभिस्तु सत्त्वासत्त्वयोरवच्छेदकदेशकालादिभेदेन, सदसदात्मकत्व-

கொண்டாலும் ஜைநர் தங்கள் அருகக்கடவுளை ஸர்வஜ்ஞன் என்றே அழைக்கிறார்களாகையால் இது ஒரு ஏற்றமாகாது. புத்தன் சொன்ன நாநாமதங்களில் உங்கள் மாத்யமிக ஸித்தாந்தம்தான் சரி என்பதற்கு ஆதாரமில்லை. ஒருவனை பலபடி பேசுவதென்றால் இதற்கு ப்ரமமே காரணமாகவேணும்.

இவர்கள் வஸ்துக்களை முன்சொன்ன நான்கு வகையிலும் சேராத சூன்யம் என்று வர்ணித்தது விபரீதம். ஒவ்வொரு பொருளும் இந்நான்கு வகையிலும் கூடலாம். குடம்

கன்றே विरोधமுள்ளது. இப்படி आकारभेदத்தாலே இக்कोटिகளை இசைந்தால் जैनன் சொல்லும் सप्तभङ्गीप्रसङ्गமும் வாராது.

**முன் பின் காலங்களில், எல்லா வஸ்துக்களும் தம்முடைய இன்மையினால் விழுங்கப்பட்டிருக்கும் என்பதும் சரியன்று.**

निरुपाख्यமான अभावத்துக்குச் சில हेतुக்கள் उत्पादकங்களாம்போது அந்த हेतुக்களுக்கு निर्विषयत्वம் प्रसङ्गिக்கையாலும், ஒரு हेतुவாலே எருமைவைத்துக்கெல்லாம் विनाशம் வேண்டு-

---

तदनात्मकत्वयोर्व्यक्तिभेदेन च विरोधप्रशमनात् ऐकाधिकरण्यं सम्भवतीति । एवमाकारभेदेनाविरोधनिर्वाहे सिद्धमानुकूल्यान्तरमपि दर्शयति- இப்படி आकारभेदेति । जैनன் சொல்லும் इति । एतदुक्तं भवति- एकैकस्मिन्नपि वस्तुनि "स्यादस्ति, स्यान्नास्ती"त्यादिरीत्या अस्तित्वनास्तित्वादिरूपाः सप्त भङ्गाः प्रकारा आकारा इति यावत् जैनैरङ्गीक्रियन्ते । उक्तरीत्यास्माभिरपि एकत्र अस्तित्वनास्तित्वादिनानाकाराङ्गीकारान्न जैनानामेव सप्तभङ्गीवादोऽसाधारणतया प्रतितन्त्रं भविष्यति । किंच "स्यादस्तीत्यादौ स्यादिति कथंचिदर्थकमव्ययमिति च त आहुः । तदपि न । अक्लेशेनैवैकत्र नानाकारान्वयस्य दर्शितत्वादिति । तथा च "सप्तभङ्गीप्रसङ्गமும் வாராது"इत्यस्य, सप्तभङ्गीवादस्य तदसाधारण्यं, कथंचिदिति कथनेन तस्यानैकान्त्यगर्भत्वप्रसङ्गश्च न भवतीत्यत्र तात्पर्यमवसेयम् । अयं चार्थः जैनभङ्गाधिकारे- "देशकालाद्युपाधिभेदத்தாலே अस्तित्वनास्तित्वसदसत्त्वावक्तव्यत्वादिகளைச் சொல்லப்பார்த்தால், இது மற்றுள்ள सिद्धान्तिகளும் இசைகையாலே, இவன் தனக்கு स्वमतமாக अनेकान्तवादம் கட்டவேண்டாம்"इत्यादिना स्फुटीभविष्यति।

अथ सर्वेषां घटादिपदार्थानां सत्त्वं कल्पनामात्रसिद्धं, न परमार्थः । ध्वंसप्रागभावयोर्नित्यत्वेन ताभ्यां सर्वभावग्रसनात् । तथा च सर्वे पदार्था नित्यं न सन्त्येव । न तु ध्वंसप्रागभावमध्यकालवर्तिनः । अतो न तेषां स्वकालेपि सत्त्वमिति तस्य दुर्निरूपत्वाच्चतुष्कोटिविनिर्मुक्तत्वमिति द्वितीयं कल्पमनूद्य परिहरति- निरुपाख्येति महावाक्येन । तत्र प्रध्वंसाभावस्य नित्यत्वे युक्तिमाह- निरुपाख्यமான "इत्यारभ्य" विनाशம் வேண்டுகையாலும் इत्यन्तेन । निरुपाख्यமான अभा-

---

தரையில் ஸத்தாகிறது. சுவரின்மேல் அஸத்தாகிறது. ஆகையால் அது ஸத்துமஸத்துமான இரண்டுமாகிறது. அது ஸத்துமஸத்துமான வஸ்த்ராதிகளைவிட வேறுபட்டதுமாகிறது. இங்கிலே நாம் கண்கூடாகக் கண்டது, ஒருவஸ்து எத்தேசகாலங்களிலும் ஸத்தாயும், அப்படியேயஸத்தாயும், அப்படியே இந்த உபயரூபமாயும், அப்படியே ஸதஸத்தல்லாமலும் இருக்கவேணுமல்லவா? அங்கிலே இல்லை என்கிறோம் என்னில்– அப்படி எங்கும் காணுமையால் அது இல்லை என்று சொல்ல ஆவச்யமே கிடையாது இவ்வாறு நாம சொல்லுவது போலாயின் மேலே ஜைநன் சொல்லப் புகுகிற "வஸ்து ஒருவிதம் இருக்கவும் செய்கிறது. இல்லையும் ஆகிறது" என்பதுபோன்ற ஸப்தபங்கிவாதத்தில் ஒரு புதுமையுமில்லை என்பதும் தேறும்.

கையாலும், இவ் उपपत्ति தன்னாலே विनाशनिरपेक्षமாக स्वत एव निरुपाख्यமான अभावத்துக்கு विनाशம் கூடாமையாலும், प्रागभावமென்றும் प्रध्वंसाभावமென்றும் विकल्पितமான अभावம் नित्यமாகையாலே सर्वभावங்களும் எப்போதும் स्वाभावग्रस्तங்களாகையாலே இவற்றுக்கு सत्त्वம்

---

वத்துக்கு- तुच्छस्य ध्वंसस्य । अत्र, किंचिदनन्तरं च "निरुपाख्यமான अभावத்துக்கு" इति सामान्येन द्विर्निर्देशेपि अत्रोत्पत्तिप्रस्तावेनोत्पत्तिमत्त्वेन पराभ्युपगतस्य ध्वंसस्य, अनन्तरं विनाश-प्रस्तावेन तद्वत्त्वेन प्रसिद्धप्रागभावस्य चौचित्याद्ग्रहणम् । प्रागभावप्रध्वंसाभावयोरेव प्रकृतत्वं मूल एव स्पष्टम् । अयं भावः- प्रध्वंसाभावस्य यद्युत्पाद्यतयाऽनित्यत्वमभिमतं; तदा तदुत्पादको हेतुः किमालम्ब्य प्रध्वंसं कुर्यात् । निरालम्बनस्याकार्यकरत्वात् । तुच्छस्य ध्वंसस्याविषयत्वात् । तस्य तथात्वेपि, "जातस्य हि ध्रुवो मृत्यु"रिति न्यायेन प्रध्वंसस्योत्पत्त्यङ्गीकारे ध्वंसरूपविनाशोप्य-वर्जनीयस्स्यात् इत्यनवस्था भावोन्मज्जनं च स्याताम् । तथा च ध्वंसो नित्य एवेति । अथैवं प्राग-भावस्यापि नित्यत्वे उपपत्तिं दर्शयति- இவ்उपपत्तिதன்னாலே इत्यादिना विनाशம் கூடாமை-யாலும் इत्यन्तेन । उपपत्तिः- अभावस्य निरुपाख्यत्वेन कारणस्य निर्विषयत्वप्रसङ्गरूपा । तथा च प्रागभावस्यापि केनचिद्विनाशकेन विनाशाङ्गीकारे तस्यापि तुच्छत्वात् पूर्ववत् विनाशकस्य निर्विषयत्वप्रसङ्ग इति, प्रागभावस्य नाशासम्भवेन नित्यत्वमेवेति भावः । विनाशनिरपेक्षமாக-विनाशकवस्तुकृतविनाशनिरपेक्षं यथा तथा । स्वत एवेति । अभावस्य हि तुच्छत्वं स्वाभाविक-मिति अहेतुसाध्यत्वात् तस्य न विनाशकापेक्षेति न विनाशसम्भव इति भावः । अभावத்துக்கு-प्रागभावस्य । तत उभयत्र उक्तयुक्तिभ्यां फलितमाह– प्रागभावेति । अत्र क्रमो न विवक्षितः पूर्वोपपादनक्रमेण ध्वंसस्यैव प्रथमवक्तव्यत्वात् । विकल्पितेति । तथा च नित्यः अभावः एक एव । तस्य प्रागभावत्वादिकं कल्पितत्वान्मिथ्यैवेति भावः । तथा च पूर्वपक्षमुपसंहरति- सर्व-भावेति । प्रागभावप्रध्वंसयोः क्रमेण विनाशोत्पत्त्यङ्गीकारे, तयोर्ध्वंसोऽनित्यघटादितुल्यतया, प्रागभावोत्तरं, ध्वंसात्पूर्वं च तयोर्मध्यकाले घटाद्यनित्यपदार्थानां सत्ता सिद्ध्येत् । इदानीं च तयोर्नित्यत्वसमर्थनात् घटादिसर्वपदार्था अपि स्वप्रागभावध्वंसाभ्यां सर्वदा ग्रस्ताः- बाधिता इति न स्वकाले मध्येपि ते सन्तीति, तेषां सत्त्वं कल्पनामात्रेण- संवृतिसत्यतया सिद्धमिति, सत्तादि चतुष्कोटिविनिर्मुक्तत्वोपपत्तिरिति भावः । तदुक्तं षण्मतरहस्यभेदने विज्ञानभिक्षुणा- वादिभिरपि प्रागभावप्रध्वंसाभावमध्यवर्तिनो भावस्य प्रागभावध्वंसरूपत्वं, ध्वंसप्रागभावरूपत्वं चाङ्गीकृतमिति

---

*சூன்யமான அபாவங்களுள் த்வம்ஸம் என்னுமது, ஒரு காரணத்தால் உண்டாகிறது என்னும்போது அக்காரணத்திற்கு பற்றுக்கோள் கிடையாமற்போமாகையாலும், "பிறந்தது இறந்தேதீரும்" என்ற கணக்குப்படி பிறந்த த்வம்ஸம் இறக்கவேண்டிவருமாகையாலும்,*

कल्पनामात्रसिद्धமன்றோ? என்னில்- भावान्तररूपமாயாதல் अतिरिक्तமாயாதல் सिद्धिக்கிற अभा-वத்துக்கு स्वेन, रूपेण निरुपाख्यत्वமில்லை. वस्त्वन्तररूपத்தாலே வரும் निरुपाख्यत्वம் कार्य-कारणत्वादिகளுக்கு विरोधिயன்று. இப்படியால் अभावத்துக்கு यथाप्रमाणம் निवर्त्यत्वமும்,

---

सिद्धं नस्समीहितम् । भावस्याप्यभावरूपत्वेन पर्यवसानाभ्युपगमात् । ततश्च विश्वं तुच्छमेव संवृतिसत्येन सत्यत्वेन भातीति ज्ञानसागरे शून्यतत्त्वविवेकप्रकरणे उक्तमिति ।

एवं पूर्वपक्षमुपवर्ण्य तत्राभावस्य निरुपाख्यत्वं तदुक्तं प्रथमतः प्रतिवक्ति- भावान्तरेति । अयं सिद्धान्तिपक्षः । "भावान्तरमभावो हि कयाचित्तु व्यपेक्षये"ति पटवति भूतले विद्यमानस्य घटाभावस्य पटरूपत्वाङ्गीकारात् । अतिरिक्तेत्यादि नैयायिकानाम् । अत्रोभयपक्षकीर्तनं प्रकृते तदंशे विवादाभावप्रदर्शनाय । स्वेन रूपेणेति । भावान्तररूपत्वेनातिरिक्ताभावत्वेन वेत्यर्थः । निरुपाख्यत्वமில்லை इति । तत्तद्रूपेणोपाख्यायमानत्वादिति भावः । ननु भावान्तराभावपक्षे पटादीनां घटाभावरूपत्वेन इह पटोस्तीत्यत्रेह घटो नास्तीत्यपि प्रत्येतव्यम् । न च तथा प्रतीयते । ततश्चैकरूपेण प्रतीतस्यापि रूपान्तरेणाप्रतीत्या अभावस्य निरुपाख्यत्वमवर्जनीयमित्याकाङ्क्षायामाह- वस्त्वन्तरेति । कार्यकारणत्वादिகளுக்கு इति । कार्यमभावं प्रति कारणत्वादीनामित्यर्थः । आदिना विनाश्यं प्रति विनाशकत्वपरिग्रहः । तथा चाभावस्यान्यरूपेणानुपाख्यायमानत्वेपि स्वेन रूपेणोपाख्यायमानत्वात् न सर्वथा तुच्छत्वमिति उत्पादकविनाशकयोर्न निर्विषयकत्वप्रसङ्ग इति न कापि प्रकृतहानिरित्यर्थः । इदमत्र बोध्यम् । पटात्मना प्रतीतस्य घटाभावत्वेनाप्रतीत्यापि नाभावस्य तुच्छत्वापत्तिः । पटस्य घटाभावत्वेन सतोपि, तथा प्रतीतेः प्रतियोगिस्मरणादिसव्यपेक्षतया तदभावेन तदभावोपपत्तेरिति । तथा च जिज्ञासाधिकरणश्रीभाष्यम् "ननु च जात्यादिरेव भेदश्चेत् तस्मिन् गृहीते तद्व्यवहारवत् भेदव्यवहारोपि स्यात् । सत्यम् । भेदश्च व्यवह्रियत एव । गोत्वादिव्यवहारात् । गोत्वादिरेव हि सकलेतरव्यावृत्तिः । ...अयमस्माद्भिन्न इति व्यवहारे तु प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम्" इति । एवमभावस्य सर्वथा तुच्छत्वं दूरीकृत्य घटादिभावानां स्वकालसत्त्वमुपपादयति இப்படியால் इति । सर्वथा तुच्छत्वाभावेनेत्यर्थः । अभावத்துக்கு- प्राक्प्रध्वंसाभावात्मकस्याभावस्य । यथा प्रमाणमिति । घटादीनामुत्पा-

---

த்வம்ஸம் பிறக்கக்கூடாதபடியாய் இதேரீதியில் முன்னிலபாவமும் (ப்ராகபாவமும்) இறக்கக்-கூடாதபடியாய் இரண்டும் நித்யமாய் முடிகையாலே, முன்னும் பின்னும் இந்த ப்ராகபாவ, த்வம்ஸங்களாலே விழுங்கப்பட்ட எல்லாப்பொருள்களும் இடைக்காலத்திலும் இல்லை என்ற-தாகி ஸாவம சூந்யம என்று தேருதோ மன்னில்- தேபாது. அபாவங்களை தனித்தபொருள்-களாகவோ அதுகள் கூடவே தங்கும் வேறு பாவவஸ்துக்களாகவோ அவரவர் ஒத்துக்கொண்ட-போதிலும் அவைகளை சுயரூபத்தாலும சூன்யங்கள் என்பாரில்லை. வேறுபொருளின் உரு-

उत्पाद्यत्वமும், उत्पन्नத்துக்கு उत्तरावधिराहित्यமும், கூடுகையாலே, प्रागभावप्रध्वंसाभावमध्यवर्तियான भावத்துக்கு स्वकालसत्त्वविरोधமில்லை.

**எல்லாம் நிரூபிக்க முடியாதன என்பதுபோன்றவை முரண்பட்ட பேச்சுக்கள்**

विवेकदशैயில் स्वभावानवधारणமும் தன்னுடைய मतिमान्द्यप्रयुक्तம். भावाभावरूपமாயிருப்பதேதேனுமொன்றையும், निरुपाख्यம், निरभिलप्यம், निस्स्वभावம் என்றுப்போலே சொல்லுமவனுக்கு स्ववचनविरोधமும் प्रमाणविरोधமும் வரும். पूर्वம் असत्तாகையாலே அப்போது निस्स्वभावமாய் நின்றதற்குப்பின்பு सत्तायोगமாதல் स्वरूपेण विद्यमानत्वமாதல் கூடும்படி என்– என்னில்– स्वकालத்திலே प्रमाणव्यवस्थितस्वभावமான वस्तुவுக்கு पूर्वकालத்தில் சொல்லுகிற

घत्वादिकं प्रत्यक्षादिप्रमाणप्रतिपन्नत्वादेव हि अङ्गीक्रियते, तथैव प्रामाणिकत्वाविशेषात् प्रागभावादीनामपि तदङ्गीकार्यमित्यर्थः । उत्पन्नத்துக்கு उत्तरावधिराहित्यமும் கூடுகையால் इति । उत्पन्नध्वंसस्य उत्तरावधिरूपध्वंसान्तराभावस्य प्रामाणिकत्वादनवस्थाद्यभावेनेत्याशयः । मध्यवर्तिயான भावத்துக்கு इति । तयोरभावयोरनित्यत्वस्थापनात् तदुभयमध्यकालवर्तिनो घटादेः पदार्थवर्गस्य स्वकालसत्त्वमव्याहतमेवेति भावः । तथा च न तत्काल्पनिकमिति क्व चतुष्कोटिविनिर्मुक्तत्वमित्यभिप्रेतम् ।

अथ निस्स्वभावत्वात् चतुष्कोटिविनिर्मुक्तत्वमिति तृतीयमपि कल्पं निराकरोति– विवेकदशैயில் इति । "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते" इति एकस्मिन्वस्तुनि गृहीतपरामृष्टे विरुद्धनानाधर्मप्रतीत्या तत्र स्वाभाविकधर्मावधारणस्य दुष्करत्वं, न तस्य वस्तुनो निस्स्वभावतया तुच्छत्वं कल्पयेत् । सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायात् । अपि तु तत्र स्वस्य तत्त्वनिर्णयानुगुणसूक्ष्मविवेचनविधुरतामेव कल्पयेदिति भावः । एवं पूर्वार्धं निराकृत्य "अतो निरभिलप्यास्त इत्युत्तरार्धमपि खण्डयति- भावाभावरूपेति । उपाख्यातुमभिलपितुं चाशक्यमिति वदन्नेवोपाख्यात्यभिलपति चेति अहो स्ववचनविरोधमपि न जानाति । तथा भावाभावरूपं वस्तु प्रमाणप्रतिपन्नम् इदमिति प्रदर्श्यैव निरुपाख्यमित्यादिरीत्या साधनीयतया धर्मिग्राहकप्रमाणविरोधश्च इत्यर्थः । ननु कार्यस्य स्वोत्पत्तेः पूर्वमसत्त्वात् निस्स्वभावत्वं प्राप्तमेवेति कथं स्ववचनविरोधादीत्याशंक्याह- पूर्वमसत् ஆகையாலே इति । अयमाशयः- यत्कदाचिदसत् तत्सर्वदाऽसत्, यथा शशविषाणादिकम् । तथा च घटादिकार्यं स्वोत्पत्तेः पूर्वकालेऽसत्, ततः पश्चात् कथं सत्तया युज्येत, घटत्वादिरूपेण वा विद्येत? तथासति एकस्य सत्त्वासत्त्वादिस्वभावद्वयविरोधादिति । स्वकालத்திலே इत्यादिस्समाधानग्रन्थः । घटादेः पूर्वकालासत्त्वं नाम तस्य तत्कालसम्बन्धाभावः

---

வத்தால் இவை சூன்யமாஹும் இவைகள் ஒரு காரணத்தால் பிறக்கவோ இறக்கவோ இடைஞ்சல் ஏதுமில்லை, பிறந்தது இறக்கவும் வேண்டாம். ஆதலால் ப்ராகபாவ த்வம்ஸங்களுக்கு இடைப்பட்ட பொருள்கள் தம்காலத்தில் நிலைபெறமுடியும். ஸர்வமும் சூன்யமன்று.

असत्त्वम् अभावमात्रமாகையாலே, இவ்வஸ்து पूर्वம் निस्स्वभावமாய் நின்றதில்லை. இவ்அभावம் कार्यத்துக்கு स्वरूपமாகில் ஒன்றுக்கே स्वभावविरुद्धत्वம் கொண்டதாம். स्वरूपातिरिक्तமாகில் कार्यம் முன்பு எப்படி இருக்கும் என்று கேட்க இதனுடைய अभावம் இருக்கும் என்று अर्थान्तरத்தைச் சொன்னால், கேட்டதற்கு என்ன उत्तरம் சொல்லிற்றும் என்னில்- இக்कार्यம் पूर्व-

मृद्द्रव्यस्य सर्वदा सतः पृथुबुध्नोदराद्याकारशून्यत्वं च, न तु निस्स्वभावत्वेन सर्वात्मना सर्वदा तुच्छत्वम्। स्वकाले तस्य वस्तुनः प्रमाणप्रतिपन्नस्वभावविशेषवत्त्वात् इति न स्वभावद्वयविरोध इति भावः। ननु कार्यस्य पूर्वकालसम्बन्धाभावः तादृशाकारशून्यत्वं च किं स्वरूपं, तद्व्यतिरिक्तं वा? इति विकल्प्य पूर्वपक्षी प्रथमं परिहरति- இவ்அभावம் इति। स्वरूपस्यैव स्वभावत्वात् कार्यस्य पूर्वं तादृशाभावस्वभावस्य, पश्चात्तद्विरुद्धस्वभावत्वे स एव दोष इत्यर्थः। ஒன்றுக்கே इति। न हि प्राक् पश्चात्कालयोः कार्यद्वयमिति तद्भेदेनाविरोधश्शक्यशङ्कः इति भावः। स्वभाव-विरुद्धत्वं- विरुद्धस्वभावत्वम्। तथैव वा पाठोऽन्वेषणीयः। द्वितीयमपि दूषयति- स्वरूपातिरिक्त மாகில் इति। कार्यस्वरूपातिरिक्तं चेदित्यर्थः। एतदुक्तंभवति- "कार्यं घटादिकमुत्पत्तेः पूर्वं कथमासीदि"ति कार्यनिष्ठकथंभावाकाङ्क्षायां "पूर्वं घटादिकार्यस्याभाव आसीदि"ति, कार्यस्वरूपातिरिक्ताभावनिष्ठसत्ताख्यधर्मविशेषोक्तिर्न प्रतिवचनं भविष्यति। अर्थान्तराख्यछलापत्तेः। सोयमाम्रान् पृष्टः कोविदारानाचष्ट इति न्यायः। तथा च "घटादिकार्यं, पूर्वमसदासीदि"त्येवोत्तरयितव्यम्। तथासति घटादेः पूर्वकालासत्त्वं नाभावमात्रमिति सत्त्वासत्त्वस्वभावविरोध एवेति। என்ன उत्तरம் சொல்லிற்றும் इति। तथा च न किंचिदपि समुचितमुत्तरं दत्तमित्याशयः। என்னில் इत्यन्तं शङ्काग्रन्थः। तदिदं समाधत्ते- இக்कार्यம் इति। अत्रेदं बोध्यम्- "घटादिकं पूर्वकाले कथमासी"दिति प्रश्नस्य "घटादिकं पूर्वमेवमासीदिति प्रतिवचनं तदा दीयेत, यदि घटादिकं पूर्वं स्यात्। यथेदानीं नीलं घटमभिनिर्दिश्य कथं पूर्वमासीदित्यत्रानील आसीदिति। न तथेह पूर्वं स विद्यते। तथा च तत्स्वरूपे कथं कथम्भावाकाङ्क्षोदय इति तत्स्थलवैलक्षण्यं आलोच्य

*ஆராய்ந்தால் பொருட்களின் உண்மை, நிலைபெற்று இருக்கவில்லை என்கிறதுவும் ஆராய்பவனின் திறமைக்குறைவே. பொருட்கள் நினைக்கவொண்ணாதவை, குறிப்பிடமுடியாதவை, தன்மையற்றவை என்பதெல்லாம் முரண்பட்ட பேச்சுக்கள். ப்ரமாணத்திற்குப்புறம்பானவை. ஒரு குடம் தான் பிறக்கும் முன்பு அஸத்தாயிருந்தது. ஆகையால் தன்மையற்ற அதற்குப் பின்பு ஸத்தை கூடுதலும் அது குடமாதலும் எங்ஙனே என்னில்— பிற்காலத்தில் குடம உண்டென ப்ரமாணங்கள் காட்டுமாகையால் அதற்கு முற்காலத்திலுள்ள அஸத்வம வெறும் இன்மையேயாகையால் பிறகு ஸத்தை என்னும் உண்மைத்தன்மைகூடும். குடமுமாகலாம் ஆனாலும் தனக்கு முற்காலத்தில் சொல்லும் இன்மை இக்குடத்தின் சுய-உருவைச் சேர்ந்ததாகில், பிறகு அதற்கு உண்மை வரமுடியாது. வந்ததாகில் முன்சொன்ன*

காலத்திலுண்டாகிலன்றே அதற்கொருபடி சொல்லவேண்டுவது. कार्यத்தினுடைய स्वरूपன்-தான் அக்காலத்திலில்லை என்று उत्तरतात्पर्यமாகையாலே प्रश्नத்தோடு सङ्गतமாம். देवदत्त-स्वरूपத்தை இசைந்து அவனெங்கே वर्तिக்கிறானென்று देशविशेषसम्बन्धத்தைக் கேட்டவ-னுக்கு देवदत्तனுண்டாகிலன்றே அவனிருக்கிறவிடம் கேட்கவேண்டுவது, அவனில்லை காணுமென்னுமாப்போலே, पूर्वकालத்திலே घटस्वरूपத்தையிசைந்து அதெப்படிப்பட்ட स्वभा-वத்தை உடைத்தாயிருக்கிறதென்று கேட்டவனுக்கு, அக்காலத்திலே कार्यस्वरूपமில்லாமை-யாலே स्वरूपविशेषप्रश्नத்துக்கு अवकाशமில்லை என்று उत्तरம் சொல்லிற்றாயிற்று.

---

"पूर्वं घटादेरभाव आसीदित्येवोच्यत इति। उत्तरतात्पर्येति। तथा च प्रतिवचनस्य यद्यपि वचन-व्यक्तिरन्यादृशी, तथापि कार्यस्वरूपमेव पूर्वकाले नास्तीत्यत्रैव तात्पर्यात्, न प्रश्नप्रतिवचनयो-र्भिन्नार्थत्वमिति छलादिदोषानवकाश इति हृदयम्। ननु यदि "पूर्वं कार्यस्याभाव आसीत्"; "कार्यं पूर्वमसदासीदि"त्यनयोः प्रतिवचनयोस्तात्पर्यगत्यैकार्थ्यं, तर्हि प्रश्नेन शब्दतोपि समानं, "कार्यं पूर्वमसदासीदित्येवोत्तरं भवतु। किं क्लिष्टनिर्वाहेणेत्याशंकां सदृष्टान्तं परिहरति देवदत्तस्वरूपத்தை इति। एतदुक्तं भवति- देवदत्तस्वरूपसत्त्वं भ्रान्त्या गृहीत्वा, तदुपरि "स स्वगृहे किं तिष्ठती"ति पृष्टवन्तं प्रति, अनास्थया "स स्वगृहे नास्ती"त्यपि कदाचित् प्रतिवचनं दीयेत। तावता, किं देवदत्तस्य स्वरूपत एवासत्त्वात्स्वगृहासत्त्वं, किंवा स्वरूपतस्सतोपि अन्यत्र विद्यमानतया स्वगृहा-सत्त्वमिति विशेषनिर्णयो न भविष्यति। यदा तु "देवदत्तस्वरूपे प्रसिद्धे हि तादृशप्रश्नोदयः, वस्तुतस्तस्याभाव एवे"ति पर्यालोच्य प्रतिवचनं दीयेत, तदा भवति सन्देहनिर्णय इति यथा, तथा प्रकृतेपि घटादेः पूर्वं सत्त्वं भ्रान्त्या गृहीत्वा "पूर्वं कथं स आसीदि"ति प्रश्नस्य "पूर्वकाले सत्त्वे हि तद्विशेषप्रश्नः किन्तु तस्याभाव एवेति प्रतिवचनं समुचितमेवेति।

ननु घटादीनां पूर्वकालेऽभावमात्रमेव नत्वसत्स्वभावत्वमित्येतदसङ्गतम्। यथा घटो स्तीति तस्य सत्स्वभावत्वप्रतीतिः, तथा पूर्वं घटो नास्तीत्यसत्स्वभावत्वस्यापि प्रतीतेः। न च पूर्वं

---

சுயஉருவத்தோடு முரண்படும். இன்மை குடத்தின் சுயஉருவமல்ல. அதைவிட வேறானதொரு தன்மையே என்னில், "குடம் முன்பு எப்படி இருந்தது" என்று கேட்டதற்கு, அதனுடைய இன்மை (அபாவம்) இருந்தது என்று ஒன்றைக் கேட்டவனுக்கு மற்றொன்றைப்-பற்றிய மறுமொழி தருவதா? அப்போது கேட்டதற்கு என்ன உத்தரம்? என்னில்- இதுவும் சரியன்று. ராமனைப் பொதுவாக உண்டென்று ப்ரமித்து "அவன் எங்கேயிருக்கிறான்" என்று ஓர் இடத்தைச் சுட்டிக்கேட்க- "அவனுண்டாகிலன்றே அவனிருக்குமிடம் அறிவிக்க முடியும்" அவனுடைய அபாவமே எங்குமிருந்தது காண் என்று பதில் சொல்லுவதுபோல, குடம் தனக்கு முன்பு இருந்ததாகக்கொண்டு, அது பூர்வகாலத்தில் எப்படி இருந்தது என்று கேட்க, குடத்திற்கு முன்பு அது அப்ரஸித்தமாயிற்றே. ஆக முன்பு அது கிடையாது, அதன் அபாவம்தானிருந்தது என்று பதிலின் கருத்தாகையால் எவ்வித முரண்பாடுமில்லை

வஸ்துக்களுடைய உண்மையின் வரலாறு.

இத்தாலே "नह्यसन् घटादिर्न घटादिः" என்ற खण्डनजल्पமும் निरस्तம். अस्मिन् देशे

घटादेस्स्वरूपत एवाविद्यमानत्वात्, कथं तस्यासत्स्वभावत्वं? सति धर्मिणि हि धर्मचिन्तेति वाच्यम्। यतः असतोपि घटादेस्स्वरूपं स्वरूपमेव भवति। "न ह्यसन् घटादिर्न घटादिरिति खण्डनखण्डखाद्योक्तेः। तथा चान्यतरपरिशेषे कर्तव्ये प्रमाणबलात् असत्त्वमात्रमेवावशिष्यत इत्यत आह- இத்தாலே इति। कार्यस्य पूर्वकाले अभावमात्रमेवेति निर्णयेनेत्यर्थः। तत्र हि ग्रन्थ एवं विचार्यते- असतोपि कारणत्वात् सत एव कारणत्वमिति नास्ति नियमः। धर्मभूता सत्ता किं स्वविशिष्टे वर्तते, उत स्वोपलक्षित इति तस्या वृत्तिविकल्पेन दूषितत्वात्। न च स्वरूपसत्त्वोपगमादुपपत्तिः। स्वरूपस्य वा सत्ता स्वरूपं वा सत्तेति विकल्पानतिवृत्तेः। प्रथमे पूर्वोक्तदोषः, स्वरूपस्यासत्त्वं च स्यात्। तस्यास्स्वरूपादतिरेकात्। द्वितीयेत्वसतोपि कारणत्वमायातम्। असतोपि च स्वरूपं स्वरूपमेव। न ह्यसन् घटादि र्न घटादिः। तथा सति घटादीत्यपि न स्यात्। असतोऽघटादित्वात् इति। अत्र खण्डनग्रन्थमूले सर्वत्र- "...नह्यसन् घटादिः। तथासति... इत्येव पाठो दृश्यते। अथापि आचार्यादृतपाठानुसारेणान्ते क्वचिच्छोधनिकायां शिक्षापि दृश्यत इति अयमेव पाठस्समीचीनः अन्यस्यानन्वयात् इति बोध्यम्। निरस्तம் इति। अयमाशयः— सत एव कारणत्वम्। सत्ता च देशकालसम्बन्धित्वरूप प्रामाणिकत्वम्। तस्या वृत्तिविकल्पे यत्र सा वर्तनार्हा तत्र तिष्ठतीत्येवोत्तरम्। वर्तितव्यं हि वस्तुभूतया तया क्वचित्। स्वरूपं प्रत्यपृथक्सिद्धविशेषणत्वात् स्वरूपमेव सेत्यपि वक्तुं युक्तम्। न च तावताऽसतः शशविषाणादेः कारणत्वं प्रसज्यते। तस्याप्रामाणिकत्वेन निस्स्वरूपत्वात्। अतोऽ"सतोपि स्वरूपं स्वरूपमेवे"ति, "न ह्यसन् घटादिर्न घटादिरिति वा वचनं वृथा जल्प एव। किञ्च "न ह्यसन् घटादिरित्यत्रासत्त्वं किमभिप्रेतम्? यदि पूर्वकालवृत्त्यभावप्रतियोगित्वमात्रं, तदा तस्योत्तरकालसत्तां प्रत्यविरोधितया, असतः कारणत्वं प्रत्यसाधकत्वमेव। यदि तुच्छत्वं, तर्हि प्रतीतस्य घटादेस्तदसिद्धमेव विरोधादिति। तदुक्तं सर्वार्थसिद्धौ- "न ह्यसन् घटादिर्न घटादिरि"ति तु कस्यचिद्वचनं बालप्रतारणमात्रम्। अभावप्रतियोगिवचने विवक्षितविरुद्धोक्तेः। अभावमात्रविवक्षायां विरोधादिति। अभावमात्रत्वं च तुच्छत्वम्। अत्र "खण्डनजल्पமும்" इति जल्पशब्दस्तदीयवितण्डाया अप्युपलक्षकः। सामान्यतो व्याहतवचनपरत्वात्। ग्रन्थोयमापादचूडं तथाभूत एव हि दृश्यते। तथा हि- उपक्रम एव शश्वद्विश्वपदार्थखण्डनाय वितण्डया प्रवर्तमानो ग्रन्थकारस्स्वकृतेर्व्याहतोक्तिमेदुरत्वं समोदं सूचयति।

இதனால் "முன்பு இல்லாத குடமும் குடமே" என்ற ஹர்ஷனுடைய கண்டன-க்ரந்த வாக்யமும் தள்ளுண்டது. "இங்கு கார்யம் உண்டு" என்றவிடத்தில் உண்டு என்னப்

अस्मिन् काले कार्यमस्ति என்கிறவிடத்தில் अस्तिशब्दार्थம் कार्यस्वरूपமாகில் पुनरुक्तமாம். देश-कालங்களில் विधिनिषेधसाधारणமுமாம். स्वरूपातिरिक्तமாகில் स्वरूपம் सत् ஆம்படி என்?

"अविकल्पविषय एकस्स्थाणुः पुरुषश्श्रुतोस्ति यश्श्रुतिषु । ईश्वरमुमया न परं वन्देऽनुमयापि तमधिगतम् ॥ इति तत्र प्रथमं पद्यम् । स्थाणुश्शिवः वृक्षमूलं च । पुरुषो विष्णुः मनुजश्च । तत्र स्थाणुत्वपुरुषत्वयोरेकत्रानुपसंहार्यत्वेन प्रसिद्धां व्याहतिं सूचयन् "स्थाणुः पुरुषश्श्रुतोस्ति यश्श्रुतिषु" इति तां अन्ततः निर्लज्जमभ्युपगच्छामीति वदतीव । तदिदमस्य साहसिकं मनोरथपदं श्रीमदाचार्यास्तत्त्वमुक्ताकलापोपक्रम एव अपक्रामयन्ति । "आवापोद्वापतस्स्युः कतिकति कविधीचित्रवत्तत्तदर्थेष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः । तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान् समस्तान्, पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणितास्थाणुतादिः (धीः)॥ इति । अत्रायं चतुर्थः पादः, तत्र "स्थाणुः पुरुषश्श्रुतोस्ति" इति सामानाधिकरण्येन तयोरलौकिकं निर्देशं लोकरीतिं प्रदर्श्य स्फुटं प्रत्याख्याति । इयमर्थसम्बन्धिनी व्याहतिः । उमया परं न। उमयैवेति न, अनुमया, उमाभिन्नयापि, अनुमानेनापि च अधिगतमीश्वरमिति द्वितीया, विरोधाभासालङ्कारात्मिका व्याहतिश्शब्दमात्रे स्थिता, नास्माकमनिष्टेति न तत्र किंचिद्वक्तव्यमिति । एवं "वेदान्तेषु यमाहुरेकपुरुषं...स स्थाणुस्स्थिरभक्तियोगसुलभ इति कालिदासपद्यमपि प्रत्युक्तम् । यत्त्वत्र विद्यासागरीयव्याख्याने- असच्छब्देनाभावं विवक्षित्वा "भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।" नह्यभावस्याकारणत्वे प्रमाणमस्ति । न हि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा । निषेधरूपाभावे विधेरपि तुच्छत्वप्रसङ्गात्, इत्याद्युदयनसूक्तिः प्रमाणीकृता, तदेतत्परप्रतारणमात्रं भ्रान्तिर्वा भवति । अभावस्यापि देशकालसम्बन्धित्वेन प्रामाणिकत्वात् सत्ता भवत्येवेति तस्य कारणत्व इष्टापत्तेः । शशविषाणादिवत्सर्वथाऽसतः कारणत्वस्थापन एव मूलकारसंरम्भात् । तदुक्तं- पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ । हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ।।" इति । नौ- वादिप्रतिवादिनोरावयोः, पूर्वकालसम्बन्धनियमरूपे हेतुत्वे तुल्ये सति हेत्वनुपयोगिनी सत्त्वासत्त्वविचारणा वृथैव । पूर्वकालनियतमन्वापेक्षया पूर्वकालनियमस्यैव लघुत्वात् इति कारिकार्थः इति । ननु यदि कार्यस्य पूर्वकालासत्त्वं न तस्य स्वरूप, अपि त्वतिरिक्ताभावमात्रं भवति, तर्हि "अस्मिन्देशे अस्मिन्काले कार्यमस्ती"ति व्यवह्रियमाणं सत्त्वमपि किं भवति कार्यस्वरूपमुत तदतिरिक्तमिति विद्यासागरीयविकल्पनत्खण्डनान्यपि प्रसङ्गाद्दूषयितुमनुवदति- अस्मिन्देशे इत्यादिना

பட்ட ஸத்தையானது கார்யமேதானோ! அதைவிட வேறோ? முதல் பக்ஷத்தில் "கார்யம் உண்டு" என்று ஒன்றையே இரண்டுதரம் சொன்னதால் (புநருக்தி) கூறினது கூறல் என்னும் குற்றமாம். கார்யஸ்வரூபம், "உண்டு இல்லை" என்கிற இரண்டு பக்ஷங்களுக்கும் பொதுவாவது

என்னில்-देशकालसम्बन्धादिरूपமான अस्तिशब्दार्थமும் वस्तुவுக்கு स्वभावतो विशेषणமாகையாலே இவ்வஸ்துவை सत् என்னலாம். सम्बन्धान्तरापेक्षादिகளில்லாமையாலே अनवस्थादिदोषமும் வாராது. अळीकाकारங்கள் தன்னிலும் संवृतिसत्यलोकव्यवहारसिद्धिக்காக यथादर्शनம் विशेष्य-

என்னில் इत्यन्तेन। तत्र प्रथमविकल्पखण्डनं "साधारणமுமாம்" इत्यन्तेन भवति। अस्तिशब्दार्थ-सत्तायाः कार्यस्वरूपत्वे तच्छब्द,कार्यशब्दयोस्स्वरूपवाचित्वेन पर्यायतया सहप्रयोगानुपपत्तिः, प्रयोगे वा पुनरुक्तिश्च भवति। कार्यस्वरूपस्य "अत्र कार्यमस्ति" "अत्र कार्यं नास्ती"त्यादौ देशकालादिविधिनिषेधसाधारणत्ववत्, तदभिन्नास्तिशब्दार्थसत्ताया अपि तथात्वावश्यंभावात् "अत्र अस्ति अस्ति" "अत्र अस्ति नास्ती"त्यादिप्रयोगापत्तिः। न चेष्टापत्तिः, देशकालविधिमात्र-रूपायास्तस्याः पुनर्देशकालविधाने, तन्निषेधे च, यथाक्रमं पुनरुक्तेर्व्याहतेश्च प्रसङ्गादिति भावः। अथ द्वितीयविकल्पखण्डनं "स्वरूपातिरिक्ते"त्यादिना। सच्छब्दार्थसत्तायाः कार्यस्वरूपातिरिक्त-त्वेपि तद्विशेषणत्वाङ्गीकारे तेन सह सम्बन्धोस्ति नवा? अन्त्ये विशेषणत्वायोगः। सर्वत्र विशेष्यसंबद्धं हि विशेषणम्। आद्ये तस्य सम्बन्धस्य कार्यस्वरूपेण सह सम्बन्धान्तरापेक्षायामन-वस्थापातः। ततश्च कार्यस्वरूपं सदिति निर्देशासंभवात् असदेव वक्तव्यमिति तद्धृदयम्। एवं तदुक्तं उपन्यस्यापास्यति- देशकालेति वाक्यद्वयेन। स्वरूपातिरिक्तत्वेपि सत्तायास्स्वरूपं प्रति अपृथक् सिद्धविशेषणत्वाङ्गीकारान्नीलस्य घटापृथक्सिद्धविशेषणस्य नीलो घट इति व्यवहारविष-यत्ववत् सत्कार्यमिति धीविषयता उपपद्यत एवेति द्वितीयविकल्प एव सिद्धान्त्यत इति भावः। ननु तत्रापि सम्बन्धसदसत्त्वविकल्पः कृत एवेति चेत् अत्राह- सम्बन्धान्तरेति। अपृथक्सिद्धि-सम्बन्धातिरिक्तेत्यर्थः। अस्तिशब्दार्थस्य सत्ताया इत्यनुवर्तनीयम्। இல்லாமையாலே इति। तस्यास्स्वपरनिर्वाहकत्वस्वीकारादिति भावः। उक्तस्यार्थस्य परेणापि सम्मन्तव्यत्वमाह- अळीका-காரங்கள்தன்னிலும் इति। अत्र बहुवचनेन तदुक्तविध्यळीकनिषेधाळीकवैविध्यं द्योतितम्। प्रथमं घटादिकं, द्वितीयं शशशृङ्गादिकम्। संवृतिसत्येति। संवृत्या मायया सत्यवदवभासमानस्य लोक-व्यवहारस्य सिद्ध्यर्थमित्यर्थः। मिथ्याभूतलोकयात्रानिर्वाहायेति यावत्। परप्रतारणायैवमादिषूप-देशेषु मिथ्याशब्दस्य साक्षादप्रयोगः। तदुक्तं- "तुल्यार्थत्वेपि चैतेषां मिथ्यासंवृतिशब्दयोः। वञ्चनार्थमुपन्यासः लालावक्त्रासवादिवदिति। एतेषां इत्यत्र मत इति पदं पातनीयम्। यथादर्शन-मिति। दर्शनमनुसृत्य घटभूतलाद्योस्सम्बन्धान्तरसापेक्षसंयोगादिकं, घटरूपाद्योस्तन्निरपेक्षापृथक्-

---

போல, "உண்டு" என்பதும் மேற்படி இரண்டுக்கும் பொதுவாகவேண்டிவரும். இரண்டாம் பக்ஷத்தில் கார்யம் ஸத்தாக எப்படி ஆகும். என்னில்– உண்டு என்னப்பட்ட ஸத்தையானது கார்யத்துக்கு சுயமாகவே (அடைமொழி) விசேஷணமாவதால் கார்யத்தை ஸத் என்னலாம்.

**विशेषणभावादि**கள் **माध्यमिकादि**களும் கொள்ளாநின்றார்கள். இங்ஙனம் கொள்ளாதபோது **सर्व**மும் **तुच्छ**ம், **अनिर्वचनीय**ம் என்றாப்போலே சொல்லும் **तुच्छत्वादिविशेषणविधि**க்கும் **गति**-யில்லை. **वस्तु**வுக்கு **देशकालविशेष**ங்களில் உண்டான **अभाव**ம் **सम्बन्धाभाव**மானால் **सम्बन्ध**ம் தனக்கு **देशकाल**ங்களிற் சொல்லுகிற **अभाव**ம் என்னாகக் கடவது? என்னில்- **अतिरिक्ताभाव**-

---

स्थित्यादिकं, "नीलो घट" इत्यत्र विध्यलीकयोः, "मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः" इत्यादौ निषेधालीकयोश्च विशेष्यविशेषणभावादिकं च व्यवहारार्थं माध्यमिकादयोपि बौद्धास्सर्वेऽङ्गीचक्रुरित्यर्थः । विशेष्यविशेषणभावादीत्यादिनोक्त-संयोगादिसंबन्धपरिग्रहः । विपर्यये बाधकं दर्शयति- இங்ஙனம் கொள்ளாதபோது इति । कस्य-चित्स्वभावतो विशेषणत्वानङ्गीकार इत्यर्थः । तुच्छत्वादीनां तत्तद्वस्तुस्वरूपत्वे, पर्यायत्वेन "सर्वं तुच्छ"मिति सह प्रयोगे पौनरुक्त्यं, अतिरिक्तत्वे विशेष्यविशेषणभावनिर्वाहकसम्बन्धाभावानव-स्थान्यतरदोष इत्यादिना तद्वैशिष्ट्यभङ्गे युष्माकं तुच्छपदार्थासिद्धिरेवेत्याशयः । अत्र "तुच्छमिति बौद्धानां "अनिर्वचनीय"मित्यद्वैतिनां च पक्षः । ननु घटादेः पूर्वकालादावुच्यमानमसत्त्वं सम्बन्धाभावरूपमित्युक्तम् । तर्हि सम्बन्धस्य देशकालादावुच्यमानमसत्त्वं किं रूपं भविष्यति । न हि सम्बन्धस्य देशकालाभ्यां सम्बन्धान्तरमिच्छथ । येन तस्याप्यसत्त्वं सम्बन्धाभावरूपं स्यात् । तथासति अनवस्थापातात् । तथा च वस्तुन उच्यमानं असत्त्वं नाभावमात्रं किन्तु तुच्छत्व-मेवेति गूढाशयः पृच्छति வஸ்துவுக்கு इति । द्वेधैतत्समाधत्ते- अतिरिक्ताभाववादीति । नैयायि-केत्यर्थः । "भूतले पूर्वं घटो नास्ती"त्यादौ घटे भूतलपूर्वकालसम्बन्धाभावः प्रतीयते । "तयो-र्घटसम्बन्धो नास्तीत्यादौ तु तयोः तत्सम्बन्धानुयोगित्वाभावः । न च "तयोस्तदनुयोगित्वं नास्तीत्यादिप्रतीतिपरम्परामादायानवस्था शक्यशङ्का, अनुयोगित्वस्यानुयोगिपदार्थस्वरूपत्वेन

---

இரண்டுக்குமிடையே சுயமான உறவு நிலவுவதால் வேறு ஸம்பந்தமும் வேண்டாம். நீங்களும் சூன்யபதார்த்தங்களில் வ்யவஹாரத்துக்காகவேனும் ஸத்யம் என்று ஒரு பெயரைச்-சூட்டி அவைகளிடையே விசேஷணம் விசேஷ்யம் என்ற உறவுகளைக் கற்பித்துள்ளீர்கள். அப்படியல்லாதபோது சூன்யம் என்ற தன்மையையும் கூட்டிப் பொருளைச் சொல்லமுடியாது-போய்விடும். ஒரு வஸ்து ஒரு இடத்தில் இல்லை என்பதற்கு அதன் ஸம்பந்தம் இல்லை என்று பொருளானால், அதன் ஸம்பந்தம் இல்லை என்பதற்கு என்ன பொருள் கூறுவீர்? ஸம்பந்த ஸம்பந்தம் இல்லை என்றா? அப்போது இவ்வாறு கூறிக்கொண்டேபோய் எங்கே நிறுத்துவது? என்னில் ஆம். அந்த ஸம்பந்தத்திற்கு இத்துடன் ஸம்பந்தம் இல்லை என்றுதான் கூறுவோம். மேலே முடிவின்றி இவ்விதம் கூறிக்கொண்டேபோகவும் அநுமதியோம். அவைகள் முன்-னிற்காட்டில் வேறுபடாதென்போம். இது சிலர் கக்ஷி. மற்றும் சிலரோ-அதன் ஸம்பந்த-மில்லை என்றால், அதன் அபாவஸம்பந்தம் இருக்கிறது என்று பொருளாகையால் முடிவின்றி கூறல் நீண்டு செல்லாது என்று அபிப்ராயப்படுகின்றனர்.

वादिகளுக்கு अभावம்தானாய் நிற்கும். भावान्तराभाववादिகளுக்கு तद्विरुद्धस्वभावமான भावान्तर-மாயிருக்கும் என்று यथादर्शनங் கண்டுகொள்வது.

**கார்ய காரணபாவமில்லை என்பதும் பிசகு.**

இத்தாலே अन्तर्भावितसत्तं चेत् कारणन्तदसत्ततः। नान्तर्भावितसत्त्वं चेत् कारणन्तदसत्ततः॥ इत्यादिजल्पங்களும் निरस्तங்கள். இத்தை अन्तर्भावितसत्तं चेत् कारणं सदिदं ततः। नान्तर्भावित-

स्वरूपसंबन्धविशेषात्मकत्वात्। अतः उत्तरोत्तरप्रतीतिवैलक्षण्येप्यर्थवैलक्षण्यकृतानवस्थाभाव इति भावः। अभावம் தானாய் भूतलपूर्वकालादिसंबन्धाभावातिरिक्ततदनुयोगित्वाभावरूपं एव। सिद्धान्तिनां निर्वाहप्रकारं प्रदर्शयति- भावान्तरेति। "देशकालयोर्घटसंबन्धो नास्ती"दित्यादौ तत्संबन्धसंबन्धाभावो न प्रतीयते येनानवस्थास्यात्, अपि तु घटसंबन्धविरुद्धस्वभावः यो घटाभावसंबन्धः, तादृशभावान्तरात्मक एव। तथा च "भूतले घटसंबन्धो नास्ती"त्यस्य, "भूतले तदभावसंबन्धोस्ती"त्यत्रैव पर्यवसानमिति नानवस्थापातादिरित्यर्थः।

एवं प्रसङ्गात् खण्डनकृदुक्तमन्यदपि निरस्यति- இத்தாலே इति। घटादौ सत्त्वस्य स्वभावतो विशेषणत्वेनेत्यर्थः। एतत्कारिकार्थस्तु- बीजमित्येव नाङ्कुरस्य कारणम्, किन्तु सद्बीजमिति सत्तया विशेष्यते। तत्र वक्तव्यं- सत्ताविशिष्टं कारणं, किं वा सत्तोपलक्षितम्? विशिष्टं चेत्तत्राह- अन्तर्भावितेति। अन्तर्भाविता, विशेषणतयाऽन्तःप्रवेशिता सत्ता यस्मिन् तत् कारणं चेत्, तर्हि सत्ताविशिष्टे सत्ताया असम्भवात् असदेव कारणं भविष्यति। तथा हि- विशिष्टवृत्तेर्विशेषणेपि वृत्त्यवश्यंभावात् सत्ताविशिष्टे सत्तावृत्तावात्माश्रयापातः। स च न संभवति। न हि पटुतरोपि नटवटुः स्वस्कन्धमधिरुह्य नरीनर्ति। द्वितीयकल्पेप्याह- नान्तर्भावितेति। अन्तर्भावितसत्त्वं न चेत् सत्तोपलक्षितं चेदित्यर्थः। "सुप्सुपे"त्यादिना नान्तर्भावितेति नसमासो वा। उपलक्षणीभूतायास्सत्तायाः कारणकुक्षिनिक्षेपाभावादेवासतः कारणत्वमनायासेनागतमित्यर्थः। निरासप्रकारं दर्शयति- இத்தை इति। उक्तां कारिकामित्यर्थः। படிப்பது इति। तथा च त्वदुक्तैव कारिका "तदसत्तत" इत्यस्य स्थाने "सदिदन्तत" इति कतिपयपदविनिमयमात्रेण पठिता, तत्र दूषणं भवतीति दूषणसौकर्यं दर्शितं भवति। तदर्थश्च- सत्ताविशिष्टे सत्तावृत्तावपि न सत्तायां सत्तावृत्त्याऽऽत्माश्रयाद्यापत्तिः। तस्यास्स्वपरनिर्वाहकत्वेन तद्दोषपरिहारात्। ततश्च

---

*இதனால் "காரணம் ஸத்தையை உடையது என்றாலும், ஸத்தை வேறான விசே-ஷணமேயாகையாலே காரணம் அஸத்தாகும். காரணம் ஸத்தையை விசேஷணமாக்காமல் விட்டது (உபலக்ஷணமாக்கியது) என்றாலும் காரணம் அஸத்தாகும்" என்ற வீணான வாத-மும் கண்டிக்கப்பட்டது இங்கு இதேவாதத்தை- காரணம் ஸத்தையை உடையது என்றா-லும் ஸத்தை காரணத்துக்கு ஸ்வபாவமாகவே விசேஷணமாகையால், காரணம் ஸத்தென்றே*

सत्तञ्चेत् कारणं सदिदं ततः॥ என்று பதிப்பது. कार्यமாய் தோற்றினது उत्पत्तिக்கு முன்னே सत्ताயிருக்குமாகில் उत्पत्तिக்கும் उत्पादकங்களுக்கும் ஒரு प्रयोजनமில்லையாம். முன்பு असत्-ஆயிருக்குமாகில் मृण्मयघटம் मृत्ताயிருக்குமாப்போலே பிறந்தாலும் முன்புபோலே असत् ஆயிருக்கவேண்டுகையால் कारणवैयर्थ्यादिदोषம் समानமாம் என்னில்- द्रव्यம் नित्यसत्ताயிருக்க अवस्थाविशेषங்கள் आगन्तुकங்களாகையாலே कारणादिसाफल्यமுண்டு. अवस्थैகள்தன்னில் पूर्व-सदसत्त्वविकल्पத்தில் गतिயென் என்னில்- पूर्वம் असत्तुக்கு हेतुवशத்தாலே सत्त्वமும் பின்பு

---

तदापि सदेव कारणं भवति। सत्तोपलक्षितस्य कारणत्वेपि, उपलक्षणीभूतया तया, सत्तात्यन्त-व्यवच्छेदरूपस्य सर्वथाऽसत्त्वस्य व्यावर्तनात् तदानीमपि सदेव कारणमिति। इदमुपलक्षणं- "सत्त्वं च सदसद्वेति विकल्प्यानिष्टकल्पने। असत्त्वं सदसद्वेति विकल्प्योत्तरमूह्यता"मिति सर्वार्थसिद्धि-रिह भाव्या।

एवमसतः कारणत्वस्थापनपरखण्डनोक्तिनिरासेन सत एव कारणत्वं समर्थितम्। तथैव तदुक्तासत्कार्यवादनिरसनमुखेन सत्कार्यवादं प्रतिष्ठापयितुं पूर्वपक्षमाह- कार्यமாய் தோற்றினது इति। कार्यं यदि स्वोत्पत्तेः पूर्वमेव सत्, तदा तदुत्पत्त्या नापूर्वं किंचित्प्रयोजनं भविष्यति। तदुत्पत्तिप्रयोजनोदकाहरणादेरपि पूर्वमेव सत्त्वावश्यंभावात्। एवं तदुत्पादकेनापि। तत्प्रयोजन-कार्यस्यापि पूर्वमेव सत्त्वात् इति भावः। अथ कार्यस्य स्वोत्पत्तेः पूर्वमसत्वे दोषमाह- முன்பு असत् ஆயிருக்குமாகில் इति। कार्यमिति शेषः। अयमाशयः- यथा पूर्वं मृद्भूत्वा पश्चाज्जातो घटो मृण्मयो भवति, नान्यथा, एवमिहापि पूर्वमसन् भूत्वा पश्चादुत्पन्नो घटः पूर्ववदसन्नेव भविष्यति, न सन्। असतस्सत्त्वापादनासम्भवात्। न हि नीलं शिल्पसहस्रेणापि सितीकर्तुं शक्यम्। तथा च कार्यसत्तासंपादनार्थकारणव्यापारवैयर्थ्यं समानमेवेति। कारणवैयर्थ्यादीत्यादिना असत उत्पत्तिवैयर्थ्यादिकं ग्राह्यम्। என்னில் इत्यन्तं पूर्वपक्षः। समाधत्ते- द्रव्यம் नित्यसदिति। एवं च कार्यद्रव्यस्य धर्मिणो नित्यसत्त्वोक्त्या असत्त्वकल्पोक्तदोषाणां अनवसरग्रस्तत्वमाविष्कृतम्। तर्हि कारणव्यापारवैयर्थ्यमुक्तमेवेति चेत्तत्राह- अवस्थाविशेषेति। तथा च घटादेः कार्यद्रव्यस्य धर्मिणो नित्यसिद्धत्वेपि घटत्वाद्यवस्थानां पूर्वमसत्त्वेन तदुत्पत्त्यर्थं कारकव्यापारसार्थक्यमिति भावः। ननु घटत्वाद्यवस्थापि पूर्वं सती, असतीवा? आद्ये कारकव्यापारवैयर्थ्यम्। अन्त्ये पूर्ववत्स एव दोष इति पृच्छति- अवस्थैகள் தன்னிலும் इति। उत्तरमाह- पूर्वमसत्तुக்கு इति। घटादिद्रव्ये पूर्व-मसत्या अपि घटत्वाद्यवस्थाया उत्पादकवशेन, सत्त्वं, पश्चाद्विनाशकारणसन्निपातेन ध्वंसरूप-

---

பலிக்கும். ஸத்தையைவிட்டு உபலக்ஷணம் அது காரணத்துக்கு என்றாலும் காரணம் எப்படியேனும் ஓரளவுக்கு ஸத்தாய் இருக்கவேணும் என்றே தேறும். என்று எதிர்த்தும் உபயோகிக்கலாம் கார்யம் தான்பிறக்கும்முன்பே உண்டாமாகில் அப்போது அதனை உண்டாக்கக்

हेत्वन्तरवशத்தாலே असत्त्वமும் வரக்கொள்கையாலே கண்டபடிகொள்வார்க்கு विरोधமில்லை. கண்டபடியை இல்லை என்பார்க்கே विरोधமுள்ளது. असत् सत् ஆம்படி என்? विरुद्धங்களுக்கு तादात्म्यம் கொண்டால், प्रागसत् ஆன தான் தனக்கு उत्पादकமென்கிற जैनवादமாகாதோ என்னில் कालभेदத்தாலே ஒன்றுகக்கே सत्त्वासत्त्वங்கள் வருகை विरुद्धமன்று. पूर्वसिद्धा-

---

मसत्त्वं च यथादर्शनमभ्युपगम्यते । न हि दृष्टेऽनुपपन्नं नामेति न्यायात् । तथा च द्रव्यस्वरूपस्य नित्यत्वाङ्गीकारान्न तत्र सत्त्वासत्त्वसमुच्छयविरोधः । अवस्थायान्तु तस्य सतोपि प्रामाणिकत्वात् कालभेदेन विरोधपरिहाराच्च नानुपपत्तिरिति तात्पर्यम् । श्रीभाष्ये त्वारंभणाधिकरणे प्रतिबन्द्यैवं पर्यहारि· "संस्थानस्यासत उत्पत्तौ असत्कार्यवादप्रसङ्ग इति चेत्, असत्कार्यवादिनोपि उत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः । उत्पत्तिमत्त्वे चानवस्था । अस्माकन्त्ववस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्य"मिति । प्रत्युत यथादर्शनं सत्त्वासत्त्वसमुच्चयानङ्गीकर्तुस्तवैव मतमनुपपन्नमित्याह– கண்டபடியை इति । बुद्धोपदेशात्पूर्वं सर्वशून्यत्वज्ञानं किन्तवास्ति, नास्तीति प्रश्ने उभयथापि तवानुपपत्तिरेवेति यथादर्शनं तत्रापि तयोस्समुच्चयाङ्गीकार एवहि तवापि गतिरिति भावः । तदुक्तं सर्वार्थसिद्धौ- "प्रागसत्, तुच्छमेव स्यात्, सच, नित्यंसदित्यसत् । अयथादृष्टिनिर्णेतुरशेषाभीष्टविप्लवात्" ॥ इति ।

नन्वेवमसदेवचेत्पश्चात्सद्भवति, तदा विरुद्धयोस्तादात्म्यमङ्गीकृतं भवति । तथाचोत्तरकाले भविष्यतस्सद्रूपस्य स्वस्य, पूर्वमसदेव स्वं कारणमिति जैनमतादविशेषापत्तिरिति शङ्कते- असत् सत्தாம்படி என் इत्यादिना । जैनवादेति । तर्हि स्यादस्ति स्यान्नास्तीत्यादिना सर्वत्र सप्तभङ्गीनयावतारात् सदसतोस्तादात्म्यमङ्गीचक्रे । प्रागसतस्स्वस्मात् सदुत्पत्तिश्च । अन्यथा सत एव स्वस्मात्सदुत्पत्त्यङ्गीकारे उत्पन्नस्य पुनरुत्पादापत्तिः । इदञ्च सर्वं "असद्वा इदमग्र आसीत् ततो वै सदजायत" इत्यादिश्रुत्युदाहरणपुरस्सरं प्रमेयकमलमार्ताण्डे द्वितीयपरिच्छेदे विवृतं, तत्रैव द्रष्टव्यम् । परिहरति- कालभेदத்தாலே इति । अयमर्थः· एकस्मिन्नेव सत्त्वासत्त्वसमुच्चयस्य

---

கூடியிருக்கும் காரணங்கள் வீணே. முன்னே கார்யம் இல்லையாகில், அப்போது உண்டானாலும் அது அஸத்தாயேயாகும். முன்பு மண்ணாயிருந்தது பிறந்த பிறகும் மண்ணாயேயிருப்பதுபோல். ஆகையால் அதை உண்டாக்க முயலும் காரணங்கள் தோல்வியடையவேண்டுவனவே. என்னில், பொருள்கள் எல்லாம் அடிப்படையில் நித்யங்களே. புதியன அல்ல. அவற்றின் நிலைகள் புதியனவாய் தோன்றுவதால் அவற்றைத் தோற்றுவிக்கக் காரணங்கள் தேவைப்படுகின்றன. அந்நிலைகள் அப்பொருளுக்கு முன்பும் இருந்தனவா? இல்லையா? என்று முன்போல் ஆக்ஷேபித்துக்கேட்டால் என்ன பதில் என்னில் அவை முன்பு இல்லாத அஸத் பூதங்களே. பிறகு காரணவசத்தால் ஸத்தின தன்மையாகிய ஸத்த்வம் அவற்றுக்கு ஏற்பட்டது பிறகும் அஸத்த்வம் காலாந்தரத்தில் ஏற்படுகிறதென்போம். இவ்விதம் நடப்பது

सत्त्वपरित्यागத்தில் स्वरूपपरित्यागமாம். அதை परित्यजियாதொழியில் असत् ஆன अवस्थै தன்னிலேயே सत्त्वமுண்டாகாதோ? என்னில்- पूर्वकालासत्त्वம் என்கிற धर्मத்தை ஒரு காலத்திலும் விடாமையாலே स्वरूपपरित्यागமில்லை. स्वकालसत्त्वविरोधமுமில்லை. सत्त्वा-

प्रामाणिकत्वस्थापनात् कालभेदेन विरोधशमनाच्च न विरुद्धयोस्सदसतोस्तादात्म्यप्रसङ्गः। किं च द्रव्यस्वरूपनित्यत्वाङ्गीकारादसतस्सत्प्रति कारणत्वस्य नापत्तिरपीति। ननु तयोः कालभेदेन विरोधपरिहारो न युज्यते। किं घटादौ पूर्वसिद्धमसत्त्वं परित्यज्य पश्चात्सत्त्वं विधीयते, आहो तदपरित्यज्यैव। आद्ये पूर्वसिद्धासत्त्वपरित्यागेन स्वरूपस्यैव त्यक्तत्वप्रसङ्गः। असत्त्वस्य तद्वस्तुस्वभावत्वेन स्वरूपान्तर्गतत्वात्। तद्धर्मत्वेपि धर्मधर्मिणोरभेदात् तत्त्यागे स्वरूपत्याग एव। न हि सुसूक्ष्ममपि वस्तु निरीक्षमाणानां अत्रायं धर्मः अयं धर्मीति विभज्य प्रतीतिर्भवति। अन्त्येत्वसत्त्वदशायामेव तत्र सत्त्वमप्यङ्गीकार्यं न कालभेदेनेति घट्टकुट्यां प्रभातायितम्। ततश्च जैनवादावतार इति चोदयति- पूर्वसिद्धासत्त्वेति वाक्यद्वयेन। अत्र सिद्धान्तयति- पूर्वकालासत्त्वेति। एतदुक्तंभवति- घटादौ हि न केवलसत्त्वासत्त्वे वस्तुधर्मौ भवतः विरोधात्। अपि तु पूर्वकालासत्त्वस्वकालसत्त्वे एव। तत्र च पूर्वकालासत्त्वमपरित्यज्यैवोत्तरस्वकालसत्त्वं विधीयते तयोरविरोधात् इति न प्रथमविकल्पोत्थितिः। नापि द्वितीयकल्पोक्तविरोधः, पूर्वोत्तरकालभेदेन सत्त्वासत्त्वयोरविरोधः इत्युक्तत्वादिति। अत्र "धर्मத்தை ஒரு காலத்திலும் விடாமையாலே स्वरूपत्यागமுமில்லை" इति धर्मशब्दनिर्देशस्यायमभिप्रायः, "पूर्वकालासत्त्वरूपस्य धर्मस्य धर्मिस्वरूपादत्यन्तविविक्तस्य कथञ्चित् परित्यागेपि न स्वरूपत्यागः। धर्मधर्मिभेदस्य इदमित्थमिति सर्वसम्प्रतिपन्नप्रतीतिप्रकारसिद्धत्वात्। वस्तुतस्तूत्तरकालेपि, "घटः पूर्वं नासी"दिति प्रतीतिदर्शनात् कदापि तस्य पूर्वकालासत्त्वं न परित्यज्यत एवेति। ननु पूर्वकालासत्त्वस्य पूर्वकालनिरूपितस्य कथमुत्तरकालेप्यपरित्यागः; उत्तरकाले पूर्वकालस्य नाशेन निरूपकाभावकृतनिरूप्याभावावश्यंभावादिति चेत्। न। उक्तप्रतीतिबलेन तस्योत्तरकालेपि निर्बन्धत एष्टव्यत्वात्। तथा हि- पूर्वकालासत्त्वंनाम पूर्वकालनिष्ठमसत्त्वं, पूर्वकालनिष्ठसत्त्वाभावो वा। पूर्वकालावच्छिन्नः घटादिसम्बन्धाभावः, पूर्वकालावच्छिन्नस्य घटादिसम्बन्धस्याभावोवेति यावत्। पूर्वं नासीत्, पूर्वमासीदितिने,

கண்கூடு. கண்டபடியல்லாத விதத்தில் கேள்வி கேட்பவர்க்கே விரோதமுள்ளது. முன்பு அஸத் பிறகு ஸத் ஆவது எங்ஙனம்? பரஸ்பரம் விருத்தங்களை ஒன்றென்னலாமா? அப்படியானால் முன்பு இல்லாததான் பிறகு தன் பிறப்புககுக் காரணமென்கிற ஜைநவாதமாக முடியாதோ என்றால், விரோதத்தாலே அஸத, ஸத்தாகாதாயினும் முன் அஸத் ஆனது பின் ஸத்து ஆயிற்று என்று காலமாறுபாட்டைச்சுட்டி இரண்டும் ஒன்றென்றால் எவ்வித விரோதமுமில்லை. ஒரு வஸ்துவுக்கு முன்பு இருந்த அஸத்த்வத்தை பிற்காலத்தில்விட்டால்"

ஸத்வங்கள் தர்மங்களானால் ஸ்வரூபமேதாவது என்னில்- அதுவுமிப்படிப்பட்ட ஸத்வாஸத்வங்களுடைய ஆச்ரயமென்று லோகத்ருஷ்டம். வந்தேறியான ஸத்வதர்மத்துக்கு பூர்வஸத்வாஸத்வங்களில் விரோதானவஸ்தாதிகள் வாராதோ? இத்தை ஸதஸத்விலக்ஷணமென்றால் இதற்கந்த ரூபம் அனுவ்ருத்தமாதல்

त्युभयथाप्यन्वयसम्भवात्। तत्र यद्यपि प्रथमः नोत्तरकालावच्छेदेनास्ति, तस्य पूर्वकालावच्छिन्नत्वविशेषितत्वात्। तथापि स उपलक्षणविधयोत्तरकालेपि वस्तुनि प्रकारीभवति। ततएवा''यं घटः पूर्वं नासीदिति उपलक्षणत्वद्योतनाय लङ्प्रयोगः, न तु पूर्वं नास्तीति। द्वितीयस्तु उत्तरकालेपि वस्तुनि विशेषणविधयैव प्रकारीभवति। पूर्वकालावच्छिन्नत्वस्य तदानीं प्रतियोगिकोटिप्रविष्टत्वेन तादृशघटसत्त्वस्य विशेष्याभावविशेषणाभावप्रयुक्ततया पूर्वत्रापरत्र च तुल्यमभावात् इति। परमार्थतः पूर्वकालासत्त्वस्योत्तरकाले परित्याग एव। उपलक्षणत्वस्वीकारस्यैवौचित्यात्। अत एवोपरिवक्ष्यति 'परित्याज्यासत्त्वமும் प्राप्यसत्त्वமும் கூடாதபடியாலே इति। ननु सत्त्वासत्त्वे यदि पदार्थधर्मौ, न तु तत्स्वरूपं, तर्हि किन्नाम स्वरूपमुच्यते इत्याकांक्षायामाह- सत्त्वासत्त्वங்கள் इति। இப்படிப்பட்ட इति ஆச்ரயமென்று, इति च निर्देशेन इत्थम्भावेदम्भावाभ्यां धर्मधर्मिविवेको दर्शितः। तथा च यथायथं स्वरूपनिरूपकैर्निरूपितस्वरूपैश्च विशेषणैर्विशिष्टो धर्मी स्वरूपमित्युक्तंभवति। ननु पूर्वकालासत्त्वापरित्यागेन घटादेस्स्वकालसत्त्वमुच्यमानं न विरुद्धमित्युक्तम्। तदयुक्तम्। घटादेस्सत्त्वस्यैव दुर्निरूपत्वादित्याशङ्कते- வந்தேறியான इति। आगन्तुकेत्यर्थः। अयं भावः- आगन्तुकं घटादेः सत्त्वं पूर्वमपि किं सदसद्वा? आद्ये तस्यागन्तुकत्वविरोधः। सत्त्वेसत्त्वान्तराङ्गीकारेणानवस्थादिश्च। अन्त्ये सत्त्वासत्त्वस्वभावविरोधः असिमन्नसत्त्वेपि एवमेव सत्त्वासत्त्वविकल्पेनानवस्थादिकं च प्रसजेदेवेति। अत्र द्वितीयस्य सत्त्वस्य प्रथमभिन्नत्वेऽनवस्था, अभिन्नत्वे त्वात्माश्रय इति। मूले- आदिना तस्यैव ग्रहणम्। अत्र कश्चिच्चोदयति- இத்தை सदसदिति। இத்தை- घटादेरागन्तुकं सत्त्वम्। तथा च तत्र सदसद्भिन्नत्वाङ्गीकारात् तयोर्विकल्पेन दूषणं न युक्तम् इत्याशयः। एतदपि दूषयति- இதற்கு அந்த ரூபம் इति। अस्य सत्त्वस्य सदसद्विलक्षणत्वाकार इत्यर्थः। अनुवृत्तत्वं- सार्वदिकत्वं, व्यावृत्तत्वं- कादाचित्कत्वम्। परित्याज्यासत्त्वेति। एतदुक्तं भवति- प्रकृते तत्र विवादाभावेन यथेच्छमङ्गीकृतेपि पक्षद्वये अस्य सत्त्वस्य सर्वथा सदसद्भिन्नत्वेन सत्त्वासत्त्वयो

வஸ்துஸ்வரூபத்தையே விட்டதாகும். ஆகையால் முற்கால அஸத்வத்தை விடாமலே தானே பிற்காலத்தில் ஸத்த்வம் கொள்ளவேணும். அப்போது முன் சொன்ன விரோதம் தவிர்க்கமுடியாததாகும் என்னில்-அவ்வஸ்து முற் காலத்திலில்லை என்று எப்போதும் குறிப்பிடப்படுகிறபடியால், முன்பிருந்த அஸத்தவ குணத்தையொருகாலும் விடுவாரில்லை. அஸத்த்வம் முன்பு-ஸத்த்வம் பின்பு என்று காலமாறுபாட்டைக் கொள்வதால் அவை இரண்டுக்கும் விரோதமுமில்லை.

व्यावृत्तமாதலாம்போது परित्याज्यासत्त्वமும் प्राप्यसत्त्वமும் கூடாதபடியாய் இக்கட்டளையிலே सर्वமும் अनिर्वचनीयமாம். अनिर्वचनीयत्वத்தைவிட்டு सत्त्वம் வருகை विरुद्धமாகையினுல் பிறந்தாலும் अनिर्वचनीयமாய் उत्पत्तिवैयर्थ्यம் வாராதோ என்னில்- सत्त्वத்துக்கு पूर्वासत्त्वமாவது पूर्वकाल-

रभावात् अभावनिरूपणं प्रति प्रतियोगिप्रसिद्धेरावश्यकत्वेन स्वकाले तस्य सत्त्वप्राप्त्यर्थं परित्याज्यपूर्वासत्त्वं विद्यमानकालपरित्यागार्हपूर्वकालीनासत्त्वमिति यावत्, न सर्वथा प्रसिद्ध्यति, उत्तरकाले प्राप्यसत्त्वं चेति तस्यानिर्वचनीयत्वापत्त्या त्वदीयसिद्धान्तभङ्ग इति । न चाधस्तात् मूले पूर्वकालासत्त्वस्य कदाप्यपरित्यागोक्त्या, अत्र "परित्याज्यासत्वे"ति तस्योत्तरत्र परित्यागकथनं कथं सङ्गच्छत इति वाच्यम् । तथोक्तेः उत्तरकाले पूर्वकालासत्त्वस्योपलक्षणत्वपक्षाभिप्रायेणाविरोधोपपादनात् । तत्रैवेदमुक्तं बोध्यम् । ननु कार्यगतागन्तुकसत्त्वस्यानिर्वचनीयतामात्रेण न मम हानिः । कार्यजातं हि निर्वचनीयं भविष्यतीति चेदाह- இக்கட்டளையிலே इति । अनेन न्यायेनेत्यर्थः । तथा चैवमेव सर्वपदार्थेष्वपि सत्त्वासत्त्वविकल्पे विविधदोषापत्त्योभयविलक्षणत्वस्याप्यनङ्गीकरणीयतया सर्वमेवानिर्वचनीयं प्राप्नोतीति भावः । नन्वस्तूत्पत्तेः पूर्वं सर्वमेवानिर्वचनीयम् । पश्चात् सर्वं सद्भविष्यतीत्यत्राह- अनिर्वचनीयत्वத்தை इति । अत्र सत्वம் வருகை विरुद्धமாகில் इत्येव सर्वत्र पाठो दृश्यते । तथापि विरुद्धமாகையினுல் इति युक्तः पाठो भाव्यः । विरुद्धत्वादित्यर्थः। अन्यथाऽनन्वयात् । तथा च स्वभावपरित्यागायोगात् अनिर्वचनीयस्य पश्चादपि सत्त्वं विरुद्धमेवेति मृदुत्पन्नस्य मृन्मयत्ववत् कार्यस्यानिर्वचनीयतया, कारणादुत्पत्तिवैयर्थ्यमेवेति भावः । एवं வந்தேறியான इत्यारभ्य என்னில் इत्यन्तं माध्यमिकस्य पूर्वपक्षः । अथैतत्समादधाति· सत्त्वத்துக்கு इति । अयमाशयः- घटादावागन्तुकं सत्त्वं पूर्वमसदेवेति द्वितीय एव पक्षस्समाश्रीयते । अत एव प्रथमविकल्पानुत्थित्या तदनुबन्धिदोषाणामनवसरः । न च द्वितीये सत्त्वस्यासत्त्वस्वभावविरोधः । यथा घटादेः पूर्वमसत्त्वं नाम पूर्वकालवृत्त्यभावप्रतियोगित्वमेव, न तु तुच्छत्वमिति न विरोध इत्युक्तं, तथैव घटनिष्ठागन्तुकसत्त्वस्य पूर्वमसत्त्वमपि पूर्वकालवृत्त्यभावप्रतियोगित्वमेव । न तु सर्वथाऽसत्त्वरूपमिति अविरोधात् । इयांस्तु विशेषः- भावान्तराभाववादिनां मते घटादेः पूर्वकालिकोऽभावः तद्विरुद्धकपालादिधर्मिस्वरूप इति तत्प्रतियोगित्वं तत्र तस्यासत्त्वम् ।

---

இப்படி ஸத்த்வமும் அஸத்த்வமும் வஸ்துவின் இருதன்மைகளேயொழிய, வஸ்துவின் ஸ்வரூபம் அன்றென்றால் ஸ்வரூபமாவது எதென்னில் இந்த இருதன்மைகளையும் கொண்டதான ஒன்றுதான் வஸ்துஸ்வரூபம் என்பது உலகில் கண்டவிஷயம். ஆனாலும் ஒரு வஸ்துவுக்கு வந்தேறியான ஸத்த்வம் என்னும் குணம் முன்புமிருந்ததா? இல்லையா? இருந்ததென்றால் அது நித்யமாவதால் அதை வந்தேறி என்பது விருத்தம். இல்லை என்றால் அதிலும் இவ்விதம் கேள்வி எழுந்து முடிவின்றி நீண்டுபோகும். இது ஸத்துமின்றி அஸத்துமின்றி

वृत्तिविरुद्धधर्मप्रतियोगित्वம். ஸத்வமாவது प्रामाणिकत्वம். இப்படி यथादर्शनம் கொண்டால் स्व-परनिर्वाहादिகளாலே विरोधानवस्थादिகள் வாராது.

**கார்யம் பிறப்பது எதிலிருந்து என்று மடக்கிக் கேட்பதும் சரியல்ல.**

உத்பந்நமாகிற வஸ்து தன்னாலே பிறக்கிறதாகில் पूर्वसिद्धமானதான்பிறக்கவேண்டா. स्वाभावकालத்திலே स्वसत्ताविरोधமும் வரும். பரத்தாலே பிறக்கிறதென்றால் परत्वाविशेषத்தாலே

---

घटनिष्ठघटत्वादिरूपसंवाख्यधर्मस्य पूर्वकालिकोऽभावस्तु तद्विरुद्धकपालत्वादिधर्मरूप इति तत्प्रतियोगित्वमेव तत्र तस्यासत्त्वमिति । एतदभिप्रेत्यैव मूले "पूर्वकालवृत्तिविरुद्धधर्मप्रतियोगित्व"मित्युक्तम् । एवमसत्त्वं निष्कृष्य सत्त्वमपि निर्वक्ति- सत्त्वமாவது इति । "सत्त्वத்துக்கு" इति पूर्ववाक्यात् अनुवर्तनीयम् । अत्र स्वकाल इति पूरणीयम् । पूर्वकालसत्त्वरूपप्रथमपक्षस्यपरित्यक्तत्वात् । तथा च घटादिगतसत्त्वस्य स्वकालसत्त्वं नामेत्यर्थः पर्यवसन्नः । प्रत्यक्षादिप्रमाणैर्यद्यथा प्रतीयते तस्य तथाभूतत्वं प्रामाणिकत्वं, तदेव सत्त्वमित्यर्थः । न च सत्त्वे सत्त्वान्तराद्यङ्गीकारेऽनवस्थादिकमित्याह- இப்படி यथादर्शनம் इति । स्वपरनिर्वाहादीति । परत्र सत्त्वादौ प्रामाणिकत्वादिव्यवहारनिर्वाहकं सत्त्वादिकं स्वस्मिन्नपि तथाभूतव्यवहाराय न सत्त्वाद्यन्तरमपेक्षत इति नानवस्थेत्यर्थः । मूले निर्वाहादीत्यत्र आदिनाऽविरोधसम्पादकपूर्वोक्तप्रकारपरिग्रहः । अनवस्थादीत्यादिनाऽऽत्माश्रयग्रहणम् ।

एवमेतावता कार्यस्य स्वकालसत्त्वमुपपादितम् । तच्च कुतश्चित्कारणाज्जायमानस्यैव कार्यस्य भवतीति कारणविषयकविचार उपस्थिते, कारणस्यैव दुर्निरूपत्वं माध्यमिकश्शङ्कते- உத்பந்நமாகிற इति । अत्र जायमानोघटादिः किं स्वस्मादुत्पद्यते; उत परस्मात् अथोभयस्मात् इति विकल्पाः । तत्र प्रथमं दूषयति- தன்னாலே इति । स्वस्यैव स्वोत्पत्तिकारणत्वे, तस्य नियतपूर्ववृत्तित्वरूपतया स्वस्य तत एव पूर्ववृत्तित्वं सिद्धमिति स्वस्योत्पत्तिवैयर्थ्यमित्यर्थः । स्वोत्पत्तौ स्वप्रागभावस्य हेतुतया, स्वस्य पूर्वसिद्धत्वे तादृशकारणविरहेणोत्पत्त्यसंभवश्चेत्यपि बोध्यम् । ननु कारणस्य न पूर्वकालवृत्तित्वमपेक्षितम् । किन्तु कार्यसमकालवृत्तित्वमेव । अतो नोक्तदोष इत्यत्राह- स्वाभावकालத்திலே इति । अयं भावः- समकालोत्पन्नयोस्सव्यदक्षिणविषाणयोः परस्परं

---

இரண்டிலும் விலக்ஷணமென்றால், அந்த விலக்ஷணத்தன்மை அதற்கு நித்யமாயினும் அநித்யமாயினும், உங்களுக்கநிஷ்டமான அஸத்வமும் இஷ்டமான ஸத்வமும் அதற்கு எவ்விதத்திலும் பிரஸித்தமின்றிபோய், அந்த ஸதஸத்விலக்ஷணத்வம் கூடாததாகி, அது அநிர்வசநீயம் என்னவேண்டிவரும். இருக்கட்டுமென்றால் அந்த ரீதியில் எல்லாமே அநிர்வசநீயமாம். பிறக்கும் முன் எல்லாம் அநிர்வசநீயமே என்றால், அந்த தன்மை விட்டு பிறந்த பிறகும் ஸத்வம் என்றும் தன்மை வருவது விருத்தமாகையால் பிறந்த பிறகும் அநிர்வசநீயம் என்றே கொள்ளவேண்டிவரும். ஆகையால் ஆங்காங்கு காரணங்கள் வீணே என்னில்- குடம் முத-

எல்லாம் எல்லாத்தில் நின்றும் பிறக்கவேண்டாவோ? இரண்டாலும் பிறக்கிறதென்றால் இரண்டு दोषமும் வாராதோ? என்னில்- परत्वमात्रம் कारणत्वनियामकமென்றொரு युक्तिசொன்னோமாகிலிப்படி प्रसङ्गம் வரும். अन्वयव्यतिरेकदर्शननियताकारविशेषविशिष्टமான वस्तुவுக்கு कारणत्वம் சொல்லுகையாலும், परस्परसम्बद्धங்களான कारणங்களெல்லாம் கூடி कार्यத்தைப் பண்ணுகையாலும் ஒரு दोषமும் வாராது. கண்டபடி कारणत्वமென்றுகொண்டு कृतार्थனாய்

कार्यकारणभावविरहात् कारणस्य कार्यपूर्वकालवृत्तित्वमावश्यकमेवेति, स्वस्य स्वकारणत्वे स्वाभावकाले स्वसत्त्वाभ्युपगमविरोधः उत्पत्तिवैयर्थ्यादिकं च भवत्येवेति। अथ द्वितीयं दूषयति- परத்தாலே इति। तुरीवेमादितोपि घटोत्पत्तिप्रसङ्ग इत्यर्थः। स्वं स्वव्यतिरिक्तं चेत्युभयस्माद् भवतीति तृतीयपक्षमपिक्षिपति- இரண்டாலும் इति। இரண்டு दोषமும் इति। स्वाभावकाले स्वसत्ता विरोधः, परत्वाविशेषात्सर्वस्मात्सर्वोत्पत्तिश्चेत्यर्थः। என்னில் इत्यन्तं शङ्काग्रन्थः। स्वाशयं दर्शयित्वा इदं सर्वं सिद्धान्त्याशयानभिज्ञताविजृम्भितमेवेति दूरीकरोति- परत्वमात्रம் इति। कार्यं परस्मादेवोत्पद्यते, न स्वस्मात्। अतो न प्रथमतृतीयपक्षयोरुत्थितिः। परस्मादिति पक्षेपि, न परत्वमात्रं कार्योत्पत्तिप्रयोजकमुच्यते, कार्योत्पत्तिप्रयोजकं- कारणतावच्छेदकमिति यावत्। येनोक्तातिप्रसङ्गो भवेत् इत्यर्थः। किन्तर्हि कारणतावच्छेदकमित्यत्राह- अन्वयव्यतिरेकेति। दण्डादिसत्त्वे घटसत्त्वं, दण्डाद्यभावे घटाभाव इतीमावन्वयव्यतिरेकौ। तयोर्भूयोदर्शनेन नियतो निश्चित आकारः विशेषः दण्डत्वादिः नतु परत्वमात्रम्। तद्विशिष्टवस्तुन एव कारणत्वान्न पूर्वोक्तातिप्रसङ्ग इत्यर्थः। ननु दण्डत्वचक्रत्वादिधर्मविशिष्टकारणव्यक्तिषु एकैकसत्त्वेपि कार्योत्पत्त्यापत्तिः। अन्यथा तासां प्रत्येकं कारणत्वस्यैव भङ्गप्रसङ्गादित्यत्राह- परस्परेति। न हि कारणसत्त्वे अवश्यं कार्यमिति नियमः। कारणत्वस्य स्वरूपयोग्यतामात्रपर्यवसितत्वात्। अपि तु सामग्रीसत्त्वे। साच कारणकलापः। तस्या एव च फलोपधायकत्वमिति न कोपि दोष इति भावः। ननु पूर्वं "ஒரு युक्ति சொன்னோமாகில்" इत्यादिना युक्तिनिरपेक्षं अन्वयव्यतिरेकदर्शनमात्रेण कार्यकारणभावाङ्गीकारसूचनात् तव मते वक्ष्यमाणदोषप्रसङ्ग इत्याशङ्कते- கண்டபடி इति।

வியவைகளுக்குப பிறந்த பிறகு வந்த ஸத்வம், முன்பு இல்லை என்கிற அதனுடைய அஸத்வமாகிற முன்பிருந்த (கபால) ஓட்டுருவத்திற்கு எதிர்நிலையாக இருத்தலேயாகும். அல்லது சூந்யமாயிருததல் அன்று. பிற்காலத்தில் ஸதவமும் ப்ரமாணம் காட்டுமபடியில் இருத்தலேயாகும். இப்படி கணடபடியைக் கொள்ளுவார்க்கு மேலும் மேலும் கேள்வி எழாது

ஒரு கார்யம் பிறப்பது தன்னாலேயாகில் அப்போது தான் முன்பே இருப்பதாகத் தேருவதால், அப்படிப்பட்டது இப்போது பிறக்கவேண்டாம். தான் இல்லாதகாலததில் தான் இருப்பதாகக் கொள்வதில் விரோதமும் உண்டு. தன்னைவிட வேறொன்றால் பிறக்கிறவில் எல்லாமே தன்னைவிட வேறாகையால், எல்லாத்திலிருந்தும் எல்லாம் பிறக்கலாம். தன்

निरूपणार्थयुक्तियைக் கழிக்கப்பார்த்தால் तैलोत्पत्तिகண்ட तिलங்களுக்கு तैलकारणत्वமாய், तिलान्तरங்களுக்கு तैलकारणत्वம காணுமையாலே அவற்றை तैलार्थिகள் उपादानம் பண்ணத் தவிரவேண்டாவோ என்னில்—

இது दत्तोत्तरம். तिलजातीयம் तैलोत्पत्तिकारणமென்று प्रत्यक्षத்தாலே सामान्येन व्याप्ति-ग्रहणம் பண்ணினால் विशेषத்தில் अनुमानத்தாலே प्रवृत्तिகூடும். तैलोत्पत्तियில் परत्वतिलत्वங்க-

यथादर्शनमित्यर्थः। कृतार्थत्वं- अन्यानपेक्षत्वम्। अत्रान्यशब्दार्थमाह- निरूपणार्थयुक्तियை इति। कार्यं किं स्वस्मादुत्पद्यते, अथ परस्मादित्यादिनिर्णयार्थविमर्शमित्यर्थः। கழிக்கப்பார்த்தால் त्यक्तुमिच्छसि चेत्। एवमङ्गीकारे दोषः प्रदर्श्यते- तैलोत्पत्तिகண்ட इति। अत्रेदं बोध्यम्- तैलोत्पत्तेः पूर्वं तदर्थिनः नियमेन तिलानुपाददानाः तत्कारणत्वबुद्ध्यैव, तत्र प्रवर्तन्ते इति वक्तव्यम्। अन्यथा व्रीह्यादिष्वपि ते प्रवर्तेरन्। तत्तव मते न युज्यते। यत्र तैलोत्पत्तिर्दृष्टा तस्या एव तिलव्यक्तेर्दर्शनानुगुण्येन तैलकारणत्वनिश्चयात्, तत्र कार्यस्य निष्पन्नत्वेन न कार्यार्थिनां तत्र प्रवृत्तिः। यस्यान्तु तिलव्यक्तौ सा न दृष्टा, तस्यास्तत्कारणत्वस्यैवासिद्ध्या तत्रापि न तैलार्थिनां प्रवृत्तिरिति लोकयात्राविहतिरिति। என்னில் इति। कार्यकारणभावस्य निरूपणार्थयुक्तिसामान्य-निरपेक्षत्वं व्यक्तिविशेषनिष्ठत्वं च सिद्धान्त्यभिप्रेतमित्यभिमानेन एवं पूर्वपक्षे प्राप्त इत्यर्थः।

वस्तुतस्तु कार्यकारणभावस्य न परत्वमात्रं प्रयोजकमिति न युक्तिविशेषनिरपेक्षत्वं किन्तु तत्तज्जातीयनिष्ठत्वमित्येतदेव सिद्धान्त इत्यभिप्रायेण समाधत्ते- இது दत्तोत्तरमिति। "अन्वयव्यतिरेकदर्शननियताकारविशेषविशिष्टवस्तु, कारण" मित्यधस्तादुक्तार्थस्यानवबोध-विजृम्भितमिदं चोद्यमित्याशयः। तदेव विवृणोति- तिलजातीयमिति। अनेन तत्तद्व्यक्तयोः न कार्यकारणभाव इत्युक्तं भवति। कथं तत्तज्जातीयेषु कार्यकारणभावग्रह इति चेदाह- सामान्येन व्याप्तिग्रहणம் इति। व्याप्तिग्रहणस्य भूयोदर्शनं हेतुः। तच्च व्यक्तिबहुत्व-

*ணும் மற்றொன்றும் பிறக்கிறதென்று இரண்டு கட்சிகளையும சேர இசைந்தால், இரண்டில் சொன்னதோஷமும ஒன்றுசேரவரும் என்னில்— கார்யம் பிரிதொருபொருளாலே உண்டாகின்றது என்பதுவே ஸித்தாந்தம். ஆனால் அது கார்யத்தைவிட பிரிதொன்றாக இருப்பதே அமையும் என்று நாம் சொன்னோமாகில் முன் நீ காட்டிய தோஷம் வரும் இப்படியும் அப்படியும் நன்கு ஆராய்ந்தறிந்த குறிப்பிட்ட பிரிதொன்றைக் காரணமாகச் சொல்வதால் முன் சொன்ன தோஷம் தட்டாது. மேலும அப்படிப்பட்ட காரணங்கள் பலவும் ஒருங்குசேர்ந்து கார்யத்தை நடத்துகின்றன கார்யம் உண்டாகக்கண்டு அதற்கு அநுகுணமாக காரணத்தை தீர்மானிப்பதாகில், அதற்குமேல் நிருபணம் தேவையற்றுப்போனால், எண்ணெய் உண்டாகக் கண்ட எள்ளுக்குக் காரணத்வம் என்றதாகி, வேறு எள்ளுக்கு தைலகாரணத்வம் தவிர வேண்டும்படியாகாதோ? அதை எண்ணெய்த் தேவை உள்ளவர் கொள்ளவேண்டாதபடி முடியாதோ? என்னில்—*

ளிரண்டுக்கும் காரணत्वம் अन्वयव्यतिरेकनियमविषयप्रत्यक्षसिद्धமாகையாலே இவற்றில் ஒன்றைக் கொண்டொன்றைத்தள்ளவிரகில்லை. परत्वம் सर्वकारणानुवृत्तம். तिलत्वादिகள் कारणविशेष-नियतங்களாயிருக்குமென்றிவ்வளவே विशेषம்.

---

एव। नैकव्यक्तिमात्रे पर्यवस्यति। न च तत्तन्नक्षत्रोदयास्तमयादिषु व्याप्तिग्रहः व्यक्तिबहुत्वं विना कथं भवतीति वाच्यम्। तत्रैकस्यैव नक्षत्रस्य दिनभेदकृतबहुत्वसत्त्वेन भूयोदर्शनसम्भवेपि, प्रकृते तिलादिव्यक्तीनां एकैकस्या अपि तत्तत्तैलोत्पत्तिकालविनाशित्वेन व्यक्तिभेदं विना भूयोदर्शनासम्भवात्। तथा च नानाव्यक्तिषु तिलत्वावच्छिन्नासु भूयोदर्शनेन तैलत्वावच्छिन्नव्याप्तिग्रहणात् तत्कारणत्वनिश्चये सति तैलोत्पादकतयेतःपूर्वमदृष्टतिलव्यक्तिविशेषेपि इदं तैलकारणं, तिलजातीयत्वात् पूर्वदृष्टतिलवदिति तैलकारणत्वानुमानेन तदर्थिनां प्रवृत्तिरुपपद्यत एवेति तात्पर्यम्। ननु सामान्येन व्याप्तिग्रहणे कार्ये सर्वत्र कारणस्य तद्भिन्नत्वरूप परत्वमेव कार्योत्पत्तिप्रयोजकतया दृष्टं। न तु तिलत्वादि, व्यभिचारादिति तस्यैव कार्यकारणतावच्छेदकत्वात् सर्वं सर्वस्मादपि जायेतेत्युक्तदोष एवेत्यत्राह- तैलोत्पत्तियில் इति। कार्यमात्रे तथा व्याप्तिग्रहेपि तैलोत्पत्तौ अन्वयव्यतिरेकाभ्यां व्याप्तिग्रहे तिलत्वपरत्वयोरुभयोरपि तदुत्पत्तिप्रयोजकत्वदर्शनात् तिलत्वं परित्यज्य न परत्वमात्रस्य कारणतावच्छेदकत्वस्वीकारो युक्तः। नवापरत्वं परित्यज्य तिलत्वमात्रस्येति नोक्तदोष इति भावः। कारणत्वம் - कारणतावच्छेदकत्वम्। ननु परत्वरूपव्यापकधर्मावच्छिन्नस्य तैलकारणतयैवोपपत्तौ तिलत्वरूपव्याप्यधर्मावच्छिन्नस्य कारणत्वाभ्युपगमो निष्प्रयोजनक इत्याशङ्कायामाह- परत्वं सर्वकारणानुवृत्तம் इति। सर्वकार्यकारणानुवृत्तमित्यर्थः। तथा च परत्वमात्रावच्छिन्नस्य तैलकारणत्वे तैलमपि कार्यत्वमात्रावच्छिन्नमेवोत्पद्येत। न तु तैलत्वविशेषितम्। तस्य तावन्मात्रप्रयोजकत्वादिति कार्यविशेषानुगुणकारणविशेषनियततिलत्वावच्छिन्नस्यापि तैलकारणत्वमवश्यप्राप्तमित्याशयः। अथवा, सर्वकारणानुवृत्तம் - एककार्यं प्रति उपादाननिमित्तसहकारिभेदभिन्नसर्वकारणसाधारणम्। कारणविशेषनियतங்கள்- उपादानादिकारणविशेषमात्रनियतमित्यर्थः। परत्वञ्चात्र कार्यापेक्षया बोध्यम्। तेन कार्यस्यापि किञ्चिदपेक्ष्य परत्ववत्त्वेपि न क्षतिः।

---

ஆங்காங்கு கண்டபடியில், என்னும் இனம் எண்ணெய்க்குக் காரணம் என்று பொதுவிலே திர்மானிக்தது குறிப்பிட்ட எள்ளும் அவ்வினத்திலடங்கியதால், எண்ணெய்க்கு ஹேதுவாகலாமென்று ஊஹித்து முயலக்கூடும். ஆகையால் எண்ணெய் பிறக்கக் காரணமாயிருக்கும் வஸ்து அதைவிட வேறானதாயும் அதிலும் எள் இனமாயும் இருப்பது அவச்யம் எனக் காண்பதால் ஒன்றைக்கொண்டு இன்னொன்றைத் தள்ளலாகாது. கார்யத்தைவிட காரணம் வேறாக இருக்கவேண்டுமென்பது பொதுவிதி. எள் இனமாக இருக்க-

இப்படியே असत्वान्नास्ति सम्बन्धः कारणैस्सत्वसङ्गिभिः। असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ என்று சிலர் சொன்னதுவுமித்தாலே दत्तोत्तरம். कार्यத்துக்கு कारणत्वம்கொண்டு संयोगादिसंबन्धம் வேணுமென்கை अयुक्ताङ्गस्वीकारமாம். कारणங்களுடைய अन्योन्यसम्बन्ध-

---

अथ कार्यस्य स्वपूर्वकालासत्त्वमत्र स्थापितमसहमानस्साङ्ख्यस्सत्कार्यवादश्रद्धया यदाह, तदप्यपाकरोति- இப்படியே इति। कार्यकारणभावानङ्गीकर्तृचार्वाकमाध्यमिकादिक्रमेणेत्यर्थः। अस्याग्रे "சிலர்சொன்னதுவும்" इत्यनेनान्वयः। சிலர்- साङ्ख्याः। "असत्वा"दित्यादिस्साङ्ख्यवृद्धकारिकेति तत्त्वकौमुद्यामुक्तम्। तदर्थश्च- सत्त्वसङ्गिभिः- सत्कार्योत्पादनशक्तैः कारणैस्सह कार्यस्यासत्त्वात्- असत्त्वाङ्गीकारे। असत्त्वेनास्तिसम्बन्ध इत्येव पाठो दृश्यते तत्त्वकौमुद्याम्। नास्ति सम्बन्धः- सम्बन्धो न स्यात्। सम्बन्धस्योभयनिष्ठत्वेन कार्यस्यापि सत्त्वापेक्षणात्। तदुक्तं साङ्ख्यसूत्रे- उपादाननियमादित्यत्र......न हि घटादिकार्यमप्राप्तैरन्यत्र दण्डचक्रादिभिस्तस्योत्पत्तिः। तन्त्वादिभिर्वा पटादेः। अतोवगम्यते- स्वकार्यं प्राप्तैरेव निमित्तैरुपादानैश्च स्वसाध्यसाधनमिति। प्राप्तिश्च द्विनिष्टेति साध्यस्यापि साधनवत् पूर्वभावित्वं स्यादेवेति सदेव साध्यमिति। असम्बद्धस्य कारणसम्बन्धरहितस्य कार्यस्य, पूर्वमसत इति यावत्, उत्पत्तिमिच्छतः नैयायिकादेः, न व्यवस्थितिः क्षीरादेव दधीत्यादि नियमो नस्यात् इति। तदप्युक्तं तैः- "यदि प्रागसद्धेतुभिरप्राप्तं, हेतुवृत्तितादात्म्यरहितश्च तत उत्पद्यते, तदा सर्वस्मात्सर्वसम्भवस्स्यात्। न चासावस्ति। असतोप्यप्राप्तस्यापि सृष्टिहेतुत्वं शक्तिनियमान्नियम्यत इत्यपि न। यतो हेतुगतशक्तिश्च कार्यगर्भत्वरूपा। तिलानां तैलोत्पादनशक्तिर्हि तैलगर्भत्वमेव। अन्यादर्शनात्। तदशक्तिश्च सिकतानां तदभाव" इति। இத்தாலே दत्तोत्तरம் इति। वक्ष्यमाणेन निरस्यमित्यर्थः। इदमेव विवृण्वन् कारणस्य कार्यगर्भत्वे दूषणद्वयमाह- कार्यத்துக்கு कारणत्वம் கொண்டு इति। कार्यस्यैव कारणत्वं स्वीकृत्येत्यर्थः। तन्मते उपादानोपादेययोरभेदस्य "कारणभावाच्चे"त्यादिसाङ्ख्यसूत्रसिद्धत्वादिति भावः। अतएव "संयोगादिसंबन्धம் வேணும்" इत्यत्रादिनाऽभेदसम्बन्धपरिग्रहः। निमित्तकारणकार्ययोः पुनस्संयोगसम्बन्धः। अथवा कार्यத்துக்கு कारणत्वம்- तत्तत्कार्यनिरूपितकारणत्वमित्यर्थः। संयोगादिसंबन्धம்- तत्तत्कार्येण सहेति शेषः। வேணும்- कार्यकारणभावाङ्गतया स्वीकार्यम्। अयुक्ताङ्गस्वीकारமாம் इति। कार्यकारणभावं प्रति अनुपयुक्ताङ्गस्वीकाररूपजाति-

---

வேண்டுமென்பது எண்ணெய்க்கு மட்டில் விசேஷ விதி. இதனாலே சிலர் "கார்யம் முன்பு இல்லாமற்போனால் காரணங்கள் கார்யங்களோடு ஸம்பந்தப்பட முடியாதுபோம். அப்படியே ஆகுக! என்றால், காரணங்கள் கார்யங்களோடு ஸம்பந்தமின்றியே அவைகளை உண்டாக்குவதானால், எதுவும் எதையும் உண்டாக்கலாம்" என்று கேட்டதும் அடிபட்டுப்போகிறது. இது தவறு அல்லவா? காரணத்துக்கு கார்யத்தோடு ஸம்யோகாதிஸம்பந்தங்கள் (ஒட்டுதல்) வேண்டுமென்பது அநாவச்யகமாகும். காரணங்கள் கார்யத்துக்கு கிட்டவட்டமாக முன்பிருந்து தங்களுள் ஒன்றை ஒன்று கலந்து நிற்பதுதான் அவச்யமாகும். வேறுவிதமான கார்யகாரணஉற-

மும் கார்யத்தைப்பற்ற नियतपूर्वभावित्वமும் सम्बन्धமாகப்போருதென்றபோது युक्ताङ्गपरित्याग-மும் வரும். மற்றும் विकृताविकृतादिविकल्पपरिहारம் आरम्भणाधिकरणादिகளிலே கண்டு கொள்

---

दोषस्स्यादित्यर्थः। अयुक्ताङ्गस्वीकारयुक्ताङ्गत्यागरूपेण जातिद्वैविध्यं न्यायपरिशुद्धिग्रन्थादितो वगन्तव्यम्। अङ्गं हि प्रधानस्याराद्वा सन्निपत्यवोपकारकम्। इदं च कार्यस्य पूर्वमेव कारणे सत्त्वं, कार्यकारणभावस्यानुपकारकमित्येतावदेव न, प्रत्युत प्रतिबन्धकञ्चेति पूर्वमेवावेदितमिति भावः। यदि कार्यकारणयोस्संयोगादिस्सम्बन्धस्तद्भावं प्रत्यनुपयुक्तः, कस्तर्हि सम्बन्धस्तत्रोपयुज्यते इत्यत्र तं निर्दिशन् पूर्वपक्षिणः तत्त्यागे दोषश्च दर्शयति- காரணங்களுடைய इति। एककार्यं प्रत्यपेक्षितानामुपादानादीनां नानाकारणानां परस्परं यथायथं सामानाधिकरण्यं सम्बन्धः। तेषामेकैकस्यापि कार्येण संबन्धः नियतपूर्ववृत्तित्वम्। न तु संयोगादिः। एतावतैवालं कार्योत्पादनाय। तथाचास्योपयुक्तांशस्य परैः परित्यागात् पूर्ववद्युक्ताङ्गहानिश्च जातिरिति बोध्यम्। सर्वार्थसिद्धौ तु --...समश्च प्राप्तावप्यति प्रसङ्गः। न हि प्राप्तयोरपि रज्जुघटयोर्जन्यजनकता। तत्र नित्यप्राप्तिर्नास्तीति विशेष इति चेन्न, निमित्तानामपि घटादिभिर्नित्यप्राप्त्यसंभवात्। उपादाने तु स्यादिति चेन्न, निमित्तवदेव नित्यप्राप्तिनैरपेक्ष्यात्। त्वत्पक्षेण च- यद्येन नित्यप्राप्तं, न तत्तस्योपायं, यथा पटस्य तन्तुः। तथा च पटः। तस्मान्न तन्तूपादेय इति प्रसङ्गात्...'' इत्यादि उक्तं द्रष्टव्यम्।

यत्तु ''किङ्कारणमविकृतमेव कार्यमुत्पादयति, अथवा विकृतम्? आद्ये कारणस्याविकृतस्य सर्वदा कार्यजनकत्वापत्तिः। द्वितीये विकृतिरूपकार्योत्पत्तावप्येवं चोद्येऽनवस्थापात इति कार्यकारणभावापलापायाद्वैतिभिः प्रयतितं, तस्यापि परिहारः आरंभणाधिकरणे भाष्यकारैः वैशेषिकमुखेन भाषित इत्याह- மற்றும் इति। अन्यश्चेत्यर्थः। आरंभणाधिकरणेति। ''तदनन्यत्वमारंभणशब्दादिभ्य इत्यादिसूत्रघटितं तदधिकरणम्। तदर्थश्च- तस्मात् परमकारणाद्ब्रह्मणोनन्यत्वं कार्यभूतस्य जगतो भवति। कुतः ''वाचारंभणं विकारो नामधेयमित्यादिभ्य आरंभणशब्दादिघटितेभ्यो वाक्येभ्यस्तदुपपादयद्भ्यस्तथावगमात्'' इति। तत्र च भाष्यं- ''यच्चोक्तं कारणस्वरूपादविकृताद्विकृताच्च कार्योत्पत्तिर्न संभवतीति, तदसत्। देशकालादिसहकारिसमवहितात्कारणात् कार्योत्पत्तिदर्शनात्। तत्समवधानं च विकृतस्याविकृतस्य वा न संभवतीति यदुक्तं, तदयुक्तम्। पूर्वमविकृतस्यैव कालादिसमवधानसंभवात्। अविकृतत्वाविशेषात्पूर्वमपि तत्समवधानं स्यादिति

---

வைடபத்தியகேள்விகளுக்கெல்லாம் ஆரம்பணாதிகரணாதிகளிலேயே விடைகாணலாம். பிறப்பு-மிறப்புமற்றவை, முயற்கொம்புபோல் சூன்யங்களேயாகும் என்பதும் தவறு. நித்யம் என்று நாம் நம்பும்பல பொருள்கள். அப்படி ப்ராமாணிகங்களாயிருந்தும் கூறப்படுகின்றனவே.

வது. उत्पत्तिनाशங்கள் घटियாததற்கு शशविषाणத்துக்குப்போலே तुच्छत्वம் नियतமாகவேணும் என்றதுவும் प्रमाणसिद्धनित्यसद्भावத்தாலே परिहृतம்.

**உங்கள் மதப்படி துச்சம் என்றாற்போல் சொல்லும் பதங்கள் அறிவைத்தா.**

இவர்கள் सर्वத்தையும்பற்ற असदलीकशून्यतुच्छनिरभिलप्यनिरुपाख्यनिस्स्वभावमिथ्यादि-शब्दங்கள சொல்லுமவை लोकसिद्धव्युत्पत्तिप्रकारத்தாலே சொல்லப்பார்க்கில் निरुपाधिकनिषेधம் கூடாமையாலே देशकालस्वभावनियतनिषेधपरங்களாகக்கொள்ளவேணும். அப்போது देशादि-

---

चेन्न, तत्समवधानस्य कारणान्तरायत्तत्वस्यतदायत्तत्वाभावात् इति। एवं "पूर्वம் असत्தாகையாலே" इत्यारभ्यैतावत्पर्यन्तं घटादिकार्यद्रव्यस्य माध्यमिकाभिमतं तुच्छत्वं निराकृत्य, अथ नित्यद्रव्य-स्यापि तदभिमतं तन्निराकरोति- उत्पत्तिनाशங்கள் घटियாததற்கு इति। नित्यस्येत्यर्थः। प्रमाण-सिद्धनित्येति। समुदायाधिकारस्थापितप्रामाण्यवेदादिसिद्धजीवेश्वरादीत्यर्थः।

अथ नित्यस्यानित्यस्य च वस्तुनस्सर्वस्य तुच्छत्वमेतावता निरस्य माध्य-मिकानां तेषु तुच्छादिशब्दप्रयोगमपि निरस्यति- இவர்கள் इति। माध्यमिका अन्ये बौद्धा अद्वैति-नश्चेत्यर्थः। अस्य சொல்லுமவை इत्यनेनान्वयः। माध्यमिकेन चतुष्कोटिविनिर्मुक्तत्वाङ्गीकारात् असच्छब्देन निर्देश इतरबौद्धानामेव बोध्यः। मिथ्यादिशब्दोऽद्वैतिनाम्। आदिना अनृतानिर्वच-नीयादिशब्दग्रहणम्। சொல்லுமவை- प्रयुज्यमानाः। अन्वयश्चास्योपरि- "கொள்ளவேணும்" इत्यनेन। கொள்ளவேணும்- கொள்ளப்படவேணும்- अङ्गीकर्तव्या इत्यर्थः। अत्र द्वेधा विकल्प्य प्रथमं दूषयति लोकसिद्धव्युत्पत्तीति। अस्तीति सत्- न सत्- असदित्यादिरीत्या पदपदार्थवर्णने-त्यर्थः। निरुपाधिकनिषेधம் கூடாமையாலே इति। सामान्यतो निषेधासंभवादित्यर्थः। उपाधिः- विशेषणम्। 'नसत्' इति सामान्यतो निषेधे 'कुत्र कदा केनाकारेणे'ति आकाङ्क्षोदयात्, तच्छान्तये अस्मिन्काले अमुष्मिन् देशे अनेनाकारेणेदमसदित्येव प्रयोक्तव्यमिति ते शब्दाः देशकालाकारविशेष-विशिष्टवस्तुनिषेधपरा इत्येवाङ्गीकार्यमिति भावः। स्वभावः- घटत्वादिराकारः। नियतत्वं विशि-ष्टत्वम्। नियतस्य वस्तुनो निषेधः। नियतो विशिष्टो वा निषेधः। वैशिष्ट्यं च विषयतासम्बन्धेन। नन्वस्तु तथैव, तावतापि कस्तव लाभो भविष्यतीत्यत्राह- அப்போது इति। एतद्देशकालाकार-विशिष्टतया वस्तुनो निषेधे देशकालाकारान्तरविशिष्टतया वस्तुनस्सत्यत्वं सेत्स्यतीति न सर्वथा

---

*நீங்கள் எப்பொருளையும் பற்ற எடுத்த எடுப்பில் அஸத், சூன்யம், துச்சம், சொல்ல-வும் நினைக்கவும் முடியாதது, தன்மையற்றது. மித்யை என்றெல்லாம் சொல்லும் சப்தங்கள் உலக வழக்கையொட்டி ப்ரயோகிக்கப்பட்டதாகில், உலகில் மொத்தமாக எதையும் உண்-டென்றோ இல்லை என்றோ சொல்லாாகையால் "இது ஒரு இடத்தில் ஒருபொழுது ஒருவிதத்-தில் இல்லை" என்றதாகவே அஸத என்பது போன்ற சொற்களுக்கு பொருள் தேரும், நமக்கு-*

मेदத்தாலே वस्तुக்களுக்கு सत्यत्वமுண்டாம். लोकसिद्धव्युत्पत्तியை अनादरिக்கில் இவற்றுக்கு ஒன்றைப்பற்ற बोधकत्वமும் बाधकत्वமும் கூடாது. वन्ध्यासुतादिवाक्यங்களிலும் व्युत्पत्तिसिद्धपदार्थपरित्यागத்தில் प्रतिनियतार्थबोधकत्वம் घटियாது. व्युत्पन्नपदार्थस्वीकारத்தில் अनन्वयाग्रहादि-

---

पदार्थानां तुच्छत्वादिकमित्याशयः । न च शशशृङ्गमसदित्येवमेव प्रयोगदर्शनात्, न निषेधस्य देशकालाद्युपाधिसमभिव्याहारनियम इति वाच्यम् । तत्रापि "सर्वदा सर्वत्रे"त्येवं देशकालादिनिर्देशस्याभिप्रेतत्वात् । अस्तु तर्हि "घटोऽसन्नि"त्यत्रापि तथैव सर्वकालदेशविवक्षेतिचेन्न । अद्ययावत् घटादौ शशविषाणादितुल्यताया हेत्वन्तरेणासिद्ध्याऽऽपादनायोगात् । द्वितीयं विकल्पं खण्डयति– लोकसिद्धव्युत्पत्तியை इति । लोकसिद्धव्युत्पत्तिप्रक्रियामनादृत्य निरुपपदमेवासदित्यादिनिषेधाङ्गीकारे, तस्य वाक्यस्याशान्ताकाङ्क्षतया निराकाङ्क्षबोधजनकत्वाभावात्, ततस्तव शून्यत्वबोधोपि न भविष्यति, न परेषां मते सत्यत्वबाधोपीति इदं वाक्यमुभयेषामप्यकिञ्चित्करमित्यर्थः । बाधकत्वமும் इत्यत्रापि ஒன்றைப்பற்ற इत्यनुवर्तनीयम् । सत्यत्वादिकं प्रतीत्यर्थः । ननूक्तमयुक्तम् । "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति चेति रीत्याऽत्यन्ततुच्छवन्ध्यासुतादिष्वपि तत्तच्छब्दैः शाब्दबोधोत्पत्त्या, तत्र लोकसिद्धव्युत्पत्त्यनुरोधस्य दुष्करत्वादित्यत्राह- वन्ध्यासुतादिवाक्यங்களிலும் इति । अयमाशयः- एषवन्ध्यासुतो यातीत्यादिवाक्येषु "वन्ध्यासम्बन्धी सुत" इत्येव कुतश्शाब्दबोधः, घटसम्बन्धी पट इति कुतो नेति पृच्छायां तच्छान्तये वन्ध्याशब्दो प्रजस्त्रीविशेषवाचकः, सुतशब्दश्च पुत्रस्येत्येव लोकसिद्धव्युत्पत्तेराश्रयणीयत्वादिति युक्तमुक्तमिति । ननु तत्र शाब्दबोध एवायुक्तः । शाब्दबोधं प्रति योग्यताज्ञानस्य हेतुत्वात् । अत्र च "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिते"ति रीत्या विशेष्ये विशेषणवत्ताज्ञानरूपस्य तस्यासंभवात् । न हि सुते वन्ध्यासंबन्धो वस्तुतो भवितुमर्हतीत्यत्राह- व्युत्पन्नपदार्थस्वीकारத்தில் इति । पदार्थस्वीकारे सतीत्यर्थः । तथा च तत्र वाक्यार्थबाधेपि न व्युत्पन्नपदार्थबाध इत्याशयः । वाक्यार्थबाधेपि योग्यताज्ञानमुपपादयति- अनन्वयाग्रहादिகளாலே इति । एतदुक्तं भवति- विशेष्ये विशेषणवत्त्वज्ञानस्य योग्यताज्ञानरूपत्वे. तस्मात् शाब्दबोधस्याविशेषप्रसङ्गः । वाक्यार्थस्यापूर्वत्वं

---

*மிது உடன்பாடே. அப்போது "இது வேறு இடத்தில் வேறுவிதமாக உண்டென்றல்லவா முடிகிறது. உலக வழக்கை மீறி ப்ரயோகிக்கப்பட்டவையாகில் அப்பதங்கள் உம்முடைய சூன்யத்வத்தை போதிக்கவும், பிறருடைய ஸத்யத்வத்தை பாதிக்கவும் முடியாதவையாம். மலடி மகன் என்பதுபோன்ற சொற்றொடர்களும், பதங்களுக்கு உலகவழக்கிலேற்பட்ட பொருளைக்கொள்ளாதபோது, குறிப்பிட்ட ஒரு பொருளைத் தான் போதிக்கும் என்பது இல்லாதுபோம். மேற்கண்ட வாக்யத்தில் மலடி மகன் என்ற பொருட்கள் தனித்தனியே ப்ரஸித்தமாயினும், அவைகளுக்கு கூட்டுறவு இல்லையாகையால் இரண்ட பொருள் எப்படி– தோன்றக்கூடுமெனில்— அதிலுள்ள தவறு தெரியாதவர்களுக்கும் ஸந்தேஹமுள்ளவர்க்கும் இரண்ட பொருள் தோன்றலாம். "ஒன்றும் சோரதது" "தன்மையற்றது 'என்ற'சொற்களும்*

कளாலே निर्वाहம். अनन्वितनिर्विशेषादिशब्दங்களும் अन्वितविशिष्टबोधकங்களாம். ஒருகாலத்-

यत्र तत्र तस्य शाब्दबोधात्पूर्वमसंभवेन नियतपूर्ववृत्तित्वानुपपत्तिश्चेत्यादि पर्यालोच्य नवीनाश्शाब्दबोधंप्रति अनन्वयग्रहरूपायोग्यतानिश्चयस्य प्रतिबन्धकत्वं, तदभावस्यानन्वयाग्रहस्य हेतुत्वं चाङ्गीचक्रुः। प्राचीनाः पुनः विशेष्यविशेषणसंबन्धज्ञानस्य संशयनिश्चयसाधारणज्ञानत्वेन शाब्दबोधंप्रति हेतुत्वं, शाब्दबोधस्य च निश्चयत्वेन कार्यत्वमिति तस्मादस्य विशेषः। वाक्यार्थस्यापूर्वत्व स्थले तु प्रथम एव पक्षस्समाश्रयणीय इत्याहुः। तथा च वन्ध्यासुतादिवाक्यात् यद्यपि तत्त्वदर्शिनां योग्यताज्ञानविरहेण शाब्दबोधानुत्पत्त्या विशकलितपदार्थोपस्थितिमात्रमेव, तथापि अतत्त्वविदां तयोरनन्वयाग्रहा,न्वयसंशयादिना शाब्दबोधनिर्वाह इति। मूलेऽनन्वयाग्रहादीत्यादिना संशयसंग्रहः। केचित्तु तत्त्वविदामपि बाधज्ञानकाले इच्छारूपोत्तेजकबलात् जायमानाहार्यज्ञानरूपां सुते वन्ध्यासंबन्धवत्ताबुद्धिं आदिपदग्राह्यामाहुः। तन्न। परोक्षस्थले बाधबुद्धिं प्रतीच्छाया उत्तेजकत्वानङ्गीकारात् आहार्यज्ञानानुत्पत्तेः। आहार्यपरोक्षानभ्युपगमश्च योग्यताविचारप्रकरण एव दिनकरीय, रामरुद्रीयादिषु विशदमुपपादितः। ननु लोकसिद्धव्युत्पत्त्यनादरे शब्दस्य बोधकत्वं नास्तीत्येतदसिद्धम्। अनन्वितादिशब्देषु लोकसिद्धव्युत्पत्तिं विनापि पराभिमताखण्डस्वरूपबोधजननादित्यत्राह– अनन्वितेति। भेदानन्वितं निर्विशेषमित्यादयस्तत्र तत्र प्रयुज्यमाना अपि शब्दा वस्तुतो यथालोकव्युत्पत्ति, "प्रकृतिप्रत्ययोगेन, हि पदत्वम्। प्रकृतिप्रत्ययोरर्थभेदेन पदस्यैव विशिष्टार्थपरत्वमवर्जनीय"मिति भाष्योक्तया दिशा अनन्वितत्वादिधर्मान्वित, निर्विशेषत्वादिधर्मविशिष्टवस्तुबोधका एवेतिभावः। ननु विप्रतिषिद्धमिदमभिधीयते, यदनन्वितादिशब्दा अन्वितादिकमभिदधतीति। न हि नीलमिति पीतमभिधत्ते इति चेन्न। अनन्वितत्वस्य विवक्षितान्वयराहित्यरूपतया, अन्वितत्वस्य तादृशराहित्यसहितत्वात्मकत्वात् विरोधशान्तेः। एवमेव निर्विशेषादिशब्देपि भाव्यम्। अत्र केचित्- "निर्विशेषशब्दस्यैवेह विशिष्टार्थबोधकत्वं समर्थ्यते। नत्वनन्वितशब्दस्यापि। अनन्वितनिर्विशेषादिशब्दங்களும் इत्यत्रानन्वितं यन्निर्विशेषादिकं तस्य शब्दा इत्यर्थः। इह निर्विशेषस्यानन्वितत्वकीर्तनं पराभ्युपगमानुवादः। उपरि- "अन्वितविशिष्टबोधकங்களாம்" इत्यत्रापि अन्वितं- व्यक्त्यन्वितं, यद्विशिष्टं, तस्य बोधका इत्यर्थ इति व्याचक्षते। तन्न। इहानन्वितशब्दनिर्वाहस्यानभिप्रेतत्वे पूर्वोत्तरयोरनन्वितशब्दप्रयोगस्य व्यर्थत्वात्। पराभ्युपगमस्य खण्डनप्रकारेणैव सूहत्वात्। अन्वित, यद्विशिष्टमिति व्याख्याने पुनरुक्तिप्रसङ्गाच्चेति भाव्यम्। यद्यप्यसन्मतेपि "अनन्वित, निर्विशेषादिशब्दங்களும் विशिष्टबोधकங்களாம்" इति प्रयोगस्यैव पर्याप्ततया, "अन्वितविशिष्टबोधकங்களாம்" इत्यन्वितपदप्रयोगोऽ

திலேயாதல் ஒரு देशத்திலேயாதல் ஒரு प्रकारத்தாலேயாதல் निषेधविषयமாயிருக்குமதுக்கு, ஒரு कालத்திலும் ஒரு देशத்திலும், ஒரு படியாலும் विधिविषयत्वம் கூடாது என்று कूर्मरोमादि- களிலே காண்கையாலும், सर्वदेशकालस्वभावங்களாலும் विधिविषयமாயிருப்பதொரு वस्तु- வில்லை என்னுமிடம் विरोधाभ्युपगमத்தாலே फलिக்கையாலும், सर्वशून्यत्वம் கொள்ளவேண்- டாவோ என்னில்– नित्यासத்தில் கண்டபடியை प्रपञ्चத்திலே கட்டப்பார்த்தால் प्रपञ्चத்தில் கண்டபடியை नित्यासத்துதன்னிலும் கட்டலாம். प्रमाणाप्रमाणविभागமில்லை என்பார்க்கு

---

धिक इव भाति, तथापि "अनन्वितशब्देनापि अन्वितमेव बोध्यते निर्विशेषशब्देनापि विशिष्टमेव बोध्यते इति क्रमेणोभयत्रापि सुस्पष्टं पराभ्युपगतविरोधशङ्कावारणायोभयपदप्रयोगस्यावश्यकत्वं बोध्यम् ।

ननु मासैत्सीत् लोकसिद्धव्युत्पत्तिविरोधात् असदलीकादिशब्दैर्निरुपाधिकनिषेधबोधः । अथापि वक्ष्यमाणयुक्तिबलात् तत्सिध्यतित्याशङ्क्य निराकरोति- ஒரு காலத்திலே इति । यत्कदाचित् क्वचित् केनचिदाकारेणासत्, घटादिकं तत् सर्वदा सर्वत्र सर्वप्रकारेणाप्यसत् । कूर्म- रोमशशशृङ्गादिवत् । अन्यथा सत्त्वासत्त्वस्वभावविरोधात् । तथा च निरुपाधिकनिषेधेन सर्व- शून्यत्वसिद्धिरित्यर्थः । निषेधविषयत्वम्- असत्त्वम् । विधिविषयत्वं- सत्त्वम् । ननु कथंचिदसत्त्व- वति घटादिपदार्थे प्रवर्ततामयं न्यायः । सर्वदेशकालस्वभावैरपि सत्त्ववति तु न स युज्यते । ततश्च कथं सर्वशून्यत्वमिति चेदाह- सर्वदेशेति । यद्यपि विभवस्सर्वदेशेषु विद्यन्ते । नित्यास्सर्वकालेषु । तथापि न तादृशः कश्चिदास्ते, यस्सर्वैरपि स्वभावैस्समेतो भवति । स्वभावसाङ्कर्यप्रसङ्गाविरो- धात् । तथा च सर्वस्मिन्नपि पदार्थे कथंचिदसत्त्वं लब्धास्पदमेव भवतीति, पूर्वोक्तादेव सत्त्वा- सत्त्वस्वभावविरोधात् सर्वस्यापि सार्वपथीनमसत्त्वं दुर्वारम् । तस्मात्सर्वशून्यत्वसिद्धिरिति भावः । तदेतत् प्रतिबन्द्या खण्डयति- नित्यासத்தில் इति । कूर्मरोमादावित्यर्थः । கண்டபடியை- तत्र दृष्टां "यत्कथंचिदसत् तत्सर्वदाऽसदिति रीतिम् । प्रपञ्चத்தில் - पूर्वापरकालयोरसति मध्ये च सति घटादौ । கட்டப்பார்த்தால்- कल्पयितुं प्रयत्ने क्रियमाणे । प्रपञ्चத்தில் கண்டபடியை

---

*அத்தகைய தன்மை சேர்ந்த தன்மையுள்ள பொருளையே குறிக்கும். ஓரிடத்தில் ஒரு வேளை- யில் ஒருவிதமாக இல்லாத பொருள் எவ்விடத்தும் எக்காலத்திலும் எவ்விதமாகவும் இராது என்ற நியதி ஆமையின் உரோமத்தில் கண்டோம். கனத்த ஓடு தவிர அதன் முதுகில் ஏதும் கிடையாதாகையால். உலகப்பொருள்களுள் ஒவ்வொன்றும் எங்கும் வ்யாபித்து, என்றும் நின்று, எல்லாவிதமாகவும் காட்சி தருகின்றன என்று சொல்லப்போகாது. ஆகையால் ஓரோ- ரிடம், ஓரோவேளை, ஓரோ தன்மையில்லாத அவை' என்றும், எங்கும், எப்படியும் இரா- வென்றே, தேரி சூன்யவாதமேயன்றோ பலிக்கும் என்னில்– நித்யசூன்யமான ஆமை உரோ- மத்தில் கண்டவிதத்தை, ஒருகாலிருந்து ஒருகால் சூன்யமாகும் ப்ரபஞ்சத்திலே கட்டப்பார்த்- தால், ப்ரபஞ்சத்தில் கண்டதான, ஒருகால், ஓரிடத்திலில்லாத பொருள், மற்றோரிடம் மறு-*

இரண்டேடமும் தன்னிலோகத்தும். ग॰ गगनकुसुमा दिகளைப்போலே सर्वமும் तुच्छமென்னும், स्वप्न-ज्ञानादिகளைப்போலே सर्वबुद्धिகளும் स्वरूपाश्रयविषयशून्यங்களென்னும் சில हेत्वाभासங்களைக்

इति । यत्पूर्वापरकालयोरसत्, तत् मध्यकाले सदिति घटादौ दृष्टा प्रक्रिया, कूर्मरोमादावपि कल्प्यतामिति विपरीतं किन्न स्यादिति भावः । यत्त्वत्र केषाञ्चिद्व्याख्यानं "यन्मध्यकाले सत्, तत्पूर्वापरयोरपि सदिति घटादिप्रपञ्चधर्मस्य कूर्मरोमादावपि प्रसङ्ग इति । तन्न । घटादाविव कूर्मरोमादौ मध्यकालसत्त्वस्यापादकस्याभावात् घटादौ पूर्वापरकालसत्त्वस्यापाद्यस्याभावाच्चापादनायोगात् इति । अत्र एतद्वाक्यानन्तरं केषुचित्कोशेषु "गगनकुसुमादी"ति वाक्यं पठित्वा, ततः "प्रमाणाप्रमाणे"ति वाक्यं पठ्यते । तन्नसङ्गतम् । अत एवमेव पाठक्रमो युक्त इति अनन्तरं प्रमाणाप्रमाणेति वाक्यमेव सुसङ्गतमवतार्य व्याख्यायते । ननु कथं घटादाविव कूर्मरोमादौ मध्यकालसत्त्वमापाद्यते? घटादौ तस्य दृष्टत्वेन प्रामाणिकत्वेपि, कूर्मरोमादौ बाधितत्वेन तस्याप्रामाणिकत्वादित्यत्राह- प्रमाणाप्रमाणेति । प्रमाणप्रमेयेत्यर्थः । अत्र नञोन्योन्याभावार्थकत्वेन प्रमाण-भिन्नतया प्रमेयविवक्षोपपत्तेः । अयं भावः- सर्वशून्यवादिनः न तत्प्रतिष्ठापनार्थं प्रमाणापेक्षा । प्रमाणानां सत्त्वे सर्वशून्यत्वस्यैवासिद्धेः । सर्वशून्यत्वेन, स्थापनीयप्रमेयाभावाच्च । तदुक्तं-खण्डने- अथ कथायां वादिनोर्नियममेतादृशम्मन्यन्ते । प्रमाणप्रमेयादयस्सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थास्सन्तीति कथकाभ्यामभ्युपेयमिति । तदपरे न क्षमन्त इत्यादिना । तथाचेदमेव प्रमेयं प्रामाणिकं नेदमिति तन्मते विभागाभावात्पूर्वोक्तकल्पनाद्वयमपि समानयोगक्षेममेवेति । यद्वा प्रमाणाप्रमाणेति प्रमाणतदाभासेत्यर्थः । नञो विरोधार्थकत्वात् । तथा च प्रमाणतदाभासविभागाभावात् इदं प्रामाणिकं इदमप्रामाणिकमिति परस्परं बाध्यबाधकभावाभावान्नैकतरपरिशेषस्सम्भव-इति तात्पर्यम् । தனில் ஒக்கும- परस्परं तुल्यम् । तदुक्तं सर्वार्थसिद्धौ- मिथो विरुद्धयोर्बला-बलवैषम्याभावे, किं कस्य बाधकं, बाध्यं वेति ।

ननु माध्यमिकनये परमार्थतः प्रमाणाप्रमाणविभागाभावेपि संवृतिसत्यलोकव्यवहार-सिद्धये तदङ्गीकारात् सर्वपदार्थतुच्छतायां यद्यपि शब्दतर्कौ न प्रमाणं, अथापि अनुमानं प्रमाण-मस्त्वित्याशङ्क्य समाधत्ते- गगनकुसुमादिகளைப்போலே इति । सर्वं तुच्छं प्राक् पश्चाच्च सत्त्वहानेः गगनकुसुमवदित्यनुमानमभिमतम् । नन्वनुमानरूपप्रमाणाङ्गीकारे, तदनुबन्धेन प्रमातृप्रमेययो-रप्यङ्गीकरणीयत्वापातेन सर्वशून्यत्वासिद्धिरित्यत्र, व्यवहारार्थं संवृतिसत्यप्रमाणादिव्यवस्थाङ्गी-कारेपि वस्तुतः प्रमेयप्रमात्रादिकं किमपि नास्तीत्याहानुमानान्तरेण- स्वप्नज्ञानादिகளைப்போலே इति । सर्वं ज्ञानं स्वरूपाश्रयविषयशून्यं ज्ञानत्वात् स्वाप्नज्ञानवदित्यनुमानम् । स्वप्नस्य मायामात्र-

கொண்டு ஸாதிக்கப்பார்த்ததால் இவை माध्यमिकன் தனக்குமேல் स्वरूपासिद्धिदृष्टान्तासिद्ध्यादि-दोषங்களாலே निरस्तங்களாம்.

**ஸத் அஸத் என்றுப்போலுள்ள நான்குபக்ஷங்களிலும் சேராது என்னப்போகாது.**

இவர்கள் सत् என்கிற पक्षத்துக்குச்சொன்ன दूषणம் மெய்யாகில், அப்போது गत्यभावத்தாலே

---

त्वेन न तत्र ज्ञानस्वरूपं, तदाश्रयो देवदत्तादिः तद्विषयश्चास्तीत्यभिमानेन तदुदाहरणम् । हेत्वाभासेति निर्देशस्स्वाभिप्रायेण । स्वाभिप्रेतं हेत्वाभासत्वमेवाह- இவை மாத்யமிகன் தனக்குமேல இति । माध्यमिकस्योपरि । स्वरूपासिद्धीति । अनुमानद्वयस्य यथासंख्य दूषण बोध्यम् । पूर्वापरकालासत्त्वस्य प्रथमानुमानहेतोः कालघटितमूर्तिकतया तेन कालानङ्गीकारात्स्वरूपासिद्धिः, द्वितीये दृष्टान्तीकृतस्य स्वप्नस्य सिद्धान्ते सत्यविषयत्वाङ्गीकारात् तत्र स्वरूपाश्रयविषयशून्यत्वं नास्तीति दृष्टान्तासिद्धिश्च भवतीति भावः । दृष्टान्तासिध्द्यादीत्यादिना बाधपरिग्रहः । तथा हि प्रपञ्चपदार्थे सर्वत्रास्माभिस्तुच्छत्वं नाङ्गीक्रियते । अतश्च बाधः । यद्यपि काममेवं ब्रवीषि, निरंकुशत्वात्ते तुण्डस्य । अथापि तव वाक्ये मम प्रामाण्यबुद्धिर्नास्तीति चेत्, तर्हि मम वाक्यं त्वद्दूषणाय प्रयुक्तं प्रमाणमेवेति भूयो भूयः पठित्वा संवृतिसत्यतां संपाद्य सन्तुष्य । वस्तुवृत्त्या तव वाक्यं न प्रमाणं भवतीति यदि वदसि, तर्हि त्वदीयानुमानेपि वस्तुस्थित्या प्रामाण्यं नास्त्येव । त्वन्मतप्रामाण्यस्य सांवृतिकत्वेनैव भवताप्यभिधानात् । तथा च समस्समाधिरिति । अधिकमधिकरणसारावळी-चिन्तामण्यादावालोकनीयं "प्राक्पश्चात्सत्त्वहानेर्गगनकुसुमवत्स्यान्न मध्येपि कार्य"मित्यादौ ।

अथ चतुष्कोटिविनिर्मुक्तत्वरूपतुच्छतासमर्थनाय माध्यमिकैराद्रियमाणमपरमपि प्रयत्नं विफलयति- இவர்கள் इति । सत्पक्षदूषणं कारकव्यापारवैयर्थ्यादिरूपम् । அப்போது इत्यादि । अत्रायमभिसन्धिः । वाचः क्रमभावित्वात् प्रथमं प्रपञ्चे सत्त्वनिषेधे क्रियमाणे, गत्यभावेन-परस्परविरुद्धसत्त्वासत्त्वाभ्यामतिरिक्तप्रकारान्तराभावेनार्थात् प्रपञ्चस्यासत्त्वविधावेव तत्पर्यवस्यति । तथा च सति समनन्तरमेव कोवानुन्मत्तः स्ववाग्विरोधमप्यजानानः प्रपञ्चस्यासत्त्वमपि प्रतिषेधेदिति । एवमेव प्रथममसत्पक्षनिषेधेपि भाव्यम् । असत्पक्षदूषणमपि कारकव्यापारवैयर्थ्या-दिकमेव । एवं चतसृषु कोटिषु सत्त्वासत्त्वकोट्योरेकनिषेधस्यापरविधानपर्यवसितत्वेन

---

கால் இருக்கலாம் என்ற தன்மையைத்தான் கூர்மரோமத்தில் கட்டுவதுதானே. ஒன்றின் தன்மை மற்றொன்றுக்கு எப்படி கூடுமென்னில்? அப்போது அதனாலேயே உம் கேள்வியும் அடிபட்டுப்போகிறது. ப்ரமாணம், அல்லாதது என்ற பிரிவினையையே ஒப்பாத உமக்கு இரண்டு கட்டும் துல்யமேயாகும். ஆகாசத்தாமரை போல் எல்லாம் சூன்யமே. கனவுபோல் எல்லா அறிவுகளும் பொய் பொருளற்றவை ஆதாரமில்லாதவை என்று சில தவறான ஹேதுக்களைக்கொண்டு அநுமானம் செய்ய நினைத்தால், மாத்யமிகனாகிய உமக்கு ஹேதுவே கிடையாதன்றோ? த்ருஷ்டாந்தமும் துல்யமாயிற்றே.

असत् என்கிற पक्षम् सुप्रतिष्ठितமாம். असत्पक्षदूषणம் प्रतिष्ठितமாம்போது सत्पक्षமே परिग्राह्यமாம். प्रमाणविरुद्धமான कोटचन्तरங்களிற் சொல்லும் दूषणங்கள் प्रामाणिकர்க்கு इष्टங்களுமாய் अनुकूलங்களுமாய் இருக்கும். இப்படியால் கண்டபடியொழிய पञ्चमकोटियைக் கட்ட விரகில்லை. இவர்களுக்கு स्वपक्षस्थापकप्रमाणம் परमार्थமாகில் निरुपाधिकनिषेधம் सिद्धियாது. अप-

---

युगपदुभयकोटिनिषेधस्यव्याहतत्वं प्रदर्श्य, तृतीयचतुर्थकोट्योर्निषेधस्येष्टत्वमाह- प्रमाणविरुद्ध-மான इति। अत्रैवमेव पाठस्साधुः। न तु प्रमाणविरुद्धமாக इति। तथासति "प्रमाणविरुद्ध-மாகச்சொல்லும் दूषणங்கள் प्रामाणिकர்க்கு इष्टங்களுமாய" इत्येवान्वयस्य वक्तव्यतया, प्रमाण-विरुद्धदूषणानां प्रामाणिकपरिग्राह्यत्वोक्तेर्विरुद्धत्वापातात्। तथा चात्रेदमुक्तं भवति- सदसदात्मकत्व, तदुभयानात्मकत्वकोटचोः "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधत" इति न्यायकबलिततया प्रमाणविरुद्धत्वात् तादृशकोटिद्वयनिषेध-स्सिद्धान्तिनामिष्टः तत्र तत्र यथायथमिष्टयोस्सत्त्वासत्त्वकोटचोरुपपादकतयाऽनुकूलश्चेति। तथा चैषां पञ्चमकोटिसमर्थनं सर्वथा पञ्चतापन्नमेवेति उक्तं निगमयति- இப்படியால இति। उक्त-प्रकारेणेत्यर्थः। கண்டபடி- क्वचित्सत्त्वं क्वचिदसत्त्वं च। इदमुपलक्षणम्- कोटिचतुष्टयमपि एकैकस्मिन् पदार्थे सम्भवति। तदुक्तमधिकारारम्भे- "ஒரு देशादिகளிலே सत्ताயும், देशान्तरादि-களிலே असत्ताயும், இப்படி उभयाकारयोगத்தாலே सदसत्ताயும், स्वव्यतिरिक्तसदसத்துக்-களுக்காட்டில் வேறுபட்டிருக்கையாலே सदसद्विलक्षणமாயும், प्रत्यक्षसिद्धமான वस्तुவுக்கு இப் प्रकारத்தாலே कोटिचतुष्टयமும் கூடும்." इतीति।

एवं तेषां सत्त्वादिपक्षखण्डनासम्भवमुक्त्वाथ तेषां स्वपक्षस्थापनमपि विकल्प्य प्रथमे दूषणमाह- இவர்களுக்கு इति। सर्वेषां प्रमाणानां परमार्थतः देशकालस्वभावविशेषै र्वस्तुनिषेधा-दावेव पक्षपातित्वात् निरुपाधिकनिषेधरूपतुच्छत्वं स्वाभिमतं न सेत्स्यतीत्यर्थः। ननु तुच्छादि-शब्दाः क्वचित्कृतव्युत्पत्तय एवेति सम्प्रतिपन्नम्। तत्कुत्र तेषां व्युत्पत्तिः? किमावयोर्विमते वस्तुनि, उतान्यत्र क्वापि? आद्ये सिद्धन्नस्समीहितं तत्र तुच्छत्वादिसिद्धेः। द्वितीये योयश्शब्दार्थ स्स सर्वोपि तुच्छः शब्दार्थत्वात् तादृशान्यपदार्थवदित्यनुमानेन विमतस्यापि तुच्छत्वात् सर्व-तुच्छत्वसिद्धिरिति चेदाह अपसिद्धान्तமுமாம் इति। स्वपक्षस्थापकप्रमाणस्य परमार्थत्वात् सर्व-मपरमार्थ इति स्वीयस्सिद्धान्तो भग्न इत्यर्थः। द्वितीयमपि दूषयति- अपरमार्थமென்னில் इति

---

இம்மாத்யமிகன், ஸத் என்ற பக்ஷத்தைத் தூஷித்தால், அது மெய்யானால் அஸத் என்கிற பக்ஷம்தான் தேறும். அஸத் அல்லவென்று உண்மையில் அவன் கருதினால் ஸத் என்றே ஒத்துக்கொண்டதாகும். ஏனெனில்- இவ்விரண்டுவிதங்கள் தவிர மூன்றாவதுவிதம் இருக்கக் காரணம் இல்லையல்லவா? இது தவிர ஸத்துமஸத்துமானதன்று. இந்த இரண்டையும

सिद्धान्तமுமாம். अपरमार्थமென்னில்- இதுக்கு संवृतिसत्यादिनामकरणம் பண்ணினாலும், स्व-पक्षம் सिद्धियாது शून्यமானதற்கு अविद्यादिகள் ஒருபடியாலும் சொல்ல வொண்ணாமை-

---

अपरमार्थद्विचन्द्रज्ञानादेः प्रमेयसाधकत्वाभाववत् त्वन्मतसाधकत्वमप्यपरमार्थस्य प्रमाणस्य न स्यादिति भावः। व्यवहारदशायां अपरमार्थस्यापि संवृतिसत्यमिति परिभाषाकरणादर्थसाधकत्वं भविष्यतीत्यत्राह- संवृतिसत्यादिनामकरणம் பண்ணினாலும் इति। नामकरणमिति कश्चिद्वैदिक संस्कारः। तस्य च करणमुपपन्नमित्यभिप्रायेणेहापि "नामकरणம் பண்ணினாலும்" इति निर्देशः। अन्यथा पुनरुक्तत्वापत्तेः। तथा चापरमार्थो हि सर्वथाऽपरमार्थ एव। न हि कामधेन्वाख्याकरणं गर्दभस्य पयःप्रस्रवणहेतुरिति भावः। एवं "संवृतिसत्यादिनामकरणம் பண்ணினாலும்" इत्यन्वारुह्योक्तम्। तदेवेदानीं न सम्भवतीति निरूप्यते शून्यமானதற்கு इति। शून्यत्वादिति हेतुगर्भोऽयं निर्देशः। तथा च शून्यमेकमेव तत्त्वमित्यङ्गीकारात्, शून्यस्य च निस्स्वभावस्याविद्याद्याश्रयत्वासंभवात् भासमानस्यास्य जगतः किमीयाविद्यादिविलासितत्वमुच्येतेति भावः। अविद्यादिகள் इत्यनादिना वक्ष्यमाणसंवृतिभ्रान्त्योर्ग्रहणम्। ஒருபடியாலும்- परमार्थतोऽपरमार्थतो वा। निस्स्वभावस्य परमार्थतस्तदाश्रयत्वासंभवात्, अपरमार्थतस्तदाश्रयत्वेपि, अपरमार्थस्यार्थक्रियाकारित्वासम्भवादुभयथाप्यनुपपत्तिरेवेति भावः। अविद्यासिद्धங்கள்- बुद्धेश्वरादिव्यवहृतिविषयाः। संवृतिसिद्धங்கள்- लोकव्यवहारविषया घटादयः। भ्रान्तिसिद्धங்கள்- विपरीतव्यवहारविषयाः शुक्तिकारजतादयः। अत्र केचित् "ननु नासत्पक्षस्य प्रमाणापेक्षा भवति। शून्याद्वैतस्यैवासत्सम्मतत्वात्, तस्य च नित्यसिद्धतयाऽविद्यासिद्धत्वाभावात्। तया सिद्धमेव हि प्रमाणोपपत्त्याद्यनुसरति। नित्यसिद्धे तदनपेक्षणादित्यत्राह- शून्यமானதற்கு इति, इत्यवतार्य- अत्र षष्ठ्यर्थो विषयित्वं, न त्वाश्रितत्वम्। ஒருபடியாலும் इति। स्वोत्पादकतया स्वनाशकतया वेत्यर्थः। तथा चाभावस्योत्पत्तिविनाशयोरभावेन, नोभयार्थमपि शून्यस्य विषयेऽविद्यापेक्षेति, जगति भासमानान्यन्यान्येव यथायथमविद्यासंवृतिभ्रान्तिसिद्धानि भवन्ति। न शून्यमिति, तेषां व्यवस्थापि अस्माभिर्वक्ष्यमाणहेतुतः नोपपन्नेति भाव इति व्याचक्षते। तन्न मनोरमम्। तदा मूले व्यवस्थाया अनुपपन्नत्वे हेत्वनुपन्यासात्। स्वयमुपन्यस्तमिति चेत्, स्वयमुपन्यासादपि मूल एव हेतूपन्यासासिद्ध्यनुगुणव्याख्यानस्यैवोचितत्वात्। दर्शितं च तथैवास्माभिरितःपूर्वम्। शून्यातिरिक्तस्य जगति भास-

---

விட வேறுபட்டதும் அன்று என்று அவன் மறுப்பது நமக்கும் உடன்பாடே. அநுகூலமே. அப்படிக் கூறுவது ஸர்வப்ரமாணவிருத்தமன்றோ? ஆகையால் இந்நால்வகையிலும் உலகம் சேர்ந்தென்றுகொண்டு ஐந்தாவதொருவிதம் கற்பிக்கக் காரணமே கிடையாது. இவன் ஸ்வ-பக்ஷத்தை ஸாதிக்கும் ஹேது உண்மையானதாயின், எல்லாம் சூந்யம் என்ற கக்ஷி, தொலைந்-தது, தன் ஸித்தாந்தவிரோதம் வரும். பொய்யாகில்- 'இது வ்யவஹாரத்திற்கு மட்டில

யாலே தோற்றுகிறவை अविद्यासिद्धங்கள், संवृतिसिद्धங்கள், भ्रान्तिसिद्धங்கள் என்றுபோலே பண்ணும் व्यवस्थैக்கும் விரகில்லை. अपरमार्थसाधकத்தாலே स्वपक्षம் सिद्धिக்குங்கட்டளைதன்னாலே परपक्षங்களுமெல்லாம் सिद्धिக்கக் குறையில்லை. இப்படி परपक्षबाधकयुक्तिயிலும் परमार्थापरमार्थविकल्पदूषणம் கண்டு கொள்வது

**மற்ற வாதியோடு வாதம் செய்யவும் இவனுக்கு யோக்யதை இல்லை.**

सर्वமும் இல்லை என்னுமிவனைக்குறித்து நாமொரு साधनமாதல் दूषणமாதல் प्रयोगिக்-

---

मानस्यान्यस्य तदनङ्गीकृतत्वाच्च । सर्वं हि शून्यं तन्मते इति । ननु प्रपञ्चमिथ्यात्वसाधकप्रमाणेन परमार्थेनैव भवितव्यमिति नायं निर्बन्धः, रज्जुसर्पमिथ्यात्वस्य सर्पभ्रमोत्तरजातभूदळनबुद्ध्यापरमार्थभूतया साधनात् । ततश्चास्मदुक्ततुच्छत्वाद्यनुमानैरपरमार्थैरपि प्रपञ्चशून्यत्वं सिद्ध्यत्येवेत्यत्राह- अपरमार्थसाधकத்தாலே इति । अयमाशयः- सर्पमिथ्यात्वस्य अपरमार्थभूतभूदळनबुद्ध्यासाधनेपि तन्मिथ्यात्वस्यापि तद्बुद्ध्युत्तरजातापरमार्थाम्बुधाराबुध्या साधनवत् अपरमार्थप्रमाणानां क्वचिदप्यपरिनिष्ठिततया, त्वदुक्तापरमार्थप्रमाणेन त्वन्मतसिद्धिवत् तदुपरि मदुक्तेनापि प्रमाणेन अप्रमाणतया त्वदभिमतेन मन्मतमपि सिध्येत् । उभयोरविशेषादिति । अत्र वक्तव्यं सर्वमनुपदमेवोक्तं- "स्वरूपासिद्धिदृष्टान्तासिध्यादिदोषங்களாலே निरस्तம்" इत्यत्र । ननु परपक्षोपि सिध्येदिति कथमुच्यते? तत्रास्माभिर्दूषणगणोदाहरणादित्यत्र स्वपक्षसाधकयुक्तौ परमार्थापरमार्थविकल्पेन दूषणवत् परपक्षबाधकयुक्तावपि तत्कर्तव्यमित्याह- இப்படி परपक्षबाधकयुक्तीति । परपक्षबाधिका युक्तयश्चेत् परमार्थाः, तदा सर्वमपरमार्थं इति सिद्धान्तभङ्गः । यद्यपरमार्थाः, तर्हि अपरमार्थानामव्यवस्थितार्थकतया ताभिः परपक्षबाधनवत् परोक्तयुक्तिभिः स्वमतमपि बाध्यतान्नामेति भावः ।

एवमस्मिन्नधिकारे एतावता माध्यमिकानामन्धः पन्थाः प्रतिहतः । ततेयं चर्चा विस्तरशः कमुद्दिश्य कृता । न हि माध्यमिकमेव समुद्दिश्य, वक्ष्यमाणानुपपत्तेः । नाप्यन्यम्, अन्यः क इति निर्धारणाभावादित्याशङ्क्याह- सर्वமுமில்லை इति । நாம- सर्वास्तित्ववादिनो वयम् ।

---

*உண்மை எனக் கருதப்படும்" என்று ஒத்துக்கொண்டாலும் உண்மையில் பொய்யான அதனால் ஸ்வபக்ஷம் ஸித்தியாது. சூன்யமான தத்வத்திற்கு அவித்யை முதலியவைகளோடு ஸம்பந்தம் கூடாதாகையால் உலகிலுள்ளவை உயர்ந்த அவித்யை, நடுத்தரமான ஸம்வ்ருதி, மோசமான ப்ரமம் இவைகளால் தோன்றுபவை என்று பிரித்துக்கூற விரகில்லை. பொய்யான ஹேதுக்களால் தன் மதம் ஸித்திப்பதுபோல பிறர் மதமும் குதிரலாமே. இப்படியே பொய்யான கண்டனங்களால் பிறர் மதம் போம் என்கிறவனுக்கு அவைகளாலேயே தன் மதமும் மறையலாமே.*

*எல்லாம் சூன்யம் என்பவனைக் குறித்து நாமொரு ஹேது எப்போதாகிலும் எதற்காகிலும் சொன்னால் அதை அவன் கையாதென்று தட்டிக்கழிக்கமாட்டானோ? என்னில்- பா-*

தால, அவற்றை असिद्ध्यादिகளாலே அவன் निरसियாதோ? என்னில- आभासानाभासादिव्यवहारव्यवस्थै இசைந்தவனைக் குறித்து साधनदूषणங்கள் प्रवृत्तங்களாம். இசையாதவனோடு वादமுமில்லை. अचेतनपशुमृगबालोन्मत्तादिகளுக்குப்போலே இவனுக்கும் वादाधिकारமில்லை என்று शिष्यादिகளுக்குச் சொல்லுமத்தனை. இவ்வர்த்தத்தை "अधिकारोऽनुपायत्वान्नवादे शून्यवादिनः"

---

साधनं- सर्वास्तित्वसाधनम् । दूषणं- सर्वशून्यत्वदूषणम् । असिद्ध्यादीति । पक्षसाध्यहेतुदृष्टान्तासिध्द्यादीत्यर्थः । आदिना व्यभिचारादिग्रहणम् । तस्य सर्वानभ्युपगन्तृत्वादिति भावः । அவனை निरसियாதோ என்னில इति । माध्यमिको निरस्येत्किलेति मध्यस्थानामियमतिशङ्का बोध्या । वस्तुतस्तु माध्यमिको न परान् निराकर्तुं प्रभवति । स यदि परोक्तनिरसने हेतूनुपन्यस्यति, गतं तर्हि सर्वशून्यत्वेन । तूष्णींभावे च परोक्तमनुमतं स्यात् । अप्रतिषिद्धमनुमतमिति न्यायात् इति । तदुक्तं तत्त्वमुक्ताकलापे- "यस्सर्वं नाभ्युपेयात्स्वपरमतविदा केन किं तस्य साध्यमि"त्यादिना । समाधत्ते– आभासानाभासादीति । आदिना स्वपक्षपरपक्षादिर्गृह्यते । परस्परविरुद्धवादिनोर्व्यवहारः कथेति सामान्यतस्स्थिते स्वपक्षस्थापनाहीनवितण्डाख्यतद्विशेषस्य प्रामाणिकेष्वसत्सु शङ्कितुमप्ययोग्यतया सुदूरनिरस्तत्वात् वादजल्पौ परिशिष्टाविति, तत्र जल्पाख्यकथायाः स्वपरपक्षसाधनबाधनवत्याः विजिगीषया क्रियमाणायाः प्रमाणाप्रमाणव्यवस्थावत्स्वेव प्रवृत्तिरिति न माध्यमिकं प्रति अस्माकं व्यवहार इति भावः । इत्थं जल्पकथाया तस्यानधिकारमुक्त्वा वीतरागकथारूपवादेप्यनधिकारमाह- இசையாதவனோடு इति । व्यवहारव्यवस्थையை इति अनुवर्तनीयम् । वादமும் இல்லை इत्यपिना जल्पानधिकृतस्य वादानधिकारः कैमुतिकन्यायसिद्ध इति सूच्यते । नन्वस्त्विदं वस्तुतत्त्वम् । तदिदं कस्मा उपदिश्यते । यदि माध्यमिकायैव, तर्हि सिद्धो वादाधिकारस्तस्य । तथा च घट्टकुट्यां प्रभातमिति चेदाह- अचेतनेति । अचेतनादिक्रमविन्यासस्याय भावः- ज्ञानसामान्यशून्यस्याचेतनस्य यथा वादानधिकारः तथा क्षुत्पिपासादिपरिहारार्थज्ञानमात्रवतामपि पश्वादीनां वादानधिकारः । यथैषां वादानधिकारस्तथा ग्रहणधारणपाटवमात्रशालिनामपि बालानाम् । तथैव प्रत्यवस्थानयोग्यवयोवस्थानामपि अयथायथप्रलापिनामुन्मत्तानां, वादाङ्गवैकल्यादिति दृष्टान्तस्वारस्यं बोध्यमिति । शिष्यादिகளுக்கு इति । आदिना श्रेयोर्थिनां ग्रहणम् । अत्र कथानधिकारवादे चण्डमारुतं- "ननु कथाप्रवर्तकसमवायो हि कथाधिकारः । प्रवर्तिका च मानादिसाधकताबुद्धिः । सा भ्रमः प्रमा वेति न निरूपणमर्हति । तथा सत्यन्यतरसाधकानां-

---

மாணம் அப்ரமாணம் என்ற பிரிவை ஒப்புக்கொண்டவரை நோக்கியேதாம் நாம் சொல்வோம். இசையாத இவனோடு வாதமும் வைத்துக்கொள்வதில்லை. அசேதநம், பசு, மருகம், குழந்தை, பித்தன் இவைகளுக்குப்போலே இம்மதத்தவனுக்கும் வாதாதிகாரமில்லை என்று நம் சிஷ்யர்களுக்குச் சொல்லுமத்தனை. இதையே "சூந்யவாதிக்கு உபாயம் சூந்யமாகையால் வாதாதி-

என்று संग्रहित्தார்கள். सर्वமும் तुच्छம் என்றறிந்து தானே दृष्टार्थव्यापारங்களைப் பண்ணுகின்-றால் स्वर्गमोक्षाद्यर्थप्रवृत्तिகளையும் प्रतिषेधिக்கவேண்டுவதில்லை. नित्यसिद्धशून्यत्वம் साध்யமல்-

आभासत्वनियमेनान्यतरवादिनस्साधकताभ्रमस्यापि नियततया कथाया एवोच्छेदात्। तथा च शून्यत्वाभ्युपगमाभासत्वनिबन्धनयोर्भ्रमयोरविशेषात् इतरेषामिव माध्यमिकानामपि अस्तु कथाधिकार इति चेन्न। निजमतरीतिसिद्धमसाधकत्वमविगणय्य कथामधिकुर्वन्तश्छिन्ननासा इव न प्रेक्षणीया इति मनीषया शिष्यान्प्रत्युपदेशादि''ति। अत्र तान्त्रिकसम्मतिमाह இவ்அர்த்தை इति। ''सर्वथा सदुपायानां वादमार्गः प्रवर्तत'' इति पूर्वार्धम्। सदुपायानां- प्रमाणतर्काभ्युपगन्तॄणां वादमार्गः- अत्र वादशब्दः जल्पस्याप्युपलक्षकः। संग्रहित्தார்கள்- मीमांसकाश्श्लोकवार्तिक इति शेषः। ननु माध्यमिकस्य कथानधिकारवचनं न युज्यते। ''सर्वथानुपपत्तेश्चे''त्यादिना तन्निरसनप्रवृत्तसूत्रकाराशयविरुद्धत्वात्। न च तत् शिष्यादीन्प्रत्युपदेशमात्रमिति वाच्यम्। तत्सूत्रभाष्ये ''माध्यमिकः प्रत्यवतिष्ठते'' इति कथनात्, ''किम्भवान् सदिति वा प्रति जानीते...सर्वथा तवाभिप्रेतं न सेत्स्यतीत्यादौ भवद्युष्मच्छब्दादिप्रयोगाच्च तस्यैव सम्मुखीकरणेन सम्बोध्यत्वावगमात् इति। अत्र चण्डमारुते महाचार्या वदन्ति- शिष्यान् प्रत्युपदिश्यत इत्यनेन- ''सर्वत्र शिष्यान्प्रत्येवोपदेशः क्रियते। मायिककुतर्केन्द्रजालैस्सात्विकान् कुदृष्टयोवशमानयेयुरिति तेषु अधिकारमारोप्य तैस्सह विवादाभिनये कृते शिष्याणां हृद्यता भवतीति तदभिनयोपि क्वचित् क्रियत इति सूच्यत'' इतीति। सर्वसिद्धान्तसंग्रहे शङ्कराचार्यैरप्युक्तं- ''त्वयोक्तसर्वशून्यत्वे प्रमाणं शून्यमेव ते। अतो वादाधिकारस्ते न परेणोपपद्यत'' इति माध्यमिकं प्रति योगाचारोक्ति''रिति। एवं विस्तरेण माध्यमिकस्य तत्त्वं प्रतिषिध्य अथ तदाचारमपि दूषयति- सर्वமும் तुच्छம் इति। அறிந்து தானே- एवं ज्ञात्वापि स्वयमेव। विषयस्य तुच्छत्वज्ञाने प्रायः प्रवृत्तिर्न संभवति। तथाप्ययं तथाभूतेषु दृष्टार्थेषु भोजनादिषु प्रवर्तत इति तद्रीत्या स्वर्गमोक्षाद्यर्थमपि प्रवर्तताम्। तुच्छत्वात्तत्र न प्रवृत्तिश्चेत् अत्रापि मासभूत्सा तत एव हेतोः। न हि चार्वाकवत् दृष्टं सत्यं अदृष्टं स्वर्गादितु तुच्छमित्यङ्गीकरोषि. येन दृष्टार्थे प्रवृत्तिः स्वर्गाद्यर्थेऽप्रवृत्तिश्च व्यवतिष्ठेयाताम्। ततश्च ''...तुच्छங்கள் என்றறிந்தால் स्वर्गमोक्षादिपारलौकिकफलार्थप्रवृत्तिகள் பண்ணவேண்டுவ-தில்லை'' इत्यादिना स्वर्गमोक्षादिप्रवृत्तिदूषणं माध्यमिकानां न युज्यत इति भावः। माध्यमिकागमप्रणयनमपि निष्प्रयोजनमित्याह- नित्यसिद्धशून्यत्वம் इति। आगमानामपवर्गोपायप्रदर्शनार्थ-

காரமில்லை என்று பிறரும் கூறினார்கள். எல்லாம் சூன்யம் ... லௌகிககார்யங்களில் முயலுவதுபோல், ஸ்வர்காத்யர்த்தமான வைதிக ... லாம். அதுவேண்டாமென்னவேண்டுவதில்லை. என்றுமுள்ள நிலையான சூன்யத்வம் மோக்ஷம்

லாமையாலே स्वशास्त्रமும் निष्प्रयोजनம். सत्यताभ्रमம் தானும் துச்சமாகையாலே அதனைக் கழிக்கவேண்டுவதுமில்லை. இம் माध्यमिकपक्षத்தை वेदान्तसूत्रकारர் ''सर्वथाऽनुपपत्तेश्च'' என்கிற सूत्रத்தாலே निरसिத்தார். ஆழ்வாரும் ''உளனெனில் உளன்'' என்கிற பாட்டிலே सर्व-

---

तया, त्वन्मते च नित्यसिद्धशून्यतापत्तेरेवापवर्गत्वात्, अभावस्वभावायाः तस्याश्चाहेतुसाध्यत्वेन शास्त्रकरणं व्यर्थमित्याशयः । ननु मणिमलप्रक्षाळनन्यायेन शून्यतास्वरूपावारकप्रपञ्चसत्यताभ्रम-निवृत्तये मोक्षशास्त्रारम्भ इति चेत्तत्राप्याह- सत्यताभ्रमம் தானும் इति । तुच्छस्य यथानोत्पाद्यत्वं तथा न विनाश्यत्वमपि; अभावस्वभावत्वादेव । अतस्तदर्थमपि न प्रयतनीयम् । अस्य तुच्छत्वा-नङ्गीकारे पुनरपसिद्धान्तप्रसङ्ग इति तात्पर्यम् । एतन्मतनिराकरणे सूत्रं प्रमाणयति- இம்माध्यमिक पक्षத்தை इति । सर्वथानुपपत्तेश्च भवदभिमतं सर्वशून्यत्वं न संभवतीति सूत्रार्थः । अत्र कश्चि-द्भाष्यकारैः शून्यवादस्यात्यन्तदुर्बलतया अनिराकर्तव्यत्वं मन्वानैस्सर्वाणीमानि सूत्राणि बौद्धान्तर-निराकरणपरतया व्याख्यातानि । अन्यैश्च ''नासतो दृष्टत्वादित्यादीनि सूत्राणि माध्यमिकखण्डन पराणि विवृतानि । तदिदमुभयं व्याख्यानमत्रार्थतो निरस्तं भवति । विस्तरस्तु जिज्ञासुभिः श्रुत-प्रकाशिकादावनुसन्धेयः । अथ ''आदौ शारीरकार्थक्रममिहविशदं विंशतिर्वक्तिसाग्रे''ति स्वकीय-गाथासहस्रे आद्यदशकद्वयेन वेदान्तार्थं प्रकाशयतः पराकुशदिव्यसूरेस्सूक्तिमपि सूचयति- ஆழ்-வாரும இதி । உளனெனிலுளன் அவனுருவமிவ்வுருவுகள், உளனலனெனில் அவனருவம இவ்வுருவுகள. உளனென இலனென இவை குணமுடைமையில், உளனிருதகைமையோடு ஒழிவிலன பரந்தே. इति पूर्णगाथा । एतदर्थश्च உளனெனில் உளன- ईश्वरोऽस्तीति यद्युच्यते, तदा स सत्त्वाख्यधर्मविशिष्टतयाऽस्ति । உளனலன- ईश्वरो नास्तीति, எனில்- यद्युच्यते । अत्रापि உளன- इत्यनुषज्यते । तदानीमपि नास्तित्वधर्मविशिष्टतयाऽस्त्येव सः । निरुपाधिकनिषेधा-योगात् देशकालस्वभावविशेषादिना स नास्तीत्युक्ते, तादृश एव स देशकालान्तरादिषु सिध्य-तीत्यभिप्रायः । இவ்வுருவுகள அவனுருவம்- इमानि स्थूलरूपवन्ति वस्तूनि तस्य स्थूलं शरीरम् । இவவுருவுகள் அவனருவம- इमानि सूक्ष्मरूपाणि वस्तुनि तस्य सूक्ष्मं शरीरम् । अस्तीत्यत्र स्थूलशरीरकोऽस्तीति, नास्तीत्यत्र सूक्ष्मशरीरकोस्तीति च तात्पर्यपर्यवसानात् उभयथापि ईश्वरस्य सत्तायोग एव । तदेतदाह- உளனென இலனென- अस्तित्वनास्तित्वे, இவைகுணமுடைமையில்- इमे द्वे अपि यस्मात् पदार्थगुणौ धर्मौ भवतः । तस्मात्- உளனிருதகைமையோடு- एतादृशोभया-कारयोगेनाप्यस्त्येवेश्वर इति भावः । பரந்தே ஒழிவிலன்- सर्वं व्याप्याप्रकम्प्यस्तिष्ठति । इति ।

---

என்பவனுக்கு அது- ஒன்றுமும ஸாதிக்க கூடாதாகையால மோக்ஷசாஸ்த்ரம வீண். 'அதற்கு விலக்கடிகளாயுள்ளவைகளும துச்சஙகளாகையால' அவைகளைப் போக்கவே சாஸ்த

शरीरपरतत्त्वसत्यतोदाहरणमुखத்தாலே निराकरित्தார். ''प्रतीतिश्चेदिष्टा'' என்கிற ச்லோகத்தை-யும் இங்கே படிப்பது.

மானமில்லை மேயமில்லை யென்றும் மற்றோர் வாதநெறியில்லை என்றும் வாதுபூண்ட
தானுமில்லை தன்னுரையும் பொருளுமில்லை தத்துவத்தின் உணர்த்தியும் இல்லை என்றும்
வானவரும் மானவரும் மனமும் வெள்க வளம் பேசும் மதிகேடன் மத்திமத்தான்
தேனனெறிகொண்டனைத்தும் திருடாவண்ணம் செழுமதிபோலெழுமதியால் சேமிப்போமே 15

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमत्परमतभङ्गे माध्यमिकभङ्गाधिकारस्सप्तमस्सम्पूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

அவனுருவம- इत्याद्यभिप्रेत्य ''सर्वशरीरे''त्युक्तिः । अयं बहुव्रीहिः । उदाहरणमुखेनेति । सर्व-शरीरिणोत्र உளன்- सत्तायां सत्यतारूपायां कथितायां तच्छरीरभूतप्रपञ्चसत्यताप्यर्थतो लभ्यत एवेति उपलक्षणमिदमुक्तमिति भावः । एवमेतन्मतनिरासस्य श्रुतिप्रामाण्यप्रतिष्ठापनमेव परमं प्रयोजनमिति दर्शयितुं भट्टपराशरवादानां श्रीरङ्गराजस्तवस्थं श्लोकमुदाहरति- प्रतीतिश्चे-दिष्टेति । ''प्रतीतिश्चेदिष्टा न निखिलनिषेधो यदिनकः निषेद्धातो नेष्टो निरुपधिनिषेधस्सदुपधौ । निषेधेऽन्यत्सिध्येद्वरद! घटभङ्गे शकलवत् प्रमाशून्ये पक्षे श्रुतिरपि मतेऽस्मिन्विजयता''मिति पूर्ण-श्लोकः । तदर्थश्च- प्रमाणतः प्रतीतिजननस्यानपह्नोतव्यत्वात् साचेत्परमार्थत्वेनेष्यते, न तर्हि निखिलनिषेधस्त्वया कर्तुं शक्यः । सर्वान्तर्गतस्यैकस्य सत्यत्वात् । यदि न सा परमार्थः, तर्हि को निषेद्धा । किं निषेध्यमित्यपि भाव्यम् । प्रतीतिप्रमाणकस्य सर्वस्य तदभावेऽभावात् । अतो निरु-पाधिकनिषेधो नेष्टः । इहेदानीं नास्तीति सोपाधिकनिषेधे स्वीक्रियमाणे प्रमाशून्यबौद्धपक्षे अन्यत्रा-न्यदाऽन्यत्सिध्येत् । इह घटो नास्तीत्युक्ते तच्छकलसिद्धिवत् । तथाचास्मिन्नपि मते स्वप्रामाण्य-प्रतिषेधकस्य कस्यापि परमार्थतः अभावेन श्रुतिरपि निराबाधं विजयतामित्यर्थास्त इति ।

एवं माध्यमिकमतभङ्गं विधाय चोरसकाशात्सद्धनमिव माध्यमिकात् सिद्धान्तस्संरक्षित इति स्वकृतार्थतां गाथया गायति- மானமில்லை மேயமில்லை इति । प्रमाणप्रमेयविभागः, वादाङ्ग-

---

ரங்கள்'' என்பதும் தவறு வேதாந்தஸூத்ரகாரரும் ''இம்மதம் எவ்விதத்திலும் சரியன்று'' என்று சொல்லி நிராகரித்துள்ளார் நம்மாழ்வாரும் உளனெனில் உளன்'' என்கிற பாசுரத்தில் ஸர்வலோகசரீரகனை பகவானை உண்டென்று கூறும் முகமாக இம்மதநிராகரணம் பண்ணினார். ''ப்ரதீதிச்சேதிஷ்டா'' என்ற பட்டர் ச்லோகத்தையுமிங்கே அநுஸந்திப்பது.

भूतसभ्यानुविधेयवादिप्रतिवादिव्यवस्था, कथाविशेषव्यवस्था निरूप्यनिर्णयः इत्यादिकं सर्वं नास्ति। किम्बहुना वादस्य वक्ता स्वयं स्वोक्तिः तदर्थाश्च न सन्ति। तत्त्वनिर्णयः जयपराजयादिकञ्च नास्ति। சயமில்லை என்னும் इत्यस्य வளம்பேசும் इत्यनेनान्वयः। एवंविधविपरीतवादेन चतुर्दश साक्षिभूतेषु देवेषु, सभायां श्रोतृषु, स्वस्यान्तरात्मनि च विलज्जमानेषु साटोपं व्यवहरतः मन्दबुद्धेर्माध्यमिकस्य स्तेनाचरितमार्गेण यथा प्रमाणिकार्थापहारो न भवेत् तथास्माभिः प्रबोधसुधाकरोदयेन संरक्षितमिति गाथार्थः। தேனெறி-தேன்னெறி- सन्धौ एकनकारलोपो भाषायाम्। स्तेनाचरितः पन्थाः। स्तेनानां चेष्टितस्य चन्द्रोदयोहि प्रतिबन्धकर इति செழுமதிபோலெழுமதி इति तस्य दृष्टान्तत्वेन कथनम्। तदिदं पादुकासहस्रेपि— "गोमायूनां मलयपवने तस्कराणां हिमांशौ, दुर्वृत्तानां सुचरितमये सत्पथे, त्वत्सनाथे। तत्त्वज्ञाने तरळमनसां शार्ङ्गिणः पादरक्षे नित्योद्वेगो भवति नियतेरीदृशी दुर्विनीतिः" इत्यन्वग्राहि।

वेदान्तसूरिरित्थं माध्यमिकाबद्धयुक्तिभिः क्लृप्तम्।
पक्षं चतुष्कमुक्तं प्रकटीकुरुतेस पश्चतापन्नम्॥
वादाहवेषु नित्यं मोदावहनिगममौळिगुरुसूक्तिम्।
व्याख्याय सप्तमेऽस्मिन् अधिकारे निर्वृतोस्मि गुरुकृपया॥

इति श्री वत्सवंशायनस्य, देशिकचरणपरायणस्य, नारायणस्य कृतिषु श्री परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाख्यायां सप्तमो माध्यमिकभङ्गाधिकारस्सपूर्णः॥

॥ शुभं भूयात् ॥

---

(பாசுரத்தின் கருத்து) ப்ரமாணம், ப்ரமேயம், வாதவ்யவஸ்தை வாதுபூண்ட தான் தன் சொல், சொற்பொருள், தத்வஜ்ஞானம், ஜயம் இவையொன்றுமில்லை என்று, ஸாக்ஷிகளான தேவரும், கேட்கும் மனிதரும், தன் மனமும் இதையொப்பாது வெட்கிக் குனிய, ஆடம்பரமாகப் பேசும் மதிகெட்ட மத்திமத்தான், திருட்டு வழியில் இவ்வுலகை அபஹரித்துக் கொள்ளும் என்று ஸ்தாபிக்கமுடியாதபடி முழுமதிபோல் எழும் எம்மதியால் காத்தோம் என்று

இவ்விதம் ஸ்ரீபரமதபங்கத்தில் மாத்யமிகபங்காதிகாரம் தமிழ் மொழிபெயர்ப்பு முற்றிற்று.



|| श्रीः ||

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नम

श्रीमते रामानुजाय नम. || श्रीमते वेदान्तगुरवे नम

श्रीमान् वेङ्कटनाथार्य कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

# परमतभङ्गे योगाचारमतभङ्गाधिकारः - 8

முற்றும் சகத்திலென்றே பகட்டிய முட்டரை நாம்
கூற்றும் துறந்து துறையில் நின்றே துகளாக்கியபின்
மற்றொன்றில்லது மதிபலவுண்டென்று வஞ்சனையால்
சற்றும் (சத்தும்) துறந்த யோகாசாரனைச் சிதைக்கின்றனமே.

---

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

## || * || देशिकाशयप्रकाशः - परमतभङ्गव्याख्या || * ||

कृपां वेङ्कटनाथस्य कामपि स्पृहयामहे।
यदधीना बुधानान्तु सदा सर्वार्थसिद्धयः ॥ १ ॥

ग्रहणं विषयस्तदाश्रयश्चेत्यखिलस्यापि खलापलापलाभे।
तमपास्य गुरुर्धियोतिरिक्तं न किमप्यास्त इतीदमप्यपाह ॥ २ ॥

द्वैतीयीकं बौद्ध विषयविहीनां मतिं च मन्वानम्।
नीच योगाचारं निराकरोत्यद्य निगमचूडार्यः ॥ ३ ॥

वृत्तवर्तिष्यमाणे गाथयैकया संगृह्णन् तयोस्संगतिं च सूचयति। முற்றும் इति। जगत्समस्तं शून्यमिति, பகட்டிய- स्ववचनेन परान् व्यामोहयतः। முட்டரை- मूढान् माध्यमिकान्। अनेन, परवञ्चनार्थं प्रवृत्तावपि चतुष्कोटिविनिर्मुक्ततत्त्वोक्तयादिना स्ववचनादिविरोधफलनात् न परप्रतारणसिद्धिः, प्रत्युत स्वमौढ्यमेवाविष्कृतमिति सूच्यते। நாம் கூற்றும் துறந்து- वयं सर्वतः परिहृत्य, துறையில் நின்று- न्याय्ये पथि स्थित्वा, துகளாக்கியபின்- चूर्णीकृतवन्तस्सः, तदनन्तरञ्च। மற்றொன்று इत्यादि। नानाकारा ज्ञानसन्ततयस्सन्ति, तदतिरिक्तं न किञ्चिदस्ति, इति वादिन, कूटयुक्तिभिस्सन्तं बाह्यपदार्थम् अपलपन्तं योगाचारं विध्वंसयाम इत्यर्थः।

முன் மதத்தில் இதற்கு வாசி

कार्यकारणभावादिகளில்லை என்ற चार्वाकனுக்கும், सर्वமுமில்லை என்ற माध्यमिकனுக்கும் சொன்ன दोषங்களைத் தப்பலாமென்று பார்த்து, ज्ञानமோனறையுமிசைந்து. அதிலே कार्यकारण-

---

अत्र पादादौ सर्वत्र "மோனை" इति द्राविडभाषाव्याकरणप्रसिद्धप्रासविशेषलाभाय, चतुर्थ-पादादौ "சற்றும் துறந்து" इति पाठे अभीप्सिते, ज्ञानातिरिक्तं किञ्चिदप्यपलपन्तं इत्यर्थो भाव्यः। अस्माभिस्तु पूर्वं "சத்தும் துறந்த" इति पाठाश्रयणेन सन्तं बाह्यार्थम् अपलपन्तम् इति व्याख्यातम्। तदा पादाद्यैकरूप्यं कथंचित्सम्पादनीयम्। गाथान्ते "சிதைக்கின்றனமே" इत्येव पाठः स्वरसः। न तु "சதிக்கின்றனமே" इति। तथा च विश्वापलापिमाध्यमिकमतस्य सर्व-विद्विष्टत्वेपि, नासन्मतस्य तथात्वं, विश्वस्य ज्ञानाकारत्वस्थापनादिति पूर्वाक्षेपेण योगाचारोदय इति सङ्गतिविशेषसूचनं बोध्यम्। समनन्तरवाक्येनेदं स्पष्टीभविष्यति।

अथ चार्वाक माध्यमिकमतखण्डनेनास्य योगाचारमतखण्डनस्य कृतकरत्वशङ्कामपोहितुं विषयत्रैलक्षण्यं प्रदर्शयन् तत्खण्डनं प्रतिजानीते- कार्यकारणभावेति। चार्वाकैः दर्शनानुरोधेन सर्वस्याकस्मिकत्वस्वीकारादिति बोध्यम्। சொன்ன दोषங்கள்- तत्तदधिकारयोः सिद्धान्तभागो उक्ताः "तेभ्यश्चैतन्य"मित्यादि स्वशास्त्रस्वाभ्युपगमविरोध दृष्टार्थप्रवृत्तिविरोधादयः। தப்பலாமென்று பார்த்து- परिहर्तव्या इति प्रतीक्ष्य। ज्ञानமோனறையுமிசைந்து इति। अस्यायमाशयः- न सर्व-शून्यत्वं युक्तम्, जगदान्ध्यप्रसङ्गात्। तदुक्तं धर्मकीर्तिना- "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" इति। अपि तु स्वयं प्रकाशं वेदनन्तावदङ्गीकार्यम्। तत्र च वेदनसन्ततौ पूर्वपूर्व-स्योत्तरोत्तरं प्रति कारणत्वादस्ति कार्यकारणभावः। तस्याश्च सन्ततेस्सर्वत्रैकत्वे सुखदुःखादि-व्यवस्थावैयाकुली स्यादिति विचित्रा ज्ञानसन्ततयो बह्वयस्सन्तीति चाङ्गीकार्यमिति। अनेनोप-पादनेन चार्वाक माध्यमिक व्यतिरेकसिद्धिः। ज्ञानமோனறையுமிசைந்து इति। एकशब्दप्रयो-

---

ஸ்ரீ

ஸ்ரீமதே லக்ஷ்மீந்ருஸிம்ஹபரப்ரஹ்மணே நம

ஸ்ரீமதே ராமாநுஜாய நம: || ஸ்ரீமதே வேதாந்தகுரவே நம

## ஸ்ரீ பரமதபங்கத்தில் யோகாசாரமதபங்காதிகாரம்-8

(பாசுரத்தின் கருத்து) உலகம் முழுவதும் வெறும் சூன்யம் என்று பகட்டாகப் பேசிய மாத்யமிக மூடரை விரட்டியடித்து, நேர்வழியில் நின்று நாம் துகளாக்கியபின் 'பல அறிவு அலைகள் உண்டு உண்மையாக அவற்றுக்குப் பற்றுக்கோடான விஷயங்கள் கிடையா" என்று வஞ்சனையால் புறப்பொருள்களைத் துறந்த யோகாசாரனை இங்கு சிதைத்திடுவோம்

भावத்தையும் கொண்டு, सुखदुःखादिव्यवस्थैக்காக பல ज्ञानसन्ततिகளையும்கொண்ட योगा-चारனை निरसिக்கிறோம்.

இம்மதமிருக்கும்படி

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" என்

---

गात् एतन्मते ज्ञानस्य निर्विशेषत्वमभिमतं सूच्यते । 'அதிலே कार्यकारणभावத்தையும் கொண்டு' इति, कार्यकारणभावस्य साक्षात् ज्ञाननिष्ठत्वोक्त्या "अन्योन्यहेतुता चैव ज्ञानशक्त्योर्न दिका" इति श्लोकवार्तिकोक्तसौत्रान्तिकसिद्धान्तव्यावृत्तिः फलिता । तत्र ज्ञानातिरिक्तशक्तिनिष्ठकारणता-स्वीकारात् । तदुक्तं तद्व्याख्यानन्यायरत्नाकरे सर्वेचेदं ज्ञानातिरिक्तवासनाङ्गीकारेणोक्तमिति । सुखदुःखादीति । "नानात्मानो व्यवस्थातः" इति न्यायसूत्रोक्तरीत्येति भावः । योगाचारेति । एतदादिनामनिर्वचनं पूर्वाधिकारारम्भे विशदीकृतं वेदनीयम् । "नाभाव उपलब्धेरि"ति शारी-रकसूत्रभास्करभाष्ये तु "शमयाविपश्यनायुगनद्धवाही मार्गो योग इति योगलक्षणम् । शमयेति समाधिरुच्यते । विपश्यना सम्यग्दर्शनलक्षणा । यथा युगनद्धौ बलीवर्दौ वहतः, तथा यो मार्गः (समाधि) सम्यग्दर्शनवाही स योगः । तेनाचरन्तीति योगाचारा इति व्युत्पत्त्यन्तरं प्रदर्शितम् बौद्धग्रन्थेषु माध्यमिकादिसंज्ञासिद्धिप्रकारा अन्यथापि प्रसिद्धा दृश्यन्ते । तत्र बुद्धस्य परिनिर्वाणा-नन्तरं तदुपदेशा मागध्यां भाषायां समग्राहिषत । तेषु सुत्तपिटक-विनयपिटका-भिधम्मपिटकरूपं पिटकत्रयं सुप्रसिद्धम् । अथ च सुत्तपिटकानुसारी सूत्रोपदेश इति, विनयानुसारी विनयपरि-भाषेति, अभिधर्मानुसारी अभिधर्मविभाषेति च संस्कृतभाषया ग्रन्था अशोकपुत्रकाले व्यरच्यन्त । तत्र विभाषाग्रन्थानुसारेण वैभाषिकस्य सूत्रोपदेशानुसारेण सौत्रान्तिकस्य च प्रवृत्तिः । अथ कनिष्कस्य राज्ञः काले लङ्कावतारसूत्रादिदर्शितः महायानसमयः हीनयानसमयश्च तत्प्रतिस्पर्धिनौ प्रादुर्बभूवतुः । तत्र पूर्वस्मिन् निविष्टौ योगाचारमाध्यमिकौ । तत्र योगाचारसंज्ञा च पूर्वाधिकारे, अत्र चानुपदं द्विधा निरवोचि । माध्यमिकशब्दार्थोऽप्यन्यथा माध्यमिकवृत्तावुदाहृतः- भावाभावान्त-द्वयरहितत्वात् सर्वस्वभावानुपपत्तिलक्षणा शून्यता मध्यमा प्रतिपत् । स मार्गो मध्यमः" इति । तेन सञ्चरमाणो माध्यमिक इति शेष इति ।

अथ तन्मतं तदनुवादिनां वचनेन विशदयति- अविभागोहीति । अत्र அவன இति

---

இங்கு காரியம் காரணம் என்ற முறை கிடையாது என்ற சார்வாகனுக்கும், ஸர்வம் சூன்யம் என்ற மாத்யமிகனுக்கும் நேர்ந்த கதி தனக்கு நேரலாகாதென்று கருதி, அவர்களை விட வாசி தோன்ற 'ஜ்ஞானம் உண்டு அதுவும் ஸுகதுக்கானுபவ வேறுபாடுகளுக்காக ஆங்காங்கு அலையலையாகத் தொடர்ந்து தனித்தனியே ஒழுகிவரும். முன்னுக்கும்பின்னும் காரண-காரிய உறவு முறையும் இருக்கிறது' என்று பேசின யோகாசாரனை கண்டிக்கிறோம்.

றம், "सहोपलम्भनियमादभेदो नीलतद्धियो" என்றும் இவன் சொல்லுமிதனை अनुवदिக்குமவா-
களும் "त्वत्पक्षे यद्यपि स्वच्छो ज्ञानात्मा परमार्थत. । तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः । चित्राभि-
श्चित्रहेतुत्वाद्वासनाभिरुपप्लुतात् (उपप्लवात्) । स्वानुरूप्येण नीलादिग्राह्यग्राहकरूषितम (दूषितम्) ।

पाठः अधिकः । उपरि "இவன் சொல்லுமிதனை" अनुवदिக்குமவர்களும इत्येव पाठः । न तु இவன் சொல்லும इति रहितः । अविभागत्वं- ग्राह्यग्राहकरूपविजातीयभेदरहितत्वम् । नानाज्ञान-सन्तानाङ्गीकारेण सजातीयभेदसत्त्वात् । अद्वैतिनान्तु ज्ञानैक्यवादेन सजातीयभेदोप्यनिष्ट इत्य-स्मान्मताद्विशेषः । बुद्धयात्मा- बुद्धिस्वरूपम् । विपर्यासितदर्शनैः- भ्रान्तैः । ग्राह्यग्राहकसंवित्तयः-प्रमेय प्रमातृ प्रमितयः । इवशब्देन ग्राह्यग्राहकयोर्मिथ्यावभासमाह । तर्हि नीलादिज्ञानानां निरा-लम्बनत्वप्रसङ्ग इति चेत्तत्राह- सहोपलम्भेति । "भेदश्च भ्रान्तिविज्ञानैर्दृश्यतेद्राविवाद्वये" इत्युत्तरार्धम् । "नान्योनुभाव्यो बुद्धयास्ति तस्यानानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥ इति पूर्वश्लोकः । नीलादिकं ज्ञानाभिन्न ज्ञानोपलम्भसहभाव्युपलम्भवत्त्वनियमात् । ज्ञानात्मवादिमतेनात्मवदित्यनुमानं विवक्षितम् । तदुक्तं शास्त्रदीपिकायां- सहोपलम्भनियमोपि ज्ञानार्थयोरनियमोपलम्भव्याप्तं भेदं व्यापकविरुद्धोपलब्ध्या प्रतिषेधन् न भेदमुपस्थापयति । भिन्नानां घटपटादीनामनियतसहोपलम्भनत्वात् । न चासिद्धः वेद्योपलम्भसमये त्रित्तेरुपलम्भ इति वाच्यम्, उत्तरकाले सहैव ज्ञानेन विषयस्मरणदर्शनात्, ज्ञातो घट इति । न चाननुभूतस्मरणं संभवति" इति । भ्रान्तिविज्ञानैः भ्रान्तैः । अद्वये- एकस्मिन् चन्द्रे । द्वित्वग्रहणवत् भेदोपलम्भोपि भ्रान्ति-रेवेत्यर्थः । तथा च नीलाद्यर्थाकारोपि परमार्थतः ज्ञानाकार एवेति, ज्ञानस्य स्वतस्साकारत्वान्न नीलादिज्ञानानां निरालम्बनत्वप्रसङ्ग इति भावः । एकस्य नानात्वेनावभासे कारणकथनमुखेनैत-न्मतमनुवदतां भट्टकुमारिलपादानां वचनान्याह- இவன் சொல்லுமிதனை इत्यादिना । "त्वत्पक्ष" इत्यत्र श्लोकवार्तिकतद्व्याख्यानादिषु "मत्पक्ष" इति पाठो दृश्यते । तदा योगाचारस्य स्वानु-सन्धानमिदमिति बोध्यम् । स्वच्छः- विषयोपरागशून्यः । यद्यपि ज्ञान परमार्थतस्स्वच्छं न नाना, तथापि पूर्वघटपटादिज्ञानप्रसूताभिः विचित्रघटपटादिज्ञानाकारहेतुत्वात्स्वयं विचित्राभिर्वासनाभिः उपप्लवात् क्षोभात् भ्रान्तेरितियावत्, स्वानुरूप्येण, घटपटादिज्ञानाकारानुगुण्येन नीलघटादिग्राह्य-चैत्रादिग्राहकरूषितं (दूषितं) प्रमातृ प्रमेयोपरक्तं सत् प्रविभक्तमिव, नानेव उत्पन्नं, भातं, नान्यं पर-मार्थभूतं बाह्यं घटादिरूपं पदार्थम् अपेक्षते इत्यर्थः । अत्र "ज्ञानात्मे"त्युपक्रमेपि, "तथापी"त्यादि-

"புத்தியொன்றேயெனினும் அறியாதவர்களால் புலப்படும் பொருட்கள் எனவும், புலப்படுத்தும் ஆத்மாவெனவும் புலனாகும் புத்தி எனவும் மூன்று வகை உண்டு என்று பாமிக்கப்படுகிறது ஒருங்கே தோன்றுவதால் அறிவின் அம்சமே பொருட்களும்." என்று

प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ॥" என்று சொன்னார்கள். இப்பக்ஷத்தை இவ் उपलम्भस्वार-स्यத்தாலும், अनुमानங்களாலும் साधिக்கும்வன் சொல்லும் मोक्षமாவது विषयोपरागशून्यबुद्धि-

वाक्यभेदकरणात् "दूषितमुपपन्नम्" इत्याद्यनुसारेणेदमिति नपुंसकान्तविशेष्यपदमध्याहार्यम् । अत्र वासनया ज्ञानं, ज्ञानेन वासनान्तरं, तेन ज्ञानान्तरमिति नानाज्ञानवासनासन्तानस्याभिप्रेतत्वात्, निरालम्बनवादिना माध्यमिकेनात्रान्योन्याश्रयदोषो नोद्घाटनीय इति दर्शयितुम् "अनादौ संसार" इत्युक्तिः । तथा चानादित्वेन बीजांकुरादाविवेष्टत्वात्, नात्र स दोष इति द्योतितम् । अत्र वासना नाम क्षणिकविज्ञानप्रवाह एवेति वक्ष्यते । नातिरिक्ता सौत्रान्तिकमत इव । अत्र पूर्वपूर्वम् उत्तरोत्तरस्य कारणम् । सजातीयघटादिज्ञानसन्तानेऽन्तिमं ज्ञानं, विजातीयपटादिज्ञानकारणं भवति । यथा बाह्यपदार्थसद्भावे सजातीयघटक्षणसन्तानेऽन्त्यःक्षणः विजातीयकपालक्षणोत्पादनशक्तः । एतन्मतसारार्थश्चैवं श्रीभाष्यकारैर्दर्शितः- "यदुक्तं ज्ञानवैचित्र्यमर्थवैचित्र्यकृतमिति, तन्नोपपद्यते । अर्थवत् ज्ञानानामेव साकाराणां स्वयमेव विचित्रत्वात् । तच्च स्वरूपवैचित्र्यं वासनावशात् । ...... कथं बहिष्ठघटाद्याकारः आन्तरस्य ज्ञानस्येत्युच्यते? इत्थम् । अर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम् । प्रकाशमानस्य च तस्य साकारत्वमावश्यकम् । अन्यथा तस्य प्रकाशायोगात् । एकश्चायं नीलादिराकार उपलभ्यमानो ज्ञानस्यैव । तस्य बहिर्वदवभासो भ्रमकृत" इत्यादिना । अयञ्च भ्रमश्शारीरकशास्त्रार्थदीपिकायां निदर्शितः- "ननु सर्वस्याप्यान्तरत्वे बहिर्वदवभासः कथमिति चेन्न- उपरि स्थितानां नक्षत्रादीनामुद्यतां भूमिस्थत्वावभासवत् बाह्यत्वावभासस्य भ्रमत्वा"दिति । अथास्मिन्मते तत्सम्मतं प्रमाणं प्रदर्शयन् मोक्षस्वरूपमप्याह- இப்பக்ஷத்தை इति । இவ் उपलम्भस्वारस्येति युक्तः पाठः । उक्त सहोपलम्भनियमस्वारस्येत्यर्थः । अनुपलम्भस्वारस्येति तु सर्वत्र दृश्यते । तत्र चोक्तरीत्या ज्ञानाकारातिरिक्तनीलाद्याकारानुपलब्धिस्वारस्येति कथञ्चिद्व्याख्येयम् । अनुमानங்களாலும் इति । तदुक्तं सर्वदर्शनसंग्रहे- "ग्राह्यग्राहकयोरभेदश्चानुमातव्यः, यद्वेद्यते येन वेदनेन, तत्ततो न भिद्यते यथाज्ञानेनात्मा । वेद्यन्ते तैश्च नीलादय" इति । नन्वस्य मते का नाम मुक्तिर्भविष्यति? एकाकारज्ञानसन्ततौ चरमेण अन्याकारज्ञानधारारम्भाङ्गीकारात्, कदापि विषयावभासविरामासम्भवात् । न च ज्ञानसन्ततेरेव कदाचिदुच्छेदान्माध्यमिकस्येव सर्वमुपपद्यत इति वाच्यम् । तथासति तन्मत इव स्वरूपोच्छित्तेरपुरुषार्थत्वापातादित्यत्र, तत्सम्मताद्विलक्षणं स्वाभिमतं मोक्षस्वरूपमाह- இவன் சொல்லும் மோக்ஷமாவது इति । एतदुक्तं भवति ज्ञानसन्तते-

இவன் சொன்னதை எடுத்துக் கூறுவோரும், "உன் பக்ஷத்தில் உண்மையில் ஒன்றேயான சுத்த புத்திதான் முன் முன் அநுபவவாசனைகளின் பலவிதப் பிரிவுகளாலே பரமித்து, ஆகாரத்துக்கு உள்ளவாறு நீலம் வெளுப்பு முதலிய பொருட்களின் காரணை வேறுபாட்டை

सन्तानस्फुरणம். இதற்கு उपायமாகச்சொல்லுமதும் இப்படியே தெளிந்து भाविக்கை.

**இவனுக்குக் காரிய காரண உறவு முறை கை கூடாது.**

இவன் தனக்கு चार्वाकனிற்காட்டில் வாசியாக कार्यकारणभावம் கொண்டது निर्वहिக்க வொண்ணாது எங்ஙனே எனனில்? क्षणिकस्वलक्षणव्यक्तिनियमத்தாலே कार्यकारणभावம் சொன-

---

स्साकारत्वे पूर्वपूर्वज्ञानप्रसूतवासनावैचित्र्यमूलकत्वस्य प्रागुक्तत्वेनौपाधिकत्वात् समाध्यादिबले-नानादिवासनोच्छेदे सति निरुपाधिकविषयोपरागशून्यधीसन्तानस्फुरणं भवतीति सैव मुक्तिरिति। तदुक्तं सिद्धान्तशिरोमणौ- प्रागुक्तभावनाबलादशेषवासनोच्छेदे विगलितेदमाकारा या ज्ञानधारा समुदेति, साऽनुभवैकताना मुक्तिरिति। "विषयोपरागे"त्यत्र विषयशब्देन ग्राहकस्यापि ग्रहणं, तस्यापि कदाचित् ज्ञानविषयत्वात्। अथ तन्मतेन, मोक्षोपायमाह- இதற்கு உபாயமாக इति। இப்படியே தெளிந்து ज्ञानसन्ततिस्स्वतो निराकारा इत्यादिविभाव्य। एतेन "एतद्धि चित्त-विज्ञानं यन्नीलादिकमुल्लिखेत्। तत्स्यादालयविज्ञानं यद्भवेदहमास्पदमित्युक्तविज्ञानद्वये चित्त-विज्ञानोपरागविगमावश्यकतोक्ता। केचित्तु आलयविज्ञानेपि अहंभावानुवृत्तिविगमोऽपेक्षित इति वदन्ति। तदुक्तं "सवासनालयज्ञानानुवृत्तिर्बन्ध इष्यते। विशुद्धालयविज्ञानसन्ततिर्मोक्ष ईरितः॥ इति।

अथैतन्मतं विस्तरेण निरस्यन् प्रथमं तन्मते कार्यकारणभावाभ्युपगमं दूषयति- இவன் इति। अन्वयश्चास्य "कार्यकारणभாவம் கொண்டது, इत्यत्र। தனக்கு- स्वस्य। इदञ्च வாசியாக इत्यत्र वैलक्षण्येनेति। कार्यकारणभावश्चोपलम्भानुपलम्भपञ्चकेन, सिध्यतीति तन्मतम्। कार्यस्य स्वोत्पत्तेः पूर्वमनुपलम्भः, कारणोपलम्भादनन्तरमुपलम्भः, उपलब्धस्य नाशात् पश्चा-त्कारणानुपलम्भेनानुपलम्भ इति तत्पञ्चकक्रमः। तदुक्तं- तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षो-पलम्भानुपलम्भनिबन्धन" इति। अनिर्वाहमेव दर्शयति- எங்ஙனே எனனில் इति। क्षणिकत्वम्-उत्पन्नमात्रस्य सत्तानुबन्धि, हेतुनिरपेक्षविनाशप्रतियोगित्वम्। स्वलक्षणत्वं- सजातीयविजातीय-व्यावृत्तं स्वत एव यत्। तत्स्वलक்षणमित्युक्तं विशेष इति निर्णयः" इत्युक्त वैशेषिकानां विशेष-

---

*யடைகிறது. யதார்த்தமாக நீலம் முதலிய புறப்பொருட்கள் தேவைப்பட்டா" என்று காட்டி-னார்கள். இவன் இப்படிச் சொல்லக் காரணம்- அறிவைவிட வேறாக புறப்பொருள் புலப்-படாததும், ஒருமிக்கே இரண்டும் தோன்றுவதால் செய்யும் அபேதானுமானமும்தான் இவன் கக்ஷியில் மோக்ஷமாவது- பொருட்களைத் தோன்றச்செய்யாத சுத்த புத்தியின் கூட்டம். இதற்-குக் காரணமும், 'இப்படிப்பட்டது தத்வமில்லை" என்று தெளிந்து த்யானிக்கலே*

*காரியகாரண உறவு இவன் கொண்டதும் நிர்வஹிக்க இவனால் இயலாது. ஏனெனில்— இவனுக்கு ஞானங்கள் காலப்போதும் மாறுபடும் உதிரிகள் தன்மையுற்றவை. உதிரி*

ணுல் गर्दभधूमादिகளுக்கும் कार्यकारणभावம் சொல்லலாம். அப்போது எல்லா पूर्वक्षणங்களும் எல்லா उत्तरक्षणங்களுக்கும் कारणமென்னலாம்படியாய் தானிசைந்த अनुमानமும் निर्मूलமாம். सन्तानैक्यத்துக்கு व्यवस्थापकம் கொள்ள விரகில்லை. ஆகையாலே "यस्मिन्नेव हि सन्ताने

पदार्थवत् स्वतः विशेषान्तरनिरपेक्षव्यावृत्तत्वं, निर्विशेषत्वमिति यावत्। व्यक्तिशब्दप्रयोगेण जातिपुरस्कृतनियमाभावस्सूच्यते, तन्मते वक्ष्यमाणरीत्या जात्यभावात्। ततश्चैतावता- लोके स्थिरयोर्दृष्टान्तदृष्टसजातीययोर्द्वयोः पदार्थयोरेव, कार्यकारणभावावधारणात्, तद्वैपरीत्येन, क्षणिक-स्वलक्षणव्यक्तिविशेषयोर्नियमासिद्धिर्विवक्षिता। तथासति संभवन्तं दोषं दर्शयति- गर्दभधूमादि-களுக்கும் इति। क्वचित्पूर्वापरत्वाविशेषादित्यर्थः। तथा च सर्वार्थसिद्धिः- "सर्वं क्षणिकमिति वदतस्ते कस्यचित्किञ्चित्प्रति कार्यत्वमनन्तरभावित्वमात्राच्चेत्, त्रैलोक्योदरवर्तिनः पूर्वक्षणास्सर्वे तदनन्तरभाविनां सर्वेषां क्षणाना कारणानि स्युरिति। क्वचिन्नीलक्षणोपि अन्यत्र पीतक्षणकारणं स्यादित्यर्थः। एवं जातस्यातिप्रसङ्गस्यानिष्टतमत्वाय स्वाभ्युपगमप्रतिकूलतामप्याह- அப்போது इति। अत्र क्वचित् "தான" इतीदमधिकं दृश्यते। "तथा सत्येवे"त्यवधारणार्थकं वा भवतु। தானிசைந்த- इति। कार्यकारणभावस्योक्तरीत्या दुस्स्थत्वे "तादात्म्यतदुत्पत्तिभ्यामविनाभावः" "कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न न दर्शनात्" इति स्वाभ्युपगतकार्यकारणभावावधारणपूर्वकव्याप्तिप्रतिसन्धानासंभवेनानुमानं निर्मूलं स्यादित्यर्थः। तथा हि- न तावदन्वयव्यतिरेकाभ्यामेव व्याप्तिधीस्सुलभा, शतशस्तयोर्दर्शनेपि पार्थिवत्वलोह-लेख्यत्वादेर्वज्रमणौ व्यभिचारात्। ततश्चाविनाभावनियमः- व्याप्तिः, अदर्शनान्न, दर्शनाच्च न-अन्वयव्यतिरेकाभ्यां केवलं न सिध्यति। अपि तु कार्यकारणभावाद्वा, स्वभावाद्वा तादात्म्यरूपात् नियामकात् गृह्यते। यथा धूमाग्न्यो,र्वृक्षशिंशुपयोश्चायं वृक्षशिंशुपाया इत्यादौ इति तदभ्युपगमः। एवं च कार्यकारणभाववैयाकुल्यां नियामकाभावेनानुमानं निर्मूलं भवेदित्याशयः। नन्वेकसन्ताने पूर्वक्षणा उत्तरक्षणकारणं भविष्यन्ति। ततश्च न गर्दभधूमाग्न्योस्तत्प्रसङ्गः। सन्तानान्तरत्वादित्य-त्राह- सन्तानैक्यத்துக்கு इति। सर्वक्षणिकत्ववादिनस्तस्य देशकालस्थैर्यादेरप्यसिध्या एकदेश-कालप्रभवत्वादिरूपं सन्तानैक्यमपि दुर्वचमित्याशयः। एवं सन्तानैक्यस्य दुरुपपादत्वोक्त्या तदैक्यमवलम्ब्य सुखदुःखादिव्यवस्थाप्रदर्शकसिद्धान्तदीपिकावचनमपि निरस्तमित्याह- ஆகை-யாலே इति। दृष्टान्तदार्ष्टान्तिकेति। कार्पासस्य दृष्टान्तस्यापि क्षणिकज्ञानसन्तानरूपत्वेन,

களுக்கு ஒருவித ஒழுங்குமுறையுமின்றி காரியகாரண ஸம்பந்தம் கொண்டால், நெருப்பின் காரியமான புகையைக் கழுதையின் காரியமாகவும் கூறலாம். அப்போது எல்லாம் எல்லா-வற்றிற்கும் காரணமாகி, காரியகாரண உறவு முறையே சிதறி அதன் ஒழுங்கின்மேல் கட்டப்-

आहिता कर्मवासना । फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥" என்று சொன்ன दृष्टान्तदार्ष्टान्तिकங்களும் घटियாது. अन्वयव्यतिरेकसिद्धसामान्यनियमத்தாலே कारणत्वादिகளாக கொள்ளுகை, सामान्यरूपத்தையும், அதற்கு व्याप्तिயை ग्रहिக்கைக்கு நிலை நின்றதொரு ज्ञाताவையும் கொள்ளாமையாலே கூடாது.

---

तदैक्यव्यवस्थापकस्योक्तरीत्याऽसंभवात् लाक्षादिरञ्जकद्रव्योपरागकृतरक्तिम्नोऽन्यत्रापि प्रसङ्गेन, तन्निदर्शनेन, देवदत्तादिरूपालयविज्ञानसन्ततावपि कर्मवासनायाः पुण्यापुण्यरूपायाः ज्ञानवासनाया भावनादेश्च व्यवस्था न सिध्यतीति भावः । नन्वन्यसिद्धान्तिनां कथं कार्यकारणभावसिद्धिः? अन्वयव्यतिरेकदर्शनसिद्धकार्यकारणतावच्छेदकजातिविशेषमूलकतयेति चेत्, ममापि तथैव स सिध्यतिवत्यत्राह- अन्वयव्यतिरेकेति । अयं भावः- प्रथमतस्तत्र तत्र व्यक्तिविशेषेषु अन्वयव्यतिरेकौ दृष्ट्वा, पश्चात् दण्डत्वघटत्वाद्यवच्छिन्नसामान्ययोर्नियमस्य प्राक्पश्चाच्च स्थिरेण केनचिद् ज्ञात्राऽवधारणात् कार्यकारणभावसिद्धिर्वक्तव्या । तद्यद्यपि परेषां मते घटते । तव तु तत्सर्वं नोपपद्यते निर्विशेषक्षणिकविज्ञानवादिनः । व्यक्त्यतिरिक्तजातेर्ज्ञातृस्थैर्यस्य चानभ्युपगमात् । जात्यङ्गीकारश्चैवं बौद्धैर्दूषितः इतिशास्त्रदीपिका- "न याति न च तत्रासीत् न चोत्पन्नं (नास्ति पश्चात्) न चांशवत् । जहाति पूर्वं नाधारम् अहो व्यसनसन्तति"रिति । तदर्थश्च- स्थलान्तरे नूतनघटोत्पत्तौ पूर्वघटात् घटत्वजातिस्तत्र न याति, अक्रियत्वात् । न च तत् तत्र पूर्वमेवासीत्, तस्य घटस्येदानीमेवोत्पन्नतया, पूर्वं निराधारतत्स्थित्यनुपपत्तेः । न च तत् इदानीमेव तेन सहोत्पन्नम् । अनित्यत्वापत्तेः । किञ्चानयोर्द्वयोरप्येकघटत्वजातिमत्त्वं युगपत्कथं सङ्गच्छते? न चैकेनांशेन तत्र, घटत्वमस्ति, अंशान्तरेणात्रेति विरोधपरिहारः, अंशाख्यावयववत्त्वे तस्यानित्यत्वापातात् । किञ्च नापि पूर्वघटं परित्यज्य घटत्वं सर्वथाऽत्रागच्छति, पूर्वस्यापि घटत्ववत्त्वेन व्यवहारादित्यहो दुरन्ता दुःखसन्ततिर्जातित्वादिनामिति ।

---

பட்ட அநுமான ப்ரமாணம் அடியோடு வேரறும். ஒரு தேசகாலாதிகளில் உண்டாம் அலை வரிசைக்குள்பட்டவைகளிடையேதான் கார்யகாரணபாவம் என்பதற்குச் சேர தேசகாலாதிகளுடைய ஒருமைப்பாட்டையும் நீ அங்கீகரித்திலை ஆகையால் "எந்த அறிவின் அலை வரிசையில், முன் வினையின் வாஸனை படருகிறதோ, அந்த அறிவு வரிசையில்தான் அதன் பயனாகிய நினைவு முதலியன உண்டாகின்றன. சாயமேற்றப்பட்ட பருத்தியினிடமிருந்துண்டான கார்யபரம்பரையில் சிவப்புப்போல" என்று சொன்ன உதாஹரணமும், "எல்லாம் நிலை நில்லாத க்ஷணிக பதார்த்தங்கள்" என்று கூறும் உனக்கு அமையாது. பலவிடங்களில் ஒப்புமை வேற்றுமை இலக்கணங்கள் கண்டு, ஒரு ஒழுங்குமுறையைப் பின்பற்றி இவை கார்யம் காரணம் என்று நிலைநிற்கும் ஒரு அறிவாளி தோந்து எடுக்கிறான் என்று பிறர் சொல்லலாம். நீ எதையும் ஸ்திரமாக ஒப்புக்கொள்ளாமையால், உன்னால் அப்படி அங்கீகரிக்க வியலாது.

**இவன் ஜ்ஞாநம் என்றொன்று ஒப்பினதும் தப்பு.**

कार्यकारणभावம் தானும், ज्ञानங்களுடைய सत्यत्वமும், पूर्वोत्तरकालासत्त्वமும், साध्यसत्त्वादिகளும் भ्रान्तिरूपविकल्पमात्रसिद्धங்கள் ஆகையாலே ज्ञानத்துக்கு मायावादि சொல்லும் नित्यत्वமாதல், माध्यमिकன் சொல்லும் तुच्छत्वமாதலொழிய கொள்ள விரகில்லை.

**வெளியுலகப் பொருட்கள் இல்லை என்பதும் தவறு**

ज्ञानம் தான் स्वयं प्रकाशமானாலும், தன்னுடைய स्वयम्प्रकाशत्वம் प्रमाणान्तरनिरपेक्षत्व-

---

एवं कार्यकारणभावानिर्वाहेणैतन्मते स्वाभिलषितचार्वाकव्यावृत्त्यसिद्धिमुक्त्वा, अथ ज्ञानतत्त्वाङ्गीकारेण स्वाभीष्टमाध्यमिकव्यावृत्त्यसिद्धिमप्याह- कार्यकारणेति। ज्ञानसन्ततिभेदस्य वासनाभेदोपाधिकत्वात् पूर्वापरज्ञानयोः कार्यकारणभावोप्यौपाधिक इति तात्पर्येण, तस्यापि विकल्परूपभ्रान्तिसिद्धत्वोक्तिः, न त्वत्यन्तमिथ्यात्वात्। अद्वैतिवैलक्षण्येन नानाज्ञानाङ्गीकारस्य-तन्मतप्रतितन्त्रत्वात्। ज्ञानங்களுடைய सत्यत्वமும் इति पाठस्स्वरसः। सत्त्वமும் इति पाठेप्ययमेवार्थो बोध्यः। ज्ञानस्यापि माध्यमिकेन मिथ्यात्वाभ्युपगमात्तद्व्यावृत्तये हि सत्यत्वं तस्यैतेन स्वीकृतम्। पूर्वोत्तरकालासत्त्वमिति। क्षणिकत्वं हि ज्ञानस्य पूर्वोत्तरकालयोरसत्त्व एव भवतीति तदप्यभ्युपगमनीयम्। साध्यसत्त्वादीति। यत्पूर्वापरकालयोरसत्, तन्मध्येप्यसत्, शशविषाणवदिति माध्यमिकमतखण्डनाय अनेन, ज्ञानस्य पूर्वापरकालयोरसतोपि मध्यकाले सत्त्वं साध्यते, अन्यथा जगदान्ध्यप्रसङ्गेन सर्वप्रवृत्त्यवसादादिति, मध्येसत्त्वस्य साध्यत्वेन निर्देशः। मध्यसत्त्वेत्यप्यस्ति पाठः केषुचित्कोशेषु। भ्रान्तिरूपविकल्पेति। तदुक्तं- कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः॥ इति। निर्विकल्पकप्रत्यक्षमेव कल्पनाविरहितत्वात्प्रमा। विकल्पस्तु अवस्तुभासकत्वात्, असंवादात्- बाधात्, उपप्लवः- भ्रम इत्यर्थः। एतन्मते ज्ञानात्मस्वीकारेपि तस्य निर्विशेषत्वाङ्गीकारात् उक्तस्सर्वोपि धर्मस्तस्मिन् भ्रान्तिपरिकल्पित एवेति भावः। मायावादिசொல்லும் नित्यत्वமாதல इत्यादि। ज्ञाने कार्यकारणभावस्य कल्पितत्वोक्त्या तस्य नित्यत्वमेव फलतीति, तदाद्वैतिमतप्रवेशस्स्यात्, ज्ञानसत्यत्वादीनां भ्रान्तिसिद्धत्वकथनेन ज्ञानतुच्छत्ववादिमाध्यमिकमध्याध्यासो वा स्यादित्यभिप्रायः।

एवमेतावता तदीयामान्तरज्ञानाभ्युपगमपरिपाटीं विपाट्याथ तदीयं बाह्यार्थभङ्गमपि प्रमथ्नन् प्रथमं "अविभागोही"त्यादिनोक्तं स्वाकारस्यैव ज्ञानेन ग्राह्यत्वं दूषयति- ज्ञानம் தான

---

*ஜ்ஞானக்ஷணங்களிடையே நீ சொல்லும் காரியகாரண உறவு, முன்பின் காரியம் இல்லாமை, நடுவுள்ளமை, இவை அத்தனையும், உன் மதப்படி பொய்யானவையாகையால், ஒன்று, ஜ்ஞாநம் அத்வைதப்படி நித்யமாயோ, அல்லது மாத்யமிகன் மதப்படி சூந்யமாகவோ இருக்க நேரிடுவது அல்லால் வேறு வழியில்லை.*

क्षणिकत्वादिகளைக் காட்டாமையாலே सर्वसंग्राहकज्ञानान्तरத்தாலேயறியவேண்டியிருக்க स्वाकारமே ग्राह्यமென்கை स्वपक्षविरुद्धம். सन्तानान्तरமும் एकसन्तानத்தில் पूर्वापरक्षणங்களும் உண்டென்று காட்டுகிற ज्ञानம் स्वस्वरूपातिरिक्तसत्यविषयமென்னுமிடம் தனக்கே இசையவேணும். सन्तानान्तरம் ग्राह्यமல்லாதபோது शिष्याचार्यशत्रुमित्रवादिप्रतिवादिसंव्यवहारங்களொன்றும் கூடாமையாலே, एकसन्तानपरिशेषமாதல், अद्वैतिகள் சொல்லும் एकस्थिरपरिशेषமாதலாம். ஆகை-

---

इति। एतदुक्तं भवति यद्यपि ज्ञानसामान्यं स्वयम्प्रकाशं, तथापि, स्वरूपस्वरूपनिरूपकधर्मातिरिक्तस्य निरूपितस्वरूपविशेषणस्य कस्यापि तेन स्वयं प्रकाशप्रत्यक्षेण ग्रहणासम्भवात्, तन्निष्ठानां प्रमाणादिबाह्यार्थानपेक्षत्व,क्षणिकत्वादि,विशेषणानां स्वाकाराणामपि स्वेन प्रकाशानुपपत्तेः, ज्ञानान्तरेणैव ग्रहणं वक्तव्यम्। तथा च गतं ग्राह्यस्य ग्रहणाकारत्वसिद्धान्तेनेति। तादृशज्ञानान्तरधर्माणां ततोऽप्यन्येन ग्रहणकल्पनेऽनवस्थां शङ्कमानानां कृते उक्तं- सर्वसंग्राहकज्ञानान्तरத்தாலே इति। कल्प्यमानं तादृशं द्वितीयं ज्ञानं ईश्वरज्ञानवत्सर्वविषयकमेवास्त्विति ज्ञानान्तराकल्पनान्नानवस्थेति भावः। ननु माभूत् स्वाकारस्यैव स्वेन ग्रहणमिति नियमः। अथापि ज्ञानस्य स्वस्वरूपातिरिक्तसत्यविषयकत्वाभावनियमात् ज्ञानातिरिक्तपदार्थमिथ्यात्वमेतत्सम्मतमुपपद्यत एव। तेषामाकाराणां ज्ञानस्वरूपत्वादित्यत्राप्यनुपपत्तिं दर्शयति- सन्तानान्तरமும் इति। एकदेशावच्छेदेन जायमाननीलज्ञानसन्तानातिरिक्तपीतज्ञानसन्तानः, भिन्नदेशेषु जायमानदेवदत्तज्ञानसन्तानातिरिक्तयज्ञदत्तज्ञानसन्तानश्चेत्यर्थः। एकसन्तानத்தில் इत्यादि। नीलज्ञानसन्तानघटकैकज्ञानक्षणापेक्षया पूर्वापरज्ञानक्षणाश्चेत्यर्थः। உண்டென்று इत्यादि। अत्रायमभिसन्धिः- ज्ञानेन केनचित् सन्तानान्तरस्य स्वपूर्वापरज्ञानक्षणानाञ्च प्रकाशनात्, तेषां च तदभेदायोगात् वक्ष्यमाणरीत्या सत्यत्वाच्च, ज्ञानस्य स्वस्वरूपातिरिक्तसत्यपदार्थविषयकत्वाभावनियमोऽप्यसिद्ध एव तव मते भवति। तेषां तदभेदे सन्तानान्तरत्व पूर्वापरत्वादिनिर्देशबाधात् इति। தனக்கே இசையவேணும்- स्वेन अकामेनाप्यङ्गीकार्यम्। एवमनङ्गीकारे दण्डमाह सन्तानान्तरம் इति। शिष्याचार्येति। शिष्यादिज्ञानसन्तानेनाचार्यादिज्ञानसन्तत्यग्रहणे, परस्पराप्रतीत्या वादोपदेशादिदौस्थ्यं दुर्वारमित्यर्थः। एकसन्तानपरिशेषेति। सन्तानान्तरसद्भावे प्रमाणाभावादित्यर्थः। ननु कथमेकसन्तानपरिशेषः प्रसज्यते? एकजातीयज्ञानसन्तानान्तर्गतक्षणस्य विजातीयज्ञानसन्तत्यारम्भणशक्तिस्वीकारादित्यत्राह- अद्वैतिகள் சொல்லும் इत्यादि। तथा च ज्ञानेन सन्तानान्तरस्येव स्वपूर्वापरक्षणयोरपि ग्रहणायोगेन तस्मिन् क्षणिकत्वस्याप्यसिद्ध्या अद्वैतिनामिवैकस्थिरज्ञानात्मवादो वा प्रसज्येतेत्यर्थः।

---

புறப்பொருட்கள் அறிவின் மாற்றுருவம் ஆனகையால் தன்னுருவைத்தான் அறிவு காண்கிறது என்பதும் சரியல்ல. அறிவு சுயம் பிரகாசமாயினும், தன்னிடத்திலுள்ள அநேகத்தன்மைகளை அது காட்டாததாகையால், ஈச்வரஜ்ஞானம்போல எல்லாவற்றையும் அறிவிக்கவல்ல

யால் बाह्यग्रहणத்தை बाधिககைக்குச் சொல்லும் कुतर्कங்களெல்லாம் स्वसिद्धान्तबाधकங்களாம். स्वपक्षस्थापकம் தானும் स्ववेद्यविषयத்தில் प्रमाणமன்றென்கிற இவனுக்கு माध्यमिकனுக்குச் சொன்ன दूषणத்தைத் தப்பவொண்ணாது.

அறிவு பொருள் இவைகளின் உருவம் வேறு வேறானது

ज्ञानज्ञेयங்களுக்கு आकारभेदம் காண்கிறிலோமென்றதவும், "इदमहं जानामि" என்கிற त्रितयप्रकाशात्मकस्वानुभव, सर्वलोकानुभवங்களாலே निरस्तம் இங்ஙன் கொள்ளாதபோது "ग्राह्य-

तथा च बाह्यार्थभङ्गाय कृतो यत्नस्स्वसदननिहितहुतवहज्वालायत इत्याह- ஆகையால் इति । "ग्राह्यग्रहणे"त्यत्र "बाह्यग्रहणेत्येव युक्तः पाठः । कुतर्कங்கள்- "अविभागोही"त्यादिनोक्ताः ज्ञानाकारातिरिक्तमत्याकारानुपलब्ध्यादयः । स्वसिद्धान्तबाधकங்களாம் इति । तथासति सन्तानान्तरस्वपूर्वापरक्षणादीनामप्यग्रहणात् सुखदुःखादिव्यवस्थासिद्ध्यर्थं स्वाभ्युपगतनानाबुद्धिसन्तानहानिरेव फलतीति माध्यमिकसाम्यमेवेति भावः । ननु माध्यमिकेन सर्वशून्यत्वकक्षीकारात्, अस्माभिश्च जगदान्ध्यपरिहाराय स्वमतसाधकतया ज्ञानाख्यपदार्थस्याङ्गीकारान्महदहो वैलक्षण्यमिति चेदाह- स्वपक्षस्थापकம் தானும் इति । तथा चाङ्गीकृतेपि ज्ञानतत्त्वे, तदतिरिक्तविषयानभ्युपगमात्, तदंशे तस्य प्रामाण्याभाव एवेति, तद्वेद्यं स्वमतं कथं तेन प्रतितिष्ठेत् इति, पूर्वं 'இவர்களுக்கு स्वपक्षस्थापकप्रमाणம் परमार्थமாகில் पारमार्थिकनिषेधம் सिद्धियாது .. इत्यादिनोक्तं माध्यमिकमतदूषणमस्याप्यवर्ज्यमेवेति भाव. ।

एवं ज्ञानेन स्वाकारस्यैव ग्राह्यत्वमुद्दूष्याथ "अविभागोही"त्यादिनोक्तं बाह्यार्थभङ्गं ज्ञानज्ञेयाकारभेदमसमर्थनेन दूषयति- ज्ञानज्ञेयங்களுக்கு इति । तस्मादर्थाकारस्सर्वोपि ज्ञानस्यैवाकारः ततश्च ग्राह्य न किञ्चिदस्तीति तदभिमानः । स्वानुभवस्य शपथनिर्णेयत्वादुक्तं- सर्वलोकानुभवेति ।

*வேறு ஒரு அறிவு வந்துதான் இவைகளைக் காட்டவேணும் ஆகையால் தன்னுருவைத்தான் காட்டும் என்ற கொள்கை தொலைந்தது வேறொரு அறிவு வரிசை உண்டென்றும், இவ்வரிசையிலேயே முன்பின் உண்டென்றும் காட்டும் ஒரு ஜ்ஞானம், உண்மையிலேயே தன்னைத் தவிர்த்து வேறு விஷயங்களையும் அறிவிக்கிறது என்றே நீயும் இசையவேணும் வேறு அறிவு உண்டு என்பது நமக்குத் தெரியாதுபோனால், நம்மைப்பற்றியவரை சிஷ்யன், ஆசாரியன் சத்ரு, மித்ரன் என்பது போன்ற வழக்கு அற்றுப்போகல், ஒரே அறிவின் பரம்பரைதான் உண்டு என்றோ அல்லது அதனைத் திசைபோல ஒரேயொரு நித்யமான அறிவுதான் உண்டு என்றோ சொல்லவேண்டிவரும் ஆகையால் பொருட்களை அபஹரிக்க நினைப்பது அறிவை அழிப்பதில்தான் முடியும் தன் மதத்தை ஸ்தாபிக்கச்சொல்லும் ப்ரமாணம், தான் அறிவிக்கும் பொருள் பற்றி நம்பத்தக்கதல்ல என்பதால் மாத்யமிகனுக்குப்போல, இவனுக்கும் ஸ்வபக்ஷம் ஸித்திக்காது*

ग्राहकसंवित्तिभेदवानिव लक्ष्यते" என்னவுமொண்ணாது. இவ் उपलम्भबलத்தாலே கண்ட आकारத்தை ज्ञानाकारமாக்கவமையும் என்ற லாघவம் சொன்னதுவும் निरस्तம். सम्प्रतिपन्न-विप्रतिपन्नங்களில் सम्प्रतिपन्नज्ञानத்துக்கே आकारமென்றதுவும் विपरीतம். अर्थம் सर्वलोक-

---

तथाचेदमहं जानामी"त्यादौ इदन्त्वाहन्त्वज्ञानक्रियात्वादिना त्रितयभेदस्य स्पष्टदृष्टत्वात् आकारान्तरानुपलम्भोक्तिरनुपपन्नेत्याशयः। एतादृशाकारभेदभानानङ्गीकारे स्वोक्तिविरोधमाह- இங்ஙன் கொள்ளாதபோது इति। भेदवानिवे"ति भेदस्योत्प्रेक्षणात् तस्य सर्वथाऽप्रसिद्धत्वे तदयोगात् तथोक्तिव्याघात इति भावः। नन्वाकारभेदोपलम्भेऽपि लाघवात्तस्य ज्ञानाकारत्वमेव युज्यत इति उक्तोपलम्भस्यान्यथासिद्धत्वमेवेत्यत्राह- இவ் उपलम्भबलத்தாலே इति। अन्वयश्चास्याग्रे "निरस्तம்" इत्यनेन। यथाप्रतीति आकारभेदाङ्गीकारे बाधकाभावात् लाघवस्य च वैपरीत्यमनन्तरवाक्य एव वक्ष्यतीति प्रतीतिस्वारस्य निरपवादमिति द्योतयितुम् "उपलम्भबलத்தாலே" इति अधिकतया बलपदप्रयोगः। अन्यथा उपलम्भத்தாலே इत्येव प्रयुज्येत। "கண்ட आकारத்தை" इत्यादि। "घटमहं जानामी"त्यादिज्ञानानां ज्ञानान्तरात् व्यावृत्तये, तेषां घटादिविषयसारूप्यं तावदङ्गीकरणीयम्। तच्च विषयादिरूपसदृशरूपवत्त्वमिति कथने घटादिनानाविषयाकाराः तत्सदृशो ज्ञानाकारश्चेति बहुपदार्थकल्पनागौरवं स्यादिति "अनेककल्पनायाश्च ज्यायसीह्येककल्पने"ति रीत्या विषयाकारमिथ्यात्वेन ज्ञानाकारमात्रकल्पनं लाघवायेति तदाशयः। निरस्तம்- न हि प्रत्यक्षविरोधे लाघवन्यायप्रवृत्तिरित्याकूतम्। ननु प्रत्यक्षविरोधे लाघवन्यायाप्रवृत्तावपि, ज्ञानार्थयोर्ज्ञानस्यैव सर्वसम्प्रतिपन्नत्वात् अर्थस्य चातथात्वात्, सम्प्रतिपन्नज्ञानाकारत्वमेव कल्पयितुं युक्तमिति चेदाह- सम्प्रतिपन्नविप्रतिपन्नங்களில் इति। निर्धारणे इयं सप्तमी। ज्ञानத்துக்கே आकारம் इति। तदुक्तम्- तस्मादुभयसिद्धत्वात् ज्ञानस्याकारकल्पना। ज्यायसी... इति। विपरीतत्वमेवोपपादयति- अर्थம் सर्वलोकेति। इदं जानामीति प्रत्यये इदमाकारस्य जानातिकर्मतया भासमानस्य तदभेदायोगात्, अन्यथा नीलो घट इतिवत् "इदं ज्ञानम्" इति अर्थाकारस्य ज्ञानेन समानाधिकरणतया प्रयोगापत्ते योगाचारस्यापि ज्ञानातिरिक्तार्थसद्भावस्सम्प्रतिपन्न इति, नार्थस्यासम्प्रतिपन्नत्वमित्यभिप्रायः। ज्ञानस्यसम्प्रतिपन्नत्वं यदुक्तं, तदपि विषयाश्रयविशिष्टस्यैव तस्य,

---

*இங்கு அறிவுக்கும் பொருளுக்கும் வெவ்வேறு உருவம் காணப்படவில்லை என்பதும் தவறு. "நான் இதைக் காண்கிறேன்" என்கிற ஸர்வாநுபவ, ஸர்வலோகாநுபவாதிகளாலே, தன்னையும் தன் அறிவையும், அதன் பொருளையும் வேறு வேறாக ஒவ்வொருவனும் அறிகிறானல்லவா? இங்ஙன் கொள்ளாதபோது "அறிவு பேதங்கண்ட மூன்றாக உள்ளதுபோல் தோன்றுகிறது" என்று நீங்கள் உத்ப்ரேக்ஷித்ததும் கூறமுடியாதல்லவா? இக்காட்சிகளால் கண்ட அர்த்த ஆகாரத்தை ஜ்ஞானத்தின் ஆகாரமாகக் கூறுவதும் தப்பு*

सम्प्रतिपन्नமாகையாலும். இது தன்னுடைய सिद्धिरूपமாய், ஒரு ज्ञाता வின் धर्मமாயல்லது ज्ञानம் सिद्धियாமையாலும் उभयनिरूप्यज्ञानमात्रத்தைக் கொண்டு उभयाकारापह्नवம் பண்ண शक्यமன்று विप्रतिपत्तिमात्रம் वाधकமாகாதென்னுமிடம் सर्ववादिसम्प्रतिपन्नம். இப்படி கண்ட ग्राह्यग्राहका-कारங்களை कुतर्कங்களாலே बाधिக்கில் माध्यमिकन्यायத்தாலே ज्ञानம் தானும் बाधितமாம்.

---

न तूभयशून्यतया त्वदभिमतस्येत्यप्याह- இது தன்னுடைய इति, இதனுடைய इत्यप्यस्ति क्वचित्पाठः सर्वत्र "अर्थस्ये"त्यर्थः। सिद्धिरूपம प्रकाशात्मा। उभयनिरूप्येति। तथा च श्रीभाष्यं- "सिद्धिरेव संविदितिचेत्, कस्य कम्प्रतीति वक्तव्यम्? यदि न कस्यचित्कंश्चित्प्रति, सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित्कंश्चित्प्रति भवती"ति। ननु मम बाह्यार्थेऽस्ति विप्रतिपत्तिः, तव तु न ज्ञान इति इयता वैलक्षण्येन ज्ञानस्योर्जितत्वात्तदाकारत्वकल्पनं बाह्यार्थस्य युज्यत एवेति चेत्तदाप्याह- विप्रतिपत्तिमात्रம इति। सन्देहसामान्यमित्यर्थः। उपदिश्यमानं बाधकमप्यविगणय्य केनचिन्मन्दधियोद्भाव्यमाना विप्रतिपत्तिरिति भावः। सर्वसम्प्रतिपन्नம इति। अन्यथा ज्ञानेपि केनचिद्व्याघातगन्धमप्यनाघ्रातवता विप्रतिपत्तेस्सुप्रदर्शत्वादिति भावः। ननु बाह्यार्थाना तर्कबाधितत्वात् अस्ति ज्ञानस्याबाधितस्य तेभ्यो विशेष इत्यत्राह- இப்படிக் கண்ட इति। "इदमहं जानामी"त्युपलब्धानित्यर्थः। कुतर्काः- सहोपलम्भनियमादयः। एषां कुत्सितत्वं चैवं बोध्यम्। ग्राह्यस्य ग्रहणतादात्म्ये एकस्यैव नीलाद्याकारस्य पुरुषभेदभिन्नानेकग्रहण-तादात्यमापाद्यते। नचैकस्यैव सतोर्थस्य अनेकग्रहणतादात्म्यं नाम संभवति। प्रतिसंवेदनं नील-भेद इत्यपि न, तस्य कल्पनस्य ग्रहणग्राह्याभेदनिश्चयोत्तरकालीनत्वात्। तस्य चैतावताप्यनिश्चयात्। किंच "ग्राह्यग्रहणतादात्म्यं खरशृङ्गाद्यसद्ग्रहे। अस्ति चेद्व्याहतिर्नो चेद्व्यभिचारस्सुदुस्तर" इति सर्वार्थसिद्ध्युक्तरीत्या शशविषाणादिज्ञानस्यार्थैक्यायोगः, सत्यतुच्छयोदार्थयोस्तादात्म्यानुपपत्तेः। तयोस्तदभावे सहोपलम्भनियमस्य क्वचिदैक्यव्यभिचारापत्तिरिति। माध्यमिकन्यायத்தாலே इति। "नसन्नासदि"त्यादिना तर्केण ज्ञानस्यापि तुच्छत्वमेव। न च जगदान्ध्येन सर्वप्रवृत्त्युच्छेदः प्रसज्यते, सम्वृतिसत्यतया, सर्वस्यापि समर्थनात्। ततश्चार्धजरतीयायोगात् सर्वशून्यत्वमेव तत्त्वमिति माध्यमिककूटयुक्त्येत्यर्थः।

---

பாதயக்ஷத்தில் சேட்டு உகவாதல்லவா? விவாதிக்கப்படுகிற, தீர்மானிக்கப்பட்ட இரண்டு-களில், தீர்மானிக்கப்பட்டதினுடையதே இந்த உருவம் என்கிறீர்கள் பொருட்கள் உண்மை-யில் "உண்டு இல்லை" என விவாதிக்கப்படுகின்றன ஜ்ஞானம் உண்டென்புனமே எல்லோ-ராலும் தீர்மானிக்கப்பட்டுவிட்டது என்று உங்கள் கருத்துப்போலும். அது அங்ஙனன்று-புறப்பொருட்களே ஆபாலகோபாலம் உண்டென்று கருதப்பட்டவை அறிவுதான் இவற்-றின் தோற்றமாக, ஆத்மாவின் தன்மையாக ஸித்திக்கவேண்டியிருக்கிறது ஆத்மாவையும்

ஸித்தாந்தத்தில் அணுக்குவியல்களே பொருட்கள் என ஸாதித்தல்

अवयविरूपबाह्यार्थத்தில் प्रमाणமில்லை என்று वेदान्तिகள் தாங்களே साधिக்கையாலும்,

अथ बाह्यार्थबाधं सिद्धान्तिभिरेवाभ्युपगतं ख्यापयन् योगाचारश्शङ्कते अवयविरूपेति। वेदान्तिகள் தாங்களே इति। एतदुक्तं भवति- अवयवातिरिक्तावयवी न सम्भवति, तथासति घटयोर्घटपटयोरिव वा, अवयवावयविनोर्युगपद्भेदेनोपलम्भप्रसङ्गात्। न च कुम्भसंभृतसलिलस्येव पृथगनुपलब्धिर्युक्ता, कुत्र कस्यान्तर्भाव इत्यनियमात्। न तावदवयवेष्ववयविनः, अल्पपरिमाणेऽधिकपरिमाणस्य प्रवेशायोगात्। न चेश्वरगगनादीनां घटादिष्विव तदुपपद्यत इति वाच्यम्। तेषां प्रतिघातानर्हत्वेन तत्संभवेपि, एषां मूर्तत्वेन सप्रतिघत्वात्तदनुपपत्तेः। नाप्यवयविन्यवयवानां, आधाराधेयभावप्रातिलोम्यात्। अतिरिक्तावयविवादे समवायिकारणभूता अवयवा हि कार्यस्यावयविनोऽधिकरणम्। अत एव "कपालयोर्घटः, तन्तुषु पटः" इति प्रतीतिव्यवहारौ भवतः। न च "घटे कपालमस्ति, पटे तन्तवोऽनुस्यूता" इत्यप्यस्त्यनुभव इति वाच्यम्। अवयविनोऽवयवसङ्घातरूपतापक्षाभिप्रायकत्वात्तस्य। "वनेऽस्ति वृक्षः, शते पञ्चाशदनुविशती"ति वत् समुदाये प्रत्येकान्तर्भावविवक्षया तदुपपत्तेः। त्वया च तत्पक्षानङ्गीकारात्। न चावयवि प्रादुर्भावानन्तरमवयवा एव विनष्टाः, येनैकवस्तूपलब्धिरुपपद्यते, इति वाच्यम्। तथासति समवायिकारणनाशेनावयविनाशस्याप्यवर्जनीयत्वात्। एवं चावयविरूपबाह्यार्थसद्भावे न प्रत्यक्षं प्रमाणमित्युक्तं भवति। नापि नामसङ्ख्याभेदादिहेतुनाऽवयवातिरिक्तावयव्यनुमितिः, एकस्यैव सतोऽवस्थाभेदेन नामादिभेदोपपत्तेस्तेषां भेदानैकान्त्यात्। अस्य च विस्तर आरम्भणाधिकरणादिष्वनुसन्धेयः। ननु मानाभूदवयवी कश्चिदतिरिक्तः, तथाप्यवयवसङ्घातात्मकत्वस्य घटादि-

பொருட்களையும் ஒப்பாத உனக்கு அவை இரண்டையும்பற்றி வரவேண்டிய அறிவு மட்டும் உண்டென்றும், அவை இரண்டுமில்லை எனவும் மறைத்திட முடியாது ஆதாரமில்லாமல் விவாதம் செய்வதால் பொருள் இல்லை என்றாகிவிடாது ஆகையால் அநுபவத்தில் வந்த பொருட்களை இல்லை என்று குயுக்தி செய்து வாதித்தால் உனக்குமேல் குயுக்தியில் கைதேர்ந்த மாத்யமிகன் வாதப்படி அறிவும் அழியும்

ப்ரத்யேகம் உருப்புகளைத் தவிர்ந்து பொதுவாக அவயவி என்றொரு பொருள் கிடையாது என்று வேதாந்திகள் கூறியுள்ளனர் அவயவக் குவியல் என்றொரு பொருளும் தனித்துத் தேராது அவயவங்களை மேன்மேலெனக் கூறிட்டுக்கொண்டேபோனால் பரமாணுவில் வந்து முடியும் அப்பரமாணு தானும் நிலை நிற்காது ஒரு பொருள் மற்றொன்றோடு சேரும்போது அதன் ஆறுபுறங்களில் ஸம்யோகம் பிறக்கவேணுமாகையால், பரமாணுவுக்கும் பலபுறம் உண்டென்றாகி, அவைகளுக்கும் அவ்வாறே பாகங்கள் உண்டாகி முடிவின்றி

सङ्घातिकளை யொழிய सङ्घातமென்றொரு द्रव्यமில்லாமையாலும், संघातिகளைத் தொடாந்தால் पर-माणुपरिशेषமாய், அவைதானும षट्पार्श्वादिविकल्पदुस्थங்களாய अनवस्थादोषம் வருகையாலும,

---

स्वनुसरणात् बाह्यार्थभङ्गः कथंकारं कार्य इत्यत्राह- सङ्घातिகளை ஒழிய इति। सङ्घातघटक-प्रत्येकपदार्थान् अवयवान् विनेत्यर्थः। अयं भावः संघातो नाम परस्परसंश्लेषविशेषभाजः प्रत्येकपदार्था एव, प्रत्येकपदार्थानां संश्लेषविशेष एव वा भवति। तत्र प्रथमे दोषोऽनुपदं वक्ष्यते। द्वितीये संश्लेषविशेषस्य संयोगादेर्गुणत्वात्, द्रव्याश्रितत्वेन तद्योग्यतयैव प्रत्यक्षादि-प्रमाणे योग्यत्वं गुणस्य भविष्यतीति, द्रव्यसिद्धौ सन्दिहानम्प्रति तत्सद्भावोपन्यासः व्यर्थः। अत एव "सङ्घातिகளை ஒழிய सङ्घातமென்றொரு द्रव्यமில்லாமையாலும" इत्यत्र द्रव्यपद-प्रयोग इति। अथास्तु समुदायस्य प्रत्येकानतिरेकादवयवा एव तत्संघात इत्यत्र प्रथमे पक्षे दोषमाह- संघातिகளைத் தொடாந்தால इति। अवयवानामुत्तरोत्तरानुधावन इत्यर्थः। अस्याश्च क्रियायाः "परमाणुपरिशेषமாய" इति परिशेषणक्रियायामन्वयः। तथा च पटस्य तन्तुसमुदाय-रूपत्वे, तस्य च तन्तुभ्योऽनतिरेकात्, तेषां चांशुसंघातात्मकत्वात्, एवं उत्तरोत्तरं विमर्शे अंशवः, तदंशाः, तदंशा इति अवयवपम्परायाः परमाणुपर्यन्तमनुधावनात् परमाणुष्वेव तस्या विश्रम इत्यर्थः। ननु तर्हि परमाणव एव सिद्धा बाह्यपदार्था इत्यत्राह- அவை தானும इति। परमाणवोऽपी-त्यर्थः। षट्पार्श्वेत्यादि- अत्रेदं बोध्यम्- परमाणुस्सांशो निरंशो वा? आद्ये परमाणोरप्यधस्ता-दवयवधाराङ्गीकारेणानवस्था वक्ष्यतेऽत्रैव। अन्त्ये- कथं तस्येतरेण परमाणुना संयोगः? तस्य प्रादेशिकगुणत्वेन परमाणोः प्रदेशभेदाभावे, तदसम्भवात्। ननु कथन्नामाकाशो निरंशः परेण संयुज्यते? औपाधिकप्रदेशभेदमादायेति ब्रूमः उपाधिसम्बन्धो वा निरंशस्य तस्य कथमिति चेत्? न, आकाशस्य निरंशत्वेपि उपाधिभूतघटादेस्सांशतया तदीयप्रदेशभेदमादाय तयोस्संयोगस्य प्रादेशिकत्वोपपत्तेः। एक एवहि संयोगो द्विनिष्ठः। स चाव्याप्यवृत्तिरेव। क्वचिदुभयोरप्यधि-करणयोरव्याप्यवृत्तित्वं तस्य, यद्युभे अपि परिच्छिन्ने। क्वचिच्चान्यतराधिकरणावच्छेदेन तथात्वम्, यथा घटाकाशयोः। अन्यतरस्यापरिच्छिन्नत्वात्। अपरिच्छिन्नयोर्द्वयोस्तु संयोगो नेष्यत एव। नैरन्तर्यमात्रेण तु तयोस्संयुक्तत्वव्यवहारः। एवं चोक्तनीत्या परमाणोः परिमितघटादिना सह संयोगोपपादनेपि, परमाणुद्वयसंयोगस्य कथंचिदप्युपपादनासंभवात् जगदारम्भानुपपत्तिः, परमाणोस्सावयवत्वं वा भवति इत्यनवस्थैव। तदुक्तं योगाचारानुयायिना वसुबन्धुना वैभाषिक-दूषणावसरे विंशतिकारिकाविज्ञप्तिमात्रतासिद्धौ- षट्केन (कोण) युगपद्योगात् परमाणोष्षडंशता। षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः॥ इति। विवृतं च तेनैव तत्रैतत्- षड्भ्यो दिग्भ्यः।

அவை प्रत्यक्षமல்லாமையாலும் बाह्यार्थग्रहणம் प्रमाणமாகக்கூடாதென்னில், दृश्यमानपरणाणु-

---

षड्भिः परमाणुभिर्युगपद्योगे सति परमाणोष्षडंशता प्राप्नोति। एकस्य यो देशस्तत्रान्यस्याभावात्। अथैकस्य यो देशः, स एव षण्णामिति वदसि, तर्हि सर्वेषां समानदेशत्वात् सर्वः पिण्डः अणुमात्रस्स्यात्, परस्परव्यतिरेकात् (अव्यतिरेकात्?) इति। अत्र ऊर्ध्वाधरयोरपि परिगणनात् दिशां षट्त्वं बोध्यम्। विदिशामपि परिगणने तु दश दिशो भवन्तीति तथापि क्वचिद्व्यवहारोऽस्ति। कस्यचित्केनचित्संयोगे वक्तव्ये इमे दिग्भेदा यथायथं समस्ता व्यस्ता वा तदवच्छेदकतयाऽपेक्ष्यन्त इति षट्पार्श्वसंयोगः, दश दिक्संयोग इत्येवमादिव्यवहाराः क्रियन्ते। एवं चात्र कैश्चित् यदुक्तं "द्वयोरंगुळयोः परस्परं संयोगे यथैकया महादिशा विदिग्द्वयेन च प्रत्येकमवच्छिद्य आहत्य षड्भिः पार्श्वैस्संयोगो भवति, तथैव परमाण्वोरपि तेन भवितव्यमिति भाव इति। तन्न। तरतमभावापन्नवलयाकारवस्तुद्वये एकस्य परितः अन्यस्य संयोगे षण्णामप्यपेक्षणेन लोकबुद्ध्यनारोहात्, प्रदर्शितग्रन्थकारव्याख्याविरोधाच्च। एतेन रचनानुपपत्त्यधिकरणभाष्यप्रकाशिकापि चिन्त्या भवति। ननु निरंशस्य ज्ञानद्रव्यस्य युगपन्नानाविषयैस्संयोगाङ्गीकारवत्, निरंशपरमाणुष्वपि "न हि दृष्टेऽनुपपन्नं नाम" इति न्यायात् परमाण्वन्तरसंयोगोऽस्त्वित्यत्राह- அவை प्रत्यक्षமல்லாமையாலும इति। அவை- परमाणवः। तथा च ज्ञाने नानाविषयसंयोगस्य दृष्टस्य सर्वसम्प्रतिपन्नत्वेनोपपत्तावपि, परमाणूनां सर्वथाऽप्रत्यक्षतयोक्तन्यायानवतार इति भावः। ततश्च बाह्यार्थभङ्गं निगमयति- बाह्यार्थग्रहणம इति। ततश्चैवं रीत्या परमाण्वादिद्रव्यवर्गापहारे कृते तदाश्रयतया प्रतीयमाना गुणादयोऽपि स्वयं भग्ना इति कृत्स्नबाह्यार्थभङ्गस्सिध्यतीति भावः। समाधत्ते- दृश्यमानेति। जालालोकविलोकनीयाणूनामेवावयवधारापर्यवसानभूमित्वेन परमाणुत्वमङ्गीक्रियते। तत्र चोक्तज्ञानादिष्विव यथादर्शनं षट् पार्श्वकल्पनोपपद्यते इत्यर्थः। एतदुक्तं भवति- निरंशे परमाणौ तथाविधपरमाण्वन्तरसंयोगः तथाविधाकाशसंयोगो वा तत्तत्संयोगावच्छेदेनैव विद्यत इति तस्य प्रादेशिकत्वोपपत्तिः। न चात्रा-

---

உருப்புகளின் வரிசை நீளும் ஆகையால் புலப்படாத பரமாணுவும் இல்லை என்றாகி புறப்பொருட்கள் சூந்யம் என்ற எங்கள் மதம்தான் ஜயம் பெறும் என்பதும் ஸரியல்ல. கண்ணுக்குப் புலப்படும் சிறிய துகள்களையே பரமாணுக்களாய்க் கொள்ளுகிறோம். அதற்கு பாகங்கள் உண்டா இல்லையா? என்ற கேள்வி பிறந்தால் "நீங்கள் ப்ரத்யக்ஷமாய்க் காணும் பொருளுக்கு நாங்கள் வ்யாக்யானம் கூறத் தேவையில்லை அதில் கண்ட விதத்தில் நீங்களே தீர்மானம் செய்யுங்கள்" என்றுதான் சொல்லுவோம். எங்கள் கல்பனையிலுதித்த பொருளுக்குத்தான் எங்களுடைய விளக்கம் தேவை. அந்த அணுக்கூட்டங்களின் கூட்டுறவுமுறை ஆகாரங்கு மாறுவதால் எல்லாவித வேற்றுமைகளும், காட்சி வேறுபாடுகளும் சரிகட்டிக

மாத்ரத்தைக்கொண்டுமளவிலே यथादर्शनं पार्श्वकल्पनादिகள் கூடுகையாலும், அவற்றின் संघातविशेषங்களாலே லோகத்திலுள்ள सर्ववैचित्र्यமும் उपलम्भतारतम्यादिகளும் கூடுகையாலும், अतीन्द्रियपरमाणुவை வகுக்க அறியாமையாலும், शिल्पशास्त्रधर्मशास्त्रங்களிலும் கண்ட परमाणुவைக்-கொண்டு மேலுள்ள परिमाणकल्पனைகள் கூடுகையாலும், அவற்றிலே अतीन्द्रियपरमाणु முதலாக सङ्ख्योत्कर्षकल्पனை சொன்னதுவும் अभिसन्धिविषयமல்லாமையாலும், आप्तवाक्यसिद्धமென்று

---

त्माश्रयदोषापत्तिः, परमाण्वादीनां, तत्संयोगस्य चाध्यक्षसिद्धत्वेन, तदुपपत्त्यर्थं बीजांकुरादावन-वस्थादोषस्येवात्रात्माश्रयदोषस्यापि सोढव्यत्वेनादोषत्वात्। तदुक्तमाचार्यैरेवाव्यक्तपरिणामविषये- "प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात्। निरंशस्यापि घटने प्रादेशिकविकारिते" ति। अन्यत्र च- "परश्शतपरिक्षोभात्परस्तादपि वादिभिः। "उपलम्भबले स्थैर्यं तदादौ किन्नगृह्यते" इति। ननु किमेवमङ्गीकृतैः परमाणुभिरतिरिक्तोवयव्यारभ्यते परिमाणवैचित्र्याद्यर्थं नैयायिकादीनामिव? इत्यत्राह- அவற்றின் इति। तथा चावयवसंघात एवावयवी, नातोन्यः। भूयोवयवाल्पावयव-सङ्घातसंस्थानादिविशेषैः परिमाणाकारादिसर्ववैचित्र्यनिर्वाहः। यथैकस्य केशस्याप्रत्यक्षत्वेऽ-विशदप्रत्यक्षत्वेपि वा तत्समुदायस्य विशदप्रत्यक्षत्वाद्युपपत्तिः तथैवाणूनां सङ्घातवैचित्र्यादेव विशदविशदतरतमादिप्रतीतितारतम्यं च भवतीत्यतः कल्प्यमान एव परमाणौ षट्पाश्वादि-विकल्पदौस्थ्यं, न तूक्तरीत्या प्रत्यक्षे तस्मिन्निति, तदकल्पनान्नास्माकं सविकल्प इत्याह- अती-न्द्रियपरमाण्विति। ननु देवताविग्रहादिनिर्माण, स्वर्णस्थेयादिप्रायश्चित्तविशेषनिर्णयार्थं परमाणु-मवधीकृत्योत्तरोत्तर परिमाणकल्पनायाः शिल्पशास्त्रधर्मशास्त्रादौ दर्शनात् अतीन्द्रियपरमाण्वभ्युप-गमोऽवर्जनीय इत्यत्राह शिल्पशास्त्रेति। तथा च तेषामपि शास्त्राणां दृष्टपरमाणुभिरेव चरिता-र्थत्वात् नाप्रत्यक्षपरमाणुकल्पने निर्बन्ध इत्यर्थः। तर्हि तत्रत्यानां वचनानां "जालसूर्यमरीचिस्थं सूक्ष्मं यत्परिदृश्यते। तस्याष्टमो वा षष्ठो वा भागोणुः परिकीर्तितः॥" अन्यत्र "जालसूर्य-मरीच्यां यत् सूक्ष्मं तस्याष्टमो मतः। भागोणुरपि वा षष्ठः तद्द्वयं द्व्यणुकं मतम्। द्व्यणूना-मपि षट्कन्तु पुरुर्नाम प्रकीर्तितः इत्यादीनां कथं निर्वाहः तत्राप्रत्यक्षपरमाणोरस्पष्टं कीर्तनात्, इत्यत्राह- அவற்றிலே इति। तथा च सर्वार्थसिद्धिः- "शिल्पादिशास्त्राणा परमाणावतत्परत्वात्। मानोन्मानादिविशेषनिर्धारणं हि तत्र विधित्सितम्। ततो हैतुकोक्तानुवादमात्रमिह स्यात्। तत्र च त्रसरेणुतः किञ्चित्सूक्ष्मं भवतु वा, मावाभूत्, दृष्टोपक्रमं विवक्षितसिद्धिरित्यत्राकूतम् इति"। अत्र "अभिसन्धिविषयமல்லாமையாலும் आप्तवाक्यसिद्धமென்று" तति क्वचित्कोशे वाक्य-

கொண்டுபோகப்படுகின்றன சில்பசாஸ்த்ரம் தர்மசாஸ்த்ரம் இவைகளிலும் அளவுமுறை கூறுமிடத்தில பரமாணுவின் ப்ரஸ்தாவமிருக்கிறது. ஆனால் அங்கு சொன்ன பரமாணு காம

अतीन्द्रियपरमाणुவைக்கொண்டாலும் संघातदशையில் அவற்றுக்கு प्रत्यक्षம் உண்டென்று शास्त्र-बलसिद्धமாகையாலும், இக்கட்டளையிலே अतीन्द्रियमूलप्रकृतिமுதலாக परिमाणपरम्परै வக-

---

समाप्तिर्दृश्यते। तथासति अनन्तरवाक्ये "अतीन्द्रियपरमाणुவைக்கொண்டாலும்" इत्युपक्रम-दर्शनात्, "केन प्रमाणेनातीन्द्रियपरमाणुस्वीकार" इति तत्र प्रमाणाकाङ्क्षायां "उक्तशिल्पशास्त्रा-द्याप्तवाक्यबला"दित्येव समाधानस्य स्वयं वक्तव्यतया, ततोपि वरं स्पष्टतया "आप्तवाक्यसिद्ध-மென்று अतीन्द्रियपरमाणुவைக்கொண்டாலும்" इत्येकवाक्यतया पठनम्। तथैव क्वचित्पाठस्य दृश्यते। "आप्तवाक्यமென்று" इति वाक्यमसमासे कृतायां तद्भागस्यानतिप्रयोजनकत्वाच्च। अतः "...सिद्धமென்று" इत्युत्तरेणैकवाक्यत्वमेव ज्याय इति कृत्वा तथैव व्याख्यास्यामः। तथा हि ननु उक्ते आप्तवाक्ये यथाश्रुतार्थपरित्यागे कारणाभावात् तत्र प्रतीतः अतीन्द्रिय एव परमाणु-रिति स एव ग्राह्य इत्यत्र प्रौढिवादेनातीन्द्रियपरमाणुमन्वारुह्याह- आप्तवाक्यसिद्धமென்று इति। "शास्त्रतश्च क्वचिदनन्यथासिद्धात्परमाणुसिद्धावपीति सर्वार्थसिद्धिसूक्तिरप्येतत्पाठानुगुणैव। "आप्त-वाक्यसिद्धமென்று अतीन्द्रियपरमाणுவைக்கொண்டாலும்" इति, तस्य केवलागमिकत्वोक्त्या, ईश्वरस्येव, तस्याप्यनुमानागमाभ्यां सिद्धि' सिद्धान्तिनोऽनिष्टेति, व्याप्यते। नैयायिकादीनां तु "अणुपरिमाणतारतम्यं क्वचिद्विश्रान्त, परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यस्य गगने विश्रमवदिति अनुमानेन तत्सिद्धिरभिमता। तथा, "परमाणुरपि सत्वरजस्तमसां सर्वापकृष्टसंघात" इति सांख्यागमः। नन्वतीन्द्रियपरमाणुभिरारब्धस्य जगतः कथं प्रत्यक्षतेत्यत्राह- सङ्घातदशையிலே इति। उक्तरीत्या केशपाशस्येव परमाणूनां संघातावस्थायां प्रत्यक्षत्वसंभवस्यापि अतीन्द्रियपर-माणुरूपधर्मिग्राहकेणैव शास्त्रेण "दर्शनाय चक्षुः" इत्यादिनावगमादुपपन्नमित्यर्थः। परमाणुपुञ्ज-दशाप्रत्यक्षत्वस्य साक्षादेतच्छास्त्रादिविषयत्वात् शास्त्रबलसिद्धेतिबलपदप्रयोगः। अथेममेव न्यायं सिद्धान्ते अतीन्द्रियमूलप्रकृतितः जगदारम्भवादेऽप्यतिदिशति- இக்கட்டளையிலே इति। अनेन प्रकारेणेत्यर्थः। प्रकृतिமுதலாக- प्रकृतिपूर्वकतया। भूतानि- आकाशादीनि पञ्च। भौतिकानि।

---

காணும் சிறியதுகளே எனக் கொள்ளலாம் அல்லது புலப்படாத பரமாணுவைத்தான் அவை சொல்லிற்றுக்கொண்டாலும், அப்படியொரு கல்பனை செய்து அளவு முறைக்காக அதைப் பயன்படுத்திக்கொண்டார்கள் என்றும் கூறியலும் அந்த சாஸ்த்ரங்களுக்கு புலப்-படாத பரமாணு உண்டென்பதில் கருத்து கிடையாதென்போம் உண்டென்றே வைத்துக்-கொண்டாலும், அவைகளின் சேர்க்கை இந்த உலகம் எனக் கொள்வதிலும் யாதொரு தடை-யும் கிடையாது ஆனால் அவை புலப்படாதபோது உலகம் புலப்படக் காரணம் என்ன? எனில்- அவைகள் தனித்தனியே அப்ரத்யக்ஷமானாலும் கூடி நிற்கும்போது ப்ரத்யக்ஷ-

தால் भूतभौतिकरूपपरिमाणदशैயிலே पैन्द्रियकत्वம் கூடுகையாலும் बाह्यद्रव्यங்களும் तद्गुणादि-களும் प्रत्यक्षप्रमाणसिद्धங்களாகக் குறையில்லை.

**அறிவு தவிர அறிவாளியான ஆத்மாவும் உண்டு.**

आत्मा अणुவாகிலும் विभुவாகிலுமாம். अहமென்று தோற்றினவித்தற்கு ज्ञानத்திற்குப் போலே बाधம் சொல்லவொண்ணாமையால் ग्राहकाकारமும் सत्यமாம்.

**கூடவே இரண்டும் தோன்றுவதால் இரண்டும் ஒன்றெனப் போகாது.**

सहोपलम्भनियमத்தாலே ज्ञानज्ञेयங்களை ऐक्यமென்னுமிடமும் स्ववचनस्वप्रवृत्तिस्वसिद्धान्त-

---

तेषां पञ्चीकरणेन जाता घटादयः पदार्थाः । बाह्यार्थसिद्धिं निगमयति- बाह्यद्रव्यங்களும் इति । गुणादिகளும் इति । गुणसद्भावे पृथक्पूर्वपक्षसिद्धान्ताकरणेपि, तदाश्रयद्रव्यसिध्यैव तेषामपि सिद्धप्रायत्वाभिप्रायेण तेषामिह सिद्धत्वोक्तिः ।

एतावता ग्रन्थेन ग्राह्यपदार्थान् साधयित्वाथ ग्राहकाकारमपि साधयति- आत्मा इति । अणुरिति सिद्धान्त्यभ्युपगमः, विभुरिति नैयायिकादीनाम् । अथवा आत्मशब्देन जीवब्रह्मोभयस्य विवक्षितत्वात्, यथायथं सिद्धान्त एव तयोरणुत्वविभुत्वाभ्यां निर्देशः । "ஆகிலுமாம் ... ஆகிலுமாம்" इति, तयोः प्रकृतविचाराविषयतया औदासीन्याभिव्यञ्जनम् । न तु विकल्पेन मतभेदद्योतनम् । अहமென்று- प्रत्यक्त्वेन । "छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवदि" त्युक्तरीत्या सकर्तृकसकर्मकावभासस्यैव ज्ञानपदार्थत्वेन तदुभयं मुक्त्वा न ज्ञानमात्रसाधन-प्रत्याशा तव फलाय भवतीत्यर्थः । ज्ञानத்திற்குப்போல इति । अन्यथा ज्ञानस्यापि विलोप-प्रसङ्ग इति भावः ।

एवं "अविभागो ही"त्यादेर्दूषणान्तरं "सहोपलम्भनियमादि"त्यादिदूषयति- सहोप-लम्भेति । सहोपलम्भेत्यत्र साहित्यस्य भेदघटितत्वेन, तेनाभेदवचने स्ववचनविरोधः, "घटमहं वेद्मी"त्यादिना स्वयं बाह्यार्थोद्देशेन प्रवृत्तिकरणात् घटाद्यर्थजातस्य चान्तरज्ञानाकारतयाभ्युपगमे

---

*மாகலாம் இக்கட்டளையைத்தான், "மூலப்பகுதி புலப்படாதிருக்கச்செய்தே, அதன் காரியமான உலகம் புலப்படுகிறது" என்று கூறுமிடத்திலும் வேதாந்திகள் பின்பற்றுகிறா கள் ஆகையால் புறப்பொருட்கள் நிச்சயமாக உள்ளவையே*

*இவ்வித்தம் ஆத்மா என்ற உள்ளுறைப் பொருளும் உண்டு அது அணுவாகவேனும் விபுவாக (எங்கும் பரந்ததாக) வேனும் இருக்கட்டும் அந்த விவாதம் இப்போது வேண்டாம். அறிவுபோல அதுவும் "நான், எனது" என்று தோன்றுகிறதல்லவா?*

विरुद्धமாம். ग्राह्यग्राहकाकारங்களை ज्ञानத்தோடே अभिन्नங்கள் என்றால் सत्यमिथ्यार्थங்களுக்கு एकत्वம் प्रसङ्गித்து शून्यवादமாதல் अनेकान्तवादமாதலாம். தன்னையொழிந்தவற்றை ज्ञानம் காணுமாகில் अतिप्रसङ्गம் வாராதோ என்னில்? இவ்विषयव्यवस्थै यथादर्शनம் मिथ्याविषयத்திற-

---

स्वप्रवृत्तिविरोधः, ज्ञानार्थयोरभेदेऽर्थस्यापि परमार्थतया ज्ञानमात्रं परमार्थ इति स्वसिद्धान्तविरोधश्चेति भाव्यम्। स्वसिद्धान्तविरोधमेव प्रकारान्तरेणापि विशदयति- ग्राह्यग्राहकेति। द्विचन्द्रज्ञाने चन्द्रद्वयसहोपलम्भनियमात् द्वितीयचन्द्रस्य सत्यचन्द्रादव्यतिरेक इतिवत् ज्ञानार्थयोरव्यतिरेकस्यैतत्सम्मतत्वात्, शुक्तिरजतज्ञानादौ सत्यभूतज्ञानस्य मिथ्याभूतेनार्थेनैक्यापातः। स च न सम्मन्तव्यः, सत्यत्वमिथ्यात्वयोरेकत्र समावेश विरोधात्। अन्यतरत्परित्यज्यत इति चेत् किंभोः! सत्यत्वं अथवा मिथ्यात्वं? आद्ये, ज्ञानस्याप्यर्थस्येव मिथ्यात्वात् सर्वशून्यवादः प्रसजेत्। अन्त्येऽर्थस्यापि, ज्ञानस्येव सत्यत्वे स्वसिद्धान्तविरोधः। अथ यदि, तयोर्विरोधमेव नाङ्गीकरोषि ततश्च सत्यस्यापि कथं चिन्मिथ्यात्वं युज्यत इति मनुषे, तदा 'स्यादस्ति (कथञ्चिदस्ति) स्यान्नास्ति (कथञ्चिन्नास्ति) इत्यद्यनैकान्तवादिजैनमतप्रवेशापत्तिः, इति तात्पर्यम्। ननु यद्यतो भिद्यते, न, तत्तेन सहोपलभ्यते, भिन्नयोरपि सहोपलम्भे, भिन्नत्वाविशेषात्, सर्वज्ञानेनापि सर्वं वेद्येतेति, कयोश्चिदेव ज्ञानार्थयोस्सहोपलम्भनियमात् तयोरभेद इति शङ्कते- தன்னையொழிந்தவற்றை इति स्वभिन्नार्थानित्यर्थः। समाधत्ते- இவ்विषयव्यवस्थै इति। अयं निष्कर्षः- किं ज्ञानस्यार्थग्राहकत्वं, अर्थसरूपतावाप्तिः, उतार्थविषयकत्वम्? आद्ये नीलपीताद्युभयावगाहिज्ञाने, तस्य परस्परविरुद्धोभयाकारप्राप्तिप्रसंगादर्थविषयकत्वरूपमेव तद्वाच्यमिति, तदिदमर्थविषयकत्वं ज्ञानस्येन्द्रियसन्निकर्षादिदृष्टकारणकलापव्यवस्थयैव व्यवतिष्ठते, अर्थजातस्य सत्यत्वेपि। कथमन्यथाऽर्थवर्गस्य मिथ्यात्वेपि ज्ञाने विषयव्यवस्था? तत्र चेत् सा यथादर्शनं भवति, अत्रापि तथैवेति गृहाणेति। ननु ज्ञानस्य व्यवस्थितविषयकत्वं न संभवति, कथम्भूतार्थो ज्ञानस्य कस्य विषय इत्यत्र नियामकादर्शनात्।

---

*சேர்ந்து தோன்றுவதால் அறிவும் பொருளும் ஒன்று என்பதும் சரியல்ல. சேர்க்கை என்பது இரண்டுபட்டு இருக்குமவற்றுக்குத்தானே வரும். குடம் முதலியன வெளியில் வேறாக இருப்பதாக நினைத்துத்தான் நீங்களும் அவற்றை எடுக்கக் கை நீட்டுகிறீர்கள். பொய்யான பொருளை அறிவு மயங்கிக் காட்டிக்கும்போது, அந்தப் பொய்ப்பொருளும் மெய்யான அறிவும் ஒன்றென்று உங்களாலும் கூறவியலாது. அப்போது ஜ்ஞானமும் சூன்யமாகும் அல்லது ஜைநர்போல் புரண்பட்டதை ஒருங்குசேர ஒத்துக்கொண்டதாகும். அறிவு தன்னை விட வேறொன்றைக் காட்டிக்குமாகில், தக்க காரணமின்மையால் எதை வேண்டுமானாலும் காட்டிக்கலாமென்றாகி நிலைகுலையாதா என்னில்- உலகில் காண்கிறபடியே இந்த்ரியங்களின் தொடர்பை இட்டு இதைக் கட்டுப்படுத்தலாம். பொய்யான பொருளைத் தன்னைவிட வேறு- பட்டதை அறிவு உணரும்போதும் இவ்விதமேயல்லவா வ்யவஸ்தை செய்யவேணும்.*

போலே सत्यविषयத்திலும் காணலாம். இத்தாலே எப்படிப்பட்டது எந்த ज्ञानத்துக்கு विषयம் என்று लक्षणம் காணகிறிலோம் என்றதுவும் निरस्तம். स्वप्नज्ञानादिदृष्टान्तத்தைக்கொண்டு सर्वज्ञानங்களுக்கும் निरालम्बनत्वம் साधिக்குமதும், सर्वलोकोपलंभस्ववचनादिविरुद्धமாகையாலும்,

---

तस्मात्तत्तद्ग्रहणाकारतादात्म्यमेव तत्तद्विषयलक्षणं वाच्यम् । “यादृशग्रहणाकारतादात्म्यं यस्मिन् अर्थे, स एव तद्विषय इति व्यवस्थासिद्धेः । अन्यथा नीलादीनां दृष्टः प्रकाशः किमौपाधिकः उतानौपाधिक इति विकल्पावतारात् । तत्र च स्वयमप्रकाशत्वे नीलादीनां, पश्चादुपाधिशतेनापि प्रकाशकरणायोगदोषेण द्वितीयकल्प आश्रयितव्ये स्वाभाविकप्रकाशस्य स्वयम्प्रकाशत्व ज्ञानत्वादिप्राप्त्याऽर्थस्य ग्राह्यस्य ग्रहणेन तादात्म्यलक्षणसिद्धि”रिति बौद्धचित्तविवरणोक्तेरित्यत्रोक्तातिदेशेन समाधत्ते- இத்தாலே इति । यथादर्शनं विषयव्यवस्थोक्तेरित्यर्थः । காணகிறிலோம- न पश्यामः । अयमाशयः- ग्राह्यस्य ग्रहणाकारतादात्म्यलक्षणकत्वे उक्तरीत्या मिथ्यार्थविषयकज्ञानस्य तदर्थतादात्म्य अनिष्टप्रसङ्गः । पूर्वमप्रकाशस्य कारणसमवधाने प्रकाशकरणञ्च न विरुध्यते । यथा पूर्वज्ञानेऽसतो नीलादेर्विषयस्योत्तरज्ञाने सत्त्वापादनं स्वयमङ्गीकृतं, अन्यथा शून्यवादापत्तेरिति । ननु स्वप्नज्ञानानामिव सर्वज्ञानानामपि स्वव्यतिरिक्तविषयशून्यत्वं साध्यते । न हि तत्र ज्ञानं विना तदालम्बनं कश्चिदस्ति विषयः । यथाहुः “स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथाहि यः । प्रत्ययस्समृषा दृष्टस्स्वप्नादिप्रत्ययो यथे”ति । इतीमामाशङ्कां परिहरति स्वप्नज्ञानादीति । निरालम्बनत्वं- पारमार्थिकविषयशून्यत्वम् । तत्र सर्वलोकोपलंभेत्यादिना साध्यस्य बाधं दर्शयति । तथा च “नाभाव उपलब्धेरित्यत्र श्रीभाष्यं- “एवमेव हि सर्वे लौकिकाः प्रतियन्ति “घटमहं जानामी”ति । एवं रूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमवभासमानेनैव, ज्ञानमात्रमेव परमार्थ इति साधयन् सर्वलोकोपहासोपकरणं भवती”ति । तत्रैव सूत्रे शाङ्करभाष्यं च- न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । कस्मात्? उपलब्धेः । उपलभ्यते हि प्रति प्रत्ययं बाह्योर्थः- “स्तम्भः कुड्यं घटः पट” इति । न चोपलभ्यमानस्यैवाभावो भवितुमर्हति । यथा कश्चित् भुञ्जानो भुजि साध्यायां तृप्तौ स्वयमनुभूयमानायां एवं ब्रूयात् । “नाहं भुञ्जे, न तृप्यामी”ति । तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभमान एव बाह्यमर्थं “नाहमुपलभे, न च सोस्ती”ति ब्रुवन् कथमुपादेयवचनस्स्यात् । ... न हि कश्चिदुपलब्धिमेव “स्तम्भः कुड्यमिति उपलभते । उपलब्धिविषयत्वेन तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते । यत् प्रत्याचक्षाणा

---

இதனால் எப்படிப்பட்டது எந்த ஜ்ஞானத்துக்கு விஷயம் என்று கூறும் அடையாளம் ஒன்றும் கண்டிலோமென்றதும் தள்ளுபடியாகியது. கனவுபோல் நினைவுகாலத்தில் வரும் ஜ்ஞானங்களும் பொருளற்றவை என்று ஊகிப்பதும் சரியன்று. உலகில் அதற்கும் இதற்கும் வாங்கிகொள்ளப்படுதால்,

स्वप्नज्ञानादिகளுக்கு सत्यसङ्कल्पसृष्टिविशेषादिகளாலே तदात्वமாகவாதல், कालान्तरादिகளிலேயாதல் आलम्बनமுண்டாகையாலும் अनुपपन्नம்.

---

अपि बाह्यमर्थं, एवमाचक्षते "यदन्तर्ज्ञेयरूपं, तद्बहिर्वदवभासत" इति। तेपि हि सर्वलोकप्रसिद्धां बहिरवभासां संविदं प्रतिलभमानाः, प्रत्याख्यातुकामाश्च बाह्यमर्थं, "बहिर्व"दिति वत्करणं कुर्वन्ति। इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः। न हि वसुमित्रोयं वन्ध्यासुतवदवभासत इति कश्चिदाचक्षीत। तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तु" मिति। स्ववचनादि विरुद्धेति। यः प्रत्ययस्स निरालम्बनः प्रत्ययत्वात् स्वाप्नप्रत्ययवदिति अनुमानवचने अस्यापि प्रत्ययस्य यदि निरालम्बनत्वं, तर्हि निरालम्बनत्वरूपसाध्याख्यालम्बनासिद्धिः, यदि सालम्बनत्वं, तर्हि सर्वप्रत्ययानां निरालम्बनत्वबोधकस्ववचनविरोध इति भावः। अथ निरालम्बनस्वप्नज्ञानादिदृष्टान्तासिद्धिः प्रदर्श्यते- स्वप्नज्ञानादिகளுக்கு इति। सत्यसङ्कल्पः- भगवान्। इदञ्च विशेषणं स्वप्नार्थसृष्ट्यनुगुणसामर्थ्यं द्योतयति। सृष्टिविशेषेति विशेषशब्दः बाह्यपदार्थसृष्टिवैरूप्यं सूचयति। तदुक्तं श्रीभाष्ये- "स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थास्सृज्यन्ते। तथा हि श्रुतिस्स्वप्नविषया- "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथस्सृजते स हि कर्तेति" इति। एवं स्वप्ने सर्वत्र तादात्विकपदार्थसृष्टिपक्षस्सिद्धान्तिसम्मतो दर्शितः। यदा तु त्रिजटास्वप्नदर्शनन्यायेन भाव्यर्थसूचकत्वं स्वप्नाना, तत्र स्वप्नविषयाणां तत्कालत्वासम्भवात्, तत्कालसृष्टानां कालान्तरेपि पुनस्सर्गकल्पनस्य गौरवपराहतत्वाच्च, तत्र स्वप्नालम्बनस्य कालान्तरीणत्वमेवेति "सूचकश्चही"ति सूत्रसूचितं पक्षान्तरमप्युच्यते कालान्तरादिகளிலேயாதல இति। अयं च पक्षश्श्लोकवार्तिकादावप्युक्तः- "तिष्ठतु वा स्वप्नार्थसृष्टिपक्षः, पक्षान्तरेप्याहुः- जन्मन्येकत्र भिन्ने वा तथा कालान्तरेपि वा। तद्देशे वान्यदेशे वा स्वप्नज्ञानस्य गोचरः" इति। आलम्बनமுண்டாகையாலும் इति। तथा च दृष्टान्तासिद्धिरित्यर्थः। ततश्च सन्ध्याधिकरणे "मायामात्रन्त्व"ति सूत्रेण तत्काले "सूचकश्चही"ति सूत्रेणोक्तरीत्या कालान्तरे च पदार्थसृष्टिविवक्षया स्वप्नसामान्यस्य सत्यत्वं सूत्रकृदभिमतमिति भावः। एतेन यत्सूत्रकारैः "वैधर्म्याच्च न स्वप्नादिवदि"ति स्वप्नज्ञानस्यार्थशून्यत्वमुक्तं, तदप्यन्वारुह्यवाद इति बोध्यम्। तथा च श्रुतप्रकाशिका- "स्वप्नादेर्मिथ्यात्वाभ्युपगमेनोक्तं सूत्रकारैः। तदेव नास्तीति वक्ष्यते "मायामात्रन्त्वित्यादौ" इतीति।

---

தான் சொல்லும் வாக்யங்களும் பொருளற்றுப்போவதால். மேலும் கனவுகளுக்கும் பொருளுண்டு. ஸர்வேச்வரன் அவரவர் புண்ய பாபங்களுக்கேற்ப தத்காலத்திலே பொருட்களைப் பண்ணி அவர்கட்குமட்டில் புலப்படுத்துகிறான் என்பது ஸித்தாந்தம். சகுனம்போல் ஸூசகமாக அமையும் கனவுகளுக்கும் காலாந்தரத்தில் பொருள் உண்டு.

**புறப்பொருட்கள் பலருக்குப் பலவிதமாய் தோன்றுவதால் உண்மையில் இல்லை என்பதும் தவறு.**

परिव्राट्कामुकशुनां एकस्यां प्रमदातनौ । कुणपः कामिनीभक्षः (भक्ष्यं) इति तिस्रो विकल्पनाः ॥" என்கிறபடியே बाह्यवस्तुவிலே परस्परविरुद्धविकल्पங்கள் பிறக்கையாலே, இது निस्स्वभावமாகவேண்டாவோ என்னில், ज्ञानம் தன்னிலும் परीक्षकादिகளுக்கு सत्यत्व तुच्छत्व जडत्व-स्वयम्प्रकाशत्व क्षणिकत्व नित्यत्वादिपरस्परविरुद्धविकल्पशतமுண்டாகையாலே ज्ञानம் தானும்

ननु तत्त्वस्यैकरूपतया प्रतीत्यवश्यंभावात्, प्रमदातन्वादेर्बाह्यार्थस्य बहुभिर्बहुधा ग्रहणात् बाह्यार्थास्तत्त्वतो न सन्त्येवेत्याशंक्याह- परिव्राट्कामुकेति । भक्ष्यमित्यत्र भक्ष इत्यपि पाठः । निस्स्वभावமாகவேண்டாவோ इति । तथा च "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥ इदं वस्तुबलायातं यद्वदन्ति विपश्चितः । यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ इति रीत्या दुर्निरूपत्वाद्बाह्या अर्था अप्रामाणिका एव । परस्परविरुद्धानां कामिन्यादिविकल्पानां एकत्रोपसंहारायोगात्प्रकारान्तराश्रयणस्यापि दुष्करत्वाच्चेति तेषामभिमानः । तामिमामाशङ्कां ज्ञानेपि नानाविधविरुद्धविकल्पदर्शनेन तस्यापि मिथ्यात्वप्रसङ्गप्रतिबन्द्या दूषयति- ज्ञानம் தன்னிலும் इति । परीक्षकादिகளுக்கு इति । प्रमाणन्यायाभ्यामर्थनिर्णेतॄणामित्यर्थः । एतेन श्वकामुकादिविकल्पयुक्त्यपेक्षया परीक्षकाणां प्रतिविकल्पस्य बलवत्त्वोक्त्या श्वकामुकादिविकल्पेन बाह्यार्थाना न भङ्गः प्रत्युत परीक्षकवैमत्यात् ज्ञानस्यैव भङ्गस्स्यादिति सूचितम् । सत्यत्वं- अर्थक्रियाकारित्वम् । तत् योगाचारादिसम्मतम् । तुच्छत्वं शून्यत्व माध्यमिकस्य । जडत्वं- अस्वयप्रकाशत्वं नैयायिकादीनाम् । स्वयंप्रकाशत्वस्वसत्ताव्यापकप्रकाशाख्यविषयताश्रयत्वं वेदान्त्यादीनां । क्षणिकत्वं च पूर्वोक्तं योगाचारादेरेव । नित्यत्व- वेदान्त्यादीना । कामिन्यां श्वादेः कुणपादिविकल्पस्य च वस्तुतस्समाधानं श्लोकवार्तिके एव उक्तं- "कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते । वासनास्सहकारिण्यः व्यवस्थाकारदर्शने ॥" इति । व्याख्यातं चैवं न्यायरत्नाकरे यत्त्वेकस्या प्रमदाया परिव्राट्कामुकशुनां कुणपादिमतिभेदोऽनुपपन्न इति, तत्राह- कुणपादीति । कुणपादीनि रूपाणि सर्वाण्येव प्रमदायां सन्ति । परिव्राजकादयस्तु स्वस्ववासनानुसारेण किञ्चिद्रूपमेव पश्यन्ति । न सर्वे

ஒரு பருவமங்கையைக் காணும் யோகிக்கும், அவள் காதலனுக்கும் நாய்க்கும், முறையே பிணம் எனவும், காதலி எனவும், இறைச்சி எனவும் மூன்றுபட்ட பலவித எண்ணம் ஏற்படுவதால் உண்மையில் மங்கை என்னும் பொருளே கிடையாது என்னவேண்டாவோ என்னில்— நீ ஒப்பின ஜ்ஞாநம் தன்னிலும் ஆராய்ச்சியாளருக்கு நித்யம் அநித்யம், ஜடம், அஜடம் என்ற பலவித விருத்த வாதங்கள் எழுவதால் ஜ்ஞாநமும் இல்லாது போய

निस्स्वभावமாய்விடும். एकवस्तुவிலே विरुद्धलिङ्गसंख्यापरिमाणादिव्यपदेशங்களுமெல்லாம் सोपाधिकங்களாகையாலே वस्तुவில் विरोधமுண்டாகாது. இங்ஙன் கொள்ளாதபோது ஒரோரு ज्ञानங்கள் தன்னிலே पूर्वत्वापरत्व कार्यत्व कारणत्व नीलपीताकारत्वादि विरुद्धविकल्पங்களாலே मिथ्यात्वம் வந்து शून्यवादமே புகலிடமாம். இப்படி बाधितानुवृत्त्यादिक्षुद्रोपद्रवங்களுக்குமெல்லாம் परिहारம் கண்டுகொள்வது.

---

सर्वाणि । परिव्राजको हि विषयवैराग्यानुबन्धिचेताः । कामुकस्तु तद्रागानुबन्धिचेताः । श्वापुनरामिषगन्धिमनाः ताळफलायमानस्तनशालिनीं कबळयितुमिच्छति । सेयमेषामात्मीयवासनासहकारिता विकल्पव्यवस्थेति । एवं चोद्यस्य वस्तुतः परिहारे जाग्रत्यपि मूले प्रतिबन्दिप्रदर्शनं, "कामिन्यादिषु विकल्पकथनेन बाह्यार्थदूषण ज्ञानेऽपि तुल्ययोगक्षेमत्वात् स्वव्याघातकं" इति योगाचारस्य मतिमान्द्यसूचनायेति बोध्यम् । ननु एकस्मिन् वस्तुनि तत्तत्पुरुषीयमतिविकल्पानां तत्तत्पुरुषवासनावैचित्रीमूलकत्वेनोपपत्तावपि, एकेनैव पुरुषेण एकस्मिन्नेव वस्तुनि विरुद्धलिङ्गसङ्ख्यादिव्यपदेशाः कथमुपपद्यन्तां, यदि वस्तुनऐकरूप्यं प्रामाणिकमित्याह- एकवस्तुவிலே इति । विरुद्धेति प्रत्येकमन्वेति । परिणामेत्यत्र परिमाणेति युक्तः पाठः । विरुद्धलिङ्गव्यपदेशः "नक्षत्रं तारका तिष्यः" इत्यादौ । विरुद्धसंख्या व्यपदेशः "सीता रामदाराः" इत्यादौ । तन्तुपटयोरभिन्नत्वेपि अनेके तन्तवः पटस्त्वेकः इत्यादौ वा । "घटो मेर्वपेक्षयाऽणुः कपालापेक्षया महान्" इत्यादौ विरुद्धपरिमाणस्य । आदिना ज्येष्ठत्व कनिष्ठत्वादिविरुद्धकालव्यपदेशो ग्राह्यः । सोपाधिकेति । अयमर्थः- नक्षत्रादिशब्देषु लिङ्गभेदः पाणिन्याद्यनुशिष्टतत्तत्प्रक्रियाभेदोपाधिकः । दारादिशब्देषु बहुवचनमप्येवमेव निर्वाह्यम् । अनेकतन्त्वभिन्नत्वेपि पटस्य पटशब्दोत्तरमेकवचनं समुदायोपाध्यभिप्रायम् । यथैकत्र द्रव्ये संयोगतदभावयोः प्रदेशभेदोपाधिकत्वादविरोधः, तथैवैकत्र घटादौ तत्तत्पुरुषीयबुध्द्यवध्यादिरूपोपाध्युपग्रहात् अणुत्व महत्वैकत्व नानात्वादिव्यपदेशानामप्यविरोध इति । अथ विरुद्धानामप्यौपाधिकत्वान्नैकत्र समावेशविरोध इत्यस्यानङ्गीकारे बाधकमाह- இங்ஙன் கொள்ளாதபோது इति । मध्यवृत्तिज्ञानक्षणस्य पूर्वक्षणापेक्षया परत्वं, उत्तरक्षणापेक्षया पूर्वत्वं, स्वकारणापेक्षया कार्यत्वं, स्वकार्यापेक्षया कारणत्वं चोपाधितो भवन्ति । नीला-

---

விடும். ஒரு வஸ்துவிலே விருத்தமான லிங்கங்கள், எண்கள், பரிமாணங்கள் இவைகள் ஒருங்கே கூடுவதும், வெவ்வேறு காரணங்கள் பற்றியதாகையால், அந்த வஸ்துவை அது சிதைக்காது. இல்லாவிடில் ஓரே ஜ்ஞானத்தில் முன், பின், காரணம், காரியம் என்ற விருத்தமான முறைகள் வந்து சேர்ந்துவிடுவதால் ஜ்ஞானமும் பொய்யாய் சூன்யவாதமே வரும். புறப்பொருட்கள் இல்லை என்று தெரிந்த பிறகும் பலமான பழக்க வாசனையால் மீண்டும் மீண்டும் இருப்பதுபோல் தோன்றுகின்றன என்னும் சிறிய சமாதானமும் ஏற்கப்படாது

அறிவு ஒன்றைப் பற்றுவது முன்வினையின வாஸனைபபடி என்பது உனககு ஒவவாது

९५ नीलज्ञानसन्तानस्वभावததாலே இறகு पीतज्ञानांशம அஜ्ञानமாம எனறும, पीतज्ञान-

कारज्ञानसन्ततिरेव कदाचित्पीताकारज्ञानसन्ततितांचाश्नुते कालरूपोपाधिभेदात् । अस्य सर्वस्याविरुद्धत्वानङ्गीकारे क्षणोऽपि क्षुण्णस्स्यात् इति सर्वशून्यत्ववाद एव शरणं तव भवेदित्यर्थः। புகலிடம- शरणम् । यद्यपि पूर्वमपि -'परीक्षकா களுககு ज्ञानம தனனிலும सत्यत्व तुच्छत्वादी''त्यादिना एतादृश एव दोषो दर्शितः, तथापि तत्र सत्यत्वतुच्छत्वादीनां कथञ्चिदप्युपसंहारानर्हत्वं, अत्र तु पूर्वत्वापरत्वादीनां औपाधिकत्वेनोपसंहार्यत्वेऽपि तद्बुद्धिरीत्या तदनर्हत्वशङ्कामात्रमिति भिदा बोध्या। अथ विज्ञानमात्रास्तित्ववादादिसाम्याददै्वतिन इवैतेऽपि तत्त्वज्ञानाद्बाधितस्यापि बाह्यार्थजातस्य व्यावहारिकमर्यादयाऽनुवृत्तिं वदन्ति। अतः तत्परिहारस्यान्यत्रोक्तस्येह द्रष्टव्यत्वमाह- இபபடி इति । एषामिदं प्रत्यवस्थानं प्रामाणिकानां हिंसामुपजनयत् उपद्रवरूपं यद्यपि भवति, तथापि द्विचन्द्रज्ञानादि दृष्टान्तदर्शनमात्रेण स्थितस्यास्य प्रत्यवस्थानस्य प्रबलयुक्तिरहिततया सुनिरसत्वेन क्षुद्रत्वमेवेति न ततोऽतीव भेतव्यमस्माभिरिति क्षुद्रोपद्रवशब्दाभिप्रायः । तथा चात्र सर्वार्थसिद्धौ- ''ननु बाधितोऽपि द्वितीयश्चन्द्रादिः पुनरपि प्रकाशमानो दृश्यते । न चात्र बाह्यं किञ्चिदप्यधिष्ठानं कारणं वा पश्यामः । अतो ज्ञानस्यैवाधिष्ठानत्वं समनन्तरप्रत्ययस्यैव च कारणत्वं कल्पयितुं युक्तमित्याद्याशङ्क्य समाधीयते- अन्वयव्यतिरेकावधारितं प्रथमभ्रमाधिष्ठानमेव बाधितानुवृत्तिभ्रमेऽप्यधिष्ठानं भवति । तत्कारणमेव चानुवृत्तं कारणम् । अतो बहिरप्यधिष्ठानकारणयोस्सम्भवात् नान्तरं कल्प्य''मिति । अत्र चाधिष्ठानं चन्द्रसमीपदेशः कारणं चांगुल्यवष्टम्भतिमिरादिदोष एव । नायनरश्मयो हि अंगुल्यवष्टम्भादि प्रतिहतगतयो वक्रगत्या चन्द्रं स्वदेशस्थं तत्समीपदेशं च गृह्णन्ति । ततश्च भेदाग्रहादिकारणवैचित्र्यात् द्वौ चन्द्राविति मतिर्भवति । तत्र प्रथमभ्रमे, तदनुवृत्तौ च पूर्वोक्तमेवाधिष्ठानादिकमपेक्षिततया वर्तत इति, नान्तरपदार्थपरिकल्पनमिति अबाधिततिमिराद्यनुवृत्त्या न बाह्यार्थे बाधितानुवृत्तिर्युक्तेति भावः ।

अथ बाह्यार्थाननङ्गीकुर्वतः अनिष्टान्तरं ज्ञानानां विषयाव्यवस्थारूपं वक्तुं तद्व्यवस्थापकतया पराभिमतं वासनाविशेषं प्रथममनुवदति- ९५ नीलज्ञानेति । ननु बाह्यार्थाभावे नीलज्ञानक्षणादिकं बाधकं, पीतज्ञानक्षणादिकं बाध्यमिति विषयविशेषावगाहनकृतो बाध्यबाधकभावः कथं व्यवतिष्ठेत? तदभावे च सर्वज्ञानक्षणानां सर्वविषयत्वापत्तिरेव हि भवेदित्यत्राह- ९५ नीलज्ञानेति । एतदुक्तं भवति- ज्ञानानां बाध्यबाधकभावादिषु न तद्वति तदवगाहनं, तदभावावगाहनं वा विषय-

सन्तानादिகளுக்கும் स्वभाववशத்தாலே नीलादिज्ञानांशம் अज्ञानமாம் என்றும், இப்படி स्वप्नज्ञान-सन्तानभेदங்களிற்போலே अपर्यनुयोज्यानादिवासनावैभवத்தாலே बाह्यार्थनिरपेक्षமாக नीलपीतादि-

---

कृतं वस्तुतो हेतुर्भवति। किन्तु विषयोपरागशून्यत्वेपि वासनावशतः ग्राह्यग्राहकसंवित्तिभेदवत्त्वेन भासमानः नीलादिज्ञानसन्तानविशेषः स्वस्वभाववशात्, तदाऽनवभासमानपीतादिविषयान्तरोपरक्तज्ञानसन्तानस्य बाधक इति कल्प्यते। ततश्च बाह्यार्थाभावेपि बाध्यबाधकभावव्यवस्थया न सर्वज्ञानानां सर्वविषयकत्वप्रसङ्ग इति। अज्ञानं- भ्रमः निवर्त्यमिति यावत्। ज्ञाने नीलाद्याकारभाने, ततः पूर्वं भातस्य पीताद्याकारस्य निवृत्तेः, नीलज्ञानसन्तानस्य पीतज्ञानांशोऽज्ञानं भवति। तथा च तन्निवर्त्यविषयकत्वमेव तद्बाध्यत्वरूपं भ्रमत्वमित्यर्थः। नीलज्ञानसन्तानेन्युक्त्या, यावत्कालं ज्ञानक्षणेषु नीलादिभानं, न तावत् तत्र पीतादिभानमिति तावत्पर्यन्तमेकस्सन्तान इति च लभ्यते। तदुक्तं- "सजातीयाः क्रमोत्पन्नाः प्रत्यासन्नाः परस्परम्। व्यक्तयस्तास्तु सन्तानस्सचैक इति कथ्यते" इति। स्वभावத்தாலே इति, निवर्त्यज्ञानस्य तत्त्वे तदभावावगाहनादिहेतुकत्वं व्यवच्छिनत्ति। एवं पीतादिज्ञानांशस्य नीलादिज्ञानसन्तानं प्रत्यज्ञानत्वकथनेन तन्निवर्त्यत्वमुक्त्वा, तन्निवर्तकत्वमपि भिन्नक्रमेण पीतनीलादिज्ञानोत्पत्तौ दर्शयति- पीतज्ञानसन्तानादिகளுக்கும் स्वभावத்தாலே नीलादिज्ञानांशம் अज्ञानமாம் என்றும் इति। अत्र.. नीलादिज्ञानம் श्यामज्ञानமாம் इति सर्वकोशेषु दृष्टः पाठस्तु लेखकप्रमादकृतः अनन्वयादिति बोध्यम्। ननु नीलादिज्ञाने सन्तन्यमाने सति पीताद्याकारज्ञानसन्तत्युत्पत्तौ किन्निबन्धनम्? न हि चितिरेवाहत्य पीताद्याकारपक्षपातिनी। बाह्यार्थानां सत्त्वे तु तत्तत्सन्निकर्षबलाद्विजातीयज्ञानप्रवाहस्सेद्धुमर्हति, इत्यत्राह- இப்படி स्वप्नज्ञानेति। बाह्यार्थाङ्गीकारिणामपि, स्वप्नज्ञानस्य बाह्यार्थालम्बनत्वमनिष्टमिति, तत्र परस्परविभिन्नक्रमनीलपीताद्याकारज्ञानोत्पत्तौ अपर्यनुयोज्यानादिवासनावैभवस्यैव कारणतया आश्रयणीयतया जाग्रदादिष्वपि तथैवोपपत्तौ, न तत्र बाह्यार्थसद्भावोऽपेक्षित इति भावः। विषयविपर्यासे वासनाविपर्यासस्य कारणत्वे कथिते वासनाया एव विपर्यासः कथमिति नानुयोक्तव्यमित्याह- अपर्यनुयोज्येति। वासनायाः कार्यैकनिरूपणीयत्वेन, तद्वैचित्र्ये तद्वैचित्र्यमप्यावश्यकमिति भावः। एवं दृष्टान्तबललभ्यमंशमाह- बाह्यार्थनिरपेक्षेति। एवं च वासनावैचित्र्या नीलपीतादिभानं तदा तदा व्यवस्थया ज्ञानक्षणेषु भवतीत्युक्तं भवति। तदेतद्दूषयति-

---

ஒரு நீலாதிஜ்ஞாநப்ரவாஹம் ஓடிக்கொண்டிருக்கும்போது இயற்கையாகவே அதற்கு பீதாதிஜ்ஞாநஸந்ததி ஓடுக்கப்பட்ட(பாதிக்கப்பட்ட)வேண்டிய அஜ்ஞாநமாம். இப்படியே பீதாதிஜ்ஞாநத்திற்கும் நீலாதிஜ்ஞாநஸந்தாநம் அஜ்ஞாநமாகும், இவ்விஷயம் "ஏன்னென்று" கேட்கமுடியாத அநாதிவாஸநையாலே, புறப்பொருள் இல்லாமலேயே கனவிற்போல நீல-

विकल्पங்கள் மாறிமாறி வருகின்றனவென்றும் சொல்லுமவனுக்கு, वासनैக்கு आधारமாக-வோரு स्थिरத்தைக் கொள்ளாமையாலும், ज्ञानस्वरूपமொழிய वासनै என்றொரு गुणத்தைக்-கொள்ளாமையாலும், विलक्षणप्रत्ययस्वरूपप्रवाहமே वासनै என்றறுதியிட்டபின், अनादियान संसारத்திலே सर्वज्ञानक्षणங்களும் सर्ववासनारूपங்களாகவேண்டுகையால், नीलपीतादिप्रति-नियतविकल्पोदयம் தவிராத ஏகैकक्षणங்களே सर्वविकल्पोदयहेतुக்களாய सर्वज्ञानसन्तानங்களும்

वासनैக்கு आधारமாக इति । एतन्मते ज्ञानस्य क्षणिकत्वात् निर्धर्मकत्वाच्च वासना कुत्र स्थिरे स्थित्वा समन्वन्धिनं कं वा वासयेत् । तदुक्तं भाष्ये- "निरन्वयविनाशिनां ज्ञानानां अनुवर्त-मानस्थिराकारविरहात् वासना दुरुपपादा । विनष्टेन पूर्वज्ञानेनानुत्पन्नमुत्तरज्ञानं कथं वास्यत" इति । एवं वासनाया आधारहानिमुक्त्वाऽथ स्वरूपहानिमप्याह- ज्ञानस्वरूपமொழிய इति । ज्ञान-स्वरूपतया तदङ्गीकारस्तु ज्ञाने विषयव्यवस्थायाः कथञ्चिदपि अप्रयोजक इति अभिप्रायेण "ज्ञान-स्वरूपமொழிய" इत्युक्तम् । तर्हि "चित्राभिश्चित्रहेतुत्वाद्वासनाभिरुपप्लवा' दित्यादौ वासनेति किं व्यपदिश्यत इत्यत आह- विलक्षणप्रत्ययेति । तदुक्त रत्नप्रभायां- "अनादिसन्तानान्तर्गतं पूर्वपूर्वज्ञानमेव वासना । तद्वशादनेकक्षणव्यवधानेपि नीलाद्याकारज्ञानवैचित्र्यं भवति, यथा बीजवासनया कार्पासरक्तत्व"मिति । அறுதியிட்டபின- निश्चयीकरणादनन्तरम् । अथ विलक्षण-प्रत्ययस्वरूपप्रवाहस्य तद्घटकप्रत्येकज्ञानानतिरेकात् ज्ञानक्षणानामेव वासनात्वं फलितमित्याह- अनादியான इति । अत एवोपात्तरत्नप्रभावाक्येपि- "पूर्वपूर्वज्ञानमेव वासने"ति तन्मतमनूदितम् । तथा च वासनाया ज्ञानक्षणरूपत्वे, कस्को ज्ञानक्षणः किं किंवासनारूप इत्यत्र नियामकं न भविष्यति । न हि तत्तदर्थावगाहित्वं तत्र तन्त्रम् । बाह्यार्थाभावात् । तथाचानादौ जगति, तथा तथा ज्ञानोदयेनापेक्षणीयान्तराभावात् सर्वे ज्ञानक्षणास्सर्ववासनारूपा भवेयुरित्यर्थः । कस्तु तथैवेत्यत्रानिष्टं प्रसञ्जयति- नीलपीतादिप्रतिनियतेति । अयं भावः- कदाचित् नीलज्ञानक्षणा-नन्तरं नीलज्ञानक्षणान्तरमेवोदेति एकसन्तानमध्ये । सन्तानान्तिमकाले तु नीलाकारविकल्पा नन्तर पीताद्याकारविकल्पा जायन्ते इत्येवंविधनीलपीतादिविकल्पप्रतिनियतोदयो न स्यात् । सर्वज्ञानक्षणानन्तरमव्यवस्थया सर्वे ज्ञानक्षणा जायेरन् । सर्वज्ञानक्षणानामपि व्यवस्थितविकल्पो-दयहेतुभूतसर्ववासनारूपत्वादिति ईश्वरज्ञानवत् सर्वं सर्वविषयकं स्यादिति । तथा च तत्त्वमुक्ता-कलापश्रीसूक्तिः- 'नेष्टस्वान्यग्रहश्चेत् क्वचिदपि न हि धीधर्मिणीरः कृतान्ते, बुद्ध्यात्मा वास-नातो न च किमपि तयापेक्षणीयं बहिष्टम् । धीसन्तानेत्वनादौ भवति च निखिलवासनैकः क्षण-स्तत् निश्शेषध्वंसिनी सा युगपदखिलमप्युद्भवेत्कल्पनौघमि"ति ॥

பேதஜ்ஞானவரிசைகள மாறிமாறி வருகிறன என்று சொல்லுவார். இது அவர்களுக்கு விர-

सर्वविकल्पयोग्यங்களாய்விடும். இத்தாலே शुभैயான चित्तवासनैधर्मமென்கிற सौगतप्रतितन्त्र-व्यवस्थैயும் கழிந்து देशना(उपदेश)मूलव्यवस्थितशास्त्रार्थानुष्ठानங்களும் व्याकुलங்களாம் அவை தன்னையும் தவிர்ந்துவிட்டால் मोक्षार्थशास्त्रनिर्माणश्रवणोपदेशादिகளெல்லாம் निरर्थकங்களாம். अनादिसन्तानத்திலே मोक्षம் வந்தபோது காணுமத்தனை என்றால், अज्ञानतत्त्वज्ञानங்களாலே-

---

अथ ज्ञानक्षणस्य सर्वस्य सर्ववासनारूपत्वे स्वसिद्धान्तविरोधमप्याह- இத்தாலே शुभैயான इति । तदुक्तं, लङ्कावतारे- संस्कारस्कन्धनिर्मुक्ता शुभा चित्तस्य वासना । धर्मस्सौगतसिद्धान्ते...इति । संस्कारस्कन्धः- रागद्वेषमोहादय इति श्रुतप्रकाशिका । चित्तस्य वासना- चित्ताभिन्नवासनेति च । चित्तश्च ज्ञानसन्तानः । "उत्तरोत्तरविज्ञानं स्थूलं चित्तमितीर्यत" इति सौगतदर्शने । उक्तरीत्या सर्वस्य सर्वात्मकत्वात् '...धर्माधर्मौ भवो मतः । शुभाशुभा वासनास्याच्चित्तसन्तानवर्तिनी" इत्युक्तशुभत्वाशुभत्वव्यवस्थाहानिरिति भावः । प्रतितन्त्रेति । पुरुषानुष्ठितकर्मजन्यादृष्टरूपधर्माधर्मयोस्सर्वैरपि आत्मगतत्वेनाङ्गीकारात् सौगतानामयं चित्तगतत्वपक्षः प्रतितन्त्रम् । परतन्त्रासिद्धस्स्वतन्त्रमात्रसिद्धो हि प्रतितन्त्रसिद्धान्त इति भावः । देशनामूलेति । उपदेशमूलेति क्वचित्पाठः । देशना- उपदेश इत्यनर्थान्तरम् । "द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशने"ति वचनात् । द्वे सत्ये- पारमार्थिकव्यावहारिकसत्यद्वयम् । तथा च योगाचारनाम्ना एषां उक्तलक्षणयोगानुष्ठातृत्वसिद्धेः धर्माधर्मव्यवस्थाहानौ शास्त्रार्थानुष्ठानवैयाकुली स्यादित्यर्थः । धाष्टर्याद्भवत्वेवमिति वदन्तं प्रत्याह- அவை தன்னையும் इति । शास्त्रार्थानुष्ठानादिकमित्यर्थः । तथा च बुद्धेन "विशुद्धालयविज्ञानसन्ततिर्मोक्ष ईरितः" इत्युक्तमोक्षार्थागमप्रणयन, तच्छिष्याणां तच्छ्रवणोपदेशादिकञ्च निर्मूलं निष्प्रयोजनञ्च स्यादित्यर्थः । ननु मोक्षस्य यादृच्छिकत्वेनाहेतुसाध्यत्वात् उक्तं सर्वं इष्टमेवेत्यशङ्क्याह- अनादिसन्तानத்திலே इति । अनाद्यविद्यासन्तानइत्यर्थः । तदुक्तं भाष्ये- "अविद्या हि नाम विपरीतबुद्धिः क्षणिकादिषु स्थिरत्वादिगोचरा । तया संस्काराख्या रागद्वेषादयो जायन्ते । ततश्चित्ताभिज्वलनरूपं विज्ञानम् । ततश्च नामाख्याश्चित्त-

---

...ஒழிக்க முடியாது, வாஸனைக்கு ஸ்திரமான ஒரு இருப்பிடம் அவர்களுடைய க்ஷணபங்க-மதத்தில் கிடையாது. ஆராய்ந்தால் வாஸனையும் அறிவின் உருவமாயே இருக்கும். இப்படி தீர்ந்தபின் அநாதியான ஸம்ஸாரத்தில் ஸர்வஜ்ஞானக்ஷணங்களும் ஸர்வவாஸனாரூபங்களாக ஆனபடியால், நீலபீதாதிஜ்ஞானங்களின் வரிசைக்ரமம் தப்பி, ஒவ்வொரு ஜ்ஞானக்ஷணங்களே எல்லாவிஷயங்களையும் வெளிப்படுத்தத் தகுதிவாய்ந்தனவாய் முடியும். இப்படி எல்லாம் எல்லாமாவதினாலே "சுபையான சித்தவாஸனை தர்மம்" என்கிற பௌத்தரின் தனிச் சிறப்-புக் கொள்கையும் தொலையும். இதனாலே உபதேசமூலமான சாஸ்த்ரார்த்தாநுஷ்டானங்களும் குழப்பமுறும் "அப்படியேயாயிடுக" என்றால், நீங்கள் வீடுபெற நூல் எழுதுவதும், சிஷ்-யர்கள் கேட்பதும் மற்றவையும் நிஷ்பலங்களாம். ஆமாம்! அநாதிஸம்ஸாரத்தில் மோக்ஷம்

संसारमोक्षங்கள் என்கிற सर्वतन्त्राभ्युपगमविरोधம் வரும். तत्त्वज्ञानம் தானும் வந்தபோது காணுமத்தனை என்றால் श्रवणादिप्रतिनियतकारणव्यवस्थापरित्यागத்தாலே अहेतुकसर्वोत्पत्तिपक्ष-तुल्यமாய் चार्वाकमाध्यमिकसयूथ्यனாம்தொழிய गतियில்லை.

## முடிவுரை

இப்படிகளால் ''इदमहं जानामि'' என்று தோற்றின மூன்றர்த்தத்தில் இரண்டுக்கு सत्यत्व-नियमமும், विषयांशத்திலும் अधिष्ठानरूप्या(सारूप्या)दिसत्यत्वமும் आरोपितांशத்துக்கு देशान्त-

---

चैत्ताः, पृथिव्यादिकश्चरूपिद्रव्यम् । ततष्षडायतनाख्यमिन्द्रियषट्कम् । ततश्च स्पर्शाख्यः कायः । ततो वेदनादयः । ततश्च पुनरविद्यादयो यथोक्ता इति । एषा च विवरणं वैभाषिकमतभङ्गे भविष्यति । तथाचैवं रीत्या इतरेतरहेतुके अनाद्यविद्यासन्ताने, कदा तद्विरतिः, कदा मुक्तिरित्यस्य मन्दप्रज्ञैः पूर्वमेव ज्ञातुमशक्यत्वात्, यदा तु भवति, तदा तदवगतिरिति न पूर्वं किञ्चित्तदर्थं संविधातव्यमिति शास्त्राद्यानर्थक्यमिष्टमेवेति भावः । तदेतद्दूषयति अज्ञानतत्त्वज्ञानेति । अज्ञानाद्बन्धः ज्ञानान्मोक्ष इति चार्वाकव्यतिरिक्तसर्वसिद्धान्तिसिद्धस्य न्यायस्य तदानीं विरोधः, मोक्षस्याहेतुसाध्यत्वोपपादनादिति भावः । अथ तच्छास्त्रसार्थक्याय मोक्षस्य यादृच्छिकत्वं मुक्त्वा तत्त्वज्ञानस्य तद्वदताम्मतमपि निराकरोति- तत्त्वज्ञानம் தானும் इति । घुणक्षतलिपिक्रमात् ज्ञानस्यापुरुषतन्त्रत्वेन यादृच्छिकत्वं युज्यत इति भावः । श्रवणादिप्रतिनियतेति । पुस्तकनिरीक्षणादिकं विना गुरुसकाशाच्छ्रवणादिभिरेव तत्त्वज्ञानं सम्पादनीयमिति तेनाप्यङ्गीकारात्, तस्याहेतुसाध्यत्वे तत्कारणव्यवस्थापरित्यागप्रसङ्गः, तस्येव सर्वस्यापि कार्यस्याहेतुसाध्यत्वापातात्कार्यकारणभावमात्रस्यैवोच्छेदप्रसङ्गश्चेति तदनङ्गीकर्तृचार्वाकमाध्यमिकमध्यनिवेश एव तस्य भविष्यतीति भावः । सयूथ्यः- समानगोष्ठीनिष्टः ।

एवं विस्तरेण कृतं दूषणांशं निगमने सविशेषं संगृह्य दर्शयति- இப்படிகளால் इति । एतदधिकारोक्तप्रक्रियाभिरित्यर्थः । மூன்றர்த்தத்தில- ज्ञातृज्ञेयज्ञानेषु । இரண்டுக்கு- ज्ञातृज्ञानयोः । सत्यत्वनियमமும் इति । विषयेषु वक्ष्यमाणरीत्या सत्यत्वस्यांशिकत्वेपि न ज्ञातृज्ञानयोस्तस्य तथात्वमिति द्योतयितुं अत्र नियमशब्दप्रयोगः । ज्ञेयविषये वक्तव्यांशसत्त्वात् तं पृथगाह- विषयांशத்திலும் इति । ज्ञानविषयो द्विविधः । अनारोपितः आरोपितश्चेति । प्रमाविषयस्सर्वः अना-

---

வந்தபோதுதானில்லை" என்றால், தத்வஜ்ஞானத்தால் மோக்ஷம், தத்வப்ரமத்தால் ஸம்ஸாரம் என்ற ஒரு நியதிப்படி எல்லோரும் ஸம்மதித்த வழிக்கு ஹானி விளையும். அந்த தத்வஜ்ஞானம் தானும் வந்தபோது கண்டத்தனை என்றால், ச்ரவணம் செய்தல் முதலிய குறிப்பிட்ட தத்வஜ்ஞானகாரணங்கள் தவறிப்போய், "காரணமின்றியே கார்யம்" என்கிற சார்வாக மாத்யமிக பக்ஷம்போலாகும்.

यादिसत्यत्वமும், இவற்றில் स्थिरास्थिरविभागமும யथादர்शनம கொள்ளவேண்டின பின்பு. ज्ञानம் போலே ज्ञाताவும் ज्ञेयமும் உண்டாய, ज्ञानம் தானும க்ஷணிकसन्ततिरूपமன்றிக்கே நிற்கையால, அவர்கள் சொன்ன मोक्षமும் प्रामाणिकமல்லாமையாலும், இதற்கு वेदविरुद्धवेषाचारज्ञानयोगादि-

---

रोपितः भ्रमाधिष्ठानश्च । तत्र पूर्वस्य सत्यत्वेऽनतिविवादात् शुक्तिभ्रमाधिष्ठानभूतरूप्यादिविषय- सत्यत्वं प्रथमं दर्शयति- अधिष्ठानरूप्यादीति । अधिष्ठानस्यापि मिथ्यात्वे निरधिष्ठानभ्रमोदयस्य लोकानुभवविरोधादिति भावः । अत्र "अधिष्ठानसारूप्यादिसत्यत्वமும இत्यपि क्वचित्पाठः । तदा अधिष्ठानसारूप्यं- फाळफल्यादिः । आदिना तिमिरादिदोषश्च । तत्सर्वमनारोपितत्वात्सत्य- मेवेत्यर्थो भाव्यः । अथारोपितस्य सत्यतां समर्थयते- आरोपितांशத்திற்கு इति । अत्रापि "विष- यांशத்திலும்" इत्यनुवर्तते । अन्यत्र देशकालयोः प्रसिद्धमेव हि वस्तु देशकालान्तरादावारोप्य गृह्यते । अन्यथा अप्रसिद्धशशविषाणादिभ्रमोपि भूयादिति भावः । एतेन "इदमहं जानामि" इत्यत्रार्धजरतीयायोगात् इदमर्थारोपितविषयांशस्येवाहमर्थज्ञातंशस्यापि मिथ्यात्वमङ्गीकार्यं इति माध्यमिकशङ्कानवकाशः । नन्वेवमर्थत्रयस्यापि ज्ञातृज्ञेयज्ञानरूपस्य सत्यत्वे, तेषां नित्योपलब्धि- प्रसङ्ग इत्यत्राह- இவற்றில स्थिरेति । दृष्टेऽपह्नुत्यभावात् यथोपलब्धि केषाञ्चिन्नित्यत्वं, केषाञ्चि- दनित्यत्वं अभ्युपगमनीयमिति नोक्ताशङ्केति भावः । एतावतोपपादनेन फलितमाह- ज्ञानம- போலே इति । सन्ततिरूपமன்றிக்கே इति । अविनाशीवाऽरे अयमात्मा अनुच्छित्तिधर्मेत्यादिना ज्ञाननित्यत्वावगमादिति भावः । यद्यपि सिद्धान्तेपि- "तद्रूपप्रत्ययेचैका सन्ततिश्चान्यनिस्पृहा । तत् ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते तथा ।" "धारावाहिकविज्ञानं नीरन्ध्रनिर्यातमणिमयूखवत् एकरूपं वा स्नेहदशादिसमवायसन्तन्यमानदीपवत् सन्ततिरूपं वे"ति वचनात् क्वचित् क्षणिक- ज्ञानसन्ततिरङ्गीकृतेव भाति । तथापि अत्र क्षणिकत्वस्य त्रिचतुरक्षणवृत्तित्वरूपत्वेन, तस्यापि इन्द्रियाधीनज्ञानप्रसरणनिष्ठत्वात् ज्ञाननिष्ठत्वाभावेन च, साक्षात् ज्ञान एव उत्पन्नमात्रस्यैव स्वतो- विनाशित्वरूपद्वितीयक्षणोत्पन्नध्वंसप्रतियोगित्वात्मकक्षणिकत्वाङ्गीकारिमतवैलक्षण्यसिद्धिः । ततश्च प्रधानतया तन्मते मोक्षतदुपायस्वरूपविवेचनविरोधो भवतीत्याह- அவர்கள் சொன்ன मोक्षமும

---

ஆகையால் "நான் இதை அறிகிறேன்" என்று தோன்றின மூன்றில் ஜ்ஞானமும் ஜ்ஞாதாவான ஆத்மாவும் உண்மையில் உண்டு. பொருள் பற்றியும் விசாரித்தால், ப்ரமங்களி- லும் அடிப்படைப் பொருள் உண்மை என்றே கொள்ளவேணும். அதில் கற்பிக்கப்படும் பொருளும் இங்கில்லாவிடினும் வேறோர் இடத்திலாவது உண்மையில் உண்டு. பொருட் களில் ஸ்திரம் அஸ்திரம் என்ற வேறுபாடு கண்டதையொட்டிக் கொள்ளவேணும். ஆக முப்- பொருளும் ஸத்யம். அதில் ஜ்ஞானம் தானும் நீங்கள் சொல்லும்படி க்ஷணம்தோறும் வேறு-

களைக் காரணமென்றது समुदायदोषाधिकारத்தில் சொன்ன न्यायங்களாலே निरस्तமாகையாலும், योगाचारपक्षமும் चार्वाक माध्यमिकपक्षங்களைப் போலே स्वर्गापवर्गादिसकलपुरुषार्थविरुद्धமாம். இம்-मतத்தை "नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्" "न भावोऽनुपलब्धेः" என்கிற सूत्रங்-களாலே वेदान्तसूत्रकारர் निराकरित्தார்.

---

इति । ज्ञानस्य नित्यविभुत्वसिध्या विषयोपरागशून्यबुद्धिसन्तानस्फुरणस्य मुक्तित्वासंभवादित्यर्थः । वेदविरुद्धवेषाचारेति । तदुक्तं विवेकविलासे- "कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् । संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिरि"ति । पूर्वाह्णभोजनं- सप्त घटिकाभोजनम् । ज्ञान-योगेति । ज्ञानं, योगश्च पूर्वोक्ते । अथवा ज्ञानयोगः- सर्वं क्षणिकं क्षणिक"मित्यादि पूर्वोक्त-भावनाचतुष्टयम् । समुदायदोषाधिकारेति । इयं तत्रत्यश्रीसूक्तिः- "वेदविरुद्धங்கள் எல்லாம் प्रमाणமென்கை वेदबाह्यர் தங்களுக்கும் इष्टமன்று. अतीन्द्रियविषयத்தில் अर्हत्सुगतादिகளில் ஒருவனை आप्तனென்று विश्वसिக்கைக்கு विशेषहेतुவில்லை. बुद्धिमद्बहुजनपरिग्रहமே हेतु-வென்றில் देशकालभेदத்தாலே प्रज्ञातिशयवान्களுடைய अनुप्रवेशपरित्यागங்களும் ஒரோன்று கிளர்ந்து போருகையும் எல்லாத்துக்கும் तुल्यम्." इत्यादि । निगमयति- योगाचारपक्षமும் - इति । अत्र वेदान्तसूत्रकृत्सम्मतिं प्रदर्शयति- இம்மதத்தை इति । सूत्रार्थस्तु- बाह्यार्थानां ना-भावः, ज्ञातुर्ज्ञेयविशेषप्रतिपत्तिरूपतया ज्ञानस्योपलब्धेरिति प्रथमस्य, स्वप्नज्ञानवत् सर्वज्ञानाना-मप्यस्त्वर्थशून्यत्वमित्यत्राह- वैधर्म्याच्चेति । जागरितस्वप्नज्ञानयोर्बाधितत्वाबाधितत्वाभ्यां विशे-षात्, न स्वप्नवदर्थशून्यत्वमिति द्वितीयस्य, केवलस्यार्थशून्यस्य ज्ञानस्य न सद्भावः तथाविध-ज्ञानस्य अनुपलब्धेरिति तृतीयस्य चेति । वस्तुतस्स्वप्नज्ञानस्याप्यर्थवत्त्वमेवेति च पूर्वमेवोक्तम् । एषां सूत्राणां सौत्रान्तिकमतनिराकरणपरतया यादवप्रकाशव्याख्यानं चिन्त्यमिति अर्थात् दर्शयितुं अत्रैतदुक्तिः ॥

---

படும் ஸந்ததி ரூபமல்ல. அதனால் நீங்கள் "சுத்த ஜ்ஞானஸந்ததிஸ்புரணம் மோக்ஷம்" என்றதும் தவறு. இந்த மோக்ஷத்திற்கு வேதவிருத்தமான வேஷம் ஆசாரம் இவைகளைக் காரணமாக நீங்கள் காட்டினதும் ஸமுதாயதோஷாதிகாரத்தில் நாம் சொன்னபடியிலே கண்டிக்கப்பட்டது. ஆக இந்த யோகாசாரமதமும் சார்வாக மாத்யமிக மதம்போல் ஸ்வர்க்க-மோக்ஷாதி ஸர்வபலன்களுக்கும் விருத்தம். இந்த மதத்தை வேதாந்த ஸூத்ரகாரரும் "உலகம் இல்லை என்னப்படாது. தென்படுவதால்" என்று துவங்கி மூன்று ஸூத்ரங்களால் நிராகரித்துள்ளார்,

உளக்கதியை நாமுள்ளியுள்ளம் தேறி
உலகத்தாருகந்திசைய உலகுண்டென்றோம்
இளக்கவரிதாகிய நற்றருக்கம் சேர்ந்த
எழில்மறையால் ஈசனுடனெம்மைக்கண்டோம் (கொண்டோம்)
விளக்குநிரைபோல மதிகள்வேறாய் வேறொன்று
அறியாதே விளங்குமென விளம்புகின்ற
கள்ளக்கருத்தன் கண்ணிரண்டுமழித்தோம்
நாணுக்காகம்போல் திரிந்தவனென கதறுமாறே

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमत्परमतभङ्गे योगाचारमतभङ्गाधिकारः अष्टमस्सम्पूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

एवमधिकारान्ते, विप्रकीर्णं प्रतिपत्तिसौकर्याय संक्षिप्य प्रदर्शयन्, योगाचारमुपहसति गाथयैकया- உளக்கதியை इत्यादि । உள்ளக்கதி इत्येतत् मध्यमाक्षरलोपेन உளக்கதி इति पठ्यते । (सर्वजनानां इदमह जानामीति) स्वबुद्धिप्रवृत्तिमित्यर्थः । तत्त्वस्थितिं वा । तां वयं मनसि कृत्वार्थं निश्चित्य च यथा लौकिका अपि तत् अभिनन्द्याङ्गीकुर्युस्तथा बाह्यार्थसद्भावमस्थापयाम इति प्रथमपादार्थः । श्लथयितुमशक्येन सत्तर्केण सनाथया श्रुत्या शोभमानया ईश्वरेण सह तच्छेषभूतजीववर्गं च असाधयामेति द्वितीयपादस्य । दीपज्वालेव विभिन्ना ज्ञानसन्ततिः परमार्थभूतबाह्यार्थानवगाहिनी प्रकाशत इति वादिनः, वञ्चनापरान्तःकरणस्य, योगाचारस्य चक्षुर्द्वयमपि वयमविध्याम । तथापि स निर्लज्जकाकवत् सर्वतः परिगत्य स्वयं आक्रन्दति अहो इति तृतीयचतुर्थपादयोः । நிரை- परम्परा । களக்கருத்தன-கள்ளக்கருத்தன- स्तेनमनाः । கண்ணிரண்டு इति तदीयमतप्रमाणभूते सहोपलम्भनियम, ज्ञानातिरिक्ताकारानुपलब्ध्याख्ये प्रत्यक्षानुमाने विवक्षिते । मोक्षहेतुभूततत्त्वाचारौ वा । नयनद्वयवेधनोक्त्या प्रसिद्धकाका-

(பாசுரத்தின் பொருள்) எல்லோருடைய உள்ளக் கருத்தையும், நாம் நன்கறிந்து உலகத்தார் உகந்து ஏற்கும்படி உலகை உண்டென்று ஸ்தாபித்தோம். குலைக்க முடியாத வாதங்களுடன் சேர்ந்து திகழும் வேதத்தைக் கொண்டு ஈச்வரனுடன் நாம் (ஜீவர்கள்) இருப்பதைக் கண்டோம். விளக்கொளிபோல விட்டு விட்டு வருகிற ஜ்ஞான ஸந்ததிகள் வெவ்வேறாய் வேறு புறப்பொருளைப் பற்றாது ப்ரகாசிக்கும் என்று பகர்ந்த கள்ள எண்ண-

सुरादपि अस्यात्यन्तदुर्विनीतत्वसिद्धिः । तस्यैकाक्षिमात्रशातनात् । நாணைக்காகம்போல் इति च 'त्रीन् लोकान् सम्परिक्रम्य तमेव शरणं गतः' इत्युक्तविलज्जितपूर्वोक्तकाकव्यावृत्तिः । अपराध-शिक्षणानन्तरञ्च काकासुरस्य लज्जाभरान्वितो विनयविशेषः कार्यद्वारा कविभिरुपवर्ण्यते । "देव्या च तुल्या करुणा परा का? रामेण तुल्यश्च दयानिधिः कः?। इतीव घुष्यन् जगतीह सर्वतः नाम्नापि तेनैव बभूव काक. ॥" इति । अयन्तु दण्डधारणानन्तरमपि त्रीन् लोकान् सम्परिक्रम्याश्रय-मलभमानः किमाक्रन्दतीति न वयं जानीम इत्याशयः । इति शम् ॥

योगाचारविचारं वाचा नाराचरूक्षया स्वस्य ।
विव्याध चाष्टमेऽस्मिन्नधिकारे वेङ्कटेशगुरुवर्यः ॥ १ ॥

योगाचाराधिकारे विषयविरहितां बुद्धिसन्तानवल्लीं
भिन्नां तैस्तैः क्षणैश्च प्रशममुपनयन्देशिकेन्द्रो यदाह ।
तद्युक्ताशेषयुक्तीस्स्वयमिह दयया तस्य चैव प्रयुक्त-
प्रज्ञालोको विलोक्य स्फुटतरवचसा व्याक्रियामन्वभूवम् ॥ २ ॥

इति श्री वत्सवंशायनस्य, देशिकचरणपरायणस्य, नारायणस्य कृतिषु श्री परमतभङ्गव्याख्यायां देशिकाशयप्रकाशाख्यायां अष्टमो योगाचारमतभङ्गाधिकारस्संपूर्णः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

கொண்ட யோகாசாரனின் இரு கண் என்று கருதத் தக்க -ஆசாரம் இவைகளைத் தகர்த்-தோம். ஆயினும் அவன் வெட்கப்பற்று காக்கைபோலத் திரிந்து கதறுவனோ? யாம் அறியோம்.

ஸ்ரீபரமதபங்கத்தில் யோகாசாரமதபங்காதிகாரத்தின் தமிழ் மொழிபெயர்ப்பு முற்றிற்று.

॥ श्रीः ॥

श्रीमते श्री लक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः ॥ श्रीमते वेदान्तगुरवे नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

# परमतभङ्गे सौत्रान्तिकमतभङ्गाधिकारः - 9

பொருளொன்றில்லதென்று போதமொன்றும் கொண்ட பொய்யரை நாம்
தெருளக்கொண்டு தீர்த்தபின் காணவொண்ணாப் பொருள் தேடுகின்ற
மருள்கொண்டு சூதுரைக்கும் சௌத்திராந்திகன் வணிக்கை நாம்
இருளக்கொண்ட பாழ்ங்கிணறென்று இகழ்ந்தோட்டியமப்புவமே. 18

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

## ॥ * ॥ देशिकाशयप्रकाशः - परमतभङ्गव्याख्या ॥ * ॥

गतिमन्यां न जानामि यं मुक्त्वा देशिकोत्तमम् ।
मोक्षाख्याविशतान्नित्यमखिलार्थप्रसिद्धये ॥ १ ॥

सौत्रान्तिकमतभङ्गं ह्यैकान्तिकविविधहेतुभिः तन्वन् ।
नरकान्तकपदभक्तो हृदयान्तिकमेतु मे गुरुस्सोयम् ॥ २ ॥

ब्रवीति यो बाह्यपदार्थमात्रं अथापि गम्यन्त्वनुमानतोऽर्थम् ।
ज्ञानाकृतेर्मूलतया स सौत्रान्तिको निराकार्य इहार्यवर्यैः ॥ ३ ॥

अथात्राधिकारारम्भे आचार्यवर्यः "ततस्स किङ्करान् हत्वा हनूमान् ध्यानमास्थितः । वनं भग्नं मया चैत्यप्रासादो न विनाशितः । तस्मात्प्रासादमप्येवं भीमं विध्वंसयाम्यहमि"ति मारुतिमनोवृत्तिमनुवर्तमानः वृत्तं संकीर्त्य वर्तिष्यमाणेन घटयति गाथया- பொருளொன்றில்ல-தென்று போதமொன்றும் கொண்ட इति । "नान्योनुभाव्यो बुध्याऽस्ति, तस्या नानुभवो परः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते" इति बाह्यार्थशून्यां व्यर्थां बुद्धिं समर्थयते स योगाचार इत्यर्थः । பொய்யரை इति । यद्यपि लोकयात्रात्राणाय ज्ञानमात्रं सोऽङ्गीचकार, अथापि ज्ञेय-मात्रस्य मिथ्यात्वे तदेकतापन्नज्ञानतत्त्वस्यापि तथात्वापत्त्या माध्यमिकस्येव सर्वमिथ्यात्व एव

पर्यवसानमिति भावः। तादृशानां तेषां अस्माभिर्निरासानन्तरमिति நாம் इत्यादि தீர்த்தபின் इत्यन्तस्यार्थः। केन निमित्तेन निरासः? தெருள்கொண்டு- ज्ञानमादायैव। "अहं जानामीत्यत्र भासमानेन ज्ञानेन विषयाश्रययोरपि स्वस्यैव प्रकाशनात् न जगदपलापसम्भव इत्युक्तमिति भावः। अथवा தெருள்கொண்டு- अनन्यथासिद्धलोकप्रतीतिमाश्रित्येत्यर्थः। एतावद्वृत्तकीर्तनम्। தீர்த்தபின் इत्यस्य இயம்புவமே इति क्रियया सम्बन्धः। इदं योगाचारनिराकरणं सर्वं सौत्रान्तिकोप्यन्तिकस्थः शुश्रावैव। योगाचारदूषणात् स्वात्मानमुन्मोक्तुं कथञ्चिद् बाह्यार्थानभ्युपागच्छत्। न स्पष्टंप्रत्यक्षयोग्यान्। अतः காணவொண்ணாப் பொருள் தேடுகின்ற इति। प्रत्यक्षतो दुरधिगमाननुमानतोऽवगन्तुं गवेषयति। மருள்கொண்டு(ட) சூதுரைக்கும்- अज्ञानमाश्रित्य कापट्यं कुर्वतः। बाह्यपदार्थप्रत्यक्षत्वानभ्युपगमः अज्ञानकृत्यम्। प्रत्यक्षतः क्वचिदर्थेषु व्याप्तिग्रहाभावे अनुमानस्याप्यसंभवेन तत्संभवाभिधानं कापटयकार्यमिति भावः। சௌத்ராந்திகன்- एतन्नाम च पुरा निरुक्तम्। வண்ணிக்கை वर्णनम्। एतेनैतन्मतस्यासदर्थारोपमूलत्वं कव्यादाविवास्तीति ध्वनितम्। இருள்கொண்ட பாழ்ங்கிணறு- चिरादुपहतान्धकूपः। पूर्वं "காணவொண்ணாப் பொருள் தேடுகின்ற" इत्युक्तदुरधिगमार्थान्वेषणस्थानत्वरूपसाधर्म्यान्वयादयमेव समुचितो दृष्टान्त इत्यभिसन्धिः। न केवलमत्राभिलषितार्थानवाप्तिमात्रं अपि तु अधिकतरानर्थावाप्तिरपीति सूच्यते "பாழ்ங்கிணறு" इति उपहतत्वोक्त्या। अन्तःपतितैः स्पृष्टमात्रा भित्तयः शिथिलितपूर्वाः शिरसि हि तत्र पतन्ति। என்று இகழ்ந்து ஓட இயம்புவமே इति। इत्यसदुक्तिं श्रुत्वा बुध्वा च बौद्धभक्ता अपि सन्तः जनास्तन्मतपरिहासात् सहसा जंघाजवं यथा दर्शयिष्यन्ति तथा ब्रूम इत्यर्थः। अत्र "पृष्टोपि नवदेदर्थं गुह्यं सिद्धान्तमेव चे"ति निषेधे जाग्रत्यपि जगदाचार्या इमे परानर्थासहिष्णुतया परमहितं स्वयमेवोद्घाटयन्ति सर्वेषां श्रेयसे। "नियुक्तो वाऽनियुक्तो वा धर्मं वक्तुमिहार्हसी"त्यपि हि श्रूयते इति भावः।

---

ஸ்ரீ:

ஸ்ரீமதே லக்ஷ்மீந்ருஸிம்ஹபரப்ரஹ்மணே நம:

ஸ்ரீமதே ராமாநுஜாய நம: || ஸ்ரீமதே வேதாந்தகுரவே நம:

## ஸ்ரீ பரமதபங்கத்தில் ஸௌத்ராந்திகமதபங்காதிகாரம்-9

(பாசுரத்தின் கருத்து) எப்பொருளும் இல்லை என்றும் அறிவொன்றுமே உண்டென்றும் கொண்ட பொய்யன் யோகாசாரனை விசாரித்து விலக்கியபின், ப்ரத்யக்ஷமல்லாத பொருட்களை அநுமானத்தால் தேடியலைகின்ற, மருள் மிகுந்த, சூதன் சௌத்ராந்திகனுடைய மதம் இருக்கும் வண்ணத்தை ஓர் இருள் கவிந்த பாழுங்கிணற்றுக்கொப்பிட்டு எல்லோரும் இகழ்ந்தோட இயம்புவோம்.

**முன் பின் ப்ரகரணங்களின் தொடர்பும் - ப்ரதிஜ்ஞையும்**

**बाह्यार्थ**மில்லை என்ற **योगाचार**னை **सर्वलोकपरिहासविषय**மானபடி கண்டு, **बाह्यार्थ**முண்டென்றொரு பேரை இட்டு, "அது **प्रत्यक्ष**மன்று- அதனடியாக வந்த **ज्ञानाकार**மே தோற்றுகிறது- இதைக் கொண்டு **बाह्यार्थ**த்தை **अनुमि**க்கின்றோம்" என்கிற **सौत्रान्तिक**னை **निरसि**க்கிறோம்.

निगसार्थं सौत्रान्तिकमतमनुवदन्, तस्य योगाचाराद्यो विशेषस्तमाह सङ्गतिस्पाष्ट्याय- बाह्यार्थமில்லை इति। "योगाचारो जगदपलपती"ति प्रसिद्धं हीत्यर्थः। योगाचारனை इति द्वितीयार्थकर्मत्वस्य கண்டு इत्यत्र दर्शनक्रियायामन्वयः। सर्वलोकपरिहासेति। "यदन्तर्ज्ञेयतत्त्वं तत् बहिर्वदवभासत" इति तदुक्तिमुपादाय "बाह्यपदार्थाभावे बहिर्वदित्युपमानोक्तेरयुक्तेः। न हि वसुमित्रो वन्ध्यासुतवदवभासत इति प्रेक्षावानाचक्षीतेति हि प्रामाणिकाः परिहसन्तीति भावः। एतद्दोषोद्धिधीर्षया सौत्रान्तिकेन कृतं प्रतिविधानमाह- बाह्यार्थம इति। एतेनाक्षेपसङ्गतिः सूच्यते। ஒருபேரையிட்டு- तथा प्रसिद्धिमुत्पाद्य। तथा च बाह्यार्थसद्भावोऽस्य प्रतिज्ञामात्रमेवेति भावः। व्यक्तीभविष्यतीदमुपरिष्टात्। इदानीमपि बाह्यार्थासिद्धिहेतुं ईषत्सूचयन्निवाह- அது प्रत्यक्षமன்று इति। अत्र प्रत्यक्षமுமன்று इत्येव पाठो दृश्यते। तदा अपिना समुच्चेयं चिन्त्यम्। बाह्यार्थानां क्षणिकत्वात्, प्रथमं स्वयमुत्पद्य, अथेन्द्रियैस्संयुज्य, पश्चात्प्रत्यक्षभावं प्राप्तुं तेषां तावत्कालमनवस्थानान्नप्रत्यक्षत्वं तेषामित्याशयः। तर्हि "अयं नीलः पीत इत्यादिलौकिकप्रत्यक्षं निर्विषयमापद्येतेत्यत्राह- அதடியாக வந்த ज्ञानाकारமே इति। तथा च बाह्यैर्नीलादिभिर्ज्ञाने स्वाकारार्पणात् तन्मूलका ज्ञानगता नीलाद्याकारा एव तया भासन्ते। न त्वर्थाकारा नीलादय इत्यर्थः। कथं पुनर्बाह्या अर्थास्सन्तीति वयं जानीम इत्यत्राह- இதைக்கொண்டு इति। ज्ञाना- कारान् हेतूकृत्येत्यर्थः। अत्रेयं तेषां मतपरिपाटी परिभाषा च- बाह्यार्थानामभावे ज्ञाने नील- पीताद्याकारभानं न सेत्स्यति। न च वासनायाज्ञानातिरिक्तायास्स्वीकारात् तया तदुपपद्यता- मिति वाच्यम्। तस्यास्सर्वाकारसाधारण्येन कदाचिन्नीलाकारः अन्यदाऽन्याकार इति कादाचित्क- तज्ज्ञाननियामकत्वायोगात्। तदुक्तं सर्वसिद्धान्तसंग्रहे - विज्ञानवादिनये वासना नाम एकसन्तान- वर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः। तस्याश्च स्वकार्योत्पादं प्रत्याभिमुख्यं परिपाकः। तस्य च प्रत्ययः- (कारणं-) स्वसन्तानवर्ती पूर्वः क्षणः कर्म क्रियते। सन्तानान्तरनिबन्धनत्वा-

---

*புறப்பொருட்கள் இல்லை என்ற யோகாசாரன், எல்லோரும் பரிஹஸிக்க நிற்கும் நிலை கண்டு அவனில் தனக்கு வாசி தோன்ற, புறப்பொருள் உண்டு என்று ஒரு பேரை ஏற்படுத்தி "ஆனால் அது காணலாகாது- ஜ்ஞானத்தில் தோற்றின அதன் வடிவு கொண்டு அதை ஊஹித்தறிகிறோம் (கண்ணாடியில் நிழல் கண்டு பின்புறத்தே நிற்பவனை உணர்வதுபோல) என்னும் ஸௌத்ராந்திகனை சோதிக்கிறோமிங்கு.*

புறப்பொருள் உண்டென்று ஒருபுறம் சொல்லி மறுபுறத்தில் மறுப்பது

இவன் बाह्यार्थம் கொண்டவிடத்திலும் अवयवसङ्घातங்களை अवस्तुக்களென்று கழித்த-

---

नङ्गीकारात् । ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्तिवासनापरिपाकं प्रति सर्वेप्यालयविज्ञानवर्तिनः क्षणास्समर्था एवेति वक्तव्यम् । न चेत्कोपि न समर्थस्स्यात् । आलयविज्ञानसन्तानवृत्तित्वाविशेषात् । सर्वे समर्था इति पक्षे कार्यक्षेपानुपपत्तिः । ततश्च कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाष्षडपि प्रत्ययाश्चतुरः प्रत्ययान् प्रति उत्पद्यन्त इति चतुरेणानिच्छताप्यच्छमतिना स्वानुभवमनाच्छाद्य परिच्छेत्तव्यम् । ते च चत्वारः प्रत्ययाः प्रसिद्धाः आलम्बन,समनन्तर,सहकार्यधिपतिरूपाः । तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलालम्बनप्रत्ययात् नीलाकारता भवति । समनन्तरप्रत्ययात्प्राचीनज्ञानात् बोधरूपता । सहकारिप्रत्ययात् आलोकात्, चक्षुषोऽधिपतिप्रत्ययात् विषयग्रहणप्रतिनियमः । उदितस्य ज्ञानस्य च रसादिसाधारण्यप्राप्तेर्नियामकं चक्षुः अधिपतिर्भवितुमर्हति । लोके नियामकस्याधिपतित्वोपलम्भात् । एवं चैत्तात्मकानां सुखादीनां अवभासेपि चत्वारि कारणानि द्रष्टव्यानि इति । बाह्यार्थத்தை-रूपरसगन्धस्पर्शाद्यात्मकचतुर्विधपरमाण्वभिन्नपदार्थान् । धर्मधर्मिभेदभङ्गादेतन्मते स्पर्शाद्यात्मकत्वं परमाणूनाम् । आकाशस्य परमाणुषु कल्पितत्वेन स्वरूपत एवानङ्गीकारात्, लोके चतुर्विधपरमाणुपरिशेषः । जैनानां परमाणव एकरूपाः । सौत्रान्तिकवैभाषिकवैशेषिकानान्तु ते चतुर्विधाः । अत एव वेदान्तसूत्रकारः वैभाषिकविनाशानन्तरं जैनजयात्पूर्वं वैशेषिकसाम्यस्यैषुसत्त्वात् एषामेव प्रत्याख्यानं ख्यापयामास । वैशेषिकसौत्रान्तिकयोः परमाण्वनुमेयत्वसाम्येपि अनुमानप्रक्रिया परं भिद्यते । वैशेषिकस्य वक्ष्यमाणत्वात् एतस्य परमाण्वात्मकबाह्यार्थानुमानप्रयोगमाहेदानीं- अनुमிக்கிறும் इति । सर्वदर्शनसंग्रहे- "ये यस्मिन् सत्येव कादाचित्काः, ते सर्वे, तदतिरिक्तसापेक्षाः । यथा मा अविवक्षति अजिगमिषति मयि, वचनगमनप्रतिभासाः विवक्षुजिगमिषुपुरुषान्तरसन्तानसापेक्षाः, तथा विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखिन इति तथोल्लेखे बाह्यार्थसापेक्षा इति अनुमानप्रयोगो दर्शितः । तथा च वृद्धवचनं- "अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम् । तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपते"ति । अर्थरूपतां अर्थाकारत्वं, मुक्त्वा-विना, एनां-बुद्धिं, न ह्यर्थेन घटयति । अर्थ इति शेषः । तस्मात् प्रमेयाधिगतेः मेयरूपता-अर्थाकारत्वं प्रमाणं इति तदर्थः ॥

पूर्वं "बाह्यतत्त्वமுண்டென்று ஒரு பேரையிட்டு" इत्यत्रोक्तरीत्या अस्य बाह्यार्थाभ्युपगमप्रकारस्तच्छून्यत्व एव पर्यवस्यतीति दर्शयितुं क्रमेणैकैकपरित्यागं तत्कृतं प्रपञ्चयति- இவன

தான். परमाणुக்கள் தன்னிலும் सावयवत्वादिचोद्यभयத்தாலே निरंशங்களென்று கொண்டான்.

बाह्यार्थம் इति। अवयवसंघातங்களை इति। एतन्मतेपि अवयवातिरिक्तावयवी नेष्ट इति अवयव संघातशब्देन व्यवहारः। कोशेषु "अवयविसंघाते"ति पाठो दृश्यते। स च न स्वरसः अवयविपद, सङ्घातपदयोः पक्षभेदेन प्रयोक्तव्ययोस्सहप्रयोगायोगात्। सोपि च सङ्घातो न पारमार्थिक इत्याह- अवस्तुக்களென்று கழித்தான इति। अर्थक्रियाकारित्वं वस्तुत्वं, तदभावादवस्तुत्वमित्यर्थः संघातस्यातिरिक्तत्वे गोरश्व इवावयवेभ्यः स पृथगुपलभ्येत। न हि तथालोकोपलम्भः। अनतिरिक्तत्वे, अवयवमात्रपरिशेष इति समीहितसिद्धिरिति भावः। तदुक्तं शास्त्रदीपिकायां जातिखण्डनप्रसङ्गे बौद्धमतोपन्यासवशात्- "पृथक्त्वे, व्यक्तितो जातिर्दृश्येत पृथगेव सा। अभेदे व्यक्तिमात्रं स्यात् द्वेधा चेन्न विरोधतः। न याति न च तत्रास्ति (सीत्) नास्ति पश्चान्नचांशवत्॥ जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥ एते नावयवि द्रव्यं प्रत्यूढम्। तस्याप्यवयवभेदादिविकल्पाक्षमत्वात्। स्थूलावभासस्तु सञ्चितानेकरूपादिपरमाणुवशादेव केशोण्डुकावभासवत् उपपन्नो नावयविकल्पनायालम्।... ततोऽनेनापि भिन्नेन वाऽभिन्नेन वा भवितव्यम्। न च द्वेधापि सम्भवति। तस्मादवस्तु इति। केशोण्डुकशब्दश्च- यथा चिरकालीनाध्ययनादिखिन्नस्योत्थितस्य नीललोहितगुणविशिष्टः केशोण्डुकाख्यः कश्चिन्नयनाग्रे स्फुरति। अथवा करसम्मृदितलोचनरश्मिषु येऽय केशपिण्डावस्था स केशोण्डुक इति व्याख्यातः। तदिदं विकल्प्य दूषणं अवयवातिरिक्तसंघाताभ्युपगन्तुरपि समानमिति तद्धृदयम्। கழித்தான் इति। संघातनिराकरणं तस्य नोचितं, अथाप्यपरामृश्यैव त निराचकारेति भाव। तथा हि- सङ्घातो नामावयवगतोवस्थाविशेषस्तद्धर्मभूतस्तदतिरिक्त एव। अवयववत् स्वतन्त्रपृथक्द्रव्यत्वानभ्युपगमात् गवाश्वयोरिव न स्फुटं पृथक्ग्रहणम्। अन्यथा सङ्घातस्यावस्तुत्वे तेन मिथ्यारजतादिनेव ज्ञाने स्वाकारसमर्पणायोग इति। ननु अवयवातिरिक्तसङ्घातस्यावस्तुत्वे वस्तुभूतानां अवयवानां च परमाणुपरिशेषात् ते यदि सांशाः, तदा तेषामपि सङ्घातात्मकतयाऽवस्तुत्वं आपतेदेवेत्यत्राह- परमाணுக்கள் தன்னிலும் इति। सावयवत्वादिचोद्यभयத்தாலே इति। सावयवत्वे संघातात्मकत्वेनावस्तुत्वं, तस्याप्यवयवस्य सावयवत्वेऽनवस्था, अन्तेऽवस्तुत्वेनाभावपरिशेषः इत्यादिचोद्यपरिहारार्थमित्यर्थः। मूले आदिपदग्राह्यमप्येतदेव। न तु निरवयवत्वम्। तथासति सावयवत्वनिरवयवत्वविकल्पभयेनेत्यर्थस्स्यात्। स च न समञ्जसो भविष्यति कोटिद्वयविकल्पस्य सति तथा विकल्पयितुमशक्यत्व

இவன் புறப்பொருள் உண்டென்று கொண்டு போகிறான், (கழுதைக்குத் தொந்த கடமுடமான கதைபோல) அணுக்குவியல்களை அவயவங்கள் என்று தனி நணுக்களை பட்டியல் அங்கீகரித்து அவைகளுக்கு அமைப்பேற்பட்டவை என்றான்.

कृत्स्नैकदेशविकल्पத்துக்கல்லாத परमाणुக்களுக்கு संयोगந்தன்னையும் विकल्पमात्रसिद्ध-மென்ற சில स्वलक्षणस्वभावविशेषத்தாலே இற்றில अन्योन्यसंयोगभ्रमம் பிறக்க संयुक्त-

---

तृतीयकोटिपरिग्रहस्यैव न्याय्यत्वात्। अत्र सावयवत्वाद्युत्तरोत्तरदोषपरिहाराय निरवयवत्वस्यैव कक्षीकृतत्वात्। एवमनेन सौत्रान्तिकेन परमाणूनां निरंशत्वमङ्गीकृतं, तन्नयुक्तमिति स्वयं मन्यमान इवाहाचार्यः- நிரம்சங்களென்று கொண்டான इति। अयमाशयः तेषां निरंशत्वे आकारयोगो न भवति। सति च तस्मिन् आकारवतो दशदिक् सम्बन्धावश्यभावात् सांशत्वमेव। न निरंशत्वम्। एतद्भिया परमाणवो निराकारा एवेति स्वीक्रियते चेत्, कथं तैर्ज्ञाने स्वाकारसमर्पणं, तदभावे कथं वा, तेन परमाण्वात्मकबाह्यार्थानुमानमिति।

नन्वेवं परमाणूनां निरंशत्वे तेषां मिथः संयोगः कथमुपपद्यताम्? तस्यांशभेदापेक्षितया तदभावे तदभावापातादित्यत्राह- कृत्स्नैकदेशविकल्पத்துக்கல்லாத इति। निरंशत्वेन कृत्स्नैकदेशपर्यनुयोगायोग्येत्यर्थः। "षट्कोण(केन)युगपद्योगात्परमाणोष्षडंशता। षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः" इत्युक्तरीत्या, किं परमाणुः परमाण्वन्तरेण कृत्स्नशः- अंशभेदमनपेक्ष्य संयुज्यते, अथैकदेशेन। पूर्वत्र तयोस्संयोगस्य समानदेशत्वात् प्रथिम्नोऽनुपपत्त्या तदारब्धः पिण्डः अणुमात्रं स्यात्। उत्तरत्र परमाणोस्सांशत्वमिति विकल्प्य दूषणभयात्, तत्परिहर्तुं परमाणूनां संयोगमेव प्रत्यषेधत्। यं निमित्तीकृत्य विकल्पः प्राप्त इति भावः। तर्हि तेषां संयोगोपलब्धेः का गतिरित्यत्राह- विकल्पमात्रसिद्धம इति। तदुक्तं- "असिद्धः क्षणभङ्गेन संयोगस्स्यात्सहेतुकः। स्याच्चाविरळदेशस्योत्पत्त्या वा, सिद्धिरन्यथा॥ तस्मात्संयोगसम्बन्धो विकल्प इति ते विदुः" इति। संयोगस्य सहेतुकतया परमाणूनां च क्षणभङ्गुरत्वात् संयोगकारणकालाप्राप्त्या तेषां संयोगोऽसिद्धः। परमाणूनामविरळदेशोत्पत्त्यङ्गीकारेण, वा संयोगोऽन्यथासिद्ध इति सर्वथा तेषां संयोगोपलम्भो विकल्पः- भ्रम एवेत्यर्थः। एषां मते प्रत्यक्षं द्विविधं- निर्विकल्पकं विकल्पश्चेति। तत्र "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लव" इति तयोर्विशेषः। कल्पनापोढं- आरोपरहितम्। अभ्रान्तं- प्रमाणम्। वस्तुनिर्भासः- अर्थजन्यत्वमर्थविषयकत्वञ्च। विकल्पे ते, न स्त इत्यवस्तुनिर्भासत्वं तस्य। असंवादः- बाधः। उपप्लवः- भ्रमः। तदुक्तं- "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति। एवं परमाणुषु संयोगभ्रममुक्त्वा, तदधीनं संयुक्तव्यवहारं दर्शयति- சில स्वलक्षणस्वभावविशेषेति। बौद्धमते स्वलक्षणशब्दार्थो बहुधाभवति।

---

அவைகளுள் ஒன்றைக்கொன்று சேர்த்துக்கொள்வதாலே "முழுவதும் மற்றுடன் சேர்வதா? ஒருபுறத்திலே மட்டுமே சேர்வதா" என்ற கேள்வி எழுமாகையால் இரண்டிற்கும்

व्यवहारம் வருமித்தனை என்றன. परिच्छिन्नங்களான अणुக்களுக்கு घटादिகளுக்குப்போலே पार्श्वம் கொள்ளவேண்டுகையாலும், पार्श्वம் கொள்ளாதபோது आकाशம் போலே सर्वगतங்க-ளாக प्रसङ्गிக்கைடாலும் पार्श्वத்தாலே संयोगமாகவேண்டாவோ என்று शङ्किக்க—

இதுக்கு परिहारமாக परमाणुக்களுக்கு परमाणुत्वமென்றொரு पारमार्थिकधर्ममில்லை-

---

अत्र "अभिन्नदेशकालं यत्तत्स्वलणमुच्यते" "प्रत्यक्षवेद्यं यद्वस्तु विशेषस्तत्स्वलक्षणं" इत्याद्युक्त-रीत्या नैरन्तर्याख्यप्रत्यक्षप्रतिपन्नवस्तुस्वभावेत्यर्थः। परमाणोः परमाण्वन्तरेणाभिन्नदेशकालत्व तयोर्नैरन्तर्यम्। एवञ्च प्रत्यक्षतः तदाख्यदोषविशेषेण तेषु संयोगभ्रमोदयात् तदायत्तस्संयुक्तत्व-व्यवहार इत्याशयः। अत्र "संयुक्तव्यवहारம் வருமித்தனை என்றும" इति एकवाक्यतया पाठो दृश्यते। तथासति "என்றும" इत्यस्यान्तेऽतिव्यवहितेन "...धातुभ्रमம என்றும சொன்னன" इत्यत्र कथञ्चिदन्वयो भाव्यः। तदपेक्षयात्रैव " வருமித்தனை என்றன" इति वाक्यसमाप्ति-र्युक्ता। ननु परमाणुत्वं हि परिच्छिन्नत्वम्। तथा च परमाणूनां तथात्वादेव घटादिवत्पार्श्व-भेदोवश्यं भावी। अन्यथाऽऽकाशवत्तेषां प्रत्येकमपरिच्छिन्नत्वतः सर्वगतत्वापातात्। तथा च पार्श्वमेव भाग इति तेषां सभागत्वेन संयोगोपि प्राप्नोतीति सोयं घट्टकुट्यां प्रभातन्याय इत्या-शङ्कते- परिच्छिन्नங்களான "इति" என்று शङ्किக்க इत्यन्तेन। आकाशம போலே सर्व-गतங்களாக इति। पार्श्वाभावे परमाणूनामपरिच्छिन्नत्वेनाकाशवद्विभुत्वं स्यादिति अणुविभुभेद एव विलुप्येतेत्यर्थः। अत्राकाशस्य दृष्टान्तीकरणं तदाख्यभावरूपविभुद्रव्यान्तराभ्युपगन्तृनयेन। वस्तुतस्तदेव नास्त्यस्मिन् मत इति समाधास्यते। अत्र बौद्धेष्वेव केचिदेवं परिहरन्ति- परिच्छिन्नत्वं हि सामान्यतः परिमाणवत्त्वं, तन्न पार्श्वसद्भावप्रयोजकम्। आकाशादिषु परममहत्सु व्यभिचारात्। किन्तु ह्रस्वत्वदीर्घत्वे परिमाणविशेषरूपे यत्र तत्र पार्श्वमिति स्थितिः। परिच्छेदो हि परिमाण-सामान्यम्। तच्च चतुर्धा- अणु महत् दीर्घं ह्रस्वं चेति। तस्मात्सर्वेपीमे परिच्छिन्ना एव। पार्श्ववत्त्वं हि ततोऽन्यत् मध्यमपरिमाणवतोर्दीर्घह्रस्वयोरेव। तदुक्तं- "परमाणुरणुर्ज्ञेयः, "विभुद्रव्याणि परममहान्तीति विनिर्णयः। परमाणौ विभौ चापि पार्श्वंनास्तीति सौगत" इति।

एवं स्थितेपि परिहारान्तरे, सौत्रान्तिकः परमाणूनां परिच्छिन्नत्वमनङ्गीकृत्यैव परि-हरतीत्याह- இதுக்கு परिहारமாக इति। अस्य चाग्रे "...भ्रमமென்றும சொன்னன்" इत्यनेना-

---

சமாதானம் கூற வியலாதென்று பயந்து அவைகட்கு ஸம்யோகம் என்ற சொற்றிய கூடா-தென்றன -ஆயினும் உலகோர் அவைகளுள் ஒன்றுக்கொன்று ஸம்யோகம் பிறந்துள்ள-தாகப் பார்த்து வ்யவஹரிப்பர் மற்றும் பரமாணுக்களுக்கு பக்கங்கள் கொண்டால் ஸம்யோக-மும் வரும். அவையில்லை எனில் பரமாணு ஒவ்வொன்றும் ஆகாயம்போல எங்குமுள்ளதாக-வேண்டும் என்று மேலும் கேட்டுக்கொண்டு—

மற்றுள்ளார் சொல்லும் स्थिरप्रत्यक्षமாதல் ஒழிய மற்றொரு நிலை கூடாது चिरविप्रकृष्टभूत-भविष्यद्विषयज्ञानங்களுக்கு कारणभूतविषयத்தாலே आकारसमर्पणமென்றதுவும் கூடாது. प्रत्य-क्षार्थविशेषத்தாலே परज्ञानத்தை अनुमिக்கிறாப்போலே प्रत्यक्षज्ञानविशेषத்தாலே अर्थविशेषத்தை अनुमिக்கிறோம் என்று दृष्टान्तம் சொல்லுமதுவும், सर्वार्थமும் अनुमेयமென்கிறவிவனுக்குச் சேராது.

---

इति । पूर्वार्धे- दृशेः अयोग्यत्वेपीति पदार्थान्वयः । तथा च परमाणुषु अभिन्नदेशकालत्वरूपस्व-लक्षणस्वभावविशेषवशतः नैरन्तर्यप्रत्यक्षेण संयोगभ्रमाङ्गीकारादेतन्मते परमाणुपुञ्जप्रत्यक्षमन्तरा तदसंभवेन न बाह्यार्थानुमेयत्वं सिध्यतीति भावः । ननु परमाणूनां क्षणविलयित्वेन संयोगपूर्वकं पुञ्जीभावप्राप्तिपर्यन्तमनवस्थानात् न पुञ्जदशायां प्रत्यक्षमुपपद्यत इत्यत्राह- மற்றுள்ளார் சொல்லும் स्थिरप्रत्यक्षेति । "वस्तुस्थैर्यं विरुद्धानुपहितविषया साधयेत्प्रत्यभिज्ञे"ति नैयायिकादिवत् प्रत्यभिज्ञासिद्धं वस्तुस्थैर्यं वाभ्युपेत्य स्थिरेषु, परमाणुषु संयोगादिभ्रमः कल्पयितुं शक्यः नान्य-थेति भावः । अथ "மற்றொரு நிலை கூடாது" इत्युक्तमेव विवरीतु अर्थानामाकारार्पणेनानुमेयत्वं प्रणुदति- चिरविप्रकृष्टेति । ज्ञानेषु अव्यहितपूर्ववर्तिना विषयेण स्वाकारार्पणस्येष्टत्वात् तद्व्यावृत्तये चिरविप्रकृष्टेति भूतविशेषणम् । न हि कारणं नाम लोके चिराद्भूत्वा विनष्टं, भविष्यद्वा भवति । अव्यवहितपूर्ववर्तिन एव तत्त्वात् । विषयस्य चालम्बनप्रत्ययस्य त्वन्मते प्रत्यक्षकारणत्वाङ्गीकारा-दित्याशयः । ननु चिरविप्रकृष्टभूतादिविषयस्य ज्ञानकारणत्वानभ्युपगमे ज्ञानग्राह्यत्वमेव तस्य न स्यात् । तदुक्तं- "ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वं, स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञान-विषयत्वस्वीकारात् इति । तथा चार्थानुमेयत्वसिद्धिरित्यत्राह- प्रत्यक्षार्थविशेषेति । तदप्युक्तं- "घटमणिकादिषु कृतेषु अर्थदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषः अदृष्टपूर्वं विचित्र-सन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण, तस्य कार्यत्वं निश्चित्य तदनीमेव (नष्ट-स्यापि) तत्कर्तुस्तद्ज्ञानवैचित्र्यमनुमिनोती"ति । तथा च यथा वर्तमानेन प्रत्यक्षविषयार्थेनातीता-प्रत्यक्षपरज्ञानानुमानं, तथैव विद्यमानेन ज्ञानेन चिरविप्रकृष्टभूतभविष्यद्विषयानुमानमप्युपपद्यत इत्यर्थः । இவனுக்குச் சேராது इति । तन्मते सर्वेषामर्थानामनुमेयत्वात् "प्रत्यक्षार्थविशेषेणे"-त्यादिदृष्टान्तस्यैवासिद्ध्या तेन प्रकृतार्थस्य साधनं असिद्धमसिद्धेनेति न्यायकवलितमिति भावः ।

---

*இப்படித் தத்த்வ வர்ணனை செய்யுமிவனுக்கு, மேலே வைபாஷிகன் சொல்லப்போகிற-படியில் உண்மையான நிமிடநேரப் பரமாணுக்களுக்கு ப்ரத்யக்ஷம் உண்டென்றோ—நையாயி-காதிகள் சொன்னபடியில் ஸ்திரமான வஸ்துக்களை ஒப்பி அவைகளுக்கு ப்ரத்யக்ஷம் உண்டென்றோ கொள்ளுவதொழிய வேறொருவழி கிடையாது. நெடுநாள் முன்பு நடந்த, அல்லது வரப்போகிற விஷயங்களைப்பற்றின ஜ்ஞானங்களில் விஷயமாய் தோற்றும*

**ஆகாசம் துச்சமான பொருள் என்றதுவும் தவறு**

இவனுக்கு आकाशप्रतीतिயைக்கொண்டு आकाशமென்றொரு सत्यपदार्थத்தை अनुमिக்கலாயிருக்க, இத்தை तुच्छமென்றதுவும் अनुपपन्नம். प्रतीतितुल्यत्वமுண்டாயிருக்க युक्तिயாலே

अथैतदङ्गीकृतमाकाशतुच्छत्वं प्रसङ्गात् संछिनत्ति- இவனுக்கு इति। ज्ञानाकारेणार्थान् सत्यान् स्वीकुर्वत इत्यर्थः। आकाशप्रतीतिः- नीलं नभ इत्यादिचाक्षुषप्रत्यक्षम्। सत्यपदार्थத்தை इति। कादाचित्कनीलादिज्ञानभानेनेवाकाशाकारकादाचित्कप्रतीत्यापि नीलादितुल्यमाकाशोऽपि सत्यस्सिद्ध्येदित्यर्थः। இத்தை तुच्छமென்றதுவும इति। तदुक्तं- निरोधद्वयमाकाशञ्च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यञ्चेति। निरोधद्वयं- प्रतिसंख्याऽप्रतिसंख्यनिरोधौ। अनुपपन्नம इति। तथा च शङ्करभाष्यम् "सौगतसमये हि- पृथिवी भगवन्! किंसन्निश्रयेत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते "वायुः किंसन्निश्रय" इत्यस्य प्रश्नस्य प्रतिवचनं-भवति वायुराकाशसन्निश्रय इति तेषामागमात् आकाशस्यावस्तुत्वमसमञ्जसं भवतीति।"किं सम्यङ्निश्रयः"- आश्रयो यस्य स इति किंसन्निश्रयः। अवस्तुनः शशविषाणस्याश्रयत्वाभावादित्यर्थ इति तत्र रत्नप्रभा। अत्र "இவனுக்கு...अनुमिக்கலாயிருக்க इति निर्देशेन सिद्धान्तिन आकाशानुमानं नेष्टमिति सूच्यते। तथा च तत्त्वमुक्ताकलापः- "शब्दस्याधारभूतं कथमपि गगनं शक्यते नानुमातुं स्वेच्छातः पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदुस्थः। निष्क्रान्त्यादेर्न तद्धीस्सति नभसि यतो नास्ति कुड्यादिकेऽसौ रोधस्त्वावारकैश्चेत्तदभवनवशात् निष्क्रमादिश्च सिध्येदि"ति। अत एव "आकाशे चाविशेषादित्यत्र" पंचीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोध इति भाष्यप्रतीकमुपादाय "अनेनानुमेयत्वमप्यनुमतमिति गम्यते इति श्रुतप्रकाशिकाचार्योक्तमपि अन्वारुह्यवाद इति भाव्यम्। अनेन- चाक्षुषत्वेपीत्यपिकारेण। तत एव च तेषामुत्तरपङ्क्तौ- यद्वा चाक्षुषमेव, तथापि तत्प्रयुक्तविरोधो नास्तीत्यर्थ इति भाववर्णनमुपपद्यते। ननु न प्रतीतिमात्रं वस्तुसाधकं, "एष वन्ध्यासुतो याती"त्यादिप्रतीत्या तत्सिध्यापातात्। किन्तु अबाधिता सा। तथा चाकाशप्रतीतेर्यौक्तिकबाधग्रस्तत्वान्नाकाशसिद्धिरित्यत्राह- प्रतीतितुल्यत्वेति। नीलादिप्रतीत्यविशिष्टत्वेत्यर्थः। युक्तियाலே इति। आकाशस्त्वावरणाभाव एव। स च निस्स्वभावः।

---

பொருட்களாலே தம் வடிவை ஆரோபிக்க முடியாது. ப்ரத்யக்ஷமான கோபுரம் முதலிய பொருளைக் கொண்டு, அவற்றை நிரூபித்த நாம் காணுக சிறப்பின அறிவை அளவிடுவதுபோல, ப்ரத்யக்ஷமான அறிவைக்கொண்டு அப்ரத்யக்ஷமான குடம் துணி முதலிய பொருட்களை அநுமானம் செய்திடுவோம் என்ற உவமை, எப்பொருளும் அப்ரத்யக்ஷம் என்னும் இவனுக்குச் சேராது

இப்படிச் சொல்லுமிவன 'ஆகாயம்' என்று எல்லோருக்கும் வரும் அறிவைக்-

ஒன்றை துச்சமென்னப் பார்த்தால், माध्यमिकमर्यादै யாலே नीलादिகளையும் துச்சமென்னலாம். आवरणाभावमात्रம் आकाशமென்றவனுக்கு संसर्गाभावादिविकल्पத்திலொரு कोटि परिग्रहिக்க விரகில்லை. मध्याकाशத்தில் दूरासन्नत्वादिविशेषங்களும் சொல்ல வழியில்லை. दूरत्वादिविशिष्ट-

तुच्छतयैवोपलम्भात् । यत्र चावरणं तत्र नाकाशः । अभित्वादुर्दर्शत्वात् । भेदेत्वावरणाभावस्यैव सिद्धेः । यदि तत्राप्याकाशस्स्यात् निरवकाशं न किञ्चित्स्यात् इत्यादिकास्तदुक्तयुक्तयोत्र विवक्षिताः । ஒன்றை- आकाशम् । துச்சமென்னப்பார்த்தால் इति । वस्तुतः पूर्वोक्तयुक्त्या आकाशस्य तुच्छीकरणं न भविष्यतीत्याकूतम् । तथा हि- "अभित्वा दुर्दर्शत्वं हि व्यवहितत्वात् । अत एव तत्र नास्तीति न निश्चेतव्यम् । भित्वा तु प्रेक्षणे नभस्तत्र दृश्यत एव । न चात्रावरणाभावमात्रो-पलम्भः । इहावरणं नास्तीति तस्य साधिकरणस्यैवोपलम्भात् । आवरणेषु आकाशसत्त्वेपि निरव-काशत्वं उपपद्यते विशेषणराहित्यात् । आवरणरहितमेव ह्याकाशमन्यद्वा किञ्चित् अवकाशः, न त्वाकाशमात्रम् । आवरणेष्वविद्यमानतया तदभाव आकाश इति चायुक्तम् । सर्वेषां स्वस्मिन्न-विद्यमानतया स्वाभावत्वप्रसङ्गात् इति । माध्यमिकमर्यादेति । "स्तम्भादिप्रत्ययो मिथ्या प्रत्यय-त्वात्तथा हि यः । प्रत्ययस्समृषा दृष्टस्स्वप्नादिप्रत्ययो यथे"ति तदुक्तयुक्त्याभासेत्यर्थः । नन्वि"हावरणं नास्ती"त्यादौ भूतलादिवन्निबिडमूर्तद्रव्याधारानुपलब्ध्या "इहाकाश" इति-वत्स्वात्मन्येव भेदोपचारेण प्रयोग इत्यावरणाभावातिरिक्ताकाशासिद्धिरेवेत्यत्राह- आवरणाभाव-मात्रம इति । आवरणाभावस्य घटाभावादिवत्सप्रतियोगिकतया तुच्छत्वायोगात् भावान्तररूपत्व-मप्यस्त्विति शङ्कावारणाय मात्रेति । तन्मते तुच्छस्याप्यसतः सप्रतियोगिकत्वमङ्गीकृतमिति भावः । என்றவனுக்கு इति सामान्योक्त्या भूतचतुष्टयमात्राभ्युपगन्तृचार्वाकोप्यत्र गृह्यते । संसर्गा-भावादिविकल्पेति । अन्योन्याभावभिन्नाभावस्संसर्गाभावः । स त्रिविधः- प्रागभावः प्रध्वंसा-भावोऽत्यन्ताभाव इति । आदिपदेनान्योन्याभावग्रहणम् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिता-काभावत्वं- अन्योन्याभावत्वम् । ஒரு कोटि परिग्रहिக்க வழியில்லை इति । पृथिव्यादेरावरणस्य प्रागभावः प्रध्वंसाभावः अन्योन्याभावोऽत्यन्ताभावो वाऽऽकाश इति विकल्पाः । तत्र न प्रथम-द्वितीयौ- विद्यमानानां ध्वंसप्रागभावयोरयोगात्, अविद्यमानानां तयोश्च विद्यमानपदार्थावस्था-

*கொண்டு ஆகாயம் என்ற பொருளையும் ஸகயமாக ஒப்புக்கொள்ளலாமாயிருக்க, அதை சூந்யப் பொருள் என்றது கடுமில்லை அன்று ஆகாயமும் மற்றவைபோல தோன்றும் பொருளே. பொருத்தமும் ஒன்றுபோலவேயுள்ளதே குயுக்தி பேசினால் மாத்யமிகனைப்போல உலகமே சூந்யம் எனலாம் ஒரு பொருளும் இல்லாத வெறும் வெளியே ஆகாயம் எனப்பாககு மற்ற பொருட்களின் இன்மையா? அன்மையா? விநாசமா? முன்னுள்ள அபாவமா ஆகாசம்? என்ற கேள்விகளுக்கு விடை இறுக்கவொரு ஆகாசமினறிகே கடுவுள்ள இடங்களில*

व्याप्तिग्रहणம் பண்ணவிரகில்லை व्याप्तिग्रहणம் பண்ணியல்லது இவனுக்கு अर्थம் கற்பிக்க-வொண்ணாமையாலே अर्थங்கள் தன்னிலும் व्याप्ति ग्रहिக்கவொண்ணாது. ज्ञानங்களையே विचित्रकारणங்களாகக்கொண்டு व्याप्तिग्रहणம் பண்ணினால், பின்பு வேறொரு ज्ञानத்திலே

---

इति। विजातीयज्ञानोत्पत्तेरित्यर्थः। अयं भावः- नीलज्ञानसन्ताने सन्तन्यमाने सति कदाचित्पीत-ज्ञानसन्तानारम्भः न विना पीतरूपार्थसन्निधिमुपपद्यते। ततश्च ज्ञानवैचित्र्यमर्थवैचित्र्याधीनमिति ज्ञानार्थयोः कार्यकारणभावेनाविनाभावसिद्धः इति। स किं ज्ञानस्यार्थव्याप्यत्वादुच्यते, अथार्थस्य ज्ञानव्याप्यत्वात्, इति विकल्प्य प्रथमं निराकरोति- ज्ञानங்களுக்குள்ள इति। अत्र ज्ञानங்களுக்-குள்ளே इति चेत् पाठस्स्वरसस्स्यात्। अर्थங்கள் தன்னிலும் इति वक्ष्यमाणकल्पानुसारात्। व्याप्तिः- ज्ञानानामर्थान्वयव्यतिरेकसहचारः। விரகில்லை इति। ज्ञानार्थयोः क्षणिकत्वेन ज्ञानकाले कदाचिदर्थस्याभावेन, सर्वदा ग्रहीतुरभावेन, च न ज्ञानानामर्थव्याप्यत्व-निश्चय इत्यर्थः। द्वितीयमपि प्रत्याख्याति- व्याप्तिग्रहणம் பண்ணியல்லது इति। व्याप्तिग्रहणेना-नुमानप्रवृत्तौ तदुत्तरकालकल्प्यत्वादर्थस्य, नानुमानात्पूर्वमर्थेषु ज्ञानव्याप्तिश्शक्यग्रहेत्यर्थः। अन्य-थान्योन्याश्रयप्रसङ्गात्। स्वसापेक्षार्थसिद्धिसापेक्षत्वाद्व्याप्तिग्रहस्य। मध्यमपर्वणि अनुमानस्यापि परिगणने चक्रकं वा प्रथमं व्याप्तिग्रहः, ततोऽनुमानप्रवृत्तिः, ततोऽर्थसिद्धिः, ततो व्याप्तिग्रह इति। अथ प्रथमज्ञानवैचित्र्यं पूर्वपूर्वज्ञानवासनावैचित्र्याधीनं, नत्वर्थवैचित्र्याधीनं, पश्चाच्च तत्रा-र्थैस्स्वाकारार्पणात् तदनुमानं ततश्च नान्योन्याश्रयादिकमित्यत्राह- ज्ञानங்களையே इति। एतदुक्तं भवति- एकनीलादिज्ञानसन्तानेऽन्तिमं ज्ञानं प्राचीनपीतज्ञानवासनारूढं स्वभावत एव पीतादि-ज्ञानारम्भशक्तं योगाचारमत इवेत्यङ्गीक्रियते। अथापि न तन्मत इवात्राप्यर्थस्यात्यन्तं सद्भावा-नपेक्षा। तथासति सुषुप्तिप्राक्कालीनान्तिमज्ञानस्येव शक्तस्यापि अर्थासन्निधौ शक्तिसन्धुक्षका-भावेन विजातीयज्ञानसन्तानानारम्भकत्वप्रसङ्ग इति ज्ञानेषु अर्थैस्स्वाकारार्पणमप्यङ्गीकार्यमिति ततो विशेष इति। तदेतद्दूषयति- பின்பு इति। प्रथमज्ञानवैचित्र्यस्य पूर्वज्ञानवासनावैचित्र्य-

---

அறிவின் பாகுபாட்டிற்கு பொருட்களின் வேறுபாடே காரணம் என்கிறவனிவன், இப்படியோர் அநுமானம் செய்ய அவைகளுக்குள்ள வ்யாப்தி என்னும் தொடர்பை அறிய வேணும். ஜ்ஞானங்களில் அந்த வ்யாப்தியை அறியுமளவும் பொருட்களும் அவையும் நிலைத்திரா. எல்லாம் அவன் மதத்தில் நிமிடநேரத்தனவாகையாலே அநுமானத்திற்குப் பின்பே பொருட்கள் ஏற்படப்போகிறபடியால் பொருட்களிலும் அநுமானபூர்வாங்கமான வ்யாப்தியை உணர வழியில்லை. ஜ்ஞானங்கள் சுயமே பாகுபாடுடையனவென்றுகொண்டு வ்யாப்தியை அவற்றிலே உணர்ந்தால் பிறகு அவற்றின் பாகுபாட்டுக்கென்று நாநாவித பொருட்களை கற்பிக்கவேண்டாம். ஆனாலும் நீலம் என்கிற அறிவு பரம்பரை நிறுத்தாமல் தொடர்ந்து—

அர்த்தத்தை காரணமாக கல்பிக்கவேண்டா நீலஜ்ஞானஸந்தானம் நடவாநிற்க, சக்ஷுராதிகளும் நீல-பீதாதிஸாதாரணங்களாயிருக்க, பின்பு பீதஜ்ஞானம் வருகிறது பீதமாயிருப்பதொரு பாஹ்யார்த்தம் ஸந்நி-ஹிதமாகப்பட்டன்றோ? அல்லாதபோது முன்பு போலே நீலஜ்ஞானஸந்ததியே நடந்துவிடாதோ?

---

मूलकत्वाङ्गीकारानन्तरमित्यर्थः । வேறொரு ஜ்ஞானத்திலே । पश्चात्तनज्ञानेषु । கல்பிக்க வேண்டா इति । प्रथमं ज्ञानवैचित्र्यस्य पूर्ववासनारूषितप्राचीनज्ञानवैचित्र्यमेव चेद्धेतुः, तदा पश्चादपि ज्ञानेषु आकारार्पणाय न कारणतया विषयसान्निध्यमपेक्षितम् । स्वभावशक्त्यैव तैः पीतादिज्ञान-सन्ततिप्रवर्तनसंभवात् । न च विषयानपेक्षणे सुषुप्तावपि ज्ञानधाराप्रसङ्ग इति वाच्यम् । सुषुप्तेस्तत्प्रतिबन्धकत्वस्वीकारात् । अन्यथा कदाचिद्विषयसन्निधावपि सुषुप्तौ ज्ञान-सन्ततिप्रसङ्गेन तत्प्रतिबन्धकतायास्सर्वैस्सम्मन्तव्यत्वात् । अतो योगाचारादवैलक्षण्यमेव सिध्ये-दिति भावः । अथोक्तमेवार्थं आक्षिप्य सदृष्टान्तं विस्तरेण साधयते- नीलज्ञानेति । तत्र प्रथममेक-जातीयज्ञानसन्तत्यनन्तरमन्यजातीयज्ञानोत्पत्तिर्विना विषयसान्निध्यं न संभवतीति विषयस्य तत्र कारणत्वं दर्शयति- नीलज्ञानसन्तानம் நடவாநிற்க इति । इदम्प्रथमत एव पीतज्ञानधारोदये विषयविपर्याससंभवाभावेनार्थापेक्षायास्तत्र प्रदर्शयितुमशक्यत्वात् प्रथमं नीलज्ञानसन्तानस्य सन्तन्य-मानत्वोक्तिः । நடவாநிற்க- सन्तन्यमाने सति । तथाचैतद्ज्ञाननिवृत्तिकारणे अन्विष्यमाणे सति पीतादिबाह्यार्थसन्निधानमेव हेतुरेष्टव्यमिति भावः । ननु तर्हि तत्र चक्षुरादिकरणवर्ग एवास्तु ज्ञाने विषयविपर्यासहेतुरित्यत्राह- चक्षुरादिகளும் इति । नीलपीतादिसाधारणेति । तथाचेदानीं सन्तन्यमाननीलादिज्ञानस्यापि चक्षुरादिकमेव हेतुरिति तद्विपर्यासेन पीतादिविषयालम्बने न चक्षुरादिकं विशेषहेतुर्भविष्यतीति भावः । तर्हि किं कारणमित्यत्राह- பின்பு इति । नीलज्ञान-सन्तानानन्तरमित्यर्थः । पीतज्ञानம் வருகிறது- पीतज्ञानोत्पत्तिः । इदं विषयान्तरज्ञानसन्तति-सामान्योत्पत्त्युपलक्षणम् । सन्निहितமாகப்பட்டன்றோ इति । सन्निहितत्वादेवहीत्यर्थः । तथा च पूर्वज्ञानविषयापेक्षया विषयान्तरसन्निधिरपेक्षित इत्याशयः । एवमन्वयेन विषयसान्निध्यहेतुत्व-मुक्त्वा व्यतिरेकमुखेनाप्याह- அல்லாதபோது इति । अर्थविशेषसान्निध्याभावे इत्यर्थः । नील-ज्ञानसन्ततியே நடந்துவிடாதோ इति । अयं भावः- यद्यप्यन्तिमज्ञानं स्वत एव विजातीयज्ञानो-

---

வரும்போது, காணும் கண் முதலிய புலன்கள், நீலமானதும் வெண்மையானதும் எதற்கும் பொதுவாக இருக்க, பிறகு வெண்மை என்னும் புத்திகளின் தாரை உண்டாவது, உண்மை யிலேயே வெளியே பொருளொன்று கண்ணில் நிற்கின்றதாலன்றோ? ஆகையால் அறிவு தவிர பொருட்களும் சில உண்டென்ன வேண்டாவோ? அல்லாதபோது முன்புபோலே நீலம் என்ற அறிவுப்படலமே ஒன்றென்றும் மாறுதலின்றி தொடராதோ? என்னில்-இவனை நின்று கேட-

कलापकल्पனைகளாலே अळीकान्तराळத்திலே कल्पनाभेदங்கள் என்றால், आकाशத்தை सत्यமாகக் கொண்டு, அதிலே स्वप्नज्ञानतुल्यकल्पनासिद्धकलापविशेषங்களாலே அவ்வோ परिच्छेदभ्रमம் என்று

---

विशेषरूपत्वेन मध्यावरण आकाशप्रतीतिप्रसङ्गात् । नापि तृतीयः- पृथिव्याद्यावरणान्योन्याभाव-स्येतरेतरवस्तुगतत्वेनावारकवस्तुसत्त्वेपि तत्प्रत्ययापातात् । तयोरन्तराळे तदभावप्रसङ्गाच्च । न च चतुर्थः- तस्यापि विद्यमानवस्तुगतावस्थारूपत्वेन पूर्वदोषानतिवृत्तेः । इयांस्तु विशेषः- कार्यस्य प्रध्वंसप्रागभावौ कारणीभूतवस्तुगतावस्थाविशेषरूपौ । अत्यन्ताभावस्तु पदार्थान्तरगततद्रूप इति नैककोटिपरिग्रहोपि युज्यत इति भावः । दूषणान्तरमप्याह- मध्याकाशத்தில் इति । आवरणद्वय-मध्यवर्त्याकाश इत्यर्थः । आवरणे सत्याकाशाभावादेवमुक्तिः । दूरासन्नत्वादीति । अयं भावः- "दूरे गृध्रः, समीपे श्येन" इत्यादौ दूरत्वसमीपत्वे प्रतीयेते । ते च क्रमेण दीर्घह्रस्वदण्डाभ्यां स्पृश्यत्वरूपे । आकाशो यदि तुच्छः, तदा तस्य धर्माधारत्वायोगात् साक्षात्ते स्वभावत एव गृध्रादिनिष्ठे वाच्ये । तथासति गृध्रस्य सर्वदा दूरत्वं श्येनस्य सर्वदाऽऽसन्नत्वं च स्यात् । कदाचि-दपि स्वभावत्यागायोगात् । सत्यधर्माधाराकाशाङ्गीकारे तु गृध्रस्य दीर्घदण्डस्पृश्यतद्देशस्थत्वो-पाधिना दूरत्वं, तस्यैव ह्रस्वदण्डस्पृश्याकाशदेशस्थत्वोपाधिना आसन्नत्वं अन्यदा अन्यथात्वं चोप-पद्येत । एवं श्येनेपीति । ननु तुच्छस्याकाशस्य परमार्थधर्माधारत्वानुपपत्तावपि काल्पनिकदूरत्वादि-धर्माधारत्वोपपत्त्या नोक्तदोष इत्यत्राह- दूरत्वादिविशिष्टेति । एतदुक्तं भवति- आवरणद्वय-मध्यवर्तिनि अळीके अन्तराळे सततगतिशीलानां परमाणूनां कल्पनासिद्धकलापनिष्ठं दूरत्वादिकं धर्मजात आरोप्यत इति "दूरे गृध्र" इत्यादिव्यवहारोपपत्तिरिति । आकाशத்தை सत्यமாக इत्यादिसमाधानवाक्यम् । निरधिष्ठानभ्रमस्याप्रामाणिकत्वात् सत्यभूताकाशाधिष्ठानक एवारोपोवर-मित्यर्थः । तथा च सर्वार्थसिद्धिः- "यद्यपि तलमलिनत्वादिकमाकाशेध्यस्तम् । अल्पत्वविपुलत्वा-दिकश्चावच्छेदकभेदायत्तम् । तथापि सत्येवारोपः । यत्तु असति दुःखाभावे सुखभावोध्यस्त इति, तदर्भकप्रायवाक्यम् । सत्येव दुःखाभावे तदारोपात् । अभावस्य भावान्यत्वमात्रमेवह्यसत्त्वम् । तेन स्वरूपसन्नेवासौ" इति । तर्हि सत्यभूतआकाशे धर्मा अपि सत्याः प्राप्नुयुः । तथा च "निर्धर्मकाः पदार्था" इति सिद्धान्तविरोध इत्यत्र तत्सिद्धान्तरीत्यैव परिहारमाह- அதிலே स्वप्न-ज्ञानेति । परिच्छेदभ्रमம்- दूरासन्नत्वादिभ्रमः । ननु भूतचतुष्टयवदाकाशस्य स्पष्टमनुपलब्ध्याऽऽ

---

பொருட்களுக்கு அண்மையும் நெடுமையும் கூற முடியாது அப்பாகுபாடுகளெல்லாம் வெறும் கற்பனை என்னில்- ஆகாயத்தை எங்கும் பரவியுள்ள ஸத்யப் பொருளாக ஒப்புக்கொண்டு அதில் அண்மை நெடுமை இத்யாதி எண்ணங்கள் கற்பனை என்று சொல்லுவது ஸுலபமா-யிருக்கும் குடம் படம் முதலியனபோல ஆகாயமும் ஸ்பஷ்டமாக யாக்கும் தோன்றக்கூடி-

கூடலாம். स्फुटोपलम्भादिबलாबலம் पक्षद्वयத்துக்கும் तुल्यம் இவ்வர்த்தத்தை "आकाशे चावि-शेषात्" என்று सूत्रकारர் அருளிச்செய்தார்.

**அறிவிற்கேதான்றும வடிவை வைத்து புறப்பொருட்களை அநுமிக்கலாகாது**

**ज्ञानवैचित्र्यத்துக்கு अर्थवैचित्र्यம் कारणமாகவேணும் என்கிறவிதற்கு ज्ञानங்களுக்குள்ள**

---

वरणाभावमात्रत्वमाश्रीयत इत्यत्राह- स्फुटोपलम्भेति। आवरणे सति आकाशानुपलब्ध्या भित्वा-दर्शने आवरणाभावस्यैवोपलब्ध्या च आकाशस्य न स्फुटोपलब्धिरिति चेत्, "इहावरणाभाव" इति तदधिकरणतया आकाशस्यापि सास्त्येव। अस्य सा नास्तीति यदि उच्यते, तत्समानमितर-स्यापि इत्यर्थः। आदिपदेनानुपलम्भो विवक्षितः। अनयोः क्रमेण वस्तुसाधकत्वतदभावाभ्यां बलाबलत्वे बोध्ये। तुल्यம இति। अत्र "आकाशस्तु आवरणाभाव एव। स च निस्वभावः। तुच्छतयैवोपलम्भात्" इति तेनावरणाभावस्य स्फुटोपलम्भोक्त्या, आचार्यैरपि, तदनुसृत्य तत्तुल्या उपलब्धिराकाशस्यापि विद्यत इत्यभ्यधायि प्रतिबन्ध्याश्रयणेन। वस्तुतस्तु आकाशस्यैव भावरूपस्य स्फुटप्रतिपत्तिरिति मन्तव्यम्। तदुक्त- "सद्रूपेणैव भानान्नभवति वरणाभावमात्रं विहाय इत्यत्र सर्वार्थसिद्धौ- "अयं भावः- सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। प्रतीयते च भावरूपतयैव नभः। भावान्तरमेवाभाव इति स्थापयिष्यते। अन्यथापि ब्रूमः नाभावस्य निस्स्व-भावता, अभावस्वभावतयैव तत्सिद्धेः। स्वान्यस्वभावतया सिद्धिस्तु न कस्यापि। न च स्वेन-स्वभावेन सिद्धस्य परस्वभावविरहादसत्त्वम्। अतिप्रसङ्गात्। उक्तं च न्यायभाष्ये- "असच्चासदिति गृह्यमाणं तथाभूतं विद्यमानं-अविपरीतं-तत्त्व"मिति। तुच्छतयैवोपलब्धस्यापि निरस्तं निस्स्वभा-वत्वम्। तुच्छता हि- अभावप्रतियोगित्वं, अभावत्वं, वस्त्वन्तरशून्यत्वं, अन्यद्वा किञ्चित्। न प्रथमः- स्वकालादिषु सतामभावप्रतियोगिनां यथाप्रमाणं तत्तत्स्वभावविशिष्टत्वात्। न द्वितीयः- दत्तोत्तरत्वात्। न तृतीयः- ईदृशतुच्छत्वस्य स्वरूपाविरोधिनः सर्वत्र सुलभत्वात्। न चतुर्थः- अस्मन्मतविरोधिनस्त्वदिष्टस्य कस्यचित् कुतश्चिदप्यसिद्धेः इति। उक्तार्थे सूत्रं प्रमाणयति- இவ-अर्थத்தை इति द्वितीयाध्यायद्वितीयपादस्थबौद्धाधिकरणे इदं सूत्रम्। आकाशे तुच्छता न युक्ता- पृथिव्यादिवदबाधितप्रतीतिसिद्धत्वाविशेषादिति सूत्रार्थः।

अथ मध्ये प्रासङ्गिकं आकाशसत्यत्वं प्रतिपाद्य प्रक्रान्तं ज्ञानवैचित्र्येणार्थवैचित्र्यानुमानदूषणमेवानुक्रममाणः ज्ञानार्थयोर्व्याप्तिं अनुमानजीवातुं दुर्ग्रहतया दूषयति- ज्ञानवैचित्र्यத்துக்கு

---

புத்தி இதே யுக்தியைக் கையாண்டு வேதாந்தஸூத்ரகாரர் வ்யாஸர் இவர்களுடைய ஆகாய-த்துடைய தெளிவைக் கண்டித்துள்ளார்

என்கிற अनुमेयबाह्यार्थवादिக்கு ஸ்வப்னத்தில் नीलपीतादिसन्ततिமாறி வருகிறபோது बाह्यार्थமின்றிக்கே இருக்க वासनावशத்தாலே வருகிறதென்றிவன்தானும், योगाचारனும் கொண்ட கணக்கிலே जाग्रद्दशैயிலும் वासनाविशेषवैचित्र्यத்தாலே सर्वप्रतिभासமும் வருகிறதென்னும் வழியைத் தப்ப-விரகில்லை.

**யோகாசாரனைவிட வேறுபாடு இவன் தனக்கு நினைத்தபடி நிலைபெறாது.**

योगाचारன் சொன்ன ग्राह्यलक्षणायोगத்துக்கு परिहारமாக இவன் ''भिन्नकालं कथं ग्राह्य-

त्पादनशक्तं, अथापीदमेव नीलज्ञानं अन्त्यमित्यत्र नियामकाभावात् इत ऊर्ध्वमपि नीलज्ञानधारा प्रवहेदेव । पीतादिविषयसान्निध्याङ्गीकारे तु यस्मिन् सन्निहिते ज्ञानक्षणे प्रथमं पीताद्याकारः तेन समर्प्यते, तत्पूर्वज्ञानं अन्तिमं भवति । तेन च विजातीयज्ञानजननशक्तेन विजातीयज्ञानं जायत इति । तथा च विलक्षणविषयसान्निध्याभावे विजातीयज्ञानोत्पत्त्यभाव इति व्यतिरेक-मुखेन ज्ञानार्थयोः कार्यकारणभावसिद्ध इति ज्ञानाकारेणार्थानुमानमिति । एतदाह- अनुमेय-बाह्यार्थवादिக்கு इति । एवं तन्मतमनूद्य बाह्यार्थसिद्धेरन्यथासिद्धिं विवक्षुः, प्रथमं तत्तत्सयूथ्यो-भयसम्मतं दृष्टान्तं दर्शयति- स्वप्नத்தில் इति । स्वप्ने ग्राह्यार्थाभावसिद्धान्तिभिन्नानां सर्वेषां समयिनां सम्मतः । अत एव तत्पक्षमन्वारूह्य वेदान्तसूत्रकृतः- ''वैधर्म्याच्च न स्वप्नादिवदि''ति जाग्रद्दशायास्तद्वैधर्म्येण ग्राह्यार्थवत्त्वमाहुः । वस्तुतस्तु स्वप्नदशायामपि ग्राह्यार्थसद्भावः तैरेव सन्ध्याधिकरणे प्रतिष्ठापितः । तथा चायं योगाचारश्चेत्युभावपि स्वप्ने विषयसान्निध्यं विनैव वासनावशादेव ज्ञानसन्ततिभेदमाहतुरिति तद्दृष्टान्तेन जाग्रद्दशायामपि मा सन्तु नाम बाह्या अर्था इति भावः । तदुक्तं श्लोकवार्तिके- ''ज्ञानवैचित्र्यसिद्ध्यर्थं न चास्त्यर्थस्य कल्पना । तदधीनं हि वैचित्र्यं क्व दृष्टं केन कल्प्यते ॥ निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम् । निराकाराच्च विषयाद्बुध्याकारोऽतिविस्मयः । स्मृतिस्वप्नावबोधेन, स्पन्दनाकारता तवे''ति ॥ सर्वप्रतिभासமும் इति । व्यावहारिकसत्यभूतनीलपीतादिप्रतिभासवत् मिथ्याभूतशुक्तिरजतादि-प्रतिभासोपीति भावः । अत एव मूले वासनाविशेषवैचित्र्येति सत्यमिथ्याप्रतिभासकारणवैचित्र्य-कीर्तनम् ।

एवं बाह्यार्थासिध्या योगाचारसाम्यमभिधाय, बाह्यार्थानुमेयत्वे तदुक्तदूषणपरि-हारायोगेनापि तत्साम्यं साधयति योगाचारன் इति । ग्राह्यलक्षणायोगः- नीलाद्याकाराणां

போம். கனவில் நீலம் வெண்மை பற்றிய ஜ்ஞானங்கள் எப்படி மாறிவருகின்றன? அங்கு எப்பொருளும் உண்மையில் கண்ணிற்கிலக்காவதில்லையே! அங்கு வெறும் சித்தவாஸனை-யினாலேதான் அம்மாதிரி மாற்றம் என்று யோகாசாரன் சொல்வதுபோலத்தான் எனக்கும் கொள்ளவேணும் என்னில் விழித்திருக்கும்போதும் அவ்விதமேதான் என்று கொள்ள-லாமே ஆக அறிவு தவிர பொருட்கள் இவனுக்கு ஸித்தியாது.

मिति चेत्. ग्राह्यतां विदुः। हेतुत्वमेव युक्तिज्ञाः ज्ञानाकारार्पणक्षमम् ॥" என்று इन्द्रियसम्प्रयोग क्षणத்திலே अनवस्थितமாய स्वोत्पाद्यज्ञानक्षणத்திலே स्वाकारसमर्पकமான बाह्यार्थத்தைப

---

ज्ञानग्राह्यलक्षणस्य- ग्राह्यत्वस्य- अनुमेयत्वस्याप्यनुपपत्तिः। तदुक्तं न्यायरत्नाकरे- "योगाचारमते तद्भावभावाव्यभिचारावेव कारणलक्षणं, तच्च युगपद्भाविनोरेव विद्यते। यथाहुः- प्रत्ययोऽव्यभिचारित्वात्सहेति। सह- समकालवृत्तितया, प्रत्ययः- कारणमित्यर्थः। प्रदीपप्रभयोस्समकालवर्तित्वेन कार्यकारणभावग्रहणात्। युगपज्जायमानरूपघटादिष्वपि इद तुल्यमिति। एवं च कार्यकारणयोस्समकालसत्ताया आवश्यकत्वेनार्थस्य नीलादेः ग्राह्यतया कार्यभूतस्य क्षणिकत्वेन, ग्राहकतया कारणीभूतज्ञानकालेऽनवस्थानात् नीलादेर्ज्ञानग्राह्यत्वमेवानुपपन्नमित्याशयः। இவன- सौत्रान्तिकः। भिन्नकालमित्यादि। ज्ञानभिन्नकालं, तदसमानकालीनं नीलादिकं कथं ज्ञानेन ग्राह्यं, उक्तरीत्या समानकालीनयोरेव कार्यकारणभावावस्थापनादिति चेत्- इति योगाचारो नुयुङ्क्ते चेत् ज्ञाने स्वाकारसमर्पणक्षमं हेतुत्वमेव युक्तिज्ञा ग्राह्यत्वं विदुः। भिन्नकालत्वेप्यर्थस्य ज्ञाने स्वाकारसमर्पणक्षमं हेतुत्वमेव ग्राह्यत्वमिति न दोष इति कारिकार्थः। अत्र हेतुत्वमेव तद्युक्तं, "हेतुत्वमेव तु व्यक्तेः" इत्यादिः पाठभेदो दृश्यते। कार्यकारणयोस्समकालत्वमपि सौत्रान्तिकैर्दूषितम्- "तद्भावभाविताभात्रं हेतुः केनेह कल्प्यते। पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम्। हेतुहेतुमतां सिद्धं यौगपद्यनिदर्शनम्। यत्प्रदीपप्रभाद्युक्त सूक्ष्मः कालोऽस्ति तत्र नः। दुर्लक्षस्तु यथा वेधः पद्मपत्रशते तथेति।' पूर्वोक्तकारिकार्थं स्वयमाह- इन्द्रियसम्प्रयोगक्षणத்திலே अनवस्थितமாய इति। अत्र सर्वत्र "अवस्थितமாய इत्येव पाठो दृश्यते। क्षणभङ्गवादे अर्थस्य तावत्पर्यन्तमनवस्थानात् "भिन्नकाल"मिति कारिकांशव्याख्यारूपत्वाच्च स न युक्तः। एतत्समानप्रकरणे सर्वार्थसिद्धौ- "स चार्थो न प्रत्यक्षः। अधिपतिसंप्रयुक्तक्षणस्य निरुद्धत्वात्। असंप्रयुक्तस्योत्तरक्षणस्य प्रत्यक्षत्वेऽतिप्रसङ्गाच्च। अतो बुद्धिजनकस्यार्थक्षणस्य स्वाकारसमर्पणहेतुत्वमेव ग्राह्यत्वमित्युपचर्यते। तदुक्त- "भिन्नकालमित्यादि" इत्यत्र "अधिपतिसंप्रयुक्तक्षणस्य निरुद्धत्वा"दित्यादिसूक्त्यनुसाराच्च। अधिपतिः- इन्द्रियाणि। इन्द्रियसंप्रयोगस्य यः क्षणः कालः तत्रेत्यर्थः। "हेतुत्वमेवे"त्याद्यनुसृत्याह- स्वोत्पाद्यज्ञानक्षणத்திலே इति। स्व- अर्थः। ज्ञानमेव क्षणः। क्षिणु हिंसायां इति हि धातुः। तथा च क्षणभंगुरत्वात् तस्य क्षणत्वम्। तन्मते सर्वेपि

---

அறிவு, தன்னையொழிந்த வேறுகாலத்திய பொருளை எப்படி அறிவுறுத்தும் என்று யோகாசாரன் கேட்க, இவன் அதற்குப் பரிஹாரமாக, பொருள் ஜ்ஞானகாலத்திலில்லாததாயினும் அதில் தன் வடிவைப் பதிப்பித்துச் செல்வதால் அதைக்கொண்டு அவற்றை அநுமிக்கிறோம் என்றதும் சரியன்று. குடம் முதலிய புறப்பொருட்களுக்கு ஆவை தவி[illegible] ஞா

பேரிடுகிறோம என்றதுவும் அநுபபநம பாஹ்யார்த்தநதனககு ஸ்வரூப மொழிய இவன வேறு ஒரு ஆகாரம கொளளான கொணடாலும அது ஸ்வாஶ்ரயததை விட்டு வரபபுகுகிற ஜ்ஞானததில சென்றேற மாட்டாது. அர்த்தஸ்வரூபம தான ஸ்வகார்யமான ஜ்ஞானம பிறககுமளவும் இராது. இரண டும நிர்த்தர்மக மாயிருகக துல்ய மான ஆகாரம பிறநததென்ன வொண்ணாது. ஸ்வச்ச மான ஜ்ஞானத

---

पदार्थाः क्षणशब्दविशेषिता एव प्रयुज्यन्ते–' घटक्षणः पटक्षण " इति । उत्पाद्यज्ञानक्षणे स्वाकारसमर्पकेति " कथनात्- उत्पादकत्वमेव समर्पकत्वमिति–" हेतुत्वमेवयुक्तिज्ञाः ज्ञानाकारार्पणक्षम "मिति कारिकांशोविवृतो-भवति । " बाह्यार्थ*த்தைப பேரிடுகிறோம* " - बाह्यार्थोऽस्तीति तेनाकारार्पणेनानुमिनुम इत्यर्थः । अथवा " बाह्यार्थ*த்தை ஏறிடுகிறோம்* इति क्वचित्कः पाठोऽस्तु । ज्ञाने आन्तरे बाह्यानर्थाकारानारोपयाम इत्यर्थः । अस्मिंश्चपाठे - ज्ञान*த்தில சென்றேறமாட்டாது* इति वक्ष्यमाणसूक्त्यानुगुण्यमधिकं बोध्यम् ।

अथात्र–ज्ञानेऽर्थाकारार्पण नाम किमभिप्रेतम् । किंयथाश्रुतमेवार्पणम् । अथवा - स्वनिष्ठाकारतुल्या-कारजननरूपम् । यद्वाप्रतिफलनरूपमिति त्रेधाविकल्प्य, प्रथमेपि दूषणत्रैविध्यमभिप्रयन्नाह - बाह्यार्थம-*தனக்கு* इति । अर्पणं नाम - कस्माचित् किञ्चिदादाय कचित्क्रियत इति वक्तव्यम् । तत्र किञ्चिदिति वक्त-व्य आकारो तवमते नास्तीति कथमर्पणं घटते ! ! सर्वेषां क्षणिकस्वलक्षणत्वात् । तथा च पितृणां तर्पणाञ्जलिरेव दत्तोभवतीति भावः । अथाकारान्वारोहेप्याह - *கொணடாலும்* इति । " स्वाश्रय*த்தை விட்டு* " इति स्वापृथक्सिद्धाकारस्य स्वाश्रयत्यागायोगसूचनम्, " *வரபபுகுகிற* ज्ञान*த்தில* " इति तादृशाकाराधाराधेययो स्समकालिकताविरहसूचनञ्चभवति । तत्र हेतुरुत्तरवाक्यम् - अर्थस्वरूप*ம் தான* इति । द्वितीयकल्प आह–*இரண்டும* इति । तदिदमपुत्रस्य पौत्रदर्शनतर्ष मनुरुन्ध इति भावः । तृतीयमनूद्यदूषयति - स्वच्छ*மான* इति । अर्थव्यतिरिक्त तदाकाराभावेऽपि, तत्सदृशानुत्पत्तावपि, यथा स्वच्छे दर्पणे निजमुखारोपः, तथैव ज्ञानेऽर्थाकारारोप इति शङ्कितुर्भावः । लोकसम्मतेति । स्वच्छेऽन्यच्छायापतिर्नाम प्रतिफलनमेव । तत्र

---

தனித்த ஆகாரம் கிடையாதல்லவா இவன் மததததில ? அப்படியே ஒரு ஆகாரததைககொ ணடாலும, அது தனது இருபபிடமான குடம முதலியவற்றை விட்டு, வரபபோகிற ஜ்ஞானத தில ஏறிககொளளாது குடம முதலிய பொருட்களும் தனது காரியமான 'அறிவு பிறககும் வரை நிலை நிலலா. இவை இரண்டும் ஏதும விசேஷமற்ற தனிபபொருட்கள எனகிறவனு க்கு—ஸமமான ஒரு ஆகாரம் இவையிடையே தோன்றிற்று என்னவுமொண்ணாது

திலே अर्थाकारம் प्रतिफलित மென்னும் போது—लोक सम्मत प्रतिफलन न्यायத்தாலே समानकालत्व-रूप-वत्वादिகள் வேணும். இத तर्कங்களாலே तप्ताय: पिण्ड, माषराशिप्रविष्टमषी, नीलोत्पलवनगतकादम्बादि-न्यायங்களும் கழியும். पूर्वापरங்களான अर्थज्ञानங்களுக்கு परोक्तजाति போலே ஓா आकारம் கிடக்கிறதென்னுமது—उपलम्भोपपत्ति स्वसिद्धान्त विरुद्धம். चूर्णहरिद्रा संसर्ग जनितरागம் போலே अर्थज्ञानங்

---

बिम्बतदाधारयोस्सत्यता, समानकालता, रूपवत्त्वेन चाक्षुषतेत्यादिक मपेक्ष्यते । न च साभ्राकाशनक्षत्रादीनां जले प्रतिबिम्बदर्शनात्, तत्रचाकाशस्य नीरूपस्य कथं प्रतिफलनोदय इति वाच्यम् । अकाशस्यापि पञ्चीकरणादिना सावयवत्त्वरूपवत्त्वाभ्यां चाक्षुषतोपपत्तावपि तन्मते ज्ञानार्थक्षणयोस्तदसम्भवात् । समानकालताया अपि क्षणिकेष्वसम्भवात् ।

एवं छायापत्तिपक्षं निरस्याथ-सम्पर्कपक्षमपि प्रत्यस्यति-இத तर्कங்களாலே इति । यदि प्रतिफलनं स्यात्, तर्हि रूपवत्त्वादिकमपिस्यादिति तर्केणेत्यर्थः । अग्निसम्पर्कतः तप्ते अयस्यौष्ण्यारोपः । माषराशिप्रवेशेनमष्या एक्यारोपः नीलोत्पलवनमध्यगत्या कादम्बस्य—कलहंसस्य साजात्यारोप इत्यादिकंभवति ; अथाप्यत्रापि लोक-दृष्ट्या रूपवत्त्वादिकमावश्यकमिति भावः । तथाच—"अम्बुवदग्रहणात्तुनतथात्वम्" इति सूत्रे शङ्करभाष्यम्—"न जलसूर्यकादितुल्यत्वमिहोपपद्यते । तद्वदग्रहणात् । सूर्यादिभ्योहि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते । तत्र युक्तस्सूर्यादिप्रतिबिम्बोदयः इति ।

अथ-व्यङ्ग्यत्वपक्षमपि प्रतिक्षिपति—पूर्वापरेति । यथा नैयायिका व्यक्तिद्वये तिष्ठन्तीमेकां गोत्वादि जातिमङ्गीकृत्यैकव्यक्तौ जातिग्रहणेनापरव्यक्तावपि जातिं व्यङ्ग्यां मन्यन्ते, तथैव प्रकृतेपि पूर्वापरयोरर्थज्ञानयोरेक -आकारस्स्थित्वाऽर्थमभिव्यनक्तीति सौत्रान्तिकास्स्वीकुर्वन्तीतिभाव । उपलम्भेति । नहि पूर्वापरयोरर्थज्ञानयोरेक जातीयत्वमेकोपाधिपरिगृहीतत्वं वा भवति ; अनुपलब्धेः, अनुपपत्तेश्च — प्रत्यक्परागर्थयोस्तथात्वासम्भवात् । निर्धर्म-कौताविति स्वसिद्धान्तविरोधाच्चेति भावः । उभयसंसर्गा-दुभयत्राप्यविद्यमानोधर्म उपजायत इत्यत्र सङ्ग्रहितं दृष्टान्तमाशङ्कयाह—चूर्णहरिद्रेति । तत्र........

---

நிர்மலமான அறிவில் பொருட்களின் ஆகாரம் நிழலிடுகிறது என்று சொல்லவேணுமாகில்—அப்போது உலகில் காணும் முறைப்படி—இரு வஸ்துக்களும் ஒரே காலத்தில் இருந்து, வாணம் ஆகாரம் இவை படைத்தவைகளாய் இருக்கவேணும்

களிரண்டிலுமில்லாத ஆகாரம் அப்போது வருகிறதென்னும் पक्षமும் पूर्वापरங்களுக்கு संसर्गம் கூடாமையாலே निरस्तம். இப்படியாலிவனுக்கு बाह्याकारம் प्रत्यक्षமென்று கொள்ளுதல், बाह्यமின்றிக்கேயிருக்க वासनावशத்தாலே सर्वप्रतिभासமுமென்னுதல் போக்கி மற்ற நிலையில்லை.

---

हि पूर्वं सुधाचूर्णे शुक्ले, पीतायां हरिद्रायां चाविद्यमानो रक्तिमा यथा परस्परसम्मिश्रणमिषेण संजायते, तथैव, निर्धर्मकयोरपि ज्ञानार्थयोर्नीलादिराकारस्संश्लेषवशेन पश्चात् भवतीत्यर्थः । संसर्गம் கூடாமையாலே इति । परस्परसंश्लेषे हि तज्जनितधर्मचिन्ता । क्षणिकयोः पूर्वापरयो- र्ज्ञानार्थयोस्तु स एव नास्तीति कुतस्तेन तादृशधर्मोदय इति भावः । एवं तन्मतमुद्दूष्य सर्वथा तस्यागतित्वं उपसंहरति- இப்படியால் इति । उक्तैर्बहुविधैर्दूषणैरित्यर्थः । இவனுக்கு- योगा- चारवैभाषिकोभयवैलक्षण्यार्थं तदीयगतिद्वयं मुक्त्वा तृतीयां गतिं गतस्य । बाह्यार्थापलापिनो योगाचारस्य व्यावृत्तये तानङ्गीचकार । वैभाषिकं बाह्यार्थप्रत्यक्षत्ववादिनं अतिरेचयितुं तेषामनु- मेयत्वमनुमेने । तदिदमुभयवैलक्षण्य त्वदभिमतं तत्र न सिध्यतीति प्रतिपादितदिशा ज्ञात्वा बाह्यार्थप्रत्यक्षत्वस्वीकरणेन बाह्यार्थं विना वासनयैव स्वप्ने प्रतिभासन्यायेन वैभाषिकपरिभाषां वा भजस्व । सर्वथा बाह्यार्थस्वीकारमुधाग्रहं मुक्त्वा योगाचारप्रचारं वा प्राप्नुहि- इति भावः । तदुक्तमुदयनाचार्यैः- न चाकारवादे स्फुरतोर्थस्य प्रामाण्यमस्ति । आकारकादाचित्कत्वस्य तैमिरिक- केशाद्याकारेणानैकान्त्यात् । ...निरालम्बनार्थाकारवच्च क्वचिद्वासनावशादर्थक्रियाकारोपि निरा- लम्बन एव भविष्यति इति । என்னுதல் போக்கி- इति कथनं सन्त्यज्य । மற்ற நிலை- गत्यन्त- रम् । पूर्वं "இவைத்தைக்கொள்ளுமிறவனுக்கு" इत्यादिना "மற்றொரு நிலை கூடாது" इत्य- न्तेन, सौत्रान्तिकस्य- वैभाषिकमतं, नैयायिकमतं वा समाश्रयणीयं भवतीत्युक्तं, इह तु योगा- चारवैभाषिकान्यतरमतमिति विशेषो बोध्यः ।

இது தன்னிலேயே- காய்ந்த இரும்பில் நெருப்புபோலவும், உருக்கில் நெய்போலவும், செய்தறகாட்டில் காதம்பம் போலவும் ஜ்ஞானார்த்தங்கள் பிரிவறக் கலந்து தோன்றுகின்றன என்பதும் தவறென்னப்பட்டதாகிறது. இரண்டு சுபர்களில் ஓர் இனம் கிடப்பதுபோல் ஜ்ஞானார்த்தங்களை ஒரு ஆகாரம் தொடரும் என்பதும்- அப்படிக்குக் காரணமையாலும், தன் கொள்கைக்கு முரண்படுவதாலும் ஏற்புடையதென்று. சுண்ணமும் மஞ்சளும் கூடியபோது சிவப்பு நிறம் பிறப்பதுபோல் என்ற த்ருஷ்டாந்தமும் ஜ்ஞானார்த்தங்கள் ஒருபோதும் கூடா- மையால் தள்ளுண்ணும். ஆகையால் புறப்பொருட்களை கொள்ளவேண்டினால் ப்ரத்யக்ஷ- மென்று அங்கீகரிக்கவேண்டும். அல்லாதபோது அவை ஸித்தியாதொழிய யோகாசாரமதம்- போலாம்" இவ்விரண்டொழிய மூன்றும் நிலையில்லை.

इवन् मतम् इवन् सॆयलोडु पुराणुम्.

इवनुक्कु प्रत्यक्षமும் அன்றிக்கே अनुमितங்களான क्षणिकभक्ष्यभोग्यादिகள் भक्षणादि-प्रवृत्तिविषयமாகமாட்டா. ज्ञानाकारத்தைத் தின்னவும் மெல்லவும் ஒண்ணாது. अनुमितक्षणம்

अथैतन्मते बाह्यार्थानुमेयत्ववादस्य स्वक्रियाव्याघातमप्याह- இவனுக்கு इति । अस्य एतन्मत इत्यर्थकस्य, "प्रत्यक्षமும்" इत्यनन्तरपदेन, अग्रे "भक्षणादी"त्यनेन चान्वयः । இவனுக்கு इत्यनेन बाह्यार्थाभ्युपगन्तुस्सौत्रान्तिकस्य उपस्थापनात्, बाह्यर्थप्रत्यक्षत्वानङ्गीकारे, बाह्यार्थस्वीकरणमात्रमेतत्कृतं वक्ष्यमाणदिशा व्यर्थमिति द्योत्यते । प्रत्यक्षமும் அன்றிக்கே इत्यपिना बाह्यार्थप्रत्यक्षत्वाङ्गीकारेपि क्षणिकत्वाभ्युपगमप्रयुक्तं वक्ष्यमाणं दूषणजालं जागर्ति तवमते, एवं सति, यदि प्रत्यक्षत्वमप्यनङ्गीकृतं तदा किमुवक्तव्यं त्वन्मतहेयतां प्रतीति कैमुतिकन्यायः सूच्यते । अनुमितங்களான इति । क्षुधार्ता भोगार्थिनश्च भक्ष्यपेयादिकं प्रत्यक्षतो ज्ञात्वा हि प्रवर्तन्ते । अनुमेयत्वे कथं तेषां तत्र प्रवृत्तिरिति भावः । ननु पाकाद्यर्थिनां धूमं दृष्ट्वा तदनुमितदहनोपादाने प्रवृत्तिवत् अत्राप्यनुमायैवार्थं तत्र तदर्थिनां प्रवृत्तिर्भविष्यतीत्यत्राह- क्षणिकेति । तथा च स्थिरवादे अनुमितिपूर्वकप्रवृत्तिपर्यन्तं दहनादिसद्भावनिश्चयेन तदुपपत्तावपि, क्षणभङ्गाङ्गीकारे तव तत्र प्रवृत्तिर्वैयर्थ्यमेव, अर्थस्य नश्वरत्वेन तत्पर्यन्तमनवस्थानभयादिति भावः । भक्ष्यं- मोदकादि । भोग्यं- स्रक्चन्दनादि । भक्षणादीत्यादिना भोगपरिग्रहः । नन्वर्थस्य विनष्टत्वेपि तत्समर्पिताकारविशिष्टस्य ज्ञानस्य सत्त्वाद्भक्षणादिप्रवृत्त्युपपत्तिरित्यत्राह- ज्ञानाकारத்தை इति । भक्षयितुं चर्वितुं चाशक्यमित्यर्थः । भक्षणं- गळबिलाधस्संयोगानुकूलव्यापारः । चर्वणं रसनादन्तताल्वाद्यभिघातसंयोगानुकूलव्यापारः । अन्यथा "आशामोदकतृप्ताये येचोपार्जितमोदकाः । रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यत" इति उपालम्भस्स्यादित्याशयः । एवं बाह्यार्थानां क्षणिकत्वेन ज्ञानकाले भक्ष्यभोग्यादिविषयापहारात् प्रवृत्त्यवसादमुक्त्वा, अथ क्षणिकपदार्थप्रवाहस्वीकारे, इष्टभक्ष्यादिक्षणस्यानिष्टाशुचिपदार्थक्षणत्वेनापि परिमाणसम्भवात् प्रवृत्तिशून्यतामाह- अनुमितक्षणம் नष्टமாய் विसदृशभागसन्तानरूपங்களாய इति । अत्र एवमेव शुद्धः पाठः । न तु "अनुमितलक्षणம் अनिष्टமாய இत्यादिः ।

இவன் எல்லாவற்றையும் நிமிடநேரத்ததாயும் அநுமிக்கவேண்டியதாயும் ஒப்புவதால் ஒரு பக்ஷ்யத்தையோ போக்யவஸ்துவையோ முயன்றும் அடைய முடியாது: எல்லாம் அறிவிற் றோன்றும் வடிவுடையதாகையால் அதன் வடிவைத் தின்னவும் மெல்லவும் முடியாது. பிற்காலத்தில் நல்லதும் கெட்டதாய் மாறி வடிவெடுக்கலாமாகையாலே ஸுகமும் துக்கரூபமாய் முடியும். ஒரு ஜ்ஞானஸந்ததி முதலிலிருந்தவாறே முடிவுவரையிலுமிருக்கும் என்றால் ஜ்ஞானத்தின் பாகுபாடு அர்த்தங்களின் வேறுபாட்டால் வரும் என்ற தன் ஸித்தாந்தத்தோடு

नष्टமாய் विसदृशभागसन्तानरूपங்களாய் विषादरூபங்களாகவுமாம். उत्तरक्षणங்களும் पूर्वक्षणतुल्यங்கள் என்று अनुमिக்கில सर्वज्ञानसन्ततिகளில் विषयक्षणங்களில் वैचित्र्यம் கொள்ளவேண்டுதபடியாய अर्थवैचित्र्यத்தாலே ज्ञानवैचित्र्यம் என்கிற कल्पनै கழியும். இப்பக்ஷம் बाह्यங்கள் தன்னிலே प्रत्यक्षानुमेय(विभाग)ம் பண்ணி நடக்கிற स्वोपलम्भसर्वलोकोपलम्भविरुद्धமாகையாலே अनन्वितवस्तरि(री)कल्पமாய अपहास्यतमமாம். இம் मतத்தை "नासतोऽदृष्टत्वात्" என்று सूत्रकारர் निरसित्தார்.

---

अनुमितक्षणः भक्ष्यादिः । विसदृशभागसन्तानरूपங்கள்- विजातीयाशुच्याकारज्ञानसन्तानानि । विषादरूपங்கள் ஆகவுமாம- जुगुप्सावहत्वेनानुपादेयत्वात् दुःखरूपाण्यपि कदाचिद्भवेयुः । अत्रायमर्थः- बाह्यार्थज्ञानधारासु प्रथमं भक्ष्याकारज्ञाने जाते, तेनाकारानुमाने च प्रवृत्ते, पुरुषे, अनन्तरं भक्ष्याकारज्ञानविपर्यासेन कदाचिदमेध्यपदार्थाकारज्ञानसन्तानस्यापि उदयसम्भवात् तत्र भक्ष्यार्थिनः मनोरथभङ्गेन महद्दुःखमपि प्रसज्येत पक्षे कस्मिंश्चिदिति निश्शङ्कप्रवृत्त्यसंभव इति । विषादरூபங்களாகவுமாம इत्यपिना ईदृशपरिणामस्य पाक्षिकत्वं द्योत्यते । ननु उत्तरक्षणा अपि सदृशसन्तानवन्तः क्षणत्वात् पूर्वक्षणवदित्यनुमानेन, पूर्वभक्ष्यक्षणतुल्यमेवोत्तरक्षणोत्पत्त्या निश्शङ्कप्रवृत्त्युपपत्तिरित्यत्राह- उत्तरक्षणங்களும் इति । सर्वज्ञानसन्ततिகளில- घटपटादिज्ञानपरम्परास्वपि । अर्थवैचित्र्यத்தாலே इति । योगाचारवैलक्षण्यार्थं ज्ञानवैचित्र्यमर्थवैचित्र्याधीनमिति कल्पनायास्सर्वत्रार्थसादृश्यशालिज्ञानसन्तत्यङ्गीकारेणासंभव इति स्वसिद्धान्तविरोधो दुरुद्धर इति भावः । एतदधिकारारंभे "योगाचारன சर्वलोकपरिहासविषयமானபடிகண்டு" इत्युक्त्या उपहास्यं तन्मतं, इदन्तु तदतिशयाय कल्पितमपि बाह्यार्थपरिकल्पमिदन्धनेनारूढपतितत्वात् फलतस्तोपि हीनं उपहास्यतममित्याह- இப்பக்ஷம இति । बाह्यங்கள் தன்னிலே- बाह्यपदार्थेषु । "प्रत्यक्षानुमेयம பண்ணி" इत्यत्र, "प्रत्यक्षानुमेयविभागம பண்ணி" इति पाठस्स्यादिति भाति । यथाश्रुतेऽनन्वयात् । तथा च सर्वस्यापि बाह्यार्थस्यानुमेयत्वे "न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार" इति प्रत्यक्षानुमानप्राबल्यदौर्बल्यविभागविचारपूर्वकलोकप्रवृत्तेस्तथाविधस्वानुभवस्य च विरोधस्स्यादिति भावः । अनन्वितवस्तरी(रि)कल्पமாய் इति । एवमेव मातृकासु सर्वासु पाठः दृश्यते । स च कथंचिद्व्याख्येयः । विदूषक इति, उद्यानसंरक्षकवृति गतः क्षुद्रवृक्षविशेषः (மறள்) इति च बहुधा तदर्थं वर्णयन्ति । अथापि प्रकृतानुगुणं विदूषकोक्तिपरत्व-

---

*விரோதிக்கும், உலகில் இது பாதயக்ஷிகத் தகத்து-இது அநுமாகிகதத்க்கது என்று பிரிவுபடுத்தி ப்ரவருத்திப்பது கண்கூடு. இவன் எல்லாம் அநுமானிக்கத்தக்கது என்பது மிகவும் பரிஹஸிக்கக்கூடியதாய் உள்ளது விதூஷகவாக்யம்போல். இம்மதத்தை வ்யாஸர் தமது பரமமஸூத்ரத்தில் செம்மையாக கண்டித்துள்ளார்.*

நிலையில்லாப்பொருள் மதியை விளைத்துத்தான் சேர்
நிறங்கொடுத்துத்தானழியும் தன்னால் வந்த
நிலையில்லாமதிதன்னில் நிறத்தைக்காணும்
இதுகாணும் பொருள்காண்கை என்ற நீசன்
முலையில்லாத்தாய் கொடுத்த முலைப்பாலுண்ணும்
முகமில்லாமொழியெனவே மொழிந்த வார்த்தை
தலையில்லாத்தாளுரும் கணக்காய் நின்ற
கட்டளை நாம் கண்டின்று காட்டினோமே.

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमत्परमतभङ्गे सौत्रान्तिकमतभङ्गाधिकारः नवमस्सम्पूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

मेव युक्तं समाश्रयितुम् । आचार्या अपि अच्युतशतके- (छा) "त्रस्तरिनयेन स्थापिता शोभतां त्रिदशानां नाथ तत्र समाजे । वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः" इति इममेव शब्दं एवं प्राय एतार्थे प्रयुञ्जते । "शृणु गदितमिदं नः त्रस्तरीमात्ररूपमिति क्वचित्कविप्रयोगश्च सर्यते । विदूषकवाक्यस्य हास्यरसोत्पादनेन श्रोतृमनोरञ्जनमात्रैदंपर्यशालित्वात् नार्थगौरवमिति अनन्वितत्वोक्तिः । अथास्य मतस्य सूत्रकारेण निराकृतत्वमाह- இம்மதத்தை इति । यो यं ज्ञाने नीलादिराकार उपलभ्यते, स विनष्टस्यासतोऽर्थस्याकारो न भवितुमर्हति । कुतः? अदृष्टत्वात् । न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्टं इति सूत्रार्थः । एतेनैतत्सूत्रस्य माध्यमिकमतनिराकरणपरतया, यादवप्रकाशव्याख्यानं चिन्त्यमित्युक्तं भवति । विस्तरश्च श्रुतप्रकाशिकादौ भाव्यः । एवं अधिकारेणानेन सौत्रान्तिकं बहुश उद्दूष्य तन्मतस्यानन्वितत्वं सर्वलोकोपहास्यत्वं चोक्तं सदृष्टान्तमन्ते गाथया दर्शयति- நிலையில்லாப் பொருள் इति । क्षणिकाः पदार्थाः ज्ञान-

---

(பாசுரத்தின் பொருள்) நிலையில்லா நிமிடநேரப் பொருட்கள் அறிவை உண்டாக்கி, தம் நிறத்தை அதற்குக்கொடுத்து தாமழியும். தம்மால் வந்த நிலைத்திராத அறிவு தன்னில் தம் நிறத்தைக்காணும். இதைத்தான் பொருட்காட்சி என்கிறோம் என்ற நீசன் சௌத்ராந்திகனுடைய முலையில்லாத் தாய் கொடுத்த முலைப்பாலுண்ணும் கணக்காய்- முகமில்லாமொழியெனவே மொழிந்த வார்த்தை கணக்காய், தலையில்லாத முண்டத்தின் கால் ஊரும் கணக்காய், நின்ற நிர்மூலமான கொள்கைகளை நாம் நன்கறிந்து இங்கு காட்டினோம்.

ஸ்ரீபரமதபங்கத்தில் ஸௌத்ராந்திகமதபங்காதிகாரத்தின் தமிழ் மொழிபெயர்ப்பு முற்றிற்று.

## सौत्रान्तिकमतभङ्गाधिकारः ।

ज्ञेयपदार्थाः । दृष्टान्त दार्ष्टान्तिकयोः प्रतिविषयं साधर्म्यं मूल एव स्पष्टम् । आकारोऽत्र நிறம். பொருள்காணகை - प्रत्यक्षं । நீசன - सौत्रान्तिकः । अन्वयश्चास्य மொழிந்த - इत्यत्र भाषणे । தகல இति । "सर्वस्यगात्रस्यशिरः प्रधान" मिति रीत्या ज्ञानस्थैर्यानभ्युपगमे शिष्टं सर्वं कबन्धप्रायं भवतीति भावः ।

वेदान्त सूरिरित्थं सौत्रान्तिकवादधूळिमुद्धूय ।
तत्त्वाथादृष्टिमित्थं दत्व,चान्ध्यं जगत्यपोवाह ॥ 1 ॥
नवमोऽनवमो भागो भङ्गे परमतास्पदे ।
पावनैर्गुरुवर्यस्य कटाक्षैस्समपूर्यत ॥ 2 ॥

इति श्रीवत्सवंशायनस्य श्रीदेशिकचरणपरायाणस्य
नारायणस्यकृतिषु श्रीमत्परमतभङ्गव्याख्यायां
देशिकाशयप्रकाशिकाभिख्यायां नवमः

सौत्रान्तिकभङ्गाधिकारस्सम्पूर्णः ।

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते रामानुजाय नमः । श्रीमते वेदान्तगुरवे नमः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

॥ अथ वैभाषिकभङ्गाधिकारः ॥ 10 ॥

காண்கின்றவனில்லை காட்சியுங்கண்டது முண்டவைதாம்
ஏண்கொண்டனவன்று இவற்றில் குணமும் நிலையுமில்லை
சேண்கொண்ட சந்ததியால் சேர்ந்துமொன்றென நிற்குமென்ற
கோண்கொண்ட கோளுரை வைபாடிகன்குறை கூறுவமே.

---

श्रीः

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीपरमतभङ्गव्याख्यायां देशिकाशयप्रकाशाभिख्यायां

## वैभाषिकभङ्गाधिकारो दशमः ॥ 10 ॥

मान्यं महीयसां नौमि मनोवाक्कायकर्मभिः ।
वैभाषिकान् विनिर्भेत्तुं वेङ्कटेशविपश्चितम् ॥ 1 ॥

योवक्ति भूतततिमप्यणुपुञ्जजातां
भूतोत्थभौतिकसमूहमपि द्विधात्र ॥
ज्ञात्रा विना विविधबुद्धितदर्थवर्गं
प्रत्यक्षमेव तमिमञ्च गुरुर्निरुन्धे ॥ 2 ॥

वैभाषिकभषणं द्राक् बौद्धत्रितयोक्तपक्षतोभिन्नम् ॥
स निषेधति दशमेऽस्मिन् अधिकारे निगममौलिगुरुवर्यः ॥ 3 ॥

---

ஸ்ரீ

ஸ்ரீமதே லக்ஷ்மிநரஸிம்ம ப்ரம்மணே நம:

"வைபாஷிக பங்காதிகாரம்"

(பாசுரத்தின் கருத்து) காண்கிற ஆத்மாவென்று தனித்தொரு பொருள் கிடையாது. காட்சி என்னும் நிகழ்ச்சியும் காணப்படும் ப்ரத்யக்ஷப்பொருட்களும் உண்டு அவைகளும்

முனபு கழிநத பௌத்தா மூவருககுஞசொனன दोषம் தபபலாமெனறு பாாத்து ஜ்ஞானத தோடொககு ब्राह्यार्थமுமप्रत्यक्षம, ज्ञायज्ञेयஙகளிரணடும निर्विशेषात्मकक्षणिकसन्तानरूपஙகளாயிருககும, ஜ்ஞாதா வொருவனுமே कल्पितன, எனகிற वैभाषिकனை निराकरिककிறோம.

---

वृत्तेन बौद्धाधिकारत्रयेण वैभाषिकनिराकरणस्यागतार्थतां ख्यापयन् तत्खण्डनं प्रतिजानीते प्रथमया प्रबन्धगाधया—*காணகினறவனிலை* इति । *இலை = இலலை* ज्ञाता नास्तीति वैदिकसमयाद्व्यावृत्तिः । आत्मग्रहो महामोहः प्रथमः, तन्निवृत्तितः । ममकिं नाहमेवेति विरंस्यति ममग्रहः ॥ तस्मादादावहङ्कारममकार प्रहाणतः । नैरात्म्यदर्शनं सिद्धं निर्वाणद्वारमुत्तममि"ति प्रथममहङ्काराभावे ममकारनिवृत्तेः कैमुतिकन्याय-सिद्धत्व पर्यालोच्य मुक्तिं प्रति मुख्यकारणतया एतैर्नैरात्म्यवादस्यैव प्रवर्तनादिति भावः । *காட்சியும கண டதுமுணடு*—ज्ञानं ज्ञेयञ्चास्ति । आभ्यां क्रमेण माध्यमिकयोगाचारव्यावृत्तिः । बाह्यपदार्थस्य *கணடது* इति प्रत्यक्षत्वोत्कीर्तनात् सौत्रान्तिकव्यावृत्तिश्च । *அவைதாம*—तेच ज्ञानज्ञेयपदार्थाः *ஏண - எண* - पदस्य दीर्घोविकारः । असंख्याता इत्यर्थः । *இவற்றில குணமும நிலையுமிலை - நிலை* - आधारः । तथा च निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः इति" सर्वार्थसिद्धिः । *நிலையுமிலலை* इति तदभ्युपगतं क्षणिकत्वञ्च विवक्षितम् । कथं तर्हि वस्तुषु स्थिरत्वैकत्वादिव्यवहृतय इत्यत्राह—*சேண கொணட* इत्यादिना । *சேண* - दैर्घ्यम् । तथा चाणूनां प्रत्येकमनेकत्वेपि क्षणिकत्वेपिच दीर्घकालानुवृत्तायां तत्सन्तत्यां स्थिरत्वैक-त्वादिमिथ्याप्रतिभास इति भावः । एवं तन्मतदर्शनेन तस्य व्याहतोक्तिमेदुरत्वं सुज्ञानमित्युपहसति—*கோண கொணட கோளுரை* इति । कुटिलकूरवाच इत्यर्थः । *வைபாடிகன* - वैभषिकस्य । एतन्नाम्ना च पूर्वं निरुक्तेन विरुद्धभाषणमेवास्य स्वरूपनिरूपकमिति द्योत्यत इति भावः । *குறை கூறுவமே* - दोषान् प्रदर्शयिष्यमः ।

पूर्वाधिकारेण सङ्गतिप्रदर्शनाय वृत्तं कीर्तयन् कर्तव्यं प्रतिजानाति—*முனபுகழிநத* इति । पूर्वं वृत्ते-त्यर्थः । बौद्ध*ா மூவருககு* इति । "चातुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः" इति प्रसिद्धेषु पूर्वं खण्डितानां माध्यमिक योगाचार सौत्रान्तिकानामित्यर्थः । *சொனன* दोषம - पदार्थाना यथायथं चतुष्कोटि युक्तत्वात् तद्विनिर्मुक्तत्वं नास्तीति माध्यमिकनये, बाह्यार्थाभावे "बहिर्वदवभासते" इति दृष्टान्तस्यापि मृग्यतया

---

எணணிலடஙகா. அவற்றிற்கு குணமும் நிலைதது நிறகும தன்மையும் கிடையாது. ஆனால் ஆறொழுககுபபோல அவையொனறின பின ஒனறுக நெடுகதொடர்ந்து ஸநததி எனற பெயரில ஒனறெனககூறலாயிருககும. எனறிவவிதம கோணலாககுறுககி உரைககும வைபாடிகன குறைகளை வெளியிடுவோம எனறு.

புறப்பொருட்களுக்குக் காட்சியுண்டென்றது நில்லாது

இவன்கொண்ட க்ஷணிகபரமாணுக்கள் அப்ரத்யக்ஷங்களென்றதானே இசைந்தான். புஞ்ஜதசை யிலே ப்ரத்யக்ஷமென்னும் போது, புஞ்ஜமென்று பரமார்த்தமாக வொன்றைக் கொண்டவிவன், புஞ்ஜ மென்கைக்கு ஹேதுவாக ஸம்யோகமென்றுதல் நைரந்தர்யமென்றுதல் ஒரு தர்மம் கொண்டிலன்.

सर्वप्रवृत्त्यवसाद इति योगाचारमते, सर्वथानुमेयत्वे क्वचिदपि व्याप्तिग्रहणासिध्या तदनुमानायोग इति सौत्रान्तिक पक्षेच प्रोक्ता एवमादयोदोषाः। ज्ञानத் தோடொக்க -ज्ञानेनतुल्यम्। अस्यप्रतितन्त्रसिद्धान्तांशमाह— बाह्यार्थமும் प्रत्यक्षம் इत्यादि। माध्यमिक व्यतिरिक्तास्त्रयोप्येते स्वाभ्युपगतं वस्तुक्षणिकमाचक्षत इति सामान्यतस्स्थिते, एतेन ज्ञानवत् प्रत्यक्षस्य ज्ञेयतत्त्वस्याप्यङ्गीकारात्, तदुभयं निर्विशेषं प्रतिक्षणमुत्पत्तिविनाश-शालितया दीपज्वालावत् क्षणिकसन्तानरूपं चेति स्वीकृतमित्यर्थः। ज्ञाता ஒருவனுமே कल्पित इति। "ग्राहकाभिमानारूढ अनादिधीसन्तान एवात्मा। अहं जानामीति बोधस्तु आलयविज्ञानवशात् आश्रयकल्प-नयावा स्यात्। अतिरिक्तस्तु बाधिततया अनादेय" इति सर्वार्थसिध्युक्तरीत्या "इदमहं जानामी" - त्यत्र भासमाने पदार्थत्रिके ज्ञात्रंशमात्र कल्पितमिति भावः। वैभाषिकனை निराकरिக்கிறோம் इति। तथा च बौद्धत्रयनिराकरणानन्तर अस्यस्मृतत्वात् तेन एतत्प्रकरणस्य प्रसङ्गस्सङ्गतिः। अथवा—पूर्वं प्रत्यक्षं यत् तदेव परमार्थः इति चार्वाके प्राप्ते, तन्निराकरणानन्तरं, प्रत्यक्ष यत् तत्सर्वं क्षणिकं इति वादी एष एव निराकार्यः। अथापि मध्ये प्राप्तेन माध्यमिकेन सर्वशून्यत्ववादिना, ज्ञानमात्रास्तित्ववादिनायोगाचारेण, ज्ञानभिन्नग्राह्यार्था-स्तित्वेपि तस्यानुमेयत्ववादिना सौत्रान्तिकेनच एतन्मतविचारस्यानवसरग्रस्ततया, प्रतिबन्धकीभूत तत्तन्मतविषयक शिष्यजिज्ञासानिवृत्त्यनन्तरं एतन्मतनिराकरणं प्राप्तमिति अत्रसरस्सङ्गतिरितिभाव्यम्। प्रतिबन्धकीभूतशिष्यजि ज्ञासानिवृत्त्यनन्तरकालवक्तव्यत्वमवसर इति हि तल्लक्षणम्।

अथैतदभिमतं बाह्यार्थप्रत्यक्षत्वं शोधने न प्रतितिष्ठतीति दर्शयितुमेतदुक्तमनुवदति—இவன் கொண்ட इति। वैभाषिकोऽपि नैयायिकादिवत् जालालोकविलोकनीयसूक्ष्मद्रव्यषष्ठाष्टमादिभागस्यैव परमाणुत्व स्वीचकारेत्यर्थः। क्षणिकेति हेतुगर्भविशेषणमप्रत्यक्षत्वोपपादकम्। तदुक्तंप्रमेयकमलमार्ताण्डे—"परमाणूनां

*முன்பு கழிந்த மாத்யமிகர் முதலிய மூவாக்கும் நேர்ந்ததி தமக்கு வராமலிருக்க எண்ணி-அறிவும் அறியப்படும் பொருளும் ப்ரத்யக்ஷமாயிருக்கும் இரண்டும் தன்மைகளற்ற கணநேரத்திய பிரவாஹரூபங்களாய் எங்கும் தொடரும். அறிபவன்-ஆத்மா-கிடையாது. என்கிற வைபாஷிகனை விரட்டுவோம்.

## இவன் மதத்தில் ப்ரமாணங்களுக்குப்பஞ்சம்

क्षणिकस्वलक्षण விசேஷங்கள் निर्विकल्पத்திலே தோற்றி புஞ்ஜविकल्प विषयமா மென்னும் இப்படி विकल्पத்திலே இவை தோற்றிற்றென்று साधिக்கைக்கு निर्विकल्पகம் प्रमाणமாக மாட்டாது.

---

तार्किकैस्स्थिरत्वैकान्त्यवत् क्षणिकत्वैकान्त्यं बौद्धैरङ्गीक्रियते । स्थैर्याद्यनैकान्त्यवादिनस्तु क्षपणकाः'' इति । **परमाणु**க்களை इति बहुवचनं तच्चातुर्विध्याभिप्रायम् । नतु क्षपणकवत् एकविधपरमाणुष्वेव बहुत्वाभिप्रायम् । ''क्षपणकास्तु परमाण्वैकविध्यवादिन'' इतिह्युक्तम् । तत्र परमाणूनां पृथिव्यप्तेजोवायुरूपेणचातुर्विध्ये समानेऽपि—रूपरसगन्धस्पर्शस्वभावा पार्थिवपरमाणवः । रूपरसस्पर्शस्वभावा आप्यः, रूपस्पर्शस्वभावास्तैजसाः, स्पर्शस्वभावा वायवीया इति, गन्धस्वभावः पार्थिवः, रसस्वभाव आप्यः, रूपस्वभावस्तैजसः, स्पर्शस्वभावोवायवीय इति च प्रक्रियाद्वयं वैभाषिकसम्मतम् । ''एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः क्षोणीदेहादिपुञ्जप्रसूतिरिति सभाभाषि वैभाषिकेण'' इति **अधिकरणसारावल्युक्तेः** । तथा च परमाणूनां क्षणिकत्वेनोन्द्रियसम्प्रयोगक्षणपर्यन्तमनवस्थानात् ''प्रत्येकं दृश्ययोग्यत्वेऽप्यणूनां, दृश्यताभवेदि''ति स्वयमेवतेषां प्रत्येकमप्रत्यक्षत्वमन्यदूषणात्प्रागेवाङ्गीचकारेति भावः । परमाणुपुंजप्रत्यक्षत्वे दूरस्थकेशाना पुंजदशाया प्रत्यक्षत्वदृष्टान्तीकरणं ''दूरस्थकेशस्तु प्रत्येकं नातीन्द्रियः । अणवस्तु तव मते प्रत्येकमतीन्द्रियाः । नहिवयं ऐन्द्रियकत्वमतीन्द्रियत्वं वा कस्यचित्स्वभावादाचक्ष्महे । किन्तु महत्त्वादिलक्षणकारणसन्निधाने तस्य प्रत्यक्षत्वं तदभावे तस्यैवाप्रत्यक्षत्वमिति । नचैवमेव त्वन्मतेपि सम्भवाति । अणूनां क्षणविलयित्वादि''ति **सिद्धान्तमुक्तावल्यां** दूषितं द्रष्टव्यम् । अथसर्वथाऽतीन्द्रियस्यापि दशाविशेषे प्रत्यक्षत्वं भवतीत्यन्वारोहेऽपि, विशिष्य त्वया नैवमभ्युपगन्तुं शक्यमित्याह—**पुञ्जदशै**யிலே इति । **पुञ्ज**மென்று **परमार्थ**மாகவொன்றைக் கொண்டிலன் इति । अत्र, यद्यपि भ्रान्तिसिद्धपरमाणुकलापवादि सौत्रान्तिकमतवैलक्षण्यायानेन परमार्थभूता परमाणुपुञ्जदशाऽङ्गीक्रियते, तथापि एतन्मतेऽपि धर्मधर्मिभावानभ्युपगमात्, परमाणूनां क्षणिकतया—''क्षणध्वंसिनः परमाणवो भूतानिच कदा संहतौ व्याप्रियन्ते, कदावा संहन्यन्त'' इति **श्रीभाष्योक्तरीत्या** क्षणिकविज्ञानातिरिक्तस्य पुंजकर्तुश्चेतनस्याभावात्, अहमभिमानाश्रयस्यालयविज्ञानस्यच शरीरात्मकभौतिकपुञ्जाधीनसिद्धिकतया तद्धेतुत्वासम्भवात्, सम्भवेवाऽन्योन्याश्रयाच्चेति **शङ्करभाष्योक्तदिशाच** परमार्थतः

---

இவன் ஒப்பிய கணக்கணக்கான பரமாணுக்களை ப்ரத்யக்ஷமானவை எனக் கூறத் துணியான. பின்னை—அவை கூடி நின்றபோது கும்பலான நிலையில் ப்ரத்யக்ஷமென்கிறான். கும்பல்சேருதல் என்பது இவனுக்கு முந்தியவனுக்குப்போல பொய்யன்று தான்—ஆயினும்

"विकल्पोऽवस्तुनिर्भासादसवादादुपप्लवः।" என்றும், "तस्या यद्रूपमाभाति बाह्य[illegible]। व्यावृत्तमिव निस्तत्त्व परीक्षाऽनङ्गभावत॥" என்றும் சொல்லி सविकल्पकமும் अनुमानமும் कल्पिताकारविषयமென்று தாங்களே கட்டுகையாலே அவையும் பரமார்த்தத்தைக் காட்டமாட்டாது.

---

पुञ्जाख्यपरमाणुदशाविशेषाङ्गीकरणमेवास्यानुचितमितिद्योत्यते। अथ तुष्यतुदुर्जन इति न्यायेन तस्य तदभ्युपगममन्वारुह्यापि तन्मते तत्कारणभूतसंयोगाद्यनभ्युपगमेन पुनरपि पुंजदशादौस्थ्यमेवदर्शयति—पुञ्जமென்கைக்கு हेतुவாக इति। तदुक्तं प्रमेयकमलमार्ताण्डाख्ये जैनग्रन्थे-बौद्धमतोपन्यासप्रकरणे—"सम्बन्धोर्थाना पारतन्त्र्यलक्षणोवास्यात्, स्वरूपश्लेष लक्षणोवा? प्रथमपक्षे-किमसौ निष्पन्नयोस्सम्बन्धिनोस्स्यात् अनिष्पन्नयोर्वा? न तावदनिष्पन्नयोः—स्वरूपस्यैवासत्त्वात्, शशविषाणवत्। निष्पन्नयोश्च पारतन्त्र्याभावादसम्बन्ध एव। उक्तंचबौद्धैः—"पारतन्त्र्यं हि सम्बन्धस्सिद्धे का परतन्त्रता। तस्मात्सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः" इति। रूपश्लेषलक्षणरूपत्वेचोक्त—"रूपश्लेषोहिसम्बन्धोद्वित्वेच सकथं भवेत्। तस्मात्प्रकृतिभिन्नानां सम्बन्धोनास्ति तत्त्वातः" इति। सम्बन्धिनोर्द्वित्वे रूपश्लेषविरोधात्। तयोरैक्ये वा सुतरां तदभावः, सम्बन्धिनोरभावे सम्बन्धायोगात्, तस्यद्विष्ठत्वात्। अथनैरन्तर्यं तयोरुपश्लेषः न-अस्यान्तरालाभावरूपत्वेनातात्त्विकत्वात्संबन्धरूपत्वायोगः। निरन्तरतायाश्चसम्बन्धरूपत्वे सान्तरताऽपिकथं सम्बन्धरूपान-स्यात्। किञ्चासौ रूपश्लेष. सर्वात्मना—एकदेशेन वास्यात्। सर्वात्मना रूपश्लेषे अणूना पिण्डोऽणुमात्रस्स्यात्। एकदेशतश्श्लेषे किमेकदेशास्तस्यात्मभूताः परभूतावा। आत्मभूताश्चेन्नैकदेशेन रूपश्लेष., तदभावात्। परभूताश्चेत्, तैरणूनां सर्वात्मनैकदेशेनवा रूपश्लेषे स एवपर्यनुयोगोऽनवस्थाच स्यादिति।

अथ परमाणूना पुंजाख्यपरमार्थदशाया अङ्गीकर्तुमशक्यत्व तन्मते निरूप्य, तत्रैव अभ्युपगताया अपि तस्याः परमार्थभूतायाः प्रमाणदुर्भिक्षमपि वक्तुं तदुक्तं तत्सिद्धिप्रकार प्रथममनुवदति—क्षणिकस्वलक्षणेति। क्षणिकानां निर्विशेषस्वरूपाणा परमाणूना निर्विकल्पकमात्रविषयत्वं, पुञ्जादिविशेषविशिष्टतयातु विकल्पविषयत्वं च तदभिमतम्। तथाहि—तन्मते-अर्थविषकं ज्ञानं प्रमाणं, तच्चद्विविधं-प्रत्यक्षमनुमानञ्चेति। अर्थजं ज्ञानं प्रत्यक्षं, अन्यदनुमानम्। तत्र निर्विकल्पकमेव प्रत्यक्ष प्रमाणंचभवति अर्थजत्वार्थविषकत्वाभ्यां तत्तल्लक्षणयोगात्। विकल्पस्तूभयरहितो नप्रत्यक्षं नप्रमाणं च। इदं च चार्वाकमते विपरितं वर्तते। सद्यविशदावभासत्वान्निर्वि

---

அது உண்டாவதற்குப் பாங்காக பரமாணுக்களுக்கு ஒன்றுடன் ஒன்று ஸம்பந்தம் கூடுமென்றோ, நெருங்கி இடைவெளியின்றி நிற்கமுடியுமென்றோ இவன் ஓர் தன்மையை ஒப்பவில்லை?

ஸவிகல்பகம் (கூட்டறிவு) அப்ரமாணம் எனல்
இவனுக்கே இடர்தரும்

இப்படி விகல்பம ப்ரமாணமன்றென்கிற இவனுக்கு விகல்ப வ்யவஸ்தாப்யமான நிர்விகல்பமும

कल्पकमप्रमाणं, विशदत्वाच्चसविकल्पकं प्रमाणमित्याह । एषान्तु विकल्प एवाविशदावभासः । **तदुक्तं शास्त्रदीपिकायां**—एतन्मतप्रस्तावे—"विषयावभासोपरोक्षावभासः । विकल्पस्तु अभिलापसंसर्गयोग्यप्रतिभासत्वान्न स्वलक्षणं स्पृशति । नहि अभिलापस्स्वलक्षणं स्पृशति । यदि स्पृशेत् अभिलापमात्रेणापि विनाऽक्षव्यापारम परोक्षावभासास्यात् । नचासावस्ति । तदुक्त—"अन्यथैवाग्निसंयोगाद्दाहं दग्धो हि मन्यते । अन्यथा दाहशब्देन दाहार्थस्संप्रकाशते " इति । तस्मादभिलापस्तावन्नविशदाकारमवभासयती"ति । अत्र "पुजविकल्पविषयமாம எனனுமம" इति वाक्य परिसमाप्याथ "இப்படி विकल्पத்திலே" इत्यादि वाक्यान्तरतयापठनीयम् । नतु "पुजविकल्पविषयமாமென்று மிப்படி इत्येकवाक्यतया । अनन्वयात् । एवमनूदितं तन्मतं दूषयितुं, किमत्र तथाकल्पने निर्विकल्पकं प्रमाणं, अथविकल्पः, उतानुमानमिति विकल्पं मनसि निधाय प्रथमं प्रत्यस्यति—இப்படி विकल्पத்திலே इति । இப்படி - प्रथमं क्षणिकस्वलक्षणपरमाणवः निर्विकल्पके विषयीभूय पश्चात्पुञ्जदशाविशिष्टतया । निर्विकल्पकம ப்ரமாணமாக மாட்டாது इति "अस्तिह्यालोचनंज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजमि"त्यादिनाऽविशिष्टशुद्धवस्तुविषयकस्यनिर्विकल्पकस्यैव तन्मते प्रामाण्यात पुञ्जदशादिविशिष्टतया तेषा न निर्विकल्पकेन सिद्धिरिति भावः । अथ द्वितीयादिकमपि कल्पं कालयति—विकल्प इत्यादीना । "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकमि"ति एतत्पूर्वार्धम् । अपोढकल्पनत्वात् निर्विकल्पकमेवाभ्रान्त - प्रमाणमित्यर्थः । अपोढशब्दस्य विशेष्यत्वविवक्षया "कल्पनापोढे"ति परनिपातः । कल्पनाया· अपोढमिति अपोढशब्दस्य कर्तरिक्तप्रत्ययान्तत्ववा मन्तव्यम् । अयथावभासः कल्पना । निर्विकल्पकं प्रमेत्युक्तौ "ह्रदोवह्निमानि"त्यादाविव निर्विकल्पके धर्मितावच्छेदकाद्यांशिकप्रमात्वप्रतीतिं आदायसिद्धसाधनदोषंवारयितुं अभ्रान्त"मिति यावद्भ्रमभिन्नत्वरूपं सर्वांशे प्रमात्वमभिहितम् । वस्तुनिर्भासः - अर्थजत्वप्रयुक्तमर्थविषयकत्वम् । तदभावात् यः असवादः - बाधः । तस्मात् विकल्पः उपप्लवः- भ्रान्तिः । नभस्तलमलिनतादिबुद्धिवत् । यद्यपि जात्यादिविशिष्टवस्तुविषयकविकल्पे नभस्तलमलिनतादि-

பரமாணுக்கள் சுயம நிர்விசேஷமானவைகளாய இருப்பது பற்றி முதற்கண நிர்விகல்பத்தில் (ஊமை, குழந்தைகள போன்றவரின தெளிவில்லாவறிவில தோன்றி பிறகுதான கும்பலாக ஸவிகல்பகத்திலே முன்சொன்ன வறிவைவிட வேறுன தன்மைகளோடு கூடப்

प्रमाणமாக விரகில்லை विकल्पप्रामाण्य बाधकानुमानத்துக்கு अनेकान्त्यादिदोषங்கள் வரும் विकल्पमूल विशिष्टव्यापारமெல்லாம் कल्पितविषयமென்னுமிவனுக்கு स्वशास्त्रस्ववचनादि विरोधமுண்டாம். ஆகை யால் स्वपक्षस्थापकप्रमाणाभावம் माध्यमिकादिகளுக்குமிவனுக்கும் துல்யம்.

---

ष्विव प्रत्यक्षबाधोनास्ति, तथापि "नयाति न च तत्रासीत्" इत्यदिविकल्पनेन यौक्तिकबाधोस्तीति सोपिभ्रम एव। तदिदमुच्यते—तस्यामित्यादिकारिकया। तस्या - सविकल्पकसंविदि, यदेकंरूपं जात्यादिकं, बाह्य- मिव, अन्यतोव्यावृत्तमिव आभाति, तन्निस्तत्त्वं - अळीकं तत्र हेतुः—परीक्षानङ्गभावतः - तर्कोपोद्बलितप्रमाण- परीक्षाविषयत्वायोगादित्यर्थः नृसिंहराजीये दर्शितः। अनुमानமும் इति। तस्यापि पक्षसाध्यवैशिष्ट्यादि- विषयकत्वेन विकल्पवदप्रमाणत्वादित्यर्थः। தாங்களே கட்டுகையாலே इति। स्वयमेवतथा कल्पनादित्यर्थः। एवं कथनेन सिद्धान्तिन एतत्सर्वमनिष्टमिति ज्ञायते। अविशिष्टविषयकज्ञानस्यैवाप्रसिद्धत्वात्। बालमूकादि विज्ञानस्यापि विशिष्टविषयकत्वाभावे तत्र तत्र तेषा प्रवृत्त्यनुदयापातात्। एवं च निर्विकल्पकस्यापि जात्यादि विशिष्टवस्तुविषयकत्वेसिद्धे पूर्वापरकालवैशिष्ट्यादिरूपविवक्षितविकल्पाभानमात्रेण, स्वल्पधने निर्धनत्वव्यव- हारवत् निर्विकल्पकशब्दवाच्यत्वोपपत्तिः। सोयंदेवदत्त इत्यादौ चताद्दशविकल्पभानात् सविकल्पकत्वसिद्धि रित्याद्यन्यत्रविस्तरः। அவையும் - विकल्पः अनुमानञ्च। परमार्थத்தை - परमार्थभूतपुंजदशादिवैशिष्ट्यम्। காட்டமாட்டாது - तन्मते तयोःकल्पिताकार विषयत्वादित्याशयः।

अथ सविकल्पकस्यैवं प्रामाण्यप्रतिषेधे स्वमतव्याघातमाह—இப்படி विकल्पம் इति। विकल्प- व्यवस्थाप्यமான निर्विकल्पமும் इति अयंभावः — "नागृहीतविशेषणाबुद्धिर्विशिष्टेषूपजायते" इति न्यायेन विशिष्टविषयकविकल्पात् पूर्वं क्षणिकस्वलक्षणमात्रावगाहि निर्विकल्पकमावश्यकमिति हि विकल्पेन, निर्विकल्पकमनुमीयते। तत्र व्यवस्थापकहेतोर्विकल्पस्याप्रमाणत्वे व्यवस्थाप्य निर्विकल्पकमपि तथैव स्यात्। नच हेतोस्स्वज्ञानद्वारैवानुमितिप्रयोजकत्वात् हेतुस्वरूपस्यविकल्पस्याप्रमाणत्वेऽपि क्षतिविरहात् प्रमाणभूतेन विकल्प- ज्ञानेन निर्विकल्पकानुमितिर्निष्प्रत्यूहैवेति वाच्यम्। विकल्पवत् विकल्पज्ञानस्यापि विशिष्टविषयकत्वेन विकल्पत्वाविशेषात् अप्रामाण्यसिद्धेः। नहिभ्रमात्मकहेतुज्ञानात् प्रमात्मिकामनुमितिं कश्चिदुपैति। ननुधूमवान् वह्नेरित्यादौ धूमव्याप्यवह्निमानिति हेतुज्ञानस्य भ्रमत्वेपि तज्जन्यायाः पर्वतो धूमवानित्यनुमितेः प्रमात्ववदिहापि

---

பொருள்களைக் க்ரஹிக்கும் அளவில்) தோன்றும் என்றார்கள். அப்போது-அவை இப்படி தோன்றுகின்றன என்று நிர்விகல்பகம் நமக்கு அறிவிக்காது நிர்விகல்பகம் தன்மைகளைத் தெளிவிக்காது அன்றோ? இப்படி தோன்றுவதாக ஸவிகல்பமும் அறிவிக்காது. ஸவிகல்பகம்

இததாலே புத்தியிலும பொத்தவ்யஙகளிலும் ஸ்வபாவமெனன லாமவை ஸத்யம-விகாரமெனன லாமவை மித்யாஎனகிற விபாகமும கூடாது.

---

भविष्यतीति चेन्न । तत्रापि पर्वते धूमस्य प्रत्यक्षेण संवादादेव प्रामाण्यनिश्चयात् । केवलमनुमितिमात्रेण तदसिद्धेः । किञ्चात्र विकल्पस्य स्वविषयसामान्ये भ्रमत्वम् । तत्र हेतुज्ञानस्य व्याप्त्यंशे भ्रमत्वेपि धूमवह्न्यादिस्वरूपसद्भावांशे नभ्रमत्वमिति विशेषोऽपि बोध्यः । अथास्तु निर्विकल्पकानुमितिरपि भ्रमरूपैव । अथापि निर्विकल्पकस्य प्रामाण्यं प्रतिकाकथन्तेतिचेत् । अहो अत्यर्थं कुशलोसि । निर्विकल्पकानुमित्यप्रामाण्ये तथा निर्विकल्पकरूपसाध्यस्यैवासिध्या, कुतस्तत्प्रामाण्यप्रत्याशेति । ननुकिङ्कुर्मः ? यो विकल्पस्सविभ्रमः, यथा चाविगीतं, तथा जात्यादि विकल्प इति प्रबलेनानुमानेन विकल्पाप्रामाण्यसिद्धिर्दुर्वारेति चेत्तत्राह—**विकल्पप्रामाण्यबाधकानुमानेति** । **अनैकान्त्यादिदोष**ஙகளை इति । **एतदुक्तं भवति**— किं अत्रावच्छेदकावच्छेदेन साध्यसिद्धिरुद्दिष्टा, अथ सामानाधिकरण्यमात्रेण । आद्ये— विकल्पत्वेन रूपेण एतदनुमानापेक्षित पक्षसपक्षहेत्वादि विकल्पानामपि पक्षतया कोडीकृतत्वात् तदप्रामाण्येन तद्विषयपक्षादीनामप्यसिध्याऽऽश्रयाध्यादि दोषाः प्रादुष्युः **द्वितीये**— पक्षभिन्नेषु तेषु पक्षादिविकल्पेषु अद्ययावत् साध्यनिश्चयाभावेन सपक्षत्वासिद्धा परिशेषाद्विपक्षत्वे प्राप्ते साध्याभाववत्सु तेषु विकल्परूपत्वहेतुसत्त्वादनैकान्त्यमिति । **अनैकान्त्यादिदोषेत्यादिपदेन** पूर्वोक्ताश्रयासिध्यादिकं विवक्षितम् । विकल्पप्रामाण्यानङ्गीकारे अनर्थं दर्शयति—**विकल्पमूलेति** । क्षणिकस्वलक्षणपरमाणूनामप्रत्यक्षत्वेन तत्पुञ्जदशायामेव तद्विकल्पतः तेषु आनयनादिविशिष्टविषयकप्रवृत्त्यादिव्यापारस्य वक्तव्यतया, पदवाक्यरूपेण प्रवृत्तशास्त्रस्यापि विशिष्टार्थविषयकज्ञानद्वारैव प्रवृत्ति जनकत्वेन च भ्रमजन्यप्रवृत्तेर्विसंवादावश्यंभावात् नततः फलसिद्धिरिति स्वशास्त्रस्ववचनस्वप्रवृत्त्यादिविरोधोदुरुद्धर इत्यर्थः । **एवमुपपादितं स्वपक्षस्थापकप्रमाणदुर्भिक्षं निगमयति**—*ஆகையால* **इति** । यथा माध्यमिकेनसर्वशून्यत्वस्वीकारात्, **योगाचारसौत्रान्तिकाभ्या** स्थिरैकज्ञात्रनङ्गीकाराच्च तेषा स्वसिद्धान्तस्थापकप्रमाणवैधुर्यं, तथैवामीभिपि विकल्पद्प्रामाण्यानङ्गीकारेण स्वोक्तप्रकारविशिष्टप्रमेयासिध्या, प्रमाणतयाऽङ्गीकृतनिर्विकल्पस्यचाविशिष्टविषयकस्यानिर्णायकत्वेन एषामपि स्वसिद्धान्तस्थापकयुक्तिदौर्लभ्यमेवेति भावः ।

---

விவரம் தருமாயினும் அது பரமம் எனறு இவர்கள் கொள்கை பொருட்களை உள்ளபடி காட்டாமையாலும், முரணபடுவதாலும், அதில் தோனறும் ஒனறு வெளிப்புறததுளளது போலும வேறுபட்டது போலும தோனறி ஆராயமுறபட்டால மாறிவிடுவதாலும ஸவிகல்பகம பொய் எனறார் அவன மதததுப பெரியோர்கள். அநுமானததிறகும இதுவே கதியாயிருககும,

विशिष्टस्थिरविषयமாய் தோற்றுகிற புஞ்ஜவிகல்பம் ப்ராந்திரூபமெனகையாலே இது ஸயூத்யா சொல்லும் வாஸநாதிமாத்ரவசத்தாலும் கூடுகையாலே இவனுக்கு பாஹ்யார்த்தம் ப்ரத்யக்ஷமென்ன விரகில்லை.

---

अथैतत्कृतसत्यमिथ्याविभागमप्यत एव निराकुरुते—*இத்தாலே* इति । एतन्मते प्रमाणत्वाभिमत निर्विकल्पस्य वस्तुतोप्रमाणत्वात् अप्रमाणतयोद्घोषितविकल्पस्य परमार्थतः प्रमाणत्वाच्चेत्यर्थः । **बोद्धव्याः** बाह्यार्थाः । **स्वभाव**மென்னலாமவை=क्षणिकस्वलक्षणशब्दवाच्याः अर्थाः । **सत्य**ம=निर्विकल्पकप्रमाणवेद्यत्वात्पारमार्थिकाः । **विकार**மென்னலாமவை=विकारशब्दवाच्या आगन्तवोधर्माः । **मिथ्या**=विकल्पवेद्यत्वात्कल्पिताः । **विभाग**மும் கூடாது इति । त्वदभितदिशा प्रमाणविभागस्यासिध्या अर्थेषु तत्कृतः त्वदभिमतः सत्यमिथ्यात्वविभागोऽपि नसिध्यत्येवेति भावः ।

अथानेन योगाचारसौत्रान्तिकव्यावृत्तये यद्बाह्यार्थस्य तत्प्रत्यक्षत्वस्यच कक्षीकरणं, तदसिद्धिमप्याह—**विशिष्टस्थिरेति** । परमाणवः क्षणिकत्वात् अप्रत्यक्षाः, अथापि पुञ्जदशायां विकल्पप्रत्यक्षविषया भवन्ति । विकल्पस्वविशिष्टावगाहित्वात् भ्रान्तिरितिहि तन्मतमित्यर्थः । *இது*=भ्रान्तिरूपं सविकल्पक प्रत्यक्षम् । **सयूथ्य**ா=योगाचारास्सौत्रान्तिकाश्च । **इदमत्राकूतम्**=बाह्यार्थानङ्गीकर्तृयोगाचारमते स्वप्नदशायामिव बाह्यार्थविशेषसान्निध्यं विना केवलवासनयापि परमाणुपुंज विषयकविकल्परूपमिथ्या प्रत्यक्षसंभवात्, बाह्यार्थानुमेयत्ववादि सौत्रान्तिकनय इववा ज्ञाने आकारार्पणेन बाह्यार्थस्यानुमानसम्भवाच्च बाह्यार्थसद्भावे, तत्प्रत्यक्षत्वेच नर्निबन्ध इति । **वासनादीत्यत्रादिना** आकारार्पणस्य ग्रहणम् । **मात्रपदेन** बाह्यार्थसान्निध्यनियमोव्यवच्छिते । ततः फलितमेवाह—*இவனுக்கு* **बाह्यार्थ**ம **प्रत्यक्ष**மென்ன *விரகில்லை* इति । बाह्यार्थप्रत्यक्षत्वसाधकमुपायान्तरंनास्तीत्यर्थः । वरमाणुपुञ्जप्रत्यक्षस्य वासनादिनाऽन्यथासिद्धत्वादिति भाव. ।

एवं बाह्यार्थासिध्या ज्ञानज्ञेययोस्स्वभावसम्बन्धेन विषयविषयिभावोक्तिमपि निरस्यति—**ज्ञानज्ञेय**ங்களுக்கு इति । **अत्रेदं तन्मत तत्त्वम्** । **साङ्ख्याः** प्रकृतिविकृतिभाव पूर्वकं ज्ञानज्ञेययोर्विषयविषयिभावमाहुः । स्वच्छस्यान्तः करणस्येन्द्रि प्रणालिकया घटादिरूपेण परिणतिर्ज्ञानमित्यङ्गीकारात् । **नैयायिकास्तु** इन्द्रियार्थयोः षडविधसन्निकर्षपूर्वकं तयोस्तमामनन्ति । **वेदान्तिभिस्तु** इन्द्रियच्छिद्रादि द्वारा ज्ञानद्रव्यस्य घटादिनासंयोग

---

இப்படி ஸவிகல்பம் ப்ரமாணமாக மாட்டாது என்றால், அதனால் ஏற்படுத்தப்படுகிற நிர்விகல்பகமும் ப்ரமாணமாக வழியில்லை ஸவிகல்பகம் ப்ரமாணமன்று என நீங்கள் சொல்லும் அநுமாநங்களுக்கும் எத்தினையோ குறைபாடுகள் உண்டு. ஸவிகல்பம் காட்டுவ

அறிவு பொருளைப்பற்றுதல் அவற்றுக்குள்ள இயற்கை உறவால் என்பது தவறு.

ஜ்ஞானஜ்ஞேயங்களுக்கு ஸம்பந்தாந்தரம் வேண்டா ஸ்வபாவவிசேஷத்தாலே விஷயவிஷயி பாவம் என்றதுவும், ஜ்ஞானவிஷயமென்கிறன்று ஸத்யமாய அற்றுலிறே சொல்லலாவது காரணபூதபூர்வக்ஷணம் इन्द्रिय-

---

तद्तदाश्रयणरूपसन्निकर्षद्वयपूर्वकं विषयविषयिभाव उच्यते। एषाम्यतेतु ज्ञानार्थयोः क्षणिकतया भिन्नकालीत्वेन मिथः सम्बन्धाभावात् सम्बन्धान्तरं विनैव स्वभावत एव सोऽङ्गीक्रियते। तदुक्तं—"संविन्मात्रं स्वयं प्रकाशितं, अर्थोऽपि तादृशात् ज्ञानात्। ज्ञानसम्बन्धस्तु केन प्रकाशितः? सोऽपि तथैव संविदाप्रकाशित इति चेत्, तदुत्पत्त्यवस्थाया सम्बन्धस्यानिष्पन्नत्वात्। सम्बन्ध्यधीनसिद्धिकत्वात्सम्बन्धस्य, सम्बन्धिनोश्चक्षणिकत्वात्। सम्बन्धान्तरासिद्धेरिति" इति। सत्यமாய அற்றுலிரே=सत्यतया=स्थिरतया सिद्धं चेत्। சொல்லலாவது इति। तथा च ज्ञेयपदार्थस्यैवासिद्धौ कस्य ज्ञानेन स्वभावमिळितत्व भवति। नह्यलब्धस्वरूपस्य स्वभावोनामकश्चिदस्ति। तस्माद्बाह्यपदार्थासिद्धौ इदमप्यसिद्धमेवेति भावः। अथबाह्यार्थसद्भावमन्वारुह्यज्ञानार्थयोर्भिन्नकालत्वेऽपि इन्द्रियसंयोगपूर्वकं तयोर्विषयविषयिभावमाशङ्क्य परिहरति—**कारणभूतपूर्वक्षणம்** इति। **सौगतनये** कालाख्यस्वतन्त्रपदार्थाभावात् क्षणोपाधयोघटादय एव क्षणशब्देन व्यवह्रियन्ते। तथा च ज्ञानकारणीभूत पूर्वक्षणवृत्ति घटस्येन्द्रियसंयुक्तत्वात् तत्पूर्वकं, उत्तरक्षणवर्तिज्ञानं स्वकालेऽतीतमपि पूर्वघटक्षणं विषयीकरोति। **इयांस्तु विशेषः**—**नैयायिकादयोऽपि** स्वजनकेन्द्रियसंयुक्तमेवार्थं ज्ञानं गृह्णतीति वदन्ति। अथापि इन्द्रियसंपृक्तस्य अर्थस्यस्थिरस्यतन्मते ज्ञानसमकालत्वमपि भवति। **एतेषांतु** इन्द्रिय संप्रयुक्तोर्थः पूर्वक्षणएव। ज्ञानञ्च तदुत्तरकालएवेतिभिन्नकालत्वं सिद्धान्त इति। एतद्दूषयति—**सर्वलोकोपलम्भेति**। इन्द्रियैर्विषयप्रकाशनं ज्ञानसमकाल एवक्रियत इति हि सर्वलोकानुभवः। तथाहि—विषयप्रकाशन नाम विषयस्य व्यवहारानर्हतानिवृत्तिः। सा च विषयव्यवहारकारण सम्पत्त्याभवति। ऐन्द्रियिक विषयव्यवहारेच विषयः व्यवहर्तव्यतद् ज्ञानं च कारणमिति, तयोर्नैयायिकादिवत्समानकालत्वमावश्यकमेवेति भावः।

अथातीतार्थविषयकत्वं प्रत्यक्षविशेषस्य क्वचिद्दृष्टमिति पुनश्शङ्कते—**व्यवसाय विषयेति**। **ज्ञानस्य परप्रकाशत्ववादिनोवैशेषिकादय** एवं वदन्ति—व्यवसायोऽनुव्यवसायश्चेति ज्ञानं द्विविधम्। व्यवसायः

---

தெல்லாம் மாறுபட்டதாகில, அதைக்கொண்டு நீங்கள் செயல்படுவதெல்லாம் தப்பாகித் தம் சாஸ்த்ரம் தம் பேச்சு இவைகளுடன் விரோதமே ஆகையால் மாத்யமிகாதிகளுக்கும் இவனுக்கும் தாம் சொல்லும் பொருளுக்கு ப்ரமாணம் பஞ்சமாகியே இருக்கும்.

सम्प्रयुक्तமாகையாலே இது सम्बन्धமாக उत्तर ज्ञानம் पूर्वक्षणத்தை ग्रहिக்கிற தென்றதுவும் सर्वलोकोप-लम्भसिद्धமான ज्ञानसमकालविषयप्रकाशத்தாலே निरस्तம்.

---

पूर्वोत्पन्नं वस्तुमात्रविषयकं ज्ञानम् । अनुव्यवसायश्च व्यवसायमनुजायमानं तद्वस्तुतद्ज्ञानज्ञातृरूपत्रिपुटी-साक्षात्कारात्मकं मानसप्रत्यक्षम् । यथाऽयं घट इति ज्ञानं प्रथमजातं व्यवसायः । तदनु घटमहं जानामीति जातं ज्ञानं अनुव्यवसाय । ज्ञानस्वयंप्रकाशत्ववादिनांत्वयं क्रमोनास्ति । प्रथममेव घटमहं जानामीति प्रत्ययोभवतीति तेषां सिद्धान्तात् । इह यद्यपिव्यवसायानुव्यवसायोभयं यत्र प्रत्यक्षरूपं, तत्र ज्ञानद्वयस्यापि स्वसमकालवर्तिवस्तु ग्राहकत्वमेवेति न प्रकृतदृष्टान्तताभावति । तथापि यत्र प्राथमिको व्यवसायः अतीता-नागतादिवस्तु विषयकानुमिति शाब्दबोधादिरूपः, तत्राप्यनुव्यवसाये "इममर्थमहमनुमिनोमि, शाब्दयामी"त्या कारके मानसप्रत्यक्षरूपे अतीतादिवस्तुविषयकत्वविशिष्टव्यवसायस्य विषयत्वात्, क्वचित्प्रत्यक्षविशेषस्यानु-व्यवसायस्य स्वविषयव्यवसायद्वाराऽतीतविषयकत्वमप्यस्तीति दृष्टान्तोपपत्तिरिति भावः । अत्र दृष्टान्ते भविष्य-द्ग्रहणं वस्तुस्थितिमनुरुध्य, ननु प्रकृतोपयोगाय । प्रत्यक्षेण पूर्वक्षणग्रहणस्यैवात्र विचार्यमाणत्वादिति ध्येयम् । ननु इन्द्रियजन्मनोलौकिकप्रत्यक्षस्याय नियमः — यत् स्वसमकालवर्तिनोविषयस्यैवग्राहकत्वामिति । प्रकृते च अनुव्यवसाये अतीतादिविषयस्य व्यवसायरूपज्ञानलक्षणाप्रत्यासत्त्यैव भानात् तदंशे तस्यालौकिकत्वमेवेति लौकिकप्रत्यक्षस्यातीतक्षणावगाहित्वेनैतत्पर्याप्तं निदर्शनमित्यरुचेर्दृष्टान्तान्तरमनुसरति—विनश्यदवस्थेति । स्वनाशाव्यवहितपूर्वक्षणावच्छिन्नेत्यर्थः । अयमाशयः—समनन्तरक्षणे विनङ्क्ष्यतो वस्तुनः यत्र पूर्वक्षणे इन्द्रियसन्निकर्षाधीनं लौकिकं प्रत्यक्षं जातं, तत्रोक्षरणे विनाविषयं प्रत्यक्षस्यानुवृत्तिर्वक्तव्या । आत्मादिविभु-विशेषगुणाना स्वानन्तरोत्पन्नविशेषगुणेनैव नाश्यतया प्रथमज्ञानस्य द्वितीयज्ञानेन विनाशे ज्ञानानां नैकक्षणमात्रा-वस्थितिरिति अनेनदृष्टान्तेन समीहितसिद्धिरिति । சொல்லுவாரபடியிலே=वदता नैयायिकादीना नीत्या । एतन्मते ज्ञानस्य स्वयंप्रकाशतया व्यवसायानुव्यवसायभेदानादरणात्, सर्वेषां पदार्थानां क्षणिकतया ज्ञानस्य द्विक्षणावस्थायित्वासिद्धेश्चेति परमत प्रक्रिययाऽयं दृष्टान्त इति भावः । " अत्र उत्तरविषयज्ञानक्षणத்திற்கு

---

இப்படி இவனுக்கு ப்ரமாணம தேட்டமாகையிலேலே பொருட்களில் இயலபாயுள்ளது ஸதயம, செயறகையானது மிதயை எனற பாகுபாடும் நிலைககாது பரமாணுக்களைக் குவியலாககாட்டும ஸவிகலபம இவனுககுப பொயயான பிறகு மறற பௌததர்கள கூறுவது போல பொருள இல்லாமலேயே முன வாசனையினபடி பொயயான அறிவு பிறககலா மாகையாலே "புறப்பொருள உணடு—அதுவும ப்ரத்யக்ஷம்". எனற இவன கட்டு தளரும்.

व्यषसायविषयஙகளான भूतभविष्यद्वस्तुககளை व्यवसायத தோடொகக अनुव्यवसायம ग्रहिககு மெனறும, विनश्यदवस्थवस्तुविषयप्रत्यक्षம विषयविनाशததுககுப பினனும क्षणान्तरस्थायि எனறும சொல்லுவாா படியிலே पूर्वविषयक्षणம उत्तरज्ञानक्षणததிறகு विषयமாகததடடென ? எனனில—

---

विषयமாக" इत्येव पाठो दृश्यते । "उत्तरज्ञानक्षणததிறககு विषयமாக इतितु युक्तः पाठः । यथाश्रुतेऽर्थतः पुनरुक्तेः । தடடு—प्रतिबन्धः । अथातिप्रसङ्गेनैतद्दूषयति—இபபடிசசொனனாலும इति । **एवं** दृष्टान्तकथनेऽपीत्यर्थः । **वस्तुतस्त्विदमपि** निदर्शनं नप्रकृतानुगुणमित्याकूतम् । **तथाहि**—अस्माभि-रिसषाधायिषितं ज्ञानस्यार्थसमकालत्वं, **नार्था**धिकरणक्षणत्वव्यापकाधिकरणताकत्वरूपं अर्थान्यूनकालत्वम्, **नवा**स्वाधिकरणक्षणत्वव्यापकाधिकरणताकार्थकत्वरूपं अर्थानधिककालत्वम्, **नापि** अर्थाधिकरणक्षणत्वसम-व्याप्ताधिकरणताकत्वरूपं अर्थान्यूनानधिककालत्वं च भवति । नहि ज्ञानमर्थश्चेति समानायुष्क तत्त्वद्वयं, ज्ञानादधिक कालमर्थस्थितेः । अर्थादधिककालं ज्ञानास्तितायाः अनुपदं त्वयैव दर्शितत्वाच्च । किन्तु अर्थाधिकरणयत्किंचित्क्षणाधिकरणकत्वरूपं ज्ञानस्यार्थैककाल्यमेव । इदञ्च विनश्यद वस्थवस्तु-विषयकप्रत्यक्षे वस्तुनाशानन्तरं क्षणमनुवर्तमानेऽपि प्रथममुत्पत्तिक्षणावच्छेदेन सूपपादमितिनसर्वथा ज्ञानार्थ-योर्भिन्नकालत्वे तेन साध्येऽस्य दृष्टान्तत्वसम्भव इति । **विषय**மாக **प्रसङ्गि**ககும इति । उत्तर-यत्किंचित् ज्ञानक्षणं प्रति सर्वेषां पूर्वक्षणाना पूर्वत्वा विशेषादिति भावः । अतिप्रसङ्गवारणाय नियामकान्तरं शङ्कते—அவறறுககு इति । सर्वलोकवर्तिपूर्वक्षणानामित्यर्थः । இநத **ज्ञान**ததைககுறிதது—अनन्त-रोत्पन्नत्वेन विवक्षितैतत् ज्ञानविशेषं प्रति । **कारण**ம்மிலலை इति । एकसन्तानानुप्रविष्टपूर्वक्षणावच्छिन्न-विषयविशेष **एव** हि तद्देशे—अनन्तर ज्ञानक्षणस्यकारणमिति बाह्यार्थवादिनोः**सौत्रान्तिकवैभाषिकयोर्मतम्** । तद्देशे **एकसन्ताने पूर्वज्ञानक्षण एवो**त्तरज्ञानक्षणस्यविषयमनपेक्ष्यकारणमिति ज्ञानमात्रवादी **योगाचारः** । तथा च सन्तानान्तरानुप्रविष्टदेशान्तरस्थविषयाणा ज्ञानानाच सर्वथैतदुत्तरज्ञानक्षणकारणत्वाभावान्नापत्तिरिति हृदयम् । **दूषयति—आलम्बनक्षण**மபோலே इति । नीलादिविषयः आलम्बनक्षणः । **सौगतमते** अधिपति सहकार्या-लम्बनसमनन्तरप्रत्ययाश्चत्वारो ज्ञानोत्पत्तावपेक्ष्यन्ते । अत्र प्रत्ययशब्दः कारणवाची । "अपेक्षते प्रत्यय-मुत्तमं त्वाम्" "अतिष्ठत् प्रत्ययापेक्षसन्ततिस्सचिरं नृप" इति **कविप्रयोगात्** । "प्रत्ययोऽधीनशपथज्ञान-

---

அறிவுககும் பொருளுககும் ஸமபநதம் வேறுவித தொடாபினறியே தோனறும பிறககும் எனறதும தவறு. விஷயமெனனெரு பொருள பெறபபடவிலலையே இது காறும முன க்ஷணததிய பொருள புலன்களோடு பட்டமாததிரததிலலையே இதுவே தொடாபாக உததா

இப்படிச் சொன்னாலும் सर्वलोकத்திலுமுள்ள पूर्वक्षणங்களும் विषयமாகப் प्रसङ्गिக்கும் அவற்றுக்கிந்த ज्ञानத்தைக் குறித்து कारणत्वமில்லை என்னில்—आलम्बनक्षणம் போலே காரணங்களான अधिपतिसहकारि समनन्तरप्रत्ययक्षणங்களுக்கும் विषयत्वம் வரும் कारणत्वादिகள் तुल्यமாயிருக்க स्वलक्षण

---

विश्वासहेतुषु" इति कोशाच्च। तस्य अधि इत्यादिशब्दैः प्रत्येकं सम्बन्धः। तत्र नीलाद्यवभासस्य विज्ञानपद-वाच्यस्य चित्तस्वरूपस्य नीलाद्यालम्बनप्रत्ययान्नीलाद्याकारता भवति। चक्षुरादेरधिपतिप्रत्ययात् नीलादिग्रहण प्रतिनियमस्सिध्यति। उदितस्यहि विज्ञानस्य रूपरसादि सर्वसाधारण्येऽपि रूपाद्यन्यतम विषयग्रहण प्रतिनियमः चक्षुरादीन्द्रियविशेषात् भवतीति अधिपतिधर्मान्नियामकत्वाच्चक्षुरादेरधिपतित्वमिति भावः। सहकारि प्रत्ययादा-लोकादितः विज्ञानस्यस्पष्टता। समनन्तरप्रत्ययात्—अनन्तर पूर्वक्षणात् ज्ञानज्ञेययोस्तद्रूपत्वं भवति। तथा हि—एकस्या सन्ततौयादृशः पूर्वक्षणः तादृशएवोत्तरक्षण इति पूर्वस्य प्रत्ययस्य बोधरूपत्वे उत्तरस्यापि तथात्वम्। पूर्वस्य घटादिबोध्यरूपत्वे उत्तरस्यापि तद्रूपत्वमिति। एतस्यतु विस्तरः प्रागेवाभिहितोभाव्यः। विषयत्वம் வரும் इति। तेषामपि कारणत्वाविशेषादिति बोध्यम्। पुनरपिनियामकान्तरंशङ्कते—कारणत्वादिகள் इति। स्वलक्षणस्वभावविशेषमात्रेति। अयं भावः—कर्ममूलचक्षुरादि प्रवृत्त्यनुपालनार्थं जीवेन्द्रियमिति करण किञ्चित्सौगतसमयसिद्धम्। तेनचेन्द्रियेण चक्षुरादीन्द्रियप्रवृत्तौ ज्ञानार्थयोस्सम्बन्धान्तरमन्तरैव स्वलक्षण-स्वभावविशेषेण विषयविषयिभावोभवति। पूर्वविषय विषयत्वं स्वलक्षणस्वभावः—स्वासाधारण स्वभाव इति यावत्। उत्तरज्ञानक्षणस्यापि विषयित्वं तथा। भिन्नकालयोर्ज्ञानज्ञेययोराकारार्पणक्षमत्वमेव सौत्रान्तिकनये विषयविषयिभावः। एतन्मतेतु स्वलक्षणस्वभावत एव सइत्यङ्गीकारात्, अधिपत्यादिप्रत्ययानामेतादृशस्वभाव-विरहात् नतेषां उत्तर ज्ञानविषयत्वप्रसङ्ग इति। मात्रशब्देन कारणत्वस्य नियामकत्वं व्यवच्छिद्यते। दूषयति—அப்படிப்பட்ட इति। जीवेन्द्रियस्य प्रेरणया चक्षुरादीन्द्रियप्रवृत्तेः सम्बन्धान्तरनिरपेक्षविषयविषयिभावतया हेतुभूतः तादृशस्वभावविशेषः चिरविप्रकृष्टे दूरस्थेचविषयेस्यादेव। जीवेन्द्रियस्य सर्वसाक्षात्कारे प्रवृत्तेस्स्वा-भाविकत्वात्। तथा च देशकालविप्रकृष्टास्सर्वेपदार्थाः उत्तरसर्वज्ञानेष्वऽपि भासेरन्निति अति प्रसङ्गस्स्यादेवेति। अचिरविप्रकृष्टस्याव्यवहित पूर्वविषयक्षणस्य उत्तरज्ञानक्षणे भानस्येष्टत्वात् चिरविप्रकृष्टेति चिरशब्दः।

---

ஜ்ஞானக்ஷணம் அதைப்பற்றும் என்றல—இது எங்கும் உள்ள நிலைக்கு மாறுபட்டது. பொருட்களை அறிவு தன்னுடன் ஸமகாலத்திலன்றோ அறிவுறுத்துகிறது.

முன்னல் பிறந்த ஜ்ஞானத்தை அதன் அதீதகால விஷயங்களுடன் சேர்த்துப்பின் பிறக்கும் ஜ்ஞானம் ப்ரத்யக்ஷமாகக்காட்டுகிறதெனவும், க்ஷணம் பின்னைய நாசமடைய

स्वभावविशेषमात्रத்தாலே भिन्नकालம் ग्राह्यமென்றல அப்படிப்பட்ட स्वभावविशेषसम्भवத்தாலே चिरविप्रकृष्टமும் दूरस्थமும ग्राह्यமாகலாம இப்படி आलम्बनस्वभावविशेषம கொள்ளுவார்க்கு अधिपपिसहकारिகளைக்கட்ட வேண்டுவதுமில்லை. அவையுண்டானலும स्वभावविशेषமில்லாதபோது आल-

एवं विषयविषयिभावहेतुतयाऽऽलम्बनस्वभावविशेषाङ्गीकारे, अधिपत्यादीना ज्ञानविषयनियमादिहेतुत्वमेवासिद्धंस्यात् ततएव तत्सिद्धेरित्याह— *இப்படி* इति । *கட்டவேண்டுவதும இல்லை* इति । "विषयः, करण यत्स्यात्, सहकारीभवतियश्च, संस्कारः । एते चतुर्विधाः किल हेतव एतान् प्रतीत्य जायन्ते ॥ ते चित्तचैत्तसंज्ञा...." इति हि तत्संप्रदायः । एतात् चतुर्विधान् हेतूत् प्रतीत्य—हेतूकृत्य रूपादीविज्ञान चित्तं सुखादयश्चैत्ताश्चजायन्त इति तदर्थः । तथाचैतादृश कल्पनं मुधेति भावः । एतदेवाधिपत्यादीनामप्रयोजकत्वं द्रढयितुं अन्वयव्यतिरेकाभ्या व्यभिचारमाह —*அவையுண்டானலும* इति वाक्यद्वयेन । *அவை*—अधिपत्यादयः । **आलम्बनं**—विषयः । तथा चैषामन्वयस्य कार्यान्वय व्यभिचारात् तद्व्यतिरेकस्यच तद्व्यतिरेकव्यभिचारात् न हेतुत्वमिति भावः । विषयविशेषस्य नैवमन्वयव्यभिचारः प्रदर्शयितुं शक्य इत्याह—**स्वभावविशेषेति** । *அவற்றையொழியத்தோற்றுகிறதில்லை*—अधिपत्याद्यभावे न ज्ञानगोचरीभवति । **व्यभिचारः**—स्वभावविशेषान्वयस्य कार्यान्वयव्यभिचारः । *கட்டவிரகில்லை* इति । येनस्वभावविशेषस्याप्यकारणत्वं स्यादित्यर्थः । ननुस्वभावविशेषविशिष्टनीलादिक्षणस्य पीतादिज्ञानसन्तनान्तरेऽभानात् सएवन्वयव्यभिचार इति शङ्कते—**सन्तानान्तर***த்திற்கு* इति । तथा च स्वभावमात्रस्यकारणत्वे सन्तनान्तरेतद्भानापत्त्या अधिपत्यादीनामपि भानकारणत्वमस्थेयम् । तथासति चक्षुरादीना नीलादिक्षणेष्वेव प्रवृत्त्यापीतादिज्ञाने तदभानोपपत्तिरिति निगर्वः । परिहरति—**नीलज्ञानज्ञेयेति** । नीलादिविषयक्षणस्य नीलादिज्ञानसन्ततावेव भाने स्वभावः । एवं नीलादिज्ञानसन्ततेरेव नीलादिग्राहकत्वं स्वभावः इति परस्परं स्वभावव्यवस्थाङ्गीकारात्, एतादृशस्य स्वभावस्य पीतादि ज्ञानसन्ततावभावात् नापत्तिरिति नाधिपत्याद्यपेक्षानवाव्यभिचार इति भावः ।

**एवं पूर्वं "विशिष्टस्थिरविषय***மாய தோற்றுகிற***"** इत्यारभ्य एतावता ग्रन्थेन सौत्रान्तिक खण्डनानन्तरप्राप्तं वैभाषिकमतखण्डनं अकारि । अथमाध्यमिकातिरिक्तबौद्धत्रयसाधारणं ज्ञानज्ञेयरूपतत्तदभिमतसर्व-

வேண்டிய ஒரு பொருளுக்கு முன்னடி பரதீயக்ஷம் வந்தால அது, பொருள காலாவதியாகியும சிலக்ஷணங்கள் நிற்கிறது என்றும் பிறர் கூறுவதுபோல சொன்னல் என்னவெனில— அப்போது எல்லா முன்காலப் பொருள்களும எல்லாபின ஜ்ஞாநங்களிலும தோனறவேணடும. அவற்றுக்கு இஜ்ஞாநத்தைக்குறித்து காரணத்வும இல்லை எனில—அப்போது காரணமான

ம்பனமாக மாட்டாது ஸ்வபாவவிசேஷமுள்ளபோது அவையில்லையாகிலும ஆலம்பனமாகலாம. ஸ்வபாவ விசேஷவிசிஷ்டமான க்ஷணிகஸ்வலக்ஷணம் அவற்றை யொழியத் தோற்றுகிறதில்லை என்று வ்யமிசாரம கடடவிரகில்லை. ஸந்தாநாந்தரத்திற்கு தோற்றுகிறதில்லையே என்னில்—நீலஜ்ஞானஜ்ஞேயக்ஷணத்வயஸ்வபாவ-நியமத்தாலே பரிஹாரமாம

---

पदार्थक्षणिकत्वमिदानीमेवव्युदस्यते—वैभाषिकादिகள इत्यादिवाक्यैः ग्रन्थलाघवाय। योगाचाराभिमतक्षणिक-ज्ञानस्य सौत्रान्तिकाभिमत ज्ञेयस्यचानेनाङ्गीकारात् एतद्दूषणेनैवतयोरपि एकोक्त्यादूषितत्वोपपत्तेरिति तत्तन्मत-प्रसङ्गे तत्तदसाधारणप्रक्रियामात्रं अदूष्यत। "निर्ययावथपौलस्त्यः पुनर्युद्धाय राक्षसैः" इति वत् पृथक् पृथक् पराजिता एतेत्रयोऽपि पुन परस्परसहिताः प्रकारान्तरेणेदानीं प्रत्यवतिष्ठन्त इति इहैवतेषां निश्शेष-निर्मूलनं भाव्यम्। மூவர—माध्यमिकव्यतिरिक्तास्त्रयः। माध्यमिकस्तु इदमहं जानामिति भासमानेषु त्रिषुपदार्थेषु ज्ञानज्ञेयज्ञातृरूपेषु योगाचारादिभिः ज्ञानादिमात्राङ्गीकरणं अर्धजरतीयमनुसरतीति अनुचितं मन्यमानः सर्वं शून्यं अवदत्। तस्मात्तन्मतस्यात्रानुपादानम्। தாங்களிசைந்த वस्तुக்களை स्वस्वाभिमतवस्तूनि। எல்லாம क्षणिकம इति। यद्यपि विभज्यवैभाषिकाख्योबौद्धः स्वाभ्युपगतेषु किञ्चित् आत्मतत्त्वं नित्यं आह। तथापि तत्पक्षस्यातिमन्दत्वेनात्रतदनादृत्य सर्वस्यक्षणिकत्वोक्तिः। एतत्तत्वं चाग्रेभविष्यति। क्षणिकत्वं स्वोत्पत्तिद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। सर्वलोकप्रसिद्ध निर्बाधप्रत्यभिज्ञाविरुद्धம इति। सोऽयं घट इति प्रसिद्ध प्रत्यभिज्ञया घटादेः पूर्वापरकालसम्बन्ध रूपस्थिरत्वावगमात् द्वितीयक्षणेऽपि तस्य सत्त्वमेवेति, न तद्वृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वसिद्धिरिति भावः। यद्यपि सोऽय घट इत्यादि प्रत्यभिज्ञायाः साजात्या-लम्बनत्वेनान्यथासिद्धिरेवानन्तरं शङ्किष्यते हृदोवह्निमानित्यादाविव न सर्वथा विषयापहारलक्षणोबाधः इति, मूले "अनन्यथासिद्ध प्रत्यभिज्ञे"ति वक्तव्ये "निर्बाधप्रत्यभिज्ञे"ति लेखनं अप्रसक्तप्रतिषेध इवभाति। तथापि तादृशसाजात्यालम्बनत्वस्य बाधफलत्वेन, विषयापहारवत् विषयसंकोचस्यापि बाधत्वेनवा तथा निर्देशोप-पत्तिः। तथाच महाकविप्रयोगः—"अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परे" इति। दृष्टान्ते उत्सर्गशास्त्रे संकोचस्य दार्ष्टान्तिकेषु परेषु बाधस्य च कृतव्यावृत्तय इति व्यावृत्ति शब्देन तन्त्रतः कथनात्। ननु सोऽयं

---

இந்த்ரியங்கள் முதலியனவும ஜ்ஞானத்தில் தோன்றலாம் ஏதோ ஒரு ஸ்வபாவ விசேஷத்தினுல் அவை இதில் தோன்றுவதில்லை எனில- அப்போது வெகு முன்னுள நடந்ததும தோன்றட்டும் மேலும இவ்வித ஸ்வபாவ விசேஷம கொள்ளுவதனுல இதனுலேயே ஸாவகிாவாஹமும் வருகையால இந்த்ரியம முதலியவைகளை அறிவுக்குக்காரணமாகக்கொள்ளவே வேண்டாம்

घट इत्यादीनां प्रत्यभिज्ञाना प्रत्यक्षबाधाभावेऽपि "सेय दीपज्वालेत्या"देरिव यौक्तिकबाधसम्भवात् नताभिः स्वयंबाधिताभिः क्षणिकत्वबाध इत्याक्षेप्तुं प्रथमं तत्र युक्तिमाह—**सम्प्रतिपन्नेति**। अय भावः—प्रथमज्वालोत्पत्तो- वर्त्त्यवयवाग्निसंयोगस्य, अन्तिमज्वालानाशेतत्संयोगनाशस्यच हेतुत्वं स्पष्टदृष्टमिति मध्येऽपि वर्त्यवयवाग्निसंयोगत- न्नाशानां प्रतिक्षणभावित्वस्याप्रत्याख्येयतया प्रतिक्षणं ज्वालोत्पत्ति विनाशावेष्टव्यावेवेति युक्त्या "सेयंदीपज्वाले"ति प्रत्यभिज्ञा, तत् - ज्वालाहेतुभूतवर्त्यवयवाग्निसयोग सदृशवर्त्यवयवाग्निसंयोगहेतुकेयं ज्वालेत्येतमेवार्थं बोधयति तज्ज्वालासदृशेय ज्वालेतिवा। नतु तत्ज्वालाऽभिन्नेयं ज्वालेति इति यथाङ्गीक्रियते, तथैव प्रकृते "सोऽयं घट" इति ज्ञेयपदार्थ "तदेवेदं ज्ञान"मिति ज्ञानपदार्थेच जायमाना प्रत्यभिज्ञाऽपीति नज्ञानज्ञेययोः क्षणिकत्वे प्रत्यभिज्ञाविरोधः। यत. नदीप्रवाह, कृत्तपुनर्जातकेशादिवत् घटादीनामपि क्षणिकपरमाणु पुञ्जप्रवाहरूपत्वात् कारणभूतपूर्वपुञ्जसदृशपुञ्जरूपत्वमेव तेषा प्रत्यभिज्ञय.बोध्यते। एवमेवालयविज्ञानप्रवृत्तिविज्ञानरूप प्रवाहेषु तदेवेदमिति पूर्वोत्तरज्ञानक्षणसाजात्यमेवेति च बोध्यमिति। दूषयति —**अनन्यथासिद्धेति**। दीपज्वालाकार- णाना वर्त्यवयवाग्निसंयोगाना प्रतिक्षणं भेदस्यापह्नोतुमशक्यतया ज्वालाभेदस्याप्यप्रकम्प्यत्वेन तत्र प्रत्यभिज्ञाबाधेऽपि, घटादीना प्रवाहरूपताया पुंजकारणताया तद्भेदेचेषदपि प्रमाणवैधुर्यादत्र प्रत्यभिज्ञानि- राबाधेति, तल्लब्धस्थिरत्वविरुद्धं क्षणिकत्वं नक्षणमपि जीवतीति भावः। तथा च पूर्वोक्तानुमाने **बाधितत्व मुपाधि**, दृष्टान्ते साध्यव्यापकत्वं पक्षेसाधनाव्यापकत्वमित्यदिकं बोध्यम्। किञ्च न केवलमनन्यथासिद्ध प्रत्यभिज्ञायाः विषयशोधने हेतुविधया स्थैर्यबोधकत्वेन क्षणिकत्वबाधकत्वमात्रम् किन्तु तदन्यथासिद्धत्वेपि तदुत्पत्तिनिरूपणे तस्यास्स्वरूपत एव स्थिरत्वसाधकतयाऽपि क्षणिकत्वबाधकत्वमस्ती त्याह—**सर्वं**மும **क्षणिक**மாலை इति। **पूर्वापरसादृश्यादि प्रतिसन्धानेति**। अन्यथा प्रत्यभिज्ञायास्साजात्यालम्बनत्वाय तत्तेदन्ताभ्या पूर्वापरकालवर्तिनोः परामर्शोऽपि न स्यादित्यर्थः। ஆளில்லாமையாலே इति सर्वस्य क्षणिकत्वेन आश्रयभूतस्थिरपुरुषाभावादित्यर्थः। **भ्रान्तिरूप प्रत्यभिज्ञै**ய மிக்கு। सर्वक्षणिकत्वपक्षे यथार्थभूतायाः प्रत्यभिज्ञाया एवानुपपत्तिरितिन, किन्तु तत्पक्षे भ्रान्तिरूपतत्स्वरूपमप्यनुपपन्नमित्याशयः। अथ इन्द्रियसहकृतसंस्कारजन्यस्स्मृतिप्रत्यक्षोभयाकारः ज्ञानविशेषः प्रत्यभिज्ञा। तस्या अनुपपत्तिस्तत्पक्ष

---

இது இருந்தால மற்றவை இராமலும் காரியம நடக்கலாம். அவை இருந்து இது இல்லா விடில காரியம நடைபெறுவதில்லை. இது இருந்தும ஒரு பொருள மற்றய அறிவுததிரளுக்கு இலக்காவதில்லையே என்றால-அது வேறு விஷயம் இந்த இயற்கை ஸவபாவமே அங்கு இல்லை எனபோம்.

इतीदं दूरेतिष्ठतु। किन्तु केवलसंस्कारमात्रजन्यस्मृतिसामान्यमपि तन्मते नोपपद्यत इत्याह—**स्मृतिमात्र**மும் इति। अत्रमात्रशब्दः कृत्स्नार्थकः। संस्काराधारस्थिरात्मानङ्गीकारादित्यर्थः। तदिदं सर्वमभिप्रेत्य **प्रवृत्तं ब्रह्मसूत्रं**— "अनुस्मृतेश्चे"ति। ननु "न सादृश्यप्रत्ययः पूर्वोत्तरवस्तुद्वयज्ञानजन्यः तद्द्वयसादृश्यावगाही। किन्तर्हि- कश्चिदेष विकल्पः स्वाकारमेव बाह्यत्वेनविषयीकुर्वाणः क्षणान्तरास्पर्शी। अतो न स्थिरद्रष्ट्रपेक्षा" इति **शङ्कर- भाष्योक्तदिशा** सर्वस्य क्षणिकत्वेऽपि स्थिरात्मानं विनापि प्रत्यभिज्ञोपपद्यत इत्यत्र प्रकारान्तरेण स्थैर्यमात्मनस्साध- यति அப்படியே इति। किञ्चेत्यर्थः। **पुण्यपापेति**। एतन्मतेपि जगत्प्रवृत्त्यादि हेतुभूताविद्यादिवत् **भवाख्यः कश्चित्पदार्थोऽङ्गयकारि**। भवत्यस्माज्जन्मादीति भवः धर्माधर्माख्यः इति तद्व्याख्यानम्। **कर्ताभ**வுகு **तत्फलभोग**ம் கூடாமையாலே इति। कर्तुरपिक्षणिकत्वात् तत्फलभोगायोगः, अन्येन तदनुभवे अन्यत्वा- विशेषात् एकेन कृतं सर्वेषां भोगाय स्यादित्यतिप्रसङ्गः इति भावः। **तदुक्तं जैनैः-बौद्धान् प्रति**—"कृत प्रणाशाकृतकर्मभोग, भव, प्रमोक्षस्थितिभङ्गदोषान्। उपेक्ष्य साक्षात् क्षणभङ्गमिच्छन् अहो महासाहसिकः परोऽसौ" इति।

अथैतदतिप्रसङ्गवारणाय **सिद्धान्तदीपिकोक्तमपि** दृष्टान्तं दूषयति—**यस्मिन्नेवहीति**। **कर्मवासने** त्यनुभववासनाया अप्युपलक्षणम्। तथा च धर्माद्यनुष्ठातुः क्षणिकत्वेऽपि तत्समानसन्तानप्रसूतस्यैव फलोप- भोगः नसन्तानान्तरवर्तिनः तत्र तद्वासनाननुवृत्ते॰ इति नातिप्रसङ्गः। **तदुक्तं**—"समानसन्तानवर्तिनामेव प्राचीनप्रत्ययः कर्मकर्ता, उत्तरप्रत्ययः फलभोक्ता। नचातिप्रसङ्गः, कार्यकारणभावस्यनियामकत्वात्। यथा मधुररसभावितानामाम्रबीजानां परिकर्षितायां भूमावुप्तानां अङ्कुरकाण्डस्कन्धशाखापल्लवादि द्वारा, परम्परया फले माधुर्यनियमस्तथेति। **कार्पासादिदृष्टान्तोऽप्यन्यत्रविवृतः**-यथा—"कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते। शक्ति राधीयते तत्र काचित्तां किन्नपश्यसि" इति। दृष्टान्तानुपपत्ति मेवाह—**वासनाधारेति**। दृष्टान्तो विषमः। तत्र कार्पासबीजादौ दोहदसंस्काराधारास्थिरतदवयवानुवृत्त्या रक्तिमनियमेऽपि एतत्पक्षे पदार्थानां निरन्वयविनाशाङ्गी- कारेण वासनाधारस्य तदवयवस्य कस्यापि क्षणिकतत्सन्तानेऽनुवृत्त्यसम्भवात् पूर्वोक्तश्लोके "यस्मिन्-तस्मिन्" इति अभेदसम्बन्धनिर्देशेन भोगप्रतिनियमोदुर्वच इति भावः। **तदुक्तं**—"दोहळद्रव्याणां यावत्कार्योत्पत्ति

---

இவர்கள் மூவரும் தாங்களிசைந்த வஸ்துக்களை க்ஷணப்போது மட்டில் நிற்பவை களாகக் கொண்டார்கள். இது உலகில் வரும—"அதுவே இது" என்ற நினைவுக்கு நேர் விருத்தமானது விளக்கின் கொழுந்தான ஜ்வாலை நிறை நிறையாக ஒன்றின் பின் ஒன்ருக வருவதுபோல், குடம் முதலியனவும் க்ஷணந்தோறும் பரமாணுக்குக் கூட்டம் மாறியதால்

सूक्ष्मरूपेणावस्थानस्य **आयुर्वेदादिदोहळशास्त्रे** प्रसिद्धत्वा"दिति । तथाचैवमादि दृष्टान्तप्रदर्शनदन्धनं बौद्धैः कृतं केचिदन्धीकृतबुद्धयस्तत्त्वमेव बुध्दन्तोमुह्यन्तीत्युपहसितमन्यत्र—"अर्थानुपेतामसतीं प्रकल्प्य यद्वासनामर्थं निराक्रियेयम् । आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहंगतास्तत्रकथं चिदन्ये" इति । अर्थानुपेतां बाह्यपदार्थशून्यां स्वयंचासतीं क्षणिकां वासना प्रकल्प्य, इयमर्थनिराक्रिया अयं प्रपञ्चप्रतिषेधः आस्थानिवृत्त्यर्थं वैराग्यजननाय । इत्थंकथनं बौद्धोद्घोषमनुसृत्य । बौद्धैर्यदवादि, तत्र केचिदन्ये=मायावादिनः कथंचित् ग्राहं=मोहं गताः संसक्ता इत्यर्थ. । अस्य **वार्तिकश्लोकस्य** निरालम्बनवादान्तोक्तस्य **एवमेव** अद्वैतिकृतबौद्धादरणपरतयैव **पार्थसारथिमिश्रैः** व्याख्यानं विहितम् । **एतच्छलोकप्रत्यभिज्ञयैवाचार्यैः**—आस्थानिवृत्त्यर्थं क्षणिकत्वमुपदेष्टव्यमिति चेत् .. सूक्ष्मधियस्तत्रैवास्थानिवृत्तिप्रसङ्गादित्यूचे । अस्मिन् निरन्वयविनाशपक्षे सर्वेषा पूर्वक्षणानां पूर्वत्वाविशेषात् विशेषान्तराभावाच सर्वानुत्तरक्षणान्प्रति कारणत्वापत्त्या नसन्तानैक्यव्यवस्थापकं किञ्चिदिति "यस्मिन् सन्ताने-तत्रैव" इति भोगनियमप्रदर्शनं नसम्भवतीति पूर्वमेवयोगाचारमतभङ्गे उक्तं, नात्रकिञ्चिदवशिष्यत इत्याह—**निरन्वयविनाशपक्ष**த்தில் इति । तत्र **विनाशोद्विविधः**—सान्वयो निरन्वयश्चेति । तयोरेवान्यथापिव्यवहारः स्थूलस्सूक्ष्मश्चेति । तत्र घटादीना मुद्गरपातानन्तरं जायमान विनाशः स्थूलः सर्वैरुपलभ्यमानत्वात् सान्वयः कपालाद्यनुवृत्तेः । तस्यैव प्रतिसङ्ख्यानिरोध इति नामान्तरम् । प्रतिकूलासंख्या बुद्धिः प्रतिसङ्ख्या । विषयसत्त्व-प्रतिकूला तदसत्त्वग्रहिणी लौकिकाना बुद्धिः । तद्विषयो निरोध इति स्थूलस्यैवान्वर्थं नामान्तरम् । तदन्यस्सूक्ष्मो-विनाशः निरन्वयः अप्रतिसङ्ख्यानिरोध उच्यते । सचलौकिकैरगृह्यमाणः युक्त्यानिरूप्यमाणः पदार्थानां प्रतिक्षण-भावी विनाशः इति **विवेकः** । சொன்னேம इति । **योगाचारमतभङ्गे**—सन्तनैक्यத்துக்கு व्यवस्थापकம் கொள்ளவிரகில்லை इत्यादिनेत्यर्थः ।

अथ पदार्थानां निरन्वयविनाशमेव निराकरोति **दीप**த்தில் इति । यो विनाशस्सनिरन्वयः, यथान्त्य-दीपस्य । अस्तिच प्रतिक्षणं विनाशोजातानाम् । अतस्सोऽपिनिरन्वय इति प्रतिक्षणं घटादिनाशोऽपि निरन्वयत्वं, दीपे दृष्टमिति तद्बलात् कल्पयन्ति । **तदुक्तं**—"स निरन्वयनाशस्स्यात् धर्मोधर्म्यपि वा पुनः पूर्वसंघातभागोवा यद्भावे नानुवर्तते ॥ उत्पत्तिश्चतथाभूता निरन्वयसमुद्भवा । तावुभौ सर्वभूतानां नियताविति सौगताः ॥" इति ।

---

வரும் பொருளேயாகையால் அவை முன்னதைப்போன்று இருக்கின்றன என்ற கருததில "அவையே இவை" என்ற ப்ரமம் பிறக்கிறது. ஆகையால ஒனறும நிலேததிராது என்னில்—விளக்குகளின ஜ்வாலே விஷயமே வேறு எண்ணெய் திரிமுதலிய காணமே துங்களால் காரியமான ஜ்வாலேயும் மாறுவது நியாயமே. இங்கு குடம முதலியன அவ்

பொருட்கள் கணநேரத்தியன என்றதும் விருத்தம்

वैभाषिकादिகள் மூவரும் தாங்களிசைந்த वस्तुக்களை எல்லாம் क्षणिक மென்று கொள்ளு கிறவிது सर्वलोकप्रसिद्धनिर्बाध प्रत्यभिज्ञाविरुद्धம் सम्प्रतिपन्नदीपादिसन्तति போலே पुञ्जात्पुञ्जोत्पत्तियாலே வருகிற घटादिகளிலும் ज्ञानसन्ततिகளிலும் कारणसादृश्यத்தாலே भ्रान्तिरूपप्रत्यभिज्ञै வருகிறதாகை

---

घटादिகளில கண்ட इति। तथा चान्त्यदीपविनाशोऽपि सान्वय इति तद्दृष्टान्तेनोक्तानुमानायोगात्, योविनाशस्ससान्वयः विनाशत्वात् मुद्गरादिना सान्वयघटादिनाशवत् इति विपरीतं किन्नस्यादित्यर्थः। अत्र मुद्गरादिना घटादिनाशे तदवयवानुवृत्तेः प्रत्यक्षसिद्धत्वात्, दीपनाशे तदननुवृत्तेरनिश्चिततया उत्तरानुमानस्यैव दृष्टान्तानुगुण्येन बलवत्त्वमिति न प्रकरणसमोदोष इत्यभिप्रायः। ननु दीपनाशेऽपि तदवयवाननुवृत्तिः निश्चितैव, अनुपलब्धेरिति पूर्वानुमानमप्युत्तरेण समबलमेवेति स एव दोषोस्त्वित्यत्राह—दीपावयवங்கள் इति। तथा च जलबुद्बुदादीना नाशेऽपि परितः कदाचित् तदवयवसद्भावेन शैत्योपलब्धिवत्, प्रदीप्तदीपादिनिकटवर्तिना तन्नाशेऽपि तदवयवै कदाचिदूष्मोपलब्ध्या, अन्यदा तदनुपलब्धिस्तदवयवाना सतामेवानुत्कटत्वेनाप्युपद्यते इति अनुपलम्भमात्रेण नतदननुवृत्तिर्निश्चेतव्येति भावः।

एवमेतावता "वैभाषिகா மூவரும" इत्यारभ्य क्षणिकत्वाङ्गीकारे बाधकमुक्तम्। अथ "किङ्कुर्मः [2] प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते" इति प्रमाणपरतन्त्राः वयं क्षणिकत्वमङ्गीकुर्म इति वादिनं तत्र साधक प्रमाणाभावप्रदर्शनेन वारयति—सत्त्वाद्यनुमानங்களை इति। सत्त्वहेतुकानुमानेन साक्षात्क्षणिकत्वसिद्धिः। आदिनाऽहेतुकविनाशसाधक ध्रुवभावित्वानुमानस्य परम्परया तत्साधकस्य वक्ष्यमाणस्य सङ्ग्रहः। क्षणिकत्वसाधकसत्त्वानुमानं चैवं ज्ञानश्रियोक्तम्—"यत्सत्तत्क्षणिकं यथा जलधरस्सन्तश्च भावाअमी, सत्ता शक्तिरिहार्थकर्मणिमि तेः, सिद्धेषु सिद्धा न सा। नाप्येकैव विधाऽन्यथापरकृतेनापि क्रियादिर्भवेत्, द्वेधाऽपि क्षणभङ्गसङ्गतिरतस्साध्येच विश्राम्यती"ति। अस्यचप्रथमः पादः आचार्यैस्सर्वार्थसिद्धावप्यु दाहृतः। एतदर्थश्च—"यत्सत्तत्क्षणिकं यथा जलधर" इति सव्याप्तिकं उदाहरणवाक्यम्। "सन्तश्चभावाअमी" इत्युपनयवाक्यम्। परार्थानुमानाङ्गभूतपञ्चावयवेषु यथार्हं अवयवद्वयप्रयोगपर्याप्तेरेव बौद्धसम्मततया प्रकृते एतावन्मात्रकथनम्।

---

விதமே கணம் தோறும் மாறுவதென்பது அபவத்தில் காணவில்லை. எல்லாம் கண நேரத்தியவைகளானால் முன் பின் பொருட்களை ஒப்பிட்டும்பார்க்கவும் உன் மதப்படி ஒரு ஸ்திரமான ஆத்மா இல்லாமையாலே அதுவே இது" என்ற ஜ்ஞாபக குறிப்பும். "ஆ! அது" என்ற நினைவும்கூட வரவழியில்லை. எல்லாம் கூடிக்ஷணிகம் என்று நமபினவனுக்கு

யால் स्थिरत्वं कल्पितं என்னில்—अनन्यथासिद्धसामग्रीभेदादिகளாலே भिन्नமான दीपத்திற்போலிங்கு प्रत्यभिज्ञैக்கு बाधம் சொல்லவொண்ணுது. सर्वமும் क्षणिकமாஞல் पूर्वापरसादृश्यादिप्रतिसन्धान-த்துக்கு ஆளில்லாமையாலே भ्रान्तिरूपप्रत्यभिज्ञैயும், स्मृतिमात्रமும் उदिக்க விரகில்லை. அப்படியே क्षणिकपक्षத்தில் पुण्यपापकर्तावுக்கு तत्फलभोगம் கூடாமையாலே வேறொருத்தன் भुजिக்கப்புக்கால் अतिप्रसङ्गம் வரும்.

---

हेतुभूतं सत्त्वं किंरूपमित्यत्राह—**सत्ताशक्तिरित्यादि**। अर्थकर्मणि शक्तिः=अर्थक्रियाकारित्वं सत्ता=सत्त्वमित्यर्थः। कुतः? मितेः=एवमेवप्रमाणतोऽवगमात्। घटादीनां सतां अर्थक्रियाकर्तृत्वस्य तुच्छानां खपुष्पादीनामतादृशत्वस्यच दर्शनादिति यावत्। **एतेनात्र** "यदक्षणिकं, तदसत्" इति **व्यतिरेकव्याप्तिरपि** सिद्धा-भवती। तत्र व्यतिरेकव्याप्तौ खपुष्पादेर्दृष्टान्तत्वं केचिदिच्छन्ति, नेच्छन्ति च तत्र दृष्टान्तमात्रमेव। **तदुक्तंक्रमेण तैरेव**—"यस्मिन्ननित्यतानास्ति कार्यताऽपि नविद्यते। तस्मिन्, यथा खपुष्पादौ इति शक्यं हि भाषितु"**मिति**, "तस्माद्वैधर्म्यदृष्टान्तो नेष्टोऽवश्यमिहाश्रयः। तदभावेच तन्नेतिवचनेनैव तद्गतेरि"**ति च**। अनित्यता-क्षणिकत्वं यस्मिन् नास्ति, तस्मिन् कार्यताऽपि = अर्थक्रियाकारित्वमपि नविद्यते, यथा खपुष्पादौ इति व्यतिरेकदृष्टान्तः भाषितुं शक्यं इति **प्रथमश्लोकस्य**, (व्यतिरेकव्याप्तेः) आश्रयभूतः वैधर्म्यदृष्टान्तः तस्मात्=वक्ष्यमाणहेतोः, अवश्यमिष्टः कथनीय इति न, (कुतः?) तदभावे—साध्याभावे, तन्न—हेतुरपि नास्तीति। वचनमात्रेणैव, सद्गतेः—व्यतिरेकव्याप्तेरवगमादीति **द्वितीयश्लोकस्य**चान्वयार्थोभाव्यः। **तथाचैतावता**—सत्त्वादर्थक्रियाकारित्वलक्षणात्क्षणिकत्वमित्युक्तं भवति। तदेतदुपपादनीयं, **श्लोकशेषण** 'सिद्धेषु सिद्धा नसेत्या-दिना ततः पूर्व**मुपोद्घातरूपेण किञ्चिदुच्यते** वक्ष्यमाणार्थस्य सुग्रहत्वाय। तथा हि—यदि स्थिरस्यार्थक्रिया-कारित्वं, तदा क्रमेणवा युगपद्वा अर्थक्रियाकारित्वस्य स्थिरे वक्ष्यमाणरीत्या असंभवात् तेनार्थक्रियाकारित्वेन पदार्थानां क्षणिकत्वं सिध्यति। स्थिरेष्वर्थक्रियां प्रति क्रमयौगपद्यान्यतरस्य व्यापकतया तन्निवृत्तौ, व्याप्यस्यार्थ-क्रियाकारित्वस्यापि स्थिरान्निवृत्त्या क्षणिकेष्वेव तद्रूपं सत्त्वं पर्यवसास्यतीति यावत्। क्षणिकेष्वर्थ क्रियाकारित्व प्रतितुन, क्रमयौगपद्यान्यतरव्यापकम्। क्षणमात्रायुष्कं किञ्चिदुपादाय कालक्रमेणवा इदं कार्यं करिष्यति युगपद्वेति-

---

முன்னுளில் தாம் செய்த வினைப்பயன்களை பின்னிட்டு நாம் அநுபவிக்கப்போகிறோம். என்ற எண்ணமே உதியாதாகையால் எத்தனையோவிதமான பாதகங்கள் நேரும். வேறு ஒருத்தன் இடையே வந்து அநுபவிப்பான் என்னவுங்கூடாது.

எந்த பொருட் ப்ரவாஹத்தில் வினையின் வித்து ஊன்றப்பட்டதோ அது அந்த ப்ரவா ஹத்தில்தான் தன் பயனை நல்கும். உரம் இட்ட இடத்திலன்றோ குறிப்பிட்ட விளைவு ஏற்படு

"यस्मिन्नेवहि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥" என்று சொன்ன दृष्टान्तமும் अनुपपन्नம் वासनाधारस्थिरद्रव्यानुवृत्तिகளாலே வருகிற नियमத்தை क्षणिकसन्तानத்திலே சொல்லவொண்ணாது. निरन्वयविनाशपक्षத்தில் सन्तानैक्यव्यवस्थापक மில்லை என்னுமிடம் சொன்னோம்

---

प्रश्नस्यैवानुदयात्। तस्यानेककालसम्बन्धरूपक्रमाभावात्। तत एवयौगपद्याशङ्काया अप्यनुत्थानाच्च। तदुक्तं "एकस्य नक्रम क्वापि" इतीति। तत्र स्थिरेष्वर्थक्रियाशक्तिः क्रमेणेति पक्षंप्रतिक्षिपति—**सिद्धेषु सिद्धानसेति**। सा—अर्थक्रियाशक्तिः, **सिद्धेषु**=स्थिरेषु **नसिद्धा**—नसिध्यति। तथासति, स्थिरो दण्डादिरद्य किञ्चित घटादिक्रियाकरणकाले, अतीतानागतघटादिसर्वक्रियाकरणसमर्थोनवा? आद्ये अद्यैव सर्वघटोत्पत्त्यापत्तेः। समर्थस्यापेक्षणीयान्तराभावात्। द्वितीये अद्येवान्यदाप्यसमर्थत्वाविशेषात् दण्डस्यार्थक्रियकारिताया एवोच्छेदप्रसङ्गात्। ननु दण्डादिस्थिरपदार्थः सर्वदा तत्तत्कार्यकरणसमर्थोऽपि क्रमभाविसहकारिसमवधानात् क्रमेण स्वकार्यंकरोति इति किमनुपपन्नमिति चेत्। अङ्ग! भवान् पृष्टो व्याचष्टाम्। तेच सहकारिण स्थिरायोपकुर्वन्ति नवा? नोचेत् अनुपकारिणामप्रतीक्ष्यत्वमेव। उपकारेच स स्थिराद्भिद्यते उतन? भिन्नत्वे आगन्तुकस्य तस्यैव कार्यकरत्वं स्यात, न तु स्थिरस्य। आगन्तुकोपकाराख्यातिशयान्वयव्यतिरेकानुविधायित्वात्कार्यकरणाकरणयोः। अभिन्नत्वेतु—स्थिरोऽनतिशयितः पूर्ववसादिति सहकृतस्यापितस्य कार्यकरत्वं नस्यादित्येवं दूषणात् स्थिरेषु अर्थक्रियाकर्तृत्व नक्रमेणेति सिद्धम्। नापि तेषु तत् युगपदिति प्रदर्शयति—**नाप्येकैवविधेति**। अत्रापि सिद्धेष्वित्यनुषञ्जनीयम्। ऐकविध्यं च यौगपद्यरूपम्। ततश्चस्थिरे युगपदर्थक्रियाकारित्वं नेत्यर्थः। विपक्षेबाधकं दर्शयति—**अन्यथा परकृतेनापि क्रियादिर्भवेत्**। इति। **अन्यथा**-स्थिरस्य युगपत्कर्तृत्वे, **परस्य**-उत्तरकालावच्छिन्नस्थिरस्य, **कृतेन**-भावेक्तः, करणे न, **क्रियादिः** अर्थक्रियाकरणादिकं भवेत्। युगपत्सर्वकार्यकरणसमर्थस्यस्थिरस्य तथैवोत्तरकालानुवृत्तौ तत्रापि पूर्वक्षण इव सकलकार्यकरणप्रसङ्ग इत्यर्थः। अत्र पक्षे पूर्वक्षणे शक्यसर्वकार्योत्पादस्येष्टत्वादुत्तरक्षणेषु तदापादानं विधीयते। तथा च प्रतिक्षणं सर्वकार्याणि स्थिरादुत्पद्यन्तामिति यावत्। कल्पद्वयनिराकरणेन फलित-

---

கிறது என்று உதாஹரணம் காட்டி அவர்கள் ஸமாளித்துக்கொள்ளமுடியாது. உதாஹரணம் கூறினவிடம் உரத்தின் சிறிய அணுக்களை தம் முள் கொண்ட பூமி பாகம் தொடர்ந்து வரும் வாய்ப்பு உடையது. உன் கொள்கைப்படி ஒவ்வொரு கணமும் முன் தொடர்பே இல்லாதுபொருள்கள் நாசமடைந்து மறுகணம் அப்படியே பிறப்பதாக விருப்பதால், "எந்த இடத்திலோ—அந்த இடத்தில்தான்" என்று எப்படிப்பேசுவாய்

दीपத்தில் निरन्वयविनाशம் கண்டோமென்று घटादिகளிலும் निरन्वयविनाशம் கட்டவொண்ணாது. घटादिகளிற் கண்ட सान्वयविनाशத்தைக் கொண்டு दीपத்திலும் सान्वयविनाशமெனகை उचितம். दीपावयवங்கள் बुद्बुदावयवங்கள் போலே अतिसूक्ष्मदशापन्नங்களாகையாலே अनुपलम्भம் வருகிறது

---

माह—द्वेधाऽपि क्षणभङ्गसङ्गतिरिति । स्थिरस्यैकस्य क्रमेणार्थक्रियाकारित्वायोगत' क्षणभेदेन भेदेवा, स्थिरस्योत्तरकालेप्यनुवृत्तस्य युगपदर्थक्रियाकारित्वासम्भवेनास्थिरत्वेवाऽसदिष्टक्षणभङ्गसिद्धिरेवेत्यर्थः । अतः परिशेषात्सत्त्वहेतुस्साध्ये क्षणिकत्वे विश्राम्यतीत्याह—अतस्साध्येचविश्राम्यतीति । एव शङ्कितं क्षणिकत्वानुमान दृष्टान्तासिध्यादूषयति—दृष्टान्तமில்லை इति । जलधरपटलाना दीपज्वालाना चास्थिरत्वसम्प्रतिपत्तावपि द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाख्यक्षणिकत्वस्याद्ययावदसिद्धत्वेन त्वदनुमानस्य दृष्टान्तदुर्भिक्षमित्यर्थः । तदुक्तंन्यायसिद्धाञ्जने—“दीपादिदृष्टान्तोऽपि प्रत्युक्तः । तेषामपि त्रिचतुरक्षणस्थायित्वाभ्युपगमात् ।” इति । जलधरादीनां क्षणिकत्वं अनुमानान्तरेण प्रसाध्यत इति चेन्न, तथासति तेनैवसर्वत्रसाध्यसिद्धेरेतदनुमानस्य निष्प्रयोजनत्वापातात् । तथा च सर्वार्थसिद्धिः—“जलधरादौ दृष्टान्ते क्षणिकत्वं अनेन **प्रमाणेन प्रमितं, प्रमाणान्तरेणवा ? नाद्यः** भवदभिमतस्य क्षणिकत्वस्य क्वचिदप्यदृष्टचरत्वेन तत्रापि दृष्टान्तासिध्या अस्यानुमानस्यानुत्थानात् । **नद्वितीयः**—तेनैवन्यायेन सर्वत्रक्षणिकत्वसिद्धौ सत्त्वानुमान वैफल्यापत्ते”रिति ।

अथास्तुतर्हि क्षणोपाधिर्दृष्टान्तः । सहि नस्थिरः, तथात्वे क्षणावच्छेदकत्वायोगादित्यत्राह—**स्थिर**ங்களினுடைய इति । **एतदुक्त भवति**—क्षणोपाधयोपि स्थिरा एव । तथा सति तैःक्षणावच्छेदः अन्यूनानधिक कथ क्रियत इति चेत्, श्रुणु । क्रिया, तत· विभागः, तस्मात्पूर्वदेशसंयोगनाशः, अनन्तरमुत्तरदेशसंयोगः अथ कर्मनाश इति अस्ति कश्चित्कार्यपरम्परा । अत्र क्रियाविभागादिकमेकैकमपि प्रत्येकं स्थिरमेव । अथापि क्रियाविभागादिभिः परस्परविशिष्टारम्भावसानैः अत एव विशिष्टवेषेण क्षणिकता गतैरन्यूनानधिकं क्षणावच्छेदस्य सुकरत्वात् तेषां क्षणोपाधितानिर्वाहः । तथा हि स्वजन्यविभागप्रागभावावच्छिन्ना क्रिया क्षणोपाधिः । एव विभागावच्छिन्नपूर्वदेशसंयोग इत्यादिकमपि । द्वितीयक्षणे विभागोत्पत्त्या विभागप्रागभावस्यनाशात् तत्पूर्वक्रियाक्षणः विभागप्रागभावस्यावसानकालः चरमक्षण इति यावत । तथा स एव क्रियाप्रथमक्षणः, अग्रे क्षणत्रयमनुवर्तिष्य-

---

விளக்கில் ஒளி நிறைகள் ஒவ்வொரு கணமும் பூரணமாய் முடிந்து மறுகணம் முழுதும் புதியதாய் எழுகிறது என்று கொண்டு குடம் முதலிய பொருட்களும் அப்படியே என்னலாகாது. குடம் உடையும்போது சில்லுகள் மிகுந்து இருப்பதுபோல விளக்கிலும்

எப்பொருளும் கணததிறகுமேல அததற்கு ஏற்றவாறு இருப்பவையே

सत्त्वाद्यनुमानஙகளைக கொணடு सर्वததிலும क्षणिकत्वங கொளளுகைககு दृष्टान्तமில்லை स्थिरஙகளினுடைய परस्परावच्छेदविशेषमात्रததாலே क्षणोपाधिनिर्वाहம கூடும अबाधितप्रत्यभिज्ञैயாலே क्षणिकत्वानुमानஙகளுககு बाधமுமுணடாம समर्थமான स्थिरवस्तुவுககு करणाकरणஙகள सहकारि

माणायाः क्रियाया आरम्भकालः । तथा च केवलं क्रियाया उत्तरक्षणेषु, केवल विभागप्रागभावस्यानादेः पूर्वक्षणेषुचाति प्रसक्तत्वेऽपि, परस्परावच्छिन्नारम्भावसानयोस्तयोः क्षणमात्रमेव स्थित्याऽनतिप्रसक्तत्वेन भवति स्वजन्यविभागप्रागभावावच्छिन्नं कर्म क्षणोपाधिरिति ताभ्यां क्षणव्यवहारनिर्वाहः । एवं तृतीयक्षणे पूर्वदेशसंयोगस्य नाशोदयात् तत्पूर्वद्वितीयक्षणः पूर्वदेशसंयोगस्यावसानकालः विभागस्यत्वनुवर्तिष्यमाणस्य प्रारम्भः इति तयोः परस्परावच्छेदेन विभागावच्छिन्नपूर्वदेशसंयोगोऽपि क्षणोपाधिरित्यादिकं स्वयमूह्यमिति । यद्यपिमूले "स्थिरஙகளினுடைய परस्परावच्छेदविशेषमात्रததாலே क्षणोपाधिनिर्वाहம इत्येवपठ्यते । ननु स्थिरपदार्थारम्भावसानयोः परस्परावच्छेदेन क्षणोपाधिनिर्वाह इति, तथापि यथाश्रुते परस्परं विशेष्यमाणयोस्स्थिरयोरुभयोः पूर्वापरकालानुवृत्तत्वशङ्काया मिळिताभ्यामपि ताभ्यामेकैकन्यून्यान्यूनानधिकं न क्षणव्यवहारजननमिति, "एतत्क्षणएव क्रियादेः आरम्भः विभागप्रागभावादेरवसानं, परस्परावच्छिन्नारम्भावसानावेतौ एतत्क्षणमात्रमेवतिष्ठतः" इति प्रतिबोध्यैव ताभ्यां क्षणव्यवहारनिर्वहणं कार्यमिति पर्यालोच्यास्माभिरत्रैवं व्याख्यायि । अत एव न्यायसिद्धाञ्जने आचार्या इत्थमाहुः—"स्थिरैरेव परस्परावच्छिन्नारम्भावसानैस्तदवच्छेदोपपत्ते"रिति । एतदभिप्रायेणैवमूले "परस्परावच्छेदविशेषमात्रे"त्यत्र-विशेषपदमिति भाव्यम् । एवं क्षणिकत्वानुमानस्यबाधितत्वमप्याह—अबाधितप्रत्यभिज्ञैயாலே इति । सएवायं, स एवाहं" इत्यादिप्रत्यभिज्ञया सर्वस्यास्थिरत्वावगमादित्यर्थः । क्षणिकत्वानुमानेन प्रत्यभिज्ञैवबाध्यतामिति विपरीतं किन्नस्यादितिशङ्कावारणाय अबाधितेति प्रत्यभिज्ञाविशेषणम् । तदेतत्पूर्वमेवोपपादितं वेदितव्यम् । इयांस्तु विशेषः — पूर्वं प्रत्यभिज्ञया क्षणिकत्वस्यबाध ऊचे । इहतु तदनुमानस्येति । बाधமும इत्यपिना । पूर्वोक्तदृष्टान्तासिद्ध्यादिकं विवक्षितम् । ननु प्रत्यभिज्ञाप्रामाण्यात् वस्तूनां स्थैर्ये सति स्थिरस्य

---

அணைநத பிறகு ஜவாலையின அணுககல மிசசமாகின்றன என்றே கொள்ளவேணும். ஆனால் அவைகள நீர்குமிழியின திவலைகளபோல் சூக்குமஙகளாகி புலப்படா தொழிகினறன.

இருககும பொருள அததினையும கணநேரததியன என அநுமானம செயகைககு உதாஹரணம காடடமுடியாது. அகணட காலததை கணம கணமாகக கணககெடுததலை

सम्बन्धासम्बन्धங்களாலே கூடும் அவைதானும் स्वसामग्रीप्रवाहनियतங்களாய कालभेदव्यवस्थितங்களாகையாலே கூடும் एकवस्तुவுக்கு स्वकालத்திலே उपाध्यन्तरविरावरुद्धமான अवान्तरकालभेदம் विरुद्धமன்று. विरोधமுள்ள स्वाभावकालத்தில स्वसत्तै கொள்ளோம प्रत्यक्षமதான वर्तमानक्षणத்தை ग्रहिக்கையாலே पूर्वापरकालव्यावृत्तवस्तुவைக காட்டுகிறதன்றோ வென்னில - இது स्वकालसत्तையைக காட்டுமத்தனை போககி कालान्तरासत्तैயைக் காட்டாது

---

दण्डादेर्वर्तमानक्षणे अतीतानागतादिसर्वकार्यकरणसामर्थ्यमस्तिनवेत्यादिना यद्दूषणमभ्यधायि तत्रकिमुत्तरमित्यत्राह- समर्थமான इति । तथा च यत्कदाचिद्यदुत्पादनशक्तं, तत्सर्वदापि तथैव । तथासति एकदैव तेनाखिलकार्योत्पत्त्यापत्तिरिति चेत्, न, सहकारिसमवधान एव तेन कार्योपधानात्, तदभावे तदभवात् । तथाच क्रमेणैव तेन कार्यसिद्धिरिति । तदुक्त कुसुमाञ्जलौ— तद्युक्त तत्र तच्छक्तमिति साधारणं नकि"मिति । सहकारिकलापयुक्तं तत् वस्तु तत्र कार्यफलोपधानशक्तं इत्येतत् साधारणं तस्यवस्तनः सार्वकालिकं किन्नभवतीत्यर्थः । यत्तु सहकारिभिरुपकारोऽस्ति नवेत्यादि आशङ्कितं, तत्र, सत्यं-उपकारोऽस्ति, तथापि उपकृतस्यैव दण्डादेः प्राधानकारणत्वं प्रमाणान्तरप्रतिपन्नमिति न सङ्कट किञ्चिदिति समाधातव्यम् । ननु तर्ह्येकस्मिन् स्थिरेवस्तुनि ते सहकारिसमवधाना समवधाने एव विरुद्धे कथं व्यवस्थया भविष्यतः? तत्सन्निधापकस्यवस्तुनः स्थिरस्य तत्स्वभावत्वे सर्वदातत् सन्निधापन, तदभावे सर्वदा तदसन्निधापन वा हि स्यात् इत्यत्राह— அவைதானும இति । सहकारिसन्निध्य सन्निधी इत्यर्थः । तथा च एतत् सामग्री सन्निध्यादेः सामग्रयन्तर प्रयुक्तत्वात्, तस्यापि तथात्वात् प्रामाणिकीयमनवस्था नदोषमावक्ष्यतीति भावः । नन्वेकस्यस्थिरस्य कथं विरुद्धपूर्वापरकाल द्वययोग इत्यत्राह—एकवस्तुவுக்கு इति । स्वकालத்திலே इति तथो च एकस्य नानाक्षणानुवर्तिनस्स्थिरस्य पूर्वापरावपि तौकालौ स्वकालत्वाविशेषात् स्वावान्तरकालावेवेति तदुभययोगस्स्वस्य न विरुद्ध इति भावः । तर्ह्यवान्तर तत कालयोगः कस्यविरुद्ध इत्यत्राह— उपाध्यन्तरविरुद्धेति । उपाध्यन्तरं=क्षणान्तरम् । तथा च एकस्य पूर्वक्षणस्य क्षणान्तरेणैव सम्बन्ध विरोधात् क्षणद्वयसाधारणेस्थिरे नावान्तरकालरूपोभययोगो विरुध्यत इति हृदयम् । उपाध्यन्तरावरुद्धेतिवा पाठस्स्यात् । अवरुद्धत्वमवच्छिन्नत्वम् । तदा च इदं विशेषण अवान्तरकालभेदस्य परिगणने हेतु निर्देशपरं भविष्यति । अथ तर्हि एकैकस्यापि सर्वकालसम्बन्धोस्तु निवारकाभात्

---

ஸ்திரப்பொருட்களே ஒன்றோடொன்று பிணைத்தும் நிர்வஹிக்கலாம. முன் சொன்னபடி அதுவே இது என்ற ஜ்ஞாபகககுறிப்புகளால எல்லாம க்ஷணிகம் எனபது அடிபட்டுப போகிறது. நிலைத்திருக்கும் வஸதுவுககு ஒருபோது ஒன்றைசசெய்யும வாய்ப்பும் மறு போதது இல்லாமலிருநதலும, தகுநத சூழ நிலை உண்டாவதையும, உணடாகாததையும,

பொருட்கள் காரணமின்றியே கணந்தோறும் நசிக்கும்
என்பதும ஏற்காது

अहेतुकविनाशம சொலலுமं ध्रवभावित्वानुमानமுமं अनेकान्त्यादिदुस्स्थம " नित्यसत्त्वमसत्त्व वाऽहे-

---

इति चेदाह—विरोधமுளள स्वाभावकालத்தில इति । अत्र च सर्वत्र मूले ... .. स्वभावकालத்தில் इत्येव पाठः श्रूयते । अथाप्यशुद्धत्वात् उदाहरिष्यमाणाचार्यसूक्त्यन्तरविरोधाच्चस त्यक्तव्यः । तथा च यत्र काले स्वाभावः प्रतिपन्नः, तत्रैव स्वविरुद्धकाले स्वसत्तानाभ्युपेयेति न सर्वस्य सर्वकालसम्बन्धप्रसङ्ग इत्यर्थः । तदुक्तमाचार्यैः—" स्वस्य स्वाभावकाले विहतिनियमनात् स्वेनाचात्रैककाल्यादि "ति । एतेन—अत्र—विरोधமுளள स्वभावकालः—विरोधवत्स्वभावविशिष्टः कालः, सच स्वाभावकाल एवेति फलितार्थकथनेन केषाञ्चिद्य-थाश्रुतमूलपाठानुसारिव्याख्यानं निरस्तं वेदितव्यम् । अखरसत्वादाचार्यसूक्त्यन्तरविरोधाच्च । ननु अयंघट इत्यादि प्रत्यक्षे वर्तमानत्वग्रहण मेवक्षणिकत्वग्रहणं भविष्यति इत्याशङ्क्य परिहरति—प्रत्यक्षமதான इति । प्रमाणगणमध्ये प्रत्यक्षस्यैव वर्तमानग्राहित्वात्, अय दण्डीतिग्रहणे अदण्डिव्यावृत्तिवत् तद्ग्रहणादेव क्षणिकत्व-मपि गृहीतमित्यर्थः । दूषयति—இது स्वकालसत्तையை इति । तथा च विषयस्य वर्तमानत्वं ज्ञानसमकाल-सत्त्वरूपमेव । तद्ग्रहणेच स्वसमकालासत्त्वव्यावृत्तिरेवगृह्येत, नतु पूर्वापरक्षणसत्त्वव्यावृत्तिः । तयोः क्षणयोरेतद् ज्ञानाविषयत्वात् । यथा रूपीतिज्ञानेऽरूपिव्यावृत्तिरेवगृह्यते । नतु रसादिव्यावृत्तिः, तस्य चक्षुरगोचरत्वात् अथापि तत्र रससम्बन्धस्य प्रमाणान्तरतोनिर्णेयत्वात् तत्सत्त्वे रूपवतो यथारसादिमत्त्वमपि सिध्यति, एवमिहापि वर्तमानतयाऽध्यक्षितस्य प्रमाणसत्त्वे पूर्वापरकालसम्बन्धोऽपि सेत्यति, अन्यथा तु नेति न प्रत्यक्षमात्रेण वर्तमानस्य क्षणिकतया ग्रहणमिति भावः ।

अथ बौद्धेष्वेव केचित् शून्याख्यं नित्यं तत्त्वं स्वीकुर्वन्ति । तन्मते " सर्वं क्षणिकमिति साधने सर्वान्त-र्गत शून्यतत्त्वे साध्यस्याभावात् बाधप्रसङ्ग इति एतत्प्रकारं परित्यज्य प्रकारान्तरेण परम्परया क्षणिकत्वं साध-यतां पक्षमपि प्रतिक्षिपति—अहेतुकेति । अत्र प्रथमं—भावाना विनाशः उत्पत्तिक्षणानन्तरभावी, अहेतुकत्वे-सत्यवश्यं भावित्वात् । यदहेतुकत्वेसति यस्यावश्यं भावि, तत् तदुत्पत्तिक्षणानन्तरभावि यथा घटस्यान्यापोहः

---

பொருததாம. சூழநிலை உணடாவதும் உணடாகாததும அதறகுவேணடிய வேறுவித சூழநிலை இருபபதையும பொருதது வேறு வேறு விதஙகளாய் அமையும நீண்டகாலம் இருககும ஒரு வஸதுவுககு உடபிரிவான இரணடு கால விபாகஙகளோடு ஸமபநதம் கூடாததனறு. தானிலலாத காலததில் தானிருபபதாககொளவது மட்டில கூடாது.

तोरन्यानपेक्षया। अपेक्षातोहि भावाना कदाचित्कत्वसम्भव ॥" என்று धर्मकीर्ति भावங்களிற சொன்னது प्रध्वंसததுககும வருகையாலே இததை अहेतुकமென்றல் இதறகு अनादित्वமுணடாகையாலே भावமின்றிககே போதல, இபप्रध्वंसததை तुच्छமென்று கொணடபோது भावததுககும परमावधि

---

इति प्रयोगे, **तत्रहेत्वसिद्धिपरिहाराय** भावाना विनाशः अहेतुकः ध्रुवभावित्वात् अपोहवदेवेति द्वितीयं किञ्चिदनुमानमुच्यते। **तदेवात्रोपात्त**। "**अहेतुकविनाश**ம சொலலும **ध्रुवभावित्वानुमान**மும इति। अत्र भावानामेवविनाशस्यानन्तरक्षणभावित्वसाधनात् न शून्यस्याभावरूपस्यसंग्रह इति नावतारिकोक्तदोष'। **अपोहः**=भेदः। स यथा ध्रुवभावित्वाद्धेतुनिरपेक्षस्स्वरूपानुबन्धी भवति, तथैव पदार्थानां ध्वंसोऽपि हेतुनिरपेक्षस्तथा भवति। "जातस्यहि ध्रुवोमृत्यु"रिति। ततश्चभावपदार्थानामुत्पन्नमात्राणामेव विनशनात् क्षणिकत्वं भविष्यति। स एव प्रतिक्षणभावी विनाशः निरन्वयविनाश इत्यभिख्यायते। **तथाचन्यायसिद्धाञ्जनं**— "यद्ध्रुवभावि नतद्धेतुसापेक्षं, अन्यथा ध्रुवभावित्वविरोधात्। अतः कार्याणा ध्रुवभाविप्रध्वंसस्याहेतुकत्वसिद्धेर्विळम्बायोगात् उदीयमानमेववस्तु तेन ग्रस्यते" इति। **अनैकान्त्यादिदुस्स्थ**ம इति। **अयभावः**—अत्र हेतुभूतं ध्वंसस्य ध्रुवभावित्वं किं प्रागभावप्रतियोगित्वरूपं भविष्यत्वमात्रं, अथ प्रतियोग्युत्पत्तिक्षणानन्तरवृत्तित्वं, किंवा प्रतियोगिमात्रजन्यत्वं उत नित्यत्वपर्यायरूपं किञ्चिदितिविवेचनीयम्। तत्र प्रथमे हेतुसापेक्षत्वेऽपि तदनपायात् अनैकान्त्यम्। द्वितीये अन्योन्याश्रयः। ध्रुवभावित्वस्यैव तद्रूपत्वे, एतस्यैव प्रथमानुमानसाध्यत्वात्, अहेतुकत्वसिद्धौ एतात्सिद्धिः, एतत्सिद्धावहेतुकत्वसिद्धिरिति। तृतीयचतुर्थयोस्तु पक्षेऽसाभिरसम्प्रतिपन्नत्वेनसन्दिग्धासिद्धिरित्यादि। **अनैकान्त्यादीत्यादिना** एतयोः परिग्रहः। अथविनाशाख्यस्यध्वंसस्याहेतुकत्वोक्तौ एतन्मते बाह्यभावपदार्थाना तुच्छत्वं नित्यत्वं वास्यात् नतु क्षणिकत्वमित्यनिष्टं प्रसञ्जयति **प्रसंजकप्रदर्शनपूर्वकं—नित्यं सत्त्वं** इति। **धर्मकीर्तिः न्यायबिन्द्वादिग्रन्थकर्ता कश्चन बौद्धः**। **एतत्कारिकार्थस्तु**— अहेतोरिति **पदच्छेदः**। अहेतुकत्वे घटादीना भावाना, नित्यंसत्त्वं, नित्यमसत्त्वं वास्यात्। स्वान्यहेत्वपेक्षा विरहात्। हेत्वपेक्षयाहि भावपदार्थाना कदाचित्कत्वरूपं क्षणिकत्वं सम्भवति। अन्यथा ते नित्य वा स्युः कदापिवा न स्युः, नतु कदाचिद्भूत्वा नभवेयुरिति। ततश्चानेन श्लोकेन धर्मकीर्तिः भावानामहेतुकत्वं निराचकार, अन्यथा तेषां नित्यत्वतुच्छत्वान्यतरापातात् इति सिद्धम्। एवञ्चभावेषु सिद्धोऽयंन्यायः निवारकाभावादभावे-

---

प्रतयक्षததில ஒன்றை இபபோது நிகழுவதாக அறிவதே முன பின அது இலலாததாக அறிவதறகொபபாகாதோ என்னில—ஆகாது இபபோது நிகழுவதென்றல—இபபோது அது இலலை என்னவொணணுது என்றுதான பொருளபடுமேயலலது—முன பின இலலை என்று கூடபொருளபடுமா என்ன ?

யினறிககே போதல ஆமபடியாம் இபபடிகளால எலலா प्रमाणஙகளையு மாராய்நதால சில वस्तुககளுககு अनित्यतामात्रம கொளளுமளவே யாகையாலே शरीरादिகளில நிலை இலலாமை சொலலுகைககாக विद्युद्बुद्बुदादिदृष्टान्तஙகளையிட்டு वैराग्यம பிறககுமளவே अध्यात्मशास्त्रकृत्यம

---

ध्वंसेऽपि प्राप्नोति, यदि तस्याप्यहेतुकत्वं ध्रुवभावित्वानुमानेनसाध्येतेत्याह—प्रध्वंसததுககும வருகையாலே இததை **अहेतुक**மெனறால इति । இததை=प्रध्वंसததை अहेतुकமெனறால धर्मकीर्ति भावஙகளில சொனனது प्रध्वंसததுககும வருகையாலே इत्येवं व्युत्क्रमेणान्वयः । भावஙகளில சொனனது= भावेषूक्तो नित्यत्वतुच्छत्वविकल्प. । भवतु ध्वंसेऽपि सविकल्पः किन्त्विच्छिन्नमित्यत्र प्रथमनित्यत्वपक्षे दोषमाह— இதறகு **अनादित्व**முணடாகையாலே इति । अत्रोक्तरीत्याध्वंसस्य नित्यत्वस्वीकारे" इति शेषः अथवा "...भावஙகளிற்சொனனது प्रध्वंसததுககும வருகையாலே" इत्येवावान्तर वाक्यसमाप्तिः । ततश्च "இததை अहेतुकமெனறால இதறகு अनादित्वமுணடாகையாலே" इत्यपरवाक्यखण्डानुपूर्वीसिध्या नात्र "ध्वंसस्यनित्यत्वस्वीकारे" इत्यध्याहारक्लेशोभविष्यति । परन्तु तदा "अहेतुकம" इत्यस्य नित्य" इत्यर्थोभाव्य । पूर्वं "नित्यंसत्त्वमसत्त्ववे"त्युक्तयोः पक्षयो' प्रथमस्यात्र वक्तव्यत्वात्, द्वितीयस्योपरि "प्रध्वंसம तुच्छமெனறு கொணடபோது इतिवक्ष्यमाणत्वाच । तदयंनिर्गळितोमूलार्थः —यदि ध्रुवभावित्वेन हेतुना प्रध्वंसस्याहेतुसाध्यत्वमभिमत, तदा भावेषु अहेतुकत्वे धर्मकीर्तिदर्शितप्रसङ्गः प्रध्वसेऽपि प्राप्नोति । ततश्च प्रध्वंसस्य नित्यं सत्त्वपक्षपरिग्रहे, अनन्तस्य तस्यानादित्वमप्यापतेत् इति तेन नित्यं वर्तमानेन सर्वदा भावग्रासात् माध्यमिकस्येव सर्वशून्यत्वमेव भवेत्, न त्वदिष्ट भावाना क्षणिकत्वम् । प्रध्वंसस्य सादित्वेनाहि तत्पूर्वकाले तत्प्रतियोगिभूता भावा जीवन्ति । प्रध्वंसस्य नित्यासत्त्वपक्षपरिग्रहेतु भावपदार्थचरमावधिभूतध्वंसस्यकदाऽप्यभावात् भावाना अनन्तत्वापत्त्या तदाऽपि त्वदिष्टं क्षणविनाशित्वं नस्यादिति । ननु तर्ह्यध्यात्मशास्त्रेषु विद्युदादि, दृष्टान्तीकृत्य कथं शरीरादीना क्षणिकत्वप्रदर्शनं घटत इत्यत्राह—இபபடிகளால इति । उक्तयुक्तिभिरित्यर्थः । சில वस्तुககளுக்கு इति कथनात् केषाञ्चिन्नित्यत्वमपि सिद्धान्तिनामिष्टं द्योत्यते । अनित्यतामात्रம=ध्वंसप्रतियोगितामात्रं, न तु द्वितीयक्षणवृत्तिध्वसप्रतियोगित्वमपि । देवमनुष्याद्यनित्यताया तारतम्यमस्ति । तत्पुराणादितोऽवगन्तव्यम् । एवं च क्वचिदुक्तमपि क्षणिकत्वं प्रमाणपरामर्शेन

---

பொருடகளுககு அழிவு திணணம எனபதால அழிவுககுககாரணம் வேணடிய திலலை எனறு அநுமானம சொலவதும் தவறு. தாமகீாதி எனபவன, உளளபொருள களுககு—காரணம கொளளவேணடும கொளளாவிடில் எககாலமும அவை இருபபவை யாகவோ—எபபோதும இலலாதவையாகவோ ஏறகவேணடிவரும். காரணம இருபபதா

நாசம காரணமினறியே நிகழ்வதானல நீ அஹிமஸையை
விதிகக வொணணாது

अनित्यत्वरूपमेवेति प्रसाध्य, अतिचञ्चलचम्पाप्रकाशादिदृष्टान्तकथनस्यतात्पर्यमप्याह — **शरीरादि**களில इति । **अयंभावः**—"सर्वाशुचिनिधानस्य कृतघ्नस्यविनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥" इति सर्वनिषिद्धप्रवृत्तीनामपि देहे स्थिरत्वादिभ्रममूलकत्वादध्यात्मशास्त्रेषु तस्य सर्वदापि विनाशोन्मुखत्वं वैराग्याय विद्युद्बुद्बुदादि निदर्शनेनोपदिश्यते । "सम्पदस्स्वप्नसङ्काशाः यौवन कुसुमोपमम् । तडिच्चञ्चलमायुश्च कस्यस्याज्जानतो धृति"रिति, "तत्क्रमेण विवृद्धं सज्जलबुद्बुदसन्निभम् । भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम्" इति च । **वैराग्य**ம பிறககுமளவே इति । **तदुक्तं**—"महाबलान्महावीर्याननन्तधनसञ्चयान् । गतान्कालेन महता कथाशेषान्नराधिपान् ॥ श्रुत्वा नपुत्रदारादौ गृहक्षेत्रादिकेऽपिवा । द्रव्यादौ वाकृतप्रज्ञोममत्वं कुरुते नर." इति । **अत्र** "आस्थानिवृत्त्यर्थं क्षणिकत्वमुपदेष्टव्यमितिचेत्, अहो महाधार्मिकस्यानळीकवादिनो महानयमधर्मः प्रसज्यते । सूक्ष्मधियस्तत्रैवास्थानिवृत्तिप्रसङ्गाच्च । विश्वानित्यतामात्रोपदेशादपि च तत्सिद्धेः । अन्यथा शून्योपदेशस्यैवावश्यकर्तव्यताप्रसङ्गा"दिति **न्यायसिद्धाञ्जनसूक्तिरनुसन्धेया** ।

अथाहेतुकविनाशाङ्गीकारे स्वशास्त्रवैयर्थ्यमाह—**हेतु**வை பொழிய इति । இவாகள சொலலுகிற **अहिंसेति** निर्देशात् "मा हिंस्यात् सर्वाभूतानी"ति श्रुत्युक्ताहिंसावैलक्षण्याय, तत एव **शिष्टाकोपाधिकरणन्यायेन** तस्या अनुपादेयत्वं च सिद्धम् । वैदिकी अहिंसाहि विहितहिंसाव्यतिरिक्त प्रतियोगिका । तेषां सा च तत्सामान्यप्रतियोगिकेतिवैलक्षण्यं बोध्यम् । **देशना**=उपदेशः । निष्प्रयोजनत्वमेवाह—**ज्ञानरूपेति** । भूतहिंसा निषेधवाक्ये भूतशब्दस्य शरीरविशिष्टात्मपरतया तत्र विशेष्यविशेषणभागभेदाभिप्रायेणैवमुक्तिः । ग्राहकाभिमानारूढोऽनादि धीसन्तान एवैषा मते आत्मा । तथा च तस्यापि शरीरस्येवक्षणिकतया प्रतिक्षणं तयोः नाशस्य ध्रुवभावित्वेनाहेतुसाध्यतया, तत्र विधानप्रतिषेधयोरशक्यत्वात् "माहिंस्यादि"त्यादिरीत्या क्रियमाणस्तदुपदेशोनिष्फल इत्याशयः । "**नशि**பபியாதேகொள=माविनाशय । अथ प्रकारान्तरेणाहिंसाविधिसार्थक्यं शङ्कते—**अहिंसाविधि**யாவது इति । **अयमाशयः**—यद्यपि तन्मते प्रतिक्षणभावी पदार्थाना सदृश-

லலவோ ஒரு பொருள ஒருபோது தோனறுவதும மறுபோது மறைவதும கூடுகிறது எனருன். இநத நியதியினபடி பாாததால விநாசததுககும காரணம கொளளவேணும இல்லை என்ருல நாசமே எககாலததிம தஙகி பொருடகளை விழுஙகும அல்லது எககாலத தும்தான இல்லையாகி பொருடகளை நிதயமாக வாழவிடும நீ சொனனபடி கணநோததிய

हेतुवैयொழிய நாசம வரககடவதாலுல் இவாகள சொலலுகிற अहिसाधर्मததை विधिக
கிற देशनैககு प्रयोजनமிலலையாம ज्ञानरूपात्माவுககாதல, तदनुबन्धि शरीरादिகளுககாதல வேறெ

---

सन्तानारम्भको विनाश॰ अहेतुसाध्य॰ । अथापि घटादीना कपालादिविसदृशसन्तानोत्पत्तिहेतुभूतोविनाशः कदाचित्कत्वात् मुद्गराद्यभिघातहेतुकः तत्राऽप्रतिकर्षणे—मुद्गराद्यभिघात॰ कपालादिविसभागोत्पत्तिमात्रे कारणं, न तु घटादिविनाशे । अपि तु तत्र केवल स नियामकः । अतएव कादाचित्कस्य घटादिनाशस्याहेतुकत्वेऽपि नान्यदोत्पत्तिः सर्वदानुत्पत्तिर्वा प्रसज्यते इति तत्त्वस्थितिः । तथा च भूतेषु खड्गाद्यभिघातादिना तादृशविसभागसन्तानोत्पत्तिः प्रतिषिध्यतेऽहिंसाविधिनेति सिद्धं शास्त्रसाफल्यमिति । विसभागः=विसदृशः । ननु विसभागसन्तानोत्पत्ति॰ प्राण्यप्राणिसाधारण्यात् न हिंसाशब्दार्थ इति, तत्प्रतिषेधोनाहिंसाविधिरित्यत्राह — वेदनारूपचैत्तेति । चैत्त–चित्तस्य विकारः । तन्मते आन्तर पदार्थः द्विविधः चित्तं चैत्तश्चेति । चित्तं–ज्ञानसन्ततिः । चैत्तं–वेदनादिस्कन्धपञ्चकम् । अस्यचानुपदमेवविस्तरोभविष्यति । एवंच वेदनाविशेषजनकव्यापारस्य हिंसात्वं युक्तमेवेति तन्निषेधोऽहिंसैवेत्याकूतम् । अथैवं शङ्कायां अस्तुहिंसाशब्दार्थो यथातथावापि । तस्यसाक्षाद्दूषणमनुपद भविष्यति । तथापि तवमते कर्तुरात्मनोऽपिक्षणिकत्वात् विधिनिषेधानर्थक्यं दुर्वारमेवेत्याह—आत्मावै इति । तथा च कर्तुस्स्वस्य क्षणिकत्वेन कालान्तरे यावत्फलप्राप्ति असत्त्वनिश्चयात् न क्वचिदपि शास्त्रे प्रवृत्तिस्सम्भवतीत्यर्थः । अथा" हिंसाविधिயாவது " इत्यारम्भे कृतायाश्शङ्कायास्साक्षात्समाधानमाह—विनाशकதோட இति । मुद्गराद्यभिघाते घटादिनाश॰, तदभावेतु तदभाव इति घटादिनाशस्यैव मुद्गराद्यभिघातहेतुकत्वं लोके दृष्टं, न तु त्वदुक्तरीत्या विसभागसन्तानोत्पत्तेरितिद्योत्यते । अत्र "....विसभागसन्तानमात्रததுககாககி इत्येवपाठ्यम् । ननु " .... सन्तान मात्रமாககி इति । यथाश्रुतेऽनन्वयात् । मात्रपदेनोक्तरीत्या घटादिनाशस्य तद्धेतुकत्वव्यावृत्ति॰ । तथाच तन्मते घटादेर्द्विविधोऽपिनाशः कादाचित्कोऽपि हेतुनिरपेक्षः । दृश्यमानमुद्गरादि प्रहारस्तु घटादेर्विसभागसन्तानोत्पत्तिमात्रे हेतुः । अन्यथा सभागसन्तानस्यैवोत्पत्तेरितिसिद्धम् । तदेतदाह—कादाचित्केत्यादिना சொனனுல इत्यन्तेना । एवं निर्देशेन तथावक्तुमेवायुक्तमिति सूच्यते । तथाहि—घटादिनाशान्वयव्यतिरेकवत्त्वेन दृष्टायाः मुद्गराद्याहतेः कपालादिविसदृशभागोत्पत्तिमात्रहेतुतया व्यवस्थापने नकिञ्चिद्विनिगमकं उपलभ्यते । ´ प्रत्युत नाशहेतुतास्वीकार

---

தாகாது இவவிதம நாம சொனனதை ஆராயநதால சில வஸதுககளை அநிதயஙகள எனறுதான முடிவு கட்டலாம "மினனின நிலையிலமனனுயிராககைகள—வாழநதாாகள வாழநதது மாமழை மொககுளின மாயநது மாயநது எனறு கூறினதறகும உடலின அழிவு படும தனமையைச சுட்டிககாட்டி வைராக்யம பிறபபிபபதுவே நோககு

னருல நாசம வரிலிறே இவறறை நசிபபியாதேகொள என று ஒருவனுககு உபதேசிகக வேணடுவது அहिंसाविधियानது विसभागसन्तानोत्पत्ति प्रतिषेधமாதல, वेदनारूपचित्त विशेषजननप्रतिषेध

एव तु तत् दृश्यते । फूत्कारेण दीपनाशे विसदृशभागाद्यारम्भाभावात्, फूत्कारादेर्नाशहेतुताया एव यथान्वय-व्यतिरेकदर्शनं स्वीकर्तव्यत्वादिति ।

दीपनाशस्थलेऽपि विसदृशसूक्ष्मतदवयवारम्भहठात्कारे तदभावात्, एवंस्थितेऽपि दोषान्तरे प्रतिबन्दि-मप्याह பழைய **चार्वाकेति । अयमभिसन्धिः** — कादाचित्का अपि घटादिभावा अहेतुसाध्याः । **नच** ते पूर्वमेव स्युः कदापिवानस्युः अहेतुकत्वेन अपेक्षणीयान्तराभावादिति वाच्यम् । त्वन्मते कादाचित्कस्यापि घटादिनाशस्याहेतुसाध्यत्वेऽपि कालनियमवदत्रापि तदुपपत्तेः । तत्र घटादिनाशाहेतोरपि विसभागरसन्तानहेतु-भूतमुद्गरादिनिपातस्य घटादिनाशं प्रति नियामकत्व परं उक्तरीत्या स्वीकृतमिति भवति तत्रकालनियमः, इहतु कथमिति चेत् अत्रापि घटादि भावप्रत्यहेतुभूतस्य मृदादेः कस्यचित्तदुत्पत्तिप्रति नियामकत्वमात्रसम्भवेन व्यवस्थोपपत्तेः । तथाचाभाववद्भावोऽपि चार्वाकस्येव तवाप्यहेतुकस्स्यादिति चार्वाकव्यावृत्त्यर्थं त्वदभ्युपगत-कार्यकारणभावासिद्धिरेवेति । **इयांस्तुविशेषः** — पूर्वं भावेष्टधर्मकीर्तिकीर्तितनीत्याऽहेतुकत्वस्याभावेष्यप्यङ्गी-कारेऽनिष्टं निर्दिष्टम् । इहतु अभावेषूक्तेन न्यायेन भावस्याप्यहेतुकत्वाङ्गीकारेऽनर्थः प्रदर्शित इति । பழைய **चार्वाकेति** । त्वत्तः पूर्वमेवखण्डितचार्वाकेत्यर्थः । यद्वा प्राचीनचार्वाकेत्यर्थः । "किण्वादिभ्योमदशक्तिवदि"ति सूत्रे पञ्चमी निर्देशप्रामाण्यात्, नवीन चार्वाकैः कार्यकारणभावस्याश्रयणात्प्राचीनग्रहणम् ।

अथ क्षणिकात्मपक्षे विधिनिषेधवैयर्थ्यदोषेण दूषिते सति तत्परिहर्तुं कैश्चित् बौद्धैरुक्तं आत्मनित्यत्व-पक्षमपिक्षिपति—**सर्वம** इति । **अत्रेदं बोध्यम्**—भगवता बुद्धेनहि तत्तदधिकारानुगुण्येनोपदेशाः कृताः । शिष्याश्चस्वमतिगतिमनुसृत्य बहुधाऽगृह्णन् । यथाऽस्तंगतस्सवितेत्युक्ते जारचोरानूचानाना स्वस्वेष्टमनुसृत्याभि-सरणपरस्वापहरणाध्ययनादिषु पृथक् प्रवृत्तिर्जायते । एव च केचिद्बुद्धशिष्या आत्मनोनित्यत्वमप्युपयन्ति । वैभाषिकोक्तात् क्षणिकत्वात विभज्यान्यथानित्यत्वकथनात् ते विभज्यवैभाषिकसंज्ञा भवन्ति । अस्तिहि-भिक्खवो इति । अत्र बहुविधपाठोपलम्भेपि **श्रीमदभिनवरङ्गनाथपरकालस्वामिभिः परमतभङ्गोपात्तत्वेन**

காரணமினறியே ஒன று அழிநதுபடுமாகில் இவாகள சொல்லும அஹிமஸையைக கடடளையிடுவதும் வீண ஜஞாநஸநததிககோ பொருட பரவாஹததுககோ வேறொனறிகில நாசமேறபடுவதுணடாகில் அனறோ—"இவறறை நீ நாசம செயயேல" என று உபதேசிகக வேணும. ஒனறை வேறொரு பொருடகளாககாமையோ வேதனை என்னும் மனோ

மாதல், ஆக்கக்குறை என ? என்னில—आत्मावை क्षणिकज्ञानरूपன என்று தெளிந்தவனுக்கு विधिनिषेधशास्त्रानुष्टानादिகள் கூடாது விनाशத்தோடே अन्वय व्यतिरेकவத்தான हेतुவை विविध

---

स्वकृतभावप्रकाशे निवेशितपाठस्यैव युक्तत्वप्रतीत्या तथैवेहापि प्रदर्श्यते । प्राकृतप्रभेदपालीभाषामयमिदं पद्य साक्षाद्बुद्धवाक्यमन्यत्रक्वाप्यनुदाहृतम् । (अस्यच्छायातु) 'अस्तिहिभिक्षो (भिक्षवे) अकृतकं, यदि नास्ति एतस्य जन्तोस्सत्त्वम् । मानसशून्यावस्था ननु सम्पद्यते." इति । भिक्षोर्मम (भिक्षवे मह्यंवा) बुद्धस्य, बुद्धाय, अकृतकंनित्यमपि किञ्चित्तत्त्वमस्ति इष्टमितिशेषः । एतस्य जन्तोरात्मनस्सत्त्वं स्थिरत्वं-नित्यत्वमितियावत्, यदिनस्यात्, क्षणिकत्वमेव यदिस्यात्, ननु तथा मानसशून्यावस्था - मनश्शरीरादिरहिततादशा मुक्तिरितियावत् सा खलु सम्पद्यते, प्रतिक्षणमिहैवस्वलु सा स्यादिति तदर्थः । तदेवोक्तमेतद्वाक्यारम्भे "सर्व மும இत्यादि, तत्त्वமுணடென்ற इत्यन्तेन । आभासोपपत्तिमूलं—उपपत्त्याभासमूलम् । सुव्यक्तमिति । एतदुक्तेस्तदीयैरेव स्वग्रन्थेष्वन्यथयितत्वस्य दर्शनादित्यर्थ. । तत एव तत्त्वसङ्ग्रहे शान्तरक्षित एवमाह—"आगमार्थविरोधेतु पराक्रान्त मनीषिभिः । नास्तिक्यपरिहारार्थं चित्रावाचोदयावत' ॥ समुदायादिचित्तेनभारहारादिदेशना । विशेषप्रतिषेधश्च तद्दृष्टीन् प्रति रोचते" इति । आगमार्थ. - आगमः बौद्धागमः "तत्रयेकृतकाभावा ते सर्वेक्षणभङ्गिनः । विनाशं प्रति सर्वेषामनपेक्षतयास्थिते"रित्यादिरूपेण तदर्थेन सह पूर्वप्रदर्शितनित्यतत्त्वोक्ते विरोधेतु विद्वद्भिः पराक्रान्तं विचार्यनिर्व्यूढमितियावत् । कथं निर्वाहः ? तदाह—नास्तिक्यपरिहारार्थं—सर्वशून्यत्वस्यक्षणिकत्वस्यस्वेनोपदेशे, उपदेष्टरि स्वस्मिन् नास्तिकत्वबुद्धिः, श्रोतॄणा वा मनसि नास्तिकयं स्यादिति तत्परिहाराय दयावतो बुद्धस्य इमाश्चित्रावाचः नित्वबोधकवचनानि विचित्राणि भवन्ति । समुदायादौ—सन्तानैक्यादौ, नित्यत्वचित्तेन—नित्यत्वाभिमानेन भारहारादिदेशना तदुपदेशः कृता । साचान्यत्रद्रष्टव्या—"भारवोभिक्षवो देशयिष्यामि । भारादानं, भारनिक्षेपं, भारहारश्चेति । भारः—वक्ष्यमाणपंचस्कन्धी । भारादानं—तृष्टिः । भारनिक्षेप —मोक्षः । भारहारः पुद्गल" इति तेषां विवरणम् । विशेषतः तत्प्रतिषेधः नित्यत्वप्रतिषेधः क्षणिकत्वमिति यावत् तद्दृष्टीन्—सूक्ष्मदृष्टीन् प्रति रोचते इति । एतेन क्षणिकत्वस्यैव सिद्धान्तयितव्यत्वं नित्यत्वस्यापातरमणीयत्वं चोक्तं भवति इति स्वेष्वेवसयूथ्यकलहो दर्शितः । शिष्टमुपपत्त्याभासमूलत्वमुपरि

---

விகாரத்தை உண்டாக்காமையோ அஹிம்ஸாவிதியின் உட்கருத்து என்றால்—ஆத்மா க்ஷணிகம் என்று தெளிந்தவனுக்கு எவ்வித சாஸ்த்ராநுஷ்டாநாதிகளும் கூடாது. விநாசத்துடன் ஓடிவரும் காரணங்களை அதற்காக்காமல் உடைந்த பொருளான துகள்களுக்குமாத்ரம் காரணமெனவாக்கி விநாசத்தை காரணமற்ற தென்றால பழய சார்வாகன் சொன்னபடி காரய காரண உறவு முறையே இல்லை என்றும்

विसभाग सन्तानमात्रத்துக்காகக் காதாசித்கமான विनाशத்துக்கு अहेतु कोत्पत्ति சொன்னால் பழைய चार्वाकप्रक्रियै யாலே भाव ங்களையும் निर्हेतुकங்களென்ன प्रसङ्गि க்கும்

---

विवरीतुं अथैकनित्यतत्त्वाभ्युपगमेऽपि तव नलाभ इत्याह - ஒருनित्यतत्त्वेति । नित्यैकतत्त्वाभ्युपगमेपितद्व्यतिरिक्तानां सर्वेषाक्षणिकत्वस्य सर्वविकल्पमिथ्यात्वादीनाच त्वयाऽपरित्यागात् तत्प्रयुक्ताः पूर्वोक्तादोषाः स्युरेव । स्वस्मिन् श्रोतृषुचाद्योक्त नास्तिकयशङ्कापरिहारार्थत्वच नभवतीति उपपत्त्याभासमूलकमेवेदमिति भावः । अथ नित्यतत्त्वाभ्युपगमो नकेवलमसाधकएव किन्तु बाधकोऽपीत्याह—ஒருवस्तुவை इति । विरुद्धம் अनैकान्तिकम् । क्षणिकत्वाभाववति नित्यतत्त्वे सत्त्वहेतुवर्तनादित्यर्थः । अथवा वक्ष्यमाणरीत्याविरुद्धत्वमेव बोध्यम् । विरोधमेवोपपादयति नित्यமாக விசைந்த इति । प्रथमव्याख्यानुसारेतु—दोषान्तरं विरोधमप्याहेति अवतारणीयम् । विप्रतिपन्नं सर्वं स्थिरं सत्त्वात् नित्यतत्त्ववदित्यपि साधनमसम्भवात् क्षणिकत्वसाधक सत्त्वहेतुस्साध्याभावरूपस्थिरत्वव्याप्त इति विरोधो बोध्यः । नात्र सत्प्रतिपक्षप्रदर्शनम् । सत्प्रतिपक्षे प्रतिहेतोरेव साध्याभावव्याप्तत्वात् । साध्याभावव्याप्तप्रकृतहेतोर्विरोधरूपत्वात् । ननु न नित्यतत्त्वं दृष्टान्तीकृत्यपदार्थेषु सर्वेषु स्थिरत्वं सत्त्वहेतुना साधनीयम् । तस्यान्येनकृतकत्वहेतुना, प्रकृतसाध्याभावसाधकेन प्रतिरोधादित्याशङ्क्याह—कृतकत्वादिகளாலே इति । आदिना कादाचित्कत्वपरिग्रहः । நீக்கியுள்ளவை-नित्यात्मतत्त्वव्यतिरिक्तानि । तथाचप्रयोग —नित्यतत्त्वव्यतिरिक्तानि समस्तानि क्षणिकानि कृतकत्वादिति । नित्येबाधवारणाय तदतिरिक्तेति । இந்தहेतु कृतकत्वम् । प्रतिवादिகளுக்கு इति । नैयायिकादीनामित्यर्थः । तथा च तेषा नित्यात्मतत्त्वातिरिक्तबहुविध नित्यपदार्थजातस्येष्टतया, नित्यात्मतत्त्वातिरिक्त समस्तपदार्थमध्ये केषुचिन्नित्येषु कृतकत्वादे रसंप्रतिपत्त्या पक्षैकदेशेहेतोरवर्तनरूपभागासिद्धिस्स्यादित्यभिप्रायः । सिद्धान्ते नित्यात्मातिरिक्तस्य सर्वस्यापि द्रव्यस्यस्वरूपेणनित्यत्वात् नभागासिद्धिमात्रं, अपितु स्वरूपासिद्धिरेवेति, ' प्रतिवादिகளுக்கு " इति सामान्य निर्देशेपि नैयायिका एवात्र विवक्ष्यन्ते, नतुसिद्धान्तिनः । न च सिद्धान्तिपक्षमादाय, तत्र स्वरूपासिद्धिरेवाधिकोषःवक्तव्य कथमुपेक्षित इति वाच्यम् । तथासति क्वचिदपि कृतकत्वस्यमुख्यतया निर्वाहासम्भवेन विशिष्टवेषतादि विषयकतया, सिद्धान्ते तस्यगौणताया समाश्रयणीव्यायाः तादृशविशिष्टविषयकं

---

எல்லாம் க்ஷணிக மென்றால் நம்புவாரில்லை என்று பார்த்து நித்யமாயிருப்பதொரு தத்வம் உண்டு என்றான் விபஜ்யவைபாஷிகன் என்பான். அதற்கு—" பிக்ஷுவான புத்த தேவனுக்கு நித்யமான ஒரு பொருள் கொள்வதும் இஷ்டமே இல்லாவிட்டால் ஒவ்வொரு கணத்திலும் பொருள் நாசமடைய ஆத்மாவுக்கு மோக்ஷம் வர நேரிடும் " என்ற புத்தா

## "ஒரே தத்வம-ஆதமா-நித்யம் என்ற விபஜ்யவைபாஷிக" மதமும தவறு

सर्वமும क्षणिकம என்ருல இசைவாரிலலே என்று பாாதது नित्यமாயிருப்பதொரு तत्त्वமுண்டென்ற विभज्यवैभाषिकमतத்திலே ' अत्यिहि भिक्खो (भिक्खवे) अकदय, जइणत्थि एदस्स जन्तुणो सत्तम् । माणस सुणावत्था णं सम्पज्जयि······" என்று नित्यतत्त्वाभ्युपगमம முதலாக எடுதத बुद्धवाक्यம

---

गौणं कृतकत्वं नित्यात्मतत्त्वेपि वर्तते इति तस्य व्यभिचरितत्वात् दुर्बलत्वेन नप्रतिरोधकत्वमिति यथासन्निवेशेऽवैयर्थ्यात् । नन्वात्मव्यतिरिक्तं सर्वं कृतकं उत्पत्तिमत्त्वात् इत्यादिना हेत्वन्तरेण कृतकत्वसाधनात् नतस्य भागासिद्धिर्भविष्यतीत्यत्राह— *அது தனனையும* इति । कृतकत्वमपीत्यर्थः । *இப்படி* दोषம इति सामान्योक्त्या उत्पत्तिमत्त्वेन कृतकत्वसाधने पूर्ववदुत्पत्तिमत्त्वमपि भागतोसिद्धम् । प्रमेयत्वादिहेत्वनुसरणे व्यभिचार इति यथार्हं दूषणं बोध्यम् । नन्वा "भासोपपत्तिमूलकमिद"मिति न दोषः अस्मासूद्भावनीयः, उपपत्तिं परित्यज्योपदेशबलादेवास्माभिस्साध्यसाधनादिति तदीयं वादमपि विदळयति—उपपत्ति*யை விட்டு* इति । उपदेशमात्रेति मात्रपदेन श्रुतार्थप्रतिष्ठापनार्थतयापि उपपत्तिसापेक्षता निरस्यते । बलशब्दः "उपदेशाद्धरिं बुद्धाविरमेत्सर्वकर्मसु" इति सिद्धान्तिभिरपि उपदेशमात्रस्यार्थनिर्णये आदृतत्वमभिव्यनक्ति । *கொள்ளு கிறேம* उक्तबुद्धवाक्यप्रामाण्यात् स्वीकरिष्यामः । विश्वसनीय*மாகாது* इति । तदुपदेशस्याप्रामाण्यशङ्काकळङ्कितत्वेनार्थासाधकत्वमित्यर्थः । सिद्धान्ते उपदेशमात्रादरणं शास्त्रपरिश्रमालससात्त्विकव्यक्तिविषयम् । तत्रापि विश्वसनीयोपदेश एव ग्राह्य इति च निर्णीतमिति तात्पर्यम् । ननु सर्वज्ञो नैव मुह्येत्, नच निखिलसुहृत् विप्रलिप्सेत कश्चिदिति, बुद्धस्य सर्वविश्वसनीयत्वोक्तेस्तदुपदेशमात्रादर्थनिर्णयस्सुकर एवेत्यत्राह—*இவ்வள லாதபோது* इति । बुद्धोपदेशस्य भ्रमादिमूलकत्वानङ्गीकार इत्यर्थः । जैनादि*களுக்கும்* इति । जिनभक्तानामपि तस्मिन् "सर्वज्ञोजितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादीच देवोर्हन् परमेश्वर" इति महाविश्वासदर्शनेन विनिगमकाभावात् तदुपदेशोपि ग्राह्य एव स्यादितिभावः । नन्वेवमपि बुद्धस्य भगवदवतारत्वेन वैदिकैरपि परिगणनात् जिनादेरतथात्वात अस्तितयोस्तारतम्यमिति चेदाह—पुरुषवैषम्येति । समुदायदोषाधिकार इति । "अतीन्द्रियविषय*த்தில* अर्हत्सुगतादि*களிலே ஒருவனை* आप्त*னென்று* विश्वसि*க்கைக்கு*

---

வாககுதான ஆதாரம. ஆனுல அது நேரானவழியில் புததிசெலுததி வநதவாாததையலல. ஒரு நிதயததது வததை ஒபபினதால மறற தூஷணஙகளிலிருநது தபபமுடியாது. எலலாம க்ஷணிகம எனறதில் ஒனறு நிதயமாஞல நீஙகள சொனனது விருததம. அதுபோல மறற பொருடகளும நிதயமாகலா மெனில நீ தடுககமுடியாது. செயயபபடுதல பறறி மறறவை க்ஷணிகஙகள எனறு அநுமாநம செயகிறே மென்னில-மறறவை எல்லாம செயயபபடுபவை

आभासोपपत्तिमूलकமென்னுமிடம் सुव्यक्तம் ஒரு नित्यतत्त्वத்தை இசைந்ததுவும் क्षणभङ्गविकल्पमिथ्यात्वादिகளுக்குச் சொன்ன दूषणங்களுக்கு परिहारமாக மாட்டாது ஒரு वस्तुவை नित्यமென்று கொண்டவனுக்கு क्षणिकत्वसाधकसत्त्वानुमानம் विरुद्धமாம். नित्यமாக விசைந்த वस्तुவை दृष्टान्तமாகக்கொண்டு सत्त्वानुमानம் தன்னாலே वस्त्वन्तरங்களை स्थिरங்களென்று साधिக்கலாம்படியாம். कृतकत्वादिகளாலே நீக்கியுள்ளவற்றுக்கு क्षणिकत्वத்தை साधिக்கிறோமென்றால்—இந்த हेतु प्रति-

विशेषहेतुஇல்லை इति वाक्येनेत्यर्थः । भगवतोपि अभिसन्धिविशेषेण परव्यामोहनार्थमन्यथा कथनसंभवादिति तत्रैव तत्तात्पर्यं विशदीकृतं द्रष्टव्यम् । एतेन " ब्रह्मैकमेवसत्यं, अन्यत्सर्वं तस्मिन्नध्यस्तं मिथ्याभूत" इति अद्वैतवादोऽपि निरस्त इत्याह—**प्रच्छन्नबौद्धन्** इति । एतत्संज्ञानिमित्तं चानन्तरवादे भविष्यति । तर्हि इदं नित्यं इदमनित्यमित्यत्र काव्यवस्था भविष्यति इत्यत्राह-ஆகையால இதி । सर्वक्षणिकत्वशून्यत्वादेर्दूषितत्वेनेत्यर्थः ।....**नित्य**ங்களாய इति । तदुक्तं:—" सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात्, अस्पष्टप्रत्यभिनास्वपि दशासु कचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानाच्च (सर्वद्रव्याण्यपि स्वरूपतो नित्यानी)ति" । **निवृत्तिः**=नाशः । तस्मादवस्थाएव तत्रतत्रानित्या इति प्रासंसिद्धम् ।

एवमियता प्रबन्धेन पदार्थाना क्षणिकत्वमेतदुक्तं निराकृत्य, अथाकाशविषये तुच्छत्वमपि तदुक्तं पूर्वोक्त दूषणसारणेन खण्डयति—இவாகள इति । विकल्पमात्रविषयत्वेनापरमार्थभूतेषु नानाविधपरमाणूना पुञ्जेषु परमाणुत्वाख्यपारमार्थिकधर्माभावेन तेषु कल्पितस्य परिच्छेदस्य परितोऽनावृतत्वस्यैवाकाशरूपताऽङ्गीकार्या । तच्च गगनपुष्पादिवत् तुच्छमिति सौत्रान्तिकमतभङ्गेविशदीचक्रे । तदेवास्याप्यस्मिन् विषयेऽभिमतम् । तथा च तत्रोक्तमेवदूषणमत्रापिभाव्यमित्याशयः । **स्वोक्त्या निस्तमिति** प्रत्येकमन्वयः । तत्र बाह्यार्थानुमेयत्ववादि सौत्रान्तिक पक्षे, परमाणुषु परिच्छेदरूपाकाशधातु भ्रमकथने परमाणुनां प्रत्यक्षत्वमापतेदिति स्वोक्ति विरोध उक्तः । अत्रतु वैभाषिकस्य परमाणुप्रत्यक्षत्वमिष्टमेवेति स्वोक्तिविरोधमन्यथा वदति—**परिच्छेद**ம் इति । परमाणुषु परिच्छेदस्यमिथ्यात्वे अपरिच्छेदएव तेषां स्यात् । तथा च पराभ्युपगत विभुतुल्यतापत्तिरित्यर्थः । स्वमते विभ्वनङ्गीकारात् **पराभ्युपगतेति** । अत्र....अपरिच्छेदம் प्रसङ्गिக்கும் इत्येवपाठः, नतु.... परिच्छेदम् इति । अनन्वयात्, **उत्तरवाक्ये** ...सर्वव्यापित्वம் கொள்ள வேண்டும் படியாம் इति

அல்லவே ? அவை அப்படியே என்று வேறு யுக்தியைக்கொண்டு நிலைநாட்டுகிறோம் என்னில் அவற்றிலும் இவ்வித தோஷங்கள் ஸுலபமாய் அறியலாம் யுக்திகளே எமக்கு வேண்டாம் புத்தரின் உபதேசபலத்தாலே ஒன்று மட்டும் நிதயம்—மற்றவை க்ஷணிகங்கள் என்று ஒப்புகிறோம் என்னில்—அந்த உபதேசமும் தவறலாமாகையாலே சரிப்படாது. அல்லாதுபோது ஜைநாகளும் தங்கள் ஆசார்யோபதேசத்தாலே தங்கள் மதத்தை ஸ்தாபிப்பர்.

वादिकளுககு भागासिद्धமாம். அது தனனையும साधिககும हेतुககளிலுமிபபடி दोषம் கண்டுகொள் வது. उपपत्तियைவிட்டு उपदेशमात्रबलததாலே ஒனறு नित्यமெனறும மறறுளளவை எலலாம் क्षणिकஙகள் எனறும கொளளுகிறோம எனனில்—இவ उपदेशம भ्रमादिमूलकமாகக கூடுகையாலே विश्वसनीयமாகாது. இஙஙனலலாதபோது जैनादिகளுக்கும उपदेशमात्रததைககொணடு स्वपक्ष-स्थापनம பணணும்படியாம. पुरुषवैषम्योपपादनம் கூடாதெனறு समुदायदोषाधिकारததிலே

---

**दर्शनाच्च** । एवं बाह्यार्थभूत परमाणुषु परिच्छेदस्यमिथ्यात्वेऽनिष्ट प्रसञ्जयित्वा, अथान्तर ज्ञानक्षणेष्वपि परिच्छेदमिथ्यात्वे दोषमाह—**ज्ञानक्षण**ஙகளுககும इति । ज्ञानंज्ञेयसमपरिमाणमिति वैभाषिकादय आहुः । तथा च परमाणुपरिच्छेदवत् ज्ञानक्षणपरिच्छेदोऽपि कल्पित इति सिध्यति । **ज्वालासञ्चरणन्यायेति** । "प्रत्यक्षत्वं च ज्वालाभेदस्योक्तम्—**तत्त्वरत्नाकरे**–निपुणनिरीक्षणेच जलवेणिकावत् ज्वालासंञ्चरणं दृश्यते" इति **न्यायसिद्धाञ्जनोक्त**रीत्या अधस्थितज्वालायास्तद्देशत्यागपूर्वकं ऊर्ध्वाक्रमणवत् आलयविज्ञानक्षणस्य कस्यचित् चैत्रादिसंज्ञकस्यैकदेहत्यागपूर्वकं देहान्तरे गर्भकोशादिप्रवेशोभवतीति चावादिषुः । **तदुक्तं**— "तेच रागादयः ग्राहकाभिमानारूढस्य सूक्ष्मचित्तसन्तानस्य प्रदेशान्तरं नीयमानस्य प्रतिक्षणमुपजायमानस्य दीपसन्तानस्येव मातृकुक्षिप्रवेशहेतवः" इति । **गर्भकोशप्रवेशादि**கள **इत्यादिना** तन्मतसिद्धसञ्ज्ञाविशेष-भाजां उत्तरोत्तरकार्यवर्गाणा ग्रहणम् । **तदुक्त**—"संस्कारवशाज्जीवस्य गर्भाशये प्रवृत्तिलाभः विज्ञान, विज्ञानसंसर्गात् गर्भद्रव्यस्य कलिलपेश्याद्याकारेणाभिव्यक्तिः नामरूपं, तदभिव्यक्ति क्रमेण षडिन्द्रियायतन-शरीरनिर्वृत्तिः षडायतनं, निर्वृत्तशरीरेन्द्रियस्य गर्भगतविषयेन्द्रियसन्निकर्षजं ज्ञान स्पर्शः, तन्निमित्त सुखदुःखे वेदना, सुखदुःखप्राप्ति परिहारार्थं विषयोपादानेच्छा तृष्णा, विषयेषु प्रवृत्तिरुपादानं, ततःक्रमेण गर्भान्निष्क्रमण भवः, निर्गतस्य मनुष्यत्वादिजात्यभिमानः जातिः, क्रमभाविनीजरामरणे प्रसिद्धे, म्रियमाणस्य पुत्रकळत्राद्य-भिषङ्गादन्तर्दाहः शोकः, तदुत्थःप्रलापः परिदेवना, मरणक्लेशः दुःख दौर्मनस्यं, ततश्चाविद्ये"ति । तत-श्चैतेषामपि यथायय आत्मविभुत्वेऽनुपपत्तिर्बोध्या । **घटि**யாத படியாய=यथानघटेत तथा । **सर्वव्यापि-त्व**ம इति । तथा च ज्ञानक्षणानां परिच्छेदमिथ्यात्वे एकैकस्याप्यपरिच्छिन्नतया विभुवत् सर्वदेशव्यापि त्व स्यात् । तथा च त्वदिष्टस्य देहत्यागस्य गर्भकोशप्रवेशादेश्चानुपपत्तिः । सर्वज्ञानक्षणाना व्यापित्वेन ज्ञेयसमपरि-माणत्वानुपपत्तिश्चेत्यर्थः ।

---

பிறநத மனிதாகளின உபதேசததில பெருமைசிறுமை இருபபது உபயோகப்படாது எனறு ஸமுதாய தோஷாதிகாரததில சொலலியிருககிறோம். அதவைதிகளின உபதேசகரமம மேலே அதிகாரததில நிராகரிக்கப்படுகிறது ஆக எல்லாபபொருளும அடிபபடையில அழிவறறவை யாய் அவற்றுககுத்தோனறும அவவபபோதைய மாறுபாடுகள அழிவுளளவைகள எனபதே தேரும.

சொன்னோம். प्रच्छन्नबौद्धன சொல்லும் नित्यानित्यविवेकक्रமும மேலே दूषितமாம் ஆகையால सर्वद्रव्यங்களும स्वरूपनित्यங்களாய், आगन्तुकावस्थैகளுக்கே निवृत्ति யுள்ளது என்கிறதே प्राप्तம

" ஆகாயம் சூன்யப்பொருள் என்றதும் சரியல்ல "

இவர்கள், काल्पनिक विचित्रकलापங்களிலே कल्पितமான परिच्छेदம ஆகாசம, இதுதான खपुष्पம போலே तुच्छம என்றதுவும स्वोक्तिस्वाभ्युपगत पृथिव्यादितुल्योपलम्भத்தாலே निरस्तமாமன்று

---

अथ प्रसङ्गात् ज्ञानसन्तानस्यैवात्मत्वं तदुक्तं खण्डयति—**बुद्धिसन्तान**மே इति । **तदुक्तंशास्त्रदीपि-कायां**—"**सौगतास्तु**-सिद्धे ज्ञानसुखादीना गुणत्वे, गुणिकल्पनम् । ननु तत्सिद्धमस्माकं तावन्मात्रोपपत्तितः ॥ नह्याश्रयमन्तरेण ज्ञानमात्रमनुपपन्नम्, स्वतन्त्रमेवज्ञानं किन्नेष्यते । सुखादयः स्वतन्त्राज्ञानविषया एव । अन्य-स्याश्रयस्यानुपलब्धेः । ज्ञानमेवच नीलमहं जानामीति ज्ञातृत्वेन विपर्यासितदर्शनै रध्यवसीयते, नान्यः प्रमाणा भावात् ।....तस्मात् ज्ञानमेवज्ञातृ । ननु ज्ञानस्यक्षणिकत्वात् कथं पूर्वेद्युरुपलब्धस्य परेद्युरिच्छा, स्मरणं, प्रत्यभि ज्ञाच, नहिदेवदत्तेनोपलब्धेऽर्थे यज्ञदत्तस्येच्छादीनि सम्भवन्ति-सत्यं-नसम्भवन्ति सन्तानभेदे । समानायांतु सन्ततौ सर्वमिदं सम्भवति । नह्युपलब्धुस्स्मर्तुश्चैकत्वंकचिद्दृष्टम् । एकस्य स्थास्नोः पुरुषस्यकचिदप्यनुपल ब्धत्वा"दिति । மூவர்=माध्यमिकव्यतिरिक्तास्त्रयः । **अहमर्थ**த்திலே इत्यादि । "मम ज्ञानं जातं, अहमिदं जानामी" त्याद्यनुभवेनाहमर्थभूतात्मधर्मतया तत्र जातत्वेनच प्रतीतस्य ज्ञानस्यात्माभेदानुपपत्तेस्स्वातन्त्र्याभावात् आत्मगुणत्वमेवेति न ज्ञानमेवात्मेतिभावः । ननु सिद्धान्तइव ज्ञानस्यैवसत आत्मनो ज्ञानाश्रयत्वमप्यविरुद्धमित्य-त्राह—**चित्तविज्ञानेति** । "तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत्स्याद्धिचित्तविज्ञानं यन्नीलादिक-मुल्लिखे"दिति ज्ञानद्वैविध्य, "निर्धर्मकानिराधारा निर्मूर्तिश्चित्तसन्ततिः । प्रतिक्षणं जायमाना दीपसन्तान-सन्निभे"ति तयोर्द्वयोः परस्परं धर्मधर्मिभावासंभवंचकल्पितवतामित्यर्थः । **परस्परान्वय**ம கூடாது इति । तथाच नसिद्धान्तिमत इव निर्वाह एषांमुपपद्यत इति भावः ।

अथ संगतिवशात् तेषां मोक्षक्लप्तिप्रक्रियामपि अपक्रामयति—**शुद्धज्ञानेति** । **तदुक्तमेतदधिकारारम्भे-मोक्ष**மாவது विषयोपरागशून्यबुद्धिसन्तानफुरणம इति । तत्र विषयोपरागशून्यत्वमेवात्र शुद्धपदेनोक्तम् । विषयोपरागश्च ग्राह्यग्राहकभाववत्त्वेनभासमानत्वम् । एतादृशाशुद्धिहेतुभूतज्ञानसन्ताननिष्ठरागाद्यत्यन्तोपशमोवा

---

இவர்கள் தங்கள் மதத்தில் பரமாணுக்களுடைய கற்பிதமான கும்பலில் கற்பிக்கப் பட்ட ஒரு அளவுதான் ஆகாசம் அதாவது சுற்றும் எதுவுமற்று இருத்தல் அதுவும் ஆகாயத் தாமரைபோல் சூன்யப்பொருள் என்றார்கள். அதுவும் சரியன்று. பருதிவீ முதலிய பொருட் களைப் போலே ஆகாயமும் காணப்படுகிறதே, என்று முன்பே இதை ஆக்ஷேபித்து இருக் கிறோம். பரமாணுக்களின் அளவு பொய்யானுல் மற்றவா உண்மையாகவே ஒப்பும் ஆகாயம

மிடம் ஸௌத்ராந்திகபங்கத்திலே சொன்னோம். பரிச்சேதம் மித்யையானால் பரமாணுக்களுக்கும் கலாபங்களுக்கும் பரா சொல்லும் விபுக்களுக்குப்போலே அபரிச்சேதம் ப்ரஸங்கிக்கும். ஜ்ஞாநக்ஷணங்களுக்கும் பரிச்சேதம் மித்யை என்கையாலே ஜ்வாலாஸஞ்சரணந்யாயத்தாலே பூர்வதேஹத்யாக கர்ப்பகோஶ ப்ரவேஶாதிகள் சொன்னதுவும் கடியாதபடியாய் ஏகைகஜ்ஞாநக்ஷணங்களுக்கே ஸர்வவ்யாபித்வம் கொள்ளவேண்டும்படியாம்.

---

मोक्ष इति कल्पान्तरमप्याह—ज्ञानसन्तान*த்துக்கு* इति। क्षणभङ्गादीति। तथाच पदार्थाना क्षणिकत्वस्य सन्तानैक्यनियामकस्य एकज्ञानवासनाया अन्यत्र सङ्क्रमस्यच पूर्वमेव बहुशोदूषितत्वेन एतेषामभावे एतन्मतासम्भव इति निरस्तमिति भावः। एवमुक्तेन प्रकारेणान्यदपि तत्परिभाषितं दूषितं मन्तव्यमित्याह—*இவர்களுடைய* इति। सौत्रान्तिकवैभाषिकयोरित्यर्थः। अनयोः प्रत्यक्षत्वानुमेयत्वविवादेऽपि बाह्यार्थसद्भावे, न विप्रतिपत्तिरिति एकदोभयग्रहणम्। पंचस्कन्धेति। स्कन्धः=प्रवाहः। तदुक्तं—"दुःख ससारिणा स्कन्धास्ते च पञ्चप्रकीर्तिताः। विज्ञानं वेदना संज्ञा संस्कारोरूपमेवच॥" इति। एते च यथार्हं श्रुतप्रकाशिकायां प्रपंचिताः—भूतेन्द्रियविषयारूपस्कन्धः। ग्राहकाभिमानारूढाज्ञप्तिरेव विज्ञानस्कन्धः। प्रियाप्रियानुभयानुभवजन्य सुखदुःखोपेक्षात्मकश्चित्तस्यावस्थाविशेषो वेदनास्कन्धः। गौरित्यादि सविकल्पकप्रत्ययस्संज्ञास्कन्धः। रागद्वेष मोहादयस्संस्कारस्कन्धः। पृथिव्यादयः रूपस्कन्धः। अत्र कायस्थत्वादान्तरचित्तविषयत्वाद्वारूपस्कन्धोऽपि चित्तचैत्तान्तर्गत इति वाचस्पत्यादयश्शङ्करभाष्य च। रूपस्कन्ध व्यतिरिक्तस्कन्धचतुष्टयं चित्तचैत्तार्गतमिति भास्करभाष्ये इति। शङ्करभाष्यंचेत्यत्र भावप्रकाशिकायामेवमुच्यते—"यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः, तथापि कायस्थत्वाद्वा इन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिका इति वाचस्पतिनोक्तत्वात् शङ्करभाष्येऽप्युक्तप्रायमित्यर्थः" इति। एवं—ग्राहकाभिमानारूढा ज्ञप्तिरेवविज्ञानस्कन्ध इत्यत्र केषाञ्चित् निलादिविषयक प्रवृत्तिविज्ञानमपि विज्ञानस्कन्धान्तर्गतमिति मत भवति। "एतद्द्वयं प्रवाहापन्नदण्डायमानं विज्ञानस्कन्धः" इति वाचस्पत्युक्तेः। द्वादशायतनेति। तदुक्तं—"ज्ञानेन्द्रियाणि पंचैव तथा कर्मेन्द्रियाणि च। मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः" इति, "पचेन्द्रियाणि शब्दाद्याविषयाः पंचमानसम्। धर्मायतनमेतानि द्वादशायतनानितु॥" इति च। चतुरार्यसत्येति। तदप्युक्तं विवेकविलासे—"आर्यसत्याख्यया तत्त्व

---

போல அவை அளவற்றவைகளாய் ஒவ்வொன்றுமே உலகை வ்யாபித்து நிற்கவேண்டிவரும். அதுபோலவே ஜ்ஞாநாணுக்களிலும் அளவு பொய்யாவதால் அவை ஒரு தேஹத்தைவிட்டு மறுபிறவிக்காகத்தாயின் கருவிற்சென்று நுழைவதும் கூடாதபடியாய் எங்கும் பரவினவாய் நிற்க நேரும்.

புத்தியினுடையரையே ஆத்மா என்றபோது பௌத்தர் மூவருக்கும் ஆத்மாவில் பிறந்து வளராத புத்திரியையே ஆத்மா வென்கை விபரீதம். சித்தவிஜ்ஞாநம்—ஆலயவிஜ்ஞாநம்—(பொருளறிவு—ஆத்மா) என்று தனித்துப்பிரித்தவாக்கு இரண்டும் ஒன்றுசேர்வதும் கூடாது.

"அறிவே ஆதமா எனறது குறைவே"

புத்திஸந்தானமே ஆத்மா எனகிற பௌத்தா மூவருககும அஹமர்த்ததிலே பிறநது தோறறுகிற புத்தி அஹமர்த்தமெனகை உபலம்பாதிவிருத்தம சித்தவிஜ்ஞானஸந்தானமும ஆலயவிஜ்ஞானஸந்தானமும பிரியககட்டினவாகளுககும இவறறுககு பரஸ்பராந்வயம் கூடாது

சுத்தஜ்ஞானஸந்தானோதயமாதல் ஜ்ஞானஸந்தானத்துககு ராகாதிகளுடைய அத்யந்தோபசமமாதல் மோக்ஷமென்றதுவும் க்ஷணபங்காதிதூஷணஙகளாலே நிரஸ்தம இவாகளுடைய பஞ்சஸ்கந்த த்வாதசாயதன சதுராய-

---

चतुष्टयमिदं क्रमात् । दुःखमायतनञ्चेति ततस्समुदयोमतः । मार्गश्चेत्यस्यचव्याख्याक्रमेण श्रूयतामिह । दुःखं संसारिणां स्कन्धास्तेच पंच प्रकीर्तिताः । .... धर्मायतनमेतानि द्वादशायतनानितु । रागादीना गणोयस्मात्समुदेति नृणामिह । आत्मात्मीयस्वभावाख्य स्सस्यात्समुदयः पुनः । क्षणिकास्सर्वसंस्कारा इति यावासनास्थिरा । समार्ग इति विज्ञेयस्सच मोक्षोऽभिधीयते ॥" इति । अन्यत्रच—दुःख समुदायनिरोधमार्गाख्याश्चत्वार आर्यबुद्धस्याभिमतानि तत्त्वनि" इति प्रकारान्तरेणगणनाकृता । अतोऽत्र "चतुरार्यसत्येत्येव पाठोयुज्यते । चातुराथ्यसत्येतिपाठेऽपि कथंचित् अयमेवार्थोबोध्यः । चतुरर्थ्यसत्येतितु अशुद्धम् । अदृष्टेति । धर्माधर्माविव्यर्थः । भव इत्यपि तयोर्नामान्तरं श्रूयतेतन्मते । भवत्यस्माज्जन्मेति व्युत्पत्तेः । दशधात्विति । एतत्परिगणनंचबहुधा दृश्यतेतद्ग्रन्थेषु । तथाहि–"ऋतवश्चवसन्ताद्या पृथिव्याद्याश्चधातवः । दश...." इति केचित् । अन्येतु–"बाह्यमाभ्यन्तरं तत्त्वयुगळ चेन्द्रियाष्टकम् । धातवोदशविज्ञेयाः" इत्याहुः । भूतभौतिकाख्यया द्विविधमपि बाह्यत्येनैकीकृत्य, तथाचित्तचैत्ताख्यं द्विविधमप्यान्तरत्वेनैकीकृत्यचाहृत्यद्वे, मनोव्यतिरिक्त ज्ञानेन्द्रियपञ्चकं, स्त्रीकृत्यसंस्थानस्वरादि व्यञ्जकस्त्रीन्द्रियमेकं, पुरुषकृत्याद्यर्थं पुरुषेन्द्रियमेकं, कर्ममूलचक्षुरादि प्रवृत्त्यनुपालनार्थं कल्प्यमानजीवेन्द्रियमेकं चेत्याहृत्य दशधातव इति तदर्थ । प्रभृतिशब्देन षड्धातुवादादिग्रहणम् । तथाहि–"अङ्कुरोजायते बीजात् षड्धातुसमवायतः । ऋतुश्चपंचभूतानि षड्धातव इति स्मृताः ॥ सङ्गृह्णातिक्षितिर्बीजं अङ्कुरः कठिनस्ततः । जलधातुस्स्नेहयति तेजोबीजं पचेदपि ॥ वायुधातुर्निहरति निर्गच्छति ततोऽङ्कुरः ।" आकाशधातुबीजस्यत्वनावरणकृत्यकृत् ॥ ऋतुधातोः परीणामः प्रसिद्धोऽङ्कुरबीजयोः ॥ इति । परिभाषा=तत्तत्शास्त्रकारीयसङ्केतः । परिपाटी=तत्त्वकल्पनरीतिः । ௭௫

---

சுத்தமாக ஜ்ஞானம் சுயஉருவில வருவதோ—அதறகு அசுத்தி ஏறபடுததிவநத ஆசை பகை எண்ணஙகள அடியோடு ஒழிவதோ மோக்ஷம எனபதும உனககுசசேராது எலலாம க்ஷணிகமெனபதால எபபோதும் தானே நடககலாம் பநதமும் மோக்ஷமும (கட்டும—வீடும்) இவாகளுடைய மறற பரிபாஷைகள் போககுகள எல்லாம ஒரு கட்டுககும அடஙகாதவையாய நூலில்லாமாலைபோல நிறகும நிலையை நுணணிதாக நாம கணடுகொளளவேணும. இநத மதத்தை வேதாநத ஸூத்ரம் செயத வேத வயாஸா நிராகரிததுளளாா.

सत्याद्दष्टदशधातु प्रभृति परिभाषैकளும பரிபாடிகளுமெலலாம் ஒரு प्रमाणததோடும் துவககற்று நூலிலலமாலைபோலே நிறகும நிலை நுணணிதாககககணடுகொளவது இநத वैभाषिकमतத்தை "समुदायउभयहेतुकेऽपि तदप्राप्ति" எனறு தொடஙகி सूत्रकारा निरसिததாா

குமபிடுவாா ஆரெனறு தேடுகின்றாா
குணஙகளையும் தஙகளுககுக கூறுகினறாா
தமபடியைத தமாககுரைததுப படிவுககினறாா
தமககினிமேல வீடெனறு சாதிககினறாா

---

प्रमाणத தோடும துவககறறு=केनापि प्रमाणेनानन्वीय । एतदुक्तं भवति—केनचित्प्रमाणेनकिञ्चिदर्थ-साधने, तस्य प्रमाणान्तरेणाविरोध आवश्यक इति केचित् । अन्येतु—नकेवलमेतावदेव । किन्तु-संवदेतकिल-यत्प्रमान्तरैस्तत्प्रमाणमिति येहिमेनिरे" इति तस्य प्रमाणान्तरानुग्रहश्च आवश्यक इत्यप्यवोचन् । तथा च बौद्धमत प्रमेयाना स्थापकंवानुग्राहकं वा नकिमपि प्रमाणं पश्याम इति । நூலிலலாமாலைபோலேநிறகும நிலை इति । "सूत्रे मणिगणा इवे" त्येतद्वैपरीत्येन "असूत्रग्रथितामालानोपभोगक्षमाभवेत्" इति उत्सूत्रा-मालेवेदम्मतं न केनापि हृदिधार्यमित्याशयः । अत्रैवंकथनेनेदं मतमुत्सूत्रमिति व्यज्यते । लोकायतमतस्यापि हि अस्तिबार्हस्पत्यानि सूत्राणिमूलम् । नैवंबोद्धस्येति । நுணணிதாக सूक्ष्मेक्षिकया । तथा च "अहिंसा प्रथमो धर्मः" इति बहिः प्रकटनात् एषा प्रसिद्धा विरक्तभूमिकामपास्य अन्तः सुसूक्ष्मं रुक्षंहृदयं शोधनीयमित्यर्थः । एतन्मतनिरासकंसूत्रमाह—இநதवैभाषिकेति । उभयहेतुकेपि समुदाये - अणुहेतुके पृथिव्यादिभूतसमुदाये, पृथिव्यादिभूतहेतुके देहेन्द्रियादिभौतिकसमुदायेच, तदप्राप्तिः समुदायभावाप्राप्तिः तेषां क्षणिकत्वेन कारणं प्राप्ताना तावत्पर्यन्तमनवस्थितेरिति अर्थः । तथाचास्मिन्नधिकरणेमध्ये "नासतोऽदृष्टत्वा"दित्यादौ स्पष्टं सौत्रान्तिकनिरासदर्शनेऽपि तदतिरिक्तानिसूत्राणि सामान्यत उभयखण्डनपराण्येवेत्पर्थस्वभावाद्गाह्यमिति सूचितम् ।

अथाधिकारान्तिमगाथया वैभाषिकस्य स्ववाग्व्याघातमाह—குமபிடுவாா इत्यादि । स्वनम-स्कर्तारः कुत्रसन्तीति विचिन्वन्ति । "कूटस्थाभ्यधिकस्य मेकिमधिकः किंवा समोस्तीति अखर्वगर्वेण स्वयमन्यान् न नमस्यन्तस्वस्यनमस्कर्तॄन् प्रतीक्षन्त इति भावः । आत्मगुणाभावे नमस्कारालाभात् स्वस्यशान्तिदान्त्यादि गुणान् स्वयमेव बहिर्घोषयन्ति । निर्धर्मकज्ञानसन्ततेरात्मत्व पक्षे इदं कथं घटत इति भावः । एव मात्म-

(பாசுரககருததது) தஙகளைக குமபிட ஆளதேடுகிறாாகள இலலாத குணஙகளைத் தஙகளுககு பறைசாற்றிககொளளுகிறாாகள. தம்முடைய கோணல வாதப்பழககஙகளை தமாககும கறபிககிறாாகள தமககினி மோகஷ ஸிததியில கடுகளவேணும ஐயபபாடு கிடையாதெனகிறாாகள. உடல் நலததைப பேணுவதும நனகு உணணவிருமபுவதுமே

தமபுடவையுட(ண)ல குறிதது நெடிதெணகினறா
சநததிககுததவம பலிககததாம போகினறா
செமபடா செயகினற சிறறினிபபைச
சேவகப்பற்றுடனே நாம செகுததிடடோமே

कवितार्किकसिहमायकल्याणगुणशालिने । श्रीमते वेङ्कटेशायवेदान्तगुरवे नम॰

इति वैभाषिकमतभङ्गाधिकारस्समाप्तः ॥

---

गुणत्वत् आचारमप्यात्मीयं स्वशिष्येभ्य उक्त्वा अभ्यासंकारयान्त शिष्यविश्वासार्थं स्वस्येतः परं मुक्तिः करगतैवेत्याहुः । एवं कथयन्तोऽपि तद्विपरीतमेवाचरन्तीत्याह - *தமபுடவையுடல குறிதது* इति । स्वस्यवस्त्रलाभ-शरीरपोषणादिकमेव सदाचिन्तयन्ति । *உணல குறிதது* इति पाठान्तरम् । तदा अशन आच्छादनमित्यादिकमेवध्यान्तीति भाव्यम् । स्वस्यक्षणिक ज्ञानसन्तति घटकैकज्ञानरूपत्वात्, स्वोत्तरसन्ततेस्स्वतपः फलचि-कीर्षया स्वयं तपसे अरण्यादिकं प्रविशन्ति । "मयि नष्टेऽपि मत्तोऽन्याकाचित् ज्ञप्तिरवस्थिते"ति न कोऽपि प्रयतेतेति भावः । एवमादिपरवञ्चनप्रधानत्वात् वैभाषिकान् *செமபடை* इत्यभेदेनरूपयति । धीवराइत्यर्थ॰ । एषं चैतत्कृत गुडजिह्विका (*சிறறினிபபு*) वंचनमिति यावत् । वयं भगवन्मुखोल्लासहेतुकैङ्कर्यबुध्या निरा-चक्रमेत्यर्थः । अथवा *சேவகப பறறுடனே* - तदीयोक्ति तदीयवीराभिमानेन सहाखण्डयामेत्यर्थः । *செம படவா* - रक्ताबरधारिणोबौद्धा इतिवार्थः । पटशब्दस्यवस्त्रवाचित्वात् इति ।

व्याघातं वचनाना स्वेषामेवं स्वयंह्यजानन्तः ।
वैभाषिकमतमुख्या वेङ्कटनाथेन जिग्यिरे ह्यत्र ॥ 1 ॥

वैभाषिकाख्यमतभेदविभेदनेन वेदान्त सूरिरधुनाप्यधुनोत्तमोऽन्धम् ।
लोकस्य भास्कर इव प्रभयाऽभयाय यस्तं समस्तगुणमेमि निरस्तदोषम् ॥ 2 ॥

इति श्रीवत्सवंशायनस्य श्रीदेशिकचरणपरायणस्य नारायणस्य-
कृपिषु श्रीमत्परमतभङ्गव्याख्याया देशिकाशयप्रकाशाभिख्यायां
इति वैभाषिकमतभङ्गाधिकारोदशमस्संपूर्णः ॥

---

இவர்கள பொழுதுபோககு. தாம் க்ஷணிகமாகையால நசிததாலும பிறகு அதே சந்ததியில அடுத்துததோன்றும ஜஞாந அணுககுபபயம் உணடென நமபித தாம புணய யாதரை முதலியன போகினறாாகள. இவவிதம் செமபடவாபோல வஞசனை செயதே பிழைககினற இவாகளுடைய இனிபபுபபேசசுககளை அவாகளின வீராவேசத்தோடு வெடடி எறிநதோம.

வைபாஷிகமத பஙகம முறறிறறு

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः

समूलग्रन्थाया श्रीदेशिकाशयप्रकाशव्याख्यायामुद्धृतप्रमाणग्रन्थानां अकारादिक्रमेण तत्तदधिकारस्थपुटपङ्क्तिविशेष-प्रमाशिका ॥

## अत्र च एवं संकेतोबोध्यः

| | | |
|---|---|---|
| 1. | प्र | प्रस्तावनाधिकारः |
| 2. | जी | जीवतत्त्वाधिकारः |
| 3. | अ | अचित्तत्त्वाधिकारः |
| 4. | प | परतत्त्वाधिकारः |
| 5. | स | समुदाय दोषाधिकारः |
| 6. | लो | लोकायतिक भङ्गाधिकारः |
| 7. | मा | माध्यमिक भङ्गाधिकारः |
| 8. | यो | योगाचार भङ्गाधिकारः |
| 9. | सौ | सौत्रान्तिक भङ्गाधिकारः |
| 10. | वै | वैभाषिक भङ्गाधिकारः |

—: * :—

इतिशम्

—: * :—

ஸ்ரீ:

# श्रीदेशिकाशयप्रकाशव्याख्यायामुद्धृतप्रमाणानि

இநத அகராதியில நக்ஷததிரக குறியிட்டவை* தமிழ வாகியம் பாசுரகஙகளின பகுதியாகும.

—:*:—

# शुद्धपाठाः

## प्रस्तावनाधिकारे (1)

| | | |
|---|---|---|
| त्रिनतं | 6 | 4 |
| कारागारः | 12 | 9 |
| भगन्दरैः | 12 | 13 |

## जीवतत्त्वाधिकारे (2)

| | | |
|---|---|---|
| इत्याद्या | 16 | 21 |
| लक्षण | 21 | 23 |
| अभेदासमाना | 24 | 18 |
| स्वस्मैभासा | 24 | 23 |
| प्रसिद्धं | 26 | 17 |
| इत्यधिकंफलं | 31 | 14 |
| ननु | 33 | 26 |
| वैयर्थ्यं | 36 | 15 |
| घति | 37 | 14 |
| प्रत्यया | 52 | 3 |
| * 56-5 "ज्ञानविषये"त्यारभ्य | 57 | 20 |

"ज्ञानத்துக்கும துल्य"मिति पर्यन्मं द्विः मुद्रणं प्रामादिकमितिविज्ञेयम् *

| | | |
|---|---|---|
| एतावन्तं | 67 | 8 |
| सितासित | 67 | 19 |
| भोग | 70 | 3 |
| विरक्तेश्रो | 72 | 22 |
| सम्यग्विचार्य | 88 | 18 |

## अचित्तत्त्वाधिकारे (3)

* प्राप्नोति, नापि आपेक्षिक महत्त्वशाली; तथासति समष्टि तत्त्वेषु "

| | | |
|---|---|---|
| इतियोजनीयम् | 125 | 8 |
| யுள்ள வாக்கியங்களுக்கு | 126 | 27 |
| परिग्रहम् | 129 | 8 |
| प्राधान्येन | 131 | 16 |
| सहोत्क्रान्ति | 132 | 20 |
| —कारचित्तशब्दैः | 138 | 4 |

* इक्षुक्षीर गुडादीना माधुर्यस्यातरं महत् ।
अथापि न तदाख्यातुं सरस्वत्यापिशक्यते ॥ *

| | | |
|---|---|---|
| इदमपियोजनीयम् | 157 | 16 |
| पदार्थेष्वङ्कु | 171 | 6 |

* अन्यश्चराजन् सपरः तथान्यः इत्यधिकः पाठः ॥

| | | |
|---|---|---|
| "सर्व प्रमाण" इत्यारभ्यबहुप्रमाणानु- | 184 | 3 |
| गुणमिति पर्यन्तं च मुद्रणमधिकम् | 184 | 6 |
| क्षणादिषुसंख्यानस्य | 191 | 11 |
| उपनिषन्मय | 205 | 12 |

## परतत्त्वाधिकारे (4)

| | | |
|---|---|---|
| सूरिगाधा | 245 | 16 |
| ताःपन्थान | 246 | 6 |
| पेततुः | 248 | 7 |
| भग | 248 | 9 |
| शेषाध्व | 249 | 18 |
| अहंमे इति | 252 | 7 |
| प्राप्स्यामी | 252 | 8 |
| इदञ्चाद्वैत | 252 | 15 |
| सूत्रम् | 254 | 16 |
| भोग्यं | 255 | 6 |

| | | |
|---|---|---|
| कारित्वं | 259 | 6 |
| सृष्ट्यादिः | 261 | 21 |
| वकथनम् | 274 | 6 |
| पञ्चाशति | 278 | 15 |
| कइतिसंश | 279 | 9 |
| गुण | 283 | 6 |
| श्रृणु | 283 | 15 |
| व्याख्यापि | 283 | 22 |
| आपीठा | 285 | 13 |
| मित्यत्र | 285 | 20 |
| सहस्र | 285 | 21 |
| पुरा | 287 | 5 |
| प्रगाणाम् | 287 | 9 |
| दत्तं | 287 | 13 |
| चातुर्यं | 287 | 15 |
| निगमने | 287 | 21 |
| वर्धेत | 287 | 25 |
| तिष्ठ | 9 | 5 |
| शुद्धः | 9 | 6 |
| दृश्य | 10 | 3 |
| व्यं | 10 | 5 |
| समुदा | 11 | 10 |
| ग्दूषणं | 13 | 29 |
| स्वार्थे | 14 | 6 |
| विलोक्य | 14 | 20 |
| धारणा | 14 | 21 |
| वेदान् | 16 | 14 |
| कलहायमानः | 16 | 18 |
| मन्त्राननधी | 16 | 30 |
| मित्रादि | 17 | 6 |
| देशसन्धानादि | 18 | 3 |
| प्रतिभायात् | 27 | 15 |
| चेष्टश्च | 36 | 8 |
| यया | 44 | 13 |

## समुदायदोषाधिकारे (5)

| | | |
|---|---|---|
| दण्ड्या | 3 | 3 |
| नार्थः | 2 | 6 |
| बाह्यकु | 3 | 5 |
| ज्ञानी | 3 | 7 |
| समर्थाः | 3 | 9 |
| ददाति | 4 | 1 |
| க்ஷாரும | 4 | 6 |
| प्राप्ते | 4 | 8 |
| शाक्ये | 5 | 9 |
| सह्य | 4 | 14 |
| तैंत | 4 | 16 |
| कुण्डल | 8 | 12 |

## लोकायतिकभंगाधिकारे (6)

| | | |
|---|---|---|
| अनुवादस्य | 4 | 5 |
| ग्राहितां | 2 | 14 |
| संचूर्णनस्य | 3 | 19 |
| श्रृणु | 4 | 8 |
| अनुपपन्नत्वात् | 5 | 5 |
| द्रष्टव्यं | 8 | 19 |
| कचिदु | 31 | 9 |
| व्यवस्थेति | 34 | 19 |
| श्लोकतात्पर्यं | 35 | 6 |
| आत्मनोऽवयवः | 39 | 5 |
| कलहायेतापीति | 45 | 19 |
| इत्यकामेनापि | 47 | 12 |

| | | | | | |
|---|---|---|---|---|---|
| एतान् | 14 | 7 | तदुक्तं | 20 | 10 |
| हेतून् | 14 | 7 | शक्यम् | 20 | 10 |
| விரகிலலை | 14 | 13 | श्लोकशेषेण | 20 | 19 |
| सन्तानान्तरे | 14 | 14 | शृणु | 22 | 17 |
| தோறறுகிற | 14 | 20 | असिध्यादि | 23 | 21 |
| इत्यादिवाक्यै | 15 | 5 | तर्ह्येकस्मिन् | 24 | 12 |
| राक्षसै | 15 | 7 | पूर्वापरकाल | 24 | 16 |
| सदृशीयं | 16 | 6 | निवारकाभावात् | 24 | 22 |
| ज्ञेययोः | 16 | 7 | कुर्वते | 28 | 2 |
| अशक्यतया | 16 | 11 | ननु | 29 | 17 |
| कृत्स्नार्थकः | 17 | 2 | समाश्रणीयायां | 34 | 21 |
| एतन्मतेऽपि | 17 | 6 | यथायथं | 35 | 20 |
| कर्ताவுக்கு | 17 | 7 | नह्युपलब्धुः | 36 | 12 |
| बुध्यन्तोमुख | 18 | 2 | स्फुरणम् | 36 | 21 |
| असती | 18 | 2 | तत्त्वानि | 38 | 11 |
| स्वयं चासती | 18 | 4 | षड्धातवः | 38 | 19 |
| ग्राहं | 18 | 5 | ,, | 38 | 19 |
| मुद्गर | 18 | 12 | गुणवत् | 40 | 7 |
| ग्राहिणी | 18 | 14 | कारयन्तः | 40 | 7 |
| पर्याप्तैरेव | 19 | 22 | ध्यायन्ती | 40 | 10 |
| भवति | 20 | 9 | செமபடவா | 40 | 12 |

इतिशम्